श्री

वाल्मीकि-

# रामायण

तिलक-शिरोमणि-भूषणेति टीकात्रयोपेतम्

## अरण्यकाण्डम्

# RÂMÂYAN

OF

**VÂLMÎKI**

WITH THREE COMMENTARIES CALLED

**TILAKA, SHIROMANI, and BHOOSHANA**

WITH NUMEROUS READINGS AND NOTES

**ARANYAKANDA**

EDITED BY

**SHASTRI SHRINIVASA KATTI MUDHOLKARA**

SANSKRITA ADHYAPAKA IN THE ELPHINSTONE COLLEGE,—BOMBAY.



PRINTED AND PUBLISHED BY MANILAL ITCHARAM DESAI AT

**THE GUJARATI PRINTING PRESS**

No. 8, SASSOON BUILDINGS-CIRCLE, FORT,

**BOMBAY.**

SHAKA 1836 A. D. 1914

**Price Rs. 2-12-0**

श्रीमद्वाल्मीकिमहामुनिप्रणीतं

# रामायणम् ।

रामायणतिलक-रामायणशिरोमणि-गोविन्दराजीयरामायण-
भूषणेतिटीकात्रयोपेतम् ।

## अरण्यकाण्डम् ।

एल्फिन्स्टन्कॉलेज्संज्ञकांग्लपाठशालायां संस्कृताध्यापकैर्मुधोळकरोपाह्व-

**कट्टी-श्रीनिवासशास्त्रिभिः**

संशोधितं पाठान्तरैः सनाथीकृतं स्थलविशेषेषु टिप्पणीभिः समलंकृतं च ।



मुम्बय्याम्

'गुजराती' मुद्रणालयाधिपतिना स्वीये मुद्रणालये मुद्रयित्वा प्रकाशितम् ।

शकः १८३६, खिस्ताब्दः १९१४.

मूल्यं पादोनरूप्यकत्रयम् ।

॥ श्रीः ॥

आदिकविश्रीवाल्मीकिमहामुनिप्रणीतं

# रामायणम् ।

तिलक–रामायणशिरोमणि–गोविन्दराजीये(भूषणे)ति-

टीकात्रयसमलंकृतम् ।

# अरण्यकाण्डम् ।

## प्रथमः सर्गः ।

कथां विस्तारयन्वाल्मीकिस्तापसाश्रमालंकृतं दण्डकारण्यमुपश्लोकयति । तत्रत्यतापसाः संप्राप्तं राममर्घ्यादिना संपूज्य प्रणामादिभिस्तोषयन्तः स्वरक्षणमर्थयमानाः प्रशशंसुः ।

**प्रविश्य तु महारण्यं दण्डकारण्यमात्मवान् । रामो ददर्श दुर्धर्षस्तापसाश्रममण्डलम् ॥ १ ॥**

### तिलकटीका ।

१ ] अथ ऋषिदर्शितवर्त्मना रामस्य दण्डकारण्यप्रवेशमाह–प्रविश्येति । ऋषिदर्शितवर्त्मनेति शेषः, दण्डकारण्यं तत्संज्ञकं महारण्यं दण्डकस्य राज्ञो देशः शुक्रशापवशादरण्यमभूत् । ततः प्रभृति दण्डकारण्यसंज्ञा तस्य । प्रायेण महाराष्ट्रदेशोऽयम् । आत्मवान्स्वायत्तचित्तः, दुर्धर्षो द्विषद्भिरप्रधृष्यः । 'दुर्धर्षम्' इति पाठे रक्षोयुतत्वादशक्यप्रवेशमित्यर्थः, मण्डलं समूहः ॥१॥

### रामायणशिरोमणिः ।

सदा सीतारामं परममभिरामं श्रुतिदृशां
मुनीनां संसेव्यं विविधवनवासैकमनसम् ।
नमामः सौमित्रिं रघुपतिपदाब्जैकनिरतं
प्रयागं तीर्थानां नृपतिमभिवन्देऽतिशरणम् ॥ १ ॥

हनूमन्तं वन्दे सकलसुखवन्तं सुरनुतं
सदा संखेलन्तं पवनतनयं रामहृदयम् ।
उदारं संवन्दे गुरुचरणकमलानि सततं
यतः संप्राप्तव्याः सकलपुरुषार्थाः सुमनसाम् ॥ २ ॥

वाल्मीकिरामायणकाण्डयुग्मे
कृत्वाशु टीकां शुभवेणिकातटे ।
आरण्यकाण्डस्य करोमि सेव्यं
रामायणाख्यं हि शिरोमणिं मुदा ॥ ३ ॥

यद्दर्शनाद्रामपदारविन्दे
भक्तिः परा स्यात्सकलार्थमूलम् ।
विष्ण्वादिवन्द्येऽखिलविश्वनन्द्ये
स्वतेजसा द्योतितसूर्यचन्द्रे ॥ ४ ॥

सीतारामसमारम्भां शुकाचार्यादिमध्यगाम् ।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरंपराम् ॥ ५ ॥

रामकर्तृकदण्डकारण्यप्रवेशं वदन् तद्वृत्तान्तमाह–प्रविश्येति । दण्डकारण्यं दण्डकारण्यसंज्ञकं महदेव अरण्यं वनं प्रविश्य दुर्धर्षः धर्षयितुमशक्यो रामस्तु तापसाश्रममण्डलं तापसानां परमात्मविचारशीलानामाश्रममण्डलं पर्णशालासमूहं ददर्श । तत्संज्ञायां निमित्तं तु दण्डकाभिधराजस्य देशः शुक्रशापवशादरण्यत्वं प्राप्त इति । 'दुर्धर्षम्' इतिपाठे रक्षोयुतत्वादशक्यप्रवेशमित्यर्थ इति भट्टाः ॥ १ ॥

### भूषणटीका ।

वात्स्यश्रीशठकोपदेशिकवरश्रीपादरेण्वञ्जने-
दृष्ट्या निर्मलया निरीक्ष्य बहुधा वल्मीकजन्माशयम् ।

कुशचीरपरिक्षिप्तं ब्राह्म्या लक्ष्म्या समावृतम् । यथा प्रदीप्तं दुर्दर्शं गगने सूर्यमण्डलम् ॥ २ ॥
शरण्यं सर्वभूतानां सुसंमृष्टाजिरं सदा । मृगैर्बहुभिराकीर्णं पक्षिसंघैः समावृतम् ॥ ३ ॥
पूजितं चोपनृत्तं[1] च नित्यमप्सरसां गणैः । विशालैरग्निशरणैः स्रुग्भाण्डैरजिनैः कुशैः ॥ ४ ॥
समिद्भिस्तोयकलशैः फलमूलैश्च शोभितम् । आरण्यैश्च महावृक्षैः पुण्यैः स्वादुफलैर्वृतम् ॥ ५ ॥
बलिहोमार्चितं पुण्यं ब्रह्मघोषनिनादितम् । पुष्पैश्चा[2]न्यैः परिक्षिप्तं पद्मिन्या च सपद्मया ॥ ६ ॥

श्रीमत्कौशिकवंशसागरमणिर्गोविन्दराजाह्वयो
व्याचक्षेऽहमरण्यकाण्डमधुना पश्यन्तु निर्मत्सराः ॥ १ ॥
श्रीरामायणराजस्य दत्त्वा पीताम्बरं महत् ।
अर्पये परया लक्ष्म्या राजन्तीं रत्नमेखलाम् ॥ २ ॥

एवं पूर्वस्मिन् काण्डे जगज्जन्मादिकारणस्य वेदान्तवेद्यस्य ब्रह्मणो निरस्तसमस्ताविद्यत्वं नित्यानन्दपरिपूर्णत्वं निखिलान्तर्यामित्वं निरतिशयौज्ज्वल्यं निरुपमधर्मप्रवर्तकत्वमित्याद्यनन्तकल्याणगुणजातमुपवर्णितम् । संप्रति सज्जनसंरक्षणरूपं धर्मविशेषमभिधातुमारण्यकाण्ड आरभ्यते । यद्वा पूर्वकाण्डे पितृवचनपरिपालनरूपो धर्मः सद्भिरनुष्ठातव्य इति प्राधान्येन दर्शितम् । अथ सज्जनसंरक्षणरूपं धर्मविशेषं प्रतिपादयितुमारण्यकाण्ड आरभ्यते––प्रविश्येत्यादि । तुशब्दः पूर्वारण्यवैलक्षण्यं द्योतयति । महारण्यम् इतरदुरवगाहं दण्डकारण्यं दण्डकस्य राज्ञोऽरण्यं शुक्रशापादरण्यभूतं जनपदं प्रविश्य आत्मवान् धैर्यवान् दुरवगाहमहागहनप्रवेशेऽप्यजनितभयलेश इत्यर्थः । तत्र हेतुमाह–दुर्धर्ष इति हिंस्रादिभिरप्रधृष्य इत्यर्थः । रामः तापसानां तपस्विनाम् आश्रममण्डलम् आश्रमसमूहम् । 'तपोवने मठे ब्रह्मचर्यादावाश्रमोऽस्त्रियाम्' इति बाणः । ददर्श ॥ १ ॥

२ ] ति० टी०–आश्रममण्डलं वर्णयति–कुशेति । परिक्षिप्तं व्याप्तम् । ब्राह्मी लक्ष्मीर्ब्रह्मविद्याभ्यासजनितस्तेजोविशेषः तत्समावृतत्वादेव गगने प्रदीप्तं दुर्दर्शं रक्षआदिभिर्द्रष्टुमशक्यं सूर्यमण्डलं यथा तथा भुवि स्थितम् ॥ २ ॥

रा० टी०–मण्डलमेव विशेषयन्नाह–कुशेत्यादिभिः । कुशचीराणि परिक्षिप्तानि यस्मिंस्तं कुशचीराणां परिक्षिप्तं परिक्षेपो यस्मिन् तमिति वा ब्राह्म्या ब्रह्मसंबन्धिन्या लक्ष्म्या ब्रह्मविद्ययेत्यर्थः, समावृतं सम्यग्युक्तमत एव दुर्दर्शं गगने सूर्यमण्डलमिव प्रदीप्तं प्रकाशितं शरण्यमिति सर्वभूतानां शरण्यं स्थित्यर्हं सुसंमृष्टानि अजिराणि अङ्गणानि येषु तं मृगैः आकीर्णं व्याप्तं पक्षिणां संघैः समूहैः समावृतम् ॥२॥३॥

गो० टी०–अभिगम्यत्वायाश्रममण्डलं वर्णयति–कुशेत्यादिभिः सार्धसप्तश्लोकैः । कुशैः यज्ञार्थमाहृतैः चीरैः स्नानानन्तरमातपे परिशोषणार्थं क्षिप्तैर्वल्कलैश्च परिक्षिप्तं व्याप्तं ब्रह्म वेदः तत्संबन्धिनी वेदाध्ययनतदर्थानुष्ठानजन्येत्यर्थः, तया लक्ष्म्या श्रिया समावृतं समन्तादावृतम् अत एव गगने दीप्तं गगनमध्यस्थमित्यर्थः, दुर्दर्शं सूर्यमण्डलं यथा तथाऽवस्थितमित्यर्थः, तद्वद्रक्षोभिरनभिभवनीयम् । उदयास्तमययोर्हि सूर्यस्य मन्देहाख्यरक्षोभिराक्रमणं नतु मध्याह्ने ॥ २ ॥

३ ] ति० टी०–शरण्यं वासायार्हं सर्वत्राणार्हं च । सुसंमृष्टाजिरमलंकृतप्राङ्गणम् ॥ ३ ॥

गो० टी०–अत एव शरण्यं शरणार्हम् "तदर्हति" इति यत्प्रत्ययः । सहजवैरप्रयुक्तवध्यघातुकभावाभावेन सर्वप्राणिनां वरणीयमित्यर्थः, रक्षोभ्यो भीतानां वासार्हं वा 'शरणं गृहरक्षित्रोः' इत्यमरः । सदा सुसंमृष्टाजिरं सदा सम्यक् संमृष्टाङ्गणम् 'अङ्गणं चत्वराजिरे' इत्यमरः । सर्वभूतशरण्यत्वं प्रपञ्चयति–मृगैरिति ॥ ३ ॥

४ ] ति० टी०–अप्सरसां गणैरुपनृत्तमुप समीपे कृतनर्तनम् अतिमनोरमदेशत्वात् । अत एव तैः पूजितं च । अग्निशरणैरग्निहोत्रगृहैः स्रुगादिभिर्यज्ञोपकरणैश्च शोभितम् ॥ ४ ॥

रा० टी०–पूजितमिति । अप्सरसां गणैः समूहैः पूजितं शंसितमत एव उपनृत्तं समीपे संपादितनर्तनं विशालैर्विस्तीर्णैः अग्निशरणैर्यागशालाभिः स्रुग्भाण्डैः यागसामग्रीभूतस्रुग्भिः पात्रैश्च अजिनैः मृगादित्वग्भिः ॥ ४ ॥

गो० टी०–प्रनृत्तं प्रकृष्टनृत्तवत् अर्शआद्यच् बहुव्रीहिर्वा । अतिरमणीयप्रदेशत्वाद्देवतासान्निध्याद्वा नर्तनम् अत एव पूजितम् अग्निशरणैः अग्निहोत्रगृहैः स्रुङ्मुखानि भाण्डानि यज्ञपात्राणि स्रुग्भाण्डानि स्फ्यश्च कपालानि चेत्याद्याम्नातानि तैः । 'वणिङ्मूलधने पात्रे भाण्डम्' इति वैजयन्ती । कुशैः परिस्तरणार्थैः कुशचीरेत्यत्र संगृहीतकुशोक्तिः ॥ ४ ॥

५ ] ति० टी०–आरण्यैररण्यभवैः ॥ ५ ॥

रा० टी०–समिदादिभिश्च शोभितमारण्यैः अरण्यजनितैर्वृतं युक्तम् ॥ ५ ॥

गो० टी०–अरण्ये भवैः आरण्यैः ॥ ५ ॥

६ ] ति० टी०–बलिहोमार्चितं वैश्वदेवहोमबलिहरणैः सत्कृतं, ब्रह्मघोषो वेदघोषस्तेन निनादितं संजातनिनादम् । पद्मिनी सरः, सपद्मया पद्मपुष्पयुक्तया ॥ ६ ॥

रा० टी०–बलिहोमार्चितं बलिभिः उपहारैः होमैश्च अर्चितं पुण्यं दर्शनमात्रेण पुण्यजनकं ब्रह्मघोषेण वैदिकशब्दोच्चारणशब्देन निनादितं शब्दितमन्यैः चित्रकूटवनवर्तिपुष्पविलक्षणैः पुष्पैः परिक्षिप्तं सपद्मया पद्मसहितया पद्मिन्या सरस्या अर्चितं युक्तम् ॥ ६ ॥

गो० टी०–बलिभिः भूतबलिप्रभृतिभिः होमैर्वैश्वदेवादिहो-

१ च प्रनृत्तमिति गो. पाठः । २ वन्यैरिति गो. पाठः ।

फलमूलाशनैर्दान्तैश्चीरकृष्णाजिनाम्बरैः । सूर्यवैश्वानराभैश्च पुराणैर्मुनिभिर्युतम् ॥ ७ ॥
पुण्यैश्च नियताहारैः शोभितं परमर्षिभिः । तद्ब्रह्मभवनप्रख्यं ब्रह्मघोषनिनादितम् ॥ ८ ॥
ब्रह्मविद्भिर्महाभागैर्ब्राह्मणैरुपशोभितम् । तं दृष्ट्वा राघवः श्रीमांस्तापसाश्रममण्डलम् ॥ ९ ॥
अभ्यगच्छन्महातेजा विज्यं कृत्वा महद्धनुः । दिव्यज्ञानोपपन्नास्ते रामं दृष्ट्वा महर्षयः ॥ १० ॥
अभिजग्मुस्तदा प्रीता वैदेहीं च यशस्विनीम् । ते तं सोममिवोद्यन्तं दृष्ट्वा वै धर्मचारिणम् ॥ ११ ॥
लक्ष्मणं चैव दृष्ट्वा तु वैदेहीं च यशस्विनीम् । मङ्गलानि प्रयुञ्जानाः प्रत्यगृह्णन्दृढव्रताः ॥ १२ ॥
रूपसंहननं लक्ष्मीं सौकुमार्यं सुवेषताम् । ददृशुर्विस्मिताकारा रामस्य वनवासिनः ॥ १३ ॥

---

मैश्च आर्चितं सत्कृतं ब्रह्मघोषैर्वेदघोषैः निनादितं संजातनिनादं पुष्पैः देवपूजार्थमुपक्षिप्तैः सपद्मया पद्मसहितया पद्मिन्या सरस्या ॥ ६ ॥

७ ] ति० टी०—पुराणैर्वृद्धैः ॥ ७ ॥

रा० टी०—फलमूलाशनैः फलमूलमात्रभोजनैः दान्तैः नियमितोभयकरणैः चीरकृष्णाजिनाम्बरैः चीराणि खण्डपटाः कृष्णाजिनानि च तान्येवाम्बराणि येषां तैः सूर्यवैश्वानराभैः सूर्याग्निसदृशैः पुराणैः चिरन्तनैर्मुनिभिर्युतम् ॥ ७ ॥

गो० टी०—मुनिषु तारतम्यप्रदर्शनार्थं सूर्यवैश्वानराभैरित्युपमानद्वयं पुराणैर्वृद्धैः ॥ ७ ॥

८ ] ति० टी०—ब्रह्मभवनं ब्रह्मलोकः, ब्रह्मघोषो वेदघोषः ॥ ८ ॥

रा० टी०—नियताहारैः नियमिताहारयुक्तैः पुण्यैः परमर्षिभिः शोभितमत एव ब्रह्मभवनप्रख्यं ब्रह्मलोकसदृशं ब्रह्मघोषैः परमात्मपर्यवसानकशब्दैः निनादितम् ब्रह्मविद्भिः परमात्मबोधनतत्परैः महाभागैः ब्राह्मणैरुपशोभितम् तत्तापसाश्रममण्डलमस्तीति शेषः, तत्तापसाश्रममण्डलं श्रीमान् रामः महद्धनुर्विज्यं कृत्वा अभ्यगच्छत् । सार्धश्लोकाष्टकमेकान्वयि ॥ ८ ॥ ९ ॥

गो० टी०—परमर्षिभिः उत्तममुनीनामपि पूजनीयैः तत् प्रसिद्धं ब्रह्मभवनप्रख्यं ब्रह्मलोकतुल्यप्रसिद्धिकं ब्रह्मघोषैः कर्मकालिकवेदमन्त्रघोषैः निनादितं ब्रह्मविद्भिः परब्रह्मज्ञानिभिः महाभागैः महाभाग्यैः 'भागो रूपार्थके प्रोक्तो भागधेयैकदेशयोः' इति विश्वः । एतादृशं तापसाश्रममण्डलं ददर्शेति पूर्वेणान्वयः ॥ ८ ॥

९ ] ति० टी०—ब्रह्मविद्भिः सर्वत्र ब्रह्मानन्यत्वज्ञानवद्भिः । ब्राह्मणैरुक्तलक्षणैरन्वर्थब्राह्मणैस्तादृशैर्युक्तत्वादेव ब्रह्मभवनप्रख्यत्वमाश्रमस्य ॥ ९ ॥

गो० टी०—स इति । विज्यं विसृष्टमौर्वीकं कृत्वा विनीतवेषप्रवेश्यत्वादाश्रमाणामाश्रममृगपक्ष्यादिभयनिवृत्त्यर्थं च विज्यकरणम्, अभ्यगच्छत् अभिमुखीभूय गतः ॥ ९ ॥

१०–१२ ] ति० टी०—विज्यमवरोपितगुणम् आश्रमवर्तिमृगादित्रासनिवृत्त्यर्थमिति भावः । दिव्यज्ञानोपपन्ना आदिगुर्ववतारो रामो रावणादीन्हनिष्यतीत्येवं ज्ञानयुक्तास्ते रामं सीतां च, चाल्लक्ष्मणं च, दृष्ट्वा प्रीता अभिजग्मुराभिमुख्येन जग्मुः । उद्यन्तं सोममिव तद्वत्प्रियदर्शनम् "सोमोऽस्माकं ब्राह्मणानां राजा" इति श्रुतेः । स्वकुलरक्षकसोमराजमिव स्वरक्षकं धर्मचारिणं रामं दृष्ट्वा लक्ष्मणं यशस्विनीं पातिव्रत्ययशोवतीं रक्षःकुलसंहारजयशोवतीं च सीतां दृष्ट्वा अत एवाग्रे रक्षणप्रार्थनोपपद्यते । मङ्गलान्याशीर्वादान्प्रत्यगृह्णन्संरक्षकेष्टदेवताबुद्ध्या प्रतिगृहीतवन्तः ॥ १०–१२ ॥

रा० टी०—दिव्येति । दिव्यज्ञानोपपन्नास्ते महर्षयः रामं वैदेहीं च दृष्ट्वा प्रीताः सन्तः अभिजग्मुः तत्संमुखं प्रापुः । अर्धद्वयमेकान्वयि ॥ १० ॥

गो० टी०—दिव्येति । दिव्यं लोकविलक्षणं ज्ञानं तेन उपपन्ना युक्ताः अतीतानागतज्ञानवन्त इत्यर्थः, रामोऽयं रावणवधार्थमवतीर्णो विष्णुः सीता लक्ष्मीः लक्ष्मणश्च तदंश इति विज्ञाततदवताररहस्या इति यावत् ॥ १० ॥

रा० टी०—त इति । ते ऋषयः उद्यन्तं सोमं चन्द्रमसमिव धर्मचारिणं रामं लक्ष्मणं च वैदेहीं दृष्ट्वा मङ्गलानि मङ्गलप्रापकवाक्यानि प्रयुञ्जानाः सन्तः प्रत्यगृह्णन् स्वसेव्यत्वेन स्वीचक्रुः ॥ ११ ॥ १२ ॥

गो० टी०—ते तमित्यादि । सार्धश्लोक एकान्वयः । ते त्रिकालज्ञाः तं राक्षसनिरासायावतीर्णं रामम् उद्यन्तं सोममिव स्थितम् अन्धकारनिवर्तनप्रवृत्तं चन्द्रमिव स्थितम्, यद्वा उद्यन्तं सोममिव प्रतिपच्चन्द्रमिवार्चनीयम्, यद्वा वनराज्यन्तःप्रादुर्भवत्तया मेघावृतमिन्दुमिव स्थितं धर्मचारिणो दृष्ट्वा स्वाचर्यमाणधर्माराध्यं साक्षात्कृत्य, यद्वा इतः पूर्वं धर्मवीर्येण पश्यन्ति संप्रति चक्षुषा साक्षात्कुर्वन्तीत्यर्थः । तथा लक्ष्मणं च वैदेहीं च दृष्ट्वा मङ्गलानि प्रयुञ्जानाः स्वापेक्षितरक्षाभ्यर्थनात् प्रागेव मङ्गलानि प्रयुञ्जानाः रामस्य सौन्दर्यसौकुमार्यादिकं दृष्ट्वा रक्षोभूयिष्ठेऽत्र वने किं भविष्यतीति व्याकुलहृदयतया तस्मै विरोधिनिरसनवचनानि प्रयुञ्जानाः दृढव्रताः अशिथिलतद्रक्ष्यत्वनियमाः सन्तः प्रत्यगृह्णन् प्रतिगृहीतवन्तः, प्रत्युत्थानफलप्रदानाद्युपचारमकुर्वन्नित्यर्थः॥ ११॥ १२॥

१३ ] ति० टी०—रूपसंहननम् ' अङ्गान्यभूषितान्येव प्रेक्षणीयैर्विभूषणैः । येन भूषितवद्भान्ति तद्रूपमिति कथ्यते ॥'

---

१ वृतामिति गो. पाठः । २ स दृष्ट्वेति गो. तं दृष्ट्वेति रा. पाठः । ३ अभ्यगच्छंस्तथेति गो. पाठः । ४ तमिति गो. पाठः । ५ चारिण इति गो. पाठः ।

वैदेहीं लक्ष्मणं रामं नेत्रैरनिमिषैरिव । आश्चर्यभूतान्ददृशुः सर्वे ते वनवासिनः ॥ १४ ॥
अत्रैनं हि महाभागाः सर्वभूतहिते रताः । अतिथिं पर्णशालायां राघवं संन्यवेशयन् ॥ १५ ॥
ततो रामस्य सत्कृत्य विधिना पावकोपमाः । आजह्रुस्ते महाभागाः सलिलं धर्मचारिणः ॥ १६ ॥
मङ्गलानि प्रयुञ्जाना मुदा परमया युताः । मूलं पुष्पं फलं सर्वमाश्रमं च महात्मनः ॥ १७ ॥

इति लक्षितं रूपं तदुक्तं संहननमापादकेशं सुश्लिष्टसंबन्धः । 'अङ्गप्रत्यङ्गकानां च संनिवेशो यथोचितम् । सुश्लिष्टसंधिबन्धो यस्तत्सौन्दर्यमिहोच्यते ॥' इत्युक्तलक्षणं सौन्दर्यम् । लक्ष्मीं कान्तिलावण्यम् । 'मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु लावण्यं तन्निगद्यते ॥' सौकुमार्यं परचित्तग्राहितालक्षणं मार्दवं वा । विस्मितानामद्भुतवस्तुदर्शनवतां य आकारो मुखप्रसादविस्फारितेक्षणत्वादिरूपस्तथा विधाकाराः । विस्मितचित्ता इति यावत् वनवासिन इति रामविशेषणम् । तादृशस्यापीदृशं रूपादीत्याश्चर्यम् ॥ १३ ॥

रा० टी०—रूपेति । रामस्य रूपसंहननं प्राकृतविलक्षणरूपसन्निवेशं लक्ष्मीं शोभासंपत्तिं सौकुमार्यं सुकुमारतां सुवेषतां शोभनवेषं विस्मिताकाराः विलक्षणाकारविषयकविस्मयवन्तः वनवासिनो ददृशुः, आकारे विस्मिताः विस्मिताकारा राजदन्तादित्वात् परत्वम् ॥ १३ ॥

गो० टी०—मङ्गलाशासननिमित्तं सौन्दर्यसौकुमार्यादिकमाह—रूपेति । रूपस्य शरीरस्य संहननं समः समविभक्ताङ्ग इत्युक्तावयवसंस्थानविशेषं लक्ष्मीं समुदायशोभां सौकुमार्यं पुष्पहासतुल्यकोमलतां सुवेषतां शोभनलावण्यवत्तां लावण्यस्वरूपमुक्तम् 'मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु लावण्यं तदिहोच्यते' इति । विस्मितानामाकारा इवाकारा येषां ते विस्मिताकाराः विस्मयावेदकस्वमुखप्रसादफुल्लनेत्रत्वादियुक्ता इत्यर्थः, वनवासिनः विकारहेतौ सत्यप्यविकृतचित्ता इत्यर्थः, वनवासिनोऽपि विस्मिताकाराः सन्तः रामस्य रूपसंहननादिकं ददृशुः । अभेदेन प्रत्ययद्योतनार्थं चकाराप्रयोगः, यद्वा अभूषणेऽपि भूषितवद्भासमानत्वं रूपम् । तथोक्तम्—'अङ्गान्यभूषितान्येव वलयाद्यैर्विभूषणैः । येन भूषितवद्भान्ति तद्रूपमिति कथ्यते' इति । संहननं सौन्दर्यं तदप्युक्तम्—'अङ्गप्रत्यङ्गकानां यः संनिवेशो यथोचितः । सुश्लिष्टसन्धिबन्धः स्यात्तत्सौन्दर्यमिहोच्यते' इति । लक्ष्मीं लावण्यं तच्चोक्तं पूर्वमेव सौकुमार्यमप्युक्तमेव । सुवेषताम् उचितशृङ्गारसंपन्नत्वम् ॥१३॥

१४ ] ति० टी०—तदेवाह—वैदेहीमिति । अनिमेषैर्निमेषरहितैः । आश्चर्यभूतान्रूपादिभिर्विस्मयप्रापकान्सर्वे ते वनवासिन ऋषयो मृगादयश्च । तद्दर्शनानन्दविच्छेदभयेन च निमेषराहित्यम् ॥ १४ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—वैदेहीमिति । आश्चर्यभूतान्विलक्षणरूपादिप्राप्तान् वैदेह्यादीननिमिषैः निमेषरहितैरिव नेत्रैः सर्वे वनवासिनः ददृशुः ॥ १४ ॥

गो० टी०—एवं न्यायं सीतालक्ष्मणयोरप्यतिदेष्टुमाह—वैदेहीमिति । सर्वे वनचारिणः आश्चर्यभूतान् अदृष्टपूर्वतया आश्चर्यावहान् वैदेहीं लक्ष्मणं रामं च दिव्यरूपदर्शनजनितानन्दभङ्गभीरुतया विस्मयविस्फारितेक्षणतया च सर्वथा निर्निमेषैरिव स्थितैर्नेत्रैरुपलक्षिताः सन्तः ददृशुः । अनेन पूर्वश्लोके विस्मिताकारा इत्येतद्विवृतम् ॥ १४ ॥

१५ ] ति० टी०—अत्राश्रममण्डले । अतिथिं न्यायतः पूजार्हम् । पर्णशालायां प्रातिस्विक्याम् ॥ १५ ॥

रा० टी०—अत्रेति । महाभागा ऋषयः अत्र प्रसिद्धायां पर्णशालायामतिथिं रामं संन्यवेशयन् ॥ १५ ॥

गो० टी०—अत्रेति । अत्र आश्रममण्डले महाभागाः महाभाग्याः ऋषयः सर्वभूतहिते रतम् अतिथिं न्यायतः पूजार्हम् एनं राघवं पर्णशालायां स्वस्वपर्णशालायां सन्यवेशयन् स्थापयामासुः ॥ १५ ॥

१६ ] ति० टी०—रामस्य सत्कृत्येति कर्मणः शेषत्वविवक्षायां षष्ठी । भवद्दर्शनादिभिर्वयं धन्या इत्यादिप्रियवचनैः सत्कृत्य सलिलं सलिलादिपूजाद्रव्यमाजह्रुः रामपूजार्थमिति शेषः ॥ १६ ॥

रा० टी०—तत इति । ततः पर्णशालाप्रापणानन्तरं पावकोपमा ऋषयः धर्मचारिणो रामस्य विधिना सत्कृत्य सलिलमर्घ्यादिसाधनीभूतजलम् आजह्रुः आनिन्युः ॥ १६ ॥

गो० टी०—तत इति । रामस्य सत्कृत्येति षष्ठ्यार्षी "न लोकाव्ययनिष्ठा—" इत्यादिना निषेधात् । सत्कृत्य सत्कारं कृत्वा कुशलप्रश्नादिकं कृत्वेत्यर्थः । पावकोपमा इत्यनेन रामस्य पवित्राणां पवित्रत्वमुक्तम् । धर्मचारिण इत्यनेन सत्कारस्य धर्माचरणफलत्वमुक्तम् । महाभागा इति सुकृतपरिपाक उच्यते । सलिलम् अर्घ्याद्युचितम् आजह्रुः ॥ १६ ॥

१७ ] ति० टी०—आश्रमं च स्ववासस्थानभूतम् ॥१७॥

रा० टी०—मङ्गलानीति । परमया अत्युत्कृष्टया मुदा हर्षेण मङ्गलानि प्रयुञ्जानाः धर्मज्ञाः ऋषयः मूलादिकं निवेदयित्वा प्राञ्जलयः सन्तः अब्रुवन् आर्षो ल्यबभावः । सार्धश्लोक एकान्वयी ॥ १७ ॥

गो० टी०—मूलमिति । धर्मज्ञाः शेषिणि शेषवृत्तिरूपधर्मज्ञाः प्राञ्जलयः प्रकृष्टाञ्जलयः मूर्ध्नि कृताञ्जलय इत्यर्थः, महात्मनः शेषिणो रामस्य वन्यं मूलादिकमाश्रमं च निवेदयित्वा इमानि भवदीयानि यथेष्टं विनियुङ्क्ष्वेति निवेद्य ततोऽब्रुवन् ॥ १७ ॥

१ रतामिति गो० पाठः । २ ब्रह्मचारिण इति रा० पाठः । ३ अर्धमेतत् गो० नास्ति ।

निवेदयित्वा धर्मज्ञास्ते तु प्राञ्जलयोऽब्रुवन्। धर्मपालो जनस्यास्य शरण्यश्च[2] महायशाः ॥ १८ ॥
पूजनीयश्च मान्यश्च राजा दण्डधरो गुरुः। इन्द्रस्यैव[3] चतुर्भागः प्रजा रक्षति राघवः ॥ १९ ॥
राजा तस्माद्वरान्भोगान्रम्यान्भुङ्क्ते[4] नमस्कृतः। ते वयं भवता रक्ष्या भवद्विषयवासिनः।
नगरस्थो वनस्थो वा त्वं नो राजा जनेश्वरः। ॥ २० ॥
न्यस्तदण्डा वयं राजञ्जितक्रोधा जितेन्द्रियाः। रक्षणीयास्त्वया[5] शश्वद्गर्भभूतास्तपोधनाः ॥ २१ ॥

---

१८ ] ति० टी०—प्राञ्जलयः निजकुलदेवतावतारत्वात् अन्यथा हि क्षत्रिये ब्राह्मणाञ्जलिकरणस्यानौचित्यं स्यात्॥१८॥

रा० टी०—तद्वचनाकारमाह—धर्मेति। हे राघव! धर्मपालः परमधर्मरक्षकः अत एव अस्य एतल्लोकस्थस्य जनस्येन्द्रस्य तदुपलक्षितोर्ध्वलोकस्थस्य च ब्रह्मादित्रयस्य वा शरण्यः शरणे हितः अत एव महायशाः समातिशयरहितयशोविशिष्टः अत एव पूजनीयः सर्वकर्तृकपूजायोग्यः अत एव मान्यः सर्वप्रकारेण सत्करणीयः अत एव गुरुः सर्वश्रेष्ठः अत एव चतुर्भागः चतुर्णाम् अर्थधर्मकाममोक्षाणां भागः आश्रितकर्तृकसेवा यस्मात् सः दण्डधरः खलनिग्रहकर्ता राजा नित्यराजत्वविशिष्टः भवान् प्रजाः रक्षत्येव ॥ १८ ॥ १९ ॥

गो० टी०—धर्मपाल इति। धर्मपालः वर्णाश्रमधर्मपालकः अस्य आर्तस्य मुनिजनस्य शरण्यः शरणार्हः पूजनीयश्च देवताबुद्ध्या अर्चनार्हः मान्यः राजबुद्ध्या बहुमानार्हः। मान्यत्वे हेतुः राजा दण्डधर इति, पूजनीयत्वे हेतुर्गुरुरिति, दण्डस्य निग्रहस्य धरः कर्ता ॥ १८ ॥

१९ ] ति० टी०—पूजनीयो देवताबुद्ध्या पालकत्वेन गुरुत्वाद्वा। मान्यो राजबुद्ध्या सत्कारार्हः। तदेवाह—राजेत्यादि। दण्डधरो दुष्टनिग्रहकर्ता। सर्वलोकप्रसिद्धं पूजाहेतुमाह—इन्द्रस्येति। इन्द्रस्याशेषयागपूज्यस्य चतुर्भागश्चतुर्थोऽशः, यद्वा इन्द्रस्य परमात्मनो विष्णोश्चतुर्थोऽशः। एवकारेण न यस्यकस्यापि देवतासामान्यस्येति सूचितम्॥ १९ ॥

गो० टी०—पूज्यत्वे हेत्वन्तरमाह—इन्द्रस्येहेति। इह भूस्वर्गे इन्द्रस्य चतुर्भागः चतुर्थांशः राजा प्रजा रक्षति तस्माद्धेतोः वरान् श्रेष्ठान् भोगान् भुङ्क्ते अनुभवति। इन्द्रस्येति लोकपालान्तराणामुपलक्षणम् 'अष्टाभिर्लोकपालानां मात्राभिः कल्पितो नृपः' इति वचनात्। वस्तुतस्तु इन्द्रशब्दोऽयं परमात्मपरः 'इदि परमैश्वर्ये' इतिधातोस्तत्रैव मुख्यवृत्तत्वात् "इन्द्रो मायाभिः पुरुरूप ईयते" इति श्रौतप्रयोगाच। इन्द्रस्य परमात्मनः चतुर्भागः चतुर्थांशः तदवतारभूते व्यक्तिचतुष्टये एकव्यक्तिभूतः भवान् भोगान् भुङ्क्ते इत्यर्थः। पूर्वापरश्लोकानुगुण्याचायमेवार्थः नह्यन्यस्मै ऋषयः प्राञ्जलयो भवन्ति नचाश्रमं निवेदयन्ति नापि गर्भभूतत्वं वदन्ति ॥ १९ ॥

२० ] ति० टी०—नमस्कृतः लोकैरिति शेषः। एवं राजमात्रस्याप्येवंविधत्वे साक्षाद्भगवतस्तवैवंविधत्वमिति किमु वक्तव्यमिति ध्वनिः। ते वयमृषयः। रक्ष्यत्वे हेतुः—भवद्विषयवासिन इति। विषयो देशः। सार्वभौमत्वाद्दण्डकारण्यमपि तद्देश एवेति भावः। विष्ण्ववतारत्वात्सर्वो देशस्तवैवेति गूढोऽभिप्रायः। ननु वनस्थेन बलहीनेन मया कथं भवन्तो रक्ष्यास्तत्राह—नगरस्थ इति। नगरमयोध्या। त्वं नो राजा रक्षकः राजा जनेश्वर इत्याभ्यामिहामुत्र च त्वमेव रक्षकः सर्वशक्तिसंपन्नस्य नगरवनवासाभ्यामुपचयापचययोरभावादिति ध्वनितम् ॥ २० ॥

रा० टी०—राजेति। तस्माद्ब्रह्मादेरपि गुरुत्वाद्धेतोः नमस्कृतो राजा भवान् वरान् भोगान् भुङ्क्ते अत एव भवद्विषयवासिनस्ते वयं भवता रक्ष्याः ॥ २० ॥

गो० टी०—भवता रक्ष्यत्वे त्वद्देशवासित्वमेव निष्प्रमादो हेतुः नोपासनादिकमित्याह—ते वयमिति। ते वयम् आर्ता वयं भवता रक्ष्याः आर्तरक्षणदीक्षितेन त्वया रक्षितुमर्हाः। किमुपासनबलेनैवमुच्यते नेत्याह—भवद्विषयवासिन इति। भवद्देशवासित्वमेव भवद्रक्ष्यत्वे हेतुः नान्यः। तत्र प्रमादादिसंभवात् देशवासित्वे तदभावादिति भावः। भवतु तथैव रक्षिष्यामः यदा रक्षणप्रदेशे स्थास्याम इत्यत्राह—नगरस्थ इति। नगरस्थः सिंहासनस्थो वा वनस्थः तद्रहितो वा त्वं स्वतःसिद्धसर्वशक्तिकः निरुपाधिकसर्वशेषी च त्वं नः अस्माकं राजा रक्षकः। तत्र हेतुमाह—जनेश्वर इति निरुपाधिकसर्वशेषीत्यर्थः ॥ २० ॥

२१ ] ति० टी०—ननु महाप्रभावानां कुतो रक्षकान्तरापेक्षेत्यत आह—न्यस्तेति। त्यक्तभूतनिग्रहाः। तत्र हेतुजितक्रोधाः तपोनाशभयात्। अतो रक्षितव्याः। गर्भभूताः यथा मातुर्गर्भे प्राप्तो जीवो मात्रा रक्ष्यते तद्वद्रक्ष्या इत्यर्थः ॥ २१ ॥

रा० टी०—नन्वहमपि भवत्सदृशो वनस्थ इति किं रक्षणप्रार्थनयेत्यत आह—नगरस्थ इति। जनेश्वरः सर्वजननियन्ता त्वं नगरस्थो वनस्थो वा नो राजा। ननु भवन्तोऽतितेजस्विनः कुतो न आत्मरक्षां कुर्वन्तीत्यत आह—हे राजन्! वयं न्यस्तदण्डाः त्यक्तनिग्रहाः ॥ २१ ॥

गो० टी०—ननु भवन्त एव तपःप्रभावेन स्वरक्षणक्षमा इत्यत्राह—न्यस्तेति। न्यस्तः त्यक्तो दण्डो यैस्ते न्यस्तदण्डाः शापतो निग्रहकरणरहिता इत्यर्थः। तत्र हेतुः—जितक्रोधा इति तपोनाशभीत्या त्यक्तक्रोधा इत्यर्थः। तत्रापि हेतुः—जितेन्द्रिया इति इन्द्रियजयेन कामाद्यभिष्वङ्गाभावात्तन्मूलक्रोधरहिता इत्यर्थः। वस्तुतस्तु स्वसामर्थ्ये सत्यपि स्वरूपविरोधान्नास्मा-

---

१ तत इति गो. पाठः। २ त्वमिति गो. पाठः। ३ इहेति गो. पाठः। ४ भुङ्क्ते लोकेति गो. पाठः। ५ रक्षितव्या इति गो. पाठः।

एवमुक्त्वा फलैर्मूलैः पुष्पैरन्यैश्च राघवम् । वन्यैश्च विविधाहारैः सलक्ष्मणमपूजयन् ॥ २२ ॥
तथान्ये तापसाः सिद्धा रामं वैश्वानरोपमाः । न्यायवृत्ता यथान्यायं तर्पयामासुरीश्वरम् ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे प्रथमः सर्गः ॥ १ ॥

## द्वितीयः सर्गः ।

स्वीकृतमुनिसत्कृती रामः सीतालक्ष्मणाभ्यां वनं प्रविशन्विराधाख्यं घोरं रक्षो ददर्श । प्राप्तं तत्सीतामपहृत्य तौ विगर्ह्य च तयोर्वधं प्रतिजज्ञे । निशाचराक्रान्तत्वाच्चकितां सीतां विलोक्य कैकेयीमुपालभ्य शोचति रामे लक्ष्मणो विराधवधं प्रतिजज्ञे ।

कृतातिथ्योऽथ रामस्तु सूर्यस्योदयनं प्रति । आमन्त्र्य स मुनीन्सर्वान्वनमेवान्वगाहत ॥ १ ॥
नानामृगगणाकीर्णमृक्षशार्दूलसेवितम् । ध्वस्तवृक्षलतागुल्मं दुर्दर्शसलिलाशयम् ॥ २ ॥

भिरस्मद्रक्षणमुचितमित्याहुः—त्वया रक्षितव्या इति अनन्यार्हशरणा इत्यर्थः । गर्भभूताः प्रजातुल्याः अनेनानन्यार्हशेषत्वमुक्तम् । शश्वदिति काकाक्षिन्यायेनोभयत्राप्यन्वेति तेनानन्यार्हशेषत्वानन्यशरणत्वयोः स्वाभाविकत्वमुक्तम् । तथापि साधनं विना रक्षणेतिप्रसङ्गः स्यादित्यत्राहुः—तपोधना इति । तपोऽत्र न्यासनिक्षेपापरपर्यायः "तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः" इति श्रुतेः । प्रपत्त्यैकधना वयमित्यर्थः । अस्मत्कृतां प्रपत्तिं व्याजीकृत्यास्मान् रक्षेत्यर्थः, रक्षणमत्र मोक्षप्रापणमेव खरादिभ्यस्त्राणस्य शरभङ्गाश्रमवासिभिर्विवक्ष्यमाणत्वात् । इमे तु मुनयो मोक्षैकपराः ॥ २१ ॥

२२ ] ति० टी०—अन्यैर्नीवारादिभिर्विविधाहारैः । सलक्ष्मणमित्यनेन लक्ष्मणस्याप्याहारभक्षणं स्पष्टमुक्तम् ॥ २२ ॥

रा० टी०—रक्षणीया इति । गर्भभूताः मात्रैकरक्ष्यपुत्रतुल्या इत्यर्थः, तपोधनास्त्वया शश्वद्रक्षणीयाः एवमुक्त्वा फलादिभिः वन्यैर्वनोद्भवैः अन्यैः फलाद्यतिरिक्तैः विविधाहारैः नीवारादिभिः सलक्ष्मणं लक्ष्मणसहितं राममपूजयन् । सार्धश्लोक एकान्वयी ॥ २२ ॥

गो० टी०—अतस्तेषां प्रपन्नानां यथोचितकैङ्कर्यप्रवृत्तिं दर्शयति—एवमित्यादि । ऋषयः एवमुक्त्वा सलक्ष्मणराघवं वन्यैः पुष्पैः फलादिभिश्चापूजयन् । राघवमित्यनेन सीतापूजनमप्यर्थसिद्धं मिथुनशेषित्वस्यैव स्वरूपत्वात् प्रभाप्रभावन्न्यायेन तयोरपृथग्भावात् । अन्यैः संकल्पसिद्धैः विविधाहारैः सूपान्नादिभिः ॥ २२ ॥

२३ ] ति० टी०—अन्ये सिद्धाः संकल्पसिद्धाः । न्यायो धर्मस्तदनुरुद्धं वृत्तं चरित्रं येषां ते । यथान्यायमीश्वरार्हपदार्थोपस्थापनेनेश्वरं तर्पयामासुः ॥ २३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे प्रथमः सर्गः ॥ १ ॥

रा० टी०—तथेति । वैश्वानरोपमाः अग्निसदृशाः न्यायवृत्ता न्यायमार्गावलम्बिनः सिद्धाः प्राप्तसकलसिद्धयः अन्ये तापसाः ईश्वरं सर्वनियन्तारं रामं यथान्यायं यथोचितं तर्पयामासुः ॥ २३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे प्रथमः सर्गः ॥ १ ॥

गो० टी०—तथान्य इति । सिद्धाः सिद्धसाधननिष्ठाः न्यायवृत्ताः न्यायानुगुणव्यापाराः स्वरूपानुरूपकैङ्कर्यवृत्तय इत्यर्थः । वैश्वानरोपमाः अस्पृष्टविरोधिनः स्वरूपविरुद्धनिषिद्धकाम्यकर्मान्तरत्यागिन इत्यर्थः, अन्ये पूर्वेभ्यो विलक्षणाः तापसाः कायिककैङ्कर्यासक्ता इत्यर्थः, ईश्वरं परमशेषिणं रामं यथान्यायं यथोचितं स्तुतिप्रणामादिभिस्तर्पयामासुरित्यर्थः ॥ २३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने प्रथमः सर्गः ॥ १ ॥

१] ति० टी०—उदयनं प्रति उदयकाले अन्वगाहत प्राविशत्[१]

रा० टी०—रामवृत्तान्तमाह—कृतातिथ्य इत्यादिभिः । कृतातिथ्यो रामस्तु सूर्यस्य उदयनं प्रति उदयकाले सर्वान् मुनीन् आमन्त्र्य आपृच्छ्य वनमेव अन्वगाहत ॥ १ ॥

गो० टी०—एवं प्रथमसर्गेण सिद्धसाधननिष्ठानां मुमुक्षूणां मुनीनां तदीयपर्यन्तं विशिष्टविषयकैङ्कर्यं प्रतिपाद्य खरवधार्थिमुनिजनशरणागतिं वक्ष्यन् शरण्यत्वोपयोगिसामर्थ्यं विराधवधकथनमुखेन बोधयितुमुपक्रमते—कृतातिथ्य इत्यादिना । अत एव संक्षेपे विराधं राक्षसं हत्वा शरभङ्गं ददर्श हेत्यत्र विराधवधोपहारमुखेन शरभङ्गं दृष्टवानिति व्याख्यातम् । कृतातिथ्य इति । तुशब्देन अत्र्यादिकृतातिथ्याद्वैलक्षण्यमुच्यते । अनन्यप्रयोजनदत्तं हि भगवतः परमभोग्यं पत्रं पुष्पमित्यादि । अथशब्दः कृत्स्नवाची कार्त्स्न्येन कृतातिथ्य इत्यर्थः, भक्त्यैव किंचिद्दत्तमपि तत् सर्वातिथ्यत्वेन हि भगवान् स्वीकरोति । सूर्यस्योदयनं प्रतीति कर्मप्रवचनीययोगे द्वितीया "लक्षणेत्थंभूताख्यान–" इत्यादिना प्रतेः कर्मप्रवचनीयत्वम् । उदयनं प्रति उदयकाले प्रातःस्नानादिकर्मावसान इत्यर्थः । वनमेवान्वगाहत नच तत्र स्थातुमैच्छदित्यर्थः ॥ १ ॥

२ ] ति० टी०—ध्वस्तवृक्षलतागुल्मं विराधसंचारवशादिति शेषः । दुर्दर्शसलिलाशयमुक्तहेतुवशादेव ॥ २ ॥

---

१ शार्दूलवृकेति गो० पाठः ।

निष्कूजमानशकुनि झिल्लिकागणनादितम् । लक्ष्मणानुचरो रामो वनमध्यं ददर्श ह ॥ ३ ॥
सीतया सह काकुत्स्थस्तस्मिन्घोरमृगायुते । ददर्श गिरिशृङ्गाभं पुरुषादं महास्वनम् ॥ ४ ॥
गँभीराक्षं महावक्रं विकटं [4]विकटोदरम् । बीभत्सं विषमं दीर्घं विकृतं घोरदर्शनम् ॥ ५ ॥
वसानं चर्म वैयाघ्रं वसार्द्रं रुधिरोक्षितम् । त्रासनं सर्वभूतानां व्यादितास्यमिवान्तकम् ॥ ६ ॥
त्रीन्सिंहांश्चतुरो व्याघ्रान्द्वौ वृकौ पृषतान्दश । सविषाणं वसादिग्धं गजस्य च शिरो महत् ॥ ७ ॥
अवसज्यायसे शूले विनदन्तं महास्वनम् । स रामं लक्ष्मणं चैव सीतां दृष्ट्वा च मैथिलीम् ॥ ८ ॥
अभ्यधावत्सुसंक्रुद्धः प्रजाः काल इवान्तकः । स कृत्वा भैरवं नादं चालयन्निव मेदिनीम् ॥ ९ ॥

---

३ ] ति० टी०-निष्कूजमानाः शकुनयो यत्र तत् । विराधभयादेवं झिल्लिकागणमात्रशब्दयुतं वनमध्यं ददर्शेति संबन्धः ३

रा० टी०-नानेति । मृगगणैः आकीर्णं व्याप्तम् ऋक्षादिभिः सेवितं ध्वस्ताः राक्षसातिसंचारेण परिमर्दिताः वृक्षादयो यस्मिन् दुर्दर्शाः राक्षसातिसंचारवशाद्द्रष्टुमशक्याः सलिलाशयाः कूपादयो यस्मिन् तं, निष्कूजाः राक्षसभिया शब्दरहिताः नानाशकुनाः अनेकविधपक्षिणः यस्मिन् । अदन्तोऽपि शकुनशब्दः तथाहि 'शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः' इत्यमरसिंहः । झिल्लिकानां गणैर्नादितं वनमध्यं लक्ष्मणानुचरः लक्ष्मणः अनुचरो यस्य स रामः ददर्श । झिल्लिकागणनादितमित्यनेन झिल्लिकाशब्दस्य राक्षसप्रियत्वं सूचितम् । श्लोकद्वयमेकान्वयि ॥ २ ॥ ३ ॥

गो० टी०-नानामृगगणेत्यादि । श्लोकद्वयमेकान्वयम् । ध्वस्तवृक्षलतागुल्मं तुङ्गकठिनविराधदेहसंपर्कादिति भावः । दुर्दर्शसलिलाशयमित्यत्राप्ययमेव हेतुः । निष्कूजनानाशकुनिं निःशब्दनानाविधपक्षिकं सुदूरमुड्डीयमानोऽपि पक्षी तस्मात् भिया निःशब्दं लीयत इति भावः । झिल्लिकागणनादितं झिल्लिकाभिस्तु दुर्दर्शत्वात् सर्वदा शब्द्यत इत्यर्थः । नानेत्यादि सर्वं वनमध्यविशेषणम् ॥ २ ॥ ३ ॥

४] ति० टी०-घोरमृगास्तरक्ष्वादयः पुरुषादं राक्षसम् ॥४॥

रा० टी०-सीतयेति । घोरमृगाः व्याघ्रादयस्तैः आयुते व्याप्ते तस्मिन् वने काकुत्स्थो रामः गिरिशृङ्गाभं पर्वतशृङ्गसदृशं गभीराक्षं गभीरे अन्धकूपसदृशे अक्षिणी यस्य, विकटं विशालशरीरं, विकटोदरं विशालोदरविशिष्टं बीभत्सं कुत्सितावयवत्वेन कुत्सितं विषमं निम्नोन्नतावयवसंस्थानं दीर्घमत्युन्नतशरीरं विकृतं नानाविकारविशिष्टशरीरविशिष्टमत एव घोरं भयंकरं दर्शनं यस्य ॥ ४ ॥ ५ ॥

गो०टी०-सीतया सहेत्यादि । सार्धश्लोकचतुष्टयमेकान्वयम् । घोरमृगास्तरक्ष्वादयः पुरुषानत्ति भक्षयतीति पुरुषादः पचाद्यच् राक्षसमित्यर्थः । महास्वनं दृढकण्ठध्वनिकम् ॥ ४ ॥

५ ] ति० टी०-गभीराक्षं महाकूपवदगाधचक्षुषम्, विकटं विशालं, बीभत्सं कुत्सितं, विषमं निम्नोन्नतसंस्थानं, विकृतं वक्ष्यमाणधर्मैर्विपरीतवेषम् अत एव घोरदर्शनम् ॥ ५ ॥

गो० टी०-गम्भीराक्षं निम्नाक्षं, महावक्रं पृथुतरमुखं, विकटं विशालं, विषमोदरं निम्नोन्नतोदरं, बीभत्सं मांसरुधिरालिप्तशरीरतया कुत्सितं, विषमं न्यूनाधिकावयवं, विकृतम् उक्तप्रकारेण विकृतवेषम् अत एव घोरदर्शनम् ॥ ५ ॥

६ ] ति० टी०-वसा मांसान्तर्गतस्नेहः । व्यादितास्यं व्यात्तास्यमित्यर्थः ॥ ६ ॥

रा० टी०-वसार्द्रं वसा मांसान्तर्गतपूयं तेन आर्द्रं वैयाघ्रं व्याघ्रसंबन्धि चर्म वसानं रुधिरोक्षितं स्वनिहतव्याघ्रशरीरोत्थितरुधिरसिक्तमत एव सर्वभूतानां त्रासनं भयप्रदमन्तकमिव व्यादितास्यं प्रसारितमुखम् ॥ ६ ॥

गो० टी०-वसा मांसं तया आर्द्रं, रुधिरोक्षितं रक्तसिक्तं, व्यादितास्यं व्यात्तास्यम् । आर्ष इट् ॥ ६ ॥

७ ] ति० टी०-पृषता बिन्दुयुक्ता मृगाः ॥ ७ ॥

रा० टी०-सिंहांस्त्रीन् व्याघ्रान् चतुरः वृकौ द्वौ पृषतान् मृगविशेषान्दश सविषाणं दन्तसहितं वसादिग्धं पूयव्याप्तं गजस्य हस्तिनः महत् बृहच्छिरश्च आयसे लोहनिर्मिते शूले अवसज्य विद्धा महास्वनं यथा स्यात्तथा विनदन्तं महास्वनं महाप्राणैः अत्युच्छ्रितश्वासैः अनिति तं महाश्वासवन्तमित्यर्थः, पुरुषादं राक्षसं ददर्श । सार्धश्लोकचतुष्टयमेकान्वयि ॥ ७ ॥

गो० टी०-त्रीनित्यादि । भक्षणार्थमिति शेषः । पृषतान् बिन्दुमृगान् आयसे अयोमये शूले अवसज्य प्रोतान् कृत्वा महास्वनं यथा भवति तथा विनदन्तं निनादं कुर्वन्तम् ॥ ७ ॥

८ ] ति० टी०-भक्षणार्थं सिंहादीनायसे शूलेऽवसज्य महास्वनं यथा तथा विनदन्तम् ॥ ८ ॥

रा० टी०-स इति । स विराधः रामादीन्दृष्ट्वा सुसंक्रुद्धः सन् काले संहारसमये अन्तकः कालः प्रजा इव अभ्यधावत् । अर्धद्वयमेकान्वयि ॥ ८ ॥

गो० टी०-स इति । काले संहारकाले प्रजा उद्दिश्य अन्तको यथा धावति तथा अभ्यधावत ॥ ८ ॥

९ ] ति० टी०-काले युगान्तकाले वृद्धोऽन्तकः प्रजा अभिउद्दिश्य यथा धावति तथाभ्यधावत् ॥ ९ ॥

रा० टी०-स इति । स विराधः मेदिनीं पृथ्वीं चालयन्निव अङ्केन शीघ्रगत्या वैदेहीमपक्रम्य स्वस्कन्धयोः संस्थाप्य अब्रवीत् ॥ ९ ॥

---

१ नानेति गो. नानाशकुनमिति रा. पाठः । २ गत इति गो. पाठः । ३ गम्भीरेति गो. पाठः । ४ विषमेति गो. पाठः । ५ धावत संक्रुद्ध इति गो. पाठः ।

अङ्केनादाय वैदेहीमपक्रम्य तदाब्रवीत् । युवां जटाचीरधरौ सभार्यौ क्षीणजीवितौ ॥ १० ॥
प्रविष्टौ दण्डकारण्यं शरचापासिपाणिनौ । कथं तापसयोर्वां च वासः प्रमदया सह ॥ ११ ॥
अधर्मचारिणौ पापौ कौ युवां मुनिदूषकौ । अहं वनमिदं दुर्गं विराधो नाम राक्षसः ॥ १२ ॥
चरामि सायुधो नित्यमृषिमांसानि भक्षयन् । इयं नारी वरारोहा मम भार्या भविष्यति ॥ १३ ॥
युवयोः पापयोश्चाहं पास्यामि रुधिरं मृधे । तस्यैवं ब्रुवतो दुष्टं विराधस्य दुरात्मनः ॥ १४ ॥
श्रुत्वा सगर्वितं वाक्यं संभ्रान्ता जनकात्मजा । सीता प्रवेपितोद्वेगात्प्रवाते कदली यथा ॥ १५ ॥
तां दृष्ट्वा राघवः सीतां विराधाङ्कगतां शुभाम् । अब्रवील्लक्ष्मणं वाक्यं मुखेन परिशुष्यता ॥ १६ ॥
पश्य सौम्य नरेन्द्रस्य जनकस्यात्मसंभवाम् । मम भार्यां शुभाचारां विराधाङ्के प्रवेशिताम् ॥ १७ ॥

---

गो० टी०—स इति । अङ्केन कटिप्रदेशेन ॥ ९ ॥

१० ] ति० टी०—अङ्केन कटिप्रदेशेन । सभार्यौ भार्याशब्दो योषिन्मात्रवाची एकया योषिता सहितौ, यद्वा विराधस्येदं निन्दोक्तिरूपमेव वाक्यम् ॥ १० ॥

रा० टी०—तद्वचनाकारमाह—युवामिति । जटाचीरधरौ युवां यतः सभार्यौ स्त्रीसहितौ दण्डकारण्यं प्रविष्टौ अतः क्षीणजीवितौ ॥ १० ॥

गो० टी०—युवामित्यादि । सभार्याविति भार्याशब्दो योषिन्मात्रवाचीत्येके वदन्ति । अन्ये तु यथा प्राणभृत उपदधातीत्यत्र प्राणभृच्छब्दः प्राणभृदप्राणभृत्साधारणः । यथा च ऋतं पिबन्तावित्यत्र पानकर्त्रकर्तृसाधारणो जीवेश्वरयोः पिबच्छशब्दप्रयोगः तथा छत्रिन्यायेनात्रापि सभार्यावित्युक्तमित्याहुः । तथापि ध्वनिदोषो वर्जनीयः । वस्तुतस्तु द्वयोरेका भार्यास्तीति दुर्बुद्धिनैवमुक्तमिति सम्यक् । क्षीणजीवितौ मद्धस्ते पतनादिति भावः, यद्वा क्षीणजिवितौ प्रविष्टौ क्षीणजीवितत्वादेव प्रविष्टौ। अत्र प्रविष्टानां जीवितं दुर्लभमिति भावः॥१०॥

११ ] ति० टी०—तदेवाह—कथमिति । प्रमदयैकया सह द्वयोर्वासः कथं चेत्यन्वयः ॥ ११ ॥

रा० टी०—ननु स्त्रीसहितत्वे को दोष इत्यत आह—कथमिति । तापसयोः तपस्विवेषयोः वां युवयोः प्रमदया एकस्त्रिया सह वासः कथं, एतेन भवन्तौ पापिनाविति तदुक्तिः सूचिता ॥ ११ ॥

गो० टी०—वस्तुतो विपरीताचारौ युवां मम वध्याववेत्याशयेनाह—कथमिति । वां युवयोः प्रमदया सह वासश्च कथं विरुद्ध इत्यर्थः । नच वाहेति निषेधेऽपि वामादेश आर्षः । कथंशब्दोक्तं विवृणोति—अधर्मेति । मुनिदूषकौ मुनिवेषविरुद्धशरचापासिधारणादिति भावः, अत एव पापौ ॥ ११ ॥

१२-१३ ] ति० टी०—अत एवाह—अधर्मचारिणौ । मुनिदूषकौ मुनिवेषविरुद्धशरचापासिधारणादेकभार्यारक्तत्वाच अत एव पापौ । तयोर्भीत्युत्पादनाय विराधः स्वयमेव स्वस्वरूपमाह—अहमिति ॥ १२ ॥ १३ ॥

रा० टी०—अधर्मेति । अधर्मचारिणौ एकस्त्रीसहितत्वेन धर्मविरुद्धाचरणौ अत एव मुनिदूषकौ पापौ युवां कौ । अथं पृथक् । ननु त्वं कोऽसीत्यत आह—अहमिति । विराधो नाम राक्षसोऽहं मुनिमांसानि भक्षयन् सन् इदं दुर्गं वनं चरामि अतः वरारोहा वरः अत्युत्कृष्टः आरोहः मम स्कन्धयोरारोहणं यस्याः सा इयं नारी मम भार्या मत्पोष्या भविष्यति, एतेन सीतायां तस्य सेव्यत्वबुद्धिः संजातेति ध्वनितम् । पापयोः युवयोस्तु रुधिरं मृधे संग्रामे पास्यामि । अर्धचतुष्टयमेकान्वयि ॥ १२ ॥ १३ ॥

गो० टी०—अहमित्यादि । मृधे युद्धे ॥ १२ ॥ १३ ॥

१४ ] ति० टी०—मृधे युद्धे ॥ १४ ॥

१५ ] ति० टी०—सगर्वितम् भावे निष्ठा सगर्वमिति यावत् । उद्वेगाद्भयात् ॥ १५ ॥

रा० टी०—तस्येति । एवं दुष्टं वचो ब्रुवतः तस्य विराधस्य सगर्वितं गर्वसहितं वाक्यं श्रुत्वा जनकात्मजा सीता संभ्रान्ता भयं प्राप्ता अत एव प्रवाते महावाते कदलीव उद्वेगात्प्रवेपिता जातकम्पाऽऽसीदिति शेषः ॥ १४ ॥ १५ ॥

गो० टी०—तस्येत्यादि । सगर्वितं सगर्वं भावे निष्ठा । उद्वेगात् भयात् ॥ १४ ॥ १५ ॥

१६ ] ति० टी०—परिशुष्यता शोकसंकुचितेन मुखेनोपलक्षित इव ॥ १६ ॥

रा० टी०—तामिति । विराधाङ्कगतां विराधस्य अङ्केन शीघ्रगत्या हेतुभूतया गतां तत्स्कन्धयोः प्राप्तां शुभां तां सीतां दृष्ट्वा परिशुष्यता मुखेनोपलक्षितो राघवो रामः लक्ष्मणमब्रवीत् ॥ १६ ॥

गो० टी०—तामिति । परिशुष्यता शोकसंकुचितेन मुखेन उपलक्षितः ॥ १६ ॥ १७ ॥

१७ ] ति० टी०—प्रवेशिताम् विराधेनेति शेषः ॥ १७ ॥

रा० टी०—तद्वचनाकारमाह—पश्येति । विराधाङ्के प्रवेशितां विराधाङ्कस्य विराधशीघ्रगमनस्य या ईः व्याप्तिः तया

---

१ तत इति गो. पाठः । २ धारिणाविति गो. पाठः । ३ प्रावेपतेति गो. पाठः ।

अत्यन्तसुखसंवृद्धां राजपुत्रीं यशस्विनीम् । यदभिप्रेतमस्मासु प्रियं वरवृतं च यत् ॥ १८ ॥
कैकेयास्तु [1]सुसंवृत्तं क्षिप्रमद्यैव लक्ष्मण । या न तुष्यति राज्येन पुत्रार्थे दीर्घदर्शिनी ॥ १९ ॥
ययाहं सर्वभूतानां [2]प्रियः प्रस्थापितो वनम् । अद्येदानीं सकामा सा या माता मध्यमा मम ॥ २० ॥
परस्पर्शात्तु वैदेह्या न दुःखतरमस्ति मे । पितुर्वि[3]नाशात्सौमित्रे स्वराज्यहरणात्तथा ॥ २१ ॥
इति ब्रुवति काकुत्स्थे बाष्पशोकपरि[4]प्लुतः । अब्रवील्लक्ष्मणः क्रुद्धो रुद्धो नाग इव श्वसन् ॥ २२ ॥
अनाथ इव भूतानां नाथस्त्वं वासवोपमः । मया प्रेष्येण काकुत्स्थ किमर्थं परि प्यसे ॥ २३ ॥

प्रवेशितां स्कन्धयोः संस्थापितां नरेन्द्रस्य जनकस्य आत्मसंभवामत एव अत्यन्तसुखसंवृद्धामत्यन्तसुखेन संवृद्धां योषितमित्यर्थः, राजपुत्रीं राजातिशोभावती एव पुत्री तां शुभाचारां मम भार्यां पश्य । सार्धश्लोक एकान्वयी ॥ १७ ॥

१८-१९] ति० टी०–अस्मासु विषये यद्दुःखं कैकेय्या वने संपादनीयतयाभिप्रेतं यत्स्वस्य प्रियं वरवृतं च तत्क्षिप्रमद्यैव सुसंवृत्तं सिद्धम् या पुत्रार्थे पुत्रप्रयोजननिमित्तं राज्येन राज्याभिषेकमात्रेण न तुष्यति दीर्घदर्शिनी अस्मन्नाशेन स्वपुत्रस्य चिरं राज्यं पश्यन्ती ॥ १८ ॥ १९ ॥

रा० टी०–यदिति । हे लक्ष्मण ! दीर्घदर्शिनी अतिज्ञानवती या पुत्रार्थे मदर्थेऽपि राज्ये न तुष्यति तस्याः कैकेय्याः अस्मासु यद्यस्माद्राक्षसवधाद्धेतोः अभिप्रेतं यत् राज्याभिषेकनिवर्तनरूपं वरवृतं वरस्वीकारः तदद्यैव सुसंवृत्तं सुसंपन्नमित्यर्थः, एतेन राक्षसवधार्थमेव तत्कर्तृकं मम प्रव्राजनमिति ध्वनितम् ॥ १८ ॥ १९ ॥

गो० टी०–यदिति । कैकेय्याः अस्मासु विषये यदभिप्रेतं योऽभिप्रायः यच्च प्रियं वरवृतं वरव्याजेन वृतं तदद्यैव सुसंपन्नं फलितम् ॥ १८ ॥

गो० टी०–अभिप्रेतशब्दोक्तं सूक्ष्मेक्षिकया विवृणोति–या न तुष्यतीति । दीर्घदर्शिन्या कैकेय्या अस्मद्व्यसनं पूर्वमेव यदि न चिन्तितं स्यात्तर्हि पुत्रार्थं राज्यमेव वरयेत् । ननु मत्प्रवासनं मत्प्रवासनवरणादवगम्यते अयं वनं गतश्चेत् सीतापि गच्छेत्, सा च राक्षसादिभिरपह्रियेत, तेन रामोऽपि व्यसनं महत्प्राप्नुयात्, ततश्च मत्पुत्रस्य राज्यं निष्कण्टकं स्यादिति कैकेयी नूनममन्यतेति भावः । पुत्रार्थे पुत्रप्रयोजननिमित्तम् । माता मम मध्यमेति यद्यपि पूर्वं मम माता कनीयसीत्युक्तं तथापि महिषीत्रयापेक्षया कनीयसीत्वं सर्वदशरथपत्न्यपेक्षया मध्यमात्वं त्रिशतं पञ्चाशच्च दशरथपत्न्यः सन्तीति पूर्वमेवोक्तम् । अद्य अस्मिन् दिवसे इदानीम् अस्मिन् क्षणे॥१९॥२०॥

२०] ति० टी०–यया दीर्घदर्शिन्या सर्वभूतहितोऽहं वनमपि प्रस्थापितः पितृराज्यदार्ढ्याय या मे मध्यमा माता कौसल्यातः कनिष्ठत्वात्सुमित्रातो ज्येष्ठत्वात्साद्य दिवस इदानीमस्मिन्काले सकामा जाता । कौसल्यापेक्षया कनिष्ठत्वात्पूर्वं यवीयसीत्युक्तिरपि नासंगता । तीर्थस्तु–कौसल्यासुमित्राभ्यां कनीयसी, इतरदशरथपत्नीभ्यो ज्येष्ठेत्याह । भगवतोऽपीदृशोक्तिस्तु लक्ष्मणोत्साहवर्धनायेति शेषः ॥ २० ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–ययेति । यया सर्वभूतानां प्रियोऽहं वनं प्रस्थापितः या च मध्यमा मम माता सा अद्यास्मिन्दिने इदानीं राक्षसवधसमये सकामा पूर्णमनोरथा भविष्यतीति शेषः ॥ २० ॥

२१ ] ति० टी०–तदर्थमेव पुनरप्याह–परेति । पितुर्मरणात्स्वराज्यहरणादधिकदुःखजनको वैदेहीपरस्पर्शः इतोऽधिकं दुःखजनकं तु न मे किंचिदिति दुःखातिशयो व्यङ्ग्यः ॥ २१ ॥

रा० टी०–अयं राक्षसोऽवश्यं वधयोग्य इति बोधयन्नाह–परेति । वैदेह्याः परस्पर्शात् राक्षसस्पर्शनान्मे यथा दुःखतरमस्ति तथा पितुर्विनाशाल्लोकान्तरगमनकर्तृत्वेन दर्शनाभावात् स्वराज्यहरणाच्च दुःखतरं नास्ति ॥ २१ ॥

गो० टी०–किं ते तादृशं व्यसनं तत्राह–परस्पर्शादिति । वैदेह्याः परस्पर्शाद्यथा दुःखतरम् अतिदुःखं पितृवियोगाद्राज्यहरणाच्च तथा दुःखं नास्तीति योजना ॥ २१ ॥

२२ ] ति० टी०–बाष्पशोकाभ्यां नेत्रचित्तगताभ्यां परिप्लुतो व्याप्तस्तथा क्रुद्धः कैकेयीं प्रति विराधं प्रति च रुद्धो नाग इव अहितुण्डिकेन मन्त्ररुद्धः पेटीरुद्धो वा सर्प इवेत्यर्थः, श्वसन्रामविषाददर्शनेन ॥ २२ ॥

रा० टी०–इतीति । काकुत्स्थे रामे इति ब्रुवति सति बाष्पशोकपरिप्लुतो लक्ष्मणः अब्रवीत् ॥ २२ ॥

गो० टी०–इतीति । रुद्धः मन्त्रगणनिरुद्धः नागः सर्पः श्वसन् रामशोकदर्शनादिति भावः ॥ २२ ॥

२३ ] ति० टी०–अनाथ इव नाथापेक्षः प्राणी नाथरहितः सन्यथा शोचति तद्वत् । कीदृशस्त्वम् भूतानां सर्वजीवानां नाथस्त्राता तेन तस्य नाथनिरपेक्षत्वं ध्वनितम्, तदुपपादकमेव वासवोपम इत्यपि । मया प्रेष्येण युक्त इति शेषः ॥ २३ ॥

रा० टी०–तद्वचनाकारमाह–अनाथ इति । भूतानां सर्वजन्तूनां नाथः नियन्ता वासवः इन्द्रः उपमा उपमेयो यस्य प्रेष्येण भृत्येन मया उपलक्षितस्त्वमनाथः नाथत्वाभाववानिव किमर्थं परितप्यसे परितापो न कार्य इत्यर्थः ॥ २३ ॥

गो० टी०–अनाथ इवेति । वासवोपमो भूतानां नाथः सन् अनाथ इव नाथसापेक्षो नर इव विशिष्य मया प्रेष्येण

१ सुसंपन्नमिति गो. पाठः । २ हित इति गो. पाठः । ३ वियोगादिति गो. पाठः । ४ प्लुते इति गो. पाठः ।

शरेण निहतस्याद्य मया क्रुद्धेन रक्षसः। विराधस्य गतासोर्हि मही पास्यति शोणितम् ॥ २४ ॥
राज्यकामो मम क्रोधो भरते यो बभूव ह। तं विराधे विमोक्ष्यामि वज्री वज्रमिवाचले ॥ २५ ॥
मम भुजबलवेगवेगितः पततु शरोऽस्य महान्महोरसि।
व्यपनयतु तनोश्च जीवितं पततु ततश्च मही विघूर्णितः ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे द्वितीयः सर्गः ॥ २ ॥

## तृतीयः सर्गः।

तद्रक्षःपृष्टे रामे स्वात्मनः क्षत्रोत्पन्नत्वातपराभिभविष्णुत्वं कथयत्यात्मनः कुलनामनी कथयन्विराधः सीतां विमुच्य पलायेतां भवन्ताविति ब्रुवन्रामबाणाभिहतः सीतामवरोप्य तावेव स्कन्धेकृत्वा वनमगाहत।

[ ईत्युक्त्वा लक्ष्मणः श्रीमान्विराधं प्रहसन्निव। को भवान्वनमभ्येत्य चरिष्यसि यथासुखम् ॥ ]
अथोवाच पुनर्वाक्यं विराधः पूरयन्वनम्। पृच्छतो मम हि ब्रूतं कौ युवां क्व गमिष्यथः ॥ १ ॥

---

सहितोऽपि किमर्थं परितप्यसे। वास्तवार्थस्तु भूतानां सर्वलोकानां नाथः वासव उपमीयतेऽनेनेति वासवोपमः त्वमनाथ इव नाथभिन्न इव किमर्थं परितप्यसे, एवमेव तत्त्वं जगुः। यथा विश्वामित्रः–अहं वेद्मि महात्मानमिति। यथाच परशुरामः–'त्वया त्रैलोक्यनाथेन यदहं विमुखीकृतः' इति। एवमृषयोऽपि ॥ २३ ॥

२४] ति० टी०–किं त्वया शक्यं तत्राह–शरेणेति॥२४॥

रा० टी०–परितापस्याकर्तव्यत्वे हेतुमाह–शरेणेति। क्रुद्धेन मया शरेण निहतस्य अत एव गतासोः गतप्राणस्य विराधस्य रक्षसः शोणितं रुधिरं मही पास्यति ॥ २४ ॥

गो० टी०–प्रेष्येण त्वया किं क्रियत इत्यत्राह–शरेणेति २४

२५] ति० टी०–विराधे मोक्ष्यामि भरतेन राज्यकामनायाः प्रदर्शितत्वात्तदुपेक्ष्य ॥ २५ ॥

रा० टी०–राज्येति। राज्यकामे हेत्वाभासमूलकानुमानिकराज्यकामनाविशिष्टे भरते यः क्रोधो बभूव तं क्रोधं वज्री इन्द्रः वज्रमचले पर्वते इव विराधे विमोक्ष्यामि ॥ २५ ॥

गो० टी०–राज्यकाम इति। कैकेय्याः भरतार्थं राज्यकाङ्क्षित्वात् भरतस्यापि राज्यकामत्वं तं विराधे विमोक्ष्यामीति शरणागते भरते दुर्विमोचत्वादिति भावः। ननु भरतकैकेयीभ्यामज्ञानात् प्रवासनं कारितं पुनरागन्तव्यमिति क्षमापणस्य कृतत्वात् कुतः पुनः रामलक्ष्मणाभ्यां तत्र राज्यापहारित्वमनुस्मर्यते, उच्यते–अनन्तरं तथा अनुष्ठानेऽपि पूर्वं कैकेय्या तथा चिन्तितत्वात्तस्य चावश्यकर्तव्यत्वाद्दुःखकाले तच्चिन्तनं तथापि व्यसनकालेऽपि परदोषोद्घाटनं सत्पुरुषानुचितं रामप्रकृतिविरुद्धं च सुप्तप्रमत्तकुपितानां भावज्ञानं दृष्टमिति न्यायेन दोषदर्शनमेव रामस्य हार्दं तदुपेक्षकत्वं त्वभिनयमात्रमिति स्यात्। अत्रोच्यते व्यसनकाले लोको वाच्यमवाच्यं च न जानातीत्यमुमर्थं व्यञ्जयितुमेवमुक्तमिति ॥ २५ ॥

२६] ति० टी०–भुजबलवेगेन धनुष्कर्षणवेगेन वेगित आहितवेगो महीं पततु विराध इति शेषः। विघूर्णितः संजातभ्रमणः ॥ २६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे द्वितीयः सर्गः ॥ २ ॥

रा० टी०–ममेति। मम भुजबलवेगेन वेगितः प्राप्तवेगः मम महान् शरः अस्य विराधस्य महोरसि पततु अत एव तनोः जीवितं जीवनं व्यपनयतु दूरीकरोतु ततः स्तमाद्धेतोः विघूर्णितः सन् महीं पततु ॥ २६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे द्वितीयः सर्गः ॥ २ ॥

गो० टी०–ममेति। भुजबलवेगेन धनुराकर्षणवगेन वेगितः आनीतवेगः, इतजन्तो वा। विघूर्णितः संजातभ्रमणः ॥ २६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने द्वितीयः सर्गः ॥ २ ॥

---

१] ति० टी०–अथेति। वनं पूरयन्नित्यस्य शब्देनेति शेषः। युवयोः स्वरूपं पृच्छते मह्यं ब्रूतम् लोण्मध्यमद्विवचनम्। प्रश्नप्रकारः–कावित्यादि ॥ १ ॥

रा० टी०–विराधं ज्ञातुकामस्य लक्ष्मणस्योक्तिमाह–इतीति। श्रीमान् लक्ष्मणः इति वचः उक्त्वा रामं प्रतीति शेषः, वनमभ्येत्य प्राप्य यथासुखं यः चरिष्यति चरति स भवान् कः इति वचः प्रहसन्निव विराधमाहेति शेषः ॥ १ ॥

रा० टी०–अथेति। अथ लक्ष्मणवचनश्रवणानन्तरं विराधः पुनर्वाक्यमुवाच। तद्वचनाकारमाह–युवां कौ किं जात्यादि क्व च गमिष्यथः इति पृच्छतो मम ब्रूतम् ॥ २ ॥

गो० टी०–अथ विराधानुग्रहाय तदाक्रमणं तृतीये–अथोवाचेत्यादि। पूरयन् शब्देनेति शेषः। आत्मानं युष्मत्स्वरूपं

---

१ व्यवसन्नवितिति गो. पाठः। २ स इति गो. पाठः। ३ श्लोकोऽयमधिकः रा. पाठे। ४ आत्मानं पृच्छते इति गो. पाठः।

तमुवाच ततो रामो राक्षसं ज्वलिताननम् । पृच्छन्तं सुमहातेजा इक्ष्वाकुकुलमात्मनः ॥ २ ॥
क्षत्रियौ वृत्तसंपन्नौ विद्धि नौ वनगोचरौ । त्वां तु वेदितुमिच्छावः कस्त्वं चरसि दण्डकान् ॥ ३ ॥
तमुवाच विराधस्तु रामं सत्यपराक्रमम् । हन्त वक्ष्यामि ते राजन्निबोध मम राघव ॥ ४ ॥
पुत्रः किल जवस्याहं माता मम शतह्रदा । विराध इति मामाहुः पृथिव्यां सर्वराक्षसाः ॥ ५ ॥
तपसा चाभिसंप्राप्ता ब्रह्मणो हि प्रसादजा । शस्त्रेणावध्यता लोकेऽच्छेद्याभेद्यत्वमेव च ॥ ६ ॥
उत्सृज्य प्रमदामेनामनपेक्षौ यथागतम् । त्वरमाणौ पलायेथां न वां जीवितमाददे ॥ ७ ॥
तं रामः प्रत्युवाचेदं कोपसंरक्तलोचनः । राक्षसं विकृताकारं विराधं पापचेतसम् ॥ ८ ॥

---

पृच्छते मह्यमिति शेषः । ब्रूतमिति लोण्मध्यमपुरुषद्विवचनम् । प्रश्नप्रकारमाह—काविति ॥ १ ॥

२ ] ति० टी०—ज्वलिताननं राक्षसत्वान्मुखनिःसृताग्निज्वालया आत्मन इक्ष्वाकुसंबन्धि कुलमुवाचेत्यर्थः ॥ २ ॥

रा० टी०—तमिति । ततः राक्षसवचःश्रवणानन्तरं पृच्छन्तं राक्षसं सुमहातेजाः रामः उवाच । तद्वचनाकारमाह—आत्मनो मम इक्ष्वाकुकुलं विद्धि अत एव वृत्तसंपन्नौ स्वकुलोचितवृत्तविशिष्टौ अत एव वनगोचरौ वनं प्राप्तौ क्षत्रियौ नौ आवां विद्धि जानीहि यस्त्वं दण्डकान् चरसि तं त्वां तु वेदितुं ज्ञातुमिच्छावः । श्लोकद्वयमेकान्वयि ॥ ३ ॥ ४ ॥

गो० टी०—तमिति । राक्षसत्वेन प्रकृत्या ज्वलिताननमिति भयहेतूक्तिः । आत्मनः संबन्धि इक्ष्वाकुकुलमुवाचेत्यन्वयः इक्ष्वाकुवंश्यदशरथपुत्रावावां पितृवचनाद्वनं गमिष्याव इत्युवाचेत्यर्थः ॥ २ ॥

३ ] ति० टी०—क्षत्रियौ इक्ष्वाकुवंशजाविति शेषः । वनगोचरौ बहुव्रीहिः । कुतश्चिद्धेतोरिति शेषः ॥ ३ ॥

गो० टी०—अधर्मचारिणौ पापाविति पूर्वोक्तविराधवचनस्योत्तरमाह—क्षत्रियौ वृत्तसंपन्नाविति । त्वामिति । कस्य पुत्रः किंप्रभाव इति ज्ञातुमिच्छामीत्यर्थः । अहं वनमिदं दुर्गं विराधो नाम राक्षस इति नामजात्योः पूर्वमुक्तत्वान्न तद्विषयोऽयं प्रश्नः ॥ ३ ॥

४ ] ति० टी०—निबोध मम वचनान्मम स्वरूपमिति शेषः ॥ ४ ॥

रा० टी०—तमिति । विराधस्तु हे राजन् ! अहं वक्ष्यामि त्वं निबोध शृणु इति तं पृच्छन्तं राममुवाच ॥ ५ ॥

गो० टी०—तमिति । हन्तेति । स्वाभिप्रायकीर्तनोद्योगजगर्वेण मम मत्तः मे स्वरूपमिति शेषः, निबोधेत्युवाचेत्यन्वयः ॥ ४ ॥

५ ] ति० टी०—जवस्य जवनाम्नः ॥ ५ ॥

रा० टी०—तद्वचनाकारमाह—पुत्र इति । जवस्य जवाभिधस्य अहं पुत्रः शतह्रदा तदभिधा मम माता सर्वराक्षसाः विराधमिति मामाहुः ॥ ६ ॥

गो० टी०—पुत्रः किलेति । विराधः विगताराधनः दुराराध्य इत्यन्वर्थसंज्ञः राक्षसाः सजातीयाः सजातीयैः कृतं नामेदं न तु मातापितृभ्यामिति भावः ॥ ५ ॥

६ ] ति० टी०—लोके प्राणिलोके शस्त्रेण शस्त्रसामान्येन किं च अच्छेद्याभेद्यत्वं प्राणवियोजनाय छेदभेदाशक्यगात्रत्वं च प्राप्तमित्यर्थः ॥ ६ ॥

रा० टी०—तपसेति । तपसा हेतुभूतेन ब्रह्मणः प्रसादजा शस्त्रेण अवध्यता वध्यत्वाभावं संप्राप्ता अच्छेद्याभेद्यत्वं च प्राप्तं तत्राच्छेद्यत्वमवयवद्वैधीभवनाभावः अभेद्यत्वं शरीरे व्रणप्राप्त्यभावः, वस्तुतस्तु छेद्येन छेत्तुमर्हेण प्राकृतशस्त्रेणेत्यर्थः, अभेद्यत्वं विदारणाभावं च प्राप्तमित्यर्थः, अत एव वक्ष्यमाणरामशस्त्रकरणकभेदनं संगच्छते तेषां प्राकृतभिन्नत्वात् ॥ ७ ॥

गो० टी०—तपसा चापीति । चापि किंच तपसा साधनेन ब्रह्मणः प्रसादजा शस्त्रेणावध्यता अमारणीयता प्राप्ता अच्छेद्याभेद्यत्वं च प्राप्तं प्राणवियोजनहेतुखण्डनविदारणानर्हत्वं च प्राप्तमित्यर्थः ॥ ६ ॥

७-८ ] ति० टी०—यदेवमतः—उत्सृज्येत्यादि । अनपेक्षौ प्रमदाशया युद्धाशया च रहितौ वां युवयोः ॥ ७ ॥ ८ ॥

रा० टी०—रामहस्तात्स्ववधकामस्तं कोपयन्नाह—उत्सृज्येति । एनां प्रमदां स्वास्त्रियमुत्सृज्य त्यक्त्वा अनपेक्षौ एतत्प्राप्तिविषयकेच्छारहितौ त्वरमाणौ युवां यथागतमागतं मार्गमनतिक्रम्य पलायेथाम् । तत्र हेतुः—वां युवयोर्जीवितं जीवनमहं न आददे गृह्णामि ॥ ८ ॥

गो० टी०—उत्सृज्येति । अनपेक्षौ अपेक्षायां मरणं ध्रुवमिति भावः । त्वरमाणौ मन्दगमने मे मनश्चलेदिति भावः । न वां जीवितमाददे उत्तमप्रमदारत्नप्रापणादिति भावः ॥ ७ ॥

रा० टी०—तमिति । कोपसंरक्तलोचनः कोपेन दुष्टत्वदूरीकरणाय स्वीकृतकोपाभासेन संरक्ते लोचने यस्य स रामः पापचेतसं जन्मप्रभृतिपापकरणशीलं विकृताकारं विराधमिदं प्रत्युवाच ॥ ९ ॥

गो० टी०—तमिति । तम् एवं परुषं वदन्तं परुषवचनादेव हेतोः कोपसंरक्तलोचनः विकृताकारं विकृताकारमपि पापे सीताहरणे चेतो यस्य तम् ॥ ८ ॥

---

१ जयस्येति गो. पाठः । २ चापि मे इति गो. पाठः ।

क्षुद्र धिक्त्वां तु हीनार्थं मृत्युमन्वेषसे ध्रुवम् । रणे प्राप्स्यसि संतिष्ठ न मे जीवन्विमोक्ष्यसे ॥ ९ ॥
ततः सज्यं धनुः कृत्वा रामः सुनिशिताञ्शरान् । सुशीघ्रमभिसंधाय राक्षसं निजघान ह ॥ १० ॥
धनुषा ज्यागुणवता सप्त बाणान्मुमोच ह । रुक्मपुङ्खान्महावेगान्सुपर्णानिलतुल्यगान् ॥ ११ ॥
ते शरीरं विराधस्य भित्त्वा बर्हिणवाससः । निपेतुः शोणितादिग्धा धरण्यां पावकोपमाः ॥ १२ ॥
स विद्धो न्यस्य वैदेहीं शूलमुद्यम्य राक्षसः । अभ्यद्रवत्सुसंक्रुद्धस्तदा रामं सलक्ष्मणम् ॥ १३ ॥
स विनद्य महानादं शूलं शक्रध्वजोपमम् । प्रगृह्याशोभत तदा व्यात्तानन इवान्तकः ॥ १४ ॥
अथ तौ भ्रातरौ दीप्तं शरवर्षं ववर्षतुः । विराधे राक्षसे तस्मिन्कालान्तकयमोपमे ॥ १५ ॥

---

९ ] ति० टी०—हीनार्थं परदारस्पर्शलक्षणहीनकर्मकरम् अत एव त्वां धिक् । मृत्युमन्वेषसे ध्रुवम् उक्तदुष्कर्मकरणादिति शेषः तं च मृत्युं रणे सम्यक्प्राप्स्यसि तिष्ठ क्षणमिति शेषः ॥ ९ ॥

रा० टी०—तत्प्रतिवचनाकारमाह—क्षुद्रेति । हे क्षुद्र ! हीनार्थं हीनः त्यक्तः अर्थः पुरुषार्थो येन तं त्वां धिक् यस्त्वं मृत्युमन्वेषसे स त्वं रणे मृत्युं ध्रुवं प्राप्स्यसि मे मया जीवन् त्वं न विमोक्ष्यसे अत एव रणे संतिष्ठ ॥ १० ॥

गो० टी०—क्षुद्रेति । क्षुद्रे हीनजाते धिकारे हेतुरयं हीनार्थम् उत्तमाङ्गनाभिलाषरूपहीनप्रयोजनमिति यावत्, मृत्युम् अन्वेषणहेतुं मरणं संप्राप्स्यसे अन्वेषणं सफलं भविष्यतीत्यर्थः । तदा किंचिदुपेक्षया गन्तुमुद्युक्तं प्रत्याह—तिष्ठेति । गमनं च दुर्लभमित्याह—नेति । मे पुरत इति शेषः ॥ ९ ॥

१० ] ति० टी०—अभिसंधाय धनुषीति शेषः ॥ १० ॥

रा० टी०—तत इति । ततः स्वोक्त्यनन्तरं धनुः सज्यं ज्यासहितं कृत्वा सुनिशितानत्यन्ततीक्ष्णान् शरानभिसंधाय धनुःसंलग्नान् कृत्वा राक्षसं निजघान ॥ ११ ॥

गो० टी०—तत इति । राक्षसं प्रति शरान् निजघान अमुञ्चत् । 'हन हिंसागत्योः' इति धातुः ॥ १० ॥

११ ] ति० टी०—ज्यागुणवता ज्यारूपरज्जुमता ज्याशब्दवतेति वा सुपर्णानिलाभ्यां तुल्यं गच्छन्ति तान् ॥ ११ ॥

रा० टी०—तत्प्रकारमाह—धनुषेति । रुक्मपुङ्खान् स्वर्णपुङ्खविशिष्टान् महावेगान् सुपर्णानिलतुल्यगान् सुपर्णानिलौ तुल्यं स्वसादृश्यं गच्छन्ति प्रापयन्ति तान् सप्त बाणान् ज्यागुणवता ज्यारूपरज्जुविशिष्टेन धनुषा मुमोच ॥ १२ ॥

गो० टी०—पुनः शरान् विशिंषन्नाह—धनुषेति । ज्यारूपो गुणो रज्जुः तद्वता महावेगान् अत एव सुपर्णानिलाभ्यां तुल्यं गछन्तीति तथोक्तान् ॥ ११ ॥

१२ ] ति० टी०—बर्हिणवाससो बर्हिणो मयूरस्तत्संबधिबर्हवासस इत्यर्थः । शोणितादिग्धा रक्तलिप्ताः ॥ १२ ॥

रा० टी०—त इति । बर्हिणवाससः बर्हिणा मयूराः तत्संबन्धिपिच्छानीत्यर्थः, तान्येव वासांसि येषां ते सप्त बाणाः विराधस्य शरीरं भित्त्वा शोणितादिग्धाः शोणितेन रुधिरेण आदिग्धा व्याप्ताः अत एव पावकोपमाः सन्तः धरण्यां निपेतुः ॥ १३ ॥

गो० टी०—त इति । बर्हिणवासस इति स्वार्थे इनच् बर्हिणवाससः बर्हपत्रा इत्यर्थः । शोणितेन आदिग्धाः ईषल्लिप्ताः रक्तोद्गमात्पूर्वमेव शरीरान्निर्गमादिति भावः । पावकोपमा इति भूस्थतृणादिदहनादग्निसाम्यसिद्धिः ॥ १२ ॥

१३ ] ति० टी०—स विद्धोऽपि रामबाणताडितोऽपि वरदानमाहात्म्यादगतासुर्व्यथामात्रेण वैदेहीं हित्वा शूलमुद्यम्याभ्यद्रवत् ॥ १३ ॥

रा० टी०—स इति । विद्धः बाणैः छिद्रितः अत एव सुसंक्रुद्धः स राक्षसः वैदेहीं न्यस्य धरण्यां संस्थाप्य सलक्ष्मणं राममभ्यद्रवत् ॥ १४ ॥

गो० टी०—स इति । विद्धः बाणवेधजनितवेदनातिशयवान् न्यस्य भूमौ निक्षिप्य ॥ १३ ॥

१४ ] ति० टी०—महानादं विनद्य कृत्वा शक्रध्वजोपमं दैर्घ्येण स्थौल्येन च व्यात्ताननो विवृताननः ॥ १४ ॥

रा० टी०—स इति । व्यात्काननः प्रसारितवदनः स विराधः महानादं यथा स्यात्तथा विनद्य शक्रध्वजोपमं शूलं प्रगृह्य अन्तकः काल इव अशोभत ॥ १५ ॥

गो० टी०—स इति । महान् नादः प्रतिध्वनिर्यस्मिंस्तद्यथा भवति तथा विनद्य शक्रध्वजोपमं तद्वदुन्नतं व्यात्काननः विवृत्तास्यः अनेन प्रसारितजिह्वात्वं लक्ष्यते शूलोपमेदतालाभाय ॥ १४ ॥

१५ ] ति० टी०—कालान्तकयमाः प्राणतनुमनःसंहारप्रधानाः संहाररुद्रस्य मूर्तयस्तत्सदृशे ॥ १५ ॥

रा० टी०—अथेति । कालान्तकयमोपमे अन्तको मृत्युः कालस्तन्निमित्तं यमस्तन्नियन्ता तैरुपमा यस्य, किंच कालः प्राप्तः अन्तको यस्य स एव यमोपमः तस्मिन् विराधे राक्षसे भ्रातरौ रामलक्ष्मणौ दीप्तं शरवर्षं ववर्षतुः वव्रषतुः ॥ १६ ॥

गो० टी०—अथेति । अथ सीतानिक्षेपानन्तरं यथेष्टं बाणमोचनार्हत्वाद्दीप्तं पूर्वबाणेभ्यस्तेजस्विनं शरवर्षं शरसमूहम् उभाभ्यामपि मोचनीयत्वे हेतवः राक्षस इत्यादिविशेषणानि । कालान्तकयमोपमे काले संहारकाले अन्तको नाशको यो यमस्तत्तुल्ये ॥ १५ ॥

---

१ गमिष्यसीति गो० पाठः ।

स प्रहस्य महारौद्रः स्थित्वाजृम्भत राक्षसः । जृम्भमाणस्य ते बाणाः कायान्निष्पेतुराशुगाः ॥ १६ ॥
स्पर्शात्तु वरदानेन प्राणान्संरोध्य राक्षसः । विराधः शूलमुद्यम्य राघवावभ्यधावत ॥ १७ ॥
तच्छूलं वज्रसंकाशं गगने ज्वलनोपमम् । द्वाभ्यां शराभ्यां चिच्छेद रामः शस्त्रभृतां वरः ॥ १८ ॥
तद्रामवि[1]शिखैश्छिन्नं शूलं [2]तस्यापतद्भुवि । पपाताशनिना च्छिन्नं मेरोरिव शिलातलम् ॥ १९ ॥
तौ खड्गौ क्षिप्रमुद्यम्य कृष्णसर्पा[3]विवोद्यतौ । तूर्णमा[4]पेततुस्तस्य तदा प्रहरतां बलात् ॥ २० ॥
स वध्यमानः सुभृशं [5]भुजाभ्यां परिगृह्य तौ । अप्रकम्प्यौ नरव्याघ्रौ रौद्रः प्रस्थातुमैच्छत ॥ २१ ॥
तस्याभिप्रायमाज्ञाय रामो लक्ष्मणमब्रवीत् । वहत्वयमलं तावत्पथानेन तु राक्षसः ॥ २२ ॥
यथा चेच्छति सौमित्रे तथा वहतु राक्षसः । अयमेव हि नः पन्था येन याति निशाचरः ॥ २३ ॥
स तु स्वबलवीर्येण समुत्क्षिप्य निशाचरः । बालाविव स्कन्धगतौ चकाराति[6]बलोद्धतः ॥ २४ ॥
तावारोप्य ततः स्कन्धं राघवौ रजनीचरः । विराधो [7]विनदन्घोरं जगामाभिमुखो वनम् ॥ २५ ॥

---

१६ ] ति० टी०–प्रहस्य शस्त्रावध्ये मयि वृथैषां बाणपात इति हासः । ते बाणा रामलक्ष्मणविसृष्टा जृम्भणेन शरीरलग्ना अपि कायान्निर्जग्मुः । आशुगाः शीघ्रगा इत्यर्थे केवलं यौगिकम् ॥ १६ ॥

रा० टी०–स इति । महारौद्रः अतिभयंकरः राक्षसः स विराधः स्थित्वा प्रहस्य च अजृम्भत । जृम्भमाणस्य तस्य कायात् शरीरात् आशुगाः रामलक्ष्मणसंचालितबाणाः निष्पेतुः १७

गो० टी०–स इति । प्रहस्य किमेतैर्मशकप्रायैरिति हसित्वा अजृम्भत गात्रविनाममकरोत् । बाणाः काये किंचिल्लग्नाः आशु गच्छन्तीत्याशुगाः आशुगा अपीत्यर्थः, निष्पेतुः जगलुः १६

१७ ] ति० टी०–स्पर्शात्तु वरदानेन वरदानसंबन्धादित्यर्थः । संरोध्य धृत्वा परमदुःखं प्राप्तोऽपीति शेषः ॥ १७ ॥

रा० टी०–स्पर्शादिति । वरदानेन हेतुना स्पर्शात् रामबाणसंबन्धादपि प्राणान् संरोध्य विराधः शूलमुद्यम्य राघवावभ्यधावत ॥ १८ ॥

गो० टी०–स्पर्शादिति । वरदानेन स्पर्शात्संबन्धात् प्राणान् प्राणवायून् संरोध्य हृदये समूह्य बलं कृत्वेत्यर्थः ॥ १७ ॥

१८ ] ति० टी०–तच्छूलं करस्थशूलभागमेवेति शेषः । गगने ज्वलनोपमं शिखाभागावच्छेदेनेति भावः ॥ १८ ॥

रा० टी०–तदिति । वज्रसंकाशं वज्रसदृशं ज्वलनेन वह्निना उपमा यस्य तच्छूलं द्वाभ्यां शराभ्यां रामश्चिच्छेद ॥ १९ ॥

गो० टी०–तदिति । तत् हस्तस्थं गगने ज्वलनः आकाशस्थाग्निः तदुपमामित्यभूतोपमा ॥ १८ ॥

१९ ] ति० टी०–अशनिर्वज्रम् ॥ १९ ॥

रा० टी०–तदिति । रामविशिखैः रामबाणैः छिन्नं तस्य विराधस्य पातितं चालितं शूलमपि अशनिना वज्रेण छिन्नं मेरोः शिलातलमिव भुवि पपात 'तस्यापि पातितम्' इति पाठः ॥ २० ॥

गो० टी०–तदिति । अशनिना वज्रेण ॥ १९ ॥

२० ] ति० टी०–तदा पतनकाल एव प्रहरतामित्यर्थः ॥ २० ॥

रा० टी०–ताविति । उद्यतौ युद्धोद्युक्तौ तौ रामलक्ष्मणौ कृष्णसर्पाविव खड्गौ उद्यम्य तस्य राक्षसस्य समीपे तूर्णमापेततुः । तदा आपतनकाले बलात्प्रहरतां प्राहरताम् ॥ २१ ॥

गो० टी०–ताविति । प्रहरतां प्राहरताम् ॥ २० ॥

२१ ] ति० टी०–भुजाभ्यां परिगृह्य एकैकेनैकैकम् ॥ २१ ॥

रा० टी०–स इति । सुभृशमत्यन्तं वध्यमानः स राक्षसः अप्रकम्प्यौ एतौ रामलक्ष्मणौ भुजाभ्यां परिगृह्य उत्थाप्य प्रस्थातुं दुर्गप्रदेशं नेतुमैच्छत् ॥ २२ ॥

गो० टी०–स इति । अप्रकम्प्यौ चालयितुमप्यशक्यौ किं पुनः परिग्रहीतुमिति कविः परिहसति । रौद्रः रौद्राकृतिः अप्रकम्प्यत्वे हेतुः–नरव्याघ्राविति नरव्याघ्रौ पुरुषोत्तमौ ॥ २१ ॥

२२ ] ति० टी०–तस्याभिप्रायं काननान्तर्नयनविषयम् ॥ २२ ॥

रा० टी०–तस्येति । तस्य राक्षसस्य अभिप्रायमाज्ञाय रामोऽब्रवीत् । तद्वचनाकारमाह–अयं राक्षसः अनेन यथा अलं यथेच्छं वहतु ॥ २३ ॥

गो० टी०–तस्येति । अभिप्रायं वनान्तर्नयनेच्छां वहतु नौ प्रापयतु अनेन आवाभ्यां गन्तव्येन पथा वहतु, अथवा यथेच्छति येन मार्गेण गन्तुमिच्छति तथा वहतु उभयथापि न दोष इति भावः । तत्र हेतुमाह–अयमिति । नः वनमध्यगमनेच्छूनामस्माकम् ॥ २२ ॥ २३ ॥

२३ ] ति० टी०–यथेच्छति तथा वहतु यथाऽस्येष्टं भवति तथा वहतु अनेन निर्भयत्वं दर्शितम् । तत्र हेतुमाह–अयमेवेति ॥ २३ ॥

रा० टी०–नन्वेतद्वहने यात्राविलम्बो भविष्यतीत्यत आह–यथेति । हे सौमित्रे ! यथा इच्छति तथा राक्षसो वहतु । तत्र हेतुः–येन यथा अयं निशाचरो याति स एव नोऽस्माकं पन्थाः ॥ २४ ॥

२४–२५ ] ति० टी०–स्कन्धगतौ चकार स्कन्धावारोपयामास ॥ २४ ॥ २५ ॥

---

१ विशिखैश्छिन्नमिति गो. पाठः । २ तस्य करादिति गो. पाठः । ३ सर्पोपमौ शुभाविति गो. पाठः । ४ आपतत इति गो. पाठः । ५ बाहुभ्यां परिरभ्येति गो. पाठः । ६ बलौ तत इति गो. पाठः । ७ निनदन्निति गो. पाठः ।

वनं महामेघनिभं प्रविष्टो द्रुमैर्महद्भिर्विविधैरुपेतम् ।
नानाविधैः पक्षिकुलैर्विचित्रं शिवायुतं व्यालमृगैर्विकीर्णम् ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे तृतीयः सर्गः ॥ ३ ॥

## चतुर्थः सर्गः ।

राघवावपहृत्य निर्यान्तं विराधं दृष्ट्वा सीतायां विक्रोशन्त्यां विराधहनने प्रयतमानाभ्यामेताभ्यां छिन्नेऽपि तद्बाहुयुगलेऽम्रियमाणं तं दृष्ट्वा रामस्तद्धिंसने जीवतस्तस्य निखननमेवोपायं निश्चित्य पादेन कण्ठमाक्रमते तावत्स्मृतपूर्वजन्मवृत्तः स रामं प्रणम्य निवेदितपूर्ववृत्तः शरभङ्गऋषेराश्रमं गन्तुं प्रेरयत्स्वयमपि गर्तं ययाच । लक्ष्मणोत्खातगर्ते रामस्तमपूरयदथो ते तद्वने सुखमूषुः ।

ह्रियमाणौ तु काकुत्स्थौ दृष्ट्वा सीता रघूत्तमौ । उच्चैः स्वरेण चुक्रोश प्रगृह्य सुमहाभुजौ ॥ १ ॥
एष दाशरथी रामः सत्यवाञ्छीलवाञ्शुचिः । रक्षसा रौद्ररूपेण ह्रियते सहलक्ष्मणः ॥ २ ॥
मामृक्षा भक्षयिष्यन्ति शार्दूलद्वीपिनस्तथा । मां हरोत्सृज काकुत्स्थौ नमस्ते राक्षसोत्तम ॥ ३ ॥
तस्यास्तद्वचनं श्रुत्वा वैदेह्या रामलक्ष्मणौ । वेगं प्रचक्रतुर्वीरौ वधे तस्य दुरात्मनः ॥ ४ ॥

---

रा० टी०—स इति । अतिबलोद्धतः स निशाचरः स्वबलवीर्येण बलेन शौर्येण च समुत्क्षिप्य उत्थाप्य बालाविव स्कन्धगतौ चकार ॥ २५ ॥

रा० टी०—ताविति । रजनीचरो विराधः तौ रामलक्ष्मणौ आरोप्य घोरं विनदन् सन् वनमभिमुखो जगाम॥२६॥

गो० टी०—स त्विति । अतिबलौ रामलक्ष्मणौ समुत्क्षिप्य बालाविव स्कन्धगतौ चकार तयोरिच्छावशादिति भावः ॥ २४ ॥ २५ ॥

२६ ] ति० टी०—शिवायुतं शिवाभिर्वृतम् ॥ २६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे तृतीयः सर्गः ॥ ३ ॥

रा० टी०—वनमिति । विविधैर्द्रुमैरुपेतं युक्तं पक्षिकुलैः पक्षिसंघैर्विचित्रं शिवाभिर्युतं व्यालमृगैर्विकीर्णं युक्तं महामेघनिभं वनं प्रविष्टः ॥ २७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे तृतीयः सर्गः ॥ ३ ॥

गो० टी०—इमावपि स्वाभीष्टवनं प्रविष्टावित्याशयेनाह—वनमिति । शिवाः सृगालविशेषाः ताभिर्युतं व्यालमृगैः दुष्टमृगैः 'दुष्टे द्विपे श्वापदे च व्यालः पुंसि शठेऽपि च' इति बाणः। अत्र सर्गे भगवतः स्वायत्तसकलप्रवृत्तिकत्वं महाभयहेतावपि निर्भयत्वं च दर्शितम् । अस्मिन् सर्गे षड्विंशतिश्लोकाः ॥२६॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने तृतीयः सर्गः ॥ ३ ॥

१ ] ति० टी०—सुमहान्तौ स्वभुजौ प्रगृह्योवाच ॥ १ ॥

रा० टी०—रामलक्ष्मणहरणानन्तरकालिकं सीतावृत्तान्तमाह—ह्रियमाणाविति । रघूत्तमौ ह्रियमाणौ दृष्ट्वा सुमहाभुजौ सुमहान्तौ स्वबाहू प्रगृह्य समुत्थाप्य उच्चैः स्वरेण चुक्रोश, सुमहाभुजौ काकुत्स्थौ प्रगृह्य ह्रियमाणौ दृष्ट्वा चुक्रोशेत्यन्वयो वा ॥ १ ॥

गो० टी०—अथ परमपुरुषवहनफलं वक्तुमुपक्रमते—ह्रियमाणावित्यादि । चुक्रोश रामस्यातिमानुषं चरित्रमवगच्छन्त्यपि स्नेहातिशयेन व्याकुला रुरोदेत्यर्थः ॥ १ ॥

२ ] ति० टी०—क्रोशनप्रकारमाह—एष इति ॥ २ ॥

रा० टी०—क्रोशनाकारमाह—एष इति । सहलक्ष्मण एष रामः रौद्ररूपेण रक्षसा ह्रियते ॥ २ ॥

गो० टी०—एष इति । सत्यवान् सत्यवचनवान् शीलवान् सदाचारसंपन्नः शुचिः ऋजुबुद्धिः ॥ २ ॥

३ ] ति० टी०—शार्दूलद्वीपिनः सबिन्दुविन्दुव्याघ्राः । मां हरते नम इत्युक्ती रामलक्ष्मणयोः प्रेमातिशयत्वात् ॥ ३ ॥

रा० टी०—मामिति । मां वृकाः शार्दूलद्वीपिनो वा भक्षयिष्यन्ति । तत्र शार्दूलाः सबिन्दवो व्याघ्राः द्वीपिनस्तु बिन्दुरहिता इति भेदः। तत्र सहायान्तराण्यदृष्ट्वाह—हे राक्षसोत्तम ! मां काकुत्स्थौ च हर उत्सृज वा ते नमः । काकुत्स्थहरणस्य सिद्धत्वेऽपि स्वहरणस्याभावादेकसत्त्वेऽपि द्वयं नास्तीति प्रतीतेः न प्रार्थनानुपपत्तिः ॥ ३ ॥

गो० टी०—एवं दैवं प्रत्याक्रुश्य विराधं प्रत्याह—मामिति। वृकाः ईहामृगाः 'कोकस्त्वीहामृगो वृकः' इत्यमरः । शार्दूला महाव्याघ्राः द्वीपिनः अल्पव्याघ्राः 'व्याघ्रो मृगारिः शार्दूलो हिंसारुश्चित्रकामृगात् । चण्डश्चाल्पस्त्वयं द्वीपी' इति वैजयन्ती । नमस्त इत्येवं चुक्रोशेति पूर्वेणान्वयः ॥ ३ ॥ ४ ॥

४ ] ति० टी०—वेगं त्वराम् ॥ ४ ॥

रा० टी०—तस्या इति । तस्या वैदेह्याः तद्वचनं श्रुत्वा वीरौ रामलक्ष्मणौ दुरात्मनस्तस्य विराधस्य वधे वेगं शीघ्रतां प्रचक्रतुः ॥ ४ ॥

---

१ शतैरिति गो. पाठः । २ तौ दृष्ट्वा वैदेही रामलक्ष्मणाविति गो. पाठः । ३ सुभुजौ भुजाविति गो. पाठः । ४ वृका इति गो. रा. पाठः । ५ शार्दूला इति गो. पाठः । ६ हरोत्सृज्येति गो. पाठः ।

तस्य रौद्रस्य सौमित्रिः सव्यं बाहुं बभञ्ज ह । रामस्तु दक्षिणं बाहुं तरसा तस्य रक्षसः ॥ ५ ॥
स भग्नबाहुः संविग्नः [1]पपाताशु विमूर्छितः । धरण्यां मेघसंकाशो वज्रभिन्न इवाचलः ॥ ६ ॥
मुष्टिभिर्[2]बाहुभिः पद्भिः सूदयन्तौ तु राक्षसम् । उद्यम्योद्यम्य चाप्येनं स्थण्डिले निष्पिपेषतुः॥ ७ ॥
स विद्धो बहुभिर्बाणैः खड्गाभ्यां च परिक्षतः । निष्पिष्टो बहुधा भूमौ न ममार स राक्षसः ॥ ८ ॥
तं प्रेक्ष्य रामः सुभृशमवध्यमचलोपमम् । भयेष्वभयदः श्रीमानिदं वचनमब्रवीत् ॥ ९ ॥
तपसा पुरुषव्याघ्र राक्षसोऽयं न शक्यते । शस्त्रेण युधि निर्जेतुं राक्षसं निखनावहे ॥ १० ॥
[3]कुञ्जरस्येव रौद्रस्य राक्षसस्यास्य लक्ष्मण । वनेऽस्मिन्सुमहच्छ्वभ्रं खन्यतां रौद्रवर्चसः ॥ ११ ॥
इत्युक्त्वा लक्ष्मणं रामः प्रदरः खन्यतामिति । तस्थौ विराधमाक्रम्य कण्ठे पादेन वीर्यवान् ॥ १२ ॥
तच्छ्रुत्वा राघवेणोक्तं राक्षसः प्रश्रितं वचः । इदं प्रोवाच काकुत्स्थं विराधः पुरुषर्षभम् ॥ १३ ॥
हतो[4]ऽहं पुरुषव्याघ्र शक्रतुल्यबलेन वै । मया तु पूर्वं त्वं मोहान्न ज्ञातः [5]पुरुषर्षभ ॥ १४ ॥

---

५ ] ति० टी०—बाहुं बभञ्ज । नैतावतापि प्राणहानिरिति न वरदानविरोधः । अभेद्याच्छेद्यत्वं च प्राणनाशक्षमावयवविशेषपरं बोध्यम् । बभञ्ज मुष्टिप्रहारेणेति शेषः । अभेद्याच्छेद्यत्ववरस्तु शस्त्रकरणकतद्विषय इत्यन्ये ॥ ५ ॥

रा० टी०—वधप्रकारमाह—तस्येति । रौद्रस्य भयंकरस्य रक्षसः सव्यं वामं बाहुं सौमित्रिः बभञ्ज, रामस्तु दक्षिणं बाहुं बभञ्ज ॥ ५ ॥

गो० टी०—तस्येति । सव्यमिति ननु विराधादाने कबन्धादाने च लक्ष्मणः सव्यं रामो दक्षिणं भुजमच्छिनदित्यविशेषेणोच्यते किमत्र नियामकमिति चेत् उच्यते सर्वदा लक्ष्मणो रामस्य दक्षिणपार्श्वे एव तिष्ठति अतो गृह्णन् दक्षिणेन रामं सव्येन लक्ष्मणं चागृह्णादित्यविरोधः । तरसा बलेन ॥ ५ ॥

६ ] ति० टी०—संविग्नः खिन्नः ॥ ६ ॥

रा० टी०—स इति । भग्नबाहुः मेघसंकाशः स विराधः मूर्छितः सन् वज्रभिन्नः अचलः पर्वत इव धरण्यां पपात ॥ ६ ॥

गो० टी०—स इति । संविग्नः भीतः ॥ ६ ॥

७ ] ति० टी०—सूदयन्तौ हिंसन्तौ ॥ ७ ॥

रा० टी०—मुष्टिभिरिति । मुष्ट्यादिभिः सूदयन्तौ ताडयन्तौ रामलक्ष्मणौ उद्यम्योद्यम्य उत्थाप्योत्थाप्य एनं राक्षसं स्थण्डिले निष्पिपेषतुः संचूर्णयामासतुः ॥ ७ ॥

गो० टी०—मुष्टिभिरिति । बहुवचनमावृत्त्या उद्यम्योद्यम्य सूदयन्तौ मुष्ट्यादिकमुद्धृत्योद्धृत्य प्रहरन्तौ स्थण्डिले भूतले ॥ ७ ॥ ८ ॥

८ ] ति० टी०—न ममार वरदानबलादिति भावः ॥ ८ ॥

रा० टी०—स इति । बहुभिर्बाणैः विद्धः खड्गाभ्यां परिक्षतश्च बहुधा अनेकवारं भूमौ निष्पिष्टश्च स राक्षसः राक्षसत्वसहितः स विराधो न ममार ॥ ८ ॥

९ ] ति० टी०—भयेषु भयकालेषु अभयदः स्वगुणादिश्रवणस्मरणकीर्तनादिना ॥ ९ ॥

रा० टी०—तमिति । अवध्यं तं विराधं सुभृशमत्यन्तं प्रेक्ष्य भयेषु अभयदः श्रीमान् रामः इदमब्रवीत् ॥ ९ ॥

गो० टी०—तमिति । भयेष्वभयदः शापापायकरणाय प्रसन्न इत्युच्यते ॥ ९ ॥

१०-११ ] ति० टी०—निखनावहे भूमौ गर्ते पातयावहे १०-११

रा० टी०—तद्वचनाकारमाह—तपसेति । पुरुषव्याघ्र हे लक्ष्मण ! अयं राक्षसः तपसा हेतुभूतेन युधि शस्त्रेण निर्जेतुं न शक्यते अतः राक्षसं राक्षसपातनार्थं निखनावहे भूमिमिति शेषः ॥ १० ॥

गो० टी०—तपसेति । शस्त्रेण शस्त्रादिभिः निखनावहे भूमौ निक्षिपेव ॥ १० ॥

रा० टी०—कुञ्जरस्येति । रौद्रस्य भयंकरस्य कुञ्जरस्य इव रौद्रवर्चसः भयकारितेजोयुक्तस्य अस्य राक्षसस्य पातनार्थमस्मिन् वने सुमहत् अतिविशालं श्वभ्रं गर्तः खन्यताम् ॥ ११ ॥

गो० टी०—कुञ्जरस्येत्यादिश्लोकद्वयम् । वैपुल्यं विधाय निम्नतां विधत्ते—प्रदरः खन्यतामिति प्रकृष्टोदरः प्रदरः २३॥२४॥

१२ ] ति० टी०—प्रदरो गर्तः कण्ठ आक्रम्य गयमिव १२

रा० टी०—इतीति । इति अनेन प्रकारेण प्रदरः खन्यतामिति लक्ष्मणं राम उक्त्वा पादेन कण्ठे विराधमाक्रम्य एकीकृत्य बद्धेत्यर्थः तस्थौ ॥ १२ ॥

१३ ] ति० टी०—प्रश्रितं शापान्तकालप्राप्तेः प्रश्रयप्राप्तिः १३

रा० टी०—तदिति । राघवेण रामेण उक्तं तद्वचः श्रुत्वा राक्षसो विराधः प्रसृतं नम्रीभूतमिदं वचः काकुत्स्थं प्रोवाच ॥ १३ ॥

गो० टी०—तदिति । प्रश्रितं विनयान्वितं यथा तथा प्रोवाचेत्यन्वयः ॥ ११ ॥

१४ ] ति० टी०—प्रदरकरणरूपप्राणान्तव्यापारात्पूर्वं रामस्त्वमिति न ज्ञातः ॥ १४ ॥

रा० टी०—तद्वचनाकारमाह—हत इति । हे पुरुषव्याघ्र !

---

१ निपपाताशु राक्षस इति गो. पाठः । २ जानुभिरिति गो. पाठः । ३ एतदादिश्लोकद्वयं गो. नास्ति । ४ ऽस्मीति गो. पाठः।५ पुरुषर्षभः इति गो.पाठः ।

कौसल्या सुप्रजास्तात रामस्त्वं विदितो मया । वैदेही च महाभागा लक्ष्मणश्च महायशाः ॥ १५ ॥
अभिशापादहं घोरां प्रविष्टो राक्षसीं तनुम् । तुम्बुरुर्नाम गन्धर्वः शप्तो वैश्रवणेन [1]हि ॥ १६ ॥
प्रसाद्यमानश्च मया सोऽब्रवीन्मां महायशाः । यदा दाशरथी रामस्त्वां वधिष्यति संयुगे ॥ १७ ॥
तदा प्रकृतिमापन्नो भवान्स्वर्गं गमिष्यति । अनुपस्थीयमानो मां स [2]क्रुद्धो व्याजहार ह ॥ १८ ॥
[3]इति वैश्रवणो राजा रम्भासक्तमुवाच ह । तव प्रसादान्मुक्तोऽहमभिशापात्सुदारुणात् ॥ १९ ॥
भुवनं स्वं गमिष्यामि स्वस्ति वोऽस्तु परंतप । इतो वसति धर्मात्मा शरभङ्गः प्रतापवान् ॥ २० ॥
अध्यर्धयोजने तात महर्षिः सूर्यसंनिभः । तं क्षिप्रमभिगच्छ त्वं स ते श्रेयोऽ[4]भिधास्यति॥ २१ ॥
अवटे चापि मां राम [5]निक्षिप्य कुशली व्रज । रक्षसां गतसत्त्वानामेष धर्मः सनातनः ॥ २२ ॥

शक्रः तुल्यबलो यस्य तेन भवताहं हतः । अर्धं पृथक् । तत्र हेतुं वक्तुमाह—मोहादविवेकात्पूर्वं मया त्वं न ज्ञातः इदानीं तु कौशल्यासुप्रजाः कौशल्यायाः प्रादुर्भूतरामस्त्वं मया विदितः ज्ञातः वैदेही लक्ष्मणश्च विदितौ। सार्धश्लोक एकान्वयी१४॥१५

गो० टी०—रामपादस्पर्शेन प्रत्यभिजानन्नाह—हत इत्यादि । त्वयेति शेषः । पुरुषर्षभः पुरुषोत्तमस्त्वं रामत्वेनावतीर्ण इति न ज्ञात इत्यर्थः ॥ १२ ॥

१५ ] ति० टी०—इदानीं कथं ते ज्ञानं तत्राह—कौसल्येत्यादि । त्वया कौसल्यासुप्रजा इति त्वं विदितः कौसल्यापुत्र इति ज्ञातोऽसीत्यर्थः । एवं च कौसल्यायामीश्वरोऽवतीर्णो वैदेही च लक्ष्मीर्लक्ष्मणश्च तवांश इति सूचितम् ॥ १५ ॥

गो० टी०—ज्ञानप्रकारमाह—कौसल्येति । तात सर्वलोकजनक त्वं कौसल्यायाः सुप्रजाः "नित्यमसिच् प्रजामेधयोः" इत्यसिच् । इति विदितोऽसि महाभागा श्रीर्वैदेहीत्यवगता अयं च त्वदंशभूतो महायशाः त्वदनुवर्तनजकीर्तिमान् लक्ष्मण इति विदितः ॥ १३ ॥

१६-१७ ] ति० टी०—एवंज्ञाने कारणमाह—अभिशापादिति । तुम्बुरुरहं वैश्रवणेन शप्तः, तस्माच्छापाद्राक्षसीं तनुं प्रविष्टः, अतो मे ज्ञानशक्तिरस्तीत्यर्थः ॥ १६ ॥ १७ ॥

१८ ] ति० टी०—प्रकृतिं गान्धर्वीम् । प्रकृतक्रोधकारणमाह—अनुपस्थीयमानोऽवसरेष्वसेव्यमानः । व्याजहारेत्यस्य राक्षसीं तनुं प्रविशेतीति शेषः ॥ १८ ॥

रा० टी०—ननु किं ज्ञानेनेत्यतः स्ववृत्तमाह—अभीति । वैश्रवणेन शप्तः प्राप्तशापः तुम्बुरुः तदभिधो गन्धर्वोऽहमभिशापाद्धेतोः घोरां राक्षसीं तनुं प्रविष्टोऽस्मीति शेषः ॥ १६ ॥

गो० टी०—एतावत्पर्यन्तं कुतो न ज्ञातवानसीत्यत्राह—अपीति । अपिर्गर्हायाम् । कस्य केन शाप इत्यत्राह—तुम्बुरुरित्यादि । अहमिति शेषः ॥ १४ ॥

रा० टी०—प्रसाद्येति । मया प्रसाद्यमानः महायशाः स वैश्रवणः माम् अब्रवीत् । तद्वचनाकारमाह—यदेति । संयुगे संग्रामे दाशरथिः दशरथपुत्रो रामः यदा त्वां वधिष्यति तदा प्रकृतिं स्वभावमापन्नः प्राप्तो भवान् स्वर्गं स्वर्गलोकं गमिष्यति इति अनुपस्थीयमानः समये असेव्यमानः अत एव क्रुद्धः सः पश्चान्मया प्रसाद्यमानः सन् व्याजहार । श्लोकद्वयमेकान्वयि ॥ १७ ॥ १८ ॥

गो० टी०—प्रसाद्यमान इत्यादि । उपकारस्मृत्योपश्लोकयति—महायशा इति । प्रकृतिं स्वरूपम् । शापनिमित्तमाह—अनुपस्थीयमान इति । रम्भासक्तं माम् अनुपस्थीयमानः अवसरे मया असेव्यमानः अत एव संक्रुद्धः राजा अस्मत्स्वामी वैश्रवणः इति उक्तप्रकारेण राक्षसो भवेति व्याजहार, पुनर्मया प्रसाद्यमान इत्यब्रवीच, उक्तप्रकारेण शापावसानं चोवाचेति योजना ॥ १५ ॥ १६ ॥

१९ ] ति० टी०—अनुपस्थाने कारणमाह—इतीति । उक्तं शापं तत्प्रतीकारं चोवाचेत्यर्थः । शापमुक्तिकालज्ञानजानन्दपारवश्यात्पुनरुक्तिर्न दोषाय 'रम्भासक्तं पुरानघ' इति पाठे पुनरुक्त्यभाव एव ॥ १९ ॥

रा० टी०—उपसंहरन्नाह—इतीति । रम्भासक्तं मां वैश्रवणो राजा इत्यनेन प्रकारेण उवाच । सुदारुणादतिघोरात् शापात् इह अस्मिन्समये तव प्रसादान्मुक्तोऽहं स्वं भवनं गमिष्यामि वः स्वस्त्यस्तु । सार्धश्लोक एकान्वयि ॥ १९ ॥

गो० टी०—तवेति । स्वं भुवनं स्वर्गलोकम् । उपकारस्मृत्या मङ्गलमाशास्ते—स्वस्ति व इति ॥ १७ ॥

२० ] ति० टी०—स्वं भुवनं स्वं लोकम् 'भवनम्' इति पाठान्तरम् ॥ २० ॥

२१ ] ति० टी०—अध्यर्धयोजने सार्धयोजने ॥ २१ ॥

रा० टी०—इत इति । धर्मात्मा सूर्यसन्निभः महर्षिः शरभङ्गः इत अस्मात्स्थानात् अध्यर्धयोजने सार्धयोजने वसति तं शरभङ्गं त्वं शीघ्रमभिगच्छ स शरभङ्गस्ते श्रेयः त्वदीप्सितकल्याणं विधास्यति ॥ २० ॥ २१ ॥

गो० टी०—वाचि कैङ्कर्यमातनोति—इत इति । प्रतापवान् महातपाः अधिकमर्धं यस्य तदध्यर्धं तच्च तद्योजनं च तस्मिन् सार्धयोजन इत्यर्थः, क्षिप्रं तदग्निप्रवेशात्पूर्वं ते त्वत्तः श्रेयः ब्रह्मलोकं विधास्यति पोषयिष्यति, यद्वा ते श्रेयः निवासस्थानप्रवेशनादिकम् ॥ १८ ॥ १९ ॥

२२ ] ति० टी०—गतसत्त्वानां गतप्राणानाम् सनातनः परंपराप्राप्तः अत एव कलिराक्षसेषु यवनेष्वेतद्धर्मप्रवृत्तिः ॥ २२ ॥

१ हेति गो. पाठः । २ संक्रुद्ध इति रा. पाठः । ३ इहेति रा. पाठः । ४ विधास्यतीति रा. पाठः । ५ प्रक्षिप्येति गो. पाठः ।

अवटे ये निधीयन्ते तेषां लोकाः सनातनाः । एवमुक्त्वा तु काकुत्स्थं विराधः शरपीडितः ॥ २३ ॥
बभूव स्वर्गसंप्राप्तो न्यस्तदेहो महाबलः । तच्छ्रुत्वा राघवो वाक्यं लक्ष्मणं व्यादिदेश ह ॥ २४ ॥
कुञ्जरस्येव रौद्रस्य राक्षसस्यास्य लक्ष्मण । वनेऽस्मिन्सुमहाञ्श्वभ्रः खन्यतां रौद्रकर्मणः ॥ २५ ॥
इत्युक्त्वा लक्ष्मणं रामः प्रदरः खन्यतामिति । तस्थौ विराधमाक्रम्य कण्ठे पादेन वीर्यवान् ॥ २६ ॥
ततः खनित्रमादाय लक्ष्मणः श्वभ्रमुत्तमम् । अखनत्पार्श्वतस्तस्य विराधस्य महात्मनः ॥ २७ ॥
तं मुक्तकण्ठमुत्क्षिप्य शङ्कुकर्णं महास्वनम् । विराधं प्राक्षिपच्छ्वभ्रे नदन्तं भैरवस्वनम् ॥ २८ ॥
तमाहवे दारुणमाशुविक्रमौ स्थिरावुभौ संयति रामलक्ष्मणौ ।
मुदान्वितौ चिक्षिपतुर्भयावहं नदन्तमुत्क्षिप्य बलेन राक्षसम् ॥ २९ ॥

रा० टी०—अवटे इति । हे राम ! गतसत्त्वानां रक्षसां सनातनो धर्मः एषः अवटे निक्षेपः अतः अवटे गर्ते मां निक्षिप्य कुशली त्वं व्रज ॥ २२ ॥

गो० टी०—अवट इति । अवटे श्वभ्रे कुशली आर्तत्राणरूपकुशलयुक्तः गतसत्त्वानां गतासूनाम् ' द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु ' इत्यमरः । एषः अवटप्रक्षेपः । अस्य धर्मस्य फलमाह—अवट इति ॥ २० ॥

२३ ] ति० टी०—उक्तमेव विवृणोति—अवटे इति ॥२३॥

रा० टी०—तद्धर्मस्य सफलत्वं बोधयन्नाह—अवट इति । अवटे गर्ते ये राक्षसाः निधीयन्ते तेषां राक्षसानां सनातनाः नित्या लोकाः भवन्तीति शेषः । अर्धं पृथक्—एवमिति । शरपीडितो विराधः एवं काकुत्स्थमुक्त्वा न्यस्तदेहः त्यक्तराक्षसशरीरः सन् स्वर्गसंप्राप्तो बभूव । अर्धद्वयमेकान्वयि॥२३॥

गो० टी०—एवमिति । स्वर्गसंप्राप्तः संप्राप्तप्राय इत्यर्थः, खननानन्तरं स्वर्गप्राप्तेः ॥ २१ ॥ २२ ॥

२४ ] ति० टी०—न्यस्तदेहोऽवटनिक्षिप्तदेहः स्वर्गसंप्राप्तः संप्राप्तस्वर्ग इत्यर्थः । बभूव तथा भवितुमुद्यतो बभूवेत्यर्थः । यद्वा बभूवेत्यर्धेन संक्षिप्ततयोक्तस्य विस्तरमाह—तच्छ्रुत्वेति । अवटनिक्षेपेण स्वर्गप्राप्तिं श्रुत्वा ॥ २४ ॥

२५ ] ति० टी०—कुञ्जरस्येव मृतकुञ्जरस्य निखननार्थमिवेत्यर्थः । खन्यतामिति शीघ्रमिति शेषः, मया तर्कितस्यैतन्मरणोपायस्यानेनापि कथनान्निश्चितत्वेन शीघ्रता कार्येत्याशयः ॥२५॥

रा० टी०—तदिति । तद्विराधोचारितं वाक्यं श्रुत्वा लक्ष्मणं व्यादिदेश आज्ञापयामास । तत्प्रकारमाह—हे लक्ष्मण ! रौद्रस्य कुञ्जरस्य इव रौद्रकर्मणः अस्य राक्षसस्य निपातायेति शेषः, अस्मिन् वने सुमहत् श्वभ्रं गर्तः खन्यताम् ॥२४॥२५॥

२६ ] ति० टी०—पादेन कण्ठ आक्रम्य तस्थौ श्वभ्राद्दूरपरिलुण्ठनव्यावृत्त्यर्थम् ॥ २६ ॥

रा० टी०—इतीति । इति अनेन प्रकारेण प्रदरो गर्तः खन्यताम् इति वचनं लक्ष्मणमुक्त्वा पादेन चरणेन विराधं कण्ठे आक्रम्य रामस्तथौ ॥ २६ ॥

२७ ] ति० टी०—विराधस्य महात्मनः । महात्मनो महाशरीरस्य गन्धर्वत्वप्रत्यापत्त्यभिप्रायेण रामस्वरूपज्ञानाभिप्रायेण च कविना महात्मन इति प्रयुक्तं वा ॥ २७ ॥

रा० टी०—तत इति । ततः रामाज्ञाश्रवणानन्तरं खनित्रमादाय विराधस्य पार्श्वतः पार्श्वे उत्तमं तत्क्षेपणयोग्यं श्वभ्रं गर्तं लक्ष्मणोऽखनत् ॥ २७ ॥

गो० टी०—तत इति । उत्तमम् अतिनिम्नं महात्मनः महाकायस्य ॥ २५ ॥

२८ ] ति० टी०—मुक्तकण्ठं श्वभ्रे क्षेपणार्थं रामेण मुक्तकण्ठाक्रमणम् शङ्कुवत्कठिनकर्णम् उत्क्षिप्य चालयित्वा महास्वनत्वादेव भैरवस्वनत्वं यथा तथा धन्योऽहमतिधन्योऽहमिति नदन्तं श्वभ्रे प्राक्षिपत् ॥ २८ ॥

रा० टी०—तमिति । मुक्तकण्ठं मुक्तः प्रक्षेपणार्थं रामचरणाक्रमणात्त्यक्तः कण्ठो यस्य तं शङ्कुवदचलायमानौ कर्णौ यस्य तं महास्वनं महासुभिः ऊर्ध्वोच्छ्वासैः अनिति जीवति तमासन्नमरणमित्यर्थः, अत एव भैरवस्वनं भयंकरशब्दं नदन्तं कुर्वन्तं विराधं श्वभ्रे स्वकृतखाते प्राक्षिपत् ॥ २८ ॥

गो० टी०—तमिति । मुक्तकण्ठं कण्ठाक्रमणरहितम् अत एव महास्वनं शङ्कुकर्णं शङ्कुः कीलं तत्सदृशकर्णं गर्दभाकारं वा । ' शङ्कुकर्णौ गर्दभोष्ट्रौ ' इति बाणः । भैरवस्वनं भयंकरप्रतिध्वानं यथा भवति तथा नदन्तं महास्वनमित्यत्र स्वभावोक्तिः । अत्रोच्चारणरूपकार्योक्तिरिति भिदा ॥ २६ ॥

२९ ] ति० टी०—आशुविक्रमौ क्षिप्रकारिणौ संयति स्थिरौ दृढचित्तौ आहवे निर्जितं बलेनोत्क्षिप्य संचाल्य गर्ते चिक्षिपतुः॥२९॥

रा० टी०—तदेव सर्वं संक्षिप्य भङ्ग्यन्तरेणाह—तमित्यादिभिः । संयति संग्रामे स्थिरौ अचलितचित्तौ आशुविक्रमौ मुदान्वितौ उभौ रामलक्ष्मणौ दारुणं नदन्तमत एव भयावहं राक्षसं तं विराधमाहवे सङ्ग्रामे उत्क्षिप्य ऊर्ध्वं क्षिप्त्वा चिक्षिपतुः पृथिव्यामिति शेषः ॥ २९ ॥

गो० टी०—समस्तमुक्तमेवार्थं वृत्तान्तरेण संगृह्णाति—तमाहव इत्यादिना । संयति युद्धे स्थिरौ ॥ २७ ॥

१ सुमहच्छ्वभ्रमिति गो. रा. पाठः । २ निष्पिष्येति गो. पाठः । ३ बिले लिति गो. पाठः ।

अवध्यतां प्रेक्ष्य महासुरस्य तौ शितेन शस्त्रेण तदा नरर्षभौ ।
समर्थ्य चात्यर्थविशारदावुभौ बिले विराधस्य वधं प्रचक्रतुः ॥ ३० ॥
स्वयं विराधेन हि मृत्युमात्मनः प्रसह्य रामेण [1]यथार्थमीप्सितः ।
निवेदितः काननचारिणा स्वयं न मे वधः शस्त्रकृतो भवेदिति ॥ ३१ ॥
तदेव रामेण निशम्य भाषितं कृता मतिस्तस्य बिलप्रवेशने ।
बिलं च [2]तेनातिबलेन रक्षसा प्रवेश्यमानेन वनं विनादितम् ॥ ३२ ॥
प्रहृष्टरूपाविव रामलक्ष्मणौ विराधमु[3]र्व्यां प्रदरे निपात्य तम् ।
ननन्दतुर्वीतभयौ महावने शिलाभिरन्तर्दधतुश्च राक्षसम् ॥ ३३ ॥
ततस्तु तौ काञ्चनचित्रकार्मुकौ निहत्य रक्षः परिगृह्य मैथिलीम् ।
विजह्रतुस्तौ मुदितौ महावने दिवि स्थितौ चन्द्रदिवाकराविव ॥ ३४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे चतुर्थः सर्गः ॥ ४ ॥

---

३० ] ति० टी०–अवध्यतां शस्त्रेणावध्यतां प्रेक्ष्य । 'असह्यताम्' इति पाठेऽप्यवध्यतामित्येवार्थः । प्रेक्ष्य विचार्य समर्थ्य बिलं संपाद्य तत्र बिले वधं प्रचक्रतुः मृत्पूरणेनेति शेषः ॥ ३० ॥

रा० टी०–अवध्यतामिति । शितेन तीक्ष्णेन शस्त्रेण महासुरस्य विराधस्य अवध्यतां प्रेक्ष्य दृष्ट्वा नरर्षभौ अत्यर्थविशारदौ अत्यर्थमत्यन्तं विशारदौ निपुणावुभौ रामलक्ष्मणौ समर्थ्य अतिखननेन बिलं संपाद्य बिले पातयित्वा बन्धं प्रचक्रतुः ॥ ३० ॥

गो० टी०–बिलप्रक्षेपनिमित्तमाह–अवध्यतामिति । महासुरस्य वृत्रासुरसदृशस्य समर्थ्य अयमेवास्य वधोपाय इति निश्चित्य ॥ २८ ॥

३१ ] ति० टी०–उक्तमेवार्थमुपसंहरति–स्वयमिति । यथार्थं स्वप्रयोजनोचितम् रामेण कर्त्रा प्रसह्य स्वयं स्वस्य यो मृत्युरीप्सितस्तमात्मनो मृत्युं प्रसह्योद्दिश्य । 'प्रपद्य' इति पाठेऽप्ययमेवार्थः । काननचारिणा विराधेन मे वधः शस्त्रकृतो न भवेदिति निवेदितोऽभूद्राम इति शेषः ॥ ३१ ॥

रा० टी०–ननु मरणयत्नान्तराणि हित्वा गर्ते निपातः किमर्थं कृत इत्यत आह–स्वयमिति । काननचारिणा वनविहरणशीलेन रामेण स्वयमीप्सितः वधः विराधकल्याणकारकविराधहननमात्मनः मृत्युं प्रसह्य सहित्वा संवाञ्छयेत्यर्थः शस्त्रकृतः शस्त्रव्यापारान्मे वधो न इत्ययमर्थो विराधेन स्वयं यथार्थं निवेदितः कथितः ॥ ३१ ॥

गो० टी०–न केवलं स्वनिश्चयः विराधेन चानन्तरे तथोक्तमित्याह–स्वयमिति । काननचारिणा रामेण प्रसह्य बलात्कृत्य आत्मनो वधार्थं स्वयमीप्सितः मृत्युः बिलप्रवेशरूपवधोपायः न मे वधः शस्त्रकृतो भवेदित्युपायान्तरं प्रतिषिध्य स्वयं निवेदितः उक्तो हीति योजना ॥ २९ ॥

३२ ] ति० टी०–तदेव भाषितं विराधोक्तं शस्त्रेण मे न मृत्युरित्येवंरूपम् ॥ ३२ ॥

रा० टी०–तदिति । तद्भाषितं निशम्य श्रुत्वा बिलप्रवेशने मतिः रामेण कृता बिलं प्रवेश्यमानेन रक्षसा वनं सर्वं काननं निनादितं शब्दितम् ॥ ३२ ॥

गो० टी०–तदेवेति । रामेण तद्भाषितमेव निशम्य तस्य विराधस्य बिलप्रवेशने मतिः कृता रामेण बलेन बिलं प्रवेश्यमानेन रक्षसा वनं विनादितमिति योजना ॥ ३० ॥

३३ ] ति० टी०–प्रहृष्टरूपाविव इवशब्द एवार्थे ॥ ३३ ॥

रा० टी०–प्रहृष्टेति । प्रहृष्टं द्रष्टॄणां प्रमोदप्रापकं रूपं ययोस्तौ वीतभयौ रामलक्ष्मणौ तं विराधं राक्षसं महावने उर्व्यां प्रदरे गर्ते एव निपात्य शिलाभिरन्तर्दधतुः ननन्दतुश्च । इवशब्द एवार्थे ॥ ३३ ॥

गो० टी०–प्रहृष्टेति । प्रहृष्टरूपौ पुलकितशरीरौ वस्तुतो हर्षशोकावनयोर्न स्तः किंतु तन्नटनमात्रमिति इवशब्देन सूचयति ॥ ३१ ॥

३४ ] ति० टी०–दिवि स्थितौ चन्द्रदिवाकराविव महावने विजह्रतुः । नीलत्वाद्विशालत्वाच्च वनस्याकाशसादृश्यम् उभावपि चन्द्रवत्कलासंपन्नौ सूर्यवत्प्रतापयुतौ ॥ ३४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे चतुर्थः सर्गः ॥ ४ ॥

रा० टी०–तत इति । काञ्चनचित्रकार्मुकौ काञ्चनेन द्रवीभूतसुवर्णेन चित्रे कार्मुके धनुषी ययोस्तौ रामलक्ष्मणौ रक्षो विराधं निहत्य मैथिलीं परिगृह्य ततः तस्यां दिवि स्थितौ तौ अमृतौ चन्द्रदिवाकराविव विजह्रतुः ॥ ३४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे चतुर्थः सर्गः ॥ ४ ॥

---

१ यथार्थमिति गो. पाठः । २ रामेणेति गो. पाठः । ३ उर्व्याः प्रदरे निहत्य ताविति गो. पाठः ।

## पञ्चमः सर्गः ।

विराधवनाच्छरभङ्गाश्रमं प्राप्तो रामः शरभङ्गेण संभाषमाणं वज्रिणं विलोक्य लक्ष्मणं प्रति तं निर्दिशंस्तत्रैवावस्थातुं संदिदेशे। न्द्रस्येन्द्रत्वं जिज्ञासुः स्वयं तदभ्याशं प्रपेदेऽथ रामसंदर्शनस्यानवसरं मन्वान इन्द्रः शरभङ्गमामन्त्र्य स्वरगात् । ससीतालक्ष्मणो रामः शरभङ्गमभिवाद्येन्द्रागमकारणमपृच्छच्छरभङ्गस्तन्निवेद्य सुतीक्ष्णदर्शनं रोचयञ्छरीरमग्निसात्कृत्य ब्रह्मलोकं प्रपेदे ।

हत्वा तु तं भीमबलं विराधं राक्षसं वने । ततः सीतां परिष्वज्य समाश्वास्य च वीर्यवान् ॥ १ ॥
अब्रवीद्भ्रातरं रामो लक्ष्मणं दीप्ततेजसम् । कष्टं वनमिदं दुर्गं न च स्मो वनगोचराः ॥ २ ॥
अभिगच्छामहे शीघ्रं शरभङ्गं तपोधनम् । आश्रमं शरभङ्गस्य राघवोऽभिजगाम ह ॥ ३ ॥
तस्य देवप्रभावस्य तपसा भावितात्मनः । समीपे शरभङ्गस्य ददर्श महदद्भुतम् ॥ ४ ॥
विभ्राजमानं वपुषा सूर्यवैश्वान[1]रप्रभम् । [2]रथप्रवरमारूढमाकाशे विबुधानुगम् ॥ ५ ॥
असंस्पृशन्तं वसुधां ददर्श विबुधेश्वरम् । [3]सुप्रभाभरणं देवं [4]विरजोऽम्बरधारिणम् ॥ ६ ॥

गो० टी०–तत इति । पत्नीसहितस्य रामस्य तद्वहितस्य परतन्त्रस्य लक्ष्मणस्य चोपमानमाह—चन्द्रदिवाकराविवेति ॥ ३२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने चतुर्थः सर्गः ॥ ४ ॥

१ ] ति० टी०–समाश्वास्य समाश्वस्येव । विराधाद्भीतामिवेति शेषः ॥ १ ॥

रा० टी०–विराधवधानन्तरकालिकं रामवृत्तान्तमाह–हत्वेत्यादिभिः । भीमबलं विराधं ततः तस्मिन् वने हत्वा सीतां परिष्वज्य आलिङ्ग्य समाश्वास्य च वीर्यवान् रामः भ्रातरं लक्ष्मणमब्रवीत् । सार्धश्लोक एकान्वयी ॥ १ ॥

गो० टी०–एवं विराधवनवासिमुमुक्षुमुनिजनशरणागतेरानुषङ्गिकफलभूतं विराधवधमभिधाय खरादिवधफलशरभङ्गाश्रमवासिमुनिजनशरणागतिं दर्शयिष्यन् तदुचितसौलभ्यदर्शनाय शरभङ्गाश्रमवनगमनं दर्शयति पञ्चमे–हत्वेत्यादि । परिष्वज्य समाश्वास्य चेति विराधाङ्कस्पर्शजभयदुःखव्रीडाशान्त्यर्थमिति भावः ॥ १ ॥

२ ] ति० टी०–इदं वनं कष्टं पीडाजनकं दुर्गं विषमं क्रमणायोग्यं च वयं चेतः पूर्वं कदापि वनगोचरा न स्मः कदापीदृशं वनं न दृष्टं यस्मात् ॥ २ ॥

रा० टी०–तद्वचनाकारमाह–कष्टमिति । यतः वयं वनगोचरा वनमात्रनिवासिनो न स्मः अतः दुर्गं गमनायोग्यमिदं वनं कष्टं दुःखसंपादकमतः तपोधनं शरभङ्गं शीघ्रमभिगच्छामहे इत्यभिधायेति शेषः, शरभङ्गस्य आश्रमं राघवोऽभिजगाम ॥२॥३॥

गो० टी०–कष्टं कृच्छ्रं गहनं वा "कृच्छ्रगहनयोः कषः" इत्यनिण्निष्ठा । अत एव दुर्गं विषमं विश्रमायोग्यमित्यर्थः ॥२॥

३ ] ति० टी०–अतः शीघ्रं शरभङ्गं गच्छामहे गच्छाम इत्यर्थः । इत्युक्त्वेति शेषः ॥ ३ ॥

गो० टी०–आश्रममिति । तस्य विराधोक्तस्य देवप्रभावस्य तपसा साधनेन भावितात्मनः साक्षात्कृतपरब्रह्मणः "तपसा ब्रह्म विजिज्ञासस्व" इति श्रुतेः ॥ ३ ॥

४ ] ति० टी०–भावितः शुद्ध आत्मा यस्य तस्य समीपे महदद्भुतं ददर्श ॥ ४ ॥

रा० टी०–तस्येति । तपसा परमात्मविचारेण भावितः साक्षात्कारतां प्राप्तः आत्मा परमात्मा येन तस्य अत एव देवप्रभावस्य देवकर्तृकोत्कण्ठापूर्वकस्मरणविषयीभूतस्य शरभङ्गस्य समीपे महदद्भुतं ददर्श ॥ ४ ॥

गो० टी०–समीप इत्यादि । महदद्भुतं महदाश्चर्यभूतं किमपि वस्तु विभ्राजमानं वपुषा भ्राजमानवपुषमित्यर्थः, वैश्वानराः सूर्यव्यतिरिक्ततेजांसि सूर्यादितेजःसमुदायोपममित्यर्थः॥४॥

५ ] ति० टी०–तदेवाह–विभ्राजमानमिति । वपुषा वपुःकान्त्या विबुधानुगं देवानुचरम्, बहुव्रीहिः ॥ ५ ॥

रा० टी०–अद्भुतत्वं प्रकटयन्नाह–विभ्राजमानमित्यादिभिः । वपुषा स्वशरीरकान्त्या आकाशे विभ्राजमानमत एव सूर्यवैश्वानरप्रभं सूर्याग्निसदृशं विबुधाः देवाः अनुगाः अनुचरा यस्य तं रथप्रवरं रथश्रेष्ठमारूढं वसुधामसंस्पृशन्तं सुप्रभाभरणं शोभनप्रभाविशिष्टाभरणविशिष्टं विगतं नित्यं निरस्तं रजं यस्मात्तदेव अम्बरं तद्धारिणम्, अदन्तोऽपि रजशब्दः द्विरूपादौ प्रसिद्धः, तद्विधैः तत्सदृशैः बहुभिः महात्मभिः पूज्यमानं विबुधेश्वरमिन्द्रं ददर्श । सार्धश्लोकद्वयमेकान्वयि ॥ ५ ॥ ६ ॥

गो० टी०–अवरुह्येति । ततः किंचित्समीपगमनानन्तरं रथोत्सङ्गात् रथतटादवरुह्य वसुधामसंस्पृशन्तम् अभूमिस्पर्शस्य देवस्वभावत्वात् सकाशे समीपे विबुधानुगं विबुधा अनुगाः यस्य तं विबुधेश्वरमिन्द्रं ददर्श ॥ ५ ॥

६ ] ति० टी०–वसुधामसंस्पृशन्तं रथादवरुह्यापीति शेषः विबुधेश्वरं शक्रम् अतिशयप्रभावदाभरणं विरजस्कमम्बरं धर्तुं शीलं यस्य तम् ॥ ६ ॥

गो० टी०–सुप्रभेति । सुप्रभान्याभरणानि यस्य तं देवं

१ नरोपममिति गो. पाठः । २ अवरुह्य रथोत्सङ्गात्सकाशे इति गो. पाठः । ३ स्विति गो. रा. पाठः । ४ विरजाम्बरेति रा. पाठः ।

तद्विधैरेव बहुभिः पूज्यमानं महात्मभिः । हरितैर्वाजिभिर्युक्तमन्तरिक्षगतं रथम् ॥ ७ ॥
ददर्शादूरतस्तस्य तरुणादित्यसंनिभम् । पाण्डुराभ्रघनप्रख्यं चन्द्रमण्डलसंनिभम् ॥ ८ ॥
अपश्यद्विमलं छत्रं चित्रमाल्योपशोभितम् । चामरव्यजने चाग्र्ये रुक्मदण्डे महाधने ॥ ९ ॥
गृहीते वरनारीभ्यां धूयमाने च मूर्धनि । गन्धर्वामरसिद्धाश्च बहवः परमर्षयः ॥ १० ॥
अन्तरिक्षगतं देवं गीर्भिरग्र्याभिरैडयन् । सह संभाषमाणे तु शरभङ्गेन वासवे ॥ ११ ॥
दृष्ट्वा शतक्रतुं तत्र रामो लक्ष्मणमब्रवीत् । रामोऽथ रथमुद्दिश्य भ्रातुर्दर्शयताद्भुतम् ॥ १२ ॥
अर्चिष्मन्तं श्रिया जुष्टमद्भुतं पश्य लक्ष्मण । प्रतपन्तमिवादित्यमन्तरिक्षगतं रथम् ॥ १३ ॥
ये हयाः पुरुहूतस्य पुरा शक्रस्य नः श्रुताः । अन्तरिक्षगता दिव्यास्त इमे हरयो ध्रुवम् ॥ १४ ॥
इमे च पुरुषव्याघ्र ये तिष्ठन्त्यभितो दिशम् । शतं शतं कुण्डलिनो युवानः खड्गपाणयः ॥ १५ ॥
विस्तीर्णविपुलोरस्काः परिघायतबाहवः । शोणांशुवसनाः सर्वे व्याघ्रा इव दुरासदाः ॥ १६ ॥

देदीप्यमानं विरजो निर्मलमम्बरं धर्तुं शीलमस्यास्तीति विरजोम्बरधारिणं तद्विधैः इन्द्रतुल्याकारैः ददर्शेत्यनुषङ्गः ॥ ६ ॥

७ ] ति० टी०–तद्विधैस्तद्विधाभरणादिमद्भिः हरितैः श्याम वर्णैस्तादृशं रथं च ददर्श ॥ ७ ॥

रा० टी०–हरितैरिति । हरितैः हरितवर्णविशिष्टैः वाजिभिर्युक्तं तरुणादित्यसंनिभं मध्याह्नसूर्यसदृशं पाण्डुराभ्रघनप्रख्यं पाण्डुराभ्रवत् घनप्रख्या निबिडा कान्तिर्यस्य तम् । चन्द्रमण्डलसंनिभं चन्द्रमण्डलाकृतिमन्तरिक्षगतमन्तरिक्षे संस्थितं तस्य इन्द्रस्य रथमदूरतः निकटे ददर्श । अर्धत्रयमेकान्वयि ॥ ७ ॥ ८ ॥

गो० टी०–हरिभिरिति । हरिभिः श्यामैः, यद्वा वाजिभिः वेगवद्भिः हरिभिः अश्वैः तस्य इन्द्रस्य ॥ ७ ॥

८ ] ति० टी०–पाण्डुराभ्रस्येव घना अधिका प्रख्या कान्तिर्यस्य तत् ॥ ८ ॥

गो० टी०–पाण्डुराभ्रस्येव घना अधिका प्रख्या कान्तिर्यस्य तदिति श्वैत्ये दृष्टान्तः चन्द्रमण्डलसन्निभमिति वृत्ततायां, चित्रमाल्यैर्लम्बमानकुसुमसरैः उपशोभितम् ॥ ८ ॥

९–११ ] ति० टी०–चामरव्यजने वालव्यजने रुक्मं स्वर्णम्, महाधने रत्नयुतत्वाद्बहुमूल्ये ॥ ९–११ ॥

रा० टी०–अपश्यदिति । चित्रमाल्योपशोभितं चित्रैः स्वर्णादिनिर्मितत्वेन विचित्रैः पुष्पैः उपशोभितं विमलं छत्रमपश्यद्ग्र्ये अत्युत्तमे रुक्मदण्डे स्वर्णदण्डविशिष्टे महाधने बहुमूल्यके वरनारीभ्यां गृहीते मूर्धनि धूयमाने चामरव्यजने च अपश्यत् । सार्धश्लोक एकान्वयी ॥ ९ ॥

गो० टी०–चामरेति । चामरव्यजने चामररूपव्यजने महाधने बहुमूल्ये मूर्ध्नि तस्येति शेषः । अपश्यदित्यनुषङ्गः ॥ ९ ॥

रा० टी०–गन्धर्वेति । शरभङ्गेण सह वासवे इन्द्रे प्रतिभाषणे सति गन्धर्वादयः अग्र्याभिः उत्कृष्टाभिः गीर्भिः अन्तरिक्षगतं देवमिन्द्रमीडिरे ॥ १० ॥ ११ ॥

गो० टी०–गन्धर्वेति । ईडिरे तुष्टुवुः, ईडमानानपश्यदित्यर्थः ॥ १० ॥

रा० टी०–सहेति । शरभङ्गेन सह वासवे संभाषमाणे सति तत्र शरभङ्गसमीपे शतक्रतुं दृष्ट्वा रामोऽभिरामप्रदो रामः भ्रातुर्भ्रातरमुद्दिश्य संबोध्य रथं दर्शयत अदर्शयत् लक्ष्मणमब्रवीत् च ॥ १२ ॥

गो० टी०–सहेत्यादिसार्धः श्लोक एकान्वयः । तत्र तदानीं राम इति पदस्यावृत्तिः क्रियाभेदात् अतो न पुनरुक्तिः । उद्दिश्य हस्तेन निर्दिश्य शरभङ्गेण साकं वासवे संभाषमाणे सति तत्र समये रामः शतक्रतुं दृष्ट्वा तदीयरथं रामः लक्ष्मणाय उद्दिश्य प्रदर्शयन् सन् अथ लक्ष्मणमब्रवीदिति योजना ॥ ११ ॥ १२ ॥

१२–१३ ] ति० टी०–उक्तलक्षणे वासवे शरभङ्गेन संभाषमाणे तु तं शतक्रतुं दृष्ट्वा ज्ञात्वा रामोऽब्रवीत् । उक्तस्यैव प्रपञ्चः–रामोऽथेति । उद्दिश्य हस्तेन निर्दिश्य दर्शयत अदर्शयतेत्यर्थः ॥ १२ ॥ १३ ॥

रा० टी०–तद्वचनाकारमाह–अर्चिष्मन्तमिति । हे लक्ष्मण ! अर्चिष्मन्तं प्रकाशवन्तं श्रिया संपत्त्या जुष्टं सेवितमन्तरिक्षगतं प्रतपन्तमादित्यमिव अद्भुतं रथं पश्य ॥ १३ ॥

गो० टी०–अर्चिष्मन्तमिति । अर्चिष्मन्तं सतेजस्कं श्रिया कान्त्या ॥ १३ ॥

१४ ] ति० टी०–पुरु बहु यथा तथा यज्वभिराहूयते यागायेति पुरुहूतः नोऽस्माभिः ॥ १४ ॥

रा० टी०–ये इति । पुरुहूतस्य बहुयागकर्तुः शक्रस्य हरयो हरिताः ये दिव्याः हयाः अश्वाः पुरा पूर्वं श्रुताः ते अन्तरिक्षगता इमे एव ॥ १४ ॥

गो० टी०–य इति । पुरुहूतस्य यज्वभिर्बहुशो हूतस्य नः अस्माभिः इमे हरितवर्णाः हरयः अश्वाः ते, यद्वा त इमे शक्रस्य हरय इत्यन्वयः ॥ १४ ॥

१५ ] ति० टी०–शतं शतम् अष्टदिक्ष्विति शेषः । शतशब्दोऽनन्तवाची ॥ १५ ॥

१६ ] ति० टी०–विस्तीर्णविपुलान्यतिशयेन विशालान्यु-

१ हरिभिरिति गो. पाठः । २ चन्द्रमिति गो. पाठः । ३ वाग्भिरग्र्याभिरीडिरे इति गो. पाठः । ४ ईडिरे इति रा. पाठः । ५ भङ्गेणेति गो. पाठः । ६ लक्ष्मणाय प्रदर्शयन्निति गो. पाठः । ७ व्याघ्रा इति गो. पाठः । ८ रथमिति गो. पाठः ।

उरोदेशेषु सर्वेषां हारा ज्वलनसंनिभाः । रूपं बिभ्रति सौमित्रे पञ्चविंशतिवार्षिकम् ॥ १७ ॥
एतद्धि किल देवानां वयो भवति नित्यदा । यथेमे पुरुषव्याघ्रा दृश्यन्ते प्रियदर्शनाः ॥ १८ ॥
इहैव सह वैदेह्या मुहूर्तं तिष्ठ लक्ष्मण । यावज्जानाम्यहं व्यक्तं क एष द्युतिमान्रथे ॥ १९ ॥
तमेवमुक्त्वा सौमित्रिमिहैव स्थीयतामिति । अभिचक्राम काकुत्स्थः शरभङ्गाश्रमं प्रति ॥ २० ॥
ततः समभिगच्छन्तं प्रेक्ष्य रामं शचीपतिः । शरभङ्गमनुज्ञाप्य विबुधानिदमब्रवीत् ॥ २१ ॥
इहोपयात्यसौ रामो यावन्मां नाभिभाषते । निष्ठां नयत तावत्तु ततो मां द्रष्टुमर्हति ॥ २२ ॥

---

रांसि येषां ते आयता दीर्घाः शोणांशूनि शोणप्रभानि वसनानि येषाम् 'शोणाश्मवसनाः' इति पाठे पद्मरागसदृशवसना इत्यर्थः । 'शोणांशु–' इत्येव प्राचीनः पाठ इति कतकः ॥ १६ ॥

रा० टी०–इमे इति । खड्गपाणयः विस्तीर्णविपुलानि अतिविशालानीत्यर्थः, विपुलशब्दस्य मांसलार्थकत्वे विस्तीर्णमांसलानीत्यर्थः उरांसि येषां ते, परिघवत् आयता दीर्घा बाहवो येषां ते, शोणांशूनि शोणप्रभानि वसनानि येषां ते अभितो दिशं चतुर्दिक्षु कुण्डलिनो युवानः इमे शतं शतं ये तिष्ठन्ति ते सर्वे व्याघ्रा इव दुरासदा लक्ष्यन्ते इति शेषः । श्लोकद्वयमेकान्वयि ॥ १५ ॥ १६ ॥

गो० टी०–इमे चेत्यादि श्लोकत्रयमेकं वाक्यम् । शतं शतमिति प्रतिदिशमिति शेषः । विस्तीर्णविपुलोरस्काः अत्यन्तविशालोरस्काः शोणांशुवसनाः रक्तकान्तियुक्तवस्त्राः एवंभूता य इमे तिष्ठन्तीत्यन्वयः येषां सर्वेषामुरोदेशेषु हाराः ज्वलनसन्निभाः अग्निवच्छुक्लभास्वराः दृश्यन्ते रूपमित्यत्रापि ये इत्यध्याहार्यम् । पञ्चविंशतिवर्षाः परिमाणमस्य पञ्चविंशतिवार्षिकं "तदस्य परिमाणम्" इति ठक् "वर्षस्याभविष्यति" इत्युत्तरपदवृद्धिः। एवंभूतं रूपं शरीरं ये बिभ्रति "अदभ्यस्तात्" इत्यदादेशः । पञ्चविंशतिवार्षिकमिति यौवनावस्थोच्यते 'कौमारं स्यात्पञ्चदशाद्यौवनं तु ततः परम्' इत्युक्तेः त इमे सुरा इत्यध्याहार्यम् ॥ १५–१७ ॥

१७ ] ति० टी०–ज्वलनसंनिभा दीप्तिमात्रेण ॥ १७ ॥

रा० टी०–उर इति । ज्वलनसंनिभाः वह्निसदृशा हाराः सर्वेषामुरोदेशेषु विद्यन्ते इति शेषः, हे सौमित्रे ! पञ्चविंशतिवार्षिकं वयः सर्वे इमे बिभ्रति धारयन्ति ॥ १७ ॥

१८ ] ति० टी०–एतद्धि पञ्चविंशतिवर्षप्रमाणकम् नित्यदेत्यार्षम् ये इमे देवा यथा यादृशशुभदर्शनवयस्का दृश्यन्ते एतद्देवैषां नित्यदा वय इति पूर्वेण संबन्धः ॥ १८ ॥

रा० टी०–एतदिति । यथा येन वयसा इमे पुरुषव्याघ्राः दृश्यन्ते तदेतत् पञ्चविंशतिवार्षिकं वयो देवानां भवति एतेनेमे देवा एवेति सूचितम् ॥ १८ ॥

गो० टी०–तत्र युक्तिमाह–एतद्धीति । एतत् पञ्चविंशतिवार्षिकं वयः शरीरावस्था देवानां नित्यदा भवति । नित्यदेति निपातः, किलेति प्रसिद्धौ । यथेमे वसनाभरणादिभिश्चारुदर्शनाः तथा किल देवा इति योजना ॥ १८ ॥

१९ ] ति० टी०–यावज्जानामि ज्ञास्यामि तावत्तिष्ठेत्यन्वयः । क एष रथे इन्द्रत्वेनाऽनुमितोऽपि प्रमाणान्तरेणापि ज्ञातव्य इत्यर्थः ॥ १९ ॥

रा० टी०–इहेति । हे लक्ष्मण ! रथे द्युतिमानेषः कः एतत् यावदहं जानामि तावन्मुहूर्तं त्वं तिष्ठ ॥ १९ ॥

गो० टी०–इहैवेत्यादि । रथे इत्यनेन तदानीं रामं दृष्ट्वा रथमारूढ इत्यवगम्यते । यावज्जानामि ज्ञास्यामि "यावत्पुरानिपातयोर्लट्" इति लट् । व्यक्तम् अनुमितिं विना स्पष्टं प्रत्यक्षेण ज्ञास्यामीत्यर्थः । विरहासहिष्णुतया अनुव्रजन्तं लक्ष्मणं पुनः प्रदिश्य जगामेत्याह–तमेवमिति ॥१९ ॥ २० ॥

२० ] ति० टी०–उक्तानुवादपूर्वं व्यापारान्तरोपदेशः–तमेवमित्यादि । इहैव स्थीयतामिति एवमुक्त्वेत्यर्थः ॥ २० ॥

रा० टी०–तमिति । इहैव स्थीयतामित्येवं तं सौमित्रिमुक्त्वा शरभङ्गाश्रमं प्रति काकुत्स्थोऽभिचक्राम ॥ २० ॥

२१ ] ति० टी०–अनुज्ञाप्य गमनाय कृतानुमतिकं कृत्वा ॥ २१ ॥

रा० टी०–तत इति । समभिगच्छन्तं राममभिप्रेक्ष्य शरभङ्गमनुज्ञाप्य गमनायाज्ञां गृहीत्वा विबुधान् देवानिदमब्रवीत् ॥ २१ ॥

गो० टी०–तत इति । अनुप्राप्य एकान्तवचनश्रवणाय समीपमागत्य विविक्ते रहसि वक्ष्यमाणस्यातिगोप्यत्वात् ॥२१॥

२२ ] ति० टी०–यावदसौ मां नाभिभाषते तावन्मां निष्ठां स्थानान्तरं स्वर्गं वा नयत मया सह गच्छत । ततो वनचारित्वाद्धेतोर्मा मामद्रष्टुमर्हति द्रष्टुं नार्हतीत्यर्थः । अ इति निषेधार्थमव्ययं पृथक्पदम् । विपदीव स्थितेनैव वैभवस्य दर्शनमनुचितमित्यर्थः॥ २२ ॥

रा० टी०–तद्वचनाकारमाह–इहेति । यो राम इहोपयाति सोऽसौ यावन्मां नाभिभाषते तावदेव निष्ठां स्थानान्तरं मां नयत । तत्र हेतुः मा मामद्रष्टुमर्हति द्रष्टुं नार्हतीत्यर्थः निषेधार्थकोऽयमकारः॥ २२ ॥

गो० टी०–इहोपयातीत्यादि । असौ रामः इह मत्समीपे उपयाति उपयानसौ यावति काले मां नाभिभाषते तावत्स्वप्रतिज्ञां निष्ठां समाप्तिं नयतु 'निष्ठा निष्पत्तिनाशान्ताः' इत्यमरः । मया असंभाषमाण एव स्वप्रतिज्ञां निर्वर्तयतु मया

---

१ प्राप्य विविक्त इदमिति गो० पाठः ।

जितवन्तं कृतार्थं [1]हि तदाहमचिरादिमम् । कर्म ह्यनेन कर्तव्यं महदन्यैः सुदुष्करम् ॥ २३ ॥
[ [2]निष्पादयित्वा तत्कर्म ततो मां द्रष्टुमर्हति । ]
[3]अथ वज्री तमामन्त्र्य मानयित्वा च तापसम् । रथेन [4]हैययुक्तेन ययौ दिवमरिंदमः ॥ २४ ॥
प्रयाते तु सहस्राक्षे राघवः सपरि[5]च्छदः । अग्निहोत्रमुपासीनं शरभङ्गमुपागमत् ॥ २५ ॥
तस्य पादौ च संगृह्य रामः सीता च लक्ष्मणः । निषेदुस्त[6]दनुज्ञाता लब्धवासा निमन्त्रिताः ॥ २६ ॥
ततः शक्रोपयानं तु पर्य[7]पृच्छत राघवः । शरभङ्गश्च तत्सर्वं राघवाय न्यवेदयत् ॥ २७ ॥
मामेष वरदो राम ब्रह्मलोकं निनीषति । जितमुग्रेण तपसा दुष्प्रापमकृतात्मभिः ॥ २८ ॥

---

संभाषणेऽस्य देवत्वप्रकटनं स्यादिति भावः । संभाषणाभावेऽपि दर्शनमस्त्वित्यत आह–तत इति । ततः स्वप्रतिज्ञानिष्ठानयनानन्तरं मां द्रष्टुमर्हति स मां पश्यतु ॥ २२ ॥

२३ ] ति० टी०–कृतार्थं निस्तीर्णविपदम् जितवन्तम् रावणमिति शेषः । तदा वैभवयुक्तमिमं द्रक्ष्यामीति शेषः । कतकस्त्वेतत्पद्यं प्रक्षिप्तमित्याह तद्व्यर्थैव, मद्रीत्या व्याख्याने सर्वसामञ्जस्यात् । रामो यावन्मां नाभिभाषते तावत्कर्मणो रावणवधस्य निष्ठां समाप्तिं नयत । ततो मां द्रष्टुमर्हति । अन्यैः सुदुष्करं महत्कर्म तेन कर्तव्यमस्ति रावणवधरूपम्, अतस्तत्करणेन कृतार्थं कृतदेवप्रयोजनं रावणजयिनं द्रष्टास्मि इति तीर्थव्याख्याने । संप्रत्यदर्शनहेतुस्तु पूर्वोक्त एवोपरितो बोध्यः ॥ २३ ॥

रा० टी०–ननु अतिभाग्यलभ्यं रामदर्शनं कुतस्त्यज्यते इत्यत आह–जितवन्तामिति । अन्यैः एतद्भिन्नैः सुदुष्करं कर्तुमशक्यं कर्म राक्षसजयरूपं कर्तव्यमतः जितवन्तं कृतरावणवधमित्यर्थः, अत एव कृतार्थं साधितास्मत्प्रयोजनमिमं राममचिराच्छीघ्रमहं द्रष्टास्मीति शेषः, एतेन रामसंभाषणे सति रावणः कोपं कर्तेतीन्द्रस्य भीतिर्व्यञ्जिता ॥ २३ ॥

गो० टी०–भवान् तं पश्यत्वित्यत्राह—जितवन्तमिति। रावणं जितवन्तम् अत एव कृतार्थं कृतदेवप्रयोजनम् इममहमचिराद्द्रष्टा द्रष्टास्मि । दर्शनसंभाषणाभ्यां देवत्वप्रकटने का हानिरित्यत्राह–कर्मेति । हि यस्मादन्यैर्देवैर्दुष्करं महत्कर्म रावणवधादिकम् अनेन मानुषवेषेण कर्तव्यं तस्मादित्यर्थः॥ २३॥

२४ ] ति० टी०–अथ वज्रीति । देवैरालापोत्तरं तं तापसं शरभङ्गमामन्त्र्य मानयित्वा संपूज्य च दिवं ययौ॥२४॥

रा० टी०–अथेति। वज्री इन्द्रस्तं शरभङ्गमामन्त्र्य गमनाय संप्रार्थ्य मानयित्वा संपूज्य च हययुक्तेन रथेन दिवं ययौ॥२४॥

गो० टी०–इतीति। इति उक्तप्रकारेण तापसं तापसवेषं मानयित्वा बहुमान्य तं शरभङ्गमामन्त्र्य हरियुक्तेन अश्वयुक्तेन रथेन दिवं ययौ ॥ २४ ॥

२५ ] ति० टी०–सपरिच्छदः स्त्रीभ्रातृसहितः ॥ २५ ॥

रा० टी०–प्रयाते इति । सहस्राक्षे प्रयाते सति सपरिच्छदः सीतालक्ष्मणसहितः राघवो रामः शरभङ्गमुपागमत्॥२५॥

गो० टी०–प्रयाते त्विति । रामागमनोद्योगकाल एवेन्द्रस्य प्रयातत्वात् सपरिच्छदं स्त्रीभ्रातृरूपपरिवारसहितं यथा भवति तथा अग्निहोत्रं वह्निम् उपासीनं तत्र प्रवेशार्थमुपतिष्ठन्तं शरभङ्गमुपागमत् ॥ २५ ॥

२६ ] ति० टी०–पादौ संगृह्य राम ईश्वरोऽपि ब्राह्मणा एवं पूज्या इत्यन्याञ्शिक्षयितुमेवं चकार । तदनुज्ञाता आसनावस्थानाय कृतानुमतिकाः अत एव लब्धवासा लब्धवासस्थानाः निमन्त्रिता भोजनाद्यर्थम् तादृशा निषेदुः ॥ २६ ॥

रा० टी०–तस्येति । तस्य शरभङ्गस्य पादौ संगृह्य संस्पृश्य तदनुज्ञाताः शरभङ्गेनाज्ञप्ताः लब्धवासाः प्राप्तवासस्थानाः निमन्त्रिता रामादयः निषेदुः ॥ २६ ॥

गो० टी०–तस्येति । समनुज्ञाताः आसनाय कृतानुमतिकाः लब्धवासाः मुनितो लब्धासनाः ततो निमन्त्रिताः सत्कृताश्च सन्तः निषेदुः ॥ २६ ॥

२७ ] ति० टी०–शक्रोपयानमिन्द्रागमनप्रयोजनम् ॥२७॥

रा० टी०–तत इति । ततः स्थित्यनन्तरं शक्रोपयानं शक्रस्य इन्द्रस्य उपयानमागमनं यस्मै प्रयोजनाय तत् राघवः पर्यपृच्छत् तत् सर्वमिन्द्रागमनप्रयोजनादि न्यवेदयत् अकथयत् ॥ २७ ॥

गो० टी०–तत इति । शक्रोपयानम् इन्द्रागमननिमित्तम् ॥ २७ ॥

२८ ] ति० टी०–निवेदनप्रकारमाह–मामेष इति । उग्रेण तपसा मया जितं ब्रह्मलोकमेष वरद इन्द्रो ब्रह्माज्ञया मां निनीषति, यद्वा देवेन्द्रवेषधारी ब्रह्मैवायम् अकृतात्मभिरननुष्ठितभगवदुपासनैः ॥ २८ ॥

रा० टी०–तत्कथनप्रकारमाह–मामिति । अकृतात्मभिः न कृतः परमात्मनि समर्पितः आत्मा मनो यैस्तैर्दुष्प्रापं प्राप्तुमशक्यमुग्रेण महता तपसा परमात्मविचारेण जितं प्राप्तुं शक्यमित्यर्थः, ब्रह्मलोकं वरदः एष इन्द्रो मां निनीषति नेतुमिच्छति ॥ २८ ॥

गो० टी०–कथं न्यवेदयदित्यत्राह–मामिति । सर्वेषां वरं ददातीति वरदः एष इन्द्रः मां ब्रह्मलोकं निनीषति नेतुमिच्छति ब्रह्माज्ञयेति शेषः ॥ २८ ॥

---

१ च द्रष्टाहमिति गो. पाठः । २ अर्धमेतदधिकं गो. पाठे । ३ इतीति गो. पाठः । ४ हरीति गो. पाठः । ५ छदमिति गो. पाठः । ६ समनुज्ञाता इति गो. पाठः । ७ पृच्छत्स इति गो. रा. पाठः ।

अहं ज्ञात्वा नरव्याघ्र वर्तमानमदूरतः । ब्रह्मलोकं न गच्छामि त्वामदृष्ट्वा प्रियातिथिम् ॥ २९ ॥
त्वयाहं पुरुषव्याघ्र धार्मिकेण महात्मना । समागम्य गमिष्यामि त्रिदिवं चावरं परम् ॥ ३० ॥
अक्षया नरशार्दूल जिता लोका मया शुभाः । ब्राह्म्याश्च नाकपृष्ठ्याश्च प्रतिगृह्णीष्व मामकान् ॥ ३१ ॥
एवमुक्तो नरव्याघ्रः सर्वशास्त्रविशारदः । ऋषिणा शरभङ्गेन राघवो वाक्यमब्रवीत् ॥ ३२ ॥
अहमेवाहरिष्यामि सर्वांल्लोकान्महामुने । आवासं त्वहमिच्छामि प्रदिष्टमिह कानने ॥ ३३ ॥
राघवेणैवमुक्तस्तु शक्रतुल्यबलेन वै । शरभङ्गो महाप्राज्ञः पुनरेवाब्रवीद्वचः ॥ ३४ ॥

---

२९ ] ति० टी०—तर्हि किमिति विलम्बितं तत्राह—अहमिति । ज्ञात्वा योगचक्षुषा न गच्छामि योगसिद्ध्या स्वेच्छया देहत्यागात्त्वां प्रियातिथिमतिप्रियमतिथिम् ॥ २९ ॥

रा० टी०—ननु तेन सहैव कुतो न गतो भवानित्यत आह—अहमिति । हे नरव्याघ्र! अदूरतः निकटे वर्तमानं प्रियातिथिं त्वां ज्ञात्वा अदृष्ट्वा भवद्दर्शनमकृत्वा ब्रह्मलोकं न गच्छामि अगमम् एतेन रामविषयकप्रेमातिशयः शरभङ्गस्य सूचितः ॥ २९ ॥

गो० टी०—तर्हि किमर्थं न गतोऽसीत्यत्राह—अहमिति । हे नरव्याघ्र! अदूरतो वर्तमानं मनसि सदा सन्निहितं त्वां योगतो ज्ञात्वा प्रियातिथिं त्वामदृष्ट्वा त्वदनुभवानन्दं विहाय ब्रह्मलोकम् 'आब्रह्मभवनाल्लोकाः पुनरावर्तिनः' इत्युक्तलोकं न गच्छामि ॥ २९ ॥

३० ] ति० टी०—त्वया समागम्य त्वत्समागमश्च सकृदपि संवृत्त एतावत्कालपर्यन्तानुष्ठितोपासनातोऽधिकफलद इति भावः त्रिदिवमवरं परं च, परो ब्रह्मलोकः ॥ ३० ॥

रा० टी०—त्वयेति । हे पुरुषव्याघ्र! धार्मिकेण महात्मना त्वया समागम्य अवरं त्रिदिवं स्वर्गं परं ब्रह्मलोकं च गमिष्यामि ॥ ३० ॥

गो० टी०—तर्हि केन साधनेन कं लोकं गमिष्यसीत्यत्राह—त्वयेति । धार्मिकेण धर्मस्वरूपेण स्वार्थे ठक्, महात्मना सत्यसंकल्पेन त्वया समागम्य त्वत्कटाक्षविषयो भूत्वा देवसेवितं[1] यत्र पूर्वे साध्याः सन्ति देवा इत्युक्तरीत्या नित्यसूरिसेवितं त्रिदिवं त्रिपाद्विभूतिं ब्रह्मलोकादुत्कृष्टं गमिष्यामि ब्रह्मलोकं न गच्छामि त्रिदिवं गमिष्यामीत्यनेनायमर्थोऽवगम्यते ॥ ३० ॥

३१-३२ ] ति० टी०—समागमस्य यथाऽधिकफलता भवति तथा करोति—अक्षया इति । के ते लोकास्तत्राह—ब्राह्म्या इति । उभयत्र ष्यञ् आर्षः । ब्रह्मलोका नाकपृष्ठलोकाश्च जिता मामकास्तान्प्रगृह्णीष्व स्वकृतत्वेनाङ्गीकुरुष्व । अनेन सर्वकर्मणां भगवदर्पणमकरोदिति सूचितम् । 'कामतोऽकामतो वापि यत्करोमि शुभाशुभम् । तत्सर्वं त्वयि संन्यस्तं त्वत्प्रयुक्तः करोम्यहम् ॥ नाहं कर्ता सर्वमेतद्ब्रह्मैव कुरुते तथा । एतद्ब्रह्मार्पणं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥' इति कौर्मोक्तिः । भगवत्यर्पितधर्माणामनन्तफलत्वं गीतादिषु स्पष्टमेव श्रुतिपर्यवसायित्वात् ॥ ३१ ॥ ३२ ॥

रा० टी०—अक्षया इति । हे नरशार्दूल ! अक्षयाः क्षयरहिता नाकपृष्ठ्याः स्वर्गाः ब्राह्म्या ब्रह्मसंबन्धिनश्च शुभाः लोका ये जिताः भवत्कृपया स्वप्राप्तियोग्याः कृताः तान् मामकाँल्लोकान् त्वं प्रतिगृह्णीष्व स्वकीयत्वेन जानीहि, एतेन तल्लोके रघुनाथागमनं प्रार्थितमिति सूचितम् ॥ ३१ ॥

रा० टी०—एवमिति । शरभङ्गेन ऋषिणा एवमुक्तो राघवः वाक्यमब्रवीत् ॥ ३२ ॥

गो० टी०—क्रमेण तथा भविष्यति आर्जितकर्मफलानि प्रथममनुभवेत्यत आह—अक्षया इति । ब्राह्म्याः ब्रह्मलोकभवाः नाकपृष्ठ्याः स्वर्गलोकभवाः अक्षयाश्चिरकालस्थायिनः ये लोकाः भोगभूमयः मया आर्जिताः तान् मामकान् प्रतिगृहीष्व मत्कृतानि सर्वाणि सुकृतानि त्वदर्पितानि सन्त्विति भावः । सर्वत्रातिथिसत्कारः प्रातीतिकोऽर्थः । कर्मणां भगवदर्पणं नाम फलसङ्गत्यागकर्तृत्वत्यागपूर्वकं भगवत्कैङ्कर्यतयानुष्ठानम् ॥ ३१ ॥ ३२ ॥

३३-३४ ] ति० टी०—अहमेवेति । तपसेत्यर्थः त्वद्दत्तप्रतिग्रहे नाहमधिकारीत्यापाततोऽर्थः, वास्तवस्तु ऋषेः परमभक्तस्यानुग्रहाय तदर्पितधर्माङ्गीकारमाह भगवान्—अहमेवेति । मयि न्यासत्वेन स्थापितानिमांस्त्वदर्जितान्सर्वांल्लोकांस्तुभ्यमहमेवाहरिष्यामि प्रापयिष्यामीत्युक्त्वेतरजनाप्रतारणायाह—आवासं त्विति । प्रदिष्टमुपदिष्टम् ॥ ३३ ॥ ३४ ॥

रा० टी०—तद्वचनाकारमाह—अहमिति । हे महामुने ! प्रदिष्टं भवदाज्ञा यदि स्यात्तदा सर्वान् भवदीप्सितान् लोकान् इहैव अहमाहरिष्यामि प्रापयिष्यामि । तत्र हेतुः—यतः इह कानने आवासमहमिच्छामि ॥ ३३ ॥

गो० टी०—तदिदमङ्गीकुर्वन् तस्य वाचिककैङ्कर्यं नियमयति—अहमेवेति । आहरिष्याम्येव स्वीकरिष्याम्येव सर्वलोकान्[3] त्वया मय्यर्पितान् इह कानने प्रदिष्टं त्वया निर्दिष्टम्, आवासं त्विच्छामि तुशब्देन त्वदभिमतदेश एव वास इत्युच्यते । सा काशीति न चाकशीति भुवि साऽयोध्येति नाध्यास्यत इत्यादिकमिहानुसंधेयम् ॥ ३३ ॥

रा० टी०—राघवेणेति । शक्रः तुल्यबलो यस्य तेन राघवेण एवमुक्तः शरभङ्गः पुनरब्रवीत् ॥ ३४ ॥

गो० टी०—राघवेणेति[2] । महाप्राज्ञ इत्यनेन मृगरूपमारीचनिरसनं मनसि कृतवानिति सूचयति ॥ ३४ ॥

---

१ देवसेवितमिति गो. पाठः । २ भङ्गेणेति गो. पाठः । ३ सर्वलोकानिति गो. पाठः ।

इह राम महातेजाः सुतीक्ष्णो नाम धार्मिकः । वसत्यरण्ये [1]नियतः स ते श्रेयो विधास्यति ॥ ३५ ॥
[[2]सुतीक्ष्णमभिगच्छ त्वं शुचौ देशे तपस्विनम् । रमणीये वनोद्देशे स ते वासं विधास्यति ॥ ]
इमां मन्दाकिनीं राम प्रतिस्रोतामनुव्रज । नदीं पुष्पोडुपवहां [3]ततस्तत्र गमिष्यसि ॥ ३६ ॥
एष पन्था नरव्याघ्र मुहूर्तं पश्य तात माम् । यावज्जहामि गात्राणि जीर्णां त्वचमिवोरगः ॥ ३७ ॥
ततोऽग्निं [4]स समाधाय हुत्वा चाज्येन मन्त्र[5]वत् । शरभङ्गो महातेजाः प्रविवेश हुताशनम् ॥ ३८ ॥
तस्य रोमाणि केशांश्च [6]तदा वह्निर्महात्मनः । जीर्णां त्वचं [7]तदस्थीनि यच्च मांसं च शोणितम् ॥ ३९ ॥
[[8]रामस्तु विस्मितो भ्रात्रा भार्यया च सहात्मवान् ।]
स च पावकसंकाशः कुमारः समपद्यत । उत्थायाग्निचयात्तस्माच्छरभङ्गो व्यरोचत ॥ ४० ॥
स लोकानाहिताग्नीनामृषीणां च महात्मनाम् । देवानां च व्यतिक्रम्य ब्रह्मलोकं व्यरोहत ॥ ४१ ॥

---

३५] ति० टी०–इहारण्ये वसति। अदूरे इति शेषः॥३५॥

रा० टी०–तद्वचनाकारमाह–इहेति । हे राम ! सुतीक्ष्णो नाम सुतीक्ष्णाभिधः धार्मिकः इहारण्ये नियतो वसति स सुतीक्ष्णः ते श्रेयः त्वदभिलषितकल्याणं विधास्यति । एतेन मम स्थितियोग्यता इह नास्तीति सूचितं तेन अहमागच्छामीतीन्द्रागमने प्रतिज्ञातमिति सूचितम् तेन ऋषेः परमधर्मत्वं सूचितम् ॥ ३५ ॥

गो० टी०–इहेति । धार्मिकः धर्मचारी धर्मात्मा धर्मबुद्धिः वसति अदूर इति शेषः ॥ ३५ ॥ ३६ ॥

३६ ] ति० टी०–प्रतिस्रोताम् आबन्तत्वमार्षम् । मन्दाकिनीं तामिव पुण्यां तन्नामिकां वा चित्रकूटस्थेयमेव प्रतिस्रोतसं कृत्वा व्रज । पूर्ववाहिन्यां पुरुषेण पश्चिमाभिमुखतया गमने प्रतिस्रोतस्त्वं भवति । पुष्पवल्लघु उडुपवहा उडुपं प्लवः पुष्पसमूहवहामिति वा ॥ ३६ ॥

रा० टी०–तत्र गमनाय मार्गमुपदिशति–इमामिति । पुष्पोडुपवहां प्लवसदृशपुष्पप्रवाहयुक्तां प्रतिस्रोतां देवादिभिः प्रतिस्रोतस्त्वं प्रापितां पश्चिमाभिमुखं वाहितामित्यर्थः, आबन्तत्वमार्षमिति भट्टाः । इमां मन्दाकिनीं तदवयवभूताल्पधारां नदीमनुगच्छेति शेषः । ततः तदनुगमनात्तत्र सुतीक्ष्णाश्रमे गमिष्यसि ॥ ३६ ॥

गो० टी०–इमामिति । मन्दाकिनीशब्दः पुण्यनदीमात्रे मुनिभिरुपचर्यते अत एव चित्रकूटेऽप्युक्तं प्रतिस्रोतामिति । टाबार्षः । प्रतिस्रोतसं कृत्वाऽनुसृत्य व्रज नद्यां पूर्ववाहिन्यां पुरुषेण पश्चिमाभिमुखतया गमने प्रतिस्रोतस्त्वं भवति । पुष्पोडुपवहाम् उडुपः प्लवः उडुपाकारपुष्पचयावहामित्यर्थः, नदीं तत्र तत्र गमिष्यसीत्यनेन क्वचिन्नदीतीरे क्वचिद्व्यवहिते च मार्ग इत्युच्यते ॥ ३७ ॥

३७ ] ति० टी०–एष पन्था इति मार्गोपदेशः । अथ ऋषिर्भगवत्प्रार्थितस्योत्तरं दत्त्वा स्वाभीष्टं भगवन्तं प्रार्थयते–मुहूर्तं तात पश्य माम् । अयं कृतार्थो भवत्वित्यभिध्यानपूर्वकं कटाक्षेणेति शेषः । तातेति गूढं जगज्जनकेत्यर्थमपि गात्राणि गात्रावयवान् ॥ ३७ ॥

रा० टी०–एष इति । एष नदीतट एव पन्थाः सुतीक्ष्णाश्रमप्रापको मार्गः जीर्णां त्वचमुरगः सर्प इव गात्राणि यावज्जहामि त्यजामि तावत्कालं त्वं मां पश्य, किंच तावत्कालं त्वं पश्य । ननु किमर्थमवलोक इत्यत आह–एष भवदवलोक एव पन्थाः परमकल्याणप्रापकमार्गः ॥ ३७ ॥

गो० टी०–एष पन्था इति । अनयोक्त्या सुतीक्ष्णाश्रममार्गो हस्तेन निर्दिश्यते । अथ मुनिः स्वदेहत्यागकाले रामसन्निधानमर्थयते--मुहूर्तं पश्य तात मामिति । तात सर्वलोकजनक ! ॥ ३८ ॥

३८ ] ति० टी०–ततोऽग्निं स इति । 'वृद्धः शौचक्रियालुप्तः प्रत्याख्यातभिषक्क्रियः । आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः ॥' इत्युक्तेऽग्निप्रवेशेऽन्त्येष्टिमार्गेणाग्निं समाधाय मन्त्रवत्तदुक्तमन्त्रैर्हुत्वा चाग्निप्रवेशोक्तमन्त्रैरुपनिषदुक्तैः प्रविवेश ॥ ३८ ॥

रा० टी०–तत इति । ततः रामस्थित्युद्देश्यकप्रार्थनानन्तरमग्निं समाधाय मन्त्रवत् यथा स्यात्तथा आज्येन हुत्वा शरभङ्गः हुताशनं विवेश ॥ ३८ ॥

गो० टी०–तत इति । मन्त्रवित् ब्रह्ममेधमन्त्रवित् शरभङ्गः अग्निं सुसमाधाय परिस्तरणादिभिरलंकृत्य आज्येन ब्रह्ममेधमन्त्रैर्हुत्वा हुताशनं प्रविवेश । अत्र विधिः--' यद्युत्कण्ठा तदावाप्तौ ब्रह्ममेधानलं व्रजेत् । नाभिवक्त्रात्मगानग्नीनवरोप्य यथास्थलम् । संस्कारयेत् ' इति ॥ ३९–४१ ॥

३९ ] ति० टी०–तस्येति । तस्य शरभङ्गस्य रोमादीनि वह्निर्ददाहेति शेषः ॥ ३९ ॥

रा० टी०–तस्येति । तस्य शरभङ्गस्य रोमप्रभृतीनि वह्निरदहदिति शेषः ॥ ३९ ॥

४० ] ति० टी०–स्वर्गारोहणार्थं दिव्यशरीरपरिग्रहमग्निप्रवेशस्य पूर्वकृतोपासनस्य च फलभूतमाह–स चेति ॥ ४० ॥

रा० टी०–स इति । स शरभङ्गः अग्निचयादुत्थाय पावकसंकाशः कुमारः समपद्यत अभवत्, व्यरोचत अशोभत च ॥ ४० ॥

४१] ति० टी०–आहिताग्निलोकाः "कर्मणा पितृलोकः" इति

---

१ धर्मात्मेति गो. पाठः। २ श्लोकोऽयमधिकः गो. पाठे । ३ तत्र तत्रेति गो. पाठः। ४ स्विति गो. पाठः । ५ विदिति गो. पाठः । ६ ददाहाग्निरिति गो. पाठः। ७ तथेति गो. रा. पाठः । ८ अर्धमेतदधिकं गो. पाठे ।

स पुण्यकर्मा भुवने द्विजर्षभः पितामहं सानुचरं ददर्श ह ।
पितामहश्चापि समीक्ष्य तं द्विजं ननन्द सुस्वागतमित्युवाच ॥ ४२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे पञ्चमः सर्गः ॥ ५ ॥

## षष्ठः सर्गः ।

रक्षःपीडां परिजिहीर्षवो मुनयः सुतीक्ष्णाश्रमे रामं राजधर्ममुपदिश्य रक्षोवधमयाचन्नथ तेभ्यो वितीर्णाभयो रामः सुतीक्ष्णाश्रमं प्रतस्थे ।

शरभङ्गे दिवं प्राप्ते मुनिसङ्घाः समागताः । अभ्यगच्छन्त काकुत्स्थं रामं ज्वलिततेजसम् ॥ १ ॥
वैखानसा वालखिल्याः संप्रक्षाला मरीचिपाः । अश्मकुट्टाश्च बहवः पत्राहाराश्च तापसाः ॥ २ ॥

---

श्रुताश्चन्द्रप्रदक्षिणाः ऋषिलोका "विद्यया देवलोकः" इति श्रुताः सूर्यप्रदक्षिणाः । देवानामाजानदेवानां ब्रह्मविष्णुरुद्राणां च लोकाः, यान्ध्रुवः प्रदक्षिणं करोति । ततो ब्रह्मलोकं तुर्यं व्यरोहतारूढवान् ॥ ४१ ॥

रा० टी०—स इति । स शरभङ्गः आहिताग्न्यादीनां लोकान्व्यतिक्रम्य ब्रह्मलोकं सच्चिदानन्दपुरं साकेतमित्यर्थः, व्यरोहत प्राप्नोत् ॥ ४१ ॥

गो० टी०—अथास्य देवयानमार्गेण ब्रह्मलोकप्राप्तिं दर्शयति—स चेत्यादिना । कुमारलक्षणमुक्तं रत्नाकरे 'बालोऽथ पञ्चदशभिस्त्रिंशद्भिस्तु कुमारकः' इति । "ब्रह्मलोकं तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान् मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याचन्द्रमसं चन्द्रमसा विद्युतं तत्पुरुषो मानवः स एनान् ब्रह्म गमयति" इत्युक्तं ब्रह्मात्मकं लोकम् ॥ ४२ ॥ ४३ ॥

४२ ] ति० टी०—पितामहं ब्रह्मादित्रयसमष्टिरूपम् ॥ ४२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वामीकीय आदिकाव्येऽरण्यकाण्डे पञ्चमः सर्गः ॥ ५ ॥

रा० टी०—स इति । पुण्यकर्मा स शरभङ्गः सानुचरं पितामहं ब्रह्माणं ददर्श पितामहोऽपि तं समीक्ष्य ननन्द स्वागतमित्युवाच च ॥ ४२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे पञ्चमः सर्गः ॥ ५ ॥

गो० टी०—स इति । अत्र पितामहशब्दोऽपि सविग्रहपरमात्मपरः । सर्वमिदं शरभङ्गस्य रामसांनिध्यप्रतीक्षया व्यज्यते ॥ ४४ ॥

अस्मिन् सर्गे चतुश्चत्वारिंशच्छ्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने पञ्चमः सर्गः ॥ ५ ॥

---

१ ] ति० टी०—मुनिसंघा दण्डकारण्यवासिनः समागता मिलिता अभ्यगच्छन्त स्वरक्षणप्रार्थनार्थमिति शेषः ॥ १ ॥

रा० टी०—शरभङ्गस्वर्गमनानन्तरकालिकं वृत्तान्तमाह—शरभङ्ग इत्यादिभिः । शरभङ्गे दिवं प्राप्ते सति समागताः शरभङ्गदर्शनार्थं प्राप्ता मुनिसङ्घाः ज्वलिततेजसं राममभ्यगच्छन्त संमुखं प्राप्नुवन् ॥ १ ॥

गो० टी०—एवं खरवधार्थिमुनिजनशरणागतिं वक्तुं तदुपयोगितया रामस्य समर्थकारुणिकत्वमुक्त्वा अथ तच्छरणागतिं वक्तुमुपक्रमते—शरभङ्ग इत्यादि । शरभङ्गे दिवं यात इति कालप्रदर्शनं सुतीक्ष्णादीनां विद्यमानत्वात् । समागताः संमिलिताः ॥ १ ॥

२ ] ति० टी०—वैखानसा इति । "ये नखास्ते वैखानसा ये वालास्ते वालखिल्याः" इति श्रुतेः प्रजापतेर्नखलोमजाः । संप्रक्षाला भगवतः पादप्रक्षालनजा महर्षयः, अश्वस्तानिकाः संप्रक्षाला इत्यन्ये मरीचिपा रविचन्द्रान्यतरकिरणजीवनाः, अश्मकुट्टा अपक्ककुट्टितान्नभक्षकाः ॥ २ ॥

रा० टी०—वैखानसा इति । वैखानसाः प्रजापतिनखसंजाताः, वालखिल्याः प्रजापतिलोमजाः "ये नखास्ते वैखानसाः ये वालास्ते वालखिल्याः" इति श्रुतिः । ये तत्र वालाः केशाः संप्रक्षालाः परमात्मनश्चरणप्रक्षालनाज्जाताः, मरीचिपाः किरणमात्रपानशीलाः, अश्मकुट्टाः अश्मकुट्टितपानभोजनाः आमान्नभक्षका इत्यर्थः, पत्राहाराः पत्रमात्राहारनिरताः, बहवो दन्तोलूखलिनः दन्ता एव उलूखलानि तद्वन्तः उन्मजकाः कण्ठपरिमितजले स्थितिरूपतपोनिरताः, गात्रशय्याः गात्रावयवानि व्याघ्रचर्मादीनि शय्या येषां ते, अशय्याः आस्तरणरहितस्थितिमन्तः, अनवकाशिकाः अहर्दिवं कर्मनिरतत्वादवकाशरहिताः ॥ २ ॥ ३

गो० टी०—वैखानसा इत्यादि । "ये नखाः ते वैखानसाः ये वालास्ते वालखिल्याः" इत्युक्तरीत्या भगवन्नखरोमजाता ऋषयः, सदा शरीरं संप्रक्षालयन्तीति संप्रक्षालाः, मरीचींश्चन्द्रसूर्यादिकिरणान् सदा पिबन्तीति मरीचिपाः सदान्तः किरणान् प्रवेशयन्तो विवृतास्या इत्यर्थः, अश्मभिरात्मशरीराणि कुट्टन्तीत्यश्मकुट्टाः, पत्राहाराः पर्णाशनाः ॥ २ ॥

---

१ भवने इति गो. पाठः । २ हेति गो. पाठः । ३ धार्मिका इति गो. पाठः ।

दन्तोलूखलिनश्चैव तथैवोन्मज्जकाः परे । गात्रशय्या अशय्याश्च तथैवानवकाशिकाः ॥ ३ ॥
मुनयः सलिलाहारा वायुभक्षास्तथापरे । आकाशनिलयाश्चैव तथा स्थण्डिलशायिनः ॥ ४ ॥
तथोर्ध्ववासिनो दान्तास्तथाऽऽर्द्रपटवाससः । सजपाश्च तपोनिष्ठास्तथा पञ्चतपोन्विताः ॥ ५ ॥
सर्वे ब्राह्मया श्रिया युक्ता दृढयोगसमाहिताः । शरभङ्गाश्रमे राममभिजग्मुश्च तापसाः ॥ ६ ॥
अभिगम्य च धर्मज्ञा रामं धर्मभृतां वरम् । ऊचुः परमधर्मज्ञमृषिसंघाः समागताः ॥ ७ ॥
त्वमिक्ष्वाकुकुलस्यास्य पृथिव्याश्च महारथः । प्रधानश्चापि नाथश्च देवानां मघवानिव ॥ ८ ॥
विश्रुतस्त्रिषु लोकेषु यशसा विक्रमेण च । पितृव्रतत्वं सत्यं च त्वयि धर्मश्च पुष्कलः ॥ ९ ॥

---

३ ] ति० टी०–दन्तोलूखलिनो दन्तातिरिक्तावहननसाधनरहिताः उन्मज्जकाः कण्ठदघ्ने जले स्थित्वा तपः कुर्वन्तः, गात्रशय्या अनास्तरणशायिनः, अशय्या निद्राहीनाः, अनवकाशिका एकपादस्य स्थित्यवकाशदानरहिताः एकपादस्थितिमन्त इति यावत् ॥ ३ ॥

गो० टी०–दन्ता एवोलूखलं तदेषामस्तीति दन्तोलूखलिनः दन्तैरेव व्रीह्यादितुषनिर्मोकं कृत्वा भक्षयन्त इत्यर्थः । उन्मज्जकाः शिरोमात्रमुद्धृत्य सदा जलावगाढाः गात्रमेव शय्या येषां ते गात्रशय्याः उरसि पृष्ठयोर्वा शिरः कृत्वा शयाना इत्यर्थः, अतो न स्थण्डिलशायिन इत्यनेन पुनरुक्तिः । अशय्याः अनम्रगात्रा इत्यर्थः, अभ्रावकाशकाः वर्षवातातपादिष्वप्यनावृतदेश एव वर्तमानाः ॥ ३ ॥

४ ] ति० टी०–आकाशनिलया अनावृतप्रदेशस्थायिनः, स्थण्डिलशायिन उपलिप्तानास्तीर्णस्थलशयनाः ॥ ४ ॥

रा० टी०–मुनयः वेदतात्पर्यमननशीलाः, सलिलाहाराः जलमात्राहारवन्तः, वायुभक्षाः वायुमात्रभक्षकाः, आकाशनिलयाः अनावृत्तदेशनिवासिनः, स्थण्डिलशायिनः भूमिमात्रशयनाः ॥४॥

गो० टी०–सलिलाहाराः सलिलमात्राहाराः वायुभक्षाः वायुमात्रभक्षाः, आकाशे वृक्षाग्रादौ निलीयन्त इत्याकाशनिलयाः, स्थण्डिले कुशाद्यास्तृतभूतले शेरत इति स्थण्डिलशायिनः ॥ ४ ॥

५ ] ति० टी०–ऊर्ध्ववासिनो गिरिशिखराद्यूर्ध्वप्रदेशे नित्यं वासशालिनः 'व्रतोपवासिनः' इति पाठस्तु चिन्त्यः तस्य साधारणधर्मत्वादिति कतकः । आर्द्रपटवाससो नित्यमार्द्रवस्त्रवसनशीलाः, सजपाः सदा जपपराः, तपोनिष्ठाः सदा स्वाध्यायाध्ययनशीलाः 'तपो हि स्वाध्यायः' इत्युक्तेः, पञ्चतपोन्विता ग्रीष्मे पञ्चाग्निमध्यस्थाः ॥ ५ ॥

रा० टी०–ऊर्ध्ववासिनः उन्नतशिखरादिमात्रस्थितिमन्तः, दान्ता नियमितकरणाः, आर्द्रपटवाससः अहर्दिवं जले स्थितत्वात् आर्द्रवस्त्रमात्रवसानाः, सजपाः जपशीलाः, तपोनिष्ठाः परमात्मविचारनिरताः, पञ्चतपोन्विताः ग्रीष्मे पञ्चाग्निमध्ये स्थिताः ॥ ५ ॥

गो० टी०–व्रतोपवासिनः व्रतोपवासनिरताः सर्वाहारशून्या इत्यर्थः । आर्द्रपटवाससः आर्द्रपटवसनशीलाः, सजपाः सदा जपशीलाः, तपोनित्याः "स्वाध्यायमधीते तप एव तत्तप्यते तपो हि स्वाध्यायः" इत्युक्तसदास्वाध्यायपारायणरूपतपोनिष्ठाः, पञ्चतपोन्विताः ग्रीष्मे पञ्चाग्निमध्यस्थाः ॥ ५ ॥

६-७ ] ति० टी०–ब्राह्मया श्रिया ब्रह्मविद्यानुष्ठानजनितब्रह्मवर्चसेन दृढयोगसमाहिता योगैकाग्रचित्ताः ॥ ६ ॥ ७ ॥

रा० टी०–ब्राह्मया श्रिया परमात्मोपासनजनितशोभया युक्ताः, दृढः परिपक्वो यो योगः परमात्मस्मरणं तेन समाहिताः एकाग्रचित्ताश्च तापसाः शरभङ्गाश्रमे राममभिजग्मुः । श्लोकपञ्चकमेकान्वयि ॥ ६ ॥

गो० टी०–ब्राह्मया श्रिया ब्रह्मविद्यानुष्ठानजनितब्रह्मवर्चसेन दृढः परिपक्वः योगो यमनियमाद्यष्टाङ्गयोगो येषां ते दृढयोगाः समाहिताः योगैकाग्रचित्ताः एवंभूतास्तापसा राममभिजग्मुरित्यन्वयः । मुनिवैविध्योक्तिर्दर्शनीयत्वाय । अत्राभिजग्मुरित्यनेन शरणागतिरुक्ता ॥ ६ ॥

रा० टी०–अभीति । समागता ऋषिसंघाः परमधर्मज्ञमत एव धर्मभृतां वरं स्वीकारकर्तारं राममभिगम्य संमुखं प्राप्य ऊचुः ॥ ७ ॥

गो० टी०–अभिगम्येत्यादि ॥ ७ ॥

८ ] ति० टी०–किमूचुस्तत्राह–त्वमिति । इक्ष्वाकुकुलस्य पृथिव्याश्च चेन सकलत्रैलोक्यस्येति गूढम् । प्रधानत्वेन जगद्धारणकर्तृत्वं नाथत्वेन पालकत्वं गर्भितम्, देवानां मघवानिव ॥ ८ ॥

रा० टी०–तद्वचनाकारमाह–त्वमिति । अस्य इक्ष्वाकुकुलस्य पृथिव्याः सकलवसुधायाश्च देवानां मघवानिव प्रधानः पालकः नाथः स्वामी च त्वमसीति शेषः ॥ ८ ॥

गो० टी०–इक्ष्वाकुकुलस्य प्रधानः पृथिव्याश्च नाथः । प्रथमे दृष्टान्तः–देवानामिति । यथा देवेन्द्र इति शक्रस्य नाम तथा रघुपतिरिति तव नामेत्यर्थः ॥ ८ ॥

९ ] ति० टी०–यशसा विक्रमेण च श्रुतः प्रसिद्धः तेन रूपेणेति शेषः । पितृवचनपालनं व्रतं यस्य तद्भावः सत्यं सत्य-

---

१ अभ्रावकाशका इति गो. पाठः । २ व्रतोपवासिन इति गो. पाठः । ३ तपोनित्या इति गो. पाठः । ४ जुष्टा दृढयोगा इति गो. पाठः । ५ हिता इति गो. पाठः । ६ रथेति गो. पाठः । ७ असीति गो. पाठः । ८ भक्तिश्चेति गो. पाठः ।

त्वामासाद्य महात्मानं धर्मज्ञं धर्मवत्सलम् । अर्थित्वान्नाथ वक्ष्यामस्तच्च नः क्षन्तुमर्हसि ॥ १० ॥
अधर्मः सुमहान्नाथ भवेत्तस्य तु भूपतेः । यो हरेद्बलिषड्भागं न च रक्षति पुत्रवत् ॥ ११ ॥
युञ्जानः स्वानिव प्राणान्प्राणैरिष्टान्सुतानिव । नित्ययुक्तः सदा रक्षन्सर्वान्विषयवासिनः ॥ १२ ॥
प्राप्नोति शाश्वतीं राम कीर्तिं स बहुवार्षिकीम् । ब्रह्मणः स्थानमासाद्य तत्र चापि महीयते ॥ १३ ॥
यत्करोति परं धर्मं मुनिर्मूलफलाशनः । तत्र राज्ञश्चतुर्भागः प्रजा धर्मेण रक्षतः ॥ १४ ॥

वचनं च त्वयि तिष्ठतीति शेषः। किं च त्वयि स्मृते धर्मश्च पुष्कलः अङ्गहीनोऽपि सकलाङ्गपूर्णो भवतीत्यर्थः । 'प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु च । तद्विष्णोः स्मरणादेव संपूर्णं स्यादिति श्रुतिः' इति स्मृतेः ॥ ९ ॥

रा० टी०–विश्रुत इति । यस्त्वं यशसा विक्रमेण च त्रिषु ऊर्ध्वाधोमध्यवर्तिषु लोकेषु विश्रुतः ख्यातः तस्मिन् त्वयि पितृव्रतत्वं पितृप्रतिज्ञापालकत्वं सत्यं च पुष्कलोऽत्यधिको धर्मश्चास्तीति शेषः ॥ ९ ॥

गो० टी०–विश्रुत इति । यशसा शरभङ्गाद्युग्रहकीर्त्या विक्रमेण विराधनिरसनेन च त्रिषु लोकेषु भूर्भुवःस्वर्लोकेषु विश्रुतः प्रसिद्धः पितृभक्तिस्त्वयि पुष्कला तद्वचनेन लब्धस्यापि राज्यस्य त्यागात्, सत्यं सत्यवचनं च त्वयि पुष्कलं भरतप्रार्थनयापि प्रतिज्ञातस्याभञ्जनात्, धर्मश्च त्वयि पुष्कलः शरभङ्गाद्युग्रहात् ॥ ९ ॥

१० ] ति० टी०–धर्मज्ञं शरणागतरक्षणरूपधर्मज्ञम्, धर्मवत्सलं धर्मानुष्ठातृप्रियम् त्वामासाद्य शरणं प्राप्यार्थित्वादर्थिभावेन यत्क्रूरमपि वक्ष्यामस्तत्क्षन्तुमर्हसीति योजना । यद्यपि 'सत्सु कार्यवतां पुंसामलमेवाग्रतः स्थितिः' इति न्यायेन त्वदग्रेऽवस्थानमेव सकलमनोरथपूरकत्वान्नः कार्यसाधनम् तथाप्यार्त्यतिशयेन किंचिद्वक्ष्यमाणं क्षन्तव्यमिति भावः ॥१०॥

रा० टी०–त्वामिति । महात्मानं त्वामासाद्य प्राप्य अर्थित्वात्प्रयोजनतन्त्रत्वात् वक्ष्यामः तन्नोऽस्माकं वचनं क्षन्तुमर्हसि, एतेनार्थिनां वक्तव्यावक्तव्यविवेको न भवतीति सूचितम् ॥ १० ॥

गो० टी०–त्वामिति । धर्मज्ञं धर्मवत्सलमित्युक्तानुवादः। अर्थिनो याचकास्तेषां भावोऽर्थित्वं याच्ञेत्यर्थः।सा च रक्षोनिरसनविषया तया त्वां किंचिद्वक्ष्यामः तत् क्षन्तुमर्हसि आर्ततया त्वदग्रगमनमेव कार्यसाधनम् आर्त्यतिशयेन विज्ञापनं तु क्षमस्वेत्यर्थः, एतेन उपायत्वाध्यवसाय एव चेतनस्य कृत्यं प्रार्थनं तु न कर्तव्यं हठात् कृतेऽपि क्षमापणं कर्तव्यमित्युक्तं भवति ॥ १० ॥

११ ] ति० टी०–जगद्रक्षणतत्परस्य विनापि कथनं स्वरक्षणेऽपि प्रवृत्तिरस्त्येव, तथाप्यार्त्यतिशयेन लोकरीत्या राजधर्मं बोधयन्ति–अधर्म इति। न च रक्षति विषयवासिन इत्यपकृष्यते । बलिषड्भागं करभागरूपं षष्ठांशम्, यद्वा बलये पूजायै दत्तं षड्भागं षष्ठांशम् प्रजाभिः स्वानिष्टपरिहारायेत्यर्थः ॥११॥

रा० टी०–तद्वचनाकारमाह–अधर्म इत्यादिभिः । हे नाथ ! यो भूपतिः बलिषड्भागं प्रजासमर्पितोपहारभूतषष्ठांशं हरेत् गृह्णीयात् प्रजास्तु पुत्रवन्नैव रक्षति तस्य भूपतेर्महानधर्मो भवति । प्रजा इति शेषः ॥ ११ ॥

गो० टी०–स्वविषये रामेण रक्षणं स्वाभाविकमिति दर्शयिष्यन्तः औपाधिकलौकिकराजरक्षणप्रकारं दर्शयन्ति–अधर्मस्त्वित्यादिना । यः प्रजाभ्यो बलिषड्भागं हरति हत्वा च ताः न रक्षति तस्य महानधर्मः । बलिः करः 'भागधेयः करो बलिः' इत्यमरः। षष्ठो भागः षड्भागः लुप्तपूरणीनिर्देशः बलिश्चासौ षड्भागश्च बलिषड्भागः ॥ ११ ॥

१२ ] ति० टी०–अथ रक्षणेऽभ्युदयमाहुः–युञ्जान इति। युञ्जानः प्रजारक्षणे यतमानः सर्वान्देशवासिनः स्वान्प्राणानिव प्राणैरिष्टान्प्राणेभ्योऽप्यधिकप्रियान्सुतानिव नित्ययुक्तः सदा सावधानो रक्षन् ॥ १२ ॥

१३ ] ति० टी०–इह शाश्वतीम् । अस्यैव विवरणम्–बहुवार्षिकीं कीर्तिमैहिकीमामुष्मिकं च ब्रह्मलोकरूपं फलं प्राप्नोति । तदाहुः–ब्रह्मण इति ॥ १३ ॥

रा० टी०–युञ्जान इति । स्वान्प्राणान् सर्वेन्द्रियाणि युञ्जानः प्रजारक्षणे नियोजयन् नित्ययुक्तः सदैकाग्रचित्तः यः पुरुषः प्राणैरिव इष्टान्वाञ्छितान्सुतान् इव सर्वान् विषयवासिनः रक्षन् सन् आस्ते इति शेषः, सः पुरुषः बहुवार्षिकीं भरताद्यनेकखण्डसंबन्धिनीं शाश्वतीं नित्यां कीर्तिं प्राप्नोति, ब्रह्मणः स्थानमासाद्य प्राप्य तत्रापि महीयते पूज्यते च । श्लोकद्वयमेकान्वयि ॥ १२ ॥ १३ ॥

गो० टी०–एवमरक्षणे प्रत्यवायमुक्त्वा रक्षणेऽभ्युदयमाहुः–युञ्जान इति । युञ्जानो यतमानः नित्ययुक्तो नित्यावहितः सर्वान् स्वविषयवासिनः स्वकीयान् प्राणानिव प्राणैः प्राणेभ्योऽपि इष्टान् सुतानिव च यो रक्षति स महीपतिः बहुवार्षिकीं बहुकालस्थायिनीं शाश्वतीम् अनुवृत्ताम्। 'मुहुः पुनः पुनः शश्वत्' इति बाणः। भवार्थेऽण् ततो ङीप् । कीर्तिं प्राप्नोति । ब्रह्मणः स्थानमासाद्य तत्र ब्रह्मणा महीयते पूज्यते च ॥१२॥१३॥

१४ ] ति० टी०–नन्वषष्ठांशग्रहात्प्रजारक्षणावश्यकत्वेऽपि वनवासिरक्षणं कुतस्तत्राह–यदिति । यदिति सामान्ये नपुंसकम् । प्रजा वानप्रस्थप्रजाः चतुर्भागश्चतुर्थांश इदमुपलक्षणं षड्भागस्यापि तत्रोपवासिभिक्षाहारिधर्मात्षड्भागप्राप्तिः तेन धर्मषड्भागप्रतिपादकस्मृत्यविरोधः । राजपरिपालितदेश-

१ तु महांस्तातेति गो. पाठः । २ महीपतेरिति गो. पाठः ।

सोऽयं ब्राह्मणभूयिष्ठो वानप्रस्थगणो महान् । त्वंनाथो नाथवद्राम राक्षसैर्हन्यते भृशम् ॥ १५ ॥
एहि पश्य शरीराणि मुनीनां भावितात्मनाम् । हतानां राक्षसैर्घोरैर्बहूनां बहुधा वने ॥ १६ ॥
पम्पानदीनिवासानामनुमन्दाकिनीमपि । चित्रकूटालयानां च क्रियते कदनं महत् ॥ १७ ॥
एवं वयं न मृष्यामो विप्रकारं तपस्विनाम् । क्रियमाणं वने घोरं रक्षोभिर्भीमकर्मभिः ॥ १८ ॥
ततस्त्वां शरणार्थं च शरण्यं समुपस्थिताः । परिपालय नो राम वध्यमानान्निशाचरैः ॥ १९ ॥
परा त्वत्तो गतिर्वीर पृथिव्यां नोपपद्यते । परिपालय नः सर्वान्राक्षसेभ्यो नृपात्मज ॥ २० ॥

---

भवफलाद्यशनवतो धर्माच्चतुर्थो भागः तदन्नभोजनादिपुष्टाङ्गधर्मात्त्वर्धं राज्ञः 'अन्नप्रदातुस्तस्यार्धं कर्तुश्चार्धं न संशयः' इति स्मृतेरिति बोध्यम् ॥ १४ ॥

रा० टी०—ननु बलिहरणहेतुकैव रक्षा चेत् अदण्डानाम् ऋषीणां रक्षा कथं स्यादित्यत आह—यदिति । मूलफलाशनो मुनिः यत्परं धर्मं करोति तत्र तस्मिन्धर्मेण प्रजा रक्षतो राज्ञः चतुर्भागः चतुर्थांशोऽस्तीति शेषः, एतेन ऋषिभ्योऽपि राजा स्वांशं प्राप्नोत्येवेति सूचितम् ॥ १४ ॥

गो० टी०—यस्तु करप्रदानासमर्थो मुनिजनस्तद्रक्षणं कुत इत्यत्राह—यदिति । यद्धर्मं तत्र धर्मे राज्ञः चतुर्भागः चतुर्थांशो भवति ॥ १४ ॥

१५ ] ति० टी०—अथ विवक्षितमर्थमाहुः—सोऽयमिति । ब्राह्मणभूयिष्ठ इत्यनेन क्षत्रवैश्यवानप्रस्थसत्तापि तत्र बोधिता । त्वं नाथो रक्षको यस्य स त्वंनाथः सोऽप्यनाथवद्वध्यते अतस्त्वादृशस्योपेक्षानुचितेति भावः ॥ १५ ॥

रा० टी०—स इति । ब्राह्मणभूयिष्ठः ब्राह्मणा भूयिष्ठा अधिका यस्मिन् सोऽयं त्वन्नाथो वानप्रस्थगणः राक्षसैर्भृशं हन्यते तेन ते निवारणीया इति सूचितम् ॥ १५ ॥

गो० टी०—एवं धर्माय प्रजारक्षकस्य फलमुक्त्वा धर्मानपेक्षे रामे शरणागतिरेव रक्षणहेतुरित्याहुः—सोऽयमित्यादिना । सः पूर्वोक्तवैखानसादिरूपः ब्राह्मणाः भूयिष्ठाः अधिकाः यस्मिन् स ब्राह्मणभूयिष्ठः क्षत्रियवैश्यवानप्रस्थसंभवात् ब्राह्मणभूयिष्ठ इत्युक्तम्, यद्वा ब्राह्मणाः ब्रह्मविदः "तदधीते तद्वेद" इत्यण् वानप्रस्थानां तृतीयाश्रमिणां गणः त्वं नाथो यस्यासौ त्वन्नाथः अनाथवद्बाध्यते[१] ॥ १५ ॥

१६ ] ति० टी०—स्ववचसो मिथ्यात्वपरिहारायाहुः—एहीति । मुनयो मननशीलाः भावितात्मानो निदिध्यासननिष्ठाः शरीराणि केवलं हत्वा त्यक्तानि बहुप्रकारैरङ्गप्रत्यङ्गच्छेदनादिभिः ॥ १६ ॥

रा० टी०—उक्तार्थे दृढविश्वासार्थमाह—एहीति । भावितात्मनां स्वस्वरूपविचारपराणां बहुधा अनेकधा हतानां बहूनां मुनीनां शरीराणि त्वं पश्य अत एव एहि अत्रागच्छ ॥ १६ ॥

गो० टी०—बाधामेव दर्शयन्ति—एहीत्यादिना । दूरे सम्यङ् न दृश्यत इत्यत एहि पश्येत्युक्तम् । भावितात्मनां ध्यातात्मनां बहुधा छेदनभेदनभक्षणादिभिः ॥ १६ ॥

१७ ] ति० टी०—सकलदण्डकारण्यपीडामाहुः—पम्पेत्यादि । पम्पा च नद्यश्च तत्र निवासो येषां तेषाम् पम्पारूपा नदी वा । अनुमन्दाकिनीमपीति अनुर्लक्षणे कर्मप्रवचनीयः मन्दाकिन्या अत्रत्यपुण्यनद्यास्तीरवासिनाम् मन्दाकिन्या विस्तीर्णप्रवाहत्वाद्दुरवगाहतया पृथगुक्ती राघवाख्याने ॥ १७ ॥

रा० टी०—उपद्रुतदेशं बोधयन्नाह—पम्पेति । पम्पानदीनिवासानां पम्पा सरः, नदी तत्समीपवर्तिनी तयोर्निवासो येषां तेषामनुमन्दाकिनीं चित्रकूटालयानां च मुनीनां महत्कदनं पीडा क्रियते राक्षसैरिति शेषः ॥ १७ ॥

गो० टी०—हतानां बहूनामित्युक्तं विवृणोति—पम्पेति । अनुमन्दाकिनीमपीति अनुर्लक्षणे कर्मप्रवचनीयः । मन्दाकिनीं शरभङ्गाश्रमवाहिनीं मन्दाकिन्यास्तटवासिनामित्यर्थः, कदनं हिंसा ॥ १७ ॥

१८ ] ति० टी०—विप्रकारं दुःखं न मृष्यामः सोढुमशक्ताः ॥ १८ ॥

रा० टी०—एवमिति । एवमनेन प्रकारेण भीमकर्मभिः रक्षोभिः क्रियमाणं विप्रकारं विहिंसनं वयं न मृष्यामः सोढुं समर्था न भविष्याम इत्यर्थः ॥ १८ ॥

गो० टी०—शरीराण्युपेक्ष्य तपस्यतां किं हिंसाभयेनेत्याशङ्क्य न वयं स्वशरीरपीडातो भीताः किंतु महत्सु गरीयःसु क्रियमाणं कदनं न मृष्याम इत्याहुः—एवमिति । विप्रकारं निकारम् 'निकारो विप्रकारः स्यात्' इत्यमरः । स्वजनपीडा दुःसहेति भावः ॥ १८ ॥

१९ ] ति० टी०—शरण्यं रक्षणसमर्थम् । शरणार्थं रक्षणार्थम् ॥ १९ ॥

रा० टी०—तत इति । ततः अतिदुःखाद्धेतोः शरण्यं शरणहितं त्वां शरणार्थं रक्षणार्थं वयं समुपस्थिताः अतः निशाचरैर्वध्यमानान् नोऽस्मान् परिपालय ॥ १९ ॥

गो० टी०—तत इति । शरणार्थं रक्षणार्थं समुपस्थिताः प्रपन्नाः "गत्यर्थाकर्मक–" इत्यादिना कर्तरि क्तः ॥ १९ ॥

२० ] ति० टी०—त्वत्तः परा गतिस्त्वदन्यस्त्राता ॥ २० ॥

रा० टी०—त्वया अवश्यं रक्ष्या इत्यत्र हेतुं वदन्नाह—परेति । हे वीर ! त्वत्तः परा अन्या गतिराश्रयो न अतः राक्षसेभ्यः परिपालय ॥ २० ॥

---

१ बाध्यते इति गो० पाठः ।

एतच्छ्रुत्वा तु काकुत्स्थस्तापसानां तपस्विनाम् । इदं प्रोवाच धर्मात्मा सर्वानेव तपस्विनः ॥ २१ ॥
नैवमर्हथ मां वक्तुमाज्ञाप्योऽहं तपस्विनाम् । केवलेन स्वकार्येण प्रवेष्टव्यं वनं मया ॥ २२ ॥
विप्रकारमपाक्रष्टुं राक्षसैर्भवतामिमम् । पितुस्तु निर्देशकरः प्रविष्टोऽहमिदं वनम् ॥ २३ ॥
भवतामर्थसिद्ध्यर्थमागतोऽहं यदृच्छया । तस्य मेऽयं वने वासो भविष्यति महाफलः ॥ २४ ॥
तपस्विनां रणे शत्रून्हन्तुमिच्छामि राक्षसान् । पश्यन्तु वीर्यमृषयः सभ्रातुर्मे तपोधनाः ॥ २५ ॥
दत्त्वा वरं चापि तपोधनानां धर्मे धृतात्मा सह लक्ष्मणेन ।
तपोधनैश्चापि सहायदत्तः सुतीक्ष्णमेवाभिजगाम वीरः ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे षष्ठः सर्गः ॥ ६ ॥

---

गो० टी०—परेति । त्वत्तः परा अन्या गतिः उपायः नोपपद्यते । पृथिव्यामिति सर्वभुवनोपलक्षणम् । तथा च श्रुतिः "नान्यः पन्था अयनाय विद्यते" इति । इत्यूचुरिति पूर्वेणान्वयः ॥ २० ॥

२१ ] ति० टी०—तपस्विनां तपोबलयुतानां तापसानामृषीणाम् ॥ २१ ॥

रा० टी०—एतदिति । काकुत्स्थो रामः तपस्विनां तपःप्रभावयुक्तानां तापसानामृषीणामेतद्वचः श्रुत्वा इदं प्रोवाच॥२१॥

गो० टी०—एतदिति । तपस्विनां प्रशस्ततपसां तापसानां मुनीनाम् ॥ २१ ॥

२२-२३ ] ति० टी०—तदेवाह—नैवमिति । एवमुक्तं प्रार्थनारूपं वचः आज्ञाप्यः शिष्यादिरिवेदं कुर्वीति शिक्षणीयः केवलेनोपाध्यान्तररहितेन स्वकार्येण पितृवचनपरिपालनात्मकेन हेतुना मयावश्यं वनं प्रवेष्टव्यमेव स च मे वनप्रवेशो राक्षसैः क्रियमाणं भवतामिमं विप्रकारमपाक्रष्टुमपि भविष्यतीत्यर्थ इति तीर्थकतकौ भवच्छत्रुहननं केवलं मदीयमेव कार्यं बहुधर्मोपचयजनकत्वान्मदिष्टसाधनमेव । यद्यपि स्वविप्रकारनाशे भवन्तः समर्था एव तथापि मम धर्मोपचयायैवैषा भवदीया मम प्रेरणेति भावः । अन्वयस्त्वत्र स्फुट एवेत्यन्ये । किं च पित्राज्ञापरिपालनार्थमिदं वनं प्रविष्ट एवास्मि । प्रविष्टे च मयि सोऽर्थोऽवश्यं भाव्य एवेति भवतामेवं प्रार्थनमनवसरमिति भावः ॥ २२ ॥ २३ ॥

रा० टी०—तद्वचनमेवाह—नैवमिति । तपस्विनां भवतां स्वकार्येण हेतुना योऽहमाज्ञाप्यस्तं मामेवं प्रार्थनावचनेन वक्तुं यूयं नार्हथ केवलेन कापट्यरहितेन मया तु राक्षसैः भवतां विप्रकारं विहिंसनमपाक्रष्टुं दूरीकर्तुं वनं राक्षससेवितकाननं प्रवेष्टव्यम् "उभयप्राप्तौ कर्मणि" इति नियमान्न कर्तरि षष्ठी । सार्धश्लोक एकान्वयी ॥ २२ ॥

गो० टी०—नैवमिति । शरणागत्यैवाज्ञप्योऽहं परिपालयेत्यादिकं वक्तुं नार्हथ केवलेनात्मकार्येण केवलात्मप्रयोजनत्वेन राक्षसैः क्रियमाणं भवतामिमं विप्रकारम् अपाक्रष्टुं निवर्तयितुं मया वनं प्रवेष्टव्यं प्रविष्टम् । "तयोरेव कृत्यक्तखलर्थाः" इति कर्मणि तव्यप्रत्ययः । स्वतो मत्प्रयोजनरूपं भवद्विरोधिनिरसनं कर्तुमेवेदं वनं प्रविष्टोऽस्मीत्यर्थः । शेषभूतरक्षणस्य शेषिप्रयोजनत्वादिति भावः । ॥ २२ ॥

रा० टी०—पितुरिति । पितुर्निर्देशकरः योऽहमिदं वनं प्रविष्टः सोऽहं भवतामर्थसिद्ध्यर्थं यदृच्छया आगतः भवतां समीपं प्राप्तः अत एव तस्य भवत्समीपं प्राप्तस्य मेऽयं वने वासः महाफलः भविष्यति ॥ २३ ॥ २४ ॥

गो० टी०—पितृवाक्यपरिपालनाय वनं प्रविष्टोऽसीति किंवदन्त्याः का गतिरित्यत्राह—पितुरिति । अहं भवतामर्थसिद्ध्यर्थमागतोऽस्मि यदृच्छया दैवगत्या पितुर्निर्देशकरः वनमिदं प्रविष्टोऽस्मि । पितृवाक्यकरणव्याजेन भवदर्थसिद्ध्यर्थमेवागतोऽस्मीति भावः ॥ २३ ॥

२४-२५ ] ति० टी०—तदेवाह—भवतामिति । यदृच्छया आगत एवाहं भवतामर्थसिद्ध्यर्थमपि भविष्याम्येवेति शेषः । पितुस्त्वित्यनेनोक्त एवार्थः कविना श्लोकान्तरेण वर्ण्यते । इयमपि शैली कवेरिति कतकतीर्थौ यतः शत्रून्हन्तुमिच्छामि, अतस्तस्य यदृच्छया वनमागतस्य मेऽयं वनवासो महाफलो भविष्यतीति स्वगतो विचारः । अथ ऋषिधैर्याय प्रकाशं प्रतिजानीते—पश्यन्त्विति । सर्वथा हनिष्यामीति यावत् ॥ २४ ॥ २५ ॥

गो० टी०—तस्येति । भवत्कार्यार्थमेवागतस्य मे वने वासो महाफलो भविष्यति ॥ २४ ॥

रा० टी०—तपस्विनामिति । तपस्विनां शत्रून् राक्षसान् रणे हन्तुमहमिच्छामि अतः सभ्रातुर्मे वीर्यमृषयः पश्यन्तु॥२५॥

गो० टी०—तदेव फलमाह—तपस्विनामिति । तपस्विनां शत्रून् रणे हन्तुमिच्छामि इतीदं प्रोवाचेत्यन्वयः ॥ २५ ॥

२६ ] ति० टी०—वरमुक्तवचनात्मना । धर्मे धृतात्मा धर्मे स्थितचित्तः आर्यं पूज्यं दत्तं यस्य सः तपोधनैः सह सुतीक्ष्णमभिजगाम ॥ २६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे षष्ठः सर्गः ॥ ६ ॥

---

१ ऽऽत्मकार्येणेति गो. पाठः । २ भावितामिमामिति गो. पाठः । ३ ऽभयामिति गो. पाठः ४ सभाज्यवृत्त इति गो. पाठः । ५ तेनार्थेनावश्यं भाव्यमिति युक्तं भाति ।

## सप्तमः सर्गः ।

सीतालक्ष्मणयुतः सुतीक्ष्णाश्रमं प्राप्तो रामो मुनिमभिवाद्यैतदाश्रमनिवासविषयकं स्वकामं न्यवेदयत् । मृगलोभन विना नास्ति कोऽप्यत्रोपसर्गः सुखं निवसेत्युक्तोऽपि तदुपसर्गं परिजिहासुः कंचित्कालमेव तस्थौ ।

रामस्तु सहितो भ्रात्रा सीतया च परंतपः । सुतीक्ष्णस्याश्रमपदं जगाम सह तैर्द्विजैः ॥ १ ॥
स गत्वा दूरमध्वानं नदीस्तीर्त्वा बहूदकाः । ददर्श विमलं शैलं महामेरुमिवोन्नतम् ॥ २ ॥
ततस्तदिक्ष्वाकुवरौ सततं विविधैर्द्रुमैः । काननं तौ विविशतुः सीतया सह राघवौ ॥ ३ ॥
प्रविष्टस्तु वनं घोरं बहुपुष्पफलद्रुमम् । ददर्शाश्रममेकान्ते चीरमालापरिष्कृतम् ॥ ४ ॥
तत्र तापसमासीनं मलपङ्कजधारिणम् । रामः सुतीक्ष्णं विधिवत्तपोधनमभाषत ॥ ५ ॥
रामोऽहमस्मि भगवन्भवन्तं द्रष्टुमागतः । तन्माभिवद धर्मज्ञ महर्षे सत्यविक्रम ॥ ६ ॥

---

रा० टी०–दत्त्वेति । धर्मे धृतात्मा आर्यदत्तः आर्यं सर्वश्रेष्ठमचलमित्यर्थः, दत्तं दानं यस्य सः वीरो रामः लक्ष्मणेन सह तपोधनानां वरं दत्त्वा तपोधनैश्च सह सुतीक्ष्णमभिजगाम ॥ २६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे षष्ठः सर्गः ॥ ६ ॥

गो० टी०–दत्त्वेति । अभयमिति छेदः । धृतात्मा निश्चलमनाः तपोधनैः ऋषिभिश्च सभाज्यवृत्तः पूज्याचारः ॥ २६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने षष्ठः सर्गः ॥ ६ ॥

---

१ ] ति० टी०–द्विजैः प्रार्थनार्थमागतैर्वानप्रस्थैः ॥ १ ॥

रा० टी०–रामवृत्तान्तमाह–राम इत्यादिभिः । भ्रात्रा सीतया च सहितो रामः सुतीक्ष्णस्य आश्रमपदं श्रमनिवर्तकं स्थानं जगाम ॥ १ ॥

गो० टी०–अथ सुतीक्ष्णाभ्यर्थनया मृगरूपमारीचादिदुष्टराक्षसनिरासः सप्तमे–रामस्त्वित्यादि । आश्रमपदम् उद्दिश्येति शेषः । तैर्द्विजैः वैखानसादिभिः ॥ १ ॥

२–४ ] ति० टी०–विमलं पवित्रम् 'महामेघमिव' इति पाठे स्थितमिति शेषः, नैल्यस्थौल्याभ्यां सादृश्यम् । उन्नतमिति स्वरूपकथनम् ॥ २–४ ॥

रा० टी०–स इति । स रामः दूरमध्वानं गत्वा बहूदकाः नदीः तीर्त्वा महामेरुमिवोन्नतं शैलं ददर्श ॥ २ ॥

गो० टी०–स इति । अदूरमिति छेदः । पूर्वं शरभङ्गेण इह राम महातेजा इति सुतीक्ष्णाश्रमस्यादूरत्वोक्तेः । नदीरिति बहुवचनमेकस्या एव मन्दाकिन्याः बहुप्रदेशेष्वाप्त्या । बहूदका विपुलोदकाः नौतार्यत्वानुक्तेः । शैलं शैलसंबन्धि वनं काननमित्यनुवादात् । "तस्येदम्" इत्यण् । महामेघमिवेति श्यामिकाद्युपमा ॥ २ ॥

रा० टी०–तत इति । ततः पर्वतदर्शनानन्तरं विविधैर्द्रुमैः सन्ततं व्याप्तं तत्काननं वनं राघवौ विविशतुः ॥ ३ ॥

गो० टी०–तत इति । द्रुमैः संततं व्याप्तम् इक्ष्वाकुवरौ राघवावित्युभयथा धैर्यमूलोक्तिः ॥ ३ ॥

रा० टी०–प्रविष्ट इति । बहवः पुष्पफलद्रुमाः यस्मिन् तत्काननं प्रविष्टो राघवः चीरमालापरिष्कृतं खण्डपटसमूहयुक्तमाश्रममेकान्ते ददर्श ॥ ४ ॥

गो० टी०–प्रविष्ट इति । चीरमालया वल्कलपङ्क्त्या परिष्कृतमलंकृतम् ॥ ४ ॥

५ ] ति० टी०–अत्र 'ततस्तदिक्ष्वाकुवरौ' इत्यादिश्लोकत्रयं प्रक्षिप्तमिति कतकः मलपङ्कजधारिणं मलस्य सर्वाघस्य शान्तये पङ्कजे पद्मासने स्थित्वा धारणशीलम्, यद्वा पङ्कजे हृदयपङ्कजे धारिणमैश्वरयोगधारणशीलमित्यर्थ इति कतकः, तीर्थस्तु–'मलपङ्कजटाधरम्' इति पठित्वा मलमुद्वर्तनादिसंस्काराभावाच्छरीरजं पङ्को वनसंचाराच्छरीरलग्न इति भेद इत्याह । विधिवदुपगम्येति शेषः ॥ ५ ॥

रा० टी०–तत्रेति । तत्र तस्मिन् आश्रमे मलपङ्कजधारिणं मस्य परमात्मनो लः पूर्वं ग्रहणं यस्मिन् तदेव पङ्कजं कमलं तद्धारिणं तत्राश्रमे आसीनं तपोधनं सुतीक्ष्णं रामो विधिवदभाषत ॥ ५ ॥

गो० टी०–तत्रेति । मलपङ्कजटाधरं नित्यनिश्चलतपोयोगेन वा वार्धकेन वा मलपङ्कजटानां धरं विधिवत् क्रमवद्यथा भवति तथा अभाषत । मीलितनयनत्वेन स्वाभिवादनापरिज्ञानात् भाषणम् ॥ ५ ॥

६ ] ति० टी०–तन्माभिवदेति । मा इति माम् उक्तयोगधारणशीलत्वेन वाग्व्यवहाराभावादेवं प्रार्थना । सत्यविक्रम ! अक्षततपःस्वभाव ॥ ६ ॥

रा० टी०–तद्भाषणप्रकारमाह–राम इति । भवन्तं द्रष्टुमागतः प्राप्तो रामोऽहमस्मि तत्तस्माद्धेतोः मा मामभिवद सम्यक् ब्रूहि ॥ ६ ॥

---

१ विपुलमिति गो० पाठः । २ महामेघमिति गो० पाठः । ३ जटाधरमिति गो० पाठः । ४ वृद्धमिति गो पाठः । ५ त्वमिति गो० पाठः ।

स निरीक्ष्य ततो धीरो रामं धर्मभृतां वरम् । समाश्लिष्य च बाहुभ्यामिदं वचनमब्रवीत् ॥ ७ ॥
स्वागतं [1]ते रघुश्रेष्ठ राम सत्यभृतां वर । आश्रमोऽयं त्वयाक्रान्तः सनाथ इव सांप्रतम् ॥ ८ ॥
प्रतीक्षमाणस्त्वामेव नारोहेऽहं महायशः । देवलोकमितो वीर देहं त्यक्त्वा महीतले ॥ ९ ॥
चित्रकूटमुपादाय राज्यभ्रष्टोऽसि मे श्रुतः । इहोपयातः काकुत्स्थ देवराजः शतक्रतुः ॥ १० ॥
उपागम्य च [2]मे देवो महादेवः सुरेश्वरः । सर्वाँल्लोकाञ्जितानाह मम पुण्येन कर्मणा ॥ ११ ॥
तेषु देवर्षिजुष्टेषु जितेषु तपसा मया । मत्प्रसादात्सभार्यस्त्वं विहरस्व सलक्ष्मणः ॥ १२ ॥
तमुग्रं[3]तपसं दीप्तं महर्षिं सत्यवादिनम् । प्रत्युवाचात्मवान्रामो ब्रह्माणमिव [4]वासवः ॥ १३ ॥

---

गो० टी०—रामोऽहमिति । मा अभिवादयन्त माम् अभिवद प्रत्यभिवादनं कुरु । सत्यविक्रम अमोघतपःप्रभाव ॥६॥७॥

७ ] ति० टी०—स निरीक्ष्येति । उक्तवचनात्समाश्रितो व्युत्थाय । रामं दृष्ट्वेत्यर्थः ॥ ७ ॥

रा० टी०—स इति । ततो रामवचनश्रवणानन्तरं स सुतीक्ष्णः रामं निरीक्ष्य बाहुभ्यां समाश्लिष्य च अब्रवीत् ॥७॥

८ ] ति० टी०—सनाथ इव सस्वामिक इव । अत्रायमाश्रमो ब्रह्मचर्याद्याश्रमव्यवहार्योऽयं देहस्त्वया जीवरूपेणाक्रान्तोऽपि सांप्रतमद्य बहिश्चक्षुषाऽनुभवन्सनाथ इव मायया सच्चिदानन्दस्यैवैवं शरीररूपेण प्रतिभासमानस्येदृशस्य त्वद्रूपस्य दर्शनेन चित्तशुद्ध्या पूर्वं जीवाभेदेनाहमिति प्रतीत्या गृहीतस्य तद्वैलक्षण्येनेदानीं ग्रहाद्भेदनिबन्धनसनाथत्वव्यवहारः । इवेन जडानामप्यतिरिक्तत्वाभावः सूचित इति ध्वनिः ॥ ८ ॥

रा० टी०—तद्वचनाकारमाह—स्वागतमिति । हे रघुश्रेष्ठ ! ते स्वागतम् । तत्र हेतुः—यतस्त्वया अयमाश्रमः समाक्रान्तः तस्मात्सांप्रतमिदानीं सनाथ इवास्मीति शेषः । इदानीं सनाथ इवेत्युक्त्या सर्वकालं स्वस्य सनाथत्वं व्यञ्जितम् ॥ ८ ॥

गो० टी०—स्वागतमिति । सनाथ इव सनाथ एव, यद्वा सर्वदा त्वया सनाथत्वेऽपि पामराणां सनाथत्वप्रतिभेदानीं जातेत्यर्थः ॥ ८ ॥

९ ] ति० टी०—अतस्त्वां प्रतीक्षमाण इति । त्वां स्वात्मभूतम् महायश इति संबोधनम् । देवलोकं देवस्य ब्रह्मणो लोकम् ॥ ९ ॥

रा० टी०—प्रतीक्षमाण इति । हे महायशः! त्वां प्रतीक्षमाण एवाहं देहं त्यक्त्वा देवलोकं नारोहे ॥ ९ ॥

गो० टी०—स्वस्य मोक्षापेक्षां व्यञ्जयति—प्रतीक्षमाण इति । त्वामेव प्रतीक्षमाणः प्रतिपालयन् त्वदागमनं काङ्क्षमाण इत्यर्थः, देवलोकं नारोहे तस्यान्तरायो मैत्रेयदेवेन्द्रत्वादिकं फलमिति तस्य मोक्षविरोधित्वादिति भावः ॥ ९ ॥

१० ] ति० टी०—ननु कात्र मदागमनसंभावना तत्राह—चित्रेति । यदा राज्यभ्रष्टश्चित्रकूटमुपादाय प्राप्य स्थितोऽसि तदाप्रभृति मे मया श्रुतोऽसि । आश्रमोऽयमित्यस्य व्यङ्ग्येऽर्थे तु—चित्रं विचित्रफलहेतुकूटं दुरवगाहत्वात्संसारं प्राप्य राज्यभ्रष्टो विद्यासंसर्गेण स्वाराज्याच्चित्यशुद्धबुद्धमुक्तस्वरूपाद्भ्रष्टस्तद्योगात्संसारं प्राप्तस्त्वमेव मया श्रुतिवाक्येभ्यः श्रुतोऽसि अतस्तत्प्रतीक्षया न देवलोकं गत इति व्यङ्ग्योऽर्थः । नन्विदानीं क्व ते देवलोकारोहणप्रसक्तिस्तत्राह—इहेति । शरभङ्गाह्वानानन्तरमिहाभ्यागत इत्यर्थः ॥ १० ॥

रा० टी०—ननु त्वया मदागमनं कथं ज्ञातमित्यत आह—चित्रकूटमिति । राज्यभ्रष्टः त्यक्तराज्यस्त्वं चित्रकूटमुपादाय प्राप्य स्थितस्त्वं मया श्रुतोऽसि । ननु कस्मात् श्रुत इत्यत आह—देवरात इन्द्र इहोपयातः, एतेन तस्मादेव श्रुतमिति ध्वनितम् ॥ १० ॥

गो० टी०—मदागमनं कुतोऽवगतं तत्राह—चित्रकूटमिति । चित्रकूटमुपादाय चित्रकूटगमनमारभ्य राज्याद्भ्रष्टः प्रच्युत इति मे मया श्रुतोऽसि ॥ १० ॥

११ ] ति० टी०—पुण्येन कर्मणा जितानित्यनेन श्रवणसंपत्तावपि निदिध्यासनसंपत्त्यभावोऽस्योक्तः । पूजावचनेषु पौनरुक्त्यं न दोषाय, देवादिपदानां प्रवृत्तिनिमित्तभेदस्य स्पष्टत्वान्न पौनरुक्त्यमिति केचित् ॥ ११ ॥

रा० टी०—ननु स किमर्थमागत इत्यत आह—उपागम्येति । मे देवो मम पूज्यः सुरेश्वरः उपागम्य प्राप्य मम पुण्येन कर्मणा सर्वान् लोकान् जितान् मदधीनान् आह॥११॥

गो० टी०—स्वर्गारोहणस्य कः प्रसङ्ग इत्यत्राह—इहेति । उपयातः शरभङ्गार्थमागतः मामुपागम्याह । तर्हि तादृशमहाफलं किमिति त्यक्तवानसीत्युक्ते तारतम्यज्ञानादिति भावः॥११–१४॥

१२–१३ ] ति० टी०—अथ सर्वं पुण्यमनन्तफलत्वाय भगवत्यर्पयति—तेष्विति ॥ १२ ॥ १३ ॥

रा० टी०—तेष्विति । मया तपसा जितेषु देवर्षिजुष्टेषु देवर्षिभिः सेवितेषु लोकेषु मत्प्रसादात् मत्प्रीतिमुपलभ्य त्वं विहरस्व ॥ १२ ॥

रा० टी०—तमिति । उग्रं तपो यस्य तमत एव संदीप्तमतिप्रकाशवन्तं सत्यवादिनं तं महर्षिं ब्रह्माणं वासव इव रामः प्रत्युवाच ॥ १३ ॥

---

१ खलु ते वीर राम धर्मभृतामिति गो. पाठः । २ मामिति गो. पाठः । ३ तपसा युक्तमिति गो. पाठः । ४ काश्यप इति गो. पाठः ।

अहमेवा[1]हरिष्यामि स्वयं लोकान्महामुने । आवासं त्वहमिच्छामि प्रदिष्टमिह कानने ॥ १४ ॥
भवान्सर्वत्र कुशलः सर्वभूतहिते रतः । [2]आख्यातं शरभङ्गेन गौतमेन महात्मना ॥ १५ ॥
एवमुक्तस्तु रामेण महर्षिर्लोकविश्रुतः । अब्रवीन्मधुरं वाक्यं हर्षेण महता [3]युतः ॥ १६ ॥
अयमेवाश्रमो राम गुणवान्रम्यताम[4]िति । ऋषिसङ्घानुचरितः सदा मूलफ[5]लैर्युतः ॥ १७ ॥
इममाश्रममागम्य मृगसङ्घा [6]महीयसः । [7]अहत्वा प्रतिगच्छन्ति लोभयित्वाऽकुतोभयाः॥ १८ ॥
नान्यो दोषो भवेदत्र मृगेभ्योऽन्यत्र विद्धि वै । तच्छ्रुत्वा वचनं तस्य महर्षेर्लक्ष्मणाग्रजः ॥ १९ ॥
उवाच वचनं धीरो [8]विगृह्य सशरं धनुः । तानहं सुमहाभाग मृगसङ्घान्समागतान् ॥ २० ॥

---

१४ ] ति० टी०-अहमेवेति । तपसेत्यर्थः । त्वत्तः प्रतिग्रहे नाहमधिकारीति आपाततोऽर्थः वास्तवस्तु तद्दत्तपुण्याङ्गीकारेणानुगृह्णाति भगवान्-अहमेवेति । न्यासत्वेन त्वया स्थापितं तुभ्यं प्रापयिष्यामि अहमेवेत्यनेन सर्वकर्मफलदाता सर्वोपासनास्वहमेवेति सूचितम् । अथ लोकदृष्टयेतरजनप्रतारणायावासमिति प्रदिष्टम् । त्वयेति शेषः ॥ १४ ॥

रा० टी०-तद्वचनाकारमाह-अहमिति । हे महामुने ! प्रदिष्टं भवदाज्ञा यदि स्यात्तदा इति शेषः, लोकान् भवत्तपोर्जितस्वर्गादीन् इहैव हरिष्यामि प्रापयिष्यामि । तत्र हेतुः--यतः इह आवासं त्वया सह निवासमहमिच्छामि ॥ १४ ॥

१५-१६ ] ति० टी०-गौतमेन गौतमगोत्रेण शरभङ्गेन सर्वत्र इह परत्र च कुशल इत्याख्यातम् । एवं चानभिज्ञोऽहमित्युत्तरं दातुमशक्यमित्याशयः ॥ १५ ॥ १६ ॥

रा० टी०-सहवासे हेतुमाह-भवानिति । सर्वत्र वेदेषु शास्त्रेषु च कुशलो निपुणः इति गौतमेन गौतमगोत्रेण महात्मना शरभङ्गेन आख्यातं कथितम् ॥ १५ ॥

गो० टी०-भवानिति । गौतमेन गोतमवंश्येन ॥ १५ ॥

रा० टी०-एवमिति । रामेण एवमुक्तः अत एव महता हर्षेण युतः लोकविश्रुतः प्रख्यातो महर्षिः सुतीक्ष्णः मधुरं वाक्यमब्रवीत् ॥ १६ ॥

गो० टी०-एवमिति । हर्षेण महता युतः मोक्षानुग्रहेण परमानन्दभरितः ॥ १६ ॥ १७ ॥

१७ ] ति० टी०-अयमेवास्मदीयः ॥ १७ ॥

रा० टी०-तद्वचनाकारमाह-अयमिति । हे राम ! ऋषिसंघानामनुचरितमनुचरणं यस्मिन् सः अयमाश्रमो गुणवान् इति अतः अयमेव रम्यताम् ॥ १७ ॥

१८ ] ति० टी०-अनेन गुणमुक्त्वा दोषमाह--इममिति । इममाश्रमं दण्डकारण्याश्रमं महीयसोऽतिशयितमहत्त्ववतोऽपि अहत्वा हननमकृत्वा लोभयित्वा रूपकान्तिगतिविशेषैश्चित्तक्षोभं कृत्वा गच्छन्तीत्यर्थः । अनेन भावी मारीचवृत्तान्तः सूचितः । अकुतोभयास्ते इव ॥ १८ ॥

रा० टी०-मृगानुपद्रवकारिणो ज्ञात्वाऽयं न हन्यात् नापि बिभेतु चेति कृपातिवात्सल्याभ्यामुपेतो मुनिर्मृगवृत्तमाह-इममिति । महीयसः अतिमहान्तः अकुतोभयाः मृगसंघाः इममाश्रममागम्य अहत्वा ऋषिभ्यः पीडामप्रदाय लोभयित्वा स्वरूपगत्यादिविशेषैः चित्तवैचित्र्यमुत्पाद्य प्रतिगच्छन्ति ॥ १८ ॥

गो० टी०-गुणमुक्त्वा दोषमाह निरसनीयत्वाभिप्रायेण-इममिति । आश्रमं तपोवनम् अविद्यमानं कुतोऽपि भयं येषां ते अकुतोभयाः सन्तः अटित्वा इतस्ततः परिप्लुत्य लोभयित्वा समाधिभङ्गं जनयित्वा विचित्रतरवेषैरिति शेषः । प्रतिगच्छन्ति प्रतियान्ति अत्र वने मृगेभ्योऽन्यत्र मृगान् विनान्यो दोषो न भवेदिति विद्धि मृगप्रलोभनरूपदोषादन्यो दोषोऽत्र नास्तीत्यवेहीत्यर्थः । इति वाक्यमब्रवीदिति पूर्वेण संबन्धः ॥ १८ ॥

१९-२० ] ति० टी०-अत्र दण्डकारण्ये नान्यो दोषो भवेत् । अत्रेत्यस्यैव विवरणम्-मृगेभ्योऽन्यत्र विद्धि वै इति । मृगेभ्योऽन्यत्र न भयमिति विद्धीत्यर्थः । दण्डकारण्याभिप्रायेण मुन्युक्तं तदाश्रममात्राभिप्रायं परिकल्प्य रामोऽवादीदित्याह । तच्छ्रुत्वा मृगेभ्यो भयविषयं वचनम् ॥ १९ ॥ २० ॥

रा० टी०-नेति । अन्यत्र इव अत्र मृगेभ्यः मृगलोभनेभ्यः अन्यो दोषो न भवेत् इति विद्धि जानीहि तेन त्वया न भेतव्यं न वा हन्तव्या इति सूचितम् । न हि सौन्दर्यादिना लोभोत्पादनेन वधार्हा इति तात्पर्यम् । अर्धं पृथक्-तदिति । लक्ष्मणाग्रजो रामः तस्य महर्षेः सुतीक्ष्णस्य तद्वचनं श्रुत्वा सशरं शरसहितं धनुः विगृह्य उत्थाप्य वचनमुवाच ॥ १९ ॥

गो० टी०-तच्छ्रुत्वेति । तत् मृगभयविषयकं वचनं विकृष्य सशरं धनुरिति स्वोत्साहप्रकटनम्-हन्यामिति । प्राप्तकाले लिङ् । वधकाले प्राप्ते सकलमृगहननं कुर्यामित्यर्थः । प्राप्तकालश्च तद्दर्शनकालः ॥ १९ ॥ २० ॥

रा० टी०-तद्वचनाकारमाह-तानिति । समागतान् तान् क्रूरान् मृगसंघान् निशितधारेण आनतपर्वणा शरेण हन्याम् । अर्धद्वयमेकान्वयि ॥ २० ॥

---

१ एव हरिष्यामीति गो. पाठः । २ आख्यात इति गो पाठः । ३ प्लुत इति गो. पाठः । ४ इहेति गो. पाठः । ५ फलान्वित इति गो. पाठः । ६ महायशा इति गो. पाठः । ७ अटित्वेति गो. पाठः । ८ विकृष्येति गो. पाठः ।

हन्यां निशितधारेण शरेणानतपर्वणा । भवांस्तत्राभिषज्येत किं स्यात्कृच्छ्रतरं ततः ॥ २१ ॥
एतस्मिन्नाश्रमे वासं चिरं तु न समर्थये । तमेवमुक्त्वोपरमं रामः संध्यामुपागमत् ॥ २२ ॥
अन्वास्य पश्चिमां संध्यां तत्र वासमकल्पयत् । सुतीक्ष्णस्याश्रमे रम्ये सीतया लक्ष्मणेन च ॥ २३ ॥
ततः शुभं तापसयोग्यमन्नं स्वयं सुतीक्ष्णः पुरुषर्षभाभ्याम् ।
ताभ्यां सुसत्कृत्य ददौ महात्मा संध्यानिवृत्तौ रजनीं समीक्ष्य ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे सप्तमः सर्गः ॥ ७ ॥

## अष्टमः सर्गः ।

प्रातः कृताहर्मुखविधी रामः सुतीक्ष्णं प्रति स्वीयां दण्डकादिदृक्षां न्यवेदीत्तेनानुज्ञातश्च तं प्रदक्षिणीकृत्य प्रतस्थे ।

रामस्तु सहसौमित्रिः सुतीक्ष्णेनाभिपूजितः । परिणाम्य निशां तत्र प्रभाते प्रत्यबुध्यत ॥ १ ॥

२१ ] ति० टी०—हन्यामु प्राप्तकाले लिङ् । प्राप्तमृगहननं कुर्याम् । परं त्वेवं कृत्वात्र स्थातुमशक्यमित्याह—भवानिति । तत्र मृगसंघवधे भवान्मयाभिषज्येत अभिषङ्गः पराभवः, कृतपराभवो यो भवेत्ततः परं मे कृच्छ्रतरं किं स्यात् न किमपि ॥ २१ ॥

रा० टी०—तत्र हेतुः—यत्र यत्कृदुपद्रवे भवान् अभिषज्येत पीड्येत ततः कृच्छ्रतरं क्लेशाधिक्यं किं स्यात्, एतेन मुनीनां खेदहेतवस्तदाज्ञया हन्तव्या एवेति रामाभिप्रायः सूचितः ॥ २१ ॥

गो० टी०—तच्च हननमिह स्थित्वा न कर्तुं शक्यमित्याह—भवानिति । तत्र मृगसंघवधविषये भवान् मया अभिषज्येत अभिभूयेत । अभिपूर्वात् षञ्जेः कर्मणि लिङ् । 'अभिषङ्गः परिभवे सङ्गाक्रोशनयोरपि' इति बाणः । तादृशमृगहनने मया त्वं कृतापराधो भवेः आश्रमसंबन्धित्वादिति भावः । ततः किमित्यत्राह—किं स्यात्कृच्छ्रतरं तत इति । ततः भवदभितापात् कृच्छ्रतरं कष्टतरं किं न किमपीत्यर्थः । तस्मादेतस्मिन्नाश्रमे चिरं तद्दर्शनपर्यन्तं वासं न समर्थये नेच्छामि इह वासे मृगसंघपीडां सोढ्वा स्थातव्यम् । इत्वावस्थाने स्वाश्रममृगाणां स्वसंनिधौ हनने तव वैमनस्यं स्यात् । तच्च ममानिष्टम् अतोऽन्यत्र त्वदसंनिधाने मृगान् हनिष्यामीत्यर्थः, इत्युवाचेति पूर्वेणान्वयः ॥ २१ ॥

२२-२३ ] ति० टी०—यदेवमतः—एतस्मिन्निति । चिरं चिरकालं वासं न समर्थये नेच्छामि । मृगसंघवधं विना स्थातुमशक्यं तद्वधेन च भवतां पीडेत्याशयः । उपरममुपरम्य क्वचित् 'उपरम्य' इत्येव पाठः । संध्यामुपागमत्संध्यां वन्दितुमुपागतवान् ॥ २२ ॥ २३ ॥

रा० टी०—मृगकर्मकवधवचनश्रवणानन्तरं तूष्णींभावादिना मृगवधस्य मुनेरनभिप्रेतत्वं विज्ञायाह—एतस्मिन्निति । एतस्मिन् मृगोपद्रुते आश्रमे चिरं वासं न समर्थये । उपरममतिनिवृत्तचित्तं तं महर्षिमेवमुक्त्वा रामः संध्यामुपागमत् संध्याकालः प्राप्तोदित्यर्थः ॥ २२ ॥

रा० टी०—अन्वास्येति । पश्चिमां संध्यामन्वास्य विधिवदुपास्य तत्र सुतीक्ष्णस्य आश्रमे वासमकल्पयत् ॥ २३ ॥

गो० टी०—तमिति । वरदमित्यनेन मुनिस्तथैवानुज्ञातवानिति गम्यते । सन्ध्यामुपागमत् सन्ध्यामुद्दिश्य सरस्तीरं गतवानित्यर्थः । पश्चिमां सन्ध्यामन्वास्य अत्यन्तसंयोगे द्वितीया । यावत्सन्ध्यं जलतीरे जपन् स्थित्वेत्यर्थः । तत्राश्रमे वासमकल्पयदित्यनेन प्रातर्जिगमिषा जातेति व्यज्यते । अन्यत्र गत्वा मृगनिरासश्च रावणं प्रति मारीचानुवादादवगन्तव्यः ॥ २२ ॥ २३ ॥

२४ ] ति०—टी०—संध्यानिवृत्तौ रजनीमभ्यवहारार्हां समीक्ष्येति यावत् ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे सप्तमः सर्गः ॥ ७ ॥

रा० टी०—तत इति । संध्यानिवृत्तौ सत्यां रजनीं रात्रिं समीक्ष्य महात्मा सुतीक्ष्णः तापसयोग्यमन्नं पुरुषर्षभाभ्यां ताभ्यां रामलक्ष्मणाभ्यां सुसत्कृत्य ददौ ॥ २४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावरण्यकाण्डे सप्तमः सर्गः ॥ ७ ॥

गो० टी०—तत इति । शुभं भक्त्युपनीतत्वेन पावनं तापसभोज्यं फलमूलादि अन्नम् अदनीयं स्वयं नतु शिष्यमुखेन सुसत्कृत्य अर्घ्यपाद्यादिना संपूज्य महात्मा तत्र परमपुरुषत्वज्ञानवान् सन्ध्यानिवृत्तौ सन्ध्याकर्मावसाने रजनीमवेक्ष्य ददौ रजनीभक्ष्यानुसारं ददावित्यर्थः । सीता तु रामभुक्तशेषं भुक्तवतीत्याशयः ॥ २४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने सप्तमः सर्गः ॥ ७ ॥

१ ] ति० टी०—परिणाम्यातिवाह्य ॥ १ ॥

१ अशननिवृत्तेति गो. पाठः । २ उक्त्वा वरदमिति गो. उक्तोपरममिति रा. पाठः । ३ भोज्यमिति गो. पाठः । ४ अवेक्ष्येति गो. पाठः ।

उत्थाय च यथाकालं राघवः सह सीतया । उपस्पृश्य सुशीतेन तोयेनोत्पलगन्धिना ॥ २ ॥
अथ तेऽग्निं सुरांश्चैव वैदेही रामलक्ष्मणौ । काल्यं विधिवदभ्यर्च्य तपस्विशरणे वने ॥ ३ ॥
उदयन्तं दिनकरं दृष्ट्वा विगतकल्मषाः । सुतीक्ष्णमभिगम्येदं श्लक्ष्णं वचनमब्रुवन् ॥ ४ ॥
सुखोषिताः स्म भगवंस्त्वया पूज्येन पूजिताः । आपृच्छामः प्रयास्यामो मुनयस्त्वरयन्ति नः ॥ ५ ॥
त्वरामहे वयं द्रष्टुं कृत्स्नमाश्रममण्डलम् । ऋषीणां पुण्यशीलानां दण्डकारण्यवासिनाम् ॥ ६ ॥
अभ्यनुज्ञातुमिच्छामः सहैभिर्मुनिपुंगवैः । धर्मनित्यैस्तपोदान्तैर्विशिखैरिव पावकैः ॥ ७ ॥
अविषह्यातपो यावत्सूर्यो नातिविराजते । अमार्गेणागतां लक्ष्मीं प्राप्येवान्वयवर्जितः ॥ ८ ॥
तावदिच्छामहे गन्तुमित्युक्त्वा चरणौ मुनेः । ववन्दे सहसौमित्रिः सीतया सह राघवः ॥ ९ ॥
तौ संस्पृशन्तौ चरणावुत्थाप्य मुनिपुंगवः । गाढमाश्लिष्य सस्नेहमिदं वचनमब्रवीत् ॥ १० ॥

रा० टी०—सुतीक्ष्णकृतसत्कारानन्तरकालिकं रामवृत्तान्तमाह—राम इति । सुतीक्ष्णेनाभिपूजितो रामस्तु तत्र सुतीक्ष्णाश्रमे निशां परिणाम्य शयित्वा प्रभाते प्रत्यबुध्यत ॥ १ ॥

गो० टी०—अथ सुतीक्ष्णाज्ञया रामस्याश्रममण्डलं प्रति प्रस्थानमष्टमे—रामस्त्वित्यादि । परिणाम्य अतिवाह्य प्रभाते उषःकाले ॥ १ ॥

२ ] ति० टी०—उपस्पृश्य स्नात्वा । उत्पलगन्धिनोत्पलगन्धवता ॥ २ ॥

रा० टी०—उत्थायेति । सीतया सह राघवः यथाकालमुत्थाय उत्पलगन्धिना तोयेन उपस्पृश्य स्नात्वा अवर्ततेति शेषः । 'उपास्पृशत्' इति भूषणपाठः तत्पक्षे क्रियाशेषस्य न प्रयोजनम् ॥ २ ॥

गो० टी०—उत्थायेति । सह सीतयेत्यनेन पूर्वमेव सौमित्रिः स्नात इति व्यज्यते । उपास्पृशत् स्नातवान् 'स्नानाचान्त्योरुपस्पर्शः' इति बाणः । सुशीतेनेत्युष्णोदकव्यावृत्तिः उत्पलगन्धिनेत्यनेन तटाकस्नानं सूच्यते ॥ २ ॥

३–६ ] ति० टी०—काल्यं यथाकालप्राप्तमित्यभ्यर्चनक्रियाविशेषणम् ॥ ३–६ ॥

रा० टी०—अथेति । काल्ये प्रातःकाल्ये वने वैदेह्यादयः अग्निं सुरांश्च विधिवदभ्यर्च्य उदयन्तं दिनकरं दृष्ट्वा सुतीक्ष्णमभिगम्य तत्संमुखे प्राप्य अब्रुवन् । श्लोकद्वयमेकान्वयि ॥ ३ ॥ ४ ॥

गो० टी०—अथेति । अग्निमित्येकवचनेन एकाग्नित्वावगमात् त्रेताग्निरिदानीमिति गम्यते । सुरान् नारायणम् । सह पत्न्या विशालाक्ष्या नारायणमुपागमदित्ययोध्याकाण्डोक्तेः । परिवारापेक्षया बहुवचनम् । काल्यं यथाकालप्राप्तं यथा तथा देशानुगुणपूजाकथनाय तपस्विशरण इत्युक्तम् । उदयन्तम् उद्यन्तम् अनेन होमानन्तरमादित्योपस्थानोक्त्या अनुदितहोमपक्षसूचनात् कात्यायनसूत्रक्रमेण राघवाणामनुष्ठानमिति गम्यते ॥ ३ ॥ ४ ॥

रा० टी०—तद्वचनाकारमाह—सुखेति । पूज्येन सर्वैः पूजनीयेन त्वया पूजिताः सत्कृताः सुखोषिताः सुखं निवासिता वयम् आपृच्छामः गमनाय प्रार्थयामः, तत्र हेतुः मुनयो नोऽस्मांस्त्वरयन्ति अतः प्रयास्यामः ॥ ५ ॥

रा० टी०—त्वरामहे इति । पुण्यशीलानामृषीणां कृत्स्नमाश्रममण्डलं द्रष्टुं वयं त्वरामहे ॥ ६ ॥

गो० टी०—सुखोषिता इत्यादित्रिश्लोक्येकान्वया । आपृच्छामः आपृच्छामहे परस्मैपदमार्षम् । अभ्यनुज्ञातुमिति भावे तुमुन् । त्वत्कर्तृकं गमनानुज्ञानं प्रार्थयामहे इत्यर्थः । मुनयः सहवासयोग्या इत्याह—धर्मनित्यैरित्यादि । धर्मनित्यैर्नित्यधर्मैः तपोभिर्दान्तैः निगृहीतेन्द्रियैः तपो हीन्द्रियनिग्रहहेतुः विशिखैः विगतज्वालैः 'अर्चिर्हेतिः शिखा स्त्रियाम्' इत्यमरः । गुप्तमाहात्म्यैरित्यर्थः ॥ ५–७ ॥

७ ] ति० टी०—अभ्यनुज्ञातुमिच्छामस्त्वत्कर्तृकं गमनानुज्ञानं प्रार्थयामः । विशिखैर्विधूमैः ॥ ७ ॥

रा० टी०—अभीति । विशिखैर्धूमरहितैः पावकैरिव एभिर्मुनिपुङ्गवैः सह अभ्यनुज्ञातुं त्वदाज्ञां ग्रहीतुमिच्छामः ॥ ७ ॥

८–१० ] ति० टी०—अविषह्यातपः सोढुमशक्यातपो यावन्नात एवातिविराजते तावद्गन्तुमिच्छाम इत्यन्वयः । अमार्गेणान्यायेनागतां लक्ष्मीमैश्वर्यं प्राप्यान्वयवर्जितोऽन्वयः संबन्धस्तद्विवर्जितः, गुरुसाधुजनसेवारहितो दुष्प्रसूर्विकुलज इव वा यावदविषह्यप्रतापो न ततः पूर्वं गन्तुमिच्छाम इत्यर्थः ॥ ८–१० ॥

रा० टी०—अयमेवाज्ञापनकाल इति बोधयन्नाह—अविषह्येति । अमार्गेण अन्यायेन आगतां लक्ष्मीं संपत्तिं प्राप्य अन्वयवर्जितः पूर्वं नित्यं लक्ष्मीसंबन्धशून्यः पुरुष इव अविषह्यातपः न विषह्यः आतपो यस्य स सूर्यो यावन्नातिविराजते तपतीत्यर्थः, तावदेव गन्तुमिच्छामहे इत्युक्त्वा मुनेः चरणौ ववन्दे । श्लोकद्वयमेकान्वयि ॥ ८ ॥ ९ ॥

रा० टी०—ताविति । चरणौ संस्पृशन्तौ तौ रामलक्ष्मणौ उत्थाप्य गाढमाश्लिष्य सस्नेहमिदं वचनमब्रवीत् ॥ १० ॥

१ स्थितेति गो. पाठः । २ उपास्पृशदिति गो. पाठः । ३ जलेनेति गो. पाठः । ४ आलिङ्ग्येति गो. पाठः ।

अरिष्टं गच्छ पन्थानं राम सौमित्रिणा सह । सीतया चानया सार्धं छाययेवानुवृत्तया ॥ ११ ॥
पश्याश्रमपदं रम्यं दण्डकारण्यवासिनाम् । एषां तपस्विनां वीर तपसा भावितात्मनाम् ॥ १२ ॥
सुप्राज्यफलमूलानि पुष्पितानि वनानि च । प्रशस्तमृगयूथानि शान्तपक्षिगणानि च ॥ १३ ॥
फुल्लपङ्कजखण्डानि प्रसन्नसलिलानि च । कारण्डवविकीर्णानि तटाकानि सरांसि च ॥ १४ ॥
द्रक्ष्यसे दृष्टिरम्याणि गिरिप्रस्रवणानि च । रमणीयान्यरण्यानि मयूराभिरुतानि च ॥ १५ ॥
गम्यतां वत्स सौमित्रे भवानपि च गच्छतु । आगन्तव्यं च ते दृष्ट्वा पुनरेवाश्रमं प्रति ॥ १६ ॥
एवमुक्तस्तथेत्युक्त्वा काकुत्स्थः सहलक्ष्मणः । प्रदक्षिणं मुनिं कृत्वा प्रस्थातुमुपचक्रमे ॥ १७ ॥
ततः शुभतरे तूणी धनुषी चायतेक्षणा । ददौ सीता तयोर्भ्रात्रोः खड्गौ च विमलौ ततः ॥ १८ ॥
आबध्य च शुभे तूणी चापे चादाय सस्वने । निष्क्रान्तावाश्रमाद्गन्तुमुभौ तौ रामलक्ष्मणौ ॥ १९ ॥
शीघ्रं तौ रूपसंपन्नावनुज्ञातौ महर्षिणा । प्रस्थितौ धृतचापासी सीतया सह राघवौ ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डेऽष्टमः सर्गः ॥ ८ ॥

---

गो० टी०–अविषह्येत्यादि । सूर्यः अविषह्यातपः असह्यातपः सन् यावन्नातिविराजते नात्यन्तमुद्गच्छति कथमिव अमार्गेणान्यायेनागतां लक्ष्मीम् ऐश्वर्यं प्राप्य अन्वयवर्जितः साधुसमागमवर्जितो दुष्प्रभुरिवाविषह्यातप इत्यन्वयः । तावदिच्छामहे गन्तुमित्यनेन रावणवधत्वरा व्यज्यते । अतो न हीनोपमादोषोऽपि ॥ ८–१० ॥

११ ] ति० टी०–अरिष्टं निरुपद्रवम् ॥ ११ ॥

रा० टी०–तद्वचनाकारमाह–अरिष्टमित्यादिभिः । छायया इव अनुवृत्तया अनुवर्तनशीलया सीतया सार्धमरिष्टं विघ्नरहितं पन्थानं त्वं गच्छ ॥ ११ ॥

गो० टी०–अरिष्टम् अनुपद्रवं रिषेः "तीषसह–" इति भावे निष्ठा । अनेनापि रावणविजयाभ्यनुज्ञा सूच्यते ॥ ११ ॥

१२] ति० टी०–आश्रमपदमिति । जातावेकवचनम्॥१२॥

रा० टी०–पश्येति । तपसा परमात्मविचारेण भावितः परिशीलितः आत्मा परमात्मा यैस्तेषां दण्डकारण्यवासिनामाश्रमपदं श्रमनिवर्तकं स्थानं पश्य ॥ १२ ॥

गो०टी०-तपोवनपदार्थान् कृतार्थयितुमाह-पश्येत्यादि१२

१३] ति० टी०–उक्तविशेषणविशिष्टानि वनानि सरांसि च द्रक्ष्यस इत्यन्वयः । शान्तपक्षिगणत्वं परस्परविरोधाभावात्१३

रा०टी०–सुप्राज्येति। सुप्राज्यानि बहुलानि फलमूलानि येषु तानि प्रशस्तमृगयूथानि प्रशस्तमृगसमूहविशिष्टानि वनानि १३

गो० टी०–स प्राज्येति । प्राज्यम् अदभ्रम् । 'प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु ' इत्यमरः ॥ १३ ॥

१४–१५]ति०टी०–कारण्डवैर्विकीर्णानि व्याप्तानि१४-१५

रा० टी०–प्रसन्नानि स्वच्छानि सलिलानि जलानि येषां तानि कारण्डवविकीर्णानि कारण्डवैर्जलकुक्कुटैः विकीर्णानि व्याप्तानि तटाकानि च सरांसि च । अत्र स्रोतोरहितानि तटाकानि तरसहितानि सरांसीति न पौनरुक्त्यम् ॥ १४ ॥

गो० टी०–कारण्डवो जलकुक्कुटः 'मद्गुः कारण्डवः प्लवः इत्यमरः ॥ १४ ॥

रा० टी०–गिरिप्रस्रवणानि गिरिनिर्झरान् च मयूराभिरुतानि रमणीयान्यरण्यानि च द्रक्ष्यसे। श्लोकत्रयमेकान्वयि॥१५॥

गो० टी०–रमणीयत्वादिना विशेषयितुं पुनरप्याह–रमणीयानीति । मयूराणामभिरुतानि येषु तानि गम्यतां त्वयेति शेषः। भवानिति राम उच्यते आश्रमं प्रतीति शेषः ॥ १५–१७ ॥

१६–१७ ] ति० टी०–ते त्वया सकलऋषीणामाश्रमान्दृष्ट्वा पुनरपि ममाश्रमं प्रत्यागन्तव्यमित्यर्थः ॥ १६ ॥ १७ ॥

रा० टी०–गम्यतामिति । तमुक्तसमूहं दृष्ट्वा आश्रमं प्रति पुनरागन्तव्यम् ॥ १६ ॥

रा०टी०–एवमिति। एवमुक्तः सुतीक्ष्णेनोपदिष्टः काकुत्स्थो रामः तथेत्युक्त्वा मुनिं प्रदक्षिणं कृत्वा प्रस्थातुमुपचक्रमे॥१७॥

१८ ] ति० टी०–ततो धनुरादिदानानन्तरं विमलौ निशितौ खड्गौ च ददौ ॥ १८ ॥

रा० टी०–तत इति । ततः प्रस्थानोपक्रमोत्तरकाले शुभतरे तूणी बाणसहितेषुधी धनुषी च खड्गौ च ततः तस्मिन्स्थले सीता भ्रात्रोर्भ्रातृभ्यां ददौ ॥ १८ ॥

गो० टी०–तत इति। ततः प्रस्थानोपक्रमानन्तरं विमलौ तत इति ततः धनुरादिदानानन्तरमित्यर्थः । ततः शुभतरे इत्यादिना अयमर्थोऽवगम्यते आश्रमप्रवेशे किमस्माकमायुधैरिति मन्यमाना सीता आयुधानि मुनिगृहे कुत्रचिन्निहितवती । अथ अमार्गेणेत्यादिरामवाक्येन अरिष्टं गच्छेत्यादिमुनिवाक्येन च तयोर्हृदयं विदित्वा स्वयमेवादाय पुनर्दत्तवतीति । अत एवोत्तरसर्गे स्वाशयं वक्ष्यति ॥ १८–२० ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्यानेऽष्टमः सर्गः ॥ ८ ॥

१९–२०]ति०टी०–चापे चापशब्दो द्विलिङ्गः॥१९॥२०॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डेऽष्टमः सर्गः ॥ ८ ॥

---

१ स प्राज्येति गो. पाठः । २ षण्डानीति रा. पाठः । ३ त्वया तातेति गो. पाठः । ४ ममेति गो. पाठः ५ चापौ चादाय सस्वनाविति गो. पाठः । ६ श्रीमन्ताविति गो. पाठः । ७ दीप्यमानौ स्वतेजसेति गो. पाठः । ८ चापौ ताविति गो. पाठः ।

## नवमः सर्गः ।

प्रोद्यतायुधमुत्साहिनं रामं दृष्ट्वा हिंसातो निविवर्तयिषुः सीता खड्गधारणात्तपसो विभ्रंश्य प्रापनरकं कंचिन्मुनिं निदर्शनीकृत्य सत्यधर्मविचारणे प्रेरयति ।

सुतीक्ष्णेनाभ्यनुज्ञातं प्रस्थितं रघुनन्दनम् । हृद्यया स्निग्धया वाचा भर्तारमिदमब्रवीत् ॥ १ ॥
अधर्मं तु सुसूक्ष्मेण विधिना प्राप्यते महान् । निवृत्तेन च शक्योऽयं व्यसनात्कामजादिह ॥ २ ॥
त्रीण्येव व्यसनान्यत्र कामजानि भवन्त्युत । मिथ्यावाक्यं तु परमं तस्माद्गुरुतरावुभौ ॥ ३ ॥
परदाराभिगमनं विना वैरं च रौद्रता । मिथ्यावाक्यं न ते भूतं न भविष्यति राघव ॥ ४ ॥

रा० टी०—आबध्येति । तूणी आबध्य सस्वने चापे च आदाय गन्तुमाश्रमादुभौ निष्क्रान्तौ ॥ १९ ॥

रा० टी०—शीघ्रमिति । धृतचापासी रामलक्ष्मणौ महर्षिणा शीघ्रमाज्ञातौ ॥ २० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डेऽष्टमः सर्गः ॥ ८ ॥

१ ] ति० टी०—राक्षसवधप्रतिज्ञां पुनरुक्तां कारयितुं तेजोऽद्वयर्थं च राक्षसवधमापाततो निषेधन्ती सीताऽब्रवीत् । सीतेति शेषः । हृद्यया युक्तिमत्त्वेन हृदयंगमया, स्निग्धया स्नेहप्रवृत्तया ॥ १ ॥

रा० टी०—प्रस्थानानन्तरकालिकं सीतोक्तं वर्णयन्नाह—सुतीक्ष्णेनेति । प्रस्थितं रघुनन्दनं भर्तारं हृद्यया मनोहरया स्निग्धया मधुरया वाचा इदमब्रवीत्, सीतेति शेषः ॥ १ ॥

गो० टी०—अथ सीता वीरपत्नीत्वेन धनुर्मुष्टिग्रहणविशेषेण सायुधतया सन्नद्धं पतिमालोक्य यदि त्वं सायुधो राक्षसभूयिष्ठे देशे प्रविष्टः स्याः तर्हि तैः साकं विरोधः स्यात्, तेनावयोर्विश्लेषः स्यात्, तेन भवतो महान् क्लेशः स्यात्, अतो निधायायुधं वनेऽस्माभिर्गन्तव्यमित्याह नवमे—सुतीक्ष्णेनेत्यादि । अभ्यनुज्ञातम् अरिष्टं गच्छ पन्थानमिति रावणवधाभिप्रायेणानुज्ञातं हृद्यया युक्तियुक्तत्वेन हृदयंगमया स्निग्धया स्नेहप्रवृत्तया । अनेन वक्ष्यमाणवचने स्नेह एव मूलमित्युक्तम् । रामेण ऋषिभ्यः प्रतिज्ञाकरणं रामप्रतिज्ञायाः दुरावरत्वं च बहुशो दृष्टवत्यपि राक्षसैर्वैरे भर्तुः स्वविरहद्वारा महान् क्लेशो भवेदिति प्रेमान्धतया तथोक्तवतीति भावः ॥ १ ॥

२ ] ति० टी०—अधर्ममिति । यद्यपि भवान्महान्महापुरुषोऽथापि सुसूक्ष्मेण विधिना सूक्ष्मेण मार्गेण विचारणे सति भवानधर्मं तु प्राप्यते प्राप्नोति । छान्दसः श्यन् । अतिदुर्बलमृगवधप्रतिज्ञया वनप्रवेशे सतीत्यर्थः। वर्तमानसामीप्ये लट् । अयमधर्मस्तु कामजाद्व्यसनाद्धिनिवृत्तेन त्वया निवर्तयितुं शक्यः ॥ २ ॥

रा० टी०—तद्वचनाकारमाह—य इति । सुसूक्ष्मेण अतिविचारलभ्येन विधिना यो महान् धर्मः प्राप्यते स धर्मनिवृत्तेन पापाचरणाद्रहितेन पुरुषेण कामजाद्व्यसनाच्छक्यः रक्षितुमिति शेषः । 'अधर्मं तु सुसूक्ष्मेण विधिना प्राप्यते महान्' इति भट्टपाठः ॥ २ ॥

गो० टी०—किं तदुक्तं तत्राह—अयं धर्म इति । महानयं धर्मः त्वयाऽनुष्ठीयमानो मुनिधर्मः सुसूक्ष्मेण विधिना मार्गेण विचारेण प्राप्यते धर्मकामैरिति शेषः । सूक्ष्मविधिमेवाह—निवृत्तेनेति । इह वने कामजात् इच्छाकृताद्व्यसनान्निवृत्तेन पुरुषेणायं धर्मः शक्यः संपाद्यः । व्यसनमिति जात्येकवचनम् ॥२॥

३ ] ति० टी०—किं तत्कामजं व्यसनं कथमयमधर्मो यस्तन्निवृत्त्या निवर्तनीय इत्याशङ्कायामाह—त्रीण्येवेति । कानि त्रीणीत्यतः—मिथ्येति । स्वदेहस्त्रीपुत्रादिरागवशान्मिथ्यावाक्यप्रवृत्तिः पुंसस्तत्परमकं व्यसनस्वरूपं तदनन्तरं ततोऽपि गुरुतरावत्यन्तगुरुव्यसनभूतौ ॥ ३ ॥

रा० टी०—व्यसनमेव निरूपयन्त्याह—त्रीणीति । कामजानि इच्छाजनितानि व्यसनानि त्रीण्येव भवन्ति । तत्स्वरूपमाह—परमं परा अत्युत्कृष्टा मा अर्थाभावेऽपि मनोहारिका संपत्तिर्यस्मिंस्तन्मिथ्यावाक्यमेकं व्यसनं, तस्मादपि गुरुतरौ उभौ वक्ष्यमाणौ ॥ ३ ॥

गो० टी०—किं तद्व्यसनं तत्राह—त्रीण्येवेति। अत्र लोके उत अत्यर्थं कामजानि रागकृतानि त्रीण्येव व्यसनानि भवन्ति । कानि तानि त्रीणीत्यत्राह—मिथ्यावाक्यमित्यादि । मिथ्यावाक्यं परमकं प्रथममित्यर्थः, सर्वेभ्यो व्यसनेभ्यः श्रेष्ठमित्यर्थः स्वार्थे कः । तस्मादपि व्यसनात् गुरुतरावुभौ व्यसनविशेषौ, तावाह—परदारेत्यादिना । परदाराभिगमनं परदाराभिमर्शनं वैरं विना रौद्रता हिंसकता चेति ॥ ३ ॥

४ ] ति० टी०—कौ तौ तत्राह—परदारेति । विना वैरं रौद्रता रौद्रभावावलम्बनं मृगाणामत्यन्तदुर्बलत्वेन तेषु वैरप्रसक्त्यभावादिति भावः । एवं व्यसनत्रयं निरूप्य प्रकृतेऽधर्मप्राप्तिपरिहाराय व्यसनं परिशेषयितुमाह—मिथ्येति ॥ ४ ॥

रा० टी०—तावेव बोधयन्त्याह—परेति । परदारैः अन्यस्त्रीभिः अभिगमनं संगमः वैरं विना रौद्रता क्रूरकर्मकारित्वं

१ अयं धर्म इति गो. यो धर्म इति रा. पाठः । २ अत्रेति गो. पाठः । ३ परमकमिति गो. पाठः ।

कुतोऽभिलषणं स्त्रीणां परेषां धर्मनाशनम् । तव नास्ति मनुष्येन्द्र न चाभूत्ते कदाचन ॥ ५ ॥
मनस्यपि तथा राम न चैतद्विद्यते क्वचित् । स्वदारनिरतश्चैव नित्यमेव नृपात्मज ॥ ६ ॥
धर्मिष्ठः सत्यसंधश्च पितुर्निर्देशकारकः । [ सत्यसंध महाभाग श्रीमँल्लक्ष्मणपूर्वज । ]
त्वयि धर्मश्च सत्यं च त्वयि सर्वं प्रतिष्ठितम् ॥ ७ ॥
तच्च सर्वं महाबाहो शक्यं वोढुं जितेन्द्रियैः । तव वश्येन्द्रियत्वं च जानामि शुभदर्शन ॥ ८ ॥
तृतीयं यदिदं रौद्रं परप्राणाभिहिंसनम् । निर्वैरं क्रियते मोहात्तच्च ते समुपस्थितम् ॥ ९ ॥

---

च। तत्र व्यसनद्वयस्यासंभवमाह–हे राघव! ते वाक्यं मिथ्या न भूतमत एव न भविष्यति ॥ ४ ॥

गो० टी०–एवं सामान्येन व्यसनरूपमुक्त्वा प्रकृते परिहार्यत्वेन वक्तव्यं व्यसनं दर्शयितुमितरपरिशेषमाह–मिथ्येत्यादिना। अत्र भूतभविष्यतोर्वर्तमानस्यान्तर्भावः। कुत इति परेषां संबन्धिनीनां स्त्रीणां धर्मनाशनमधर्मकरं च अभिलाषणमभिलाषः कुतः असंभावित इत्यर्थः। धर्मनाशनशब्देन गुरुतरशब्दोक्तातिशयो दर्शितः । मिथ्यावाक्यमधर्मकरम् इदमुभयकरमिति भावः॥ ४ ॥

५ ] ति० टी०–परदाराभिमर्शनमपि त्वयि नास्तीत्याह–कुत इति। कुतोऽपि हेतोरित्यर्थकं, कुत इति पूर्वान्वयि। धर्मनाशनं परेषां स्त्रीणामभिलषणं तत्पूर्वकं तत्स्पर्शादि तव नास्ति वर्तमानकाले नाभूत्पूर्वं च ततः परं न भविष्यति च॥ ५ ॥

रा० टी०–कुत इति। परेषामन्येषां स्त्रीणां धर्मनाशनमभिलषणं मनस्यपि कुतः कस्मादपि हेतोः कदाचन क्वचित्कस्मिँश्चिद्देशे तव नाभूत् न वास्ति न विद्यते भविष्यति वर्तमानसामीप्य इति भविष्यति लट् अत एव हे ! नृपात्मज त्वं नित्यमेव स्वदारनिरतः। श्लोकद्वयमेकान्वयि ॥ ५ ॥ ६ ॥

गो० टी०–कुत इत्यादिना परदाराभिलाष एव नास्ति कुतस्तदभिगमनमित्युक्तं कालत्रयेऽपि तदभाव इति विशेषयति–तवेति। मनुष्येन्द्रेति हेतुगर्भं संबोधनं तव परदाराभिलाषणमिदानीं नास्ति कदाचन ते तन्नाभूत् हे राम। एतत् अभिलाषणं ते क्वचित्सुन्दरेष्वपि परदारेषु मनसा संकल्पेनापि न विद्यते। अनेन भविष्यत्कालेऽपि नास्तीत्युक्तम् । तथेति समुच्चये चोऽवधारणे ॥ ५ ॥

६ ] ति० टी०–किंबहुना मनस्यप्येतन्न विद्यते। अनेनेच्छाया अपि निरासः। तस्यैवोपपादनम्–स्वदारेति ॥ ६ ॥

गो०टी०–उक्तव्यसनद्वयाभावे बहून् हेतून् दर्शयति–स्वदारेत्यादिना। हे नृपात्मज! त्वं नित्यमेव स्वदारनिरतः धर्मिष्ठश्च अत एव सत्यसन्धः सत्यप्रतिज्ञः तत्र निदर्शनं पितुर्निर्देशकारकः६

७ ] ति० टी०–यतस्त्वं धर्मिष्ठत्वादिगुणः, अतस्त्वयि धर्मः प्रतिष्ठितः सर्वं सत्यं च त्वयि प्रतिष्ठितम् ॥ ७ ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–धर्मिष्ठ इति। धर्मिष्ठः वेदोक्तनिखिलधर्मविशिष्टः अत एव सत्यसंधश्चासीति शेषः, अत एव पितुर्निर्देशकारकोऽसि अत एव सर्वं साङ्गं त्वयि धर्मः त्वयि सत्यं च प्रतिष्ठितम् ॥ ७ ॥

गो० टी०–उक्तानुवादपूर्वकं भर्तारं स्तौति–सत्यसन्धेति। महाभाग महाधर्मन्! श्रीमन् निरवधिकैश्वर्य! लक्ष्मणपूर्वज वैराग्ये लक्ष्मणादप्यधिक! त्वयि सत्यं प्रतिष्ठितम्, धर्मश्च प्रतिष्ठितः, अन्यत्सर्वमैश्वर्यवैराग्यादिकं च त्वयि प्रतिष्ठितं सुस्थिरम् ॥७॥

८ ] ति० टी०–ननूक्तव्यसने मयि न भविष्यत इति कथं तव निर्णयोऽत आह––तच्चेति। वोढुं शक्यमग्रेऽपि तत्परिपालनं कर्तुं शक्यं यतस्तत्परिपालनकारणं जितेन्द्रियत्वं त्वय्यस्ति, अतो न भविष्यत इति निर्णयः ॥ ८ ॥

रा० टी०–ननूक्तयोर्व्यसनयोरसत्वमपि कथं निश्चितमित्यत आह–तदिति। हे महाबाहो! जितेन्द्रियैः पुरुषैः सर्वं साङ्गं तत्पूर्वोक्तं सत्यं धर्मश्च वोढुं नित्यं धारयितुं शक्यम्। ननु मयि कथं वश्येन्द्रियत्वनिश्चय इत्यत आह–तव तु भूतानां चिन्तकानां पुरुषाणां वश्येन्द्रियत्वं वश्यानि इन्द्रियाणि येषां तत्वं, एतेन यदि त्वच्चिन्तनकर्तॄणां वश्येन्द्रियत्वं तर्हि तव वश्येन्द्रियत्वं किं वक्तव्यमिति काव्यार्थापत्तिरलंकारो ध्वनितः, तेन वश्येन्द्रियत्वं विना व्यसनाभावस्यात्यन्ताभावः सूचितः॥८॥

गो० टी०–तृतीयव्यसनसद्भावं वक्तुमुक्तव्यसनद्वयाभावं स्वानुभवसिद्धत्वेन द्रढयति–तच्चेति। हे महाबाहो ! जितेन्द्रियैः धर्तुं शक्यं तत्पूर्वोक्तं धर्मिष्ठत्वादिकं सर्वं तव वश्येन्द्रियत्वं च जानामि शुभदर्शन! तत्सद्भावे तव दर्शनमेव प्रमाणम् "रूपमेवास्यैतन्महिमानं व्याचष्टे" इति श्रुतेः ॥ ८ ॥

९ ] ति० टी०–तृतीयं तु व्यसनं प्रसक्तमित्याह–तृतीयमिति। यन्मोहान्निर्वैरं परप्राणाभिहिंसनं क्रियते तदिदं रौद्राख्यं मृगयारूपं तृतीयं व्यसनं ते तच्च तत्तु तत्सदृशं तु समुपस्थितम्। राक्षसैः स्वापराधाकरणान्निर्वैरत्वमस्येति बोध्यम्॥९॥

रा० टी०–तृतीयव्यसनस्य प्रसक्तिं दर्शयन्ती आह–तृतीयमिति। यद्रौद्रं भयंकरं निर्वैरं निर्गतं वैरं यस्मिन् तत्परप्राणाभिहिंसनं तृतीयं व्यसनं मोहादविवेकाज्जनैः क्रियते तदिदं व्यसनं ते समुपस्थितं प्रसङ्गात्प्राप्तम् ॥ ९ ॥

गो० टी०–एवं व्यसनद्वयरहितेन त्वया तृतीयव्यसनमपि

---

१ लाषणमिति गो. पाठः। २ त्वं चेति गो. पाठः। ३ अर्धमेतदधिकं गो. पाठे। ४ सत्यमिति रा. पाठः। ५ धर्तुमिति गो. पाठः। ६ जानामीति गो. पाठः।

प्रतिज्ञातस्त्वया वीर दण्डकारण्यवासिनाम् । ऋषीणां रक्षणार्थाय वधः संयति रक्षसाम् ॥ १० ॥
एतन्निमित्तं वचनं दण्डका इति विश्रुतम् । प्रस्थितस्त्वं सह भ्रात्रा धृतबाणशरासनः ॥ ११ ॥
ततस्त्वां प्रस्थितं दृष्ट्वा मम चिन्ताकुलं मनः । त्वद्वृत्तं चिन्तयन्त्या वै भवेन्निःश्रेयसं हितम् ॥ १२ ॥
नहि मे रोचते वीर गमनं दण्डकान्प्रति । कारणं तत्र वक्ष्यामि वदन्त्याः श्रूयतां मम ॥ १३ ॥
त्वं हि बाणधनुष्पाणिर्भ्रात्रा सह वनं गतः । दृष्ट्वा वनचरान्सर्वान्कच्चित्कुर्याः शरव्ययम् ॥ १४ ॥
क्षत्रियाणामिह धनुर्हुताशस्येन्धनानि च । समीपतः स्थितं तेजोबलमुच्छ्रयते भृशम् ॥ १५ ॥

---

कथंचित्परिहर्तव्यमित्याशयेनाह–तृतीयमिति । निर्वैरं यथा भवति तथा परप्राणाभिहिंसनरूपं यदिदं रौद्रं रौद्राख्यं तृतीयं महद्व्यसनं पामरैः क्रियते तच्च तत्तु ते समुपस्थितं त्वया कर्तुमुद्युक्तमित्यर्थः ॥ ९ ॥

१० ] ति० टी०–कुतोऽस्याधर्मस्य मम प्राप्तिरत आह–प्रतिज्ञात इति ॥ १० ॥

रा० टी०–तत्प्राप्तिमुपपादयन्ती आह–प्रतिज्ञात इति । हे वीर! ऋषीणां रक्षणार्थाय संयति संग्रामे रक्षसां वधः प्रतिज्ञातः एतन्निमित्तमेव दण्डका इति नाम्ना विश्रुतं ख्यातं वनं भ्रात्रा सह प्रस्थितः । श्लोकद्वयमेकान्वयि ॥ १० ॥ ११ ॥

गो० टी०–कथमुद्युक्तमित्यत्राह–प्रतिज्ञात इति ॥ १० ॥

११ ] ति० टी०–ननु प्रतिज्ञामात्रेण कथमधर्मप्राप्तिस्तत्राह–एतदिति । प्रतिज्ञातरक्षोवधार्थमित्यर्थः । दण्डका इति विश्रुतं प्रसिद्धम् वनमित्यर्थः । प्रस्थितेन त्वया पूर्वप्रतिज्ञातत्वात्तत्कर्तव्यमेवेति तत्प्रसक्तिरिति भावः ॥ ११ ॥

गो० टी०–न केवलमृष्यभ्यर्थनया प्रतिज्ञातं प्रथमसंकल्पश्च तव तथैवेत्याह–एतन्निमित्तमिति । दण्डका इति विश्रुतं वनं प्रति त्वं भ्रात्रा सह धृतबाणशरासनः सन् प्रस्थितः केवलेनात्मकार्येणेत्यादिना भवतैवोक्तत्वादिति भावः ॥ ११ ॥

१२ ] ति० टी०–ततो हेतोस्त्वां प्रस्थितं दृष्ट्वा त्वद्वृत्तं सत्यप्रतिज्ञत्वरूपं चरित्रं दृष्ट्वा तव निःश्रेयसं पारलौकिकं सुखं हितमिहलोकसुखं चिन्तयन्त्या मम मनश्चिन्ताकुलं भवेद्भवति रक्षसां बलवत्त्वेन तेभ्योऽनिष्टसंभावनयैहिकसुखभङ्गोऽपि संभावित इति भावः ॥ १२ ॥

रा० टी०–तत इति । ततः प्रतिज्ञाकरणानन्तरं प्रस्थितं त्वां दृष्ट्वा मम मनः चिन्ताकुलमभवदिति शेषः, अतस्त्वद्वृत्तं राक्षसवधप्रतिज्ञावृत्तान्तं चिन्तयन्त्या मम हितं निःश्रेयसं कल्याणं भवेत्, मत्प्रार्थनां स्वीकुर्वित्यर्थः । एतेन राक्षसमात्रवधप्रतिज्ञाश्रवणात् अनपराधिविभीषणादिवधविषयकसंशयो जात इति व्यञ्जितम् । नच 'तपस्विनां रणे शत्रून् हन्तुमिच्छामि राक्षसान्' इति प्रतिज्ञावाक्ये तपस्विशत्रुत्वविशिष्टराक्षसवधप्रतिज्ञया विभीषणादिव्यावृत्तिः सिद्धैवेति संशयस्य नावकाश इति वाच्यम्, शत्रुभ्रातृत्वादेः शत्रुत्वाभासस्य संशयबीजत्वात् । नच प्रतिज्ञावाक्ये रण इति सप्तम्यन्तस्योपादानात् रणे आगतान् राक्षसान् हन्तुमिच्छामीत्यर्थात् कथं विभीषणादिसंग्रहसंशय इति वाच्यम्, रणे विद्यमानोऽहं हन्तुमिच्छामीत्यर्थस्यापि संभवात् विभीषणानुयायिनामपि बहूनां रावणाधीनत्वात् रणागमनसंभवाच्च यत्नविशेषमन्तरा विभीषणागमनस्यापि दुर्वारत्वाच्चेति दिक् ॥ १२ ॥

गो० टी०–ततः किमित्यत्राह–ततस्त्वामिति । प्रस्थितं त्वां दृष्ट्वा त्वद्वृत्तं सत्यप्रतिज्ञत्वस्वदारैकनिरतत्वादिकं च दृष्ट्वा त्वन्निःश्रेयसं तव सौख्यं हितं तत्साधनं च चिन्तयन्त्या मम मनश्चिन्ताकुलं भवेद्धि भवति हि भवान् सत्यप्रतिज्ञत्वेन रक्षोवधान्न निवर्तेत निर्वैरं परहिंसनं च न करोषि यस्य कस्यचिद्वैरमूलस्य करणे तदहमेव स्यां, मद्विरहं च त्वमेकदारव्रतनिरतः न सोढुमर्हसि अतः कथमिदं संपत्स्यत इति भावः ॥ १२ ॥

१३ ] ति० टी०–यदेवमतः–नहि मे इति । कारणं तद्गमनारुचौ । ममेति सकाशादिति शेषः ॥ १३ ॥

रा० टी०–तदेव बोधयितुकामाह–नेति । हे वीर ! दण्डकान् प्रति गमनं मे न रोचते । तत्र कारणं वक्ष्यामि वदन्त्याः मम श्रूयताम् ॥ १३ ॥

गो० टी०–तर्हि क उपायस्ते प्रतिभातीत्यपेक्षायां रामपक्षस्यैव स्वपक्षत्वात्तत्पक्षं स्थूणानिखननन्यायेन दृढयितुं पक्षान्तरमाह–नहीति । मम मत्तः ॥ १३ ॥

१४ ] ति० टी०–हि यतस्त्वं वनं गतः सर्वान्वनचरान्राक्षसान्दृष्ट्वा शरव्ययं कच्चित्कुर्याः करिष्यसि । इदमेव हिंसालक्षणाधर्मप्राप्तौ कारणम् ॥ १४ ॥

रा० टी०–तद्वचनप्रकारमाह–त्वमिति । बाणधनुष्पाणिः भ्रात्रा सह त्वं वनं दण्डकारण्यं गतः प्राप्तः । ननु तत्र को दोष इत्यत आह–सर्वान् वनचरान् दृष्ट्वा कच्चित् कदाचित् राक्षसवधप्रतिज्ञास्मरणसमये इत्यर्थः, शरव्ययं शरेण व्ययमनपराधिराक्षसवधं त्वं कुर्याः चेत्तन्मे न रोचते इति शेषः, एतेन तन्न कर्तव्यमिति ध्वनितम् ॥ १४ ॥

गो० टी०–त्वं हीति । शरव्ययं शरमोक्षं कच्चिदिति कामप्रवेदने ॥ १४ ॥

१५ ] ति० टी०–शरमोक्षमकृत्वाऽवस्थानं त्वशक्यमित्याह–क्षत्रियाणामिति । समीपतः स्थितं धनुर्यत्समीपस्थितं तस्य पुंसस्तेजोबलं तेजस आधिक्यं करोति । यथ वह्नेस्तेजस आधिक्यमिन्धनानि कुर्वते ॥ १५ ॥

---

१ च वनमिति गो० पाठः ।

पुरा किल महाबाहो तपस्वी सत्यवाञ्छुचिः । कस्मिंश्चिदभवत्पुण्ये वने रतमृगद्विजे ॥ १६ ॥
तस्यैव तपसो विघ्नं कर्तुमिन्द्रः शचीपतिः । खड्गपाणिरथागच्छदाश्रमं भटरूपधृक् ॥ १७ ॥
तस्मिंस्तदाश्रमपदे [2]निहितः खड्ग उत्तमः । स न्यासविधिना दत्तः पुण्ये तपसि तिष्ठतः ॥ १८ ॥
स तच्छस्त्रमनुप्राप्य न्यासरक्षणतत्परः । वने तु [3] [4]विचरत्येव रक्षन्प्रत्ययमात्मनः ॥ १९ ॥
यत्र गच्छत्युपादातुं मूलानि च फलानि च । न विना याति तं खड्गं न्यासरक्षणतत्परः ॥ २० ॥
नित्यं शस्त्रं परिवहन्क्रमेण स तपोधनः । चकार रौद्रीं स्वां बुद्धिं त्यक्त्वा तपसि निश्चयम् ॥ २१ ॥
ततः स [5]रौद्राभिरतः प्रमत्तोऽधर्मकर्षितः । तस्य शस्त्रस्य संवासाज्जगाम नरकं मुनिः ॥ २२ ॥
एवमेतत्पुरावृत्तं शस्त्रसंयोगकारणम् । अग्निसंयोगवद्धेतुः शस्त्रसंयोग उच्यते ॥ २३ ॥

---

रा० टी०—ननु शस्त्रधारिणां प्रायो विवेकध्वंसान्मृगयादिष्विवानपराधिवधेऽपि को दोष इत्यत आह—क्षत्रियाणामिति । क्षत्रियाणां समीपतः स्थितं धनुः हुताशस्य वह्नेः समीपतः स्थितानि इन्धनानि च भृशमत्यन्तं तेजोबलं तेजसः इतरप्रतापस्य बलमाच्छादकतेज एव उच्छ्रयते वर्धयति नतु विवेकं विनाशयतीत्यर्थः, एतेन शस्त्रग्रहणात् क्षत्रियेतराणामेव विवेकध्वंस इति सूचितम् ॥ १६ ॥

गो० टी०—तर्हि शरव्ययं न करोमीत्यत्राह—क्षत्रियाणामिति । क्षत्रियाणां समीपतः स्थितं धनुः तेजोरूपं बलं भृशं उच्छ्रयते वर्धयति, हुताशस्य समीपस्थितानीन्धनानि च तेजोबलमुच्छ्रयन्ते । दृष्टान्तालंकारः ॥ १६ ॥

१६ ] ति० टी०—अत्रेतिहासमाह—पुरेति । रतमृगद्विजे इति उपशान्तमृगपक्षिके तपस्तेप इति शेषः ॥ १६ ॥

रा० टी०—तत्रेतिहासं कथयन्ती आह—पुरेति । रतमृगद्विजे रताः मृगाः द्विजाः पक्षिणश्च यस्मिन् तस्मिन् कस्मिंश्चिद्वने पुरा पूर्वं सत्यवान् तपस्वी शुचिर्ब्राह्मणोऽभवत् ॥ १६ ॥

गो० टी०—उक्तार्थे ऐतिह्यमाह—पुरेत्यादि । रतमृगद्विजे संतुष्टमृगपक्षिके तपस्वी कश्चिदभवदित्यन्वयः ॥ १६ ॥ १७ ॥

१७ ] ति० टी०—भटो योधः ॥ १७ ॥

रा० टी०—तस्येति । तस्य सत्यवतः तपसो विघ्नमेव कर्तुं भटरूपधृक् खड्गपाणिः शचीपतिरिन्द्रस्तस्याश्रममगच्छत् ॥ १७ ॥

१८ ] ति० टी०—तदा तस्मिन्नाश्रमे पुण्ये तपसि तिष्ठतस्तस्य मुनेः शेषे षष्ठी । तस्मै मुनये स खड्गो न्यासविधिना कालान्तरे आदानाय रक्षणार्थं स्थापककर्मणा ॥ १८ ॥

रा० टी०—तस्मिन्निति । तस्मिन्प्रसिद्धे तदाश्रमपदे तस्य ऋषेः आश्रमपदे आसमन्ताद्भावेन अ न श्रमो यस्मिन् तदेव पदं स्थानं तस्मिन् पुण्ये तपसि तिष्ठतः सत्यवतः सन्यासविधिना इमं स्वकीयं खड्गं समयान्तरे गहीतास्मीति नियोगं कृत्वेत्यर्थः, उत्तमः खड्गः दत्तः इन्द्रेणेति शेषः । अत एव निहितः स्वसमीपे संस्थापितः सत्यवतेति शेषः, संबन्धसामान्यविवक्षया षष्ठी ॥ १८ ॥

गो० टी०—तस्मिन्निति । स इति खड्गविशेषणं न्यासविधिना न्यासप्रकारेण । 'राजचोरादिकभयाद्दायादानां च वञ्चनात् । स्थाप्यतेऽन्यगृहे द्रव्यं न्यासः स परिकीर्तितः' इत्युक्तो न्यासः तिष्ठतः तस्येति शेषः । चतुर्थ्यर्थे षष्ठी ॥ १८ ॥

१९ ] ति० टी०—आत्मनः प्रत्ययं विश्वासं रक्षन्नेव विचरति ॥ १९ ॥

रा० टी०—स इति । तच्छस्त्रमनुप्राप्य आत्मनः प्रत्ययं विश्वासं रक्षन् न्यासरक्षणतत्परः स सत्यवान् वने विहरति १९

गो० टी०—स इति । आत्मनः प्रत्ययं विश्वासस्थापितं वस्तु 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः । रक्षन्नेव विचरति व्यचरत् ॥ १९ ॥

२० ] ति० टी०—तदेव दर्शयति—यत्रेति ॥ २० ॥

रा० टी०—यत्रेति । यत्र यदा मूलानि उपादातुं ग्रहीतुं गच्छति तदा तं खड्गं विना न याति ॥ २० ॥

गो० टी०—एतदेवोपपादयति—यत्रेति ॥ २० ॥

२१ ति० टी०—परिवहनरक्षणेऽधर्मं कलङ्कं च पश्यंस्तपासि निश्चयरूपां स्वां बुद्धिं त्यक्त्वा रौद्रीं बुद्धिं चकार ॥ २१ ॥

रा० टी०—नित्यमिति । शस्त्रं नित्यं परिवहन् स तपोधनः क्रमेण तपसि निश्चयं त्यक्त्वा स्वां बुद्धिं रौद्रां जनभयदात्रीं चकार ॥ २१ ॥

गो० टी०—नित्यमिति । परिवहन् रक्षन् रौद्रीं हिंसापरां स्वां शस्त्रधार्यसाधारणाम् ॥ २१ ॥

२२ ] ति० टी०—रौद्राभिरतो रौद्रकर्मणि प्रीतिमान् अधर्मेण कर्षितो हीनधर्मः कृतः । संवासाद्धारणात् ॥ २२ ॥

रा० टी०—तत इति । ततोऽनन्तरं शस्त्रस्य संवासाद्धेतोः रौद्राभिरतः भयंकरकर्मनिरतः अत एव धर्मकर्षितः दूरीकृतधर्मः स सत्यवान् मुनिः नरकं जगाम ॥ २२ ॥

गो० टी०—तत इति । रौद्रे हिंसारूपकर्मणि अधर्मेण कर्शितः पीडितः संवासात्संपर्कात् ॥ २२ ॥

२३ ] ति० टी०—शस्त्रसंयोगकारणमिति बहुव्रीहिः । अग्निसंयोगो यथा काष्ठानां विकारहेतुस्तद्वच्छस्त्रसंयोगः शस्त्रिणो विकारहेतुः ॥ २३ ॥

---

१ वाक्शुचिरिति गो. पाठः । २ निशित इति गो. पाठः । ३ तमिति गो. पाठः । ४ विहरतीति रा. पाठः । ५ रौद्रेऽभिरत इति गो. पाठः ।

स्नेहाच्च बहुमानाच्च स्मारये त्वां तु[१] शिक्षये । न कथंचन सा कार्या गृहीतधनुषा त्वया ॥ २४ ॥
बुद्धिर्वैरं विना हन्तुं राक्षसान्दण्डकाश्रितान् । अपराधं विना हन्तुं लोको[२] वीर न मंस्यते ॥ २५ ॥
क्षत्रियाणां तु वीराणां वनेषु नियतात्मनाम् । धनुषा कार्यमेतावदार्तानामभिरक्षणम् ॥ २६ ॥
क्व च शस्त्रं क्व च वनं क्व च क्षात्रं तपः क्व च । व्याविद्धमिदमस्माभिर्देशधर्मस्तु पूज्यताम् ॥ २७ ॥
कदर्यकलुषा[३] बुद्धिर्जायते शस्त्रसेवनात् । पुनर्गत्वा त्वयोध्यायां क्षत्रधर्मं चरिष्यसि ॥ २८ ॥

---

रा० टी०-एवमिति । शस्त्रसंयोगः कारणं यस्मिन् तद्वृत्तं वृतान्तमेतन्निरूपितमित्यर्थः । एवं शस्त्रसंयोगः अग्निसंयोगवद्धेतुसंयुक्तक्षत्रियेतरविनाशे कारणमुच्यते ॥ २३ ॥

गो० टी०-एवमिति । शस्त्रसंयोगकारणं पुरावृत्तम् उक्तमिति शेषः ॥ २३ ॥

गो० टी०-पुरावृत्तफलितमर्थमाह-अग्नीति । अग्निसंयोगो यथा वस्तुनो विकारहेतुः एवं शस्त्रसंयोगोऽपि शस्त्रिणो विकारहेतुर्भवति । स्नेहात् त्वद्विषयस्नेहात् बहुमानात् मद्विषये त्वत्कृतबहुमानात् स्मारये भवद्विज्ञातार्थमेव स्मारयामि न शिक्षये नापूर्वमर्थमुपदिशामि ॥ २४ ॥

२४ ] ति० टी०-स्नेहाद्भवद्विषयाद्बहुमानात्त्वत्कर्तृकान्मद्विषयात् । किंच बहुमानो नाम मदीयोऽयं भर्तेत्येवमभिमानः । स्मारये पुरावृत्तमिति शेषः । अत्र स्नेहो हेतुः बहुमानाच्च त्वां तु शिक्षये इत्यर्थः । तदेव शिक्षणं करोति-न कथंचनेति । यत्तु तीर्थः 'स्मारये त्वां न शिक्षये' इति पठति व्याचष्टे च तत्तु उत्तरवाक्ये करिष्यमाणशिक्षणेन व्याहतमिति कतकः ॥ २४ ॥

रा० टी०-स्नेहादिति । स्नेहात्त्वद्विषयकानुरागाद्धेतोः बहुमानादतिसत्कारं प्रापय्य त्वां स्मारये न शिक्षये अतः गृहीतधनुषा त्वया सा अनपराधिहिंसा कथंचन न कार्या ॥२४॥

गो० टी०-न कथंचनेति । गृहीतधनुषा त्वया वैरं विना राक्षसान् हन्तुं सा रौद्री बुद्धिः कथंचन केनापि प्रकारेण न कार्या न कर्तुं योग्या त्वत्प्रकृत्यननुगुणत्वादिति भावः । इयं बुद्धिर्मत्प्रकृतेरप्यननुगुणेत्याह-अपराधमिति । लोकान् प्राणिनः ॥ २५ ॥

२५ ] ति० टी०-सा केत्यत्राह-बुद्धिरिति । अस्यैव प्रपञ्चः—अपराधं विनेति । हन्तुम् राक्षसानिति शेषः । न मंस्यते तव यत्नमौचित्येनेति शेषः । 'लोकान्वीर न कामये' इति पाठे लोकान्हन्तुं नेच्छामि, राक्षसवदितरप्राणिवधस्याप्येवं सति प्रसङ्गादिति भावः ॥ २५ ॥

रा० टी०-बुद्धिरिति । वैरं विना राक्षसान् हन्तुं बुद्धिर्न कार्येति शेषः । तत्र हेतुः-हे वीर ! अपराधं विना हन्तुं न मंस्यते प्रशस्तत्वेन न निश्चेष्यति कश्चिद्विद्वानिति शेषः ॥ २५ ॥

२६ ] ति० टी०-नन्वस्मदपराधाकरणेऽप्यार्तमुनिजनरक्षणार्थमेव तेषां वधोऽस्त्वित्यत आह—क्षत्रियाणामिति । क्षत्रियाणां क्षत्रधर्मार्हपदप्रतिष्ठितानाम् अत एव वीराणां राज्यरक्षणशेषतया युद्धादिप्रवृत्तिमतामेतावद्धनुषा कार्यं यद्वनेषु वसतां नियतात्मनामार्तानामभिरक्षणम् ॥ २६ ॥

रा० टी०-ननु धनुर्धारणं किमर्थमित्यत आह-क्षत्रियाणामिति । नियतात्मनां नियमितान्तःकरणानां क्षत्रियाणां धनुषा आर्तानामभिरक्षणं दुष्टभर्त्सनादिना रक्षाकार्यम्, एतेन तस्या दयालुतातिशयः सूचितः ॥ २६ ॥

गो० टी०-यद्येवं तर्हि क्षत्रियधर्मो धनुर्धारणं निरवकाशं स्यादित्याशङ्क्याह-क्षत्रियाणां त्विति । वीराणां क्षत्रियाणां धनुषा कार्यं कर्तव्यं वनेषु निरतात्मनाम् आर्तानां पीडितानां रक्षणं बाधकोत्सारणमित्येतावदेव । तुरवधारणे ॥ २६ ॥

२७ ] ति० टी०-अस्माकं तु नात्राप्यधिकार इत्याह-क्व चेति । क्षात्रं दुष्टवधादि, तपो जटावल्कलादिधारणपूर्वकमस्माभिरिदानीमनुतिष्ठासितमिदम् व्याविद्धं परस्परव्याहतम् तस्माद्देशधर्मस्तपोवनधर्मस्तु पूज्यतां सेव्यताम् ॥ २७ ॥

रा० टी०-निवृत्तानां तु प्राकृतक्षत्रियाणामपि शस्त्रधारणमनुचितमित्याह-क्व चेति । क्षात्रं क्षत्रियसंबन्धि शस्त्रं क्व तपश्च क्व इदं धर्मद्वयस्वीकारः व्याविद्धं विरुद्धमस्माभिर्निश्चीयते इति शेषः । अतो देशधर्मः प्राकृतविलक्षणाऽयोध्योचितरीतिः सद्वारकाद्वारकपालनं युज्यतां क्रियताम् ॥ २७ ॥

गो० टी०-ननु रक्षणार्थं वा धनुर्धार्यमेवेत्याशङ्क्य तदपि नेदानीमुचितं किंतु राजपालनकाल इत्याह-क्व चेत्यादिना । क्षात्रं क्षत्रधर्मः किंशब्दाभ्यां गम्यमानमर्थमाह-व्याविद्धमिदमिति । शस्त्रवने क्षात्रतपसी च परस्परविरुद्धमिदमस्माभिर्न पूज्यतां किंतु देशधर्मस्तपोवनधर्मः पूज्यतां क्षात्रशस्त्रे विहाय वनवासतपश्चरणे एव क्रियेतामित्यर्थः ॥ २७ ॥

२८ ] ति० टी०-यतः शस्त्रसेवनात्कदर्याणां कृपणानामिव कलुषा बुद्धिर्जायते धर्मानुष्ठानविरोधिनी, अतः शस्त्रसेवनं वने न कर्तव्यमिति ध्वनिः । ननु क्षत्रियस्य मम युद्धमेव धर्मोऽत आह-पुनरिति । स एव तस्य देशः कालश्चेत्यर्थः ॥ २८ ॥

रा० टी०-प्राकृतानां तपश्चरणसमये शस्त्रधारणे दोषमाह-कदर्येति । शस्त्रसेवनादसमये शस्त्रधारणात् कदर्यकलुषा कृपणकलुषबुद्धिसदृशी बुद्धिर्जायते यथाल्पस्यापि धनस्य रक्षणे कृपणानां चित्तवृत्तिः तथा निवृत्तानामपि स्यादिति तात्पर्यम् ।

---

१ नेति गो. रा. पाठः । २ लोकान्...कामये इति गो. लोके इति रा. पाठः । ३ तदार्येति गो. पाठः ।

अक्षया तु भवेत्प्रीतिः श्वश्रूश्वशुरयोर्मम । यदि राज्यं[1] हि संन्यस्य भवेस्त्वं निरतो मुनिः ।। २९ ।।
धर्मादर्थः प्रभवति धर्मात्प्रभवते सुखम् । धर्मेण लभते सर्वं धर्मसारमिदं जगत् ।। ३० ।।
आत्मानं नियमैस्तैस्तैः कर्षयित्वा प्रयत्नतः । प्राप्यते निपुणैर्धर्मो न सुखाल्लभते[2] सुखम् ।। ३१ ।।
नित्यं शुचिमतिः सौम्य चर धर्मं तपोवने । सर्वं तु[3] विदितं तुभ्यं त्रैलोक्यमपि तत्त्वतः ।। ३२ ।।
स्त्रीचापलादेतदुपाहृतं मे धर्मं च वक्तुं तव कः समर्थः ।
विचार्य बुद्ध्या तु सहानुजेन यद्रोचते तत्कुरु माचिरेण ।। ३३ ।।
इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे नवमः सर्गः ।। ९ ।।

---

ननु मया त्विदानीं न किंचित्स्मर्यत इत्यत आह—हे क्षत्र ! क्षतात्त्रातः अयोध्यायां गत्वा धर्मं चरिष्यसि साक्षात् परंपरया चोपदेक्ष्यसि इदानीं चोपदेशयोग्यजनासन्निधानान्न स्मर्यत इति तात्पर्यम् ॥ २८ ॥

गो० टी०—व्यत्ययो वा किं न स्यादित्यत्राह—तदार्येति । तर्हि वर्णधर्मो लुप्येतेत्यत्राह—पुनरिति ॥ २८ ॥

२९ ] ति० टी०—शस्त्रसेवनविनिषेधमेव द्रढयति—अक्षयेति । यदि राज्यं त्यक्त्वा वने निरतस्त्वं मुनिवृत्तिर्भवेस्तदा मम श्वश्रूश्वशुरयोरक्षया प्रीतिर्भवेत् । श्वशुरस्य वनवासोचितधर्मानुष्ठानेन स्वर्गलाभजा प्रीतिः श्वश्र्वास्तु युद्धादिराहित्येन सुखवासजा प्रीतिरिति बोध्यम् ॥ २९ ॥

रा० टी०—ननु निवृत्तमार्गस्यैव श्रेष्ठत्वेऽस्माभिरपि स एव स्वीक्रियतामित्यत आह—अक्षयेति । त्वं यदि राज्यं संन्यस्य त्यक्त्वापि मुनिः रक्षामननशीलः सन् निरतः रक्षणे प्रवृत्तो भवेः तदा मम श्वश्रूश्वशुरयो रक्षया प्रीतिर्भवेत् ॥ २९ ॥

गो० टी०—तपोमात्रकरणे फलान्तरमप्याह—अक्षयेति । त्वया सर्वदा क्षत्रधर्मं त्यक्त्वा मुनिवृत्तिराश्रयतामित्याह—अक्षयेति । तुः समुच्चये अकलुषा बुद्धिश्च ते भवेदित्यर्थः । श्वश्रूश्वशुरयोः कैकेयीदशरथयोः "श्वशुरः श्वश्र्वा" इत्येकशेषाभाव आर्षः॥२९॥

३० ] ति० टी०—हिंसालक्षणस्याधर्मत्वान्मुनिधर्मानुष्ठानमेवोचितमित्याह—धर्मादिति । धर्मादहिंसाप्रधानात् ॥३०॥

रा० टी०—ननु निवृत्तिरेव श्रेष्ठा चेत्तत्स्वीकारादेव तयोरधिका प्रीतिर्भविष्यतीत्यत आह—धर्मादिति । धर्मात्कालोचितस्वस्वोचितानुष्ठानादर्थः प्रभवति तस्मादेव सुखं प्रभवते अतः इदं जगत् धर्मसारं धर्म एव सारो यस्मिन् तत्, एतेन निखिलाधीशेन रक्षैव कर्तव्येति सूचितम् ॥ ३० ॥

गो० टी०—केवलधर्मानुष्ठानस्य सर्वश्रेयोमूलत्वमाह—धर्मादित्यादिना । सर्वं मुक्तिमपि ज्ञानद्वारा लभत इत्यर्थः ॥३०॥

३१ ] ति० टी०—सर्वथा धर्म एव संपाद्य इत्याह—आत्मानमिति । आत्मानम् स्थूलदेहहृदयमित्यर्थः । निपुणैः समर्थैः । सुखं सुखसाधनो धर्मः ॥ ३१ ॥

रा० टी०—धर्म एव महात्मनां प्रवृत्तिरिति बोधयन्ती आह—आत्मानमिति । तैस्तैर्वनस्थोचितैर्नियमैरात्मानं मनः प्रयत्नतः विचारेण कर्षयित्वा स्थिरीकृत्येत्यर्थः, निपुणैः पुरुषैः धर्मः प्राप्यते तस्मादेव सुखं लभत इत्यर्थः, सुखात्सुखाभासोपायभूतात्कर्तव्याचरणात्सुखं न लभते ॥ ३१ ॥

गो० टी०—धर्मार्थज्ञानप्रकारमाह—आत्मानमिति । नियमैः चान्द्रायणादिभिः आत्मानं शरीरम् ॥ ३१ ॥

३२ ] ति० टी०—उपसंहरति—नित्यमिति । त्रैलोक्यमपि त्रिलोकवर्तिप्रजापुमर्थापुमर्थतत्साधनकलापं इत्यर्थः । तुभ्यं त्वया ॥ ३२ ॥

रा० टी०—नित्यमिति । शुचिमतिः अनपराधिहिंसारहितचित्तः त्वं धर्मं चर । ननु को धर्म इत्यत आह—तुभ्यं तव सर्वं तत्त्वतो विदितं तेन स्वोचितं विचार्य कुर्विति व्यञ्जितम् ॥३२॥

गो० टी०—नित्यमिति । त्रैलोक्यं त्रिलोकभवं पुरुषार्थतत्साधनतदङ्गकलापम् ॥ ३२ ॥

३३ ] ति० टी०—अथ विनयेन क्षमापयति—स्त्रीति । मा चिरेण विलम्बो मास्त्वित्यर्थः । अत्रेदं गूढं सीतातात्पर्यम्—यदि सकलरक्षःक्षयेण सकलत्रिभुवनवर्त्यार्तरक्षणमनपराधिपीडां विहाय कर्तुं शक्यं तदा क्षात्रधर्मं चर, नो चेच्छुद्धतपोधर्मं चरेति ' धनुषा कार्यमेतावदार्तानामभिरक्षणम् ' इत्यनेनेदं ध्वनितम् । ' क्षत्रियाणां तु वीराणां वनेषु नियतात्मनाम् ' इति पूर्वार्धस्य वनेष्वपि वसतां क्षत्रियाणां वीराणामुत्तरार्थोक्तमावश्यकमिति गूढतात्पर्यम् ॥ ३३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे नवमः सर्गः ॥ ९ ॥

रा० टी०—नन्वेवं चेत्त्वया किमर्थमुच्यते इत्यत आह—स्त्रीति । स्त्रीचापलात्स्त्रीनिष्ठस्वाभाविकचापल्याद्धेतोः एतदुदाहृतं कथितं तव धर्मं वक्तुं कः समर्थः न कोऽपीत्यर्थः, अतः यद्रोचते तत्कुरु चिरेण मा विलम्बो न कार्यः ॥ ३३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे नवमः सर्गः ॥ ९ ॥

गो० टी०—स्त्रीचापलादिति । स्त्रीचापलात् स्त्रीत्वप्रयुक्त-

---

१ परित्यज्येति गो. पाठः । २ लभ्यत इति गो. पाठः । ३ हीति गो. पाठः । ४ नपुंसकमनपुंसकेनेतिसूत्रादन्यतरस्यामित्यनुवृत्त्यज्ञानमूलकमिदम् ।

## दशमः सर्गः ।

शरणागतमुनिजनरक्षार्थं रक्षोवधस्य प्रतिज्ञातत्वात्प्रतिज्ञातस्य चावश्यं निर्वहणीयत्वादावश्यकमेतदिति रामः समर्थयति ।

**वाक्यमेतत्तु वैदेह्या व्याहृतं भर्तृभक्तया । श्रुत्वा धर्मे स्थितो रामः प्रत्युवाचाथ जानकीम् ॥ १ ॥**
**हितमुक्तं त्वया देवि स्निग्धया सदृशं वचः । कुलं व्यपदिशन्त्या च धर्मज्ञे जनकात्मजे ॥ २ ॥**
**किं नु वक्ष्याम्यहं देवि त्वयैवोक्तमिदं वचः । क्षत्रियैर्धार्यते चापो नार्तशब्दो भवेदिति ॥ ३ ॥**
**ते चार्ता दण्डकारण्ये मुनयः संशितव्रताः । मां सीते स्वयमागम्य शरण्यं शरणं गताः ॥ ४ ॥**
**वसन्तः कालकालेषु वने मूलफलाशनाः । न लभन्ते सुखं भीरु राक्षसैः क्रूरकर्मभिः ॥ ५ ॥**
**[ काले काले च निरता नियमैर्विविधैर्वने । ]**
**भक्ष्यन्ते राक्षसैर्भीमैर्नरमांसोपजीविभिः । ते भक्ष्यमाणा मुनयो दण्डकारण्यवासिनः ॥ ६ ॥**

चापलात् मे मया मा चिरेण विचारस्य विलम्बो मा भूत् । अत्र सार्धत्रयस्त्रिंशच्छ्लोकाः ॥ ३३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने नवमः सर्गः ॥ ९ ॥

१ ] ति० टी०—एवं युद्धस्यापाततः सीतया धर्मत्वं प्रतिपादितं तद्वाक्याविरोधेनैव धर्मत्वं प्रतिपादयति रामः—वाक्यमिति । 'संवर्धितः' इति पाठे संवर्धिततेजाः । 'धर्मस्थितः' इति पाठान्तरम् ॥ १ ॥

रा० टी०—सीतावचनश्रवणानन्तरकालिकरामप्रत्युक्तिं वर्णयितुमाह—वाक्यमिति । भर्तृभक्तया भर्तृसेवापरायणया वैदेह्या व्याहृतं कथितं श्रुत्वा रामः प्रत्युवाच ह ॥ १ ॥

गो० टी०—एवं रामः सत्यप्रतिज्ञः निर्वैरं च रक्षोवधं न करिष्यति तथा च मद्वियोगेन रक्षोवधेन भवितव्यं मद्विरहं च न सहिष्यते संकटमिदमुपस्थितमित्याकुलचित्ता वैदेही पतिप्रेमान्धा रक्षोवधान्निवर्तयितुमुपक्रान्ता । रामस्तु सीताविरहं सोढ्वापि तन्मूलवैरेण रक्षांसि निहत्य प्रतिज्ञा निर्वोढव्येति समाधत्ते दशमे—वाक्यमेतत्त्वित्यादि । भर्तृभक्तयेत्यनेन भर्तृप्रेमपारवश्येन पूर्वमुक्तमिति ज्ञायते । धर्मे स्थित इत्यनेन सीताविरहक्लेशमङ्गीकृत्यापि प्रतिश्रुतनिर्वहणपरता द्योत्यते । यद्यपि खरवध एव दण्डकारण्यवासिभिरर्थितो रामेण प्रतिज्ञाश्रुत तथापि खरवधो रावणवधमूलमिति खरवधद्वारा रावणवधोऽप्यर्थित एवेति सीतयोक्तमुपपन्नम् ॥ १ ॥

२ ] ति० टी०—कुलं व्यपदिशन्त्या 'क्षत्रियाणां तु वीराणाम्' इत्यादिना क्षत्रियकुलधर्मं बोधयन्त्या ॥ २ ॥

रा० टी०—तत्प्रतिवचनाकारमाह—हितमिति । स्निग्धया मद्विषयकस्नेहयुक्तया कुलं कुलोचितं धर्मं व्यपदिशन्त्या कथयन्त्या त्वया सदृशं स्वयोग्यमित्यर्थः, इदं वचः हितमुक्तम् ॥ २ ॥

गो० टी०—हितमिति । स्निग्धया अनुरक्तया कुलं व्यपदिशन्त्या स्वमहाकुलीनत्वं प्रख्यापयन्त्या त्वया सदृशम् अनुरागकुलसदृशं हितमुक्तम् । हितोक्तौ हेतुर्धर्मज्ञ इति, कुलव्यपदेशे हेतुर्जनकात्मज इति ॥ २ ॥

३ ] ति० टी०—अत्रोत्तरमहं किं नु वक्ष्यामि । त्वयैवोत्तरं दत्तमित्यर्थः । इदंशब्दार्थः—क्षत्रियैरिति । रक्षकाभावकृत आर्तानां शब्दो मा भूदित्यर्थं क्षत्रियैश्चापो धार्यत इत्येषोऽर्थो धनुषा कार्यमेतावदार्तानामभिरक्षणमिति वाक्येनोक्त इति शेषः ३

रा० टी०—किमिति । यतः आर्तशब्दो न भवेदिति हेतोः क्षत्रियैश्चापो धार्यते इति एतदर्थबोधकं वचस्त्वयैवोक्तमतः किं नु वक्ष्यामि एतेन मत्कर्म त्वत्संमतिविषयीभूतमेवेति सूचितम् ॥ ३ ॥

गो० टी०—किं त्विति । यदि मया हितमुक्तं तर्हि तथैव क्रियतामिति चेत्तत्र वक्ष्यामि, तदेवाह—त्वयैवेति । 'क्षत्रियैर्धार्यते चापो नार्तशब्दो भवेदिति', इदं वचनं त्वयैवोक्तं खलु मुनयश्चार्ताः तस्मात्तद्विराधिवधः कर्तव्य एवेति भावः ॥ ३ ॥

४ ] ति० टी०—त्वद्वचनस्यायमेवानुष्ठानकाल इत्याह—ते चेति । संशितव्रतास्तीक्ष्णव्रताः । स्वयमागम्य शरणं गता इत्यनेन नाहं गर्वादिदोषेण रक्षोवधार्थं प्रवर्ते, किंत्वस्मच्छरणागतेषु वैरेण ममापि वैरमर्थादायातमिति निर्वैरं वधप्रसक्तिर्न मे इत्युक्तम् ॥ ४ ॥

रा० टी०—आर्तशब्दवत्त्वं समर्थयन्नाह—ते इति । संशितव्रताः तीक्ष्णव्रतवन्तः शरणं राक्षसकर्तृकहिंसनं गताः प्राप्ता अत एव आर्ताः पीडिताः दण्डकारण्ये निवासिनो मुनयः शरण्यं शरणहितं मां स्वयमागम्य प्राप्य प्रार्थयन्तेति शेषः । 'शरणं गृहरक्षित्रोर्वधरक्षणयोरपि' इति मेदिनी ॥ ४ ॥

गो० टी०—ननूक्तं विरोध्युत्सारणेनार्तरक्षणं कर्तव्यं न तु निरपराधवध इत्याशङ्क्य तेषां शरणागतत्वेन मत्प्राणभूतत्वात्तेष्वपराधो मदपराध इत्याशयेनाह—मामित्यादि । अत्रत्यविशेषणैरात्मनः शरणागतपक्षपातं स्फोरयति ॥ ४ ॥ ५ ॥

५-६ ] ति० टी०—कालकालेषु सर्वकालेष्वित्यर्थः । राक्षसैरित्यस्य वध्यमाना इति शेषः ॥ ५ ॥ ६ ॥

१ मैथिलीमिति गो. पाठः । २ त्विति गो. पाठः । ३ ह्मरण्या इति गो. पाठः । ४ वसन्तो धर्मनिरता इति गो. पाठः । ५ भीता इति गो. पाठः । ६ अर्धमेतदधिकं गो. पाठे ।

अस्मानभ्यवपद्यैते मामूचुर्द्विजसत्तमाः । मया तु वचनं श्रुत्वा तेषामेवं मुखाच्च्युतम् ॥ ७ ॥
कृत्वा वचनशुश्रूषां वाक्यमेतदुदाहृतम् । प्रसीदन्तु भवन्तो मेऽह्रीरेषा तु ममातुला ॥ ८ ॥
यदीदृशैरहं विप्रैरुपस्थेयैरुपस्थितः । किं करोमीति च मया व्याहृतं द्विजसंनिधौ ॥ ९ ॥
सर्वैरेवं समागम्य वागियं समुदाहृता । राक्षसैर्दण्डकारण्ये बहुभिः कामरूपिभिः ॥ १० ॥
अर्दिताः स्म भृशं राम भवान्नस्तत्र रक्षतु । होमकाले तु संप्राप्ते पर्वकालेषु चानघ ॥ ११ ॥
धर्षयन्ति स्म दुर्धर्षा राक्षसाः पिशिताशनाः । राक्षसैर्धर्षितानां च तापसानां तपस्विनाम् ॥ १२ ॥
गतिं मृगयमाणानां भवान्नः परमा गतिः । कामं तपःप्रभावेण शक्ता हन्तुं निशाचरान् ॥ १३ ॥
चिरार्जितं न चेच्छामस्तपः खण्डयितुं वयम् । बहुविघ्नं तपो नित्यं दुश्चरं चैव राघव ॥ १४ ॥

---

रा० टी०—वसन्त इति । कालकालेषु सर्वकालेष्वित्यर्थः वसन्तो मुनयः क्रूरकर्मभिः राक्षसैः सुखं न लभन्ते ॥ ६ ॥

रा० टी०—सुखालाभे हेतुं वदन्नाह—भक्ष्यन्त इति । नरमांसोपजीविभिः राक्षसैर्दण्डकारण्यवासिनस्ते प्रसिद्धाः मुनयो भक्ष्यन्ते अत एव एते भक्ष्यमाणा आसन्नभक्षणा द्विजसत्तमाः अस्मान् अभ्यवपद्य रक्ष इति मामूचु अभ्यवपद्येत्यत्र संज्ञापूर्वकविधेरनित्यत्वादात्मनेपदाभावः । 'अभ्यवपद्यन्ते' इति भूषणपाठः । सार्धश्लोक एकान्वयी ॥ ६ ॥

गो० टी०—काले काल इति । काले काले सर्वकालेष्वित्यर्थ ॥ ६ ॥

गो० टी०—त इति । अभ्यवपद्येति अनुगृहाणेत्यर्थः लोण्मध्यमपुरुषैकवचनम् आर्षं परस्मैपदम् । अभ्यवपत्तिः अनुग्रहः ॥ ७ ॥

७ ] ति० टी०—अभ्यवपद्यानुगृहाणेति मामूचुः । पद्यतेरार्षं परस्मैपदम् । एवं रक्षेत्येवं तेषां मुखाच्च्युतं वचनं श्रुत्वाः ॥ ७ ॥

रा० टी०—मयेति । तेषां मुनीनां मुखाच्च्युतं वचनं श्रुत्वा वचनशुश्रूषां वचनेन सत्कृतिं कृत्वा च एतद्वाक्यमुदाहृतं कथितम् ॥ ७ ॥

गो० टी०—मयेति । चरणशुश्रूषां पादवन्दनम् ॥ ८ ॥

८ ] ति० टी०—वचनशुश्रूषां वचनानुपालनलक्षणशुश्रूषां कृत्वा मनसि कृत्वेत्यर्थः 'चरणशुश्रूषाम्' इत्यपि पाठः । यदीदृशैरुपस्थितैरस्माभी रक्षणार्थमुपास्यैरुपस्थितः रक्षणार्थमिति शेषः । एषा ममाह्रीरकीर्तिः, अतः प्रसीदन्त्वित्यर्थः । तीर्थस्तु—एषा मम ह्रीः, अतः प्रसीदन्त्विति व्याचष्टे ॥ ८ ॥

९ ] ति० टी०—किं करोमि किं करवाणीत्यर्थः । लोडर्थे लडार्षः ॥ ९ ॥

रा० टी०—तद्वचनाकारमाह—प्रसीदन्त्विति । उपस्थेयैः अस्माभिः स्तुत्यैः ईदृशैः तपआदिसंपन्नैः विप्रैः भवद्भिः यदहमुपस्थितः स्तुतः तस्माद्धेतोः अतुला तोलयितुमशक्या एषा मम ह्रीः लज्जा प्राप्नोदिति शेषः अतो मे भवन्तः प्रसीदन्तु इति किं करोमि करवाणीति च द्विजसंनिधौ मया व्याहृतं कथितम्॥८॥९

गो० टी०—प्रसीदन्त्विति । प्रसीदन्तु मदपचारं क्षमन्ताम् । ह्रीः लज्जा अतुला अधिका । अत्र हेतुमाह—यदिति । उपस्थेयैरभिगन्तव्यैः उपस्थितः अभिगतः । किं करोमीति लोडर्थे लट् किं करवाणीत्यर्थः ॥ ९ ॥

१०] ति० टी०—सर्वैः एवं मयोक्तैस्तैः सर्वैरित्यर्थः ॥१०॥

रा० टी०—सर्वैरिति । सर्वैर्ऋषिभिः समागम्य इयं वाक् समुदाहृता। तद्वचनाकारमाह—कामरूपिभिः स्वेप्सितरूपधारणसमर्थैः बहुभिः राक्षसैः दण्डकारण्ये वयं भृशमर्दिताः पीडिताः स्म स्मः । आर्षः सलोपः अतः नोऽस्मान् भवान् रक्षतु ॥१०॥

गो० टी०—सर्वैरित्यादि । अर्दिताः पीडिताः तत्र तेभ्यः रक्षत्विति । अभ्यवपद्येत्यत्र सामान्येनानुग्रहः प्रार्थितः । इह तु तद्विशेषे पृष्टे विशेष उक्तः ॥ १० ॥ ११ ॥

११ ] ति० टी०—स्म स्मः । तत्र रक्षःपीडाविषये । रक्षत्विति भवच्छब्दयोगात्प्रथमपुरुषः । पर्वकालेषु दर्शपूर्णमासेष्टिकालेषु ॥ ११ ॥

रा० टी०—होमेति । होमकाले संप्राप्ते सति पर्वकालेषु दर्शपौर्णमासादिषु पिशिताशनाः रुधिरभोजनाः दुराधर्षाः धर्षयितुमशक्याः राक्षसाः मां धर्षयन्ति स्म ॥ ११ ॥

गो० टी०—न केवलं पीडयन्ति यज्ञविघ्नं च कुर्वन्तीत्याहुः—होमेति । यज्ञविघ्नकरं हन्यामिति मद्भोजननिवर्तनात् कः परोपराध इति सीतायै सूचयितुमिदमन्वादितम् । होमकालेषु अग्निहोत्रकालेषु सर्वकालेषु दर्शपौर्णमासादियज्ञकालेषु धर्षयन्ति अभिधावन्ति ॥ १२ ॥

१२ ] ति० टी०—धर्षयन्त्यभिभवन्ति ॥ १२ ॥

रा० टी०—राक्षसैरिति । राक्षसैः धर्षितानां पराभिभूतानामत एव गतिं भयनिवर्तकमाश्रयं मृगयमाणानां तपस्विनां परमात्मविचारशीलानां तापसानां वेदशास्त्रसंपन्नानां नोऽस्माकं परमा गतिः अभयाश्रयः भवानेव ॥ १२ ॥

१३-१४ ] ति० टी—गतिं त्रातारम् ॥ १३ ॥ १४ ॥

---

१ पद्येतेति गो. पाठः । २ चरणेति गो. पाठः । ३ ह्रीति गो. पाठः । ४ एतैरिति गो. पाठः । ५ दृढमिति गो. पाठः । ६ तु संप्राप्ता इति गो. पाठः । ७ स्विति गो. पाठः । ८ प्रभावेनेति गो. पाठः ।

[1]तेन शापं न मुञ्चामो भक्ष्यमाणाश्च राक्षसैः । तदर्द्यमानान्रक्षोभिर्दण्डकारण्यवासिभिः ॥ १५ ॥
[2]रक्षकस्त्वं सह भ्रात्रा त्वन्नाथा हि वयं वने । मया चैतद्वचः श्रुत्वा कात्स्न्येंन परिपालनम् ॥ १६ ॥
ऋषीणां दण्डकारण्ये संश्रुतं जनकात्मजे । संश्रुत्य च न शक्ष्यामि जीवमानः प्रतिश्रवम् ॥ १७ ॥
मुनीनामन्यथा कर्तुं सत्यमिष्टं हि मे सदा । अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम् ॥ १८ ॥
न तु प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः । तदवश्यं मया कार्यमृषीणां परिपालनम् ॥ १९ ॥
अनुक्तेनापि वैदेहि प्रतिज्ञाय [3]कथं पुनः । मम स्नेहाच्च सौहार्दादिदमुक्तं त्वया [4]वचः ॥ २० ॥

---

रा० टी०–ननु समर्थैर्भवद्भिः राक्षसनिवारणं कुतो न क्रियते इत्यत आहुः–काममिति । तपःप्रभावेण निशाचरान् हन्तुं काममत्यन्तं शक्ताः अपि वयं तथापि चिरार्जितं तपः खण्डयितुं नाशयितुं वयं नेच्छामः एतेन तपस्विकर्तृकहिंसादिकर्मारम्भे तत्तपो नश्यतीति सूचितम् ॥ १३ ॥

रा० टी०–तपसो विध्वंसनं नोचितमिति बोधयन्त आहुः–बह्विति । यतः तपो बहुविघ्नमत एव दुश्चरं तेन हेतुना राक्षसैः भक्ष्यमाणा अपि वयं शापं न मुञ्चामः ॥ १४ ॥

गो० टी०–गतिं रक्षकं मृगयमाणानाम् अन्वेषयताम् ॥ १३ ॥

गो० टी०–परमशब्दव्यवच्छेद्यं दर्शयति–काममिति ॥ १४ ॥

गो० टी०–उक्तं विवृणोति–बह्विति ॥ १५ ॥

१५ ] ति० टी०–तेनातिक्लेशार्जिततपोव्ययभयेन ॥ १५ ॥

रा० टी०–तदिति । यतो वयं त्वन्नाथाः त्वमेव नाथो येषां ते तत्तस्माद्धेतो रक्षोभिः अर्द्यमानान् अस्मान् ज्ञात्वेति शेषः । भ्रात्रा सह रक्षकः त्वं भवेति शेषः ॥ १५ ॥

गो० टी०–उपसंहरति–तदिति । त्वन्नाथा इति बहुव्रीहिः इयं वाक् समुदाहृतेति पूर्वेणान्वयः ॥ १६ ॥

१६ ] ति० टी०–रक्षकस्त्वम् भवेति शेषः । त्वन्नाथास्त्वं नाथो येषां ते कात्स्न्येंन कृत्स्नरक्षःपीडानिवर्तनेन ॥ १६ ॥

रा० टी०–मयेति । हे जनकात्मजे ! एतद्वचो मया श्रुत्वा कात्स्न्येंन ऋषीणां परिपालनं संश्रुतं प्रतिज्ञातम् ॥ १६ ॥

गो० टी०–मयेति । कात्स्न्येंन परिपालनं रक्षोवधपर्यन्तपरिपालनं संश्रुतं प्रतिज्ञातं मदाश्रितविरोधिनो मद्विरोधित्वात् मद्भोजनविघातकत्वाच्चेत्यर्थः ॥ १७ ॥

१७ ] ति० टी०–चतुर्दशवर्षपर्यन्तं पित्राज्ञया राज्यत्यागेऽप्ययं राज्यसंबन्धस्यावश्यकत्वाच्छरणागतरक्षणेऽस्त्येवाधिकारः । किं च क्षत्रजातेरेवात्राधिकारः, न तु राज्यपदस्थस्यैवेति तात्पर्यम् । संश्रुतं प्रतिज्ञातम् जीवमानो जीवन् प्रतिश्रवं प्रतिज्ञाम् ॥ १७ ॥

रा० टी०–संश्रुत्येति । मुनीनामग्रे संश्रुत्य प्रतिज्ञाय जीवमानः जीवेन सकलपालनेन मानः सत्कारो यस्य सोऽहं प्रतिश्रवं प्रतिज्ञामन्यथा प्रतिज्ञाविरुद्धमनपराधिनोऽपि वधमित्यर्थः, कर्तुं न शक्ष्यामि हि यतः सत्यं मे सदा इष्टमीप्सितं सदेत्यनेन स्वाभाविको धर्मस्त्यक्तुं न शक्यते इति सूचितम् ॥ १७ ॥

गो० टी०–संश्रुत्येति । जीवमानः जीवन् प्रतिश्रवं प्रतिज्ञाम् अन्यथा कर्तुं न शक्ष्यामि । तत्र हेतुः–सत्यमिष्टमिति सत्यं सत्यवचनम् ॥ १८ ॥

१८ ] ति० टी०–न शक्ष्यामीत्यत्र हेतुः–सत्यमिष्टमित्यादि ॥ १८ ॥

रा० टी०–प्रतिज्ञात्याजनयत्नः कदापि न कर्तव्य इति बोधयन्नाह–अपीति । प्रतिज्ञां संश्रुत्य कृत्वा न जह्यां ब्राह्मणेभ्यो ब्राह्मणार्थं संश्रुत्य तु विशेषतो न जह्याम् ॥ १८ ॥

गो० टी०–तर्ह्यावयोर्विश्लेषो दुर्विषहः स्यात्तत्राह–अप्यहमिति । 'आत्मानं सर्वदा रक्षेद्दारैरपि धनैरपि' इत्युक्तं जीवितमपि जह्याम् । 'भ्राता स्वा मूर्तिरात्मनः' इत्युक्तं लक्ष्मणमपि जह्याम् । "अर्धो वा एष आत्मनः यत्पत्नी" इत्युक्ताम् जह्यामिति किमाश्चर्यं संश्रुत्य यस्मै कस्मैचित् यत्किंचित् प्रतिज्ञाय तां प्रतिज्ञां न जह्यां ब्राह्मणेभ्यः ब्रह्मविद्भ्यः कृतां प्रतिज्ञां विशेषतो न जह्याम् ॥ १९ ॥

१९ ] ति० टी०–यस्मै कस्मै अपि प्रतिज्ञां प्रतिज्ञाय न जह्याम् किं पुनर्ब्राह्मणेभ्य इत्यर्थः ॥ १९ ॥

रा० टी०–तदिति । तत् उक्तहेतोः अनुक्तेन रक्षणप्रतिज्ञारहितेनापि मया ऋषीणां परिपालनमवश्यं कार्यं कर्तव्यं यदि अनुक्तेनापि कर्तव्यं तर्हि प्रतिज्ञाय कार्यमिति कथं किं वक्तव्यम् । कथमिति किमर्थे ॥ १९ ॥

गो० टी०–तदिति । अनुक्तेनापीति ऋषिभिरिति शेषः । उक्तरीत्या रक्षसां मदपराधित्वेन तद्वधस्य मत्कार्यत्वादिति भावः ॥ २० ॥

२०] ति० टी०–अनुक्तेनापि ऋषिभिरिति कार्यमिति च शेषः । प्रतिज्ञाय कथं पुनर्न कार्यमिति शेषः । स्नेहः प्रीतिः, सौहार्दं शोभनहृदयता, प्रीतौ सत्यामपि तादृशहृदयत्वाभाव एवमनुशासनादर्शनादुभयमुक्तम् ॥ २० ॥

रा० टी०–आनुमानिकानिष्टविज्ञापनशङ्काजनितसीताभीतिं निवारयन्नाह–ममेति । मम स्नेहात् मद्विषयकातिप्रीतेः सौहार्दात् सरलस्वभावाच्च हेतोः कुलस्य सदृशं तव चानुरूपं सदृशं ममेदं वचस्त्वयोक्तमतोऽहं परितुष्टोऽस्मि हि यतः अनिष्टः अनीप्सितः न अनुशिष्यते ममेष्ट एव भवत्यानुशिष्ट इत्यर्थः । अत एव सधर्मचारिणी सहधर्माचरणशीला त्वं मे प्राणे-

---

१ तच्छापं न प्रमुञ्चाम इति रा. पाठः । २ रक्ष नस्त्वमिति गो. पाठः । ३ तु किमिति गो. पाठः । ४ ऽनघे इति गो. पाठः ।

**परितुष्टोऽस्म्यहं सीते न ह्यनिष्टोऽनुशास्यते । सदृशं चानुरूपं च कुलस्य तव शोभने ॥**
**सधर्मचारिणी मे त्वं प्राणेभ्योऽपि गरीयसी ॥ २१ ॥**
**इत्येवमुक्त्वा वचनं महात्मा सीतां प्रियां मैथिलराजपुत्रीम् ।**
**रामो धनुष्मान्सह लक्ष्मणेन जगाम रम्याणि तपोवनानि ॥ २२ ॥**

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे दशमः सर्गः ॥ १० ॥

## एकादशः सर्गः ।

दण्डकां प्रकामन्दाशरथिः पञ्चाप्सरोनाम्नि तीर्थे आतोद्यवादकादर्शनेऽप्यन्तर्जले मञ्जुशिञ्जितयुतकाकलीमाकर्ण्य किमेतदिति कंचनमुनिं पृच्छञ्छृण्वंश्च तद्वृत्तमग्रतः प्रस्थितः प्राप्तमुनिमण्डलः प्रत्याश्रमं त्रिचतुर्मासनिवासेन दशवत्सरानतीत्य पुनः सुतीक्ष्णाश्रमं प्राप्तोऽगस्त्यदर्शनोत्कस्तं प्रत्यगस्त्याश्रमप्रापकमार्गं पप्रच्छोषित्वा चैकां रात्रिमुपदिष्टमार्गो वातापील्वलोपाख्यानं लक्ष्मणाय कथयन्नगस्त्यभ्रातुराश्रमं प्राप्तस्तमभिवाद्योषित्वा चैकां वसतिं प्रस्थितो विन्ध्यनिरोधकमगस्त्यप्रभावं श्रावयन्नाश्रमान्तिकं प्राप्तः स्वागमनं मुनये निविविदयिषुर्लक्ष्मणं प्रेषयति ।

**अग्रतः प्रययौ रामः सीता मध्ये सुशोभना[3] । पृष्ठतस्तु धनुष्पाणिर्लक्ष्मणोऽनुजगाम ह ॥ १ ॥**
**तौ पश्यमानौ विविधाञ्शैलप्रस्थान्वनानि च । नदीश्च विविधा रम्या जग्मतुः सह सीतया ॥ २ ॥**
**सारसांश्चक्रवाकांश्च नदीपुलिनचारिणः । सरांसि च सपद्मानि युतानि[4] जलजैः खगैः ॥ ३ ॥**

भ्योऽपि गरीयसी असीति शेषः, एतेन संसर्गप्राप्तानपराधिवधस्त्वयापि यत्नतस्त्याजनीय इति सूचितम् । तेन लङ्कागमनाय सीतामाज्ञापयामासेति ध्वनितम् । नहि लङ्कागमनमन्तरा संग्रामाय विभीषणस्य रावणसहगमनं निवारणार्हमिति तात्पर्यम् । अर्धचतुष्टयमेकान्वयि ॥ २० ॥ २१ ॥

**गो० टी०—एवं वदन्त्यास्तव हृदयं च जानामीत्याह—ममेति ।** मम त्वयि स्नेहात् तव मयि सौहार्दाच्चोक्तं विरहो दुःसहो भविष्यतीत्युक्तामित्यर्थः । अनिष्टः अप्रियः पुरुषः ॥ २१ ॥

**२१-२२ ] ति० टी०—न ह्यनिष्टोऽनुशास्यते** यस्मिन्यस्य प्रीतिर्नास्ति नासावनुशिष्यते हितं नोपदिश्यत इत्यर्थः । सदृशं तव स्नेहस्य त्वदुक्तं वच इति शेषः । कुलस्यानुरूपम् ॥ २१ ॥ २२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे दशमः सर्गः ॥ १० ॥

**रा० टी०—इतीति ।** रामः एवं वचनं सीतामुक्त्वा रम्याणि तपोवनानि जगाम ॥ २२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे दशमः सर्गः ॥ १० ॥

**गो० टी०—सदृशमिति ।** तव आत्मनः सदृशं तव कुलस्य चानुरूपमिदं वचः धर्मप्राधान्योक्तिस्त्वत्कुलानुरूपा । 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इति हि त्वत्कुलपद्धतिः । सापराधेष्वपि निरपराधोक्तिस्तव सदृशी 'पापानां वा शुभानां वा वधार्हाणां प्लवङ्गम । कार्यं करुणमार्येण न कश्चिन्नापराध्यति' इति हि तव प्रकृतिः । तथापि त्वं मे प्राणेभ्यो गरीयस्यपि सधर्मचारिणी भव मया यो धर्मः संकल्पितस्तत्रैव त्वयापि संकल्पयितव्यमिति भावः ॥ २२ ॥

**गो० टी०—इत्येवमिति ।** महात्मा महाधृतिः प्रियां मैथिलराजपुत्रीम् इतीति उक्तधर्मद्वयानुवादः ॥ २३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने दशमः सर्गः ॥ १० ॥

**१-२ ] ति० टी०—अग्रत इति ॥ १ ॥ २॥**

**३ ] ति० टी०—**जलजाः खगा दात्यूहादयः ॥ ३ ॥

**रा० टी०—रामगमनप्रकारं वर्णयन्नाह—अग्रत इति ।** अग्रतः अग्रे रामः प्रययौ मध्ये सुशोभना सीता पृष्ठतस्तु लक्ष्मणोऽनुजगाम ॥ १ ॥

**गो० टी०—**अथ कर्माणि सापायानि रामसेवैका निरपायेति दर्शयितुं माण्डकर्णिवृत्तान्तप्रकटनपूर्वकं सकलमुनिजनाश्रममण्डलसंचरणमेकादशे—अग्रत इत्यादि । अनेन श्लोकेन प्रणवार्थ उक्तः, तौ पश्यमानावित्यादिना नारायणपदार्थः, माण्डकर्णिवृत्तान्ते नम इत्यस्यार्थः, ततः परं विरोधिनिवृत्तिः सूच्यते, एवं मूलमन्त्रार्थानुसंधानमेव परमा गतिरित्युच्यते ॥ १ ॥

**रा० टी०—ताविति ।** विविधाननेकप्रकारान् शैलादीन् नदीपुलिनचारिणः नदीपुलिनेषु विहरणशीलान् सारसांश्च चक्रवाकांश्च जलजैः जलजातैः खगैः पक्षिभिः युतानि सपद्मानि कमलसहितानि सरांसि च यूथबद्धान् स्वस्वयूथेषु संबद्धान् पृषतान् सबिन्दुमृगांश्च मदोन्मत्तान् विषाणिनः प्रशस्तशृङ्गविशिष्टान् महिषांश्च वराहांश्च द्रुमवैरिणः वृक्षोन्मूलकान् गजांश्च पश्यमानौ पश्यन्तौ तौ रामलक्ष्मणौ सीतया सह जग्मतुः । तत्र प्रस्थः शिखरम् 'स्नुः प्रस्थः सानुरस्त्रियाम्' इत्यमरः । श्लोकत्रयमेकान्वयि ॥ २-४ ॥

१ शिष्यत इति गो. रा. पाठः । २ चात्मन इति गो. पाठः । ३ सुमध्यमेति गो. पाठः । ४ युक्तानीति गो. पाठः ।

यूथबन्धांश्च पृषता मदोन्मत्तान्विषाणिनः । महिषांश्च वराहांश्च गजांश्च द्रुमवैरिणः ॥ ४ ॥
ते गत्वा दूरमध्वानं लम्बमाने दिवाकरे । ददृशुः सहिता रम्यं तटाकं योजनायुतम् ॥ ५ ॥
पद्मपुष्करसंबाधं गजयूथैरलंकृतम् । सारसैर्हंसकादम्बैः संकुलं जलजातिभिः ॥ ६ ॥
प्रसन्नसलिले रम्ये तस्मिन्सरसि शुश्रुवे । गीतवादित्रनिर्घोषो न तु कश्चन दृश्यते ॥ ७ ॥
ततः कौतूहलाद्रामो लक्ष्मणश्च महारथः । मुनिं धर्मभृतं नाम प्रष्टुं समुपचक्रमे ॥ ८ ॥
इदमत्यद्भुतं श्रुत्वा सर्वेषां नो महामुने । कौतूहलं महज्जातं किमिदं साधु कथ्यताम् ॥ ९ ॥
[ वक्तव्यं यदि चेद्विप्र नातिगुह्यमपि प्रभो । ]
तेनैवमुक्तो धर्मात्मा राघवेण मुनिस्तदा । प्रभावं सरसः क्षिप्रमाख्यातुमुपचक्रमे ॥ १० ॥
इदं पञ्चाप्सरो नाम तटाकं सार्वकालिकम् । निर्मितं तपसा राम मुनिना माण्डकर्णिना ॥ ११ ॥
स हि तेपे तपस्तीव्रं माण्डकर्णिर्महामुनिः । दशवर्षसहस्राणि वायुभक्षो जलाशये ॥ १२ ॥

गो० टी०–तावित्यादि । पश्यमानौ पश्यन्तौ शैलप्रस्थान् शैलसानूनि सारसान् हंसविशेषान् पुलिनं सैकतं जलजैः खगैः जलपक्षिभिः ॥ २ ॥ ३ ॥

४ ] ति० टी०–यूथबन्धान्यूथरूपेण संबद्धान् पृषतामिति षष्ठी । विषाणिनो महिषानित्यन्वयः ॥ ४ ॥

गो० टी०–यूथबद्धान् यूथतया बद्धान् समूहीभूतानित्यर्थः, पृषतान् बिन्दुमृगान् विषाणिन इति महिषादिविशेषणं नागान् गजान् ॥ ४ ॥

५ ] ति० टी०–दिवाकरे लम्बमाने सायाह्न इत्यर्थः । योजनायतं चतुर्दिक्षु योजनायतम् ॥ ५ ॥

६ ] ति० टी०–पद्मपुष्करसंबाधं पद्मानि रक्तानि पुष्करं पुण्डरीकं तैः संबाधः संमर्दो यस्मिंस्तत् पद्मानां पुष्करे जले संबाधो नैबिड्यं यत्र तमिति कतकः गजयूथैरलंकृतम् तीरे जले चेति शेषः । हंसा राजहंसाः, कादम्बाः कलहंसाः, जलजातिभिर्जले जातिर्जन्म येषां तैर्मत्स्यादिभिः ॥ ६ ॥

रा० टी०–त इति । सहिताः सहचारिणः ते रामादयः दूरमध्वानं गत्वा दिवाकरे सूर्ये लम्बमाने अस्तं गच्छति सति पद्मपुष्करसंबाधं पद्मै रक्तकमलैः पुष्करैः पुण्डरीकैश्च संबाधं निबिडं राजयूथैः अलंकृतं शोभितं सारसैः पक्षिविशेषैः हंसकादम्बैः हंसैः राजहंसैः कादम्बैः कलहंसैश्च जले जातिर्जन्म येषां तैर्मत्स्यादिभिश्च संकुलं योजनायतं क्रोशचतुष्टयविस्तृतं रम्यं तटाकं सरः ददृशुः । श्लोकद्वयमेकान्वयि ॥ ५ ॥ ६ ॥

गो० टी०–ते गत्वेति । लम्बमाने अस्तमयोन्मुखे योजनायतं चतुर्दिशि योजनप्रमाणविस्तारं पद्मपुष्करसंबाधं पद्मैः पुष्करैः सर्पैश्च संबाधं निबिडम् 'वाद्यभाण्डमुखे सर्पे कारण्डे पुष्करं स्मृतम्' इति विश्वः । सारसैः 'सारसो मैथुने कामी गोनर्दः पुष्कराह्वयः' इत्युक्तेः हंसैः राजहंसैः कादम्बैः 'कदम्बः कलहंसश्च हंसः स्याद्धूसरच्छदः' इत्युक्तेः ॥ ५ ॥ ६ ॥

७ ] ति० टी०–गीतवादित्रनिर्घोषो गीतोपेतवाद्यशब्दः न तु कश्चनेति गीतादिकर्तेत्यर्थः ॥ ७ ॥

रा० टी०–प्रसन्नेति । प्रसन्नं सलिलं यस्मिन् तस्मिन् रम्ये सरसि गीतवादित्रनिर्घोषः गीतवादित्रयोः शब्दः शुश्रुवे, दृश्यते तु कश्चिन्न रामादिभिरिति शेषः ॥ ७ ॥

गो० टी०–प्रसन्नसलिल इति । गीतेति । गीतानि षड्जादिस्वरनिबद्धप्रबन्धाः वादित्राणि ततघनसुषिरानद्धभेदेन चतुर्विधानि तेषां निर्घोषः । अत्र यादवः 'वादित्रं वादितं वाद्यमातोद्यं तच्चतुर्विधम् । ततं वीणादिकं वाद्यं तालं तु विततं घनम् । वंशादिकं तु सुषिरमानद्धं मुरजादिकम्' इति । कश्चन वादयिता न दृश्यते नादृश्यत ॥ ७ ॥

८–१० ] ति० टी०–धर्मभृतं नाम धर्मभृतनामकं धर्मभृन्नामकं वा शरणागतेष्वनुयायिष्वेकम् ॥ ८–१० ॥

रा० टी०–तत इति । ततः तच्छब्दश्रवणानन्तरं कौतूहलादाश्चर्याद्धेतोः रामो लक्ष्मणश्च धर्मभृतं धर्मभृत्संज्ञकं मुनिं प्रष्टुं समुपचक्रमे ॥ ८ ॥

रा० टी०–इदमिति । अद्भुतमिदमुच्चारयितृदर्शनरहितशब्दजातं श्रुत्वा सर्वेषां नो मनसि महत्कौतूहलं जातमतः इदं शब्दजातं किं किंनिमित्तकमिति साधु यथा स्यात्तथा कथ्यताम् ॥ ९ ॥

गो० टी०–तत इत्यादि । धर्मभृतं सहागतेषु मुनिष्वन्यतमं कथ्यतामित्येवं प्रष्टुं समुपचक्रम इत्यन्वयः ॥ ८–१० ॥

रा० टी०–तेनेति । तेन राघवेण एवमुक्तः धर्मात्मा मुनिः सरसः प्रभावमाख्यातुमुपचक्रमे ॥ १० ॥

गो० टी०–तेनेति । प्रभवम् उत्पत्तिं कृत्स्नं गीतवादित्रमूलं चेत्यर्थः ॥ ११ ॥

११–१२ ] ति० टी०–पञ्चाप्सरसां क्रीडासाधनत्वात्पञ्चाप्सरोनामत्वेन प्रसिद्धम् सर्वकालोदकपूर्त्यादिगुणकं सार्वकालिकम् ॥ ११ ॥ १२ ॥

१ बद्धांश्च पृषतानिति गो. रा. पाठः । २ नागांश्चेति गो. पाठः । ३ चारिभिरिति गो. पाठः । ४ बल इति गो. पाठः । ५ अधमेतदधिकं पाठे । ६ प्रभवमिति गो. पाठः । ७ कृत्स्नमिति गो. पाठः । ८ ऽऽश्रय इति गो. पाठः ।

ततः प्रव्यथिताः सर्वे देवाः साग्निपुरोगमाः । अब्रुवन्वचनं सर्वे परस्परसमागताः ॥ १३ ॥
अस्माकं कस्यचित्स्थानमेष प्रार्थयते मुनिः । इति संविग्नमनसः सर्वे तत्र दिवौकसः ॥ १४ ॥
ततः कर्तुं तपोविघ्नं सर्वदेवैर्नियोजिताः । प्रधानाप्सरसः पञ्च विद्युच्चलितवर्चसः ॥ १५ ॥
अप्सरोभिस्ततस्ताभिर्मुनिर्दृष्टपरावरः । नीतो मदनवश्यत्वं [3]देवानां कार्यसिद्धये ॥ १६ ॥
ताश्चैवाप्सरसः पञ्च मुनेः पत्नीत्वमागताः । तटाके निर्मितं तासां [4]तस्मिन्नन्तर्हितं गृहम् ॥ १७ ॥
तत्रैवाप्सरसः पञ्च निवसन्त्यो यथासुखम् । रमयन्ति तपोयोगान्मुनिं यौवनमास्थितम् ॥ १८ ॥
तासां संक्रीडमानानामेष वादित्रनिःस्वनः । श्रूयते भूषणोन्मिश्रो गीतशब्दो मनोहरः ॥ १९ ॥
आश्चर्यमिति तस्यैतद्वचनं भावितात्मनः । राघवः प्रतिजग्राह सह भ्रात्रा महायशाः ॥ २० ॥

---

रा० टी०—तदाख्यानप्रकारमाह—इदमिति । सार्वकालिकं सार्वकालिकजलविशिष्टं माण्डकर्णिना तदभिधेन मुनिना तपसा हेतुभूतेन निर्मितं पञ्चाप्सरो नाम पञ्चाप्सरोभिधमिदं तटाकमस्तीति शेषः ॥ ११ ॥

गो० टी०—इदमित्यादि । पञ्चाप्सरःक्रीडासाधनत्वात् पञ्चाप्सरो नाम । सार्वकालिकं सर्वकाले भवम् "कालाट्ठञ्" उभयपदवृद्धिः सर्वस्मिन्नपि काले अशुष्यदित्यर्थः ॥ १२ ॥

रा० टी०—तन्निर्माणप्रकारमाह—स इत्यादिभिः । स प्रसिद्धः माण्डकर्णिर्महामुनिः दशवर्षसहस्राणि वायुभक्षः सन् जलाशये तीव्रं तपस्तेपे ॥ १२ ॥

गो० टी०—उक्तार्थे इतिहासमाह—स हीत्यादिना । जलाश्रयः स्वनिर्मिततटाकजलावगाढः ॥ १३ ॥

१३ ] ति० टी०—अग्निरूपपुरोगमसहिताः साग्निपुरोगमाः सर्वे प्रव्यथिता अभूवन् । ततः सर्वेऽब्रुवन्नित्यर्थः ॥ १३ ॥

रा० टी०—तत इति । ततस्तपश्चरणाद्धेतोः प्रव्यथिता अत एव परस्परसमागताः साग्निपुरोगमाः अग्निपुरोगमसहिताः सर्वे ते देवाः वचनमब्रुवन् परस्परमिति शेषः ॥ १३ ॥

गो० टी०—साग्निपुरोगमाः अग्निना पुरःसरेण सहिताः । क्रियाभेदात्सर्वशब्दावृत्तिः ॥ १४ ॥

१४ ] ति० टी०—इति संविग्नमनसः अभूवन्निति शेषः॥१४॥

रा० टी०—तद्वचनाकारमाह—अस्माकमिति । एषः मुनिः अस्माकं मध्ये कस्यचित्स्थानं प्रार्थयते इति परस्परवचनेन तत्र तस्मिन् समये सर्वे दिवौकसः संविग्नमनसः आसन्निति शेषः ॥ १४ ॥

गो० टी०—अस्माकं मध्ये संविग्नमनसः भीतमनस्काः ॥१५॥

१५ ] ति० टी०— तत उद्विग्नसर्वदेवैस्तपोविघ्नाय नियुक्ताः विद्युच्चलितवर्चसश्चलिताविद्युत्कान्तयः।प्रधानाप्सरसः पञ्चेत्यनेन तत्परिवारभूतान्यसत्ता ध्वनिता ता आगता इति शेषः॥ १५ ॥

रा० टी०—तत इति । ततः मनःसंविग्नत्वप्राप्तिहेतोः तपोविघ्नं कर्तुं विद्युच्चलितवर्चसः प्रधानाः पञ्चाप्सरसः सर्वैः देवैर्नियोजिताः ॥ १५ ॥

गो० टी०—तत्र तदा विद्युच्चलितवर्चसः विद्युत इव तरलतेजसः चलितविद्युद्वर्चस इति वार्थः ॥ १६ ॥

१६ ] ति० टी०—दृष्टपरावरो दृष्टैहिकपारलौकिकधर्माधर्मः ॥ १६ ॥

रा० टी०—अप्सरोभिरिति । दृष्टपरावरः दृष्टे परावरे उपनिषत्प्रसिद्धपरावरविधे येन स मुनिः ताभिः देवनियोजिताभिः अप्सरोभिः देवानां कार्यसिद्धये मदनवश्यत्वं नीतः प्रापितः ॥ १६ ॥

गो० टी०—दृष्टपरावरः दृष्टपरमात्मजीवस्वरूपः ॥१७॥१८॥

१७ ] ति० टी०—निर्मितं तेनैव मुनिना क्रीडार्थमिति शेषः१७

रा० टी०—मदनवश्यत्वप्रकारमाह—ता इति । ताः अप्सरसः मुनेः पत्नीत्वमागताः प्राप्ताः अत एव तस्मिन् तटाके तासां पत्नीनामन्तर्हितं गृहं निर्मितम् ॥ १७ ॥

१८ ] ति० टी०—तत्रैव निर्मिते गृहे तपोयोगो यौवने हेतुः१८

रा० टी०—तत्रेति । तत्र मुनिनिर्मितभवने निवसन्त्योऽप्सरसः तपोयोगात् यौवनमास्थितं मुनिं रमयन्ति ॥ १८ ॥

गो० टी०—तपोयोगात् तपोरूपोपायात् यौवनमास्थितम् 'योगः संनहनोपायध्यानसंगतियुक्तिषु' इत्यमरः॥ १९ ॥

१९ ] ति० टी०—भूषणोन्मिश्रो वलयादिभूषणध्वनिमिश्रः ॥ १९ ॥

रा० टी०—तासामिति । संक्रीडमानानां तासां भूषणोन्मिश्रः भूषणशब्दसंयुक्तः मनोहरः एषः वादित्रनिस्वनः वीणादिशब्दः श्रूयते ॥ १९ ॥

गो० टी०—संक्रीडमानानामिति "क्रीडोऽनुसंपरिभ्यश्च" इत्यात्मनेपदम् । भूषणोन्मिश्रः भूषणघोषोन्मिश्रः वादित्रनिःस्वनविशेषणं भूषणोन्मिश्रो वादित्रनिःस्वनो गीतशब्दश्च श्रूयत इत्यन्वयः२०

२० ] ति० टी०—वचनं तदर्थमाश्चर्यमिति प्रतिजग्राह ॥ २० ॥

रा० टी०—आश्चर्यमिति । भावितात्मनः परिशीलितपरमात्मनस्तस्य ऋषेः एतद्वचनं श्रुत्वा आश्चर्यमिति राघवः प्रतिजग्राह मेने ॥ २० ॥

---

१ ते त्रिदिवौकस इति गो. ते चेति रा. पाठः । २ तत्रेति गो. पाठः । ३ सुराणामिति गो. पाठः । ४ अस्मिन्निति गो. पाठः ।

एवं कथयमानः स ददर्शाश्रममण्डलम् । कुशचीरपरिक्षिप्तं ब्राह्मया लक्ष्म्या समावृतम् ॥ २१ ॥
प्रविश्य सह वैदेह्या लक्ष्मणेन च राघवः । [ उवास मुनिभिः सर्वैः पूज्यमानो महायशाः ]
तदा तस्मिन्स काकुत्स्थः श्रीमत्याश्रममण्डले ॥ २२ ॥
उषित्वा स सुखं तत्र पूज्यमानो महर्षिभिः । जगाम चाश्रमांस्तेषां पर्यायेण तपस्विनाम् ॥ २३ ॥
येषामुषितवान्पूर्वं सकाशे स महास्त्रवित् । क्वचित्परिदशान्मासानेकसंवत्सरं क्वचित् ॥ २४ ॥
क्वचिच्च चतुरो मासान्पञ्च षट् च परान्क्वचित् । अपरत्राधिकान्मासानध्यर्धमधिकं क्वचित् ॥ २५ ॥
त्रीन्मासानष्टमासांश्च राघवो न्यवसत्सुखम् । तत्र संवसतस्तस्य मुनीनामाश्रमेषु वै ॥ २६ ॥

गो० टी०–एतत् पूर्वोक्तं वचनम्–आश्चर्यमिति । प्रतिजग्राह श्रुतवान् ॥ २१ ॥

२१ ] ति० टी०–एवं कथयमान आश्चर्यमित्येवं कथयन्ब्राह्मया लक्ष्म्या ब्रह्मविद्यानुष्ठानजलक्ष्म्या ब्रह्मवर्चसेनेति यावत् ॥ २१ ॥

रा० टी०–एवमिति । एवमाश्चर्यमिति कथयमानः वदन् स रामः कुशचीरपरिक्षिप्तं कुशैः चीरैः खण्डपटैश्च परिक्षिप्तमितस्ततः पतितं ब्राह्मया ब्राह्मणसंबन्धिन्या लक्ष्म्या वेदपाठादिसंपत्त्या समावृतमाश्रममण्डलं ददर्श 'कथयमानस्य' इति भूषणपाठः कथयमाने इति तद्व्याख्या ॥ २१ ॥

गो० टी०–एवमिति । कथयमानस्य कथयमाने तस्मिन्मुनौ । 'कथयमानः स' इति पाठे एवं संभाषमाणः स रामः ब्राह्मया ब्राह्मणसंबन्धिन्या लक्ष्म्या समृद्ध्या ब्राह्मणसंपूर्णमित्यर्थः । आश्रममण्डलं ददर्श राघव इत्यनुषङ्गः ॥ २२ ॥

२२ ] ति० टी०–प्रविश्याश्रममण्डलमित्यनुषङ्गः आश्रममण्डले उवासेति शेषः ॥ २२ ॥

रा० टी०–प्रविश्येति । आश्रममण्डलं प्रविश्य सर्वैर्मुनिभिः पूज्यमानो राघवः उवास आश्रममण्डलमित्यनुकृष्यते २२

गो० टी०–प्रविश्येति । आश्रममण्डलमित्यनुषज्यते । सर्वैस्तदाश्रमवासिभिः पूज्यमानः स्वस्वाश्रमे अर्घ्यादिना अर्च्यमानः ॥ २३ ॥

गो० टी०–कियन्तं कालं तत्रोवासेत्यपेक्षायां कालपरिमाणं वक्तुं रामस्याश्रमवासप्रकारं दर्शयति–तथेत्यादिश्लोकद्वयेन । तथा उक्तप्रकारेण तस्मिन्नाश्रममण्डले सुखमुषित्वा तत्र पूज्यमानः स राम इत्युक्तानुवादः येषां सकाशे पूर्वमुषितवान् तेषामाश्रमान् पर्यायेण द्वितीयपर्यायेण च जगाम। एवमाश्रमवासप्रकारः–एकवारं सर्वेषामाश्रमान् गत्वा पुनरपि तेषामेवाश्रमान् जगामेति वाक्यार्थः । महास्त्रविदित्यनेन तत्रत्यराक्षसोपद्रवपरिहाराय पुनर्गमनमिति सूचयति । वक्ष्यति हि मारीचः– 'तेन मुक्तास्त्रयो बाणाः' इत्यारभ्य 'पराक्रमज्ञो रामस्य शठो दृष्टभयः पुरा । समुद्भ्रान्तस्ततो मुक्तस्तावुभौ राक्षसौ हतौ' इति । एतदर्थमेव सुतीक्ष्णेनात्र गमनमनुज्ञातम् ऋषिभिः कारितं च ॥ २४ ॥

२३ ] ति० टी०–तद्वासप्रकारमाह–उषित्वेति । एकस्याश्रमे इति शेषः । अथ पर्यायेण सर्वेषामाश्रमाञ्जगाम ॥ २३॥

रा० टी०–तदेति । तस्मिन् श्रीमत्याश्रममण्डले महर्षिभिः सह काकुत्स्थो रामः स सुखमुषित्वा पर्यायेण तेषां तदाश्रमस्वाम्यतिरिक्तानां तपस्विनामाश्रमान् जगाम । सार्धश्लोक एकान्वयी ॥ २३ ॥

२४ ] ति० टी०–किं च येषामृषीणामाश्रमे पूर्वमुषितवान्पुनरपि तेषामाश्रमाञ्जगाम तद्भक्त्यतिशयात् यथा सुतीक्ष्णाश्रमे पुनरागमनम्। एकत्र वासाभावादेवाह–क्वचिदिति । परिदशान्दशत्वसंख्यां परिगतान् । दशसंख्यान्मासानित्यर्थः २४

२५–२६ ] ति टी०–परान्वर्षतोऽधिकान् एवमधिकानित्याद्यपि ॥ २६ ॥ २६ ॥

रा० टी०–येषामिति । महास्त्रवित् स रामः येषां मुनीनां सकाशे समीपे पूर्वमुषितवान् तेषामपि सकाशे क्वचित् परिदशान् दशसमीपवर्तिनः नवैकादश वेत्यर्थः । मासान् क्वचिदेकं संवत्सरं क्वचिच्च चतुरो मासान् क्वचित्पञ्च मासान् क्वचित् षण्मासान् क्वचित् परान् षण्मासतोऽधिकान् सप्तमासानित्यर्थः अपरत्र अधिकान् सप्तमासतः आधिक्यविशिष्टान् मासान् अष्टमासानित्यर्थः । क्वचित् अध्यर्धं मासार्धाधिकं त्रीन्मासान् मासांश्च राघवः सुखं न्यवसत् । सार्धश्लोकद्वयमेकान्वयि २४-२

गो० टी०–पूर्वमुषितवानित्युक्तवासक्रमं दर्शयति–'क्वचित्परिदशान् मासानेकं संवत्सरं क्वचित् । क्वचिच्च चतुरो मासान् पञ्च षट् चापरान् क्वचित् ॥ अपरत्राधिकं मासादप्यर्धमधिकं क्वचित् त्रीन्मासानष्टमासांश्च राघवो न्यवसत्सुखम्' इति । राघवो राम क्वचिदाश्रमे परिदशान् परिगताः दश येषां ते परिदशाः "संख्ययाव्यया–"इत्यादिना बहुव्रीहिसमासः "बहुव्रीहौ संख्येये डजबहुगणात्"इति डच् समासान्तः । तान् मासान् त्रयोदशमासानित्य "अत्यन्तसंयोगे द्वितीया" । सुखं यथा भवति तथा न्यवसत् क्वचिदाश्रमे एकं संवत्सरं सुखं न्यवसत् क्वचिदाश्रमे चतु मासान् सुखं न्यवसत् क्वचित् पञ्च मासान् क्वचित् षण्मासान् क्वचिदपरान् षड्भ्योऽन्यान् सप्त मासान् सुखं न्यवसत् 'पञ्च षट् च तथा क्वचित्' इति पाठे तथा पुनः क्वचित् षण्मास

१ मानस्येति गो. पाठः । २ अर्धमेतदधिकं गो. पाठे । ३ तथेति गो. पाठः । ४ स्त्वेति गो. पाठः । ५ एकमिति गो. पाठः । ६ अपरानिति गो. पाठः । ७ ऽधिकं मासादप्यर्धमिति गो. पाठः । ८ तथेति गो. पाठः ।

रमतश्चानुकूल्येन ययुः संवत्सरा दश । परि[1]वृत्य च धर्मज्ञो राघवः सह सीतया ॥ २७ ॥
सुतीक्ष्णस्या[2]श्रमपदं पुनरेवाजगाम ह । स तमाश्रमम[3]ागम्य मुनिभिः [4]परिपूजितः ॥ २८ ॥
तत्रापि न्यवसद्रामः किंचित्कालमरिन्दमः । अथाश्रमस्थो विनयात्कदाचित्तं महामुनिम् ॥ २९ ॥
उपासीनः स काकुत्स्थः सुतीक्ष्णमिदमब्रवीत् । अस्मिन्नरण्ये भगवन्नगस्त्यो मुनिसत्तमः ॥ ३० ॥
वसतीति मया नित्यं कथाः कथयतां श्रुतम् । न तु जानामि तं देशं वनस्यास्य महत्तया ॥ ३१ ॥
कुत्रा[5]श्रमपदं रम्यं महर्षेस्तस्य धीमतः । [6]प्रसादार्थं भगवतः सानुजः सह सीतया ॥ ३२ ॥
अगस्त्यमभिगच्छेयमभिवादयितुं मुनिम् । मनोरथो महानेष हृदि [7]संपरिवर्तते ॥ ३३ ॥

---

नित्यर्थः । परिदशानित्यत्र चतुर्दशमासानित्यर्थः । अपरत्राश्रमे मासादधिकं सुखं न्यवसत् अधिकशब्देनात्र मासचतुर्थांशो विवक्षितः एकमासं मासपादं चेत्यर्थः । 'अपरत्राधिकं मासम्' इति पाठे मासम् अधिकं तत्पादं चेत्यर्थः । अपिशब्दः सर्वत्र मासानुकर्षणार्थः । क्वचिदाश्रमे अर्धमधिकं च न्यवसत् पादोनमासमित्यर्थः । तथा चैतदव्यवहितपूर्वाश्रमवासादिनैर्द्वौ मासौ संवृत्तौ एकत्र सपादमासः अपरत्र पादोनमास इत्याहत्य मासद्वयसंभवात् । 'अध्यर्धमधिकं क्वचित्' इतिपाठे अध्यर्धम् अर्धाधिकम् अर्धमासाधिकमित्यर्थः । अधिकं पूर्वोक्तपादमासात्मकाधिकं तथा च त्रिपादमासमित्यर्थः । क्वचित् त्रीन् मासान् न्यवसत् क्वचिदष्टमासान् न्यवसत् एवं षष्टिः मासाः सिद्धाः । केचिदाहुः परिदशान् दशाधिकानिति वक्ष्यमाणेष्वष्टसु स्थानेष्वन्वेति । तथाचायमर्थः एवं संवत्सरं क्वचिदित्यत्र द्वाविंशतिमासानित्यर्थः । क्वचिच्च चतुरो मासानित्यत्र चतुर्दश मासानित्यर्थः । पञ्च-षट् चापरान् क्वचिदित्यत्र क्वचित् पञ्चदश मासान् क्वचित् षोडश मासानित्यर्थः । अपरानधिकं मासादध्यर्धमधिकं क्वचिदित्यत्र प्रथमाधिकशब्दोऽर्धमासरूपाधिकांशपरः तथा च अपरान् परिदशान् मासान् अधिकं चेत्यन्वये अर्धाधिकदशमासानित्यर्थः । मासादध्यर्धमित्यादेरयमर्थः क्वचित्परिदशान् मासान् तदुपरि मासादधिकमर्धमपि चेति, तथा च अर्धाधिकैकादशमासानित्यर्थः । त्रीन् मासान् अष्टमासांश्चेत्यत्र त्रयोदश मासान् अष्टादश मासांश्चेत्यर्थः । तथाच विंशत्युत्तरशतमासा लब्धा इति तस्मिन् पक्षे प्राथमिकक्वचित्पदमासपदानर्थक्यं पूर्वग्रन्थविरोध इत्यादि द्रष्टव्यम् ॥ २५–२७ ॥

रा० टी०–तत्रेति । तत्र तेषु मुनीनामाश्रमेषु संवसतः आनुकूल्येन रमतश्च तस्य रामस्य दश संवत्सरा वर्षाणि ययुः२७

गो० टी०–तथाचाश्रममण्डले दश संवत्सराः संवृत्ता इत्याह–तथा संवसत इति । इयमेवाश्रमवाससंख्या पूर्वापरसंख्या तु किष्किन्धाकाण्डे वक्ष्यते ॥ २८ ॥

२७ ] ति० टी०–रमतो रममाणस्य । परिसृत्य सर्वमुन्याश्रमानटित्वा । 'परिवृत्य' इति पाठान्तरम् । 'प्रतिश्रुत्य' इति पाङ्क्तः पाठः ॥ २७ ॥

रा० टी०–परीति । धर्मज्ञो राघवः परिवृत्य मुनीनामाश्रमेषु गत्वा सुतीक्ष्णस्याश्रमपदं पुनराजगाम ॥ २८ ॥

गो० टी०–परिवृत्येति । परिवृत्य एवमाश्रमं सर्वं परिक्रम्य ॥ २९–३१ ॥

२८–२९ ] ति० टी०–यतः पुनरागन्तव्यमिति प्रतिज्ञाय गतः अतः पुनराजगामेत्यर्थः ॥ २८ ॥ २९ ॥

रा० टी०–स इति । अरिन्दमः सः रामः तं सुतीक्ष्णसंबन्धिनमाश्रममागम्य तत्रापि मुनिभिः सह परिपूजितः सन् कंचित्कालं न्यवसत् ॥ २९ ॥

रा० टी०–अथेति । अथ निवासानन्तरं महामुनिं तं सुतीक्ष्णमुपासीनः आश्रमस्थो रामः सुतीक्ष्णमिदमब्रवीत् ॥३०॥

३० ] ति० टी०–उपासीनः समीपस्थः ॥ ३० ॥

रा० टी०–तद्वचनाकारमाह–अस्मिन्निति । हे भगवन् ! अस्मिन् अरण्ये मुनिसत्तमोऽगस्त्यो नित्यं वसतीति कथाः कथयतां कथयद्भ्यः श्रुतमस्य वनस्य महत्तया तमगस्त्याधिष्ठितं देशं न जानामि । सार्धश्लोक एकान्वयी ॥ ३१ ॥

गो० टी०–अस्मिन्निति । कथाः नानाकथाः कथयतां कथयत्सु ॥ ३२ ॥

३१–३२ ] ति० टी०–कथाः कथयतां सकाशादिति शेषः ॥ ३१–३२ ॥

रा० टी०–कुत्रेति । धीमतः महर्षेः तस्य अगस्त्यस्य आश्रमपदं कुत्र कस्मिन्प्रदेशे अस्तीति शेषः, तद्वदेत्यर्थः । अर्धं पृथक् । ननु किमर्थमयं प्रश्न इत्यत आह–प्रसादेति । भगवतः अगस्त्यस्य प्रसादार्थमस्मद्विषयकप्रीत्युत्पत्त्यर्थमगस्त्यं मुनिमभिवादयितुमहमभिगच्छेयम् ॥ ३२ ॥ ३३ ॥

गो० टी०–तत्र वने अगस्त्यमभिवादयितुमभिगच्छेयमित्यन्वयः ॥ ३३ ॥ ३४ ॥

रा० टी०–मनोरथ इति । यत् प्रयत्नवान् अहं मुनिवरं स्वयं शुश्रूषेयमेष महान्मनोरथः हृदि अस्मद्धृदये संपरिवर्तते३४

गो० टी०–मनोरथ इति । तं मुनिवरं शुश्रूषेयमिति यत् एष मनोरथः अभिलाषो मे हृदि परिवर्तत इत्यन्वयः । शुश्रूषेयमिति परस्मैपदमार्षम् ॥ ३५ ॥ ३६ ॥

---

१ वृत्येति गो. रा. पाठः । २ ऽऽश्रमं श्रीमानिति गो. पाठः । ३ आसाद्येति गो. पाठः । ४ प्रतीति गो. पाठः । ५ ऽऽश्रममिदं पुण्यमिति गो. पाठः । ६ प्रसादात्तत्रभवत इति गो. पाठः । ७ मे इति गो. पाठः ।

यदहं तं मुनिवरं शुश्रूषेयमपि स्वयम् । इति रामस्य स मुनिः श्रुत्वा धर्मात्मनो वचः ॥ ३४ ॥
सुतीक्ष्णः प्रत्युवाचेदं प्रीतो दशरथात्मजम् । अहमप्येतदेव त्वां वक्तुकामः सलक्ष्मणम् ॥ ३५ ॥
अगस्त्यमभिगच्छेति सीतया सह राघव । दिष्ट्या त्विदानीमर्थेऽस्मिन्स्वयमेव ब्रवीषि माम् ३६ ॥
अयमाख्यामि ते राम यत्रागस्त्यो महामुनिः । योजनान्याश्रमात्तात याहि चत्वारि वै ततः ॥
दक्षिणेन महाञ्छ्रीमानगस्त्यभ्रातुराश्रमः ॥ ३७ ॥
स्थलीप्रायवनोद्देशे पिप्पलीवनशोभिते । बहुपुष्पफले रम्ये नानाविहंगनादिते ॥ ३८ ॥
पद्मिन्यो विविधास्तत्र प्रसन्नसलिलाशयाः । हंसकारण्डवाकीर्णाश्चक्रवाकोपशोभिताः ॥ ३९ ॥
तत्रैकां रजनीं व्युष्य प्रभाते राम गम्यताम् । दक्षिणां दिशमास्थाय वनखण्डस्य पार्श्वतः ॥ ४० ॥
तत्रागस्त्याश्रमपदं गत्वा योजनमन्तरम् । रमणीये वनोद्देशे बहुपादपशोभिते ॥ ४१ ॥
रंस्यते तत्र वैदेही लक्ष्मणश्च त्वया सह । स हि रम्यो वनोद्देशो बहुपादपसंयुतः ॥ ४२ ॥
यदि बुद्धिः कृता द्रष्टुमगस्त्यं तं महामुनिम् । अद्यैव गमने बुद्धिं रोचयस्व महामते ॥ ४३ ॥

---

३४-३५ ] ति० टी०—मनोरथाभिनयः—यदहमित्यादि ॥ ३४ ॥ ३५ ॥

रा० टी०—इतीति । धर्मात्मनो रामस्य इति वचः श्रुत्वा प्रीतः सुतीक्ष्णो मुनिः दशरथात्मजं प्रत्युवाच ॥ ३५ ॥

रा० टी०—तत्प्रतिवचनमाह—अहमिति । हे राघव ! सीतया सह अगस्त्यं त्वमभिगच्छ एतदेव त्वामहमपि वक्तुकामः ॥ ३६ ॥

गो० टी०—अहमिति । अगस्त्यमभिगच्छेत्येतद्वक्तुकामोऽस्मीत्यन्वयः ॥ ३७ ॥ ३८ ॥

३६ ] ति० टी०—एतच्छब्दार्थः—अगस्त्यमित्यादि । अस्मिन्नर्थे मदुपदिदिक्षितार्थे ॥ ३६ ॥

रा० टी०—दिष्ट्येति । अस्मिन् मदीप्सिते अर्थे अगस्त्यदर्शने यत् स्वयमेव मां ब्रवीषि तद्दिष्ट्या अतिभाग्यम् । अतः यत्रागस्त्यो मुनिः तं देशमयमहमाख्यामि ॥ ३७ ॥

३७ ] ति० टी०—' योजनादाश्रमादस्मादभि चत्वारि वै ततः ' इति कतकपाठेऽस्मादाश्रमाद्योजनादभि अधिकं चत्वारि योजनानीत्यर्थः, दक्षिणेन गन्तव्यानीति ततस्तद्भ्रातुराश्रम इत्यर्थः । पाठान्तरे तु चतुर्योजनोत्तरमिति स्पष्ट एवार्थः ॥३७॥

रा० टी०—तदाख्यानप्रकारमाह—योजनानीति । हे तात! आश्रमादस्मात्स्थानाद्दक्षिणेन पथा चत्वारि योजनानि याहि ततोऽनन्तरं श्रीमान्महानगस्त्यभ्रातुराश्रमः स्थलीप्राये स्थलीम् अकृत्रिमभूमित्वं प्रैति प्राप्नोति तस्मिन् । किंच स्थल्याः अकृत्रिमभूमेः प्रायः नित्यं स्थितिर्यस्मिन् तस्मिन् पिप्पलीनां वनैः समूहैः शोभिते बहूनि पुष्पफलानि यस्मिन् तस्मिन् नानाविहगनादिते वनोद्देशे अस्तीति शेषः । श्लोकद्वयमेकान्वयि ३८॥३९

गो० टी०—योजनानीति । अस्मादाश्रमाद्दक्षिणेन तथेति हस्तेन निर्देशः । चत्वारि योजनानि अभियाहीति शेषः । ततस्तत्र अगस्त्यभ्रातुराश्रमो वर्तते आश्रमाद्दक्षिणेनेत्यत्र " एनपा द्वितीया " इति द्वितीयाभाव आर्षः ॥ ३९ ॥

३८-३९ ] ति० टी०—तदाश्रमचिह्नं स्थलीप्रायवनोद्देत्यादि ॥ ३८ ॥ ३९ ॥

रा० टी०—पद्मिन्य इति । तत्र तस्मिन्वनोद्देशे हंसकारण्डवाकीर्णाः हंसैः राजहंसैः कारण्डवैः जलकुक्कुटैः आकीर्णाः व्याप्ताः चक्रवाकोपशोभिताः प्रसन्नसलिलाशयाः सन्तीति शेषः तत्र तेषु सलिलाशयेषु विविधा अनेकप्रकाराः पद्मिन्यः सन्ति ॥

गो० टी०—स्थलीति । स्थलीप्राये स्थलीप्रचुरे कारण्डवाः सारसाः तत्रागस्त्यभ्रात्राश्रमे रजनीं व्युष्य रात्रिमतिवाह्य वनषण्डस्य वनसमूहस्य पार्श्वतः दक्षिणां दिशम् आस्थाय उद्दिश्य निर्वणदेशे योजनमन्तरं योजनावकाशं गत्वा अगस्त्याश्रमपदं गम्यतामित्यन्वयः ॥ ४०—४९ ॥

४०-४३ ] ति० टी०—तत्रागस्त्यभ्रात्राश्रमे । इध्मवाहस्त्यस्य नाम । ' अगस्त्यः प्राग्दुहितरमुपयेमे धृतव्रताम् यस्यां दृढव्रतो जात इध्मवाहात्मजो मुनिः ॥' इति भागवते तु देवराच्च सुतोत्पत्तिरिति न्यायेनेत्येके । दक्षिणां दिशमास्थाय योजनमन्तरमवकाशं गत्वा तत्रागस्त्याश्रमं द्रक्ष्यसि ॥४०—४३॥

रा० टी०—तत्रेति । तत्र अगस्त्यभ्रातुराश्रमे एकां रजनीं व्युष्य संस्थाय प्रभाते प्रातःकाले वनखण्डस्य पार्श्वतः दक्षिणां दिशमास्थाय गम्यताम् ॥ ४१ ॥

रा० टी०—तत्रेति । तत्र तस्मिन्मार्गे योजनमन्तरं गत्वा अगस्त्याश्रमपदमस्तीति शेषः ॥ ४२ ॥

रा० टी०—रंस्यते इति । यतः बहुपादपशोभितः अत एव रम्यः वनोद्देशोऽस्ति अतः त्वया सह वैदेही लक्ष्मणश्च वनोद्देशे रंस्यते विहरिष्यति ॥ ४३ ॥

---

१ अहमिति गो. पाठः । २ वत्सेति गो. पाठः । ३ अस्मात्तथेति गो. पाठः । ४ प्राये इति गो. रा. पाठः । ५ शकुनीति गो. पाठः । ६ सलिशिवा इति गो. पाठः । ७ षण्डस्येति गो. पाठः । ८ संवृते इति गो. पाठः । ९ संकुल इति गो. पाठः । १० यश इति गो. पाठः ।

इति रामो मुनेः श्रुत्वा सह भ्रात्राऽभिवाद्य च । प्रतस्थेऽगस्त्यमुद्दिश्य सानुगः सह सीतया ॥ ४४ ॥
पश्यन्वनानि [1]चित्राणि पर्वतांश्चाभ्रसंनिभान् । सरांसि सरितश्चैव पथि मार्गवशानु[2]गान् ॥ ४५ ॥
सुतीक्ष्णेनोपादिष्टेन गत्वा तेन प[3]था सुखम् । इदं परमसंहृष्टो वाक्यं लक्ष्मणमब्रवीत् ॥ ४६ ॥
एतदेवाश्रमपदं नूनं तस्य महात्मनः । अगस्त्यस्य मुनेर्भ्रातुर्दृश्यते पुण्यकर्मणः ॥ ४७ ॥
यथा हीमे वनस्यास्य ज्ञाताः पथि सहस्रशः । संनताः फलभारेण पुष्पभारेण च द्रुमाः ॥ ४८ ॥
पिप्पलीनां च पक्वानां वनादस्मादुपागतः । गन्धोऽयं पवनोत्क्षिप्तः सहसा कटुकोदयः ॥ ४९ ॥
तत्र तत्र च दृश्यन्ते संक्षिप्ताः काष्ठसंचयाः । लूनाश्च [4]परिदृश्यन्ते दर्भा वैदूर्यवर्चसः ॥ ५० ॥
एतच्च वनमध्यस्थं कृष्णाभ्रशिखरोपमम् । पावकस्याश्रमस्थस्य धूमाग्रं संप्रदृश्यते ॥ ५१ ॥
विविक्तेषु च [5]तीर्थेषु कृतस्नाना द्विजातयः । [6]पुण्योपहारं कुर्वन्ति कुसुमैः स्वयम[7]र्जितैः ॥ ५२ ॥
[8]ततः सुतीक्ष्णवचनं यथा सौम्य मया श्रुतम् । अगस्त्यस्याश्रमो भ्रातुर्नूनमेष भविष्यति ॥ ५३ ॥

रा० टी०–यदीति । हे महामते! अगस्त्यं द्रष्टुं यदि बुद्धिर्निश्चयः कृता तदा अद्यैव गमने बुद्धिं रोचयस्व कुरु ॥ ४४ ॥

४४ ] ति० टी०–मुनेः श्रुत्वेति वचनमिति शेषः ॥ ४४ ॥

रा० टी०–इतीति । मुनेः सुतीक्ष्णस्य इति वचः श्रुत्वा अभिवाद्य मुनिं प्रणम्य अगस्त्यमुद्दिश्य सीतया सह प्रतस्थे ४६

गो० टी०–इतीति । इति एवंप्रकारेण मुनेः सकाशाच्छ्रुत्वा ॥ ४६ ॥

४५–४७ ] ति० टी०–मार्गवशानुगान्मन्मार्गवशात्प्राप्तान् ॥ ४५–४७ ॥

रा० टी०–पश्यन्निति । मार्गवशानुगान्मार्गवशेन प्राप्तान् वनादीन् पश्यन् सुतीक्ष्णेन उपदिष्टेन बोधितेन तेन मार्गेण यथासुखं गत्वा परमसंहृष्टो रामः लक्ष्मणमब्रवीत् । श्लोकद्वयमेकान्वयि ॥ ४६ ॥ ४७ ॥

गो० टी०–पश्यन्निति । अभ्रसंनिभान् मेघसन्निभान् मार्गवशानुगाः मार्गवशेनानुगम्यमानाः । राम इति पूर्वश्लोकादनुकृष्यते ॥ ४७ ॥ ४८ ॥

रा० टी०–तद्वाक्याकारमाह–एतदिति । पुण्यकर्मणः अगस्त्यस्य भ्रातुरेव एतदाश्रमपदं दृश्यते ॥ ४८ ॥

गो० टी०–एतदिति । नूनमिति वितर्के यदाश्रमपदं दृश्यते एतन्मुनेर्नूनमित्यन्वयः ॥ ४९ ॥

४८ ] ति० टी०–नूनमेतदेवेत्यत्र हेतुमाह–यथा हीति । यथा यादृशचिह्नवत्तया वनं श्रुतं तथैवास्य फलभारेण पुष्पभारेण संनताः सहस्रशो द्रुमा ज्ञाता ज्ञायमाना वर्तन्ते ॥ ४८ ॥

रा० टी०–तत्र हेतुमाह–यथेति । यथा येन प्रकारेण अस्य अगस्त्यभ्रातृस्वामिकस्य वनस्य लक्षणसमूहा इति शेषः, ज्ञाताः सुतीक्ष्णोक्त्या निश्चिताः तथैव दृश्यन्त इति शेषः । लक्षणसमूहानेवाह–फलभारेण पुष्पभारेण च संनताः पथि सहस्रशो द्रुमाः सन्तीति शेषः ॥ ४९ ॥

गो० टी०–उक्तेऽर्थे हेतुमाह–यथा हीति । यथा हि मे पथि चिह्नतया वनं श्रुतं तथैवास्य वनस्य फलभारेण पुष्पभारेण च सन्नताः द्रुमाः सहस्रशो मया ज्ञाताः ज्ञायमाना वर्तन्ते ॥ ५० ॥

४९–५० ] ति० टी०–असाधारणलिङ्गानुभवमप्याह–पिप्पलीनामिति । पिप्पलीफलानामित्यर्थः । कटुकोदयः कटुकरससंबन्ध्युदयः ॥ ४९ ॥ ५० ॥

रा० टी०–पिप्पलीनामिति । कटुकोदयः कटुकस्य कटुरसस्य उदयो यस्मिन् पवनोत्क्षिप्तः वायुना विकीर्णः पक्वानां परिपाकविशिष्टानां पिप्पलीनामयं गन्धः अस्माद्वनादुपागतः ॥ ५० ॥

रा० टी०–तत्रेति । तत्र तत्र च वनप्रदेशे संक्षिप्ताः परित्यक्ताः लूनाः छिन्नाः वैदूर्यवर्चसः दर्भाश्च दृश्यन्ते ॥ ५१ ॥

गो० टी०–असाधारणोपदिष्टलिङ्गं चानुभूयत इत्याह–पिप्पलीनामित्यादि । पक्वानां पिप्पलीनामिति तत्फलानामित्यर्थः । कटुकस्य कटुरसस्य उदयोऽभिव्यक्तिरानुमानिकी येन स तथा गन्धः उपागतः ॥ ५१ ॥ ५२ ॥

५१ ] ति० टी०–कृष्णाभ्रं नीलाभ्रं शिखरं पर्वतशिखरं चोपमा यस्य ॥ ५१ ॥

रा० टी०–एतदिति । कृष्णाभ्रशिखरोपमं कृष्णमेघसदृशपर्वतशृङ्गसदृशं वनमध्यस्थमाश्रमस्थस्य पावकस्य यागाग्नेः धूमाग्रं संप्रदृश्यते ॥ ५२ ॥

गो० टी०–एतच्चेति । कृष्णाभ्रशिखरोपमं नीलमेघाग्रोपमम् ॥ ५३ ॥

५२–५३ ] ति० टी०–विविक्तेषु निर्मलेष्वेकान्तेषु च स्वयमेवार्जितैः देवपूजार्थमिति शेषः ॥ ५२ ॥ ५३ ॥

रा० टी०–विविक्तेष्विति । विविक्तेषु स्वच्छेषु तीर्थेषु पुण्यजलेषु कृतस्नाना द्विजातयः स्वयमर्जितैः कुसुमैः पुष्पोप-

१ रम्याणीति गो. पाठः । २ नुगा इति गो. पाठः । ३ यथासुखमिति रा. पाठः । ४ पथीति गो. पाठः । ५ तीरेष्विति गो. पाठः । ६ पुष्पोपहारमिति गो. रा. पाठः । ७ आर्जितैरिति गो. पाठः । ८ तत्सुतीक्ष्णस्येति गो. पाठ ।

निगृह्य तरसा मृत्युं लोकानां हितकाम्यया । यस्य भ्रात्रा कृतेयं दिक्शरण्या पुण्यकर्मणा ॥ ५४ ॥
इहैकदा किल क्रूरो वातापिरपि चेल्वलः । भ्रातरौ सहितावास्तां ब्राह्मणघ्नौ महासुरौ ॥ ५५ ॥
धारयन्ब्राह्मणं रूपमिल्वलः संस्कृतं वदन् । आमन्त्रयति विप्रान्स श्राद्धमुद्दिश्य निर्घृणः ॥ ५६ ॥
भ्रातरं संस्कृतं कृत्वा ततस्तं मेषरूपिणम् । तान्द्विजान्भोजयामास श्राद्धदृष्टेन कर्मणा ॥ ५७ ॥
ततो भुक्तवतां तेषां विप्राणामिल्वलोऽब्रवीत् । वातापे निष्क्रमस्वेति स्वरेण महता वदन् ॥ ५८ ॥
ततो भ्रातुर्वचः श्रुत्वा वातापिर्मेषवन्नदन् । भित्त्वा भित्त्वा शरीराणि ब्राह्मणानां विनिष्पतत् ५९॥
ब्राह्मणानां सहस्राणि तैरेवं कामरूपिभिः । विनाशितानि संहत्य नित्यशः पिशिताशनैः ॥ ६० ॥
अगस्त्येन तदा देवैः प्रार्थितेन महर्षिणा । अनुभूय किल श्राद्धे भक्षितः स महासुरः ॥ ६१ ॥

---

हारं देवोद्देश्यकपुष्पबलिं कुर्वन्ति । एतेन इमान्येव आश्रमबोधकचिह्नानि सुतीक्ष्णेन उपदिष्टानीति सूचितम् ॥ ५३ ॥

गो० टी०-विविक्तेष्विति । विविक्तेषु पूतेषु 'विविक्तौ पूतविजनौ' इत्यमरः । उपहारं पुष्पबलिं स्वयमार्जितैः 'समित्पुष्पकुशादीनि श्रोत्रियः स्वयमाहरेत्' इति स्मरणात् ॥ ५४॥

रा० टी०-उपसंहरन्नाह-तत इति । हे सौम्य ! ततः तदाश्रमबोधकं यथा येन प्रकारेण सुतीक्ष्णस्य वचनं श्रुतं तथैव दृश्यत इति शेषः । अतः यस्य भ्रात्राऽगस्त्येन लोकानां हितकाम्यया तरसा वेगेन मृत्युम् ऋषीणां मारकं निगृह्य इयं दिक् शरण्या शरणहिता कृता तस्य अगस्त्यस्य भ्रातुः आश्रमः एष एव भविष्यतीति निश्चिनोमीति शेषः । श्लोकद्वयमेकान्वयि ॥ ५४ ॥

गो० टी०-तादिति । नूनं निश्चये 'नूनं तर्के विनिश्चये' इत्यमरः ॥ ५५ ॥

५४ ] ति० टी०-मृत्युं तत्तुल्यं दैत्यम् शरण्या वासयोग्या लोकानाम् ॥ ५४ ॥

गो० टी०-मृत्युं वातापील्वलनिमित्तकं मरणं हितकाम्यया हितेच्छया इयं दिक् दक्षिणा दिक् शरण्या संश्रयितुं योग्या॥ ५६॥

५५ ] ति० टी०-कोऽसौ मृत्युतुल्योऽसुरो योऽगस्त्येन निगृहीतो लोकरक्षणायेत्यतस्तदाख्यायिकामाह-इहेति वने इत्यर्थः । एकदा कस्मिंश्चित्पूर्वकाले ॥ ५५ ॥

रा० टी०-मृत्युनिग्रहणप्रकारमाह-इहेति । क्रूरौ ब्राह्मणघ्नौ महासुरौ वातापिरिल्वलश्च भ्रातरौ एकदा कस्मिंचित्समये इह आस्ताम् ॥ ५५ ॥

गो० टी०-अस्मिन्नर्थे आख्यायिकामाह-इहेत्यादिना ५७

५६ ] ति० टी०-ब्राह्मणरूपं ब्राह्मणसदृशवेषम् संस्कृतं वदन् ब्राह्मणवदिति शेषः । एतदुभयं विश्वासार्थम् ॥ ५६ ॥

रा० टी०-धारयन्निति । ब्राह्मणं ब्राह्मणसंबन्धिरूपं धारयन् संस्कृतं व्याकरणसंस्कारविशिष्टं वचनं वदन् उच्चारयन् निर्घृणः निर्दयः स इल्वलः श्राद्धमुद्दिश्य विप्रान् आमन्त्रयति आमन्त्रयत ॥ ५६ ॥

गो० टी०-धारयन्निति । संस्कृतं व्याकरणसंस्कारवतीं वाचं वदन् ॥ ५८ ॥

५७-५८ ] ति० टी०-संस्कृतं कृत्वा श्राद्धोचितपाकसंस्कारसंस्कृतं कृत्वा ॥ ५७ ॥ ५८ ॥

रा० टी०-भ्रातरमिति । मेषरूपिणं धृतमेषरूपं भ्रातरं तं वातापिं संस्कृतं श्राद्धोचितसंस्कारविशिष्टं कृत्वा तानामन्त्रितान्द्विजान् श्राद्धदृष्टेन श्राद्धविहितेन कर्मणा भोजयामास ५७

गो० टी०-भ्रातरमिति । संस्कृतं श्राद्धोचितपाकसंस्कारसंस्कृतं कृत्वा शास्त्रदृष्टेन श्राद्धकल्पावगतेन ॥ ५९ ॥

रा० टी०-तत इति । ततः श्राद्धविधिपरिकल्पितमेषरूपराक्षसकर्मकभोजनानन्तरं भुक्तवतां कृतमेषभोजनानां तेषां विप्राणां संमुखे स्थित इल्वलः हे वातापे ! निष्क्रमस्व ब्राह्मणोदरेभ्यः अत्रागच्छ इति स्वरेण वदन् सन् अब्रवीत् ॥ ५८ ॥

गो० टी०-तत इति । भुक्तवतां भुक्तवत्सु वदन्नब्रवीत् व्यक्तमब्रवीत् ॥ ६० ॥

५९ ] ति० टी०-मेषवन्नदन् मृतसंजीवनीवैभवादुदरान्तरिति शेषः । विनिष्पतद्विनिर्गतवान् आडभाव आर्षः ॥ ५९ ॥

रा० टी०-तत इति । ततः इल्वलोच्चारणानन्तरं भ्रातुरिल्वलस्य वचः श्रुत्वा मेषवन्नदन् वातापिः ब्राह्मणानां शरीराणि भित्त्वा भित्त्वा विनिष्पतत् । आगमशास्त्रस्यानित्यत्वादडभावः ॥ ५९ ॥

गो० टी०-तत इति । व्यनिष्पतत् विनिरपतत् ॥ ६१ ॥

६० ] ति० टी०-संहत्य समेत्य ॥ ६० ॥

रा० टी०-ब्राह्मणानामिति । कामरूपिभिः यथेप्सितरूपधारणसमर्थैः पिशिताशनैः रुधिरभोजनैः राक्षसैः संहत्य एकप्रापय्य ब्राह्मणानां सहस्राणि सहस्रं ब्राह्मणाः नित्यशो विनाशितानि ॥ ६० ॥

गो० टी०-ब्राह्मणानामिति । तैरिति बहुवचनं परिवारापेक्षया संहत्य बहुश इति यावत् ॥ ६२ ॥

६१ ] ति० टी०-प्रार्थितेन प्रार्थितासुरद्वयसंहारेण मह

---

१ स्वेति गो. पाठः । २ भ्रातृवच इति रा. पाठः ।

ततः संपन्नमित्युक्त्वा दत्त्वा हस्तेऽवनेजनम् । भ्रातरं निष्क्रमस्वेति इल्वलः समभाषत ॥ ६२ ॥
स तदाभाषमाणं तु भ्रातरं विप्रघातिनम् । अब्रवीत्प्रहसन्धीमानगस्त्यो मुनिसत्तमः ॥ ६३ ॥
कुतो निष्क्रमितुं शक्तिर्मया जीर्णस्य रक्षसः । भ्रातुस्तु मेषरूपस्य गतस्य यमसादनम् ॥ ६४ ॥
अथ तस्य वचः श्रुत्वा भ्रातुर्निधनसंश्रितम् । प्रधर्षयितुमारेभे मुनिं क्रोधान्निशाचरः ॥ ६५ ॥
सोऽभ्यद्रवद्द्विजेन्द्रं तं मुनिना दीप्ततेजसा । चक्षुषाऽनलकल्पेन निर्दग्धो निधनं गतः ॥ ६६ ॥
तस्यायमाश्रमो भ्रातुस्तटाकवनशोभितः । विप्रानुकम्पया येन कर्मेदं दुष्करं कृतम् ॥ ६७ ॥
एवं कथयमानस्य तस्य सौमित्रिणा सह । रामस्यास्तं गतः सूर्यः संध्याकालोऽभ्यवर्तत॥ ६८ ॥
उपास्य पश्चिमां संध्यां सह भ्रात्रा यथाविधि । प्रविवेशाश्रमपदं तमृषिं चाभ्यवादयत् ॥ ६९ ॥
सम्यक्प्रतिगृहीतस्तु मुनिना तेन राघवः । न्यवसत्तां निशामेकां प्राश्य मूलफलानि च ॥ ७० ॥
तस्यां रात्र्यां व्यतीतायामुदिते रविमण्डले । भ्रातरं तमगस्त्यस्य आमन्त्रयत राघवः ॥ ७१ ॥
अभिवादये त्वां भगवन्सुखमस्म्युषितो निशाम् । आमन्त्रये त्वां गच्छामि गुरुं ते द्रष्टुमग्रजम् ॥ ७२ ॥
गम्यतामिति तेनोक्तो जगाम रघुनन्दनः । यथोद्दिष्टेन मार्गेण वनं तच्चावलोकयन् ॥ ७३ ॥

---

र्षिणागस्त्येन श्राद्धे श्राद्धव्यापारमनुभूय भक्षितः सोऽसुरो वातापिः ॥ ६१ ॥

रा० टी०–अगस्त्येनेति । तदा तस्मिन्काले देवैः प्रार्थितेन महर्षिणाऽगस्त्येन श्राद्धे अनुभूय तत्कृतनिमन्त्रणं लब्ध्वा महासुरो वातापिर्भक्षितः ॥ ६१ ॥

गो० टी०–अगस्त्येनेति । अनुभूय श्राद्धवरणादिकमनुभूय ॥ ६३ ॥

६२ ] ति० टी०–तत इल्वलः श्राद्धान्ते संपन्नमित्युक्त्वा हस्तोदकं दत्त्वा भ्रातरं निष्क्रमस्वेत्यभ्यभाषत ॥ ६२ ॥

रा० टी०–तत इति । ततः श्राद्धान्ते संपन्नं श्राद्धसमापकसंपूर्णमिति वचनमुक्त्वा हस्तेऽवनेजनं दत्त्वा निष्क्रमस्वेति भ्रातरमिल्वलः समभाषत ॥ ६२ ॥

गो० टी०–तत इति । ततः श्राद्धान्ते संपन्नमित्युक्त्वा ततो हस्तोदकं च दत्त्वा ॥ ६४ ॥ ६६ ॥

६३-६४] ति०टी०–मया जीर्णस्य भुक्तस्येति शेषः६३-६४

रा० टी०–स इति । विप्रघातिनं भ्रातरं भाषमाणमिल्वलं धीमान् मुनिसत्तमः सोऽगस्त्यः प्रहसन्सन्नब्रवीत् ॥ ६३ ॥

रा० टी०–तद्वचनाकारमाह–कुत इति । मया जीर्णस्य चिरकालिकभोजनात् मलादित्वेन परिणतस्य यमसादनं गतस्य मम गृहप्राप्तचैतन्यांशस्य मेषरूपस्य रक्षसस्तव भ्रातुः निष्क्रमितुं शक्तिः कुतः केन हेतुना स्यादिति शेषः ॥ ६४ ॥

६५ ] ति० टी०–प्रधर्षयितुं हिंसितुम् ॥ ६५ ॥

रा० टी०–अथेति । अथ अगस्त्यकथनानन्तरं भ्रातुः निधनसंश्रितं मरणबोधकं वचः श्रुत्वा मुनिं प्रधर्षयितुं निशाचरः क्रोधादारेभे उद्योगं चकार ॥ ६५ ॥

गो० टी०–अथेति । निधनसंश्रयं नाशविषयं प्रधर्षयितुं हिंसितुम् ॥ ६७ ॥

६६-७१ ] ति० टी०–चक्षुषा चक्षुर्वीक्षणेन । अनलकल्पेनाग्नितुल्येन ॥ ६६-७१ ॥

रा० टी०–स इति । स इल्वलः द्विजेन्द्रं तमगस्त्यमभ्यद्रवत् दीप्ततेजसा मुनिना तु अनलकल्पेन चक्षुषा निर्दग्धः इल्वल इति शेषः । अत एव निधनं मरणं गतः प्राप्तः ॥६६॥

गो० टी०–स इति । अनलकल्पेन अग्निसदृशेन ॥ ६८ ॥

रा० टी०–तस्येति । विप्रानुकम्पया विप्रविषयकदयया येन इदं दुष्करं कर्म कृतं तस्यागस्त्यस्य भ्रातुः तटाकवनशोभितः अयमाश्रमः ॥६७॥

गो० टी०–तस्येति । विप्रानुकम्पया विप्रेष्वनुकम्पया ॥ ६९-७१ ॥

रा० टी०–एवमिति । सौमित्रिणा सह एवं कथयमानस्य रामस्य सूर्योऽस्तं गतः अत एव संध्याकालोऽभ्यवर्तत प्राप्नोत् ॥ ६८ ॥

रा० टी०–उपास्येति । यथाविधि संध्यामुपास्य आश्रमपदं प्रविवेश, ऋषिं तमगस्त्यभ्रातरमभ्यवादयच्च ॥ ६९ ॥

रा० टी०–सम्यगिति । तेन अगस्त्यभ्रात्रा मुनिना तु सम्यक् प्रतिगृहीतः सत्कृत्य स्वीकृतो रामस्तु मूलफलानि प्राश्य एकां निशां न्यवसत ॥ ७० ॥

गो० टी०–सम्यगिति । प्रतिगृहीतः प्रत्युद्गतः प्राश्य भुक्त्वा ॥ ७२ ॥ ७३ ॥

रा० टी०–तस्यामिति । रविमण्डले उदिते सति अगस्त्यस्य भ्रातरं राघवः आमन्त्रयत अपृच्छत् ॥ ७१ ॥

७२-७३ ] ति० टी०–अभिवादये त्वेति पादे नवाक्षरत्वमार्षम् ॥ ७२ ॥ ७३ ॥

---

१ हस्तोदकं तत इति गो. पाठः । २ चेल्वलः सोऽभ्यभाषतेति गो. पाठः । ३ तं तथा भाषमाणमिति गो. पाठः । ४ ते इति गो. पाठः । ५ संश्रयमिति गो. पाठः । ६ ऽभिद्रवन्मुनिश्रेष्ठमिति गो. पाठः । ७ सोऽभीति गो. पाठः । ८ विमले सूर्यमण्डल इति गो. पाठः । ९ ह्यामन्त्रयतेति गो. पाठः । १० त्वामिति रा. पाठः । ११ अध्युषित इति गो. पाठः ।

नीवारान्पनसान्सालान्वञ्जुलांस्तिनिशांस्तथा । चिरिबिल्वान्मधूकांश्च बिल्वानथ च तिन्दुकान् ॥ ७४ ॥
पुष्पितान्पुष्पिताग्राभिर्लताभिरुपशोभितान् । ददर्श रामः शतशस्तत्र कान्तारपादपान् ॥ ७५ ॥
हस्तिहस्तैर्विमृदितान्वानरैरुपशोभितान् । मत्तैः शकुनिसंघैश्च शतशः प्रतिनादितान् ॥ ७६ ॥
ततोऽब्रवीत्समीपस्थं रामो राजीवलोचनः । पृष्ठतोऽनुगतं वीरं लक्ष्मणं लक्ष्मिवर्धनम् ॥ ७७ ॥
स्निग्धपत्रा यथा वृक्षा यथा क्षान्ता मृगद्विजाः । आश्रमो नातिदूरस्थो महर्षेर्भावितात्मनः ॥ ७८ ॥
अगस्त्य इति विख्यातो लोके स्वेनैव कर्मणा । आश्रमो दृश्यते तस्य परिश्रान्तश्रमापहः ॥ ७९ ॥
प्राज्यधूमाकुलवनश्चीरमालापरिष्कृतः । प्रशान्तमृगयूथश्च नानाशकुनिनादितः ॥ ८० ॥
[6]निगृह्य तरसा मृत्युं लोकानां हितकाम्यया । दक्षिणा दिक्कृता येन शरण्या पुण्यकर्मणा ॥ ८१ ॥
तस्येदमाश्रमपदं प्रभावाद्यस्य राक्षसैः । दिगियं दक्षिणा त्रासाद्दृश्यते नोपभुज्यते ॥ ८२ ॥
यदाप्रभृति चाक्रान्ता दिगियं पुण्यकर्मणा । तदाप्रभृति निर्वैराः प्रशान्ता रजनीचराः ॥ ८३ ॥

---

रा० टी०—तत्प्रकारमाह—आमन्त्रय इति । अग्रजं ते गुरुं द्रष्टुं गच्छामि अतः त्वामामन्त्रये । तेन ऋषिणा गम्यतामित्युक्तो रघुनन्दनो यथोद्दिष्टेन मार्गेण तद्वनमवलोकयन् सन् जगाम । सार्धश्लोक एकान्वयी ॥ ७२ ॥

गो० टी०—अभिवादय इति । अत्र वर्णाधिक्यमार्षम् ७४

गो० टी०—गम्यतामिति । यथोद्दिष्टेन सुतीक्ष्णोक्तेन ७६

७४--७७] ति० टी०—नीवारा जलकदम्बा वञ्जुलोऽशोकः तिनिशो धवः चिरिबिल्वो नक्तमालः ॥ ७४--७७ ॥

रा० टी०—निवारानिति । पुष्पिताग्राभिः पुष्पविशिष्टाग्रभागविशिष्टाभिः लताभिरुपशोभितान् शतशः हस्तिहस्तैः शुण्डादण्डैर्विमृदितान् शकुनिसंघैः पक्षिसमूहैः प्रतिनादितांश्च शतशः कान्तारपादपान् वनवृक्षान् रामो ददर्श । तत्र निवाराः जलकदम्बाः, वन्जुला अशोकाः, तिनशा धवाः, चिरिबिल्वा नक्तमालाः । श्लोकद्वयमेकान्वयि ॥ ७३—७६ ॥

रा० टी०—तत इति । ततः पादपदर्शनानन्तरं लक्ष्मणां सुचिह्नानां वर्धनं वृद्धिर्यस्मिँस्तं लक्ष्मणं रामोऽब्रवीत् ॥ ७६ ॥

गो० टी०—निवारानिति । निवारान् जलकदम्बान् वञ्जुलान् बकुलान् । 'बकुलो वञ्जुलो शोकः' इत्यमरः । तिनिशान् नेमिवृक्षान् धवान् चिरिबिल्वान् नक्तमालान् 'करञ्जः स्यान्नक्तमालः प्रकीर्यश्चिरिबिल्वकः' इति वैजयन्ती । मधूकान् मधुद्रुमाख्यवृक्षान् तिन्दुकान् स्फूर्जकाख्यान् वृक्षान् ॥ ७६—७९ ॥

७८ ] ति० टी०—यथा श्रुतास्तथा स्निग्धपत्रा वृक्षा दृश्यन्ते इति शेषः । अतो निकट आश्रमः ॥ ७८ ॥

रा० टी०—तद्वचनाकारमाह—स्निग्धेति । वृक्षाः यथा यथावत् स्निग्धपत्राः मृगद्विजास्तु यथावत् क्षान्ताः दृश्यन्ते इति शेषः । अतो महर्षेरगस्त्यस्याश्रमो नातिदूरस्थोऽस्तीति शेषः । एतेन इदमेवाश्रमलक्षणमगस्त्यभ्रात्रा बोधितमिति सूचितम् ॥ ७७ ॥

गो० टी०—स्निग्धेति । स्निग्धपत्राः आश्रमवासिभिः रक्षितत्वेन सरसपत्राः क्षान्ताः शान्ताः यथा येन प्रकारेण तथा तेन प्रकारेण आश्रमो नातिदूरस्थ इति मन्ये ॥ ८० ॥

७९ ] ति० टी०—अगं विन्ध्यं स्तम्भयतीत्यगस्त्यः पृषोदरादिः । स्वेन कर्मणा विन्ध्यस्तम्भनकर्मणा परिश्रान्तश्रमापहन्ता ॥ ७९ ॥

रा० टी०—अगस्त्य इति । यः स्वेन कर्मणा अगस्त्य इति विख्यातः तस्य परिश्रान्तानां श्रमं खेदमपहन्ति सः, प्राज्यैः अधिकैः धूमैः यागधूमैः आकुलं व्याप्तं वनं यस्य सः, चीरमालाभिः परिष्कृतः नानाशकुनिभिः पक्षिभिर्नादितः आश्रमः दृश्यते । श्लोकद्वयमेकान्वयि । अग इति स्त्याः विन्ध्यादौः शब्दो नामेति यावत् यस्मात् ॥ ७८ ॥ ७९ ॥

गो० टी०—अगस्त्य इति । स्वेन कर्मणा विन्ध्यस्तम्भनरूपेण अगस्त्य इति विख्यातः अगं स्तम्भयतीत्यगस्त्यः इति व्युत्पत्तेः परिश्रान्तानां श्रममपहन्तीति परिश्रान्तश्रमापहः प्राज्यैर्बहुभिर्धूमैराकुलं वनं यस्य सः ॥ ८१ ॥ ८२ ॥

८०–८१ ] ति० टी०—प्राज्यैर्भूरिभिर्धूमैः पाकयज्ञधूमैराकुलं वनं यस्मिन् ॥ ८० ॥ ८१ ॥

रा० टी०—निगृह्येति । मृत्युं निगृह्य दूरीकृत्य दक्षिणा दिक् येन शरण्या कृता अत एव यस्य प्रभावात् दक्षिणा दिक् तत्स्थो जनः राक्षसैर्दृश्यते भुज्यते तु न तस्येदमाश्रमपदम् ॥ ८० ॥ ८१ ॥

८२ ] ति० टी०—यस्य प्रभावाद्राक्षसैरियमगस्त्याश्रमप्रदेशवर्तिनी दक्षिणा दिग्दृश्यते केवलम् त्रासान्महर्षिभीत्या नोपभुज्यते न स्वदेशत्वेनाङ्गीक्रियत इत्यर्थः ॥ ८२ ॥

गो० टी०—तस्येति । त्रासात् दृश्यते न तु प्राचीनकाल इवोपभुज्यते ॥ ८३ ॥

८३ ] ति० टी०—निर्वैराः प्राणिषु वैररहिताः प्रशान्तास्त्यक्तक्रूरकर्माणः ॥ ८३ ॥

---

१ निवारानिति गो. रा. पाठः । २ तालांस्तिमिशान्वञ्जुलान्धवानिति गो. पाठः । ३ तिनशानिति रा. पाठः । ४ अपीति गो. पाठः । ५ प्रणादितानिति गो. पाठः । ६ श्लोकोऽयं नास्ति गो. पाठे ।

नाम्ना चेयं भगवतो दक्षिणा दिक्प्रदक्षिणा । प्रथिता त्रिषु लोकेषु दुर्धर्षा क्रूरकर्मभिः ॥ ८४ ॥
मार्गं निरोद्धुं सततं भास्करस्याचलोत्तमः । संदेशं पालयंस्तस्य विन्ध्यशैलो न वर्धते ॥ ८५ ॥
अयं दीर्घायुषस्तस्य लोके विश्रुतकर्मणः । अगस्त्यस्याश्रमः श्रीमान्विनीतमृगसेवितः ॥ ८६ ॥
एष लोकार्चितः साधुर्हिते [3]नित्यं रतः सताम् । अस्मानधिगतानेष श्रेयसा योजयिष्यति ॥ ८७ ॥
आराधयिष्याम्यत्राहमगस्त्यं तं महामुनिम् । शेषं च वनवासस्य सौम्य वत्स्याम्यहं प्रभो ॥ ८८ ॥
अत्र देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः । अगस्त्यं [4]नियताहाराः सततं पर्युपासते ॥ ८९ ॥
नात्र जीवेन्मृषावादी क्रूरो वा यदि वा शठः । नृशंसः [5]पापवृत्तो वा मुनिरेष तथाविधः ॥ ९० ॥
अत्र देवाश्च यक्षाश्च नागाश्च पतगैः सह । वसन्ति नियताहारा धर्ममाराधयिष्णवः ॥ ९१ ॥

८४ ] ति० टी०—भगवतोऽगस्त्यस्य महिम्ना प्रदक्षिणा एतदाश्रमावच्छेदेन निर्वैरत्वादिसंपादनसमर्था क्रूरकर्मभी रक्षोभिर्दुर्धर्षा, अतो नाम्ना च नाम्नापि संपूर्णा दिगेव दक्षिणेति त्रिषु लोकेषु प्रथिता ॥ ८४ ॥

रा० टी०—यदेति । यदाप्रभृति यत्कालादारभ्य पुण्यकर्मणा अगस्त्येन इयं दिगाक्रान्ता तदाप्रभृति रजनीचराः निर्वैराः सन्तः प्रशान्ताः ॥ ८२ ॥

रा० टी०—नाम्नेति । इयं दक्षिणा दिक् भगवतोऽगस्त्यस्य नाम्नैव क्रूरकर्मभिः राक्षसैर्दुर्धर्षा अत एव प्रदक्षिणा अतिकुशलवती प्रथिता ख्याता ॥ ८३ ॥

गो० टी०—यदाप्रभृतीति । अगस्त्यागमनात् प्रभृति दिक् अगस्त्याश्रमप्रदेशः अन्यथा पूर्वोक्तविराधादिराक्षसोपद्रवो विरुध्येत । यद्वा दिक् सर्वापि विराधादयोऽप्यगस्त्यागमनप्रभृति मन्दोपद्रवा एव अनुचितादशायामेव मुनिमांसभक्षणम् । निर्वैराः वैरप्रवर्तनाशकाः प्रशान्ताः प्रशान्तवद्वर्तमानाः । अत एवेयं दक्षिणा दिक् नाम्ना भगवतोऽगस्त्यस्य दिगिति प्रसिद्धेत्युच्यते ॥ ८४ ॥ ८५ ॥

८५–८६ ] ति० टी०—मेरुस्पर्धया भास्करमार्गं निरोद्धुं वर्धितुकामोऽप्यचलो विन्ध्यस्तस्यागस्त्यस्य संदेशं मदागमनपर्यन्तं मा वर्धस्वेत्येवमाज्ञां पालयन् वर्धते । अद्यापीति शेषः ॥ ८५ ॥ ८६ ॥

रा० टी०—तस्य प्रभावान्तरमाह—मार्गमिति । अचलोत्तमो विन्ध्यशैलः भास्करस्य मार्गं निरोद्धुं तस्यागस्त्यस्य संदेशं सततं पालयन् सन् न वर्धते । इयमत्राख्यायिका–सूर्यमाक्रमितुं वर्धमानोऽगस्त्यशिष्यो विन्ध्यो गुरुदेश्यकनित्यसाष्टाङ्गप्रणामसमये देवप्रार्थितागस्त्येन शिष्यद्वारा यावन्मदागमं प्रणमन् भूमावेव पतेत्याज्ञाप्य तदारभ्य स्वयं दक्षिणस्यां दिश्येवातिष्ठदिति ॥ ८४ ॥

रा० टी०—अयमिति । विनीतमृगसेवितः अयमगस्त्यस्याश्रमः ॥ ८५ ॥

गो० टी०—मार्गमिति । निरतः उद्युक्तः वर्धमान इत्यर्थः । न वर्धते अद्यापीति शेषः ॥ ८६ ॥ ८७ ॥

८७ ] ति० टी०—अधिगतान्स्वाश्रमं प्राप्तान्छ्रेयसा योजयिष्यति । दिव्यशस्त्रादिदानेनेति गूढोऽभिसंधिः ॥ ८७ ॥

रा० टी०—एष इति । सतां हिते नित्यं रतः एषोऽगस्त्यः अधिगतान् प्राप्तानस्मान् श्रेयसा कल्याणवचनेन योजयिष्यति आशीर्वचनमुच्चारयिष्यतीत्यर्थः ॥ ८६ ॥

रा० टी०—आराधयिष्यामीति । अगस्त्यमहमाराधयिष्यामि वनवासस्य शेषमुर्वरितकालं वत्स्यामि एतदाज्ञयेति शेषः ॥ ८७ ॥

गो० टी०—एष इति । सतां हिते साधुः नित्यरतश्च शेषं चेति प्रभो इत्युक्तिः लक्ष्मणस्यापि राजपुत्रत्वात् । 'प्रभोः' इति पाठे प्रभोरगस्त्यस्य नियोगादिति शेषः ॥ ८८ ॥ ८९ ॥

८८–८९ ] ति०टी०—प्रभो! शुश्रूषणसमर्थेत्यर्थः॥८८॥८९॥

रा० टी०—अत्रेति । गन्धर्वादयः नियताहाराः सन्तः अगस्त्यं पर्युपासते ॥ ८८ ॥

गो०टी०—अत्रेति । देवाः वक्ष्यमाणाः पूज्यव्यतिरिक्ताः९०

९० ] ति० टी०—क्रूरो निर्दयः शठो गूढविप्रियकारी नृशंसो घातुकः तथाविधो दुर्वृत्तासहिष्णुः ॥ ९० ॥

रा० टी०—स्थानप्रभावमाह—नेति । मृषावावादिः अत्र अस्मिन्नाश्रमे न जीवेत् । तत्र हेतुः—एष मुनिस्तथाविधः निषिद्धकर्मासहिष्णुः ॥ ८९ ॥

गो० टी०—नात्रेति । क्रूरः निर्दयः । 'क्रूरौ कठिननिर्दयौ' इत्यमरः । शठः गूढविप्रियकृत् नृशंसः घातुकः कामेन वृत्तं यस्य सः कामवृत्तः स्वैरवृत्त एष मुनिः अगस्त्यः तथाविधः मृषावाद्यावनर्हः ॥ ९१ ॥

९१ ] ति० टी०—पतगा गरुडादयः धर्मं स्वर्गादिजनकम् ९१ ॥

रा० टी०—अत्रेति । अत्र अस्मिन्नाश्रमे धर्ममधिकफलकं कर्म आराधयिष्णवः साधयितुमिच्छवः देवादयः वसन्ति॥९०॥

गो० टी०—अत्रेति । देवाः वक्ष्यमाणब्रह्मादिभिन्नाः पतगैः गरुडजातिभिः आराधयिष्णवः आराधयन्तः छान्दस इष्णुच् ९२

१ निरत इति गो. पाठः । २ जनेति गो. पाठः । ३ नित्यरत इति गो. पाठः । ४ नियताहारमिति गो. पाठः । ५ कामवृत्त इति गो पाठः ।

अत्र सिद्धा महात्मानो विमानैः सूर्यसंनिभैः । त्यक्त्वा देहान्नवैर्देहैः स्वर्याताः परमर्षयः ॥ ९२ ॥
यक्षत्वममरत्वं च राज्यानि विविधानि च । अत्र देवाः प्रयच्छन्ति भूतैराराधिताः शुभैः ॥ ९३ ॥
आगताः स्माश्रमपदं सौमित्रे प्रविशाग्रतः । निवेदयेह मां प्राप्तमृषये सह सीतया ॥ ९४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे एकादशः सर्गः ॥ ११ ॥

## द्वादशः सर्गः ।

लक्ष्मणेन रामागमनं निवेदयितुं चोदितागस्त्याशिष्येणानुमत्युत्तरं स्वगुरोः सीतालक्ष्मणाभ्यां समं प्रवेशितो रामो ब्रह्मादिस्थानान्यालोकयन्सशिष्यमभ्यागच्छतोऽगस्त्यस्य पादावग्रहीदगस्त्योऽप्यातिथ्यं विधायेन्द्रदत्तवैष्णवधनुराद्यायुधानि दत्त्वा भृगुशापेन मरुभूतमेतद्वनं मया तपःप्रभावेन यथापुरं रामणीयकमापाद्यधुना रक्षस्त्रस्तं मुनिकुलं प्रभावेण मोचयेति प्रार्थ्यते ।

स प्रविश्याश्रमपदं लक्ष्मणो राघवानुजः । अगस्त्यशिष्यमासाद्य वाक्यमेतदुवाच ह ॥ १ ॥
राजा दशरथो नाम ज्येष्ठस्तस्य सुतो बली । रामः प्राप्तो मुनिं द्रष्टुं भार्यया सह सीतया ॥ २ ॥
लक्ष्मणो नाम तस्याहं भ्राता त्ववरजो हितः । अनुकूलश्च भक्तश्च यदि ते श्रोत्रमागतः ॥ ३ ॥
ते वयं वनमत्युग्रं प्रविष्टाः पितृशासनात् । द्रष्टुमिच्छामहे सर्वे भगवन्तं निवेद्यताम् ॥ ४ ॥

---

९२ ] ति० टी०–अत्राश्रमे सिद्धाः तपसेति शेषः । नवैर्देहैर्दिव्यदेहैः ॥ ९२ ॥

रा० टी०–अत्रेति । अत्र सिद्धादयः देहांस्त्यक्त्वा नवैर्देहैः स्वर्याताः ॥ ९१ ॥

गो० टी०–अत्रेति । सिद्धास्तपःसिद्धाः नवैः दिव्यैः ॥ ९३ ॥

९३–९४ ] ति० टी०–अत्राश्रमे भूतैः प्राणिभिः कर्तृभिः शुभैः सत्कर्मभिराराधिता देवादय आश्रममाहात्म्यादल्पकालेनैव राज्यादीनि प्रयच्छन्तीत्यर्थः ॥ ९३ ॥ ९४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे एकादशः सर्गः ॥ ११ ॥

रा० टी०–यक्षत्वमिति । अत्र अस्मिन्नाश्रमे शुभैः कर्मभिः आराधिताः पूजिताः देवाः यक्षत्वादीनि प्रयच्छन्ति ॥ ९२ ॥

गो० टी०–यक्षत्वमिति । भूतैः प्राणिभिः देवाः ब्रह्मादयः अगस्त्योपासनकृतनित्यसान्निध्यादिति भावः । शुभैः सत्कर्मनिरतैः ॥ ९४ ॥

रा० टी०–आगता इति । हे सौमित्रे ! आश्रमपदं वयमागताः स्म अतः त्वमग्रतः पूर्वं प्रविश, इह प्राप्तं माम् ऋषये निवेदय बोधय ॥ ९३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे एकादशः सर्गः ॥ ११ ॥

गो० टी०–आगता इति । सीतया सह प्राप्तमित्यन्वयः । अनेन रावणवधोद्युक्तत्वं द्योतयति ॥ ९६ ॥

अत्र चतुर्नवतिश्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने एकादशः सर्गः ॥ ११ ॥

१–३ ] ति० टी०–हितः शुभकारी अनुकूलस्तदिच्छावशवर्ती पूज्यविषयानुरागो भक्तिस्तद्वान्भक्तः । यदीति संभावनायाम् । बहुदिनं वने वासादस्मच्छ्रवणं तवापि संभावितमित्यर्थः ॥ १–३ ॥

रा० टी०–लक्ष्मणाज्ञापनानन्तरकालिकं वृत्तान्तमाह–स इत्यादिभिः । स लक्ष्मणः अश्रमपदं श्रमनिवर्तकं स्थानं प्रविश्य अगस्त्यशिष्यमासाद्य प्राप्य एतद्वाक्यमुवाच ॥ १ ॥

गो० टी०–रुद्रस्यापूज्यत्वमाह–स प्रविश्येत्यादि ॥ १ ॥ २ ॥

रा० टी०–तद्वचनाकारमाह–राजेति । दशरथो नाम यो राजा तस्य ज्येष्ठः सुतो बली रामः सीतया भार्यया सह मुनिं द्रष्टुं प्राप्तः ॥ २ ॥

रा० टी०–ननु त्वं कोऽसीत्यत्र आह–लक्ष्मणो नाम तस्य रामस्य अवरजो भ्राता अहं यदि कदाचित् श्रोत्रं रामकथाप्रसङ्गेन श्रवणपथमागतः प्राप्तः स्यामिति शेषः ॥ ३ ॥

गो० टी०–हितः हितकारी अनुकूलः प्रियकरः । प्रियहितकरत्वे हेतुः–भक्त इति भक्तः प्रीतिमान् । यदीति संभावनायाम् अहं रामश्च ते श्रुतौ भवेवेत्यर्थः । अग्रजत्वादिविशेषणानि रामेण तुल्यप्रतिपत्तिवारणाय ॥ ३ ॥

४ ] ति० टी०–भगवन्तं द्रष्टुमिच्छामहे, अतो दर्शनार्थमागता इति निवेद्यतामित्यर्थः ॥ ४ ॥

रा० टी०–ते इति । ते रामादयो वयं पितृशासनादत्युग्रं वनं प्रविष्टास्ते वयं भगवन्तं द्रष्टुमिच्छामहे अतः निवेद्यताम् वृत्तमुच्यतां गुरुसन्निधाविति शेषः ॥ ४ ॥

गो० टी०–निवेद्यताम् अस्मद्दर्शनेच्छेति शेषः । एतद्वाक्यमुवाचेति पूर्वेणान्वयः । ते वयमित्यस्मिन् श्लोके यमिगायत्र्या अष्टमाक्षरं सप्तसहस्रसंख्याकाः श्लोका गताः ॥ ४ ॥

---

१ त्यक्तदेहा इति गो. पाठः ।

तस्य तद्वचनं श्रुत्वा लक्ष्मणस्य तपोधनः । तथेत्युक्त्वाऽग्निशरणं प्रविवेश निवेदितुम् ॥ ५ ॥
स प्रविश्य मुनिश्रेष्ठं तमसा दुष्प्रधर्षणम् । कृताञ्जलिरुवाचेदं रामागमनमञ्जसा ॥ ६ ॥
यथोक्तं लक्ष्मणेनैव शिष्योऽगस्त्यस्य संमतः । पुत्रौ दशरथस्येमौ रामो लक्ष्मण एव च ॥ ७ ॥
प्रविष्टावाश्रमपदं सीतया सह भार्यया । द्रष्टुं भवन्तमायातौ शुश्रूषार्थमरिंदमौ ॥ ८ ॥
यदत्रानन्तरं तत्त्वमाज्ञापयितुमर्हसि । ततः शिष्यादुपश्रुत्य प्राप्तं रामं सलक्ष्मणम् ॥ ९ ॥
वैदेहीं च महाभागामिदं वचनमब्रवीत् । दिष्ट्या रामश्चिरस्याद्य द्रष्टुं मां समुपागतः ॥ १० ॥
मनसा काङ्क्षितं ह्यस्य मयाप्यागमनं प्रति । गम्यतां सत्कृतो रामः सभार्यः सहलक्ष्मणः ॥ ११ ॥
प्रवेश्यतां समीपं मे किमसौ न प्रवेशितः । एवमुक्तस्तु मुनिना धर्मज्ञेन महात्मना ॥ १२ ॥
अभिवाद्याब्रवीच्छिष्यस्तथेति नियताञ्जलिः । तदा निष्क्रम्य संभ्रान्तः शिष्यो लक्ष्मणमब्रवीत् ॥ १३ ॥
कोऽसौ रामो मुनिं द्रष्टुमेतु प्रविशतु स्वयम् । ततो गत्वाऽऽश्रमपदं शिष्येण सह लक्ष्मणः ॥ १४ ॥

---

५ ] ति० टी०—अग्निशरणमग्निहोत्रगृहं निवेदितुं निवेदयितुम् ५

रा० टी०—तस्येति । तपोधनोऽगस्त्यशिष्यस्तस्य लक्ष्मणस्य तद्वचनं श्रुत्वा तथेत्युक्त्वा अग्निशरणमग्निगृहं यागशालामित्यर्थः, प्रविवेश ॥ ५ ॥

गो० टी०—तस्येति । अग्निशरणम् अग्निगृहम् ॥ ५ ॥

६ ] ति० टी०—अञ्जसा शीघ्रम् ॥ ६ ॥

रा० टी०—स इति । सोऽगस्त्यशिष्यः प्रविश्य यागशालां गत्वा दुष्प्रधर्षणं मुनिश्रेष्ठमगस्त्यस्य संमतः शिष्यः इदं रामागमनं लक्ष्मणेन यथोक्तमञ्जसा शीघ्रमुवाच । सार्धश्लोक एकान्वयी ॥ ६ ॥

गो० टी०—स इति । अञ्जसा आशु यथेष्टमित्यस्य उवाचेत्यनेनान्वयः । संमतः शिष्येषु मान्यत्वेन संमतः ॥ ६ ॥

७ ] ति० टी०—संमत इष्टः ॥ ७ ॥

८ ] ति० टी०—द्रष्टुं तदनन्तरं कियत्कालं शुश्रूषार्थं सेवार्थं चागतौ ॥ ८ ॥

रा० टी०—तद्वचनाकारमाह—पुत्राविति । भवन्तं द्रष्टुं शुश्रूषार्थं च तौ आयातौ रामो लक्ष्मणश्च दशरथस्य पुत्रौ आश्रमपदं प्रविष्टौ ॥ ७ ॥ ८ ॥

गो० टी०—पुत्रावित्यादि । शुश्रूषार्थं सेवार्थं चेत्यर्थः । यदत्रेति । अत्र अस्मिन् रामे विषये अनन्तरं तदागमनानन्तरं यद्वक्तव्यं तत्त्वं तस्य भावं प्रकारम् आज्ञापयितुमर्हसि ॥ ७–९ ॥

९ ] ति० टी०—अनन्तरं तत्त्वं वक्तव्यतत्त्वमुपश्रुत्य भगवदागमनश्रवणानन्दमनुभूयेत्यर्थ इति तीर्थः ॥ ९ ॥

रा० टी०—यदिति । अत्र रामादिविषये यत्तत्त्वं निर्णीतमित्यर्थः । तदनन्तरं शीघ्रमाज्ञापयितुमर्हसि । अर्धं पृथक्तत इति । रामं प्राप्तं वैदेहीं च प्राप्तां शिष्यान् उपश्रुत्य इदं वचनमब्रवीत् ॥ ९ ॥

१० ] ति० टी०—मां द्रष्टुं समागत इति यत्तद्दिष्ट्या मम भाग्येन किं चान्तर्भावितण्यर्थो दृशिः मामात्मानं दर्शयितुं यद्वने वसतश्चिरस्य चिरकालस्य गमनेऽप्यागतस्तद्दिष्ट्या मद्भाग्येन उद्बुद्धेनेत्यर्थः ॥ १० ॥

रा० टी०—तद्वचनाकारमाह—दिष्ट्येति । चिरस्य बहुकालान्मां द्रष्टुमद्य समुपागतः दिष्ट्या भाग्यमेतत् । तत्र हेतुः—यतः अस्य आगमनं प्रति मयाऽपि मनसा आकाङ्क्षितम् ॥ १० ॥

गो० टी०—दिष्ट्येत्यादि । दिष्ट्या यदृच्छया चिरस्य चिरात् प्रतिकाङ्क्षितमित्यन्वयः । प्रतिर्वीप्सायाम् । सत्कृतः सत्कारार्हः किंचासौ न प्रवेशितः कुतो विलम्बित इत्यर्थः ॥ १० ॥ ११ ॥

११ ] ति० टी०—तदेवाह—मनसेति । एतदागमनमुद्दिश्य काङ्क्षितम् इच्छा कृतेति यावत् । सत्कृतः आचारोपचारव्यवहारैरित्यर्थः ॥ ११ ॥

रा० टी०—गम्यतामिति । गम्यतां रामः प्रवेश्यतां मम समीपमयं किं किमर्थं न प्रवेशितः मामपृष्ट्वैवेति शेषः ॥ ११ ॥

१२ ] ति० टी०—किमसौ न प्रवेशितः कस्माद्धेतोर्विलम्बः कृत इत्यर्थः ॥ १२ ॥

रा० टी०—एवमिति । मुनिना एवमुक्तः शिष्यः अभिवाद्य प्रणम्य तथेति अब्रवीत् ॥ १२ ॥

गो० टी०—एवमुक्त इति । अभिवाद्येति । विलम्बकरणापचारनिवृत्त्यर्थं वन्दनम् अत एव संभ्रान्त इति वक्ष्यति ॥ १२–१४ ॥

१३ ] ति० टी०—अभिवाद्यागमननियोगप्रयुक्तं पुनरभिवादनं कृत्वा तथेत्यानयामीत्येवम् ॥ १३ ॥

रा० टी०—तदेति । तदा गुर्वाज्ञापनकाले निष्क्रम्य यागशालायाः निःसृत्य संभ्रान्तः आदृतः शिष्यः असौ रामः कः मुनिं द्रष्टुमेतु आगच्छतु प्रविशतु इति लक्ष्मणमब्रवीत् ॥ १३ ॥

१४ ] ति० टी०—स्वयं प्रविशतु भगवताऽवगतवृत्तान्तत्वान्नास्य शिष्यमुखापेक्षेति भावः । आश्रमपदमाश्रमप्रान्तदेशम् ॥ १४ ॥

रा० टी०—तत इति । शिष्येण सह लक्ष्मणः आश्रम-

---

१ चासाविति गो. अयमिति रा. पाठः । २ तत इति गो. पाठः । ३ क्केति गो. पाठः ।

दर्शयामास काकुत्स्थं सीतां च जनकात्मजाम् । तं शिष्यः प्रश्रितं[1] वाक्यमगस्त्यवचनं ब्रुवन् ॥ १५ ॥
प्रावेशयद्यथान्यायं सत्कारार्हं सुसत्कृतम् । प्रविवेश ततो रामः सीतया सह लक्ष्मणः ॥ १६ ॥
प्रशान्तहरिणाकीर्णमाश्रमं ह्यवलोकयन् । स तत्र ब्रह्मणः स्थानमग्नेः स्थानं तथैव च ॥ १७ ॥
विष्णोः स्थानं महेन्द्रस्य स्थानं चैव विवस्वतः । सोमस्थानं भगस्थानं स्थानं कौबेरमेव च ॥ १८ ॥
धातुर्विधातुः स्थानं[2] च वायोः स्थानं तथैव च । स्थानं[3] च पाशहस्तस्य वरुणस्य महात्मनः[4] ॥ १९ ॥
स्थानं तथैव गायत्र्या वसूनां स्थानमेव च । स्थानं च नागराजस्य गरुडस्थानमेव च ॥ २० ॥
कार्तिकेयस्य च स्थानं धर्मस्थानं च पश्यति । ततः शिष्यैः परिवृतो मुनिरप्यभिनिष्पतत् ॥ २१ ॥
तं ददर्शाग्रतो रामो मुनीनां दीप्ततेजसम्[5] । अब्रवीद्वचनं वीरो लक्ष्मणं लक्ष्मिवर्धनम् ॥ २२ ॥

---

पदमाश्रमप्रान्तदेशं गत्वा काकुत्स्थं दर्शयामास । शिष्यमिति प्रयोज्यमाक्षिप्यते ॥ १४ ॥

१५ ] ति० टी०—लक्ष्मणः काकुत्स्थं रामं प्रदर्शयामास शिष्यमिति शेषः । तं दृष्ट्वं रामं शिष्योऽगस्त्यवचनमुच्यत इति वचनमगस्त्योक्तं वाक्यं प्रश्रितं प्रीतियुक्तं ब्रुवन्प्रावेशयदित्यन्वयः ॥ १५ ॥

रा० टी०—तमिति । अगस्त्यस्य वचनं संदेशो यस्मिन् तत् प्रश्रितं नम्रीभूतं वाक्यं ब्रुवन् सन् सत्कारार्हं तं रामं सुसत्कृतं यथा स्यात्तथा यथान्यायं प्रावेशयत् ॥ १५ ॥

गो० टी०—तमिति । अगस्त्येनोच्यत इत्यगस्त्यवचनम् अगस्त्योक्तमित्यर्थः । सुसत्कृतं सविनयवाक्येन बहुमतम् ॥१५॥

१६ ] ति० टी०—सुसत्कृतं पाद्यार्घ्यादिभिरग्रे गत्वा मार्गप्रदर्शनेन च सत्कृतम् ॥ १६ ॥

रा० टी०—प्रविवेशेति । प्रशान्तहरिणैः आकीर्णं व्याप्तमाश्रममवलोकयन् सन् सीतया सह रामः प्रविवेश ॥१६॥

गो० टी०—प्रविवेशेति । आश्रमं मुनिगृहम् ॥ १६ ॥

१७ ] ति० टी०—अगस्त्याश्रमस्थदेवतास्थानदर्शनमाह—स तत्रेति । तत्राश्रमे स रामः ब्रह्मणो हिरण्यगर्भस्य कल्पितं स्थानम् । अग्निरत्र रुद्रः ॥ १७ ॥

१८ ] ति० टी०—भगः स्थूलमण्डलाभिमानी ॥ १८ ॥

१९ ] ति० टी०—धाता कार्यप्रजापतिः विधाता विश्वकर्मेति कतकः ॥ १९ ॥

२० ] ति० टी०—गायत्रीति सरस्वतीसावित्र्योरप्युपलक्षणम् ॥ २० ॥

रा० टी०—स इति । तत्र अगस्त्याश्रमे ब्रह्मादीनां स्थानानि स रामः पश्यति अपश्यत् । तत्राग्निशब्देन शंभुरुच्यते । अत एव ब्रह्मविष्णुवाचकशब्दयोरन्तरा पाठः । धाताविधातारौ प्रजापतिविशेषौ । गायत्रीशब्देनोपलक्षणविधया सावित्रीसरस्वत्योरपि ग्रहणमिति भट्टसंमतिः । श्लोकचतुष्टयमेकान्वयि ॥ १७–२० ॥

गो० टी०—अयं तत्र देवपूजागृहाण्यपश्यदित्याह—स तत्रेत्यादि । तत्र अगस्त्यगृहे ब्रह्मणः चतुर्मुखस्य अग्नेः पावकस्य तथैव चेति निपातसमुदायः समुच्चये । भगो देवताविशेषः पाशहस्तस्येत्यादिविशेषणानि तत्र मुनेरगस्त्यस्य भक्तिविशेषद्योतनार्थम् । इमे ब्रह्मादयः पूर्वसर्गे फलप्रदत्वेनोक्ताः अन्ये अगस्त्योपासकत्वेनोक्ताः एते ब्रह्माग्निविष्णुमहेन्द्रविवस्वत्सोमभगकुबेरधातृविधातृवाय्वनन्तगायत्रीवसुवरुणकार्तिकेयधर्माख्याः सप्तदश देवाः । यो वै सप्तदशमित्यनुवाकोक्तसप्तदशाक्षरदेवतायायजूकेन मुनिना पूजार्थं प्रतिष्ठिता इति बोध्यम् । अत्र पूज्यदैवतेषु रुद्रस्यानुपादानादपूज्यत्वमुक्तम् । अधुना जनैः कैश्चित् पूज्यमानता तु तामसशास्त्रानुरोधेनेति बोध्यम् । ननु 'विष्णोः स्थानं महेश्वरस्य' इति पाठात् । स्थानानुक्त्यसंभव इति चेत् तदा पूर्वं रामेण 'अगस्त्यं नियताहारं सततं पर्युपासते' इत्युक्तावपि स्थाननिर्देशे उपास्योपासकयोरुभयोरपि निर्देशो न विरुध्यते । यद्वा उपासनं समीपावस्थानं नत्वाराधनं धर्ममाराधयिष्णव इत्युक्तेः धर्मस्याराधनं परिपालनमेव ॥ १७–२० ॥

२१ ] ति० टी०—एषां स्थानानि पश्यतीत्यन्वयः । एतेन पूजास्थाने एतावतां देवानां पूजावश्यकीति सूचितम् । अभिनिष्पतत् अडभाव आर्षः, अभ्युत्थानं कृतवानित्यर्थः ॥ २१ ॥

रा० टी०—तत इति । ततः रामालिङ्गनहेतोः मुनिरपि अभिनिष्पतत् आगमशास्त्रस्यानित्यत्वादडभावः । मुनीनां मध्ये दीप्ततेजसं तमगस्त्यं रामो ददर्श ॥ २१ ॥

गो० टी०—तत इति । अभिनिष्पतत् अभ्युत्थानं कृतवान् अडभाव आर्षः । मुनीनामग्रतः स्थितमिति शेषः ॥ २१ ॥

२२ ] ति० टी०—मुनीनामग्रतः स्थितमिति शेषः । ईदृशं तमगस्त्यं ददर्शेत्यन्वयः ॥ २२ ॥

रा० टी०—अब्रवीदिति । वीरो रामः लक्ष्मणमब्रवीत् । अर्थं पृथक् । तद्वचनाकारमाह—बहिरिति । हे लक्ष्मण! अगस्त्यऋषिः औदार्येण तपोजनिततेजोविशेषोत्कर्षेण बहिर्निष्क्रामति अतः तपसां निदानं कारणमवगच्छामि जानामि ऋषिमिति शेषः ॥ २२ ॥

---

१ प्रश्रित इति गो० पाठः । २ स्थाने इति गो० पाठः । ३ एतदाद्यर्धत्रयं व्यत्यस्तं गो० पाठे । ४ अनन्तस्य महात्मनः इति गो० पाठः । ५ दीप्ततेजसामिति गो० पाठः ।

बहिर्लक्ष्मण निष्क्रामत्यगस्त्यो भगवानृषिः । औदार्येणावगच्छामि निधानं तपसामिदम् ॥ २३ ॥
एवमुक्त्वा महाबाहुरगस्त्यं सूर्यवर्चसम् । जग्राहापततस्तस्य पादौ च रघुनन्दनः ॥ २४ ॥
अभिवाद्य तु धर्मात्मा तस्थौ रामः कृताञ्जलिः । सीतया सह वैदेह्या तदा रामः सलक्ष्मणः ॥ २५ ॥
प्रतिगृह्य च काकुत्स्थमर्चयित्वाऽऽसनोदकैः । कुशलप्रश्नमुक्त्वा च आस्यतामिति सोऽब्रवीत् ॥२६॥
अग्निं हुत्वा प्रदायार्घ्यमतिथीन्प्रतिपूज्य च । वानप्रस्थेन धर्मेण स तेषां भोजनं ददौ ॥ २७ ॥
प्रथमं चोपविश्याथ धर्मज्ञो मुनिपुंगवः । उवाच राममासीनं प्राञ्जलिं धर्मकोविदम् ॥ २८ ॥
[ अग्निं हुत्वा प्रदायार्घ्यमतिथिं प्रतिपूजयेत् । ]
अन्यथा खलु काकुत्स्थ तपस्वी समुदाचरन् । दुःसाक्षीव परे लोके स्वानि मांसानि भक्षयेत् ॥ २९ ॥
राजा सर्वस्य लोकस्य धर्मचारी महारथः । पूजनीयश्च मान्यश्च भवान्प्राप्तः प्रियातिथिः ॥ ३० ॥
एवमुक्त्वा फलैर्मूलैः पुष्पैश्चान्यैश्च राघवम् । पूजयित्वा यथाकामं ततोऽगस्त्यस्तमब्रवीत् ॥ ३१ ॥

---

गो० टी०–अब्रवीदित्यादि ॥ २२ ॥

२३] ति० टी०–औदार्येण तेजोविशेषजनितौन्नत्येन ॥२३॥

गो० टी०–औदार्येण तेजोविशेषरूपौन्नत्येन इममवगच्छामि अगस्त्यत्वेनेति शेषः । इति वचनमब्रवीदित्यन्वयः ॥ २३ ॥

२४] ति० टी०–एवमगस्त्यमुक्त्वा लक्ष्मणं प्रति बोधयित्वा आपतत आश्रमादागच्छतस्तस्य ऋषेः पादौ जग्राह । हस्ताभ्यां मूर्ध्ना च पादौ स्पृष्ट्वा नमश्चकारेत्यर्थः ॥ २४ ॥

रा० टी०–एवमिति । महाबाहू रघुनन्दनो रामः अगस्त्यमेवमुक्त्वा आपततः आगच्छतः तस्य पादौ जग्राह ॥ २३ ॥

गो० टी०–एवमिति । अगस्त्यम् उद्दिश्येति शेषः ॥२४॥

२५ ] ति० टी०–योगरूढिभ्यां रामशब्दद्वयापौनरुक्त्यम् ॥ २९ ॥

रा० टी०–अभिवाद्येति । तदा मुनिसङ्गमकाले धर्मात्मा आरामः सर्वाभिरामदाता रामः अभिवाद्य तस्थौ ॥२४॥

गो० टी०–अभिवाद्येति । रामः अभिवाद्य रामस्तस्थावित्यन्वयः ॥ २५ ॥

२६] ति० टी०–प्रतिगृह्य उत्थापनपूर्वकमालिङ्ग्येत्यर्थः २६

रा० टी०–प्रतीति । काकुत्स्थं रामं प्रतिगृह्य हस्तेन गृहीत्वा आसनोदकैः अर्चयित्वा कुशलप्रश्नं तद्बोधकवाक्यं चोक्त्वा सोऽगस्त्यः आस्यतामित्यब्रवीत् ॥ २५ ॥

गो० टी०–प्रतिजग्राहेति । प्रतिजग्राह अतिथित्वेनेति शेषः । उदकानि पाद्यानि ॥ २६ ॥

२७ ] ति० टी०–अर्चनस्यैव विस्तरोपदेशः–अग्निमिति । वैश्वदेवहोमं कृत्वेत्यर्थः । अतिथीन्रामादीन् ॥ २७ ॥

रा० टी०–अर्चनप्रकारमाह–अग्निमिति । अग्निं वैश्वदेवविधिप्राप्तवह्निं हुत्वा अर्घ्यम् अर्घजलं प्रदाय अतिथीन् प्रतिपूज्य वानप्रस्थेन वानप्रस्थोचितेन धर्मेण विधिना भोजनं ददौ ॥२६॥

गो० टी०–अग्निमिति । तस्मिन्नासीने अग्निं हुत्वा वैश्वदेवं कृत्वा तेभ्यः अर्घ्यं दत्त्वा अतिथीन् तान् प्रतिपूज्य आचमनीयपुष्पादिभिः पूजयित्वा वानप्रस्थेन धर्मेण सिद्धं भोजनं कन्दमूलादिकं ददौ ॥ २७ ॥

२८] ति० टी०–आसीनं पश्चादासीनमित्यर्थ इति प्राञ्चः। मम तु भाति–प्रथममिति भोजनं ददावित्यनेनान्वेति । अथोपविश्य अतिथिपूजाव्यग्रतया तावत्पर्यन्तमनुपवेशनमिति ॥२८॥

रा० टी०–भोजनानन्तरकालिकवृत्तान्तमाह–प्रथममिति। प्रथमं रामोपवेशनात्पूर्वं धर्मज्ञो मुनिपुङ्गवः उपविश्य आसीनं पश्चात् स्थितिमन्तं राममुवाच ॥ २७ ॥

गो० टी०–प्रथममिति । स्वयं प्रथममुपविश्य आसीनं राममुवाच ॥ २८ ॥

२९] ति० टी०–एवं क्षत्रियपूजाऽनुचितेत्याशङ्कां समाधित्सुः प्रकृतं धर्ममुवाचेत्याह–अन्यथेति । अन्यथा समुदाचरन् एवमतिथिपूजनमकुर्वन्नित्यर्थः । दुःसाक्षी कूटसाक्षी एवं च प्रत्यवायपरिहारायैवमतिथिपूजाऽऽवश्यकीत्याशयः ॥ २९ ॥

रा० टी०–तद्वचनाकारमाह–अन्यथेति । हे काकुत्स्थ ! अन्यथा सत्कृतिविधिविपरीतं समुदाचरन् कुर्वन् तपस्वी परे लोके दुःसाक्षी अन्यथा वस्तुनिर्णेतेव परे लोके स्वानि मांसानि भक्षयेत् ॥ २८ ॥

गो० टी०–अग्निमिति । अयं रामव्याजेन सीतां प्रत्युपदेशः । धर्मकोविदमित्युक्तस्य रामस्य हि नेदं वक्तव्यम् । अत एव सीता रावणं सत्करिष्यति । अन्यथा समुदाचरन् होममतिथिसत्कारं चाकुर्वन्नित्यर्थः । दुःसाक्षी कूटसाक्षी ॥२९॥

३०–३१ ] ति० टी०–त्वदधिकोऽतिथिश्च नास्तीत्याह–राजेति । सर्वलोकराजा सर्वलोकनियन्तृत्वेनेश्वरत्वं गर्भितम् । धर्मचारी धर्माचरणेन तत्प्रवर्तकः ईदृशस्त्वं प्रियातिथिः सन्प्राप्तः, अतः पूजनीयो मान्यश्च मान्यत्वेनेतः परं त्वमेवास्माकमाराधनीय इति सूचितम् ॥ ३० ॥ ३१ ॥

रा० टी०–राजेति । यतः सर्वस्य लोकस्य राजा अत एव पूजनीयो मान्यश्च प्रियातिथिर्भवान् प्राप्तः ॥ २९ ॥

---

१ एष इति गो. पाठः । २ निदानमिति रा. पाठः । ३ इमामिति गो. पाठः । ४ जग्राह परमप्रीतस्तस्य पादौ परंतप इति गो. पाठः । ५ जग्राहेति गो. पाठः । ६ ह्यास्यतामिति चेति गो. पाठः । ७ अर्धमेतदधिकं गो. पाठे । ८ पुष्पैरन्यैश्चेति गो. पाठः । ९ पुनरेव तत इति गो. पाठः । १० राज इति युक्तं भाति।

इदं दिव्यं महच्चापं हेमवैज्रविभूषितम् । वैष्णवं पुरुषव्याघ्र निर्मितं विश्वकर्मणा ॥ ३२ ॥
अमोघः सूर्यसंकाशो ब्रह्मदत्तः शरोत्तमः । दैत्तो मम महेन्द्रेण तूणी चौक्षय्यसायकौ ॥ ३३ ॥
संपूर्णौ निशितैर्बाणैर्ज्वलद्भिरिव पावकैः । महारैजतकोशोऽयमसिर्हेमविभूषितः ॥ ३४ ॥
अनेन धनुषा राम हत्वा संख्ये महासुरान् । आजहार श्रियं दीप्तां पुरा विष्णुर्दिवौकसाम् ॥ ३५ ॥
तद्धनुस्तौ च तूंणी च शरं खड्गं च मानद । जयाय प्रतिगृह्णीष्व वज्रं वज्रधरो यथा ॥ ३६ ॥
एवमुक्त्वा महातेजाः समस्तं तद्वरायुधम् । दत्त्वा रामाय भगवानगस्त्यः पुनरब्रवीत् ॥ ३७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे द्वादशः सर्गः ॥ १२ ॥

---

## त्रयोदशः सर्गः ।

स्त्रीषु लौल्यादिदोषसाधारण्येऽपि वैदेह्यां निष्कलङ्कसाद्गुण्यं निर्दिशन्नगस्त्यस्तां प्रशंसति । स्वावासोचितस्थानजिज्ञासुना रामे पृष्टोऽगस्त्यः पञ्चवटीं निवासार्हां निर्दिशति । रामस्तमामन्त्र्य सीतानुजाभ्यां पञ्चवटीं प्रति प्रतस्थे ।

राम प्रीतोऽस्मि भद्रं ते परितुष्टोऽस्मि लक्ष्मण । अभिवादयितुं यन्मां प्राप्तौ स्थः सह सीतया ॥ १ ॥

---

गो० टी०—भवांस्तु विशिष्टातिथिरित्याह—राजेति । राजपक्षे स्पष्टोऽर्थः । तत्त्वार्थस्तु " सर्वस्य लोकस्य भुवनत्रयस्य राजा स्वामी पतिं विश्वस्य " इति श्रुतेः । " अत एव लोकस्य पूजनीयः कर्मभिराराध्यः इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः " इति श्रुतेः मान्यः मुक्तये योगिभिश्चिन्त्यः प्रियातिथिः लौकिकातिथिभ्यो विलक्षणः एवमुक्त्वाचेति पूर्वेणान्वयः ॥ ३० ॥

रा० टी०—एवमिति । एवमुक्त्वा फलादिभिः पूजयित्वा च ततः तस्मिन् समये अगस्त्यस्तं राममब्रवीत् ॥ ३० ॥

गो० टी०—एवमिति । पुनः फलादिदानं सीतायाः ३१॥३२

३२ ] ति० टी०—हेम्ना वज्रेण च भूषितम् । वैष्णवमिति । परशुरामाद्गृहीत्वा वरुणहस्ते दत्तं यद्रामेण तदेव वरुणादादाय महेन्द्रोऽगस्त्ये निक्षिप्तवानिति कतकः । योगेन महेन्द्रपदेनात्र वरुण एवेत्यन्ये ॥ ३२ ॥

रा० टी०—तद्वचनाकारमाह—इदमिति । हेमवज्रविभूषितं हेमभिर्वज्रैश्च विभूषितं विश्वकर्मणा निर्मितमिदं महच्चापं धनुरस्तीति शेषः ॥ ३१ ॥

गो० टी०—वैष्णवमिति । परशुरामात् गृहीत्वा वरुणहस्ते दत्तं रामेण तदेव वरुणः खरादिवधसन्निहित इति अगस्त्यहस्ते निक्षिप्तवानित्यवगम्यते । वैष्णवशब्दप्रत्यभिज्ञानात् । ब्रह्मदत्तः ब्रह्मणा दत्तः अयमिति शेषः । तूणी इमाविति शेषः, महारजतं सुवर्णं तन्मयः कोशः खड्गपिधानं यस्य सः महारजतकोशः बालरामायणे ऐन्द्रं शरासनमिति इन्द्रदत्तत्वोक्तिश्छत्रिन्यायात् । धनुषा धनुरादिना शरं खड्गं च वैष्णवाविति शेषः । वज्रं वज्रधरो यथेत्यनेन तावकं त्वमेव गृहाणेत्युक्तम् । एवमुक्त्वा ततः पुनरेव इत्यब्रवीदित्यन्वयः ॥ ३३–३६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने द्वादशः सर्गः ॥ १२ ॥

३३ ] ति० टी०—ब्रह्मणा दत्तो ब्रह्मदत्तस्तदाख्यश्च तूणी चेति चेन धनुःशरयोरुभयोरिन्द्रदत्तत्वं गम्यते ॥ ३३ ॥

रा० टी०—अमोघ इति । अमोघः फलरहितप्रहारशून्यः सूर्यसंकाशः ब्रह्मदत्तः शरोत्तम उत्तमबाणः महेन्द्रेण दत्तौ अक्षय्यसायकौ ज्वलद्भिः पावकैरिव निशितैः तीक्ष्णैर्बाणैः संपूर्णौ तूणी च सन्तीति शेषः । सार्धश्लोक एकान्वयी ॥ ३२ ॥३३

३४–३५ ] ति० टी०—महारजतं सुवर्णम्—हेमविभूषितः मुष्टिदेशे ॥ ३४ ॥ ३५ ॥

रा० टी०—महारजतेति । महारजतेन सुवर्णनिर्मितमुष्टिविशेषेण युक्तः कोशो यस्य स हेमविभूषितोपमश्चाऽस्तीति शेषः अर्धं पृथक् । धनुषः प्रभावमाह—अनेनेति । संख्ये संग्रामे अनेन धनुषा महासुरान् हत्वा पुरा पूर्वं दिवौकसां देवानां श्रियं विष्णुराजहार ॥ ३४ ॥

३६ ] ति० टी०—वज्रं वज्रधरो यथेत्यनेन त्वदीयमेव त्वया स्वीक्रियत इति ध्वनितम् ॥ ३६ ॥

रा० टी०—तदिति । जयाय जयं लब्धुं वज्रं वज्रधर इव धनुरादीनि प्रतिगृह्णीष्व ॥ ३५ ॥

३७ ] ति० टी०—वरायुधं वरस्य विष्णोरायुधं च ॥ ३७

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्येऽरण्यकाण्डे द्वादशः सर्गः ॥ १२ ॥

रा० टी०—एवमिति । महातेजा अगस्त्यः समस्तं तद्वरायुधं रामाय दत्त्वा पुनरब्रवीत् ॥ ३६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे द्वादशः सर्गः ॥ १२ ॥

---

१ ] ति० टी०—राम ! प्रीतोऽस्मि, लक्ष्मण ! त्वयि च प्री

---

१ रत्नेति गो. पाठः । २ दत्ताविति गो. रा. पाठः । ३ चाक्षयेति गो. रा. पाठः । ४ रजतेति गो. रा. पाठः । ५ तूणीराविति गो. पाठः ।

अध्वश्रमेण वा खेदो बाधते प्रचुरश्रमः । व्यक्तमुत्कण्ठते[1] वापि मैथिली जनकात्मजा ॥ २ ॥
एषा च[2] सुकुमारी च खेदैश्च[3] न विमानिता । प्राज्यदोषं वनं प्राप्ता भर्तृस्नेहप्रचोदिता ॥ ३ ॥
यथैषा रमते राम इह सीता तथा कुरु । दुष्करं कृतवत्येषा वने त्वाम[4]भिगच्छती ॥ ४ ॥
एषा हि प्रकृतिः स्त्रीणामा सृष्टे रघुनन्दन । समस्थमनुर[5]ज्यन्ते विषमस्थं त्यजन्ति च ॥ ५ ॥
शतह्रदानां लोलत्वं शस्त्राणां तीक्ष्णतां तथा । गरुडानिलयोः शैघ्र्यमनुगच्छन्ति योषितः ॥ ६ ॥
इयं तु भवतो भार्या दोषैरेतैर्विवर्जिता । श्लाघ्या च व्यपदेश्या च यथा [6]देवेष्वरुन्धती ॥ ७ ॥

---

तुष्टोऽस्मि । रामसेवातत्परत्वेन परितोषः । भगवद्विषयप्रीतेरेव भक्तित्वेन त्वद्भक्तोऽहमिति ध्वनितम् । स्थ इति अस्तेर्लटि मध्यमपुरुषद्विवचनम् ॥ १ ॥

रा० टी०–अगस्त्यवचनाकारमाह–रामेत्यादिभिः । हे राम! हे लक्ष्मण! सीतया सह मामभिवादयितुं यद्युवां प्राप्तौ स्थः तस्माद्धेतोः परितुष्टः प्राप्तसंतोषोऽस्मि अतः प्रीतः त्वद्विषयकप्रीतिमानस्मि ॥ १ ॥

गो० टी०–एतादृशस्थले सर्गविच्छित्तिर्नास्तीति प्रतीयते कथाया अपर्यवसानात् । अथ खरवधायागस्त्येनानुज्ञातस्य रामस्य पञ्चवटीं प्रति प्रयाणं त्रयोदशे–रामेत्यादि । ते इत्यस्य लक्ष्मणेत्यत्राप्यन्वयः ॥ १ ॥

२ ] ति० टी०–अध्वश्रमेणाध्वगमनादिप्रयुक्तखेदादिकार्यकारी श्रमः खेदो दुःखम् प्रचुरश्रमस्तज्जं दुःखं बाधते मैथिलीमिति शेषः, अत एवेयं व्यक्तमुत्कण्ठते । क्वचिद्विश्रान्तये इति शेषः ॥ २ ॥

रा० टी०–अध्वेति । अध्वश्रमेण अध्वगमनेन प्रचुरः श्रमो यस्मिन्नधिकश्रमजनित इत्यर्थः, खेदः वां युवां बाधते व्यक्तं स्फुटमेतत् । यदि युवामेव बाधते तर्हि मैथिलीं बाधते इति किं वक्तव्यमिति काव्यार्थापत्तिरलंकारो ध्वनितः । अत एव जनकात्मजा मैथिली उत्कण्ठते अतीच्छति श्रमनिवर्तनायेति शेषः ॥ २ ॥

गो० टी०–अध्वेति । अध्वश्रमेण मार्गायासेन प्रचुरः श्रमः श्रमजलं येन सः प्रचुरश्रमः खेदः वां बाधते उत्कण्ठते विश्रान्तिमभिलषति । अनेनास्याः श्रमातिशय उच्यते । जनकात्मजेति सौकुमार्यातिशयोक्तिः ॥ २ ॥

३-४ ] ति० टी०–न विमानिता इतः प्राक्कदापि न पीडिता खेदैः खेदजनकैः । 'दुःखैः' इति पाठान्तरम् । प्राज्यदोषं प्रभूतदोषम् ॥ ३ ॥ ४ ॥

रा० टी०–एषेति । दुःखैर्न विमानिता इतः पूर्वं दुःखकर्तृकाश्रयाभाववती सुकुमारी एषा सीता भर्तृस्नेहप्रचोदिता सती प्राज्यदोषं विपुलदोषविशिष्टं वनं प्राप्ता ॥ ३ ॥

रा० टी०–यथेति । राम! वने त्वामभिगच्छती अत एव दुष्करं कर्तुमशक्यं कर्म कृतवती एषा विश्रान्तिमिच्छती एषा सीता यथा इह रमते तथा कुरु ॥ ४ ॥

गो० टी०–एषेति । एषा सुकुमार्यपि प्राज्यदोषं बहुदोषं वनं प्राप्ता दुःखैर्न विमानिता न परिभूता च । तत्र हेतुर्भर्तृस्नेहप्रचोदितेति । इह आश्रमे ॥ ३ ॥ ४ ॥

५ ] ति० टी०–दुष्करकरणप्रतिपादनशेषतया लोकव्यवहारमाह—एषेति । आ सृष्टेः सृष्टिमारभ्य समस्थं धनधान्यादियुक्ततया सम्यगवस्थितं विषमस्थं [7]दरिद्ररोगादिग्रस्तम् ॥ ५ ॥

रा० टी०–सीतां प्राकृतविलक्षणां द्योतितुं[8] प्राकृतस्त्रीणां लक्षणमाह–एषेति । समस्थं संपत्तिमन्तं पुरुषं स्त्रियो अनुरज्यन्ति स्वानुरागविषयं कुर्वन्ति विषमस्थं विपत्तिमन्तं त्यजन्ति च, आसृष्टेः सृष्टिमारभ्य स्त्रीणामेषा प्रकृतिः ॥ ५ ॥

गो० टी०–एषा हीति । प्रकृतिः स्वभावः आसृष्टेः जगत्सृष्टिमारभ्य समस्थं सुस्थं प्रति विषमस्थं दुर्दशापन्नम् ॥ ५ ॥

६ ] ति० टी०–एकत्रानवस्थानाद्विद्युतां चाञ्चल्यमनुगच्छन्ति । बहुकालागतस्नेहबन्धच्छेदेन शस्त्रतैक्ष्ण्यानुगमः । निन्द्यकार्यकरणे वाय्वादिशैघ्र्यानुगमः ॥ ६ ॥

रा० टी०–शतह्रदानामिति । शतह्रदानां विद्युतां लोलत्वमतिचाञ्चल्यं शस्त्राणां खड्गादीनां तीक्ष्णतां तैक्ष्ण्यं च गरुडानिलयोः शैघ्र्यं च योषितोऽनुगच्छन्ति ॥ ६ ॥

गो० टी०–शतह्रदानामिति । शतह्रदानां विद्युतां लोलत्वं चञ्चलत्वम् अनुगच्छन्ति चञ्चलचित्तत्वादिति भावः । शस्त्राणां तीक्ष्णतां क्रौर्यम् अनुगच्छन्ति बहुकालागतस्नेहबन्धच्छेदनादिति भावः । गरुडानिलयोः शैघ्र्यम् अनुगच्छन्ति अविचारेण कार्यकरणादिति भावः ॥ ६ ॥

७ ] ति० टी०–श्लाघ्या दोषराहित्यपूर्वकं गुणसंपदा सद्भिः प्रशंसनीया व्यपदेश्या पातिव्रतास्वग्रगण्या ॥ ७ ॥

रा० टी०–इयमिति । इयं भवतो भार्या तु एतैः दोषैः विवर्जिता नित्यं रहिता अत एव श्लाघ्या स्तोतुमर्हा अत एव व्यपदेश्या पतिव्रतानामग्रे गणनीया अत एव यथा इयं तथा देवेषु अरुन्धती ॥ ७ ॥

---

१ चापीति गो. पाठः । २ हीति गो. पाठः । ३ दुःखैश्चेति गो. रा. पाठः । ४ अन्विति गो. पाठः । ५ रज्यन्तीति गो. रा. पाठः । ६ देवी ह्यरुन्धतीति गो. पाठः । ७ दारिद्र्येति युक्तं भाति । ८ द्योतयितुमिति भाति ।

अलंकृतोऽयं देशश्च यत्र सौमित्रिणा सह । वैदेह्या चानया राम वत्स्यसि त्वमरिंदम ॥ ८ ॥
एवमुक्तस्तु मुनिना राघवः संयताञ्जलिः । उवाच प्रश्रितं वाक्यमृषिं दीप्तमिवानलम् ॥ ९ ॥
धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे मुनिपुंगवः । गुणैः सभ्रातृभार्यस्य गुरुर्नः परितुष्यति ॥ १० ॥
किं तु व्यादिश मे देशं सोदकं बहुकाननम् । यत्राश्रमपदं कृत्वा वसेयं निरतः सुखम् ॥ ११ ॥
ततोऽब्रवीन्मुनिश्रेष्ठः श्रुत्वा रामस्य भाषितम् । ध्यात्वा मुहूर्तं धर्मात्मा ततोवाच वचः शुभम् ॥ १२ ॥
इतो द्वियोजने तात बहुमूलफलोदकः । देशो बहुमृगः श्रीमान्पञ्चवट्यभिविश्रुतः ॥ १३ ॥
तत्र गत्वाऽऽश्रमपदं कृत्वा सौमित्रिणा सह । रमस्व त्वं पितुर्वाक्यं यथोक्तमनुपालयन् ॥ १४ ॥
[ कालोऽयं गतभूयिष्ठो यः कालस्तव राघव । समयो यो नरेन्द्रेण कृतो दशरथेन ते ॥
तीर्णप्रतिज्ञः काकुत्स्थ सुखं राज्ये निवत्स्यसि । धन्यस्ते जनको राम स राजा रघुनन्दन ॥
यस्त्वया ज्येष्ठपुत्रेण ययातिरिव तारितः । ]
विदितो ह्येष वृत्तान्तो मम सर्वस्तवानघ । तपसश्च प्रभावेण स्नेहाद्दशरथस्य च ॥ १५ ॥
हृदयस्थं च ते च्छन्दो विज्ञातं तपसा मया । इह वासं प्रतिज्ञाय मया सह तपोवने ॥ १६ ॥

गो० टी०—एवं लौकिकस्त्रीणां दुष्टस्वभावमुक्त्वा सीतायास्तद्वैलक्षण्यमाह—इयं त्विति । न केवलं दोषरहिता श्लाघ्या सद्भिः प्रशंसनीया च व्यपदेश्या पतिव्रतास्वग्रगण्या । एवं सीताप्रशंसनं वक्ष्यमाणदेवबन्दीमोचनोत्साहनाय ॥ ७ ॥

८–१० ] ति० टी०—अयं देशो मदाश्रमरूप आगमनमात्रणालंकृतः । हे राम! यत्र देश इतःपरं वत्स्यसि सोऽलंकृतो भविष्यतीति किं वक्तव्यमित्यर्थः ॥ ८–१० ॥

रा० टी०—अलमिति । हे राम ! यत्र वैदेह्या सह निवत्स्यसि सोऽयं देशः अलंकृतो भविष्यतीति शेषः ॥ ८ ॥

गो० टी०—अलंकृतोऽयमिति । अयं देशः आश्रमप्रदेशः, यद्वा भूलोकः वत्स्यसि दश वर्षसहस्राणि दश वर्षशतानि च॥८॥

रा० टी०—एवमिति । मुनिना एवमुक्तः संयताञ्जलिः राघवः प्रसृतम् अवनतविशिष्टं वाक्यमुवाच ॥ ९ ॥

रा० टी०—तद्वाक्याकारमाह—धन्य इति । यस्य मे गुणैः नो अस्माकं गुरुर्भवान् परितुष्यति सोऽहमनुगृहीतोऽस्मि भवतेति शेषः, अत एव धन्योऽस्मि ॥ १० ॥

गो० टी०—एवमिति । संयताञ्जलिः बद्धाञ्जलिः॥९॥१०॥

११ ति० टी०—किं तु किंचिद्वक्तव्यमस्तीत्यर्थः । व्यादिश बोधय आश्रमपदं वासस्थानम् । निरतः प्रीतः ॥ ११ ॥

रा० टी०—किमिति । यत्र अश्रमपदं श्रमनिवर्तकं स्थानं कृत्वा निरतः सन् सुखं वसेयं तं बहुकाननम् अधिकवनविशिष्टं सोदकं किं कंचिद्देशं व्यादिश कथय किमिति सामान्ये नपुंसकम् ॥ ११ ॥

गो० टी०—किं त्विति । निरतः एकाग्रः ॥ ११ ॥

१२ ] ति० टी०—ध्यात्वा वासोचितं देशमिति शेषः । तत उवाचेत्यर्थे संधिरार्षः ॥ १२ ॥

रा० टी०—तत इति । ततः रामकथनानन्तरं रामस्य भाषितं श्रुत्वा ततः तस्मिँस्थले मुहूर्तं ध्यात्वा संचिन्त्य मुनिश्रेष्ठः शुभं वचः अब्रवीत् ॥ १२ ॥

गो० टी०—तत इति । ध्यात्वा भाविकार्योचितदेशं ध्यात्वा धीरः धीमान् निश्चितकार्योचितदेश इत्यर्थः । धीरतरम् अतिनिश्चितं वचः ॥ १२ ॥

१३–१४ ति० टी०—तत्र पञ्चवटसमूहसत्त्वात्पञ्चवटीति नाम्नाऽभिविश्रुतः प्रसिद्धः ॥ १३ ॥ १४ ॥

रा० टी०—तद्वचनाकारमाह—इत इति । हे तात ! बहुमूलफलोदकः बहुमृगः पञ्चवट्यभिविश्रुतः पञ्चवटीति नाम्ना प्रसिद्धः श्रीमान् देशः इतो द्वियोजने अस्तीति शेषः ॥ १३ ॥

रा० टी०—तत्रेति । तत्र पञ्चवट्यभिधे देशे अश्रमपदं कृत्वा रमस्व, यथोक्तं पितुर्वाक्यमनुपालय च ॥ १४ ॥

गो० टी०—इत इति । पञ्चानां वटानां समाहारः पञ्चवटी तद्युक्तदेशो लक्षणया पञ्चवटीत्युच्यते । पञ्चवटीत्यभिविश्रुतो देश इत्यन्वयः ॥ १३–१६ ॥

१५ ] ति० टी०—एष वृत्तान्तः पितृवचनपरिपालनार्थवनवासरूपः तव स्नेहात्तपसः प्रभावेण च विदितः नह्यस्निग्ध वृत्तान्तं तपसा ज्ञातुं यतते कश्चित् । दशरथस्य च वृत्तान्तः कैकेयीवशत्वप्राणत्यागादिरूपस्तत एव मे विदितः ॥ १६ ॥

रा० टी०—विदित इति । हे अनघ ! तव दशरथस्य च स्नेहाद्धेतोः सर्वो ह्येष वृत्तान्तः सकारणं भवदागमनं मया तपःप्रभावेण विदितः ध्यानेन सर्वं ज्ञातमित्यर्थः ॥ १९ ॥

गो० टी०—मम पितृवाक्यपरिपालनप्रकारः कथं ज्ञा इत्यत्राह—विदित इति । तपःप्रभावेन पर्यालोचनकरणे निमि त्तमाह—स्नेहादिति ॥ १७ ॥

१६ ] ति० टी०—यदिह वासं प्रतिज्ञाय ' आराधयि

१ स इति गो. पाठः । २ वरद इति गो. पाठः । ३ तद्वच्च इति गो. पाठः । ४ धीरो धीरतरं वच इति गो. पाठः । ५ रंस्यसे इति गो. पाठः । ६ पालयेति रा. पाठः । ७ सार्धश्लोकयुगुलमधिकं गो. पाठे । ८ प्रभावेनेति गो. पाठः । ९ हृदयस्थ इति गो. पाठः । १० विज्ञात इति गो. पाठः ।

अतश्च त्वामहं ब्रूमि गच्छ पञ्चवटीमिति । स हि रम्यो वनोद्देशो मैथिली तत्र रंस्यते ॥ १७ ॥
स देशः श्लाघनीयश्च नातिदूरे च राघव । गोदावर्याः समीपे च मैथिली तत्र रंस्यते ॥ १८ ॥
प्राज्यमूलफलैश्चैव नानाद्विजगणैर्युतः । विविक्तश्च महाबाहो पुण्यो रम्यस्तथैव च ॥ १९ ॥
भवानपि सदाचारः शक्तश्च परिरक्षणे । अपि चात्र वसन्राम तापसान्पालयिष्यसि ॥ २० ॥
एतदालक्ष्यते वीर मधूकानां महावनम् । उत्तरेणास्य गन्तव्यं न्यग्रोधमपि गच्छता ॥ २१ ॥
ततः स्थलमुपारुह्य पर्वतस्याविदूरतः । ख्यातः पञ्चवटीत्येव नित्यपुष्पितकाननः ॥ २२ ॥
अगस्त्येनैवमुक्तस्तु रामः सौमित्रिणा सह । सत्कृत्यामन्त्रयामास तमृषिं सत्यवादिनम् ॥ २३ ॥
तौ तु तेनाभ्यनुज्ञातौ कृतपादाभिवन्दनौ । तमाश्रमं पञ्चवटीं जग्मतुः सह सीतया ॥ २४ ॥

---

प्याम्यत्राहमगस्त्यं तं महामुनिम् । शेषं च वनवासस्य सौम्य वत्स्याम्यहं प्रभो ॥' इत्यनेन मम समीपे इह मदाश्रमे वासं प्रतिज्ञाय पुनर्मां प्रति व्यादिश मे वासमित्येतद्वदसि तन्मूलं ते हृदयस्थं छन्दोऽभिप्रायो मया ज्ञातम् । अत्रावस्थाने प्रतिज्ञातराक्षसवधनिर्वाहो न भवति, अत्र राक्षसागमनाभावादित्येवंरूप इति भावः ॥ १६ ॥

रा० टी०–ननु स्वसमीपदेशे एव मां कुतो न निवासयसीत्यत आह–हृदयस्थमिति । यस्माद्राक्षसवधाभिप्रायात् मया सह तपोवने वासं प्रतिज्ञाय आगतोऽसीति शेषः, तद्धृदयस्थं ते छन्दोऽभिप्रायो मया ज्ञातम्, अत एव पञ्चवटीं गच्छेति त्वामहं ब्रूमि ब्रवीमि । सोऽपि वनोद्देशो रम्यः अतस्तत्र मैथिली रंस्यते एतेनात्र स्थितौ राक्षसवधरूपत्वदभिप्रेतस्य सिद्धिर्न भविष्यतीति सूचितं तेन तत्र राक्षससंचाराभावो बोधितः । श्लोकद्वयमेकान्वयि ॥ १६ ॥ १७ ॥

गो० टी०–हृदयेति । छन्दोऽभिप्रायः 'अभिप्रायवशौ छन्दौ' इत्यमरः । खरादिवधसंकल्प इत्यर्थः, तपसा आलोचनेनैतन्मूलत्वद्वचनभङ्ग्या चेत्यर्थः। अलंकृतोऽयं देशश्चेति ममेह वासे प्रस्तुते किंतु व्यादिश मे देशमिति त्वदुक्त्या चेत्यर्थः । अभिप्रायवेदनकार्यमाह–इहेति । यस्मात्त्वदभिप्रायो मया विदित अतो हेतोः इह तपोवने मया सह वासं प्रतिज्ञाय अनुज्ञाय तदनन्तरमेव त्वं पञ्चवटीं गच्छेति ब्रूमि ब्रवीमि । अनित्यमागमशासनमिति इडभावः ॥ १८ ॥ १९ ॥

१७–१८ ति० टी०–अतस्त्वदभिप्रायज्ञानात्त्वां पञ्चवटीं गच्छेति ब्रूमि ब्रवीमि । न तु शिष्टव्यवहारोचितमपीह तिष्ठेति ब्रवीमीत्यर्थः । तद्गमनार्थवादमाह—स हीति ॥ १७ ॥ १८ ॥

रा० टी०–ननु तत्र गमने भवन्निकटवासाभावप्रयुक्तमत्प्रतिज्ञाहानिर्भविष्यतीत्यत आह–स इति । स देशो नातिदूरे निकटे एवेत्यर्थः, श्लाघनीयश्च गोदावर्याः समीपेऽस्तीति शेषः, अतस्तत्र मैथिली रंस्यते । एतेन तत्र वासे सर्वस्य प्रतिज्ञाविषयीभूतस्य सिद्धिर्भवितेति ध्वनितम् ॥ १८ ॥

गो० टी०–स हीत्यादि । आयुतः व्याप्तः विविक्तः विजनः ॥ २० ॥ २१ ॥

१९ ] ति० टी०–विविक्त एकान्तः पुण्यः पुण्यजनको रम्यो दृष्टिमनसोः ॥ १९ ॥

रा० टी०–प्राज्येति । यः प्राज्यमूलफलत्वादिगुणविशिष्टोऽयं पञ्चवटीदेशः अत्र निवसन् परिरक्षणे शक्तः सदाचारो भवान् तापसान् पालयिष्यति । श्लोकद्वयमेकान्वयि ॥१९॥२०॥

२० ] ति० टी०–परिरक्षणे शक्तः तापसानामिति शेषः । भवानपीत्यनेन स्वस्यापि तापसरक्षणे सामर्थ्यबोधनेन स्वाश्रमे रक्षसामपीडा सूचिता । अत्र पञ्चवट्याश्रमे पालयिष्यसि प्रतिज्ञातपालननिर्वाहं करिष्यसि ॥ २० ॥

गो० टी०–भवानिति । परिरक्षणे तापसानामिति शेषः । अत्र पञ्चवट्याश्रमे ॥ २२ ॥

२१ ] ति० टी०–अस्य मधूकवनस्योत्तरेणेत्यर्थः । न्यग्रोधं तदुपलक्षितमाश्रमं गच्छता ॥ २१ ॥

रा० टी०–तत्प्रापकमार्गं बोधयन्नाह–एतदिति । हे वीर! न्यग्रोधं मार्गचिह्नभूतवटवृक्षमपि गच्छता त्वया मधूकानामेतन्महावनं यदा लक्ष्यते तस्यापि उत्तरेण गन्तव्यम् ॥ २१ ॥

गो० टी०–एतदिति । उत्तरेणेति अस्य मधूकवनस्य न्यग्रोधमभिगच्छता उत्तरेण मार्गेण गन्तव्यम् इदं मधूकवनं गत्वा तदुत्तरेण मार्गेण गन्तव्यं स मार्गो न्यग्रोधं प्रापयतीत्यर्थः २३

२२ ] ति० टी०–स्थलं निर्वनं देशमुपारुह्य प्राप्य कस्यचित्पर्वतस्याविदूरतः समीपतः पञ्चवटीत्येव ख्यातो देशः ॥२२॥

रा० टी०–तत इति । ततोऽनन्तरं स्थलं समभूमिमुपारुह्य प्राप्य पर्वतस्य अदूरतो निकटे पञ्चवटीत्येव नाम्ना ख्यातः अस्तीति शेषः ॥ २२ ॥

गो० टी०–ततो न्यग्रोधात्परतः स्थलं निर्वणप्रदेशं किंचिदुन्नतमुपारुह्य गमने कश्चित्पर्वतो दृश्यते तस्याविदूरतः पञ्चवटीति ख्यातः पञ्चवटवत्त्वेन प्रसिद्धः नित्यपुष्पितकाननत्वेन ज्ञातुं योग्यश्चाश्रमो दृश्यत इत्यर्थः ॥ २४ ॥

२३–२४ ] ति० टी०–सत्कृत्य प्रदक्षिणनमस्कारादिभिः ॥ २३ ॥ २४ ॥

---

१ फलश्चैवेति गो. रा. पाठः । २ गणायुत इति गो. रा. पाठः । ३ सदारश्चेति गो. पाठः । ४ पालयिष्यतीति रा. पाठः । ५ महद्वनमिति गो. पाठः । ६ अमीति गो. पाठः । ७ तदाश्रमादिति गो. पाठः ।

गृहीतचापौ तु नराधिपात्मजौ विषक्ततूणी समरेष्वकातरौ ।
यथोपदिष्टेन पथा महर्षिणा प्रजग्मतुः पञ्चवटीं समाहितौ ॥ २९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

## चतुर्दशः सर्गः ।

पञ्चवटीं प्रस्थितो रामोऽन्तरा वटस्कन्धोपविष्टं विशालं पक्षिणं दृष्ट्वा कस्त्वमित्यपृच्छत् । स प्रसङ्गतः काश्यपीं सृष्टिमनुवर्णयन्नात्मनोऽरुणपुत्रत्वं ख्यापयन्दशरथेन सौहार्दादहं ते साहाय्यकं चरेयं यद्यनुमन्यते भवानित्यब्रवीत्प्रसन्नो रामस्तं परिष्वज्य तेन समं पञ्चवटीं प्रपेदे ।

अथ पञ्चवटीं गच्छन्नन्तरा रघुनन्दनः । आससाद महाकायं गृध्रं भीमपराक्रमम् ॥ १ ॥
तं दृष्ट्वा तौ महाभागौ वनस्थं रामलक्ष्मणौ । मेनाते राक्षसं पक्षिं ब्रुवाणौ को भवानिति ॥ २ ॥
ततो मधुरया वाचा सौम्यया प्रीणयन्निव । उवाच वत्स मां विद्धि वयस्यं पितुरात्मनः ॥ ३ ॥
स तं पितृसखं मत्वा पूजयामास राघवः । स तस्य कुलमव्यग्रमथ पप्रच्छ नाम च ॥ ४ ॥
रामस्य वचनं श्रुत्वा कुलमात्मानमेव च । आचचक्षे द्विजस्तस्मै सर्वभूतसमुद्भवम् ॥ ५ ॥

रा० टी०—अगस्त्येनेति । एवमुक्तो रामः ऋषिं सत्कृत्य आमन्त्रयामास गमनाय प्रार्थयामास ॥ २३ ॥

रा० टी०—ताविति । तेन ऋषिणा अभ्यनुज्ञातौ तौ रामलक्ष्मणौ पञ्चवटीमाश्रमं जग्मतुः ॥ २४ ॥

गो० टी०—अगस्त्येनेति । सत्कृत्य प्रदक्षिणनमस्काराभ्यामिति शेषः ॥ २५ ॥ २६ ॥

२९ ] ति० टी०—विषक्ते तूणी ययोस्ते । पूर्वपदे पुंवत्त्वम् ॥ २९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

रा० टी०—गृहीतेति । गृहीते चापे धनुषी याभ्यां विषक्ततूणी विषक्ते संसक्ते तूणी इषुधी ययोस्तौ समरेषु अकातरौ कातर्यविरोधिनौ समाहितौ रामलक्ष्मणौ महर्षिणा यथोपदिष्टेन पथा मार्गेण पञ्चवटीं प्रजग्मतुः ॥ २९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

गो० टी०—गृहीतचापाविति । विषक्ततूणौ बद्धतूणीरौ अकारान्तोऽपि तूणशब्दः । महर्षिणा यथोपदिष्टेन पथेत्यन्वयः । समाहितौ एकाग्रौ ॥ २७ ॥

अस्मिन् सर्गे सार्धसप्तविंशतिः श्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने त्रयोदशः सर्गः ॥ १३ ॥

१ ] ति० टी०—अन्तरा मध्ये ॥ १ ॥

रा० टी०—पञ्चवटीप्रस्थानानन्तरकालिकं वृत्तान्तमाह—अथेत्यादिभिः । पञ्चवटीं गच्छन् रघुनन्दनः अन्तरा मध्ये महाकायं गृध्रमथाससाद समङ्गलं प्राप ॥ १ ॥

गो० टी०—अथ गृध्रराजसमागमश्चतुर्दशे—अथ पञ्चवटीमित्यादि ॥ १ ॥

२ ] ति० टी०—तं पक्षिणं राक्षसं मेनाते विज्ञातवन्तौ तं राक्षसं ब्रुवाणौ परस्परं कथयन्तौ को भवानिति पप्रच्छतुरिति शेषः ॥ २ ॥

रा० टी०—तमिति । वनस्थं महाकायमत एव राक्षसं राक्षसत्वेन प्रतीयमानं तं जटायुषं दृष्ट्वा महाभागौ रामलक्ष्मणौ पक्षिं पक्षिणं मेनाते को भवानिति विशेषं ब्रुवाणौ अभवतां चेति शेषः ॥ २ ॥

गो० टी०—तमिति । वटस्थम् अगस्त्योपदिष्टवटस्थं पक्षिमिति छान्दसं रूपं को भवानिति ब्रुवाणौ सन्तौ राक्षसं मेनाते राक्षसं मत्वा को भवानित्यब्रूतामित्यर्थः ॥ २ ॥

३–४ ] ति० टी०—आत्मनः पितुः श्रीरामस्य तव पितुरित्यर्थः ॥ ३ ॥ ४ ॥

रा० टी०—स इति । सः ताभ्यां पृष्टः पक्षी हे वत्स आत्मनः स्वस्य पितुः वयस्यं सखायं मां विद्धि जानीहि इति मधुरया वाचा प्रीणयन् तर्पयन्नेव उवाच । इव एवार्थे ॥ ३

गो० टी०—स ताविति । सौम्यया सौजन्यपरया प्रीणयन्निवेति इवशब्द एवकारार्थः । आत्मन इत्यन्ते इतिकरणं ज्ञेयम् आत्मनो रामस्य ॥ ३ ॥

रा० टी०—स इति । तं पक्षिणं पितृसखं मत्वा राघवः पूजयामास । अथ अनन्तरमव्यग्रं यथा स्यात्तथा तस्य कुलं नाम च पप्रच्छ ॥ ४ ॥

गो० टी०—स तमिति । स्पष्टम् ॥ ४ ॥

५ ] ति० टी०—वचनम् वंशनामप्रश्नविषयकं वचनम्

१ तूणाविति गो. पाठः । २ वटस्थमिति गो. पाठः । ३ स ताविति गो. रा. पाठः । ४ सर्वभूतसमुद्भवमिति गो. पाठः । ५ कुलमात्मानमेव चेति गो. पा

पूर्वकाले महाबाहो ये प्रजापतयोऽभवन् । तान्मे निगदतः सर्वानादितः शृणु राघव ॥ ६ ॥
कर्दमः प्रथमस्तेषां [1]विकृतस्तदनन्तरम् । शेषश्च संश्रयश्चैव बहुपुत्रश्च वीर्यवान् ॥ ७ ॥
स्थाणुर्मरीचिरत्रिश्च क्रतुश्चैव महाबलः । पुलस्त्यश्चाङ्गिराश्चैव प्रचेताः पुलहस्तथा ॥ ८ ॥
दक्षो विवस्वानपरोऽरिष्टनेमिश्च राघव । [3]कश्यपश्च महातेजास्तेषामासीच्च पश्चिमः ॥ ९ ॥
प्रजापतेस्तु दक्षस्य बभूवुरिति [4]विश्रुताः । षष्टिर्दुहितरो राम यशस्विन्यो महायशः ॥ १० ॥
[3]कश्यपः प्रतिजग्राह तासामष्टौ सुमध्यमाः । आदितिं च दितिं चैव [5]दनूमपि च कालकाम् ॥ ११ ॥
ताम्रां क्रोधवशां चैव मनुं चाप्यनलामपि । तास्तु कन्यास्ततः प्रीतः [3]कश्यपः पुनरब्रवीत् ॥ १२ ॥
पुत्रांस्त्रैलोक्यभर्तॄन्वै जनयिष्यथ मत्समान् । अदितिस्तन्मना राम दितिश्च [6]दनुरेव च ॥ १३ ॥
[7]कालका च महाबाहो शेषास्त्वमनसोऽभवन् । अदित्यां जज्ञिरे देवास्त्रयस्त्रिंशदरिंदम ॥ १४ ॥

---

र्थः । स्वोत्पत्तिकथनप्रसङ्गात्सर्वभूतसमुद्भवमाचचक्ष इत्यर्थः । आत्मानमात्मनाम चेत्यर्थः ॥ ५ ॥

रा० टी०—रामस्येति । रामस्य वचनं श्रुत्वा कुलमात्मानं च द्विजः पक्षी तस्मै रामाय आचचक्षे अत एव सर्वभूतसमुद्भवमुत्पत्तिप्रकारं चाचचक्षे ॥ ५ ॥

गो० टी०—रामस्येति । द्विजः आत्मानम् आत्मनाम ॥५॥

६ ] ति० टी०—पूर्वकाले ब्रह्मणोऽहरादिकाले तान्प्रजापतीन् ॥ ६ ॥

रा० टी०—उत्पत्तिवचनप्रकारमाह—पूर्वेत्यादिभिः । हे महाबाहो ! पूर्वकाले ब्रह्मणः प्रातःसमये ये प्रजापतयः अभवन् तान् निगदतो मे आदितः शृणु ॥ ६ ॥

गो० टी०—स्वोत्पत्तिं कथयिष्यन् प्रसङ्गादादौ सर्वभूतसमुद्भवमाह—पूर्वकाल इत्यादि ॥ ६ ॥

७-९ ] ति० टी०—कर्दमाद्याः सप्तदश प्रजापतयो बभूवुः ॥ ७-९ ॥

रा० टी०—कर्दम इति । तेषां प्रजापतीनां प्रथमः पौर्वकालिकः कर्दमः तदभिधः तदनन्तरो द्वितीय इत्यर्थः विकृतः, तदभिधः तृतीयः शेषः, चतुर्थः संश्रयः, पञ्चमो बहुपुत्रः, षष्ठः स्थाणुः, सप्तमो मरीचिः, अष्टमोऽत्रिः, नवमः क्रतुः, दशमः पुलस्त्यः, एकादशोऽङ्गिराः, द्वादशः प्रचेताः, त्रयोदशः पुलहः, चतुर्दशो दक्षः, पञ्चदशो विवस्वान्, षोडशोऽरिष्टनेमिः, सप्तदशः पश्चिमः, पश्चाज्जातः कश्यपः आसीत् । श्लोकत्रयमेकान्वयि ॥७-९॥

गो० टी०—कर्दम इत्यादि । अरिष्टनेमिरिति काश्यपविशेषणम् ॥ ७-१० ॥

१० ] ति० टी०—दक्षस्य षष्टिर्दुहितरो बभूवुरित्यन्वयः । महायश इति रामसंबुद्धिः ॥ १० ॥

रा० टी०—प्रजापतेरिति । हे राम ! हे महायशः ! दक्षस्य प्रजापतेस्तु षष्टिर्दुहितरः कन्याः बभूवुरिति अतः विख्याता बभूवुः ॥ १० ॥

११-१३ ] ति० टी०—दक्षकन्यानां कश्यपपत्नीनां नामान्याह—अदितिमित्यादि । अष्टावित्युपलक्षणम् कश्यपाय त्रयोदशेत्यन्यत्रोक्तेः,वक्ष्यमाणसंतानोपयोगिन्योऽष्टाविति वा ११-१३

रा० टी०—कश्यप इति । तासां दुहितॄणां मध्ये अदित्याद्याः अष्टौ दुहितॄः कश्यपः प्रतिजग्राह । यद्यपि कश्यपाय त्रयोदशेति भागवतेनेदं विरुध्यते तथापि वक्ष्यमाणवंशोपयोगिनीत्वेनाष्टावेवात्र विवक्षिता इति न तद्विरोधः । सार्धश्लोक एकान्वयी ॥ ११ ॥

गो० टी०—काश्यप इति । तासां दुहितॄणां मध्ये सुमध्यमाः अष्टौ कन्याः प्रतिजग्राह पर्यणैषीत् ॥ ११ ॥

रा० टी०—ता इति । मत्समान् त्रैलोक्यभर्तॄन् त्रिलोकीभरणसमर्थान् पुत्रान् जनयिष्यथ इति ता अष्टौ कन्याः दक्षसुताः प्रीतः कश्यपः पुनरब्रवीत् ॥ १२ ॥

गो० टी०—तास्त्विति । त्रैलोक्यभर्तॄन् त्रैलोक्यरक्षणक्षमान् ॥ १२ ॥

रा० टी०—अदितिरिति । अदितिप्रभृतिः तन्मनाः कश्यपोक्तिविषयकप्रीतिमती अभवत् शेषास्तु अमनसः तदुक्तिविषयकप्रीत्यभाववत्योऽभवन् । एतेन तासां पुत्रेषु न प्रीतिरिति ध्वनितम् अत एवासां कन्यैव वंशो वक्ष्यते ॥ १३ ॥

गो० टी०—अदितिरिति । तन्मनाः तद्वचनदत्तावधाना । कालिका चेत्यत्र चकारेण मनुरप्युच्यते तन्मना इति दितिकालिकामनूनामपि विशेषणम् चतस्रः प्रौढपुत्रोत्पादनमनसोऽभवन् चतस्रो नाभवन्नित्यर्थः ॥ १३ ॥

१४ ] ति० टी०—तन्मनास्तत्सदृशपुत्राभिलाषवती । इदं दितिदनुकालकानां विशेषणम् । अमनसस्तथा मनोरथहीनाः । तत्फलं तासां कन्यासंतानं वक्ष्यति ॥ १४ ॥

रा० टी०—अदित्यामिति । आदित्यादयस्त्रयस्त्रिंशद्देवा अदित्यां जज्ञिरे तत्रादित्या द्वादश वसवोऽष्टौ रुद्रा एकादश अश्विनौ द्वौ ॥ १४ ॥

---

१ विश्रुत इति गो. पाठः । २ तर इति गो. रा. पाठः । ३ काश्यप इति गो. पाठः । ४ विश्रुतमिति गो. पाठः । ५ दनुमप्यथ कालिकामिति गो. पाठः । ६ मनुजर्षभेति गो. पाठः । ७ कालिकेति गो. पाठः ।

आदित्या वसवो रुद्रा अश्विनौ[1] च परंतप । दितिस्त्वजनयत्पुत्रान्दैत्यांस्तात यशस्विनः ॥ १५ ॥
तेषामियं वसुमती पुराऽऽसीत्सवनार्णवा । दनुस्त्वजनयत्पुत्रमश्वग्रीवमरिंदम ॥ १६ ॥
नरकं कालकं चैव कालकापि व्यजायत । क्रौञ्चीं भासीं तथा श्येनीं धृतराष्ट्रीं तथा शुकीम् ॥ १७ ॥
ताम्रा तु[2] सुषुवे कन्याः पञ्चैता लोकविश्रुताः । उलूकाञ्जनयत्क्रौञ्ची भासी भासान्व्यजायत ॥ १८ ॥
श्येनी श्येनांश्च गृध्रांश्च व्यजायत सुतेजसः । धृतराष्ट्री तु हंसांश्च कलहंसांश्च सर्वशः ॥ १९ ॥
चक्रवाकांश्च भद्रं ते विजज्ञे सापि भामिनी । शुकी नतां विजज्ञे तु नतायां[3] विनता सुता ॥ २० ॥
दश क्रोधवशा राम विजज्ञेऽप्यात्मसंभवाः[4] । मृगीं च मृगमन्दां च हरीं भद्रमदामपि ॥ २१ ॥
मातङ्गीमथ[5] शार्दूलीं श्वेतां च सुरभीं तथा । सर्वलक्षणसंपन्नां सुरसां कद्रुकामपि ॥ २२ ॥
अपत्यं तु मृगाः सर्वे मृग्या नरवरोत्तम । ऋक्षाश्च मृगमन्दायाः सृमराश्चमरास्तथा ॥ २३ ॥
ततस्त्विरावतीं नाम जज्ञे भद्रमदा सुताम् । तस्यास्त्वैरावतः पुत्रो लोकनाथो महागजः ॥ २४ ॥
हर्यांश्च हरयोऽपत्यं वानराश्च तपस्विनः[6] । गोलाङ्गूलाश्च[7] शार्दूली व्याघ्रांश्चाजनयत्सुतान् ॥ २५ ॥
मातङ्ग्यास्त्वथ[8] मातङ्गा अपत्यं मनुजर्षभ । दिशागजं तु काकुत्स्थ श्वेता व्यजनयत्[9] सुतान्[10] ॥ २६ ॥
ततो दुहितरौ राम सुरभिर्[11] देव्यजायत । रोहिणीं नाम भद्रं ते गन्धर्वीं च यशस्विनीम् ॥ २७ ॥

---

गो० टी०—भर्तृवचनादरानादरफले दर्शयति—अदित्यामित्यादिना । द्वादशादित्याः अष्टौ वसवः एकादश रुद्राः अश्विनौ द्वौ एवं त्रयस्त्रिंशत् ॥ १४ ॥

१५ ] ति० टी०—अश्विनौ चेत्यन्तास्त्रयस्त्रिंशत् ॥ १९ ॥

रा० टी०—दितिरिति । हे तात ! दितिस्तु यशस्विनः दैत्यान् पुत्रान् अजनयत् इयं सवनार्णवा मही पुरा तेषामेवासीत् ॥ १६ ॥

गो० टी०—दितिस्त्विति । तेषां दितिपुत्राणाम् ॥ १६-१७ ॥

१६-१७ ] ति० टी०—तेषां दितिपुत्राणाम् वनैरर्णवैश्च सहिता सवनार्णवा ॥ १६ ॥ १७ ॥

रा० टी०—दनुरिति । दनुस्तु अश्वग्रीवं पुत्रमजनयत्, नरकं कालकं च कालकापि व्यजायत अजनयत् ॥ १६ ॥

रा० टी०—क्रौञ्चीमिति । ताम्रा तु लोकविश्रुताः क्रौञ्च्याद्याः पञ्च कन्याः सुषुवे ॥ १७ ॥

१८-१९ ] ति० टी०—क्रौञ्च्यादिसंतानमाह—उलूकानिति ॥ १८ ॥ १९ ॥

रा० टी०—ताम्रासुतावंशमाह—उलूकानिति । क्रौञ्ची उलूकान् अजनयत् पक्षिविशेषान् व्यजायत अजनयत् । श्येनी तु सुतेजसः श्येनान् गृध्रांश्च व्यजायत ॥ १८ ॥

रा० टी०—धृतराष्ट्रीति । धृतराष्ट्री सा भामिनी तु सर्वशः हंसान् राजहंसान् कलहंसांश्च चक्रवाकांश्च विजज्ञे । श्रवणे रुच्युत्पादनायाह ते भद्रं कल्याणम् । हे राम ! इति श्रृण्विति च शेषः ॥ १९ ॥

गो० टी०—ताम्रावंशं प्रपञ्चयति—उलूकानित्यादिना । जनयादित्यत्र आगमशास्त्रस्यानित्यतया नाडागमः । अप्रसक्तवृत्तान्तानादरप्रतिषेधाय मध्ये भद्रं ते इत्युक्तिः । सा भामिनीति धृतराष्ट्रीविशेषणम् शुकी ताम्रापुत्री । विजज्ञे एवमादयोऽन्तर्भावितण्यर्थाः शब्दाः ॥ १८-२० ॥

२० ] ति० टी०—संबोधननाम मध्ये मध्ये भद्रं इति प्रयोगः । हे राम ! ते भद्रमस्तु । श्रृण्विति शेषः ॥ २० ॥

रा० टी०—शुकीति । शुकी तु नतां विजज्ञे । नतायाः विनता सुता अभवदिति शेषः ॥ २० ॥

२१-२२ ] ति० टी०—क्रोधवशा कश्यपषष्ठपत्नी तस्य दशापत्यान्याह—मृगीं चेति ॥ २१ ॥ २२ ॥

रा० टी०—कश्यपस्त्रियाः ताम्रायाः सुतावंशमुक्त्वा तद्भ्रातृपत्नीवंशमाह—दशेति । क्रोधवशा तु मृग्याद्याः दश आत्मसंभवाः सुताः विजज्ञे । श्लोकद्वयमेकान्वयि ॥ २१ ॥ २२ ॥

गो० टी०—दशेति । क्रोधवशा काश्यपपत्नी ॥ २१ ॥ २२ ॥

२३-२४ ] ति० टी०—सृमराः श्यामकेशपुच्छाः, चमराः श्वेतकेशपुच्छा इति भेदः ॥ २३ ॥ २४ ॥

रा० टी०—क्रोधवशासुतावंशमाह—अपत्यमिति । नरवरोत्तम ! सर्वे मृगाः मृग्याः क्रोधवशासुताया अपत्यम् । मृगमन्दायास्तु ऋक्षाः सृमराश्चमराश्च अपत्यम् ॥ २३ ॥

रा० टी०—तत इति । भद्रमदा तु इरावतीं नाम सुतां जज्ञे तस्या इरावत्यास्तु लोकनाथः सर्वैरीप्सितः महागज ऐरावतः पुत्रो जज्ञे ॥ २४ ॥

गो० टी०—अपत्यमिति जात्येकवचनम् । सृमराः कृष्णकेशसहायोपयुक्तविनीलदीर्घवालाः मृगाः, चमराः चामरमृगाः । हरयः सिंहाः, मातङ्गाः गजाः ॥ २३-२६ ॥

२५-२७ ] ति० टी०—हरयः सिंहाः । गोलाङ्गूलाः इति पूर्वान्वयि ॥ २६-२७ ॥

---

१ ह्यश्विनाविति गो. पाठः । २ ऽपीति गो. पाठः । ३ नताया इति गो. रा. पाठः । ४ ह्यात्मसंभवा इति गो. पाठः । ५ अर्धमिदं [illegible] इत्यस्मात्पूर्वं गो. पाठे । ६ तरस्विन इति गो. पाठः । ७ गोलाङ्गूलांश्चेति गो. पाठः । ८ अर्धमिदं गोलाङ्गूलानित्यस्मात्प्राक् गो. पाठे । ९ ऽप्यजन[illegible] गो. पाठः । १० सुतमिति रा. पाठः । ११ द्वे इति गो. रा. पाठः ।

रोहिण्यजनयद्गा[1]वो गन्धर्वीं वाजिनः सुतान् । सुरसाऽजनयन्नागानराम[2] कद्रूश्च पन्नगान् ॥ २८ ॥
मनुर्मनुष्याञ्जनयत्कश्यपस्य महात्मनः । ब्राह्मणान्क्षत्रियान्वैश्याञ्शूद्रांश्च मनुजर्षभ ॥ २९ ॥
[3]मुखतो ब्राह्मणा जाता उरसः क्षत्रियास्तथा । ऊरुभ्यां जज्ञिरे वैश्याः पद्भ्यां शूद्रा इति श्रुतिः ॥ ३० ॥
सर्वान्पुण्यफलान्वृक्षाननलापि व्यजायत । विनता च शुकीपौत्री कद्रूश्च सुरसास्वसा ॥ ३१ ॥
कद्रूर्नागसहस्रं[4] तु विजज्ञे धरणीधरान् । द्वौ पुत्रौ विनतायास्तु गरुडोऽरुण एव च ॥ ३२ ॥
तस्माज्जातोऽहमरुणात्संपातिश्च ममाग्रजः । जटायुरिति मां विद्धि श्येनीपुत्रमरिंदम ॥ ३३ ॥
सोऽहं वाससहायस्ते भविष्यामि यदीच्छसि । [ इदं दुर्गं हि कान्तारं मृगराक्षससेवितम् । ]
सीतां च तात रक्षिष्ये त्वयि याते सलक्ष्मणे ॥ ३४ ॥
जटायुषं तु[6] प्रतिपूज्य राघवो मुदा परिष्वज्य च संनतोऽभवत् ।
पितुर्हि शुश्राव सखित्वमात्मवाञ्जटायुषा संकथितं पुनः पुनः ॥ ३५ ॥

---

रा० टी०–हर्या इति । हर्या अपत्यं तु हरयः सिंहाः तपस्विनो विचारशीला वानराश्च । शार्दूली तु गोलाङ्गूलान् व्याघ्रांश्च सुतानजनयत् ॥ २६ ॥

रा० टी०–मातङ्ग्या इति । मातङ्ग्यास्तु मातङ्गाः गजा अपत्यम् । हे काकुत्स्थ ! दिशागजं सुतं तु श्वेता अजनयत् ॥ २६ ॥

रा० टी०–तत इति । सुरभिः रोहिणीं गन्धर्वीं च द्वे दुहितरौ व्यजायत ॥ २७ ॥

गो० टी०–गोलाङ्गूलाः अत्यन्तदीर्घलाङ्गूलाः मर्कटजातिविशेषाः 'रोहिण्यजनयद्गा वै' इति पाठः । नागाः बहुफणाः सर्पाः, पन्नगाः केवलसर्पाः ॥ २६–२८ ॥

२८ ] ति० टी०–गावः गा इत्यर्थः । नागा बहुफणाः सर्पाः, तदन्ये पन्नगा इति तीर्थः । निर्विषा नागाः, तदन्ये पन्नगा इति कतकः ॥ २८ ॥

रा० टी०–रोहिणीति । रोहिणी गावः गाः अजनयत् । गन्धर्वी तु वाजिनोऽश्वान् सुतानजनयत् । सुरसा तु नागान् अजनयत् । कद्रूस्तु पन्नगान् अजनयत् ॥ २८ ॥

२९ ] ति० टी०–जनयत अजनयदित्यर्थः ॥ २९ ॥

रा० टी०–क्रोधवशावंशमुक्त्वा तत्सपत्नीवंशमाह–मनुरिति । कश्यपस्य स्त्री मनुस्तु ब्राह्मणादीन् चतुरो मनुष्यानजनयत् ॥ २९ ॥

गो० टी०–मनुरिति । मनुः काश्यपपत्नी पुण्यफलान् चारुफलान् । 'पुण्यं तु चारु' इत्यमरः विषवृक्षनिम्बादयोऽपि महौषधत्वेन पुण्यफला एव 'पिण्डफलान्' इति पाठे पिण्डाकारफलानीत्यर्थः । प्रायिकं चैतदिति बोध्यम् ॥ २९ ॥

३० ] ति० टी०–उरसो बाहुमध्यात् । क्वचित्तु 'बाहुभ्याम्' इति पाठः ॥ ३० ॥

रा० टी०–मुखत इति । मुखादिभ्यः क्रमशो ब्राह्मणादयो जाताः इति एवंप्रतिपादिका श्रुतिः ॥ ३० ॥

३१ ] ति० टी०–अनलापि व्यजायतेत्यनेन कश्यपस्यान्यासामपि पत्नीनां संतानान्युक्त्वा स्ववंशप्रदर्शनायाह—विनता चेत्यादि । शुकीपौत्री शुकीपुत्री नता तस्या विनता पुत्रीत्यर्थः । सुरसा कद्रूश्च नाम्ना सुते ॥ ३१ ॥

रा० टी०–सर्वानिति । अनला तु पुण्यफलान् वृक्षान् व्यजायत । विनता तु शुकीपौत्री शुकी ताम्रायाः कश्यपस्त्रियाः पुत्री तत्पुत्री नता तत्पुत्री विनतेत्यर्थः । कद्रूश्च सुरसासुता वर्णितेति शेषः ॥ ३१ ॥

गो० टी०–एवं प्रासङ्गिकं परिसमाप्य स्वकुलमवतारयति–विनता चेति । अत्र कद्र्वा उपादानं स्वप्रतिपक्षकुलत्वेनेति केचित् । वस्तुतस्तु धरणीधरशेषजनकत्वेन स्वकुलतुल्यत्वं वक्तुं कद्रूर्नागं सहस्रास्यं विजज्ञे धरणीधरमित्युक्तं श्येनीपुत्रमिति इयं च श्येनी पूर्वोक्ताया अन्या, यद्वा काश्यपसुता श्येनीमाता काश्यपस्य पञ्चमोऽरुणः पिता काश्यपप्रजापतिः कूटस्थ इति स्वीयवंशप्रभावो निवेदितः । विधिनिषेधयोस्तिर्यङ्क्स्वभावान्न मातृपुत्रयोरेकवंश्यत्वादिदोषः । अयं च सृष्टिक्रमो वैवस्वतमन्वन्तरप्रकारः अतो न पुराणान्तरविरोधः ॥ ३०–३२ ॥

३२ ] ति० टी०–नागसहस्रम् पन्नगसहस्रमित्यर्थः । अतो नोक्तेन विरोधः ॥ ३२ ॥

रा० टी०–कद्रूरिति । कद्रूस्तु धरणीधरान्नागसहस्रं विजज्ञे 'सुरसाऽजनयन्नागान् रामकद्रूश्च पन्नगान्' इति पूर्वोक्तेन तु न विरोधः सुरसाया धरणीधरनामातिरिक्तनागोत्पादिकात्वेन विरोधाभावात् । विनतायास्तु गरुडोऽरुणश्च द्वौ पुत्रौ ॥ ३२ ॥

३३ ] ति० टी०–श्येनीपुत्रमिति । ननु ताम्रापुत्र्यौ शुकीश्येन्यौ सा श्येनी शुकीपौत्रीपुत्रस्यारुणस्य कथं भार्येति चेत्, तत्संतानपरम्परापतिता अन्यैषा श्येनीत्यदोषः, विधिनिषेधयोर्मनुष्याधिकारत्वाद्वा ॥ ३३ ॥

रा० टी०–तस्मादिति । तस्मादरुणादहं जातः, संपातिस्तु मम अग्रजो ज्येष्ठभ्राता, श्येनीपुत्रं मां तु जटायुरिति विद्धि ॥ ३३ ॥

३४–३५ ] ति० टी०–वाससहायो वासस्थाने सीतार-

---

१ वै इति गो. पाठः । २ राम पुत्रान्यशस्विन इति गो. पाठः । ३ श्लोकोऽयं गो. नास्ति । ४ नागं सहस्रास्यं......धरमिति गो. पाठः । ५ अर्धमेतदधिकं गो. पाठे । ६ तमिति गो. पाठः ।

स तत्र सीतां परिदाय मैथिलीं सहैव तेनाऽतिबलेन पक्षिणा ।
जगाम तां पञ्चवटीं सलक्ष्मणो रिपून्दिधक्षन्से वनानि पालयन् ॥ ३६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे चतुर्दशः सर्गः ॥ १४ ॥

## पञ्चदशः सर्गः ।

रामादिष्टो लक्ष्मणः पञ्चवट्यामनुगोदातीरमुटजं निर्ममौ। दृष्ट्वा तद्रामणीयकं लक्ष्मणं श्लाघमानेन रामेण सह सीतया तत्र सुखमू...

ततः पञ्चवटीं गत्वा नानाव्यालमृगायुताम् । उवाच लक्ष्मणं रामो भ्रातरं दीप्ततेजसम् ॥ १ ॥
आगताः स्म यथोद्दिष्टं यं देशं मुनिरब्रवीत् । अयं पञ्चवटीदेशः सौम्य पुष्पितकाननः ॥ २ ॥
सर्वतश्चार्यतां दृष्टिः कानने निपुणो ह्यसि । आश्रमः कतरस्मिन्नो देशे भवति संमतः ॥ ३ ॥

क्षणे सहायभूतः यदीच्छसि उक्तार्थमिति शेषः । तदेवाह—सीतामिति । त्वयि याते मृगयार्थम् ॥ ३४ ॥ ३६ ॥

**रा० टी०—स इति ।** सः तव पितुः सखा अहं यदि त्वमिच्छसि तर्हि ते सहायो भविष्यामि । तत्संभवमाह—सलक्ष्मणे त्वयि याते कन्दमूलाद्यर्थं क्वचिद्गते सति सीतां रक्षिष्ये एतेन जटायुषः त्रिकालज्ञत्वं सूचितम् ॥ ३४ ॥

**गो० टी०—सोऽहमिति ।** वासहायः वासस्थले सीतायाः रक्षणे सहाय इत्यर्थः । यदीच्छसि उक्तार्थमिति शेषः । सहायापेक्षत्वे हेतुमाह—इदमिति । याते मृगयार्थमिति शेषः॥ ३३ ॥

**रा० टी०—जटायुषमिति ।** जटायुषं प्रतिपूज्य परिष्वज्य च राघवः संनतः प्रसृतोऽभवत्, जटायुषा संकथितं पितुः सखित्वं तु पुनः पुनः शुश्राव च ॥ ३६ ॥

**गो० टी०—जटायुषमिति ।** सन्नतौ हेतुमाह—पितुर्हीति ॥ ३५ ॥

**३६ ] ति० टी०—परिदाय** रक्षणार्थं जटायुषे इति शेषः। 'परिधाय' इति पाठे परिवार्येत्यर्थः ॥ ३६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे चतुर्दशः सर्गः ॥ १४ ॥

**रा० टी०—स इति ।** स राघवः मैथिलीं सीतां परिधाय जटायुषः परिपाल्यत्वेन स्वीकृत्य अतिबलेन पक्षिणा तेन जटायुषा सह रिपून् अनलः वह्निः शलभान् सपतङ्गानिव दिधक्षन् तां प्रसिद्धां पञ्चवटीं जगाम । 'दिधक्षन् शलभानिवानलः' इति पाठः ॥ ३६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे चतुर्दशः सर्गः ॥ १४ ॥

**गो० टी०—स तत्रेति ।** सीतां तत्र परिदाय रक्षणाय जटायुवशं कृत्वेत्यर्थः । "यमाय त्वा परिददाम्यसावन्तकाय त्वा परिददाम्यसौ" इत्यादौ तथा प्रयोगात् शलभानिवानल इत्यनेन लीलया विरोध्युन्मूलनाभिप्रायोऽवगम्यते ॥ ३६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने चतुर्दशः सर्गः ॥१४॥

**१ ] ति० टी०—**'व्यालः श्वापदसर्पयोः' इति कोशः। मृगा हरिणादयः ॥ १ ॥

**रा० टी०—**पञ्चवटीगमनानन्तरकालिकं वृत्तान्तमाह—तत इत्यादिभिः । ततः जटायुषः संमेलनानन्तरं नानाव्यालमृगैः आयुतां व्याप्तां पञ्चवटीं गत्वा रामः लक्ष्मणमुवाच ॥ १ ॥

**गो० टी०—अथ** शेषभूतस्य शेष्यभिमतकैङ्कर्यमेव कर्तव्यमिति दर्शयति पञ्चदशे—तत इत्यादि । सौमित्रिं रामं दशरथं विद्धीत्यादि सुमित्रानियोगेन रामकैङ्कर्योद्युक्तं दीप्ततेजसं कैङ्कर्योचितदेशलाभेन संतुष्टमित्यर्थः । व्यालाः दुष्टसर्पाः ॥ १ ॥

**२ ] ति० टी०—**यं देशं मुनिरब्रवीत्, यथोद्दिष्टं तं देशमागताः स्मेत्यन्वयः ॥ २ ॥

**रा० टी०—**तद्वचनाकारमाह—**आगता इति ।** महर्षिणा अगस्त्येन उद्दिष्टं बोधितमिमं देशं यथा यथावत् आगताः प्राप्ताः स्म, हे सौम्य ! पुष्पितकाननः अयमेव पञ्चवटीदेशः ॥ २ ॥

**गो० टी०—आगता इति ।** यथोद्दिष्टम् अगस्त्योक्तक्रमम् आगताः स्म यं देशं मुनिरब्रवीत् सोऽयं पञ्चवटीदेश इत्यर्थः ॥ २ ॥

**३ ] ति० टी०—**दृष्टिश्चार्यताम् प्रेक्ष्यतामित्यर्थः । निपुणः आश्रमोचितदेशज्ञान इति शेषः । संमतः सीतायाः इति शेषः ॥ ३ ॥

**रा० टी०—सर्वत इति ।** यतः त्वं निपुणः निखिलकार्यकुशलः अतः कानने अस्मिन्वने सर्वतः दृष्टिः चार्यताम् प्रचार्यताम् । तत्प्रयोजनमाह—संमतः त्वत्संमतिविषयीभूतः अस्माकमाश्रमः कतरस्मिन् कस्मिन्देशे भवतु ॥ ३ ॥

**गो० टी०—सर्वत इति ।** सर्वत्र कानने त्वया दृष्टिश्चार्यतां सर्वं काननमवलोक्यतामित्यर्थः । हिर्हेतौ, असीति त्वमित्यर्थे निपातः। यस्मात्त्वमाश्रमोचितस्थलपरिज्ञाने निपुणः स...

१ परिधायेति रा.पाठः। २ शलभानिवानल इति गो.रा.पाठः। ३ भ्रातरं रामः सौमित्रिमिति गो.पाठः। ४ अमुं देशं महर्षिणेति गो. इमं देशं महर्षिणेति रा.पा...

रमते यत्र वैदेही त्वमहं चैव लक्ष्मण । तादृशो दृश्यतां देशः संनिकृष्टजलाशयः ॥ ४ ॥
वनरामण्यकं यत्र जलरामण्यकं तथा । संनिकृष्टं च यस्मिंस्तु समित्पुष्पकुशोदकम् ॥ ५ ॥
एवमुक्तस्तु रामेण लक्ष्मणः संयताञ्जलिः । सीतासमक्षं काकुत्स्थमिदं वचनमब्रवीत् ॥ ६ ॥
परवानस्मि काकुत्स्थ त्वयि वर्षशतं स्थिते । स्वयं तु रुचिरे देशे क्रियतामिति मां वद ॥ ७ ॥
सुप्रीतस्तेन वाक्येन लक्ष्मणस्य महाद्युतिः । विमृशन्रोचयामास देशं सर्वगुणान्वितम् ॥ ८ ॥
स तं रुचिरमाक्रम्य देशमाश्रमकर्मणि । हस्ते गृहीत्वा हस्तेन रामः सौमित्रिमब्रवीत् ॥ ९ ॥
अयं देशः समः श्रीमान्पुष्पितैस्तरुभिर्वृतः । इहाश्रमपदं रम्यं यथावत्कर्तुमर्हसि ॥ १० ॥
इयमादित्यसंकाशैः पद्मैः सुरभिगन्धिभिः । अदूरे दृश्यते रम्या पद्मिनी पद्मशोभिता ॥ ११ ॥

---

त्कतरस्मिन् प्रदेशे सर्वेषां नः संमत आश्रमो भवतीति सर्वत्र कानने दृष्टिश्चार्यतामित्यर्थः ॥ ३ ॥

४ ] ति० टी०–तदेवाह—रमत इति । त्वं रमसे, अहं रमे इत्यर्थः ॥ ४ ॥

रा० टी०–रमते इति । यत्र वैदेह्यादिः रमते यत्र देशे वनरामण्यकं वनरमणीयत्वं जलरामण्यकं च यस्मिंश्च समित्पुष्पकुशोदकं संनिकृष्टं तादृशो देशः दृश्यतामवलोकनपूर्वकनिश्चयः क्रियताम् । श्लोकद्वयमेकान्वयि ॥ ४ ॥ ५ ॥

गो० टी०–सर्वसंमतत्वमुपपादयति–रमत इति । त्वं रमस इति शेषः । अहं रमे इति शेषः । सर्वरतिहेतुमाह–सन्निकृष्टेति ॥ ४ ॥

५ ] ति० टी०–वनरामण्यकं वनस्य रमणीयत्वम् ॥ ५ ॥

गो० टी०–तदेव विवृणोति–वनेति । रामण्यकं रमणीयता "योपधाद्गुरूपोत्तमाद्वुञ्" इति वुञि प्राप्ते ईकारलोपश्छान्दस इति बोध्यम् । वनस्य रमणीयता चूतपुन्नागादिमिश्रत्वं स्थलस्य रमणीयता निम्नोन्नतत्वरहितकोमलसिकतामयत्वम् । समिदिति "जातिरप्राणिनाम्" इत्येकवद्भावः । वनरामण्यकं कुसुमाभिलाषिण्याः सीताया रतिहेतुः, स्थलरामण्यकं सुखशयनादिकाङ्क्षिणो रामस्य, सन्निकृष्टसमिदादिमत्त्वं शुश्रूषमाणस्य सौमित्रेः॥५॥

६ ] ति० टी०–संयताञ्जलिर्बद्धाञ्जलिः ॥ ६ ॥

रा० टी०–एवमिति । सीतासमक्षं सीतासंमुखे रामेण एवमुक्तो लक्ष्मणः इदमब्रवीत् ॥ ६ ॥

गो० टी०–एवं स्वसौख्यमप्युक्तवतो रामस्य वचनमसहमानः सौमित्रिः सीतायास्तव च यः प्रदेशो रमणीयः स एवाज्ञप्तव्यः न तु मे सौकर्यावह इत्याह–एवमिति । सीतासमक्षमिति पुरुषकारसान्निध्योक्तिः ॥ ६ ॥

७ ] ति० टी०–हे काकुत्स्थ! त्वयि स्थिते विद्यमाने वर्षशतमप्यहं परवानेव त्वदधीन एव न कदाचिदपि मे स्वातन्त्र्यमित्यर्थः । स्वयं तु त्वमयं रुचिरो देश इति विचार्य तत्र रुचिरे देशे क्रियतामिति वद ॥ ७ ॥

रा० टी०–परवानिति । त्वयि स्थिते सति अहं परवानस्मि अतः स्वयमेव रुचिरे देशे क्रियतां पर्णशालेति शेषः, इति वर्षशतमनेकखण्डविस्तारकं मां वद । सुप्रीत इति लक्ष्मणस्य तेन वाक्येन सुप्रीतः रामः सर्वगुणान्वितं देशं विमृशन् विचारयन् सन् रोचयामास लक्ष्मणं बोधयामास ॥ ७ ॥ ८ ॥

गो० टी०–परवानिति । परवानस्मि ममास्मिता तवास्मितावन्न भवति पारतन्त्र्यैकवेषा ममास्मितेति भावः । काकुत्स्थ इदं च पारतन्त्र्यं न परत्वावस्थायामेव किंत्ववतारावस्थायामपीत्यर्थः । इदं च पारतन्त्र्यं कियत्कालं तत्राह–त्वयि वर्षशतं स्थित इति शतशब्दः आनन्त्यवचनः सार्वकालिकं मम पारतन्त्र्यमिति भावः । एवं पारतन्त्र्यस्यैव मत्स्वरूपत्वेन तदनुकूलतया त्वया आज्ञापनं कर्तव्यमित्याह–स्वयमिति । स्वयं रुचिरे देशे तवैव रमणीये प्रदेशे आश्रमः क्रियतामिति मां वद ॥ ७ ॥

८ ] ति० टी०–विमृशन्पर्यालोचयन् ॥ ८ ॥

गो० टी०–सुप्रीत इति । विमृशन् पर्यालोचयन् देशं कंचिदिति शेषः ॥ ८ ॥

९–१० ] ति० टी०–हस्तेन स्वहस्तेन हस्ते लक्ष्मणस्य हस्ते, लक्ष्मणं गृहीत्वेत्यर्थः । अनेन स्नेहाधिक्यमन्तरङ्गत्वं स्वामित्वं च दर्शितम् ॥ ९ ॥ १० ॥

रा० टी०–बोधनप्रकारमाह–स इति । स रामः सौमित्रिं हस्तेन हस्ते गृहीत्वा आश्रमकर्मणि रुचिरं रमणीयं तं देशमाक्रम्य प्राप्य इदमब्रवीत् ॥ ९ ॥

गो० टी०–स तमिति । आक्रम्य स्वीयत्वेनाभिमन्य आश्रमकर्मणि आश्रमनिमित्तं हस्तौ कृताञ्जलिकौ स्वहस्तेन गृहीत्वाऽब्रवीत् स्नेहातिशयकृतानुभावो हस्तग्रहणम् ॥ ९ ॥

रा० टी०–तद्वचनाकारमाह–अयमिति । समः निम्नोन्नतरहितः श्रीमान् तापसयोग्यसंपत्तिविशिष्टः अयं देशोऽस्तीति शेषः, अतः इह अस्मिन्देशे अश्रमपदं श्रमनिवर्तकं स्थानं यथावत्कर्तुमर्हसि ॥ १० ॥

गो० टी०–अयमिति । समः समतलः पुष्पितैः संजातपुष्पैः यथावत् यथायोग्यम् ॥ १० ॥

११ ] ति० टी०–आदित्यसंकाशैः तद्वदुज्ज्वलैरिति शेषः । पद्मशोभिता पद्मश्रिया शोभायुक्ता ॥ ११ ॥

---

१ स्थलेति गो.पाठः । २ यत्र स्यादिति गो.पाठः । ३ महात्मन इति गो.पाठः । ४ हस्ताविति गो. पाठः । ५ सौम्येति गो.पाठः । ६ अभिमत्येति युक्तं भाति ।

यथाख्यातमगस्त्येन मुनिना भावितात्मना । इयं गोदावरी रम्या पुष्पितैस्तरुभिर्वृता ॥ १२ ॥
हंसकारण्डवाकीर्णा चक्रवाकोपशोभिता । नातिदूरे[1] न चासन्ने मृगयूथनिपीडिता[2] ॥ १३ ॥
मयूरनादिता रम्याः प्रांशवो बहुकंदराः । दृश्यन्ते गिरयः सौम्याः[3] फुल्लैस्तरुभिरावृताः ॥ १४ ॥
सौवर्णै राजतैस्ताम्रैर्देशे देशे तथा[4] शुभैः । गवाक्षिता इवाभान्ति गजाः परमभक्तिभिः ॥ १५ ॥
सालैस्तालैस्तमालैश्च खर्जूरैः[5] पनसैर्द्रुमैः । नीवारैस्तिनिशैश्चैव[6] पुंनागैश्चोपशोभिताः ॥ १६ ॥
चूतैरशोकैस्तिलकैः केतकैरपि चम्पकैः । पुष्पगुल्मलतोपेतैस्तैस्तैस्तरुभिरावृताः ॥ १७ ॥
स्यन्दनैश्चन्दनैर्नीपैः पर्णसैर्लिकुचैरपि[7] । धवाश्वकर्णखदिरैः[8] शमीकिंशुकपाटलैः ॥ १८ ॥
इदं पुण्यमिदं रम्यमिदं[9] बहुमृगद्विजम् । इह वत्स्याम सौमित्रे सार्धमेतेन पक्षिणा ॥ १९ ॥
एवमुक्तस्तु रामेण लक्ष्मणः परवीरहा । अचिरेणाश्रमं भ्रातुश्चकार सुमहाबलः ॥ २० ॥

रा० टी०—इयमिति । आदित्यसंकाशैः सूर्यसदृशैः रक्तैरित्यर्थः, सुरभिगन्धिभिः शोभनगन्धविशिष्टैः पद्मैः रम्या पद्मशोभिता नीलकमलादिभिः शोभिता पद्मिनी सरसी अदूरे निकटे दृश्यते ॥ ११ ॥

गो० टी०—इयमिति । आदित्यसंकाशैः आदित्यविकसितैः तद्वदुज्ज्वलैर्वा । 'तुलसीकाननं यत्र यत्र पद्मवनानि च । वसन्ति वैष्णवा यत्र तत्र संनिहितो हरिः' इत्युक्तरीत्या नित्यसंनिहितहरिभिरिति वा सुरभिगन्धिभिः सौम्यगन्धयुक्तैः "गन्धस्य—" इत्यादिना इकारोन्तादेशः । 'सुरभिर्मधुमांसे स्याद्वसन्त तावपि त्रिषु । सौम्ये सुगन्धौ स्त्रीधेन्वाम्' इति दर्पणः । सर्वगन्धः सर्वरस इत्युक्तरीत्या सुरभिणा हरिणा गन्धिभिः गन्धवद्भिरिति वा । पद्मिनी गोदावरीसमीपस्था पुष्करिणी पद्मया शोभिता पद्मशोभिता "ङ्यापोः संज्ञाछन्दसोर्बहुलम्" इति ह्रस्वः हरिसान्निध्येन तन्नित्यानपायिन्या श्रिया च युक्तेत्यर्थः । अनेन श्लोकेन वासयोग्यत्वमुक्तम् ॥ ११ ॥

१२ ] ति० टी०—यथाऽऽख्यातं तथेयं गोदावरी दृश्यत इत्यर्थः ॥ १२ ॥

रा० टी०—यथेति । पुष्पितैः तरुभिः वृता हंसकारण्डवाकीर्णा हंसैः राजहंसैः कारण्डवैः जलकुक्कुटैः आकीर्णा चक्रवाकैरुपशोभिता मृगयूथनिपीडिता पानाद्यर्थमृगसमूहैर्निबिडा इयं गोदावरी अगस्त्येन मुनिना यथाख्यातं तदुक्तमनतिक्रम्य रम्या नातिदूरे नच आसन्ने अतिनिकटे दृश्यते । श्लोकद्वयमेकान्वयि ॥ १२ ॥ १३ ॥

गो० टी०—यथाख्यातमित्यादि । अगस्त्येन यथाऽऽख्यातं तथेयं गोदावरी दृश्यत इत्यनुषङ्गः ॥ १२ ॥

१३ ] ति० टी०—मृगयूथैः पानार्थमागतैर्निपीडिता निबिडेति यावत् ॥ १३ ॥

गो० टी०—नातिदूरेण चासन्न इति । अस्या गोदावर्या गिरिभिश्चान्वयः काकाक्षिन्यायात् । मृगेत्यादि गिरिविशेषणम् । मयूरनादिताः मयूरनादयुक्ताः इतच् प्रत्ययः । प्रांशवः उन्नताः बहुकन्दराः विपुलगुहाः 'दरी तु कन्दरो वा स्त्री देवखातबिले गुहा' इत्यमरः । फुल्लैः विकासितपुष्पैः "अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः" इति निपातितः ॥ १३ ॥ १४ ॥

१४ ] ति० टी०—प्रांशव उन्नताः । फुल्लैर्विकासितपुष्पवद्भिः ॥ १४ ॥

रा० टी०—मयूरेति । मयूरनादिता मयूरशब्दविशिष्टाः फुल्लैः तरुभिः आवृताः प्रांशवो अत्युन्नता बहुकन्दरा अनेकविधगुहाविशिष्टाः अत एव रम्या गिरयो दृश्यन्ते ॥ १४ ॥ १५

१५ ] ति० टी०—सौवर्णैः सुवर्णाभैः परमभक्तिभिर्गवाक्षिता गजा इव भक्तिभिर्गवाक्षाकारनीलपीतादिवर्णरचनारूपालंकारैरलंकृताः ॥ १५ ॥

गो० टी०—सौवर्णैरिति । देशे देशे नानादेशे वर्तमानैः सुवर्णादिसदृशैः धातुभिः परिणतत्वदशासंक्रान्तैः गैरिकैः 'धातवो गिरिसंभवाः' इत्यमरः । उपलक्षिताः गजाः परमभक्तिभिः उत्कृष्टरेखालंकारैः गवाक्षिताः संजातगवाक्षा इवाभान्ति गजानां हि गवाक्षाकाराः भक्तीः कुर्वन्ति ॥ १५ ॥

१६-१८ ] ति० टी०—सालाद्या वृक्षविशेषाः ॥ १६-१८ ॥

रा० टी०—सालैरिति । सालादिभिर्वृक्षविशेषैरुपशोभिताः चूतादिभिः वृक्षविशेषैश्चावृताः स्यन्दनादिभिश्च वृक्षविशेषैरावृताः गिरयः सन्तीति शेषः । श्लोकत्रयमेकान्वयि ॥ १६-१८ ॥

गो० टी०—प्रीत्यतिशयेन वनं वर्णयति—सालैरित्यादिना । सालैः सर्जकाख्यैर्वृक्षैः, तमालैः कालस्कन्धाख्यैः, खर्जूरैः खर्जूरवृक्षैः, पनसैः, आम्रैः रसालभेदैः, निवारैः जलकदम्बैः तिमिशैः नेमिद्रुमैः, पुन्नागैः तिलकैः क्षुरकवृक्षैः, गुल्माः जातिप्रभृतयः, लताः माधवीप्रभृतयः, स्यन्दनैः तिमिशभेदैः, नीपैः स्थलकदम्बकैः, पर्णासैः करिञ्जराख्यैः, लिकुचैः धवैः अश्वकर्णैः खदिरैः शमीभिः किंशुकैः पलाशैः, पाटलैः अत्र पूर्वश्लोकात् गिरयो दृश्यन्त इत्यनुषक्तपदाभ्यामन्वयः ॥ १६-१८ ॥

१९-२० ] ति० टी०—इदं स्थलम् । पक्षिणा जटायुषा ॥ १९ ॥ २० ॥

१ दूरेण चेति गो. पाठः । २ निपीडिता इति गो. पाठः । ३ सौम्येति गो. पाठः । ४ च धातुभिरिति गो. पाठः । ५ खर्जूरपनसाम्रकैरिति पाठः । ६ निवारैस्तिमिशैरिति गो. रा. पाठः । ७ पर्णासैरिति गो. पाठः । ८ कर्णैरिति रा. पाठः । ९ मेध्यमिति गो. पाठः ।

पर्णशालां सुविपुलां तत्र संघातमृत्तिकाम् । सुस्तम्भां मस्करैर्दीर्घैः कृतवंशां सुशोभनाम् ॥ २१ ॥
शमीशाखाभिरास्तीर्य दृढपाशावपाशिताम् । कुशकाशशरैः पर्णैः सुपरिच्छादितां तथा ॥ २२ ॥
समीकृततलां रम्यां चकार सुमहाबलः । निवासं राघवस्यार्थे प्रेक्षणीयमनुत्तमम् ॥ २३ ॥
स गत्वा लक्ष्मणः श्रीमान्नदीं गोदावरीं तदा । स्नात्वा पद्मानि चादाय सफलः पुनरागतः ॥ २४ ॥
ततः पुष्पबलिं कृत्वा शान्तिं च स यथाविधि । दर्शयामास रामाय तदाश्रमपदं कृतम् ॥ २५ ॥
स तं दृष्ट्वा कृतं सौम्यमाश्रमं सह सीतया । राघवः पर्णशालायां हर्षमाहारयत्परम् ॥ २६ ॥
सुसंहृष्टः परिष्वज्य बाहुभ्यां लक्ष्मणं तदा । अतिस्निग्धं च गाढं च वचनं चेदमब्रवीत् ॥ २७ ॥
प्रीतोऽस्मि ते महत्कर्म त्वया कृतमिदं प्रभो । प्रदेयो यन्निमित्तं ते परिष्वङ्गो मया कृतः ॥ २८ ॥

---

रा० टी०-इदमिति । इदं पुण्यं दर्शनमात्रेण पुण्यसंपादकमिदमेव रम्यं रमणीयमिदं बहुमृगद्विजं बहवो मृगाः द्विजाः पक्षिणश्च यस्मिन् तत् अतः हे सौमित्रे ! पक्षिणा एतेन जटायुषा सार्धमिहाश्रमे वत्स्यामः ॥ १९ ॥

गो० टी०-इदमिति । पुण्यं पुण्यप्रदं मेध्यं पवित्रम् एतेन अस्माभिः सहागतेन पक्षिणा जटायुषा ॥ १९ ॥

रा० टी०-एवमिति । रामेण एवमुक्तः परवीरहा लक्ष्मणः अचिरेण शीघ्रं भ्रातुराश्रमं चकार ॥ २० ॥

गो० टी०-एवमिति । परवीरहेति क्विप् छान्दसः । आश्रमम् अङ्गणादिविस्तारवदाश्रमप्रदेशम् ॥ २० ॥

२१ ] ति० टी०-संघाता मृत्तिका यस्यां सा दीर्घैर्मस्करैर्वेणुभिः कृतवंशां कृतवंशकार्याम् ॥ २१ ॥

२२ ] ति० टी०-आस्तीर्येति तिर्यग्वंशपरिक्षेपोपरीति शेषः । दृढपाशावपाशितां दृढबन्धनबद्धाम् ॥ २२ ॥

२३ ] ति० टी०-तलं भूतलम् । राघवस्यार्थे निवासमेकान्तभूतं चकारेति शेषः ॥ २३ ॥

रा० टी०-आश्रमकरणप्रकारमाह-पर्णशालामित्यादिभिः । सुविपुलामतिविशालां सङ्घातमृत्तिकां सङ्घाता भित्तिरूपेण समूहं प्राप्ता मृत्तिका यस्यां तां सुस्तम्भां शोभनस्तम्भविशिष्टां दीर्घैः विस्ताराविशिष्टैः मस्करैर्वेणुभिः कृतवंशां कृतः वंशः वंशकार्यं यस्यां तां शमीशाखाभिः शमीशाखाः आस्तीर्य तिर्यक्पतितवंशोपरि संस्थाप्य दृढपाशावपाशितां दृढपाशैः अशिथिलरज्जुभिः अवपाशितां बद्धां कुशादिभिः सुपरिच्छादितां कृतशोभनाच्छादनां समीकृततलां समीकृतं निम्नोन्नतत्वाभावराहित्यं प्राप्तं तलमङ्गणं यस्यां तां सुशोभनामत एव रम्यां रन्तुं योग्यां पर्णशालां तत्र राघवस्यार्थे राघवस्थित्यर्थं प्रेक्षणीयं द्रष्टुं योग्यमनुत्तममत्युत्तमं निवासं च सुमहाबलो लक्ष्मणश्चकार । श्लोकत्रयमेकान्वयि ॥ २१-२३ ॥

गो० टी०-पर्णशालामित्यादि । तत्र आश्रम पर्णशालाम् उटजं संघातमृत्तिकां भित्तीकृतमृत्तिकामित्यर्थः । मस्करैः वेणुभिः "मस्करमस्करिणौ वेणुपरिव्राजकयोः" इति निपातनात्साधुः । कृतवंशां कृतगृहोर्ध्वकाष्ठाम् 'वंशस्तु पृष्ठास्थि गृहोर्ध्वकाष्ठे वेणौ गुणे कुले' इति वैजयन्ती । वेणुमयस्तम्भोपरि प्रसारिततिर्यक्काष्ठामित्यर्थः । शमीशाखाभिरास्तीर्य तिर्यग्वेणूपरि शमीशाखाभिरास्तीर्य दृढपाशावपाशितां दृढवल्कलादिकृतपाशैरवपाशितां संजातपाशां तिर्यग्वंशैः सह शमीशाखाः दृढं बद्ध्वेत्यर्थः, कुशकाशशरैः कुशादिरूपैः पर्णैः सुपरिच्छादितां सुशोभनं रमणीयं यथा तथा परिच्छादितां पर्णशालारूपं निवासं चकारेत्यन्वयः ॥ २१-२३ ॥

२४ ] ति० टी०-स गत्वेति । एवं संपादनानन्तरमिति शेषः । सफलो मार्गस्थवृक्षेभ्यो गृहीतफलः ॥ २४ ॥

रा० टी०-स इति । सः निर्मितपर्णशालः लक्ष्मणः गोदावरीं नदीं गत्वा स्नात्वा पद्मानि च आदाय सफलः फलसहितः सन् पुनरागतः ॥ २४ ॥

गो० टी०-स इति । सफलः फलानि चादायेत्यर्थः ॥२४॥

२५ ] ति० टी०-कृत्वा स्वयमेवेति शेषः । शान्तिं वास्तुशान्तिम् ॥ २५ ॥

रा० टी०-तत इति । ततः पुष्पाद्यानयनानन्तरं पुष्पबलिं शान्तिं च यथाविधि कृत्वा कृतं सुसंपन्नं तदाश्रमपदं स लक्ष्मणो रामाय दर्शयामास ॥ २५ ॥

गो० टी०-तत इति । पुष्पबलिं वास्तुपूजां शान्तिम् आभ्युदयिकीं क्रियां यथाविधि वास्तुकल्पानुसारेण ॥ २५ ॥

२६-२७ ] ति० टी०-आहारयत्प्राप्तवान् ॥ २६ ॥२७॥

रा० टी०-स इति। स राघवः कृतं सुसंपन्नं सौम्यं तमाश्रमं दृष्ट्वा पर्णशालायां परं हर्षमानन्दमाहारयत् प्राप्नोत् ॥२६॥

गो० टी०-स तमिति । पर्णशालायां विषये हर्षमाहारयत् संतोषं प्राप्तवानित्यर्थः ॥ २६ ॥

रा० टी०-सुसंहृष्ट इति । तदा कृतपर्णशालादर्शनसमये सुसंहृष्टो रामः बाहुभ्यां लक्ष्मणं गाढं परिष्वज्य अतिस्निग्धमिदं वचोऽब्रवीत् ॥ २७ ॥

गो० टी०-सुसंहृष्ट इति । अतिस्निग्धं च गाढं चेति परिष्वङ्गक्रियाविशेषणम् ॥ २७ ॥

२८ ] ति० टी०-ईदृशे महति कर्मणि दातुं प्रदेयोऽस्त्यर्थम् उचितः यन्निमित्तं यत्प्रदेयनिमित्तं ते मया परिष्वङ्गः कृतः अन्यस्य देयस्याभावात् ॥ २८ ॥

---

१ संखातेति गो. पाठः । २ लघुविक्रम इति गो. पाठः । ३ भृशमिति गो. पाठः । ४ अरिंदमेति रा. पाठः ।

भावज्ञेन कृतज्ञेन धर्मज्ञेन च लक्ष्मण । त्वया पुत्रेण धर्मात्मा न संवृत्तः पिता मम ॥ २९ ॥
एवं लक्ष्मणमुक्त्वा तु राघवो लक्ष्मिवर्धनः । तस्मिन्देशे बहुफले न्यवसत्स सुखं सुखी ॥ ३० ॥
कंचित्कालं स धर्मात्मा सीतया लक्ष्मणेन च । अन्वास्यमानो न्यवसत्स्वर्गलोके यथामरः ॥ ३१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

## षोडशः सर्गः ।

उषसि गोदावर्यां स्नातुकामो लक्ष्मणः सीतारामाभ्यां प्रचलन्पर्यागतं हेमन्तं संवर्ण्य स्मृतभरतवृत्तः कैकेयीमुपालभते। तदसहमानो रामस्तं प्रतिषिध्य भरतं प्रशंसति । गोदातीरमनुगतास्ते स्नात्वोपातिष्ठन् ।

वसतस्तस्य तु सुखं राघवस्य महात्मनः । शरद्व्यपाये हेमन्तऋतुरिष्टः प्रवर्तत[2] ॥ १ ॥
स कदाचित्प्रभातायां शर्वर्यां रघुनन्दनः । प्रययावभिषेकार्थं रम्यां गोदावरीं नदीम् ॥ २ ॥

रा० टी०–तद्वचनाकारमाह–प्रीत इति । हे अरिन्दम ! यन्निमित्तं यस्माद्धेतोः त्वया महत्कर्म कृतं तस्मात्ते प्रीतोऽस्मि अत एव प्रदेयः प्रीत्युत्पत्तिकाले दातुं योग्यः परिष्वङ्गः आलिङ्गनं कृतः देयवस्तुप्रतिनिधिभूतमिदमालिङ्गनमित्यर्थः ॥२८॥

गो० टी०–प्रीत इति । हे प्रभो समर्थ ! त्वया इदं महत्कर्म कृतम् अतस्ते प्रीतोऽस्मि यन्निमित्तं यदाश्रमनिर्माणनिमित्तं प्रदेयः पारितोषिकोऽस्ति तन्निमित्तं मया परिष्वङ्गः कृतः आश्चर्यभूतपर्णशालानिर्माणस्य उचितपारितोषिकान्तराभावात् परिष्वङ्गमेव दत्तवानस्मीत्यर्थः ॥ २८ ॥

२९–३१ ] ति० टी०–भावोऽभिप्रायः कृतमुपकारः न संवृत्तो न मृतः, किं तु जीवत्येव। पितृवदेव त्वया परिपालनादिति भावः ॥ २९–३१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

रा० टी०–भावज्ञेनेति । भावज्ञेन अभिप्रायवेदित्रा कृतज्ञेन उपकारज्ञेन धर्मज्ञेन च पुत्रेण राजसुतेन हेतुभूतेन त्वया धर्मात्मा पिता न संवृत्तः किंचित्कार्यार्थं संस्मृतः, एतेन सकलं कार्यं त्वया साधितमिति सूचितम् ॥ २९ ॥

गो० टी०–भावज्ञेनेति । भावज्ञेन मच्चित्तज्ञेन सीतया सह रहसि स्थातुं मम स्थलं रचयेति रामो न वदेत् किंतु मनसि कुर्यादिति तदपि ज्ञातवतेत्यर्थः, कृतज्ञेन चिरमपुत्रेण दशरथेन स्वस्मिन्नादरातिशयाद्येन क्रमेण चन्द्रताराबलालोचनपूर्वकं गृहं निर्मापितं तेन क्रमेण तत्कृतप्रकारज्ञेनेत्यर्थः, धर्मज्ञेन स्वयं राजपुत्रोऽपि स्वोचितस्थलमकृत्वा यथा रामः संतुष्यति तथैव मया स्थातव्यमित्येवंविधधर्मज्ञेन त्वया पुत्रेण पुन्नाम्नो नरकात्त्रायत इति पुत्रः तातो मदभिमतासिद्धिरेव स्वस्य निरय इत्यभिमेने मदभिमतकरणेन तस्य निरयनिस्तारकेण त्वयेत्यर्थः । धर्मात्मा स्वयं यावज्जीवं मदभीष्टमेव कृत्वा स्वचरमकालेऽपि मदभिमतकरणाय त्वां स्थापितवान् पानीयशालाप्रवर्तकवत् मम पिता न संवृत्तः किंतु त्वमेव त्वन्मुखेन पित्रा मम सर्वाभिलषितपरिपूरणात् अहं सर्वं करिष्यामीति हि त्वयोक्तमिति भावः ॥ २९ ॥

रा० टी०–एवमिति । लक्ष्मिवर्धनो वशी[1] सकलवशकर्ता राघवः एवमुक्त्वा बहुफले देशे ससुखं यथा स्यात्तथा न्यवसत् ३०

रा० टी०–तदेव भङ्ग्यन्तरेणाह–कञ्चिदिति । सीतया लक्ष्मणेन च अन्वास्यमानः धर्मात्मा रामः कंचित्कालं न्यवसत्। स राम इव स्वर्गे लोके अमरो देवराजो न्यवसत् ॥३१॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

गो०टी०–एवमिति । वशी विषयचापलरहितः॥३०॥३१॥
अत्र एकत्रिंशच्छ्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने पञ्चदशः सर्गः ॥ १५ ॥

१–२ ] ति० टी०–अथ कविः शूर्पणखादर्शनं वक्तुं कामोद्दीपकं हेमन्तं वर्णयति लक्ष्मणमुखेन—वसत इति । पञ्चवट्यामिति शेषः । इष्टः रामस्येति शेषः । कामिनां च शरद्व्यपाये शरदृतुगमने हेमन्तऋतुरिति "ऋत्यकः" इति संधिः भावः भिन्नपदत्वं वा ॥ १ ॥ २ ॥

रा० टी०–पञ्चवट्यां निवसतो रामस्य वृत्तान्तरं वर्णयन्नाह—वसत इत्यादिभिः । सुखं वसतः पञ्चवट्यां निवसतः महात्मनो रामस्य शरद्व्यपाये शरदृतोरपगमे इष्टः ईप्सितः हेमन्तः ऋतुः प्रवर्तते प्रावर्तत ॥ १ ॥

गो० टी०–अथ भाविशूर्पणखादर्शनाद्यनर्थसूचकतया हेमन्तवर्णनं प्रस्तौति–वसत इत्यादि । इष्टः तपस्विनां तपःसाधनायेष्टः रामस्य तु खरादिराक्षसवधविजयमूलशूर्पणखागमनहेतुतयेष्टः ॥ १ ॥

१ वशीति गो. रा. पाठः । २ प्रवर्तते इति गो. रा. पाठः ।

प्रह्वः कलशहस्तस्तु सीतया सह वीर्यवान् । पृष्ठतोऽनुव्रजन्भ्राता सौमित्रिरिदमब्रवीत् ॥ ३ ॥
अयं स कालः संप्राप्तः प्रियो यस्ते प्रियंवद । अलंकृत इवाभाति येन संवत्सरः शुभः ॥ ४ ॥
नीहारपरुषो लोकः पृथिवी सस्यमालिनी । जलान्यनुपभोग्यानि सुभगो हव्यवाहनः ॥ ५ ॥
नवाग्रयणपूजाभिरभ्यर्च्य पितृदेवताः । कृताग्रयणकाः काले सन्तो विगतकल्मषाः ॥ ६ ॥
प्राज्यकामा जनपदाः संपन्नतरगोरसाः । विचरन्ति महीपाला यात्रार्थं[3] विजिगीषवः ॥ ७ ॥
सेवमाने दृढं सूर्ये दिशमन्तकसेविताम् । विहीनतिलकेव स्त्री नोत्तरा दिक्प्रकाशते ॥ ८ ॥
प्रकृत्या हिमकोशाढ्यो दूरसूर्यश्च सांप्रतम् । यथार्थनामा सुव्यक्तं हिमवान्हिमवान्गिरिः ॥ ९ ॥

---

रा० टी०—स इति । स रघुनन्दनः कदाचित्कस्मिंश्चित् समये शर्वर्यां प्रभातायां सत्यामभिषेकार्थं स्नानार्थं गोदावरीं नदीं प्रययौ ॥ २ ॥

गो० टी०—स इति । प्रभातायां विरामोन्मुखायाम् ॥ ३ ॥

३ ] ति० टी०—पृष्ठतः रामस्येति शेषः ॥ ३ ॥

रा० टी०—प्रह्व इति । प्रह्वः कृतनमस्कारः भ्राता सौमित्रिः सीतया सह पृष्ठतो अनुव्रजन् इदमब्रवीत् ॥ ३ ॥

४ ] ति० टी०—येन हेमन्तेन शुभोऽयं संवत्सरः सुपक्वसस्यादिसंपत्त्या अलंकृत इवाभाति ॥ ४ ॥

रा० टी०—तद्वचनाकारमाह—अयमित्यादिभिः । हे प्रियंवद! येन कालेन संवत्सरोऽलंकृतः पक्वसस्यादिना प्राप्तालंकार इवाभाति सोऽयं ते प्रियः शुभः कालः संप्राप्तः ॥ ४ ॥

गो० टी०—अयमिति । येन हेमन्तेन ॥ ४ ॥

५ ] ति० टी०—हेमन्तधर्मानाह—नीहारेण परुषः कठिनस्पर्शशरीरः । वस्त्रादिस्पर्शासहशरीर इति कश्चित् । जलानुपभोगः शैत्यातिशयात् सुभग इष्टः ॥ ५ ॥

रा० टी०—हेमन्तगुणानाह—नीहारेति । हेमन्त इति शेषः, लोको जनः नीहारेण परुषः कठिनस्पर्शविशिष्टशरीरः रूक्षशरीर इति कश्चित्, पृथिवी सस्यशालिनी सस्यैः शोभितेत्यर्थः । जलानि अनुपभोग्यानि शैत्यातिशयेनातिभोग्यत्वरहितानि हव्यवाहनो वह्निः सुभगोऽतिप्रिय इत्यर्थः ॥ ५ ॥

गो० टी०—नीहारेति । लोको जनः नीहारेण हिमेन परुषः परुषत्वक् सर्वत्र भवतीति शेषः । स्वभावोक्तिरलंकारः 'स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनम्' इति लक्षणात् ॥ ५ ॥

६ ] ति० टी०—काले आग्रयणानुष्ठानकाले नवाग्रयणपूजाभिर्नवान्नप्राशनाय यदाग्रयणाख्यं कर्म तद्रूपपूजाभिः पितॄन्देवांश्च संतर्प्य कृताग्रयणकाः सन्तो विगतकल्मषा अभवन् ॥ ६ ॥

रा० टी०—नवेति । कृतानि पूर्वकालेषु संपादितानि आग्रयणानि यैः ते सन्तः काले नवाऽऽग्रयणपूजाभिः पितृदेवता अभ्यर्च्य विगतकल्मषा आसन्निति शेषः ॥ ६ ॥

गो० टी०—नवेति । काले आग्रयणकर्मानुष्ठानकाले आग्रयणं नाम कश्चिद्वैदिकयज्ञो नूतनधान्यभोजनस्यादावनुष्ठेयः । तदुक्तमापस्तम्बेन—"नानिष्ट्वाऽऽग्रयणेनाहिताग्निर्नवस्य धान्यस्याश्नीयाद्व्रीहीणां यवानां श्यामाकानामग्रे पाकस्य यजेत" इति । आग्रयणरूपपूजाभिः पितृदेवता अभ्यर्च्य कृताग्रयणकाः नतु कृताग्रयणप्रतिनिधय इत्यर्थः ॥ ६ ॥

७ ] ति० टी०—प्राज्यं भूरि यथा भवति तथा संपन्नोऽन्नप्राप्तिविषयः कामो येषां ते प्राज्यकामाः संपन्नतरगोरसा बहुलतरक्षीरादयो जनपदाः भवन्तीति शेषः । तथाभूतेषु जनपदेषु यात्रार्थं दर्शनार्थम् ॥ ७ ॥

रा० टी०—प्राज्येति । प्राज्यकामाः प्राप्तसकलेप्सिताः संपन्नतरगोरसाः गोरसैः संपन्ना इत्यर्थः, जनपदा भवन्तीति शेषः । पात्रार्थं प्रजारक्षानिर्वाहार्थं, विजिगीषवो महीपाला विचरन्ति ॥ ७ ॥

गो० टी०—प्राज्यकामा इति । प्राज्यकामाः बहुलकामोद्रेकाः 'प्राज्यमदभ्रं बहुलम्' इत्यमरः । जनपदाः जनपदस्थाः यात्रायां युद्धयात्रायाम् आस्था येषां ते यात्रास्थाः ॥ ७ ॥

८ ] ति० टी०—अन्तकसेवितां दिशं दक्षिणाम् ॥ ८ ॥

रा० टी०—सेवमाने इति । अन्तकसेवितां यमराजाधिष्ठितां दिशं दक्षिणामित्यर्थः, सूर्ये दृढमत्यन्तं सेवमाने सति उत्तरा दिक् विहीनतिलका सिन्दूरादिरहिता स्त्री इव न प्रकाशते ॥ ८ ॥

गो० टी०—सेवमाने इति । अन्तकसेवितां दक्षिणामित्यर्थः । अत्रोत्प्रेक्षालंकारेण दक्षिणा दिक् सतिलकेव प्रकाशत इत्युत्प्रेक्षा व्यज्यते ॥ ८ ॥

९ ] ति० टी०—प्रकृत्या स्वभावेन हिमकोशैर्घनीभूतहिमसमूहैराढ्यो हिमवानिति सांप्रतं यतो दूरसूर्योऽतः सुव्यक्तं प्रकटं हिमवान्सन्हिमवानिति यथार्थनामा भवति ॥ ९ ॥

रा० टी०—प्रकृत्येति । प्रकृत्या स्वभावेन हिमकोशाढ्यः हिमकोशैः कोशवत् घनीभूतहिमैः आढ्यः हिमवान् गिरिः सांप्रतम् अस्मिन्काले दूरसूर्यः सन् सुव्यक्तं यथा स्यात्तथा हिमवानिति यथार्थनामा अभवत् सूर्यस्य दूरस्थत्वात् हिमद्रवाभावेन घनीभूतहिमविशिष्टो भवतीत्यर्थः ॥ ९ ॥

गो० टी०—प्रकृत्येति । प्रकृत्या स्वभावेन हिमकोशैः घनीभूतहिमैः आढ्यः संपूर्णः सांप्रतं दक्षिणायने दूरसूर्यः अत एव हिमवान् अधिकहिमः भूमार्थे मतुप् । हिमवान् गिरिः यथार्थ-

---

१ तमिति गो. पाठः । २ शालिनीति गो. रा. पाठः । ३ यात्रास्था इति गो. पाठः ।

अत्यन्तसुखसंचारा मध्याह्ने स्पर्शतः सुखाः । दिवसाः सुभगादित्याश्छायासलिलदुर्भगाः ॥ १० ॥
मृदुसूर्याः[1] सुनीहाराः पटुशीताः समाहिताः[2] । शून्यारण्या हिमध्वस्ता दिवसा भान्ति सांप्रतम् ॥ ११ ॥
निवृत्ताकाशशयनाः पुष्यनीता हिमारुणाः । शीतवृद्धतरायामास्त्रियामा यान्ति सांप्रतम् ॥ १२ ॥
रविसंक्रान्तसौभाग्यस्तुषारारुणमण्डलः । निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥ १३ ॥
ज्योत्स्ना[3] तुषारमलिना पौर्णमास्यां न राजते । सीतेव चातपश्यामा लक्ष्यते न च[4] शोभते ॥ १४ ॥

नामा भवति सुव्यक्तमित्युत्प्रेक्षाव्यञ्जकं निरुक्तिश्चालंकारः 'निरुक्तिर्योगतो नाम्नामन्वर्थत्वप्रकल्पनम्' इति लक्षणात् ॥ ९ ॥

१० ] ति० टी०–मध्याह्ने सुखः संचारो येषु ते यथा मध्याह्ने स्पर्शत आतपस्पर्शतः सुखजनकाः अत एव सुभगादित्याः सुसेव्यादित्याः छायाः सलिलानि च दुर्भगान्यसेव्यानि येषु ॥ १० ॥

रा० टी०–अत्यन्तेति । मध्याह्ने अत्यन्तसुखः अतिसुखप्रदः संचारो येषु ते स्पर्शतः मध्याह्नातपस्पर्शात् सुखं येषु अत एव सुभगादित्याः सुभगः सुसेव्यः आदित्यो येषु अत एव छायासलिलदुर्भगाः छाया च सलिलानि च दुर्भगानि असेव्यानि येषु ते दिवसाः दिनानि अभवन्निति शेषः ॥ १० ॥

गो० टी०–अत्यन्तेति । मध्याह्ने स्पर्शतः उष्णस्पर्शतः सुखाः सुखकराः अत एव तदानीम् अत्यन्तसुखसंचाराः सुभगादित्याः दर्शनयोग्यादित्याः छायासलिलदुर्भगाः दुर्भगच्छायासलिलाः आहिताग्न्यादित्वात्परनिपातः अतिशतिच्छायासलिला इत्यर्थः, भवन्तीति शेषः । स्वभावोक्तिरलंकारः ॥ १० ॥

११ ] ति० टी०–नीहारः सूर्यावरकं हिमम् मृदुसूर्या ईषदुष्णसूर्याः पटुशीताः शून्यारण्याः हिमनाशितपर्णत्वात् हिमध्वस्ता हिमध्वस्तपङ्कजाः ॥ ११ ॥

रा० टी०–मृद्विति । मृदुसूर्याः मृदुः सहनयोग्योष्णविशिष्टः सूर्यो येषु अत एव सनीहाराः हिमसहिताः अत एव पटुशीताः पटुः समर्थः शीतः शैत्यं येषु अत एव हिमैर्ध्वस्ताः ध्वंसकर्मीभूता जना येषु ते अत एव शून्यानि हिमध्वस्तत्वेन कोमलपत्रादिरहितानि अरण्यानि वनानि येषु ते समारुताः पवनसहिता दिवसाः सांप्रतं भान्ति ॥ ११ ॥

गो० टी०–मृद्विति । मृदुसूर्याः अक्रूरसूर्याः पटुशीताः प्रबलशीताः शून्यारण्याः आरण्या वनचराः तैः शून्याः आवरणरहितत्वेन शीतपीडिताः न बहिः संचरन्तीत्यर्थः । हिमध्वस्ताः हिमध्वस्तजनवन्तः शैत्येन पीण्डीभूतशरीरजना इत्यर्थः । अनेन राक्षसकृतसार्वत्रिकपीडा द्योतिता ॥ ११ ॥

१२ ] ति० टी०–निवृत्ताकाशशयना निवृत्तानावृतप्रदेशशयनाः पुष्यनीताः पुष्यनक्षत्रबोधितरात्रिकालपरिमाणाः, हिमारुणा हिमधूसराः । कपोतवर्णेऽप्यरुणशब्दः शीतं वृद्धतरं यासु ताः आयामा दैर्घ्यवत्यस्त्रियामा रात्रयः ॥ १२ ॥

रा० टी०–निवृत्तानि आकाशे अनावृतदेशे शयनानि यासु पुष्यानीताः पुष्यनक्षत्रज्ञापितनिशाकालपरिमाणाः हिमैः अरु[णाः] धूसराः अत एव शीतं वृद्धतरं यासु ता एव आयामा दैर्घ्यविशिष्टाः त्रियामा रात्रयः सांप्रतं यान्ति गच्छन्ति ॥१२

गो० टी०–निवृत्तेति । निवृत्ताकाशशयनाः निवृत्तचन्द्रश[ा]लायनावृतप्रदेशशयनाः पुष्यनीताः पुष्यनक्षत्रयुक्ता पौर्णमासी पुष्यं तेन नीताः तत्प्रधाना इत्यर्थः, यद्वा पुष्यः पुष्यमासः तेन नीताः पुष्यमाससंनिहिता इत्यर्थः, हिमारुणाः हिमधूसरा शीताः शीतवाताः वृद्धतरा यामाः चतुर्विंशतिघटिकायुक्तत्वे नातिवृद्धतरविस्ताराः त्रियामाः रात्रयः दिनान्ते अर्धयामस्य दिनादावर्धयामस्य च दिनशेषत्वात् अनेन स्वर्गलोकोपद्र[व] तामसराक्षसवृद्धिः सज्जनक्षयः कल्यनुसारिता चोक्ता । पुष्य कलिः ॥ १२ ॥

१३ ] ति० टी०–रवौ संक्रान्तं सौभाग्यं सुभगत्वसु[ख] भोग्यस्वरूपं यस्य सः । तुषारधूसरमण्डलो निःश्वासान्धो नि[ः]श्वासमलिन आदर्श इव न प्रकाशते ॥ १३ ॥

रा० टी०–रवीति । रवौ संक्रान्तं संप्राप्तं सौभाग्यं से[व्य]त्वरूपसुभगत्वं यस्य सः तुषारैर्हिमकणैः अरुणं धूसरं मण्ड[लं] यस्य स चन्द्रमाः निःश्वासेन अन्धः आदर्शो दर्पण इव [न] प्रकाशते ॥ १३ ॥

गो० टी०–रवीति । मन्दरश्मित्वेन संक्रान्तं संप्रा[प्तं] सौभाग्यं भोग्यत्वं यस्य सः सूर्ये स्वसौभाग्यं दत्तवानित्यर्थः तुषारैः हिमशीकरैः अरुणं रक्तं मण्डलं यस्य हिमशीकराव[र]णेन चन्द्रसूर्यमण्डलयोरारुण्यं प्रत्यक्षसिद्धम् । निःश्वासेन अन्धः अप्रकाशः आदर्शः दर्पणमिव उपमालंकारः अनेन रावणाप[हृ]तसर्वस्वस्य मलिनाकृतेरिन्द्रस्यावस्थोक्ता ॥ १३ ॥

१४ ] ति० टी०–आतपश्यामा आतपेन वैवर्ण्यं प्रा[प्ता] सीतेव लक्ष्यते सत्तामात्रेण न तु शोभत इत्यर्थः ॥ १४ ॥

रा० टी०–ज्योत्स्नेति । आतपश्यामा घर्मसंबन्धजनि[त]श्यामत्वविशिष्टा सीता यथा लक्ष्यते न शोभते तथा तुषारमलि[ना] ज्योत्स्ना पौर्णमास्यां लक्ष्यते न राजते ॥ १४ ॥

गो० टी०–ज्योत्स्नीति । ज्योत्स्नी चन्द्रिकयान्वि[ता] रात्रिः तुषारमलिना सती पौर्णमास्यामपि न राजते न शोभ[ते] एवंभूता सा आतपश्यामा आतपापहृतवर्णा सीतेव लक्ष्य[ते] किंतु सीतावन्न शोभते व्यतिरेकालंकारः 'व्यतिरेको विशे[ष]श्चेदुपमानोपमेययोः' इति तल्लक्षणम् । अनेन सीताया भा[...]

१ सनीहारा इति गो. रा. पाठः । २ मारुता इति गो. रा. पाठः । ३ ज्योत्स्नीति गो. पाठः । ४ त्विति गो. पाठः । ५ नपुंसकमत्र युक्तं भा[...]

प्रकृत्या शीतलस्पर्शो हिमविद्धश्च सांप्रतम् । प्रवाति पश्चिमो वायुः काले द्विगुणशीतलः ॥ १५ ॥
बाष्पच्छन्नान्यरण्यानि यवगोधूमवन्ति च । शोभन्तेऽभ्युदिते सूर्ये नदद्भिः क्रौञ्चसारसैः॥ १६ ॥
खर्जूरपुष्पाकृतिभिः शिरोभिः पूर्णतण्डुलैः । शोभन्ते किंचिदालम्बाः शालयः कनकप्रभाः ॥ १७ ॥
मयूखैरुपसर्पद्भिर्हिमनीहारसंवृतैः । दूरमभ्युदितः सूर्यः शशाङ्क इव लक्ष्यते ॥ १८ ॥
आग्राह्यवीर्यः पूर्वाह्णे मध्याह्ने स्पर्शतः सुखः । संरक्तः किंचिदापाण्डुरातपः शोभते क्षितौ ॥ १९ ॥
अवश्यायनिपातेन किंचित्प्रक्लिन्नशाद्वला । वनानां शोभते भूमिर्निविष्टतरुणातपा ॥ २० ॥

---

रावणाभिभवः तेनापि सुरनारीजनवन्दीमोक्षणार्थत्वेनातिशयश्च व्यज्यते ॥ १४ ॥

१५ ] ति० टी०—प्रकृत्या शीतलस्पर्शः पश्चिमदिग्वायुः सांप्रतं हिमविद्धत्वात्काले प्रातःकाले द्विगुणशीतलः ॥ १५ ॥

रा० टी०—प्रकृत्येति । प्रकृत्या स्वभावेन शीतलस्पर्शः शैत्यस्पर्शविशिष्टः पश्चिमो वायुः सांप्रतं काले अस्मिन् समये हिमविद्धः सन् द्विगुणशीतलः स्वाभाविकशैत्यात् द्विगुणितशैत्यविशिष्टः सन् प्रवाति ॥ १५ ॥

गो० टी०—प्रकृत्येति । प्रकृत्या शीतलस्पर्शः वायौ शीतस्पर्श एव स्वभावः उष्णः स्पर्शस्त्वागन्तुक इति हृदयं, सांप्रतं हेमन्ते हिमविद्धः हिमयुक्तः काले प्रातःकाले द्विगुणशीतलः द्विरावृत्त्या शीतलः । 'अथो गुणः । रूपादौ सूदशिञ्जिन्योरावृत्तीन्द्रियतन्तुषु । संध्यादावपि सत्त्वादौ त्यागादावुपसर्जने' इति रत्नमाला । पश्चिमो वायुः पश्चिमदिग्वायुः, अनेन स्वभावतः करुणाशीलस्य अवतारकाले देवप्रार्थनोत्तम्भितकृपस्य पुनरस्मिन्याश्रमे द्विगुणितकरुणस्य रामस्य व्यापारः सूचितः ॥ १५ ॥

१६ ] ति० टी०—बाष्प ऊष्मा तेन छन्नान्यरण्यानि प्रातःकाले कूपोदकादिष्विव वनादप्यूष्मा प्रादुर्भवतीत्यनुभवप्रमाणकमिति तीर्थः । यवगोधूमाद्यङ्कुरेष्ववश्यायबिन्दुदर्शनाद्वृक्षेषु च तद्दर्शनाद्बाष्पच्छन्नानि बाष्पो नेत्रजलेऽपीत्यन्ये ॥१६ ॥

रा० टी०—बाष्पेति । यवगोधूमवन्ति यवगोधूमविशिष्टानि बाष्पच्छन्नानि बाष्पेण ऊष्महिमसंबन्धजनितधूमाभासेन छन्नानि नदद्भिः क्रौञ्चसारसैः उपलक्षितानि अरण्यानि वनानि सूर्ये अभ्युदिते सति शोभन्ते ॥ १६ ॥

गो० टी०—बाष्पेति । बाष्पैः ऊष्मभिः छन्नानि यथा कूपोदकेभ्यो निर्गच्छन्तो धूमाकारा बाष्पाः अनेन रामसमागमानन्तरभाव्याश्रमसमृद्धिरुच्यते, बाष्पशब्देन रामकृपोच्यते यवेत्यादिना तपःसमृद्धिः, नदद्भिरिति वेदघोषः ॥ १६ ॥

१७ ] ति० टी०—खर्जूरपुष्पाकृतित्वं प्रलम्बत्वेन पीतत्वेन च किंचिदालम्बाः किंचिन्नम्राः । कनकप्रभाः परिणतत्वात् ॥ १७ ॥

रा० टी०—खर्जूरेति । खर्जूरपुष्पाकृतिभिः खर्जूरपुष्पसदृशाः पीतप्रलम्बा इत्यर्थः, आकृतयो येषां तैः पूर्णतण्डुलैः पूर्णाः तण्डुला येषु तैः शिरोभिः किंचिदालम्बाः किंचिन्नताः कनकप्रभाः शालयः शोभन्ते ॥ १७ ॥

गो० टी०—खर्जूरेति । खर्जूरपुष्पाकृतिभिः तद्वत्पिशङ्गवर्णैः शिरोभिः कणिशैः कनकप्रभाः परिपक्वनालपत्रवत्त्वात्कनकवर्णाः, अनेन वृद्धाः अपि जटाभरितशिरोभिस्त्वां प्रणमन्तीति द्योतितम् ॥ १७ ॥

१८ ] ति० टी०—नीहारो हिमातिशयरूपो वृक्षपर्वताद्यदर्शनसंपादनक्षमस्तत्संवृतैरुपसर्पद्भिर्मयूखैरुपलक्षितः शशाङ्कसदृश इत्यर्थः ॥ १८ ॥

रा० टी०—मयूखैरिति । हिमनीहारसंवृतैः हिमैर्नीहारैश्च संवृतैराच्छादितैः उपसर्पद्भिः चलद्भिः मयूखैः किरणैः उपलक्षितः दूरमुदितः सूर्यः शशाङ्कश्चन्द्र इव लक्ष्यते ॥ १८ ॥

गो० टी०—मयूखैरिति । हिमनीहारैः शीतलनीहारैः संवृताः तैः, अनेन बहुकालं समागतोऽपि राक्षसप्रभाभिभूततेजस्को मृदुरिव किमर्थं वर्तस इत्यर्थः सूच्यते ॥ १८ ॥

१९ ] ति० टी०—आग्राह्यवीर्य ईषद्ग्राह्यौष्ण्यः स्पर्शतः सुखः सुखस्पर्शः ॥ १९ ॥

रा० टी०—अग्राह्येति । पूर्वाह्णेन ग्राह्यं ज्ञातुं शक्यं वीर्यं यस्य सः मध्याह्ने स्पर्शतः स्पर्शेन सुखं यस्य सः अत एव संरक्तः अनुरागविषयीभूतः किंचिदापाण्डुः किंचित् पाण्डुरवर्णविशिष्टः आतपः क्षितौ पृथिव्यां शोभते ॥ १९ ॥

गो० टी०—अग्राह्येति । पूर्वाह्णे अग्राह्यवीर्यः अग्राह्यौष्ण्यः चन्द्रिकायमाणो वर्तत इत्यर्थः । ईषदर्थे वा नञ् अनुदरा कन्येतिवत् । तदुक्तम् 'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः' इति । मध्याह्ने स्पर्शतः स्पर्शेन सुखः सुखकरः किंचित्संरक्तः किंचिदापाण्डुश्च, अनेनापि राक्षसाक्रमेऽप्यपराक्रमत्वमनुचितमिति गम्यते ॥१९॥

२० ] ति० टी०—अवश्यायो हिमबिन्दुः ॥ २० ॥

रा० टी०—अवश्यायेति । अवश्यायनिपातेन पतितनीहारकणेन किंचित्प्रक्लिन्नानि आर्द्रीभूतानि शाद्वलानि घासा यस्यां सा, निविष्टः प्रविष्टः तरुणातपो यस्यां सा, वनानां भूमिः शोभते ॥ २० ॥

गो० टी०—अवश्यायेति । अवश्यायः हिमं शाद्वलः शष्पप्रचुरा भूमिः "नडशादाड्वलच्" इति वलच् । अनेन राक्षसाभिभवकृतमुनिजनरोदनं रामकृपाप्रवृत्तिश्चोच्यते ॥ २० ॥

---

१ आनम्रा इति गो. पाठः । २ अभ्युदित इति गो. पाठः । ३ अग्राह्येति गो. रा. पाठः । ४ संरक्त इति गो. रा. पाठः ।

स्पृशन्सुंविपुलं शीतमुदकं द्विरदः सुखम् । अत्यन्ततृषितो वन्यः प्रतिसंहरते करम् ॥ २१ ॥
एते हि समुपासीना विहगा जलचारिणः । नावगाहन्ति सलिलमप्रगल्भा इवाहवम् ॥ २२ ॥
अवश्यायतमोनद्धा नीहारतमसावृताः । प्रसुप्ता इव लक्ष्यन्ते विपुष्पा वनराजयः ॥ २३ ॥
बाष्पसंछन्नसलिला रुतविज्ञेयसारसाः । हिमार्द्रवालुकास्तीरैः सरितो भान्ति सांप्रतम् ॥ २४ ॥
तुषारपतनाच्चैव मृदुत्वाद्भास्करस्य च । शैत्यादगाग्रस्थमपि प्रायेण रसवज्जलम् ॥ २५ ॥
जराझर्झरितैः पत्रैः शीर्णकेसरकर्णिकैः । नालशेषा हिमध्वस्ता न भान्ति कमलाकराः ॥ २६ ॥
अस्मिँस्तु पुरुषव्याघ्र काले दुःखसमन्वितः । तपश्चरति धर्मात्मा त्वद्भक्त्या भरतः पुरे ॥ २७ ॥
त्यक्त्वा राज्यं च मानं च भोगांश्च विविधान्बहून् । तपस्वी नियताहारः शेते शीते महीतले ॥ २८ ॥
सोऽपि वेलामिमां नूनमभिषेकार्थमुद्यतः । वृतः प्रकृतिभिर्नित्यं प्रयाति सरयूं नदीम् ॥ २९ ॥
अत्यन्तसुखसंवृद्धः सुकुमारो हिमार्दितः । कथं त्वपररात्रेषु सरयूमवगाहते ॥ ३० ॥

---

२१ ] ति० टी०—प्रतिसंहरते करं दुस्पर्शशैत्यवशादिति भावः ॥ २१ ॥

रा० टी०—स्पृशन्निति । सुविपुलमत्यन्तं शीतमुदकमत्यन्ततृषितः पिपासावान् वन्यो द्विरदो हस्ती सुखमुद्दिश्य स्पृशन्नपि करं शुण्डादण्डं प्रतिसंहरते निवर्तयति ॥ २१ ॥

गो० टी०—स्पृशन्निति । प्रतिसंहरते अतिदुःसहशैत्यवत्त्वादिति भावः । अनेनेन्द्रस्य राज्यभोगाभिलाषिणोऽपि तद्भोगभीरुत्वं सूचितम् ॥ २१ ॥

२२ ] ति० टी०—समुपासीना जलसमीपदेशमिति शेषः । नावगाहन्ति नावगाहन्ते ॥ २२ ॥

रा० टी०—एते इति । समुपासीना जलसमीपदेशवर्तिनः जलचारिणोऽपि विहगा अप्रगल्भाः भीरवो जना आहवं संग्राममिव सलिलं जलं नावगाहन्ति अवगाहन्ते ॥ २२ ॥

गो० टी०—एते हीति । समुपासीनाः जलमिति शेषः । अनेन मुनीनां समाधिभङ्गो द्योत्यते । अप्रगल्भाः अधृष्टाः, आहवं युद्धम् ॥ २२ ॥

२३ ] ति० टी०—अवश्यायतमोभ्यां नद्धा रात्रौ नीहारतमसाऽऽवृताः प्रत्यूषे ॥ २३ ॥

रा० टी०—अवश्यायेति । अवश्यायेन हिमबिन्दुना तमसा च नद्धाः संबद्धा रात्राविति शेषः, नीहारतमसा नीहाररूपान्धकारेण आवृताः प्रातःकाले इति शेषः, तत्रान्यान्धकाराभावात् पौनरुक्त्याच्च कर्मधारय एव अत एव विपुष्पाः पुष्पाभावविशिष्टाः वनराजयः प्रसुप्ता इव लक्ष्यन्ते यदि च सूर्यतेजसो मन्दीभूतत्वेनान्धकारोऽपि स्वीक्रियते तदा न शेषप्रयोजनमिति दिक् ॥ २३ ॥

गो० टी०—अवश्यायेति । अवश्यायः हिमसलिलं स एव तमः तेन नद्धाः बद्धाः अनेन निश्चलत्वं लक्ष्यते हिमक्लिन्ना हि लता निश्चलीभवन्ति । नीहारः अजलवर्षिमहाहिमं तदेव तमः तेनावृताः अनेन प्रच्छादनपटाच्छन्नत्वं व्यज्यते विपुष्पा इत्यनेन निमीलिताक्षत्वमुक्तम् । अनेन वनवासिनां दैन्यातिशय उक्तः । अत्रोत्प्रेक्षालंकारः ॥ २३ ॥

२४ ] ति० टी०—बाष्पो धूम ऊष्मा वा ॥ २४ ॥

रा० टी०—बाष्पेति । बाष्पैर्धूमाभासैः संछन्नानि सलिलानि यासां ताः अत एव रुतेन शब्देनैव विज्ञेयाः सारसा यासु ताः सरितः सांप्रतमस्मिन् काले हिमार्द्रवालुकैः हिमेन आर्द्रा वालुका येषां तैः तीरैः भान्ति प्रकाशन्ते ॥ २४ ॥

गो० टी०—बाष्पेति । रुतं शब्दः हिमार्द्रवालुकैः हिमसिक्तसिकतैः अनेनापि ऋषिजनदैन्यमेव द्योत्यते ॥ २४ ॥

२५ ] ति० टी०—अगाग्रस्थं पर्वताग्रस्थम् ॥ २५ ॥

रा० टी०—तुषारेति । तुषारस्य हिमस्य पतनात् भास्करस्य मृदुत्वाच्च हेतोः शैत्यात् हेतुभूतात् अगाग्रस्थं पर्वताग्रवर्त्यपि जलं प्रायेण रसवत् स्वादुविशिष्टमित्यर्थः, प्रायेणेत्यनेन विषवृक्षादिसमभिव्याहृतस्य तदभाववत्त्वं ध्वनितम् ॥ २५ ॥

गो० टी०—तुषारेति । तुषारः हिमम् अगाग्रस्थमपि निर्मलशिलातलस्थमपि रसवत् विषवत् 'रसो रागे विषे द्रवे शृङ्गारादौ पराक्रमे' इति बाणः । शैत्यातिशयेन विषवदनुपादेयं भवतीत्यर्थः । एतेन राक्षसप्रकोपात् भवतश्चानुद्योगान्मुनिमनो दुःखितं भवतीति द्योत्यते ॥ २५ ॥

२६-३० ] ति० टी०—जरया कालकृतया झर्झरिताविघूर्णनानि येषां तैः शीर्णानि केसराणि कर्णिकानि च येषां तैः ॥ २६-३० ॥

रा० टी०—जरेति । जरया कालकृतान्तिमावस्थया जर्जरितैः विवर्णतां प्राप्तैः शीर्णकेशरकर्णिकैः शीर्णाः केशरकर्णिका येषु तैः पत्रैः उपलक्षिताः हिमध्वस्ताः अत एव नालशेषाः नालमात्रावशिष्टाः कमलाकराः न भान्ति ॥ २६ ॥

गो० टी०—जरेति । जरया चिरप्ररूढतया जर्झरितैः वि

---

१ विति गो. पाठः । २ न विगाहन्तीति गो. पाठः । ३ वालुकैस्ती रैरिति गो. पाठः । ४ जर्झरितैः पद्मैरिति गो. जर्जरितैरिति रा. पाठः । ५ नालशेषैर्हिमध्वस्तैरिति गो. पाठः । ६ व्याघ्रः इति गो. पाठः । ७ सरयूनदीमिति गो. पाठः ८ सुखोचित इति गो. पाठः । ९ त्वपरेति गो. पाठः । १० अयं स्त्रीलिङ्ग एव युक्त इति भाति ।

पद्मपत्रेक्षणः श्यामः श्रीमान्निरुदरो महान् । धर्मज्ञः सत्यवादी च ह्रीनिषेधो जितेन्द्रियः ॥ ३१ ॥
प्रियाभिभाषी मधुरो दीर्घबाहुररिन्दमः । संत्यज्य विविधान्सौख्यानार्यं सर्वात्मना श्रितः॥३२ ॥
जितः स्वर्गस्तव भ्रात्रा भरतेन महात्मना । वनस्थमपि तापस्ये यस्त्वामनुविधीयते ॥ ३३ ॥
न पित्र्यमनुवर्तन्ते मातृकं द्विपदा इति । ख्यातो लोकप्रवादोऽयं भरतेनान्यथा कृतः ॥ ३४ ॥

---

वर्णैः जीर्णकेसरकर्णिकैः शिथिलकिञ्जल्ककर्णिकैः पद्मैर्न भान्ति स्पष्टं व्यङ्ग्यम् ॥ २६ ॥

रा० टी०—अस्मिन्निति । हे पुरुषव्याघ्र! दुःखसमन्वितः भवद्वियोगजनितदुःखाक्रान्तः धर्मात्मा भरतः त्वद्भक्त्या पुरे नन्दिग्रामे अस्मिन् समये तपश्चरति ॥ २७ ॥

गो० टी०—एवमृषिपीडातिशयेऽपि रामस्य राक्षसवधातुद्यमनुक्त्वा भरतस्य त्वदागमनव्यसनित्वात्तद्दर्शनकालोऽपि सन्निहित इत्याशयेनाह—अस्मिन्नित्यादिना । दुःखसमन्वितः त्वद्विरहादिति शेषः ॥ २७ ॥

रा० टी०—तदाकारमाह—त्यक्त्वेति । राज्यादिकं त्यक्त्वा नियताहारः सन् शीते महीतले शेते ॥ २८ ॥

गो० टी०—त्यक्त्वेति । राज्यं राजत्वं प्रभुत्वमित्यर्थः । मानं राजपुत्रोऽहमित्यभिमानं भोगान् स्रक्चन्दनवनितादीन् बहूनित्यपरित्याज्यत्वमुच्यते । तपस्वी तपस्विचिह्नजटादिमान् नियताहारः फलमूलाद्यशनः । शीत इत्यनेनावरणराहित्यमुच्यते, महीतल इत्यनेन खट्वादिराहित्यम् ॥ २८ ॥

रा० टी०—स इति । अभिषेकार्थमुद्यतः स भरतोऽपि इमां वेलां समयं प्राप्य प्रकृतिभिर्वृतः सन् सरयूं नदीं नित्यं प्रयाति नूनं निश्चितमेतत् ॥ २९ ॥

गो० टी०—सोऽपीति । वेलां प्राप्येति शेषः । प्रकृतिभिरिति उपभोक्तुं व्यवस्यन्ति पौरा वै धर्मवत्सलमिति वक्ष्यमाणरीत्या भरतभक्त्या त्वद्भक्त्या च भरतमनुसरन्तीभिरित्यर्थः॥ २९ ॥

रा० टी०—अत्यन्तेति । अत्यन्तसुखेन संवृद्धः निरवधिकसुखवानित्यर्थः, अत एव सुकुमारो भरतः हिमार्दितः सन् अपररात्रेषु सरयूं कथमवगाहते ॥ ३० ॥

गो० टी०—अत्यन्तेति । अत्यन्तसुखसंवृद्धः राज्ञा उपलालितत्वात् सुखसंवृद्धः त्वयापि लालितत्वादत्यन्तसुखसंवृद्धः सुकुमारः भवतोऽपि दृष्ट्यवेक्षणासहसौकुमार्यः सुखोचितः त्वया सह वस्तुं योग्यः नतु त्वद्वियोगार्हः । कथं नु आत्मौपम्येन मन्यते स्वस्य रामविरहाभावेन शैत्याद्यनुभवः तस्य रामतापात् उपतप्तोदका नद्य इत्युक्तरीत्या नदीनामपि रामविरहेणोष्णत्वाच्च शैत्यप्रसक्तिरेव नास्ति । अपररात्रेषु यथा नववैधव्याः स्त्रियः मनुष्यसंचारात् पूर्वमेव मनुष्यमुखमनवलोकयन्त्यो गच्छन्ति तथायमपि कैकेयीपुत्रोऽयम् एतन्निमित्त एवानर्थ इति जना वक्ष्यन्तीति भीत्या अपररात्रेष्वेव गच्छति सरयूमवगाहते निर्वेदातिशयेनातित्वरितगामिनीमपि सरयूं निर्भयोऽवगाहते अवगाहते जले निमग्नश्चेन्मनुष्यादातव्यो भवति॥३०॥

३१ ] ति० टी०—निरुदरोऽतुन्दिलः ह्रिया परनारीविषये निषेधश्चक्षुरादीन्द्रियनिवर्तनं यस्य सः तत्र हेतुर्जितेन्द्रियत्वम् ॥ ३१ ॥

३२ ] ति० टी०—सौख्यान्सौख्यसाधनान् आर्यं त्वां सर्वात्मना श्रितः त्वत्सदृशव्यवहारवान् सर्वात्मना इतरव्यासङ्गत्यागपूर्वकं त्वद्विषयमननादिमानित्यर्थ इति कतकः ॥३२॥

रा० टी०—पद्मेति । पद्मपत्रेक्षणत्वादिधर्मविशिष्टो भरतः विविधान् सौख्यान् सन्त्यज्य आर्यं त्वां सर्वात्मना सर्वप्रयत्नेन आश्रितः । श्लोकद्वयमेकान्वयि ॥ ३१ ॥ ३२ ॥

गो० टी०—पद्मेत्यादि । निरुदरः अतुन्दिलः ह्रीनिषेधः ह्रिया लज्जया निषेधः अकृत्येभ्यो निवर्तनं यस्य सः मधुरः मधुरवाक् सुन्दरो वा आर्यं ज्येष्ठं त्वां सर्वात्मना करणत्रयेण श्रितः ॥ ३१ ॥ ३२ ॥

३३ ] ति० टी०—स्वर्गो जित एव स्वाधीनः कृतः । यतो वनस्थमपि त्वां तापस्ये तापसधर्मे स्थित्वा अनुविधीयतेऽनुकरोति सेवत इत्यर्थः । धीङो दैवादिकस्य रूपम् ॥३३॥

रा० टी०—जित इति । वनस्थमपि त्वां तापस्ये स्थितो यो भरतस्त्वामनुविधीयते अनुविदधाति अनुसरति तेन तव भ्रात्रा भरतेन स्वर्गो जितः ॥ ३३ ॥

गो० टी०—जित इति । स्वर्गः रामप्राप्त्यन्तरायभूतः स्वर्गः जितः तिरस्कृतः वनस्थमपि त्वां तापस्ये तापसकर्मविषये अनुविधीयते अनुकरोति इयन्नार्षः ॥ ३३ ॥

३४ ] ति० टी०—द्विपदा मनुष्याः पित्र्यं स्वभावं नानुवर्तन्ते, किं तु मातृकं स्वभावमनुवर्तन्त इति प्रसिद्धो लोकवादो भरतेनान्यथा कृतः पितृस्वभाव एवाङ्गीकृतः, न मातुरित्यर्थः ॥ ३४ ॥

रा० टी०—नेति । द्विपदा मनुष्याः पित्र्यं पितृधर्मं मातृकं मातृधर्मं च नानुवर्तन्ते इति ख्यातः प्रसिद्धः लोकप्रवादः अज्ञजनोक्तिः भरतेन अन्यथा अप्रामाणिकः कृतः प्रकटितः ॥३४॥

गो० टी०—एवं प्रतिज्ञातराक्षसवधे विलम्बः कृतः भरतक्लेशेन तत्रापि शीघ्रं गन्तव्यम् अतः किमत्र कृत्यमिति सूचयित्वा सर्वस्यानर्थस्य मूलभूता कैकेयीत्याशयेनाह—न पित्र्यमित्या।दिश्लोकद्वयेन । पित्र्यं पितृस्वभावं द्वे पदे येषां ते द्विपदाः मनुष्याः अन्यथाकृतः पितृस्वभाव एवानुकृतो न मातृस्वभाव इत्यर्थः । भर्तेति । साधुशब्दस्य भर्तरि भरते चान्वयः । तादृशीति पूर्वं कैकेय्युक्तस्मरणम् ॥ ३४ ॥ ३६ ॥

---

१ वीरः २ यामो निरुदर इति गो. पाठः । २ भोगानिति गो. पाठः ।

भर्ता दशरथो यस्याः साधुश्च भरतः सुतः। कथं नु साम्बा कैकेयी तादृशी क्रूरदर्शिनी ॥ ३५ ॥
इत्येवं लक्ष्मणे वाक्यं स्नेहाद्वदति धार्मिके। परिवादं जनन्यास्तमसहन्राघवोऽब्रवीत् ॥ ३६ ॥
न तेऽम्बा मध्यमा तात गर्हितव्या कदाचन। तामेवेक्ष्वाकुनाथस्य भरतस्य कथां कुरु ॥ ३७ ॥
निश्चितैव हि मे बुद्धिर्वनवासे दृढव्रता। भरतस्नेहसंतप्ता बालिशीक्रियते पुनः ॥ ३८ ॥
संस्मराम्यस्य वाक्यानि प्रियाणि मधुराणि च। हृद्यान्यमृतकल्पानि मनःप्रह्लादनानि च ॥ ३९ ॥
कदा ह्यहं समेष्यामि भरतेन महात्मना। शत्रुघ्नेन च वीरेण त्वया च रघुनन्दन ॥ ४० ॥
इत्येवं विलपंस्तत्र प्राप्य गोदावरीं नदीम्। चक्रेऽभिषेकं काकुत्स्थः सानुजः सह सीतया ॥ ४१ ॥
तर्पयित्वाथ सलिलैस्तैः पितॄन्दैवतानपि। स्तुवन्ति स्मोदितं सूर्यं देवताश्च तथानघाः ॥ ४२ ॥

---

३५ ] ति० टी०—भरतं स्तुत्वा कैकेयीं निन्दति—भर्तेत्यादि ॥ ३५ ॥

रा० टी०—भर्तेति। यस्याः भर्ता दशरथः साधुर्भरतो यस्याः सुतः सा तादृशी साध्वी अम्बा कैकेयी क्रूरदर्शिनी क्रूरकर्मबोधनकर्त्री कथं केन हेतुना अभवदिति शेषः ॥ ३५ ॥

३६ ] ति० टी०—स्नेहाद्भरतरामयोः स्नेहात् ॥ ३६ ॥

रा० टी०—इतीति। लक्ष्मणे इत्येवं वाक्यं वदति सति तं लक्ष्मणोक्त्या बोधितं जनन्याः परिवादं दुर्यशः असहमानो राघवो रामः अब्रवीत् ॥ ३६ ॥

गो० टी०—इत्येवमिति। अनेन लक्ष्मणः प्रत्यूषे रामस्य ससीतस्य सरःस्नानादिक्लेशमालोक्य सुदुःखिततया कैकेयीं निन्दितुमुपक्रम्य झटिति निन्दायां क्रियमाणायां रामः कुप्येदिति प्रथमं हेमन्तस्वभावं प्रस्तुत्य तत्प्रसङ्गेन भरतमुपक्षिप्य कैकेयीं निन्दति स्मेति गम्यते। स्नेहात् रामस्नेहात् परिवादम् अपवादम् असहन् असहमानः ॥ ३६ ॥

३७ ] ति० टी०—न गर्हितव्या दैवकृतत्वात्तद्बुद्धेः। तामेव पूर्वोक्तामेव ॥ ३७ ॥

रा० टी०—तद्वचनाकारमाह—नेति। हे तात! मध्यमा अम्बा ते तव कथंचन न गर्हितव्या तया गर्हितं कर्म किंचिन्न कृतमिति तात्पर्यम्। अतः इक्ष्वाकुनाथस्य पितुः भरतस्य च कथां कुरु निश्चितेति वनवासे दृढव्रता निश्चिता निश्चयात्मिका मे बुद्धिः भरतस्नेहसंतप्ता सती बालिशीक्रियते शिथिलसंकल्पा क्रियत इत्यर्थः, त्वदुक्तिजनितस्मरणेनेति शेषः ॥ ३७ ॥ ३८ ॥

गो० टी०—न त इति। मध्यमा सर्वदशरथपत्न्यपेक्षया कथंचन प्रासङ्गिककथायामपि मध्यमाम्बेति स्वाभिमानद्योतनाय इक्ष्वाकुनाथस्य राजनि स्वर्गं गते अस्मासु च वनं गतेषु पूर्वतरास्मत्कुलमर्यादास्थापकस्य ॥ ३७ ॥

३८ ] ति० टी०—बालिशीक्रियते गुणाश्रयस्य भरतस्य वियोगमसहमाना चाञ्चल्यं प्राप्नोतीत्यर्थः ॥ ३८ ॥

गो० टी०—निश्चितेति। वनवासे निश्चिता दृढव्रतापि मे बुद्धिः भरते स्नेहसंतप्ता सती बालिशीक्रियते बालबुद्धिर्भवति असंपूर्णेऽपि वनवासकाले तद्दर्शने संजातकुतूहला भ[वतीत्यर्थः] ॥ ३८ ॥

३९ ] ति० टी०—स्नेहमेव प्रकाशयति—संस्मरामीति प्रियाण्यपि केनचिदुच्यमानानि कर्णकठोराणि भवन्तीति म[धु]राणीति हृद्यानि मन्त्रवत्परहृदयबन्धनानि। सामान्यतो माधु[र्य]मुक्त्वातिशयेनाह—अमृतकल्पानीति अत एव मनःप्रह्लादनानि

रा० टी०—संस्मरामीति। प्रियाणि प्रीत्युत्पादका[नि] मधुराणि कोमलाक्षरविशिष्टानि हृद्यानि मनोहराणि अत[एव] अमृतकल्पानि अत एव मनःप्रह्लादनानि मनसः सुखकरा[णि] अस्य भरतस्य वाक्यानि संस्मरामि ॥ ३९ ॥

गो० टी०—स्नेहमेव प्रकाशयति—संस्मरामीत्यादि[ना] लोके कैश्चिदुक्तानि वाक्यानि प्रियाण्यपि कर्णकठोराणि भ[व]न्तीति तद्व्युदासायाह—मधुराणीति हृद्यानि हृदयादनपेत[ानि] अमृतकल्पानि शुभोदर्काणि इदानीमपि मनःप्रह्लादनानि ॥ ३[९] ॥

४०-४२ ] ति० टी०—त्वयेत्यस्य सहित इति शेषः ॥ ४०-४[२] ॥

रा० टी०—कदेति। भरतादिना सह कदा समेष्या[मि] संस्थास्यामि एकसत्त्वेऽपि द्वयं नास्तीति न्यायोऽत्रानुसृतः ॥ ४[०] ॥

गो० टी०—कदेति। भरतसाहित्याभावेन विद्यमाना[भ्यां] सीतालक्ष्मणाभ्यामपि विरहितमात्मानं मन्यते, भरतस्नेहा[ति]शयप्रकारोऽयम् ॥ ४० ॥

रा० टी०—इतीति। इत्येवं विलपन् विविधं कथ[यन्] गोदावरीं प्राप्य अभिषेकं स्नानं चक्रे ॥ ४१ ॥

गो० टी०—इत्येवमिति। इत्येवं विलपन् भरतस्नेहा[त्] तानि बहूनि वाक्यानि जल्पन्नित्यर्थः। अभिषेकं स्नानम् ॥ ४[१] ॥

रा० टी०—तर्पयित्वेति। सलिलैः पितॄन् दैवतानि च [तर्प]यित्वा उदितं सूर्यं दैवतांश्च स्तुवन्ति स्म अनघा रामादयः ॥ ४[२] ॥

गो० टी०—तर्पयित्वेति। ऋषितर्पणस्याप्युपलक्षणं [स्तुव]न्ति स्म उपतस्थिरे "मित्रस्य—" इत्यादिमन्त्रैः, सीता त्वम[न्त्रकम्] देवताः संध्यादिदेवताः ॥ ४२ ॥

---

१ शीलिनीति गो. पाठः। २ ब्रुवतीति गो. पाठः। ३ कथंचनेति गो. रा. पाठः। ४ ऽपीति गो. पाठः। ५ न्वहमिति गो. पाठः। ६ ते इ[ति गो.] पाठः। ७ दैवतानि चेति गो. रा. पाठः। ८ समाहिता इति गो. पाठः।

कृताभिषेकः स रराज रामः सीताद्वितीयः सह लक्ष्मणेन ।
कृताभिषेकस्त्वगराजपुत्र्या रुद्रः सनन्दिर्भगवानिवेशः ॥ ४३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे षोडशः सर्गः ॥ १६ ॥

## सप्तदशः सर्गः ।

स्नात्वोपास्य संध्यां गोदातीरान्निवृत्त्योटजमागतं रामं शूर्पणखोपेत्य कस्त्वमिहोपयात इति पृच्छति । रामः स्वे कुलनामनी संश्राव्य तामपि तदेव पप्रच्छ । कथितकुलनामा सा कामाकुला सत्येतौ सीतालक्ष्मणावद्युनैव चर्वयामि त्वं मां भार्यात्वे वृणिवति प्रार्थयते ।

कृताभिषेको रामस्तु सीता सौमित्रिरेव च । तस्माद्गोदावरीतीरात्ततो जग्मुः स्वमाश्रमम् ॥ १ ॥
आश्रमं तमुपागम्य राघवः सहलक्ष्मणः । कृत्वा पौर्वाह्णिकं कर्म पर्णशालामुपागमत् ॥ २ ॥
उवास सुखितस्तत्र पूज्यमानो महर्षिभिः । स रामः पर्णशालायामासीनः सह सीतया ॥ ३ ॥
विरराज महाबाहुश्चित्रया चन्द्रमा इव । लक्ष्मणेन सह भ्रात्रा चकार विविधाः कथाः ॥ ४ ॥
तदासीनस्य रामस्य कथासंसक्तचेतसः । तं देशं राक्षसी काचिदाजगाम यदृच्छया ॥ ५ ॥

---

४३ ] ति० टी०–रुद्रोपमया संहाराविष्टचित्तत्वं दर्शयति ॥ ४३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे षोडशः सर्गः ॥ १६ ॥

रा० टी०–कृतेति । सीता द्वितीया यस्य स लक्ष्मणेन सह कृताभिषेकः कृतस्नानो राम इव अगराजपुत्र्या पार्वत्या सह कृताभिषेकः सनन्दिर्नन्दिसहितः ईशः शिवो रराज ॥४३॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे षोडशः सर्गः ॥ १६ ॥

गो० टी०–कृताभिषेक इति । रुद्रः सनन्दीत्युपमया दुष्प्रधर्षणत्वमुच्यते रुद्रः सविष्णुर्भगवानिवेश इति न क्वचिदपि कोशे दृश्यते कश्चिद्दृश्यत इत्याह तदा अभूतोपमेति युक्तमिति ज्ञेयम् ॥ ४३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने षोडशः सर्गः ॥ १६ ॥

१ ] ति० टी०–ततोऽवगाहनोत्तरम् ॥ १ ॥

रा० टी०–अभिषेकानन्तरकालिकं रामादिवृत्तान्तमाह–कृताभिषेक इत्यादिभिः । ततः स्नानोत्तरकाले गोदावरीतीरात् स्वमाश्रमं रामादयो जग्मुः ॥ १ ॥

गो० टी०–एवं रामतपोविशेषद्योतनाय हेमन्तं प्रथमं प्रस्तुत्योपवर्ण्य ततस्त्रिषु संवत्सरेष्वतीतेषु कदाचिच्चैत्रमासे प्रसक्तं भाविसकलराक्षसवधनिदानत्वेन शूर्पणखावृत्तान्तमुपक्षिपति सप्तदशे–कृताभिषेक इत्यादि । ततः अभिषेकान्तरभाविकृत्यानन्तरम् आश्रमं तपोवनम् 'तपोवने मठे ब्रह्मचर्यादावाश्रमोऽस्त्रियाम्' इति बाणः ॥ १ ॥

२–३ ] ति० टी०–पौर्वाह्णिकं प्रातःकालिकं, पर्णशालां बाह्याम् ॥ २ ॥ ३ ॥

रा० टी०–आश्रममिति । राघवः पौर्वाह्णिकं कर्म कृत्वा आश्रमं तमुपागम्य पर्णशालामुपागमत् प्राविशत् ॥ २ ॥

गो० टी०–आश्रममिति । पूर्वाह्णे भवं पौर्वाह्णिकं ब्रह्मयज्ञादि नत्वग्निकृत्यम् अनुदितहोमत्वेन तस्य सूर्योपस्थानानन्तरभावित्वाभावात् । पर्णशालामुपागमत् आश्रमे पर्णशालातो बहिरेव कर्तव्यमनुष्ठाय वासस्थानमगमदित्यर्थः ॥ २ ॥

रा० टी०–उवासेति । लक्ष्मणेन सह सीतया च सह आसीनः महर्षिभिः पूज्यमानः महाबाहुः सुखितः स रामः तत्र पर्णशालायामुवास चित्रया तदभिधतारया चन्द्रमा इव विरराज च कथाश्चकार च । श्लोकद्वयं संमिलितान्वयि ॥ ३ ॥४॥

गो० टी०–उवासेति । कथाः पुराणेतिहासकथाः चकार उवाचेत्यर्थः । तथा चोक्तं धातुवृत्तौ 'करोतिरभूतप्रादुर्भावे वर्तते अश्मानमितः कुरु पादं जले कुरु यः प्रथमः शकलः परापतेत् स स्वरुः कार्यः चोरंकारमाक्रोशति' इत्यादौ अवस्थापननिर्मलीकरणोपादानोच्चारणादौ प्रयोगात् चौरंकारमित्यत्र चोरशब्दमुच्चार्येत्यर्थः, नह्यत्र चोरः क्रियते अर्थनिर्देशस्तूपलक्षणमिति ॥ ३ ॥

गो० टी०–स राम इति । चित्रया चित्रानक्षत्रेण चित्रापौर्णमास्यामिति भावः ॥ ४ ॥

४–५ ] ति० टी०–चित्रया चित्रानक्षत्रेण ॥ ४ ॥ ५ ॥

रा० टी०–तदेति । तदा तस्मिन् काले कथासंसक्तचेतसः आसीनस्य रामस्य तं देशं पर्णशालां काचित् राक्षसी यदृच्छया जगाम ॥ ५ ॥

गो० टी०–तथेति । रामस्यासीनस्य रामे आसीने ॥५॥

---

१ ऽभिषेको गिरिराजेति गो. पाठः । २ नन्दीति गो. पाठः । ३ एतदाद्यर्धत्रयं व्यत्यस्तं गो. पाठे । ४ तथेति गो. पाठः ।

सा तु शूर्पणखा नाम दशग्रीवस्य रक्षसः । भगिनी राममासाद्य ददर्श त्रिदशोपमम् ॥ ६ ॥
[ [1]सिंहोरस्कं महाबाहुं पद्मपत्रनिभेक्षणम् । आजानुबाहुं दीप्तास्यमतीवप्रियदर्शनम् ॥]
[2]दीप्तास्यं च महाबाहुं पद्मपत्रायतेक्षणम् । गजविक्रान्तगमनं जटामण्डलधारिणम् ॥ ७ ॥
सुकुमारं महासत्त्वं पार्थिवव्यञ्जनान्वितम् । राममिन्दीवरश्यामं कन्दर्पसदृशप्रभम् ॥ ८ ॥
बभूवेन्द्रोपमं दृष्ट्वा राक्षसी काममोहिता । सुमुखं दुर्मुखी रामं वृत्तमध्यं महोदरी ॥ ९ ॥
विशालाक्षं विरूपाक्षी सुकेशं ताम्रमूर्धजा । [3]प्रियरूपं विरूपा सा सुस्वरं भैरवस्वना[4] ॥ १० ॥
तरुणं दारुणा वृद्धा दक्षिणं वामभाषिणी । न्यायवृत्तं सुदुर्वृत्ता प्रियमप्रियदर्शना ॥ ११ ॥
शरीरजसमाविष्टा राक्षसी राममब्रवीत्[5] । जटी तापसवे[6]षेण सभार्यः शरचापधृक्[7] ॥ १२ ॥
आगतस्त्वमिमं देशं कथं राक्षससेवितम् । किमागमनकृत्यं ते तत्त्वमाख्यातुमर्हसि ॥ १३ ॥
एवमुक्तस्तु राक्षस्या शूर्पनख्या परंतपः । ऋजुबुद्धितया सर्वमाख्यातुमुपचक्रमे ॥ १४ ॥
[ [8]अनृतं नहि रामस्य कदाचिदपि संमतम् । विशेषेणाश्रमस्थस्य समीपे स्त्रीजनस्य च ॥ ]
आसीद्दशरथो नाम राजा त्रिदशविक्रमः । तस्याहमग्रजः पुत्रो रामो नाम जनैः श्रुतः ॥ १५ ॥
भ्रातायं लक्ष्मणो नाम यवीयान्मामनुव्रतः । इयं भार्या च वैदेही मम सीतेति विश्रुता ॥ १६ ॥

६ ] ति० टी०–शूर्पणखा "नखमुखात्संज्ञायाम्" इति ङीषोऽभावः ॥ ६ ॥

रा० टी०–सेति । शूर्पणखा नाम दशग्रीवस्य रक्षसः सा प्रसिद्धा भगिनी राममासाद्य ददर्श ॥ ६ ॥

गो० टी०–राक्षसीमृषिर्विशेषयति–सेति । राममासाद्य ददर्श रामं दृष्ट्वा आससादेत्यर्थः, समानकर्तृकत्वमात्रे ल्यप् ॥ ६ ॥

७ ] ति० टी०–दीप्तास्यं कान्तिमन्मुखं गजस्येव मन्दतया विक्रान्तं गमनं यस्य ॥ ७ ॥

रा० टी०–दीप्तास्यमिति । दीप्तं प्रकाशितमास्यं मुखं यस्य गजस्य विक्रान्तं गमनमिव गमनं यस्य तम् ॥ ७ ॥

गो० टी०–सिंहोरस्कमित्यादि । सिंहोरस्कं सिंहशब्दः श्रेष्ठवाची विशालोरस्कमित्यर्थः । महासत्त्वं महाबलं पार्थिवव्यञ्जनानि राजलक्षणानि कामकृतमोहहेतवो विशेषणानि॥७-९॥

८ ] ति० टी०–व्यञ्जनं लक्षणम् ॥ ८ ॥

रा० टी०–महासत्त्वं समातिशयरहितबलविशिष्टं पार्थिवव्यञ्जनानि महाराजलक्षणानि तैरन्वितं युक्तमिन्द्र उपमा उपमेयं यस्य तं रामं दृष्ट्वा राक्षसी शूर्पणखा काममोहिता बभूव । सार्धश्लोकद्वयमेकान्वयि ॥ ८ ॥

९-१० ] ति० टी०–सुमुखमित्यादि । विषमालंकारोऽत्र ॥ ९ ॥ १० ॥

रा० टी०–सुमुखमिति । सुमुखं शोभनवदनवन्तं वृत्तं सूक्ष्मं मध्यं यस्य तम् ॥ ९ ॥

रा० टी०–प्रियरूपं सर्वप्रीतिविषयीभूतरूपविशिष्टम्॥१०॥

गो० टी०–तस्यास्तस्मिन् मनःप्रवृत्तिं मुनिः परिहसति–सुमुखमित्यादिना । वृत्तमध्यं तनुमध्यं विरूपाक्षी विकटनेत्री सुकेशं नीलकेशं प्रीतिरूपं प्रियरूपं प्रीयत इति प्रीतिः विरूपा विकटरूपा सुस्वरं स्निग्धगम्भीरस्वरं तरुणं युवानं सौम्यं चेत्यर्थः, दारुणेति प्रतियोगिनिर्देशात् दक्षिणम् ऋजुभाषिणं वामभाषिणी वक्रभाषिणी न्यायवृत्तम् उचिताचारं शरीरजो मन्मथः ॥ १०–१२ ॥

११ ] ति० टी०–दारुणा अदारुणमिति शेषः । दक्षिणं सुभाषिणं वामभाषिणी दुष्टभाषिणी ॥ ११ ॥

रा० टी०–दक्षिणं शोभनभाषणकुशलं न्यायं न्याय्यविशिष्टं वृत्तं वर्तनं यस्य त प्रियं सर्वप्रीतिविषयीभूतदर्शनवन्तं राममभिरामदातारं रामं दुर्मुखा दुष्टमुखादिविशिष्टा राक्षसी शूर्पणखा शरीरजसमाविष्टा कामप्रविष्टा सती अब्रवीत् ॥ ११ ॥

१२ ] ति० टी०–शरीरजः कामः ॥ १२ ॥

१३ ] ति० टी०–तत्त्वं यथा तथाऽऽख्यातुमर्हसि ॥ १३ ॥

रा० टी०–तदाकारमाह–जटीत्यादिभिः । तापसवेषेणोपलक्षितः अत एव जटी त्वं राक्षससेवितमिमं देशं कथं केन हेतुना आगतोऽसि ते आगमनकृत्यमागमनेन साध्यं च किमस्ति तत् त्वमाख्यातुमर्हसि । सार्धश्लोक एकान्वयी ॥१२॥१३॥

गो० टी०–जटीति । तापसरूपेण जटी, कामुकरूपेण सभार्यः, क्षत्रियरूपेण शरचापधृत् । राक्षससेवितम् एतद्रूपासेवितमित्यर्थः ॥ १३ ॥

१४–१६ ] ति० टी–शूर्पनख्येति यौगिकम् । ऋजुबुद्धितया तथैव ॥ १४–१६ ॥

रा० टी०–एवमिति । शूर्पणख्या एवमुक्तः परन्तपो रामः ऋजुबुद्धितया सरलस्वभावेनेत्यर्थः, आख्यातुमुपचक्रमे ॥ १४ ॥

१ श्लोकोऽयमधिकः गो. पाठे । २ अर्धमेतत् गो. नास्ति । ३ प्रीतिरूपमिति गो. पाठः । ४ स्वरेति गो. पाठः । ५ वाक्यमिति गो. पाठः । ६ रूपेणेति गो. पाठः । ७ धृदिति गो. पाठः । ८ श्लोकोऽयमधिकः गो. पाठे । ९ अत्र ङीषोऽभावः साधुरिति भाति ।

नियोगात्तु नरेन्द्रस्य पितुर्मातुश्च यन्त्रितः । धर्मार्थं धर्मकाङ्क्षी च वनं वस्तुमिहागतः ॥ १७ ॥
त्वां तु वेदितुमिच्छामि [1]कस्य त्वं कासि कस्य वा । [2]त्वं हि तावन्मनोज्ञाङ्गी राक्षसी प्रतिभासि मे ॥ १८ ॥
इह वा किंनिमित्तं त्वमागता ब्रूहि तत्त्वतः । साऽब्रवीद्वचनं श्रुत्वा राक्षसी मदनार्दिता ॥ १९ ॥
श्रूयतां राम तत्त्वार्थं वक्ष्यामि वचनं मम । अहं शूर्पणखा नाम राक्षसी कामरूपिणी ॥ २० ॥
अरण्यं विचरामीदमेका सर्वभयंकरा । रावणो नाम मे भ्राता [3]यदि ते श्रोत्रमागतः ॥ २१ ॥
[4]वीरो विश्रवसः पुत्रो यदि ते श्रोत्रमागतः । [5]प्रवृद्धनिद्रश्च सदा कुम्भकर्णो महाबलः ॥ २२ ॥
विभीषणस्तु धर्मात्मा न तु राक्षसचेष्टितः । प्रख्यातवीर्यौ च रणे भ्रातरौ खरदूषणौ ॥ २३ ॥
तानहं समतिक्रान्ता राम त्वापूर्वदर्शनात् । समुपेतास्मि भावेन भर्तारं पुरुषोत्तमम् ॥ २४ ॥

---

रा० टी०–तदाख्यानमेवाह–आसीदित्यादिभिः । त्रिदशेषु देवेषु विक्रमः प्रसिद्धः पराक्रमो यस्य स दशरथो नाम आसीत् । अग्रजो ज्येष्ठः जनैः श्रुतः प्रख्यातः रामो नाम तस्य दशरथस्य पुत्रोऽहमस्मि ॥ १६ ॥

रा० टी०–भ्रातेति । यवीयान् कनिष्ठः लक्ष्मणो नामायं भ्राता मामनुव्रतः मदनुचरणशील इत्यर्थः । सीतेति नाम्ना विश्रुता ख्याता इयं वैदेही मम भार्या ॥ १६ ॥

गो० टी०–एवमिति । शूर्पनखेति छान्दसौ ङीषृणत्वाभावौ । ऋजुबुद्धितया कुटिलेष्वप्यकुटिलबुद्धितया आश्रमस्थस्य तपोवनस्थस्य ॥ १४–१६ ॥

गो०टी०–आसीदित्यादि । यवीयान् कनिष्ठः अनुव्रतः अनुसरणं व्रतं यस्य सः ॥ १६ ॥ १७ ॥

गो० टी०–वैदेही विदेहराजपुत्री मातुः कैकेय्याः यन्त्रितः नियतः चोदित इति यावत् ॥ १८ ॥

१७ ] ति० टी०–नियोगादाज्ञाबलाद्यन्त्रितो नियतः । धर्मकाङ्क्षी पितृवाक्यनिर्वहणरूपधर्माभिलाषी धर्मार्थं तस्यैव धर्मस्य परिपालनाय ॥ १७ ॥

रा० टी०–नियोगादिति । नरेन्द्रस्य पितुर्मातुश्च धर्मार्थं नियोगात् आज्ञातः अत एव यन्त्रितः एकाग्रचित्तो धर्मकाङ्क्षी अहं वनं वस्तुमिहागतः ॥ १७ ॥

गो० टी०–धर्मकाङ्क्षी पितृवाक्यपालनरूपधर्मकाङ्क्षी धर्मार्थं तपोरूपधर्मसिद्ध्यर्थं वनं वस्तुं यन्त्रितः सन्निहागत इत्यन्वयः । कासीति नामजातिप्रश्नः कस्येति पित्रादिविषयः प्रश्नः ॥ १९ ॥

१८ ] ति० टी०–कस्य त्वं कन्येति शेषः । कासि किंनामासि कस्य वंशजेति शेषः । राक्षसी एवं मनोज्ञाङ्गत्वस्य कामरूपत्वं विनाऽसंभवात् कामरूपत्वं च राक्षसीत्वं विना नेति भावः ॥ १८ ॥

रा० टी०–त्वामिति । त्वं कस्य कन्यासि कासि किंनामासि कस्य भार्यासीति त्वां वेदितुं ज्ञातुमिच्छामि । ननु त्वमेव स्वबुद्ध्या मां जानीहीत्यत आह–मनोज्ञाङ्गी राक्षसानां मनोहारिणी राक्षसी त्वं मे प्रतिभासि सामान्यतो मया ज्ञातमिति सूचितं तेन विशेषं ब्रूहीति ध्वनितम् ॥ १८ ॥

गो० टी०–न हीति । तावत्कात्स्न्येन मनोज्ञाङ्गी न भवसि मां प्रति राक्षसीति प्रतिभासि । यद्वा राक्षससेवित इति तद्वचनात् राक्षसीत्वमित्याशङ्क्य परिहरति–मनोज्ञाङ्गी त्वं राक्षसीति न प्रतिभासीति रामदर्शनकाले तथारूपं कृतवती कामरूपत्वात् । दुर्मुखीत्यादिकं वास्तवाभिप्रायेण मुनिनोक्तमिति ज्ञेयम् ॥ २० ॥

१९–२० ] ति० टी०–मदनार्दिता रामदर्शनादिति शेषः ॥ १९ ॥ २० ॥

रा० टी०–इहेति । इह मत्समीपे किंनिमित्तं त्वमागता इति तत्त्वतो ब्रूहि वचनमिति रामवाक्यं श्रुत्वा मदनार्दिता सा राक्षसी अब्रवीत् ॥ १९ ॥

गो० टी०–सेति । तत्त्वार्थं परमार्थम् ॥ २१ ॥

रा० टी०–तद्वचनाकारमाह–श्रूयतामिति । हे राम ! तत्त्वार्थमहं वक्ष्यामि अतो मम वचनं श्रूयताम् । तद्वचनाकारमाह–कामरूपिणी ईप्सितरूपधारणसमर्था शूर्पणखा नाम राक्षसी अहमस्मि ॥ २० ॥

गो० टी०–अहमिति । कामरूपिणी इतोऽप्यधिकरूपधारणे समर्था सर्वभयंकरेति वक्ष्यमाणरतिप्रतिबन्धकनिवारणक्षमतोक्ता ॥ २२ ॥

२१ ] ति० टी०–यदि ते श्रोत्रमागतः प्रायः श्रुत एव भविष्यतीति भावः ॥ २१ ॥

रा० टी०–अरण्यमिति । एका सहायान्तररहिता सर्वभयङ्करा अहं इदमरण्यं विचरामि यदि कदाचित् राक्षसकथाप्रसङ्गे ते श्रोत्रं श्रवणपथमागतः रावणो नाम मे भ्राता ॥ २१ ॥

गो० टी०–कासीति प्रश्नस्योत्तरमुक्त्वा कस्येत्यस्य प्रश्नस्योत्तरमाह–रावण इत्यादिना ॥ २३ ॥

२२–२३ ] ति० टी०–सदा प्रवृद्धनिद्र इत्यन्वयः । भ्रातरौ खरदूषणौ । विभीषणवत्त्रिशिरा अराक्षसस्वभावत्वान्नोक्तः ॥ २२ ॥ २३

२४ ] ति० टी०–तान्रावणादीन्वीर्येण समतिक्रान्ता

---

१ कथ्यतामिति गो. पाठः । २ नेति गो. पाठः । ३ राक्षसो राक्षसाधिप इति ख. बलीयान्राक्षसेश्वर इति गो. पाठः । ४ सोऽयमिति ख. पाठः । ५ एतदाद्यर्धं व्यत्यस्ते रा. पाठे ।

अहं प्रभावसंपन्ना स्वच्छन्दबलगामिनी । चिराय भव भर्ता मे सीतया किं करिष्यसि ॥ २५ ॥
विकृता च विरूपा च न [1]सेयं सदृशी तव । अहमेवानुरूपा ते भार्यारूपेण पश्य माम् ॥ २६ ॥
इमां विरूपामसतीं करालां निर्णतोदरीम् । अनेन सह ते भ्रात्रा भक्षयिष्यामि मानुषीम् ॥ २७ ॥
ततः पर्वतशृङ्गाणि वनानि विविधानि च । पश्यन्सह मया कामी दण्डकान्विचरिष्यसि ॥ २८ ॥
इत्येवमुक्तः काकुत्स्थः प्रहस्य मदिरेक्षणाम् । इदं वचनमारेभे वक्तुं वाक्यविशारदः ॥ २९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे सप्तदशः सर्गः ॥ १७ ॥

---

ततोऽधिका, अतस्तान्समतिक्रान्ता त्वदभिसरणे तन्निमित्तभयरहितेत्याद्युक्त्या योज्यम् । हे राम ! त्वा त्वां पूर्वदर्शनात्प्रथमदर्शनक्षणमारभ्य यद्वा पूर्वदर्शनाद्देवादिष्वितः प्रागदृष्टदिव्यत्वद्रूपदर्शनाद्धेतोर्भावेन त्वां पुरुषोत्तमं भर्तारं सर्वजगतां भर्तारं समुपेतास्मि ॥ २४ ॥

रा० टी०—धर्मात्मा नित्यं धर्मबुद्धिः अत एव राक्षसचेष्टितः राक्षसाचरणो न विभीषणोऽपि मे भ्राता, महाबलः प्रवृद्धनिद्रः नित्यं शयनशीलः कुम्भकर्णोऽपि मे भ्राता । श्लोकद्वयमेकान्वयि ॥ २२ ॥

रा० टी०—प्रख्यातेति । रणे प्रख्यातवीर्यौ खरदूषणौ च मम भ्रातरौ । अर्धं पृथक्—तानिति । तान् रावणादीन् समतिक्रान्ता तेभ्योऽपि बलवतीतत्यर्थः, अहं अपूर्वदर्शनाद्धेतोः भावेनातिप्रेम्णा पुरुषोत्तमं त्वा त्वां भर्तारं कर्तुं समुपेतास्मि॥२३॥

गो० टी०—कुम्भकर्णश्च मे भ्रातेत्यन्वयः । विभीषणस्तु तस्य विशेषोऽस्ति सोऽपि मे भ्रातेत्यर्थः । तं विशेषमाह—धर्मात्मेति । धर्मात्मा धर्मस्वभावः राक्षसचेष्टितो न जन्मना राक्षसोऽपि न राक्षसव्यापार इत्यर्थः ॥ २४ ॥

गो० टी०—एतद्देशागमने निमित्तमाह—प्रख्यातेति । खरदूषणौ जनस्थानस्थाविति शेषः । एवं भ्रातृकथनेन रामस्य स्वपरिग्रहे भीतिर्मा भूदित्यत आह—तानहमिति । अतिक्रान्ता अतिक्रम्य वर्तमाना स्वच्छन्दचारिणीत्यर्थः । त्वा त्वां पूर्वदर्शनात् प्रथमदर्शनमारभ्य अपूर्वदर्शनादिति वा छेदः देवदानवमर्त्येष्वितः पूर्वमदृष्टत्वद्रूपदर्शनाद्धेतोः भावेन हृदयेन रत्याख्यभावेन वा भर्तारं समुपेतास्मि । तत्र हेतुः पुरुषोत्तममिति॥२५॥

२५ ] ति० टी०—प्रभावसंपन्ना प्रकृष्टेन भावेन शृङ्गारेण संपन्ना, यद्वा प्रभावेण शक्त्यतिशयेन संपन्ना अत एव स्वच्छन्देन स्वेच्छया बलेन च सर्वलोकगमनशीला । यदेवमतः—चिरायेति ॥ २५ ॥

रा० टी०—अहमिति । प्रभावेण अतितेजसा संपन्ना अत एव स्वच्छन्दबलगामिनी स्वच्छन्दं स्वाधीनं यद्बलं तेन गन्तुं शीला यतोऽहमस्मि अतः चिराय बहुकालपर्यन्तं मे भर्ता भव सीतया किं सुखं करिष्यसि ॥ २४ ॥

गो० टी०—सीतायां विद्यमानायां किं त्वयेत्यत्राह—अहमिति । स्वच्छन्दबलगामिनी स्वेच्छानुगुणबलगमना च ॥२६॥

२६ ] ति० टी०—आत्मनो देवयोनिभेदत्वेनाभिमतग्रहणसामर्थ्याभिमानेन स्वस्मिन्रामप्रवृत्तये सीतादूषणमाह—विकृता चेति । विकृता मायास्वरूपतया परिणामाख्यविकारवती विरूपा नानारूपोच्चावचकार्यकारिणी अत एव शुद्धसुखस्वभावस्य तव न सदृशीति परमार्थः यथाश्रुतार्थस्तु स्पष्ट एव । अहमेवानुरूपा उभयोरपि मायाधिष्ठातृत्वादित्यर्थः ॥ २६ ॥

रा० टी०—ननु सीतया कथं न सुखमित्यत आह—विकृतेति । यत इयं सीता विकृता अनेकविकारविशिष्टा विरूपा सुन्दररूपाभाववती अतः तव सदृशी योग्या न, अहं तु ते अनुरूपा योग्या अतः मां भार्यारूपेण स्वभार्यात्वेन पश्य जानीहि ॥ २६ ॥

गो० टी०—सीतां निन्दति—विकृता चेति । विकृतेति विषमशरीरत्वमुच्यते । करालां विकृताम् ' करालो दन्तुरे तुङ्गे विशाले विकृतेऽपि च ' इति वैजयन्ती ॥ २७ ॥

२७–२९ ] ति० टी०—वैरूप्यमेवाह—निर्णतोदरीमत्यन्तनिम्नोदरीम् । असतीं स्वपुरुषस्य दुस्तरानेकसंसारदुःखदत्वात् । कार्यरूपेण सतीं च त्वया सह प्रौढ्या निर्मनुष्ये वने आगमनाचासतीं सती हि वृद्धानां श्वश्र्वादीनां सविध एव पातिव्रत्यरक्षणाय तिष्ठेदित्याशयः ॥ २७–२९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे सप्तदशः सर्गः ॥ १७ ॥

रा० टी०—ननु सीतायाः का गतिरित्यत आह—इमामिति । विरूपां मदीप्सितरूपविहीनामसतीं सूक्ष्माङ्गीत्वेन अविद्यमानामिव अत एव करालां पतनभीत्युत्पादिकां निर्णतोदरीमतुन्दिलीं मानुषीमिमामनेन ते भ्रात्रा सह भक्षयिष्यामि ॥ २६ ॥

गो० टी०—निर्णतं निरतिशयेन नतं निम्नमुदरं यस्याः सा निर्णतोदरी ॥ २८ ॥ २९ ॥

रा० टी०—तत इति । ततः मत्स्वीकारानन्तरं विविधानि पर्वतशृङ्गाणि वनानि च पश्यन् सन् मया सह कामी त्वं दण्डकान् विचरिष्यसि ॥ २७ ॥

रा० टी०—इतीति । इति एवंप्रकारेण उक्तः काकुत्स्थो रामः प्रहस्य मदिरेक्षणामाघूर्णितनयनां शूर्पणखामिदं वचनमारेभे ॥ २८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे सप्तदशः सर्गः ॥ १७ ॥

---

[1] चेयमिति गो. पाठः । [2] कान्तेति गो. पाठः ।

## अष्टादशः सर्गः ।

रामः स्वस्यापरिग्रहे हेतुमुपन्यस्य शूर्पणखां प्रति लक्ष्मणेन परिग्रहं रोचयन्प्रैरयत्तथा प्राप्तां लक्ष्मणोऽपि युक्त्या न्यवर्तयत्ततः पुनश्च राममेत्य परिग्रहमभ्यर्थ्य वैदेहीभक्षणोद्यतायास्तस्या रामचोदितो लक्ष्मणः कर्णनासं चिच्छेद तेन रुदती सा खरान्तिकमयात् ।

**तां तु शूर्पणखां रामः कामपाशावपाशिताम् । [२]स्वेच्छया श्लक्ष्णया वाचा स्मितपूर्वमथाब्रवीत् ॥ १ ॥**
**कृतदारोऽस्मि भवति भार्येयं दयिता मम । त्वद्विधानां तु नारीणां सुदुःखा ससपत्नता ॥ २ ॥**
**अनुजस्त्वेष मे भ्राता शीलवान्प्रियदर्शनः । श्रीमानकृतदारश्च लक्ष्मणो नाम वीर्यवान् ॥ ३ ॥**
**अपूर्वी भार्यया चार्थी तरुणः प्रियदर्शनः । अनुरूपश्च ते भर्ता रूपस्यास्य भविष्यति ॥ ४ ॥**

गो० टी०—इतीति । तां मदिरेक्षणां मदयति दर्पयतीति मदिरं तादृशमीक्षणं यस्यास्ताम् 'मदद्दर्पशोभनयोः' इत्यस्माद्धातोः "इषिमदि—"इत्यादिना किरच् प्रत्ययः ॥ ३० ॥

अत्र सार्धत्रिंशच्छ्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने सप्तदशः सर्गः ॥ १७ ॥

१ ] ति० टी०—तामिति । कामपाशेनावपाशितां संजातपाशबन्धाम् । 'स्वेच्छाया' इति पाठे परिहासविनोदेनेत्यर्थः । अत एव स्मितपूर्वमिति तीर्थः । 'स्वच्छन्दाम्' इति पाठो युक्तः । स्वेच्छाचारिणीमित्यर्थः ॥ १ ॥

रा० टी०—रामोक्तिं वर्णयन्नाह—तामिति । कामपाशावपाशितां कामरूपपाशबद्धां तां शूर्पणखां स्वेच्छया स्वाधीनया श्लक्ष्णया मनोरमया वाचा स्मितपूर्वं यथा स्यात्तथाऽब्रवीत् माङ्गलिकवचनमुच्चारयामास 'स्वच्छया' इति पाठान्तरम् ॥ १ ॥

गो० टी०—अथ खरक्रोधहेतुः शूर्पणखाविरूपकरणमष्टादशे—तत इत्यादि । ततः तत्र पर्णशालायाम् अथ शूर्पणखावचनानन्तरं स्वच्छया स्पष्टार्थया श्लक्ष्णया मृद्व्या काम एव पाशः तेनावपाशितां संजातपाशां बद्धामित्यर्थः ॥ १ ॥

२ ] ति० टी०—कृतदार ऊढभार्यः भवतीति संबुद्धिः । इयं भार्या मम दयिता संनिहिता चेति शेषः । ससपत्नता सशत्रुता पत्युर्भार्यान्तरं हि भार्यान्तरस्य शत्रुभूतं भवति, सपत्नीसाहित्यमिति वार्थः । अगुणवचनत्वेऽप्यार्षः पुंवद्भावः । सपत्नीशब्दश्च सपत्नप्रकृतिकोऽपि भर्तुर्द्वितीयभार्यायामेव रूढ इति ध्येयम् ॥ २ ॥

रा० टी०—तद्वचनाकारमाह—कृतेति । हे भवति ! अहं कृतदारः कृताः स्वीकृता दाराः येन सोऽस्मि । नन्वियं तु मया भक्ष्यते इत्यत आह—इयं भार्या मे दयिता अतिप्रिया एतेन न भक्षणीयेति सूचितम् । ननु मया सह इयमपि तिष्ठतु इत्यत आह—त्वद्विधानां नारीणां सपत्नता शत्रुत्वं सुदुःखावहा, एतेन सहस्थित्या शत्रुत्वं भवित्रैवेति सूचितम् ॥ २ ॥

गो० टी०—कृतेति । कृतदारः स्वीकृतभार्यः करोतेरनेकार्थत्वात् । अस्मीत्यहमित्यस्मिन्नर्थे निपातः । भवतीति शूर्पणखायाः संबोधनम् । इष्टात्वेन त्यक्तुमनर्हेत्याह—दयितेति । तर्हि 'तुल्योऽनेकत्र दक्षिणः' इत्युक्तदक्षिणो भवेत्याशङ्क्याह—त्वद्विधानामिति । सुदुःखा सुतरां दुःखकरी सपत्न्या सहिता ससपत्नी तस्या भावः ससपत्नता "त्वतलोर्गुणवचनस्य" इति पुंवद्भावः गुणत्वं चास्य न शुक्लतादिवत् किंतु काठिण्यत्वमित्यादिवत् द्रव्यत्वव्यावृत्तिः अतः सपत्नीसाहित्यरूपगुणवचनत्वात् पुंवद्भावः ॥ २ ॥

३ ] ति० टी०—अकृतदारोऽकृतपरदारपरिग्रह इति, धातूनामनेकार्थत्वादसंनिहितदार इति वा हृदिस्थोऽर्थः । नहि रामो मिथ्या ब्रूते । परिहासादौ मिथ्याभाषणे न दोष इत्यनेन सूच्यते इति वयम् । एवमुत्तरत्रापि ॥ ३ ॥

रा० टी०—ननु मम का गतिरित्यत आह—अनुज इति । शीलवान् प्रशस्तशीलः प्रियदर्शनः प्रीत्युत्पादकदर्शनवान् श्रीमान् सकलसंपत्तिविशिष्टः वीर्यवान् अतिपराक्रमवान् तरुण एष मे अनुजो भ्राता लक्ष्मणः अकृतदारः न कृताः वने स्वीकृताः दाराः येन सः अत एव अपूर्वी पूर्वभार्याभाववान् अत एव भार्यया अर्थी प्रयोजनवान् च यदि भविष्यति तदा अस्य रूपस्य अनुरूपो भर्ता भविष्यति, भविष्यतीत्यावर्तते ॥३॥४॥

गो० टी०—अनुजस्त्वित्यादि । अकृतदारः असहकृतदार इत्यर्थः । 'न वितथा परिहासकथास्वपि' इत्युक्तेः अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचनेत्युक्तेश्च अकृतदार इति नार्थः ॥ ३ ॥

४ ] ति० टी०—अपूर्वी इतः प्राग्भार्यासुखानभिज्ञः, अत एव भार्ययार्थी प्रयोजनवान् । आन्तराशयस्तु—इतः पूर्वं परभार्यासुखानभिज्ञो भार्ययार्थी स्वभार्यार्थीति अस्य ते रूपस्यायमनुरूपो भविष्यति यदङ्गीकरिष्यतीति शेषः ॥ ४ ॥

गो० टी०—अपूर्वीति । पूर्वं भार्यासुखं ज्ञातमनेन पूर्वी "पूर्वादिनिः" इति इनिः, न पूर्वी अपूर्वी चिरादज्ञातभार्यासुख इत्यर्थः । अत एव भार्यया अर्थी प्रयोजनवान् इदं वचनद्वयं स्वभार्याविषयकान्तराशयेन प्रयुक्तम्, अनुरूपश्च ते भर्तेत्यत्र अभर्तेति च्छेदेनान्तराशयः रूपस्यास्य कुत्सितस्य रूपस्येत्यर्थः ॥४॥

१ तत इति गो. पाठः । २ स्वच्छयेति गो. पाठः ।

एनं भज विशालाक्षि भर्तारं भ्रातरं मम । असपत्ना वरारोहे मेरुमर्कप्रभा यथा ॥ ५ ॥
इति रामेण सा प्रोक्ता राक्षसी काममोहिता । विसृज्य रामं सहसा ततो लक्ष्मणमब्रवीत् ॥ ६ ॥
अस्य रूपस्य ते युक्ता भार्याहं वरवर्णिनी । मया सह सुखं सर्वान्दण्डकान्विचरिष्यसि ॥ ७ ॥
एवमुक्तस्तु सौमित्री राक्षस्या वाक्यकोविदः । ततः शूर्पनखीं स्मित्वा लक्ष्मणो युक्तमब्रवीत् ॥ ८ ॥
कथं दासस्य मे दासी भार्या भवितुमिच्छसि । सोऽहमार्येण परवान्भ्रात्रा कमलवर्णिनी ॥ ९ ॥
समृद्धार्थस्य सिद्धार्था मुदितामलवर्णिनी । आर्यस्य त्वं विशालाक्षि भार्या भव यवीयसी ॥ १० ॥
एतां विरूपामसतीं करालां निर्णतोदरीम् । भार्यां वृद्धां परित्यज्य त्वामेवैष भजिष्यति ॥ ११ ॥
को हि रूपमिदं श्रेष्ठं संत्यज्य वरवर्णिनि । मानुषीषु वरारोहे कुर्याद्भावं विचक्षणः ॥ १२ ॥
इति सा लक्ष्मणेनोक्ता कराला निर्णतोदरी । मन्यते तद्वचः सत्यं परिहासाविचक्षणा ॥ १३ ॥
सा रामं पर्णशालायामुपविष्टं परंतपम् । सीतया सह दुर्धर्षमब्रवीत्काममोहिता ॥ १४ ॥
इमां विरूपामसतीं करालां निर्णतोदरीम् । वृद्धां भार्यामवष्टभ्य न मां त्वं बहु मन्यसे ॥ १५ ॥

५-७ ] ति० टी०-भर्तारमेनं भजेत्यन्वयः । भर्तृत्वेन सेवस्वेति यावत् । असपत्ना सांप्रतमिति शेषः । अर्कप्रभा मेरुं यथा भजति तथा एवंविधोऽपि वादो रामस्य स्वं प्रति काममोहितः प्राप्ताया दाग्धिक्कारे दुःखं मा भूदित्याहुः ॥५-७॥

रा० टी०-एनमिति । हे विशालाक्षि! हे वरारोहे! एनं मे भ्रातरं मेरुमर्कप्रभा इव असपत्ना सपत्नरहिता सती भर्तारं भज कुरु ॥ ५ ॥

रा० टी०-इतीति । इति रामेण प्रोक्ता काममोहिता राक्षसी रामं विसृज्य त्यक्त्वा लक्ष्मणमब्रवीत् ॥ ६ ॥

रा० टी०-तद्वचनाकारमाह-अस्येति । वरवर्णिनी मनोहरवर्णविशिष्टा अहं अस्य ते रूपस्य युक्ता योग्या अस्मीति शेषः, अतः मया सह सर्वान्दण्डकान् सुखं विचरिष्यसि॥७॥

गो० टी०-विशालाक्षी वर्तुलतया विशालाक्षीत्वमपि गम्यते । अर्कप्रभा मेरुं यथा भजति तथेत्यन्वयः । अर्कप्रभा मेरुं प्राप्ता यथा निवर्तते तथेत्यप्यर्थः । एवं रामो दयालुतया स्वस्मिन् काममोहेन प्राप्तायाः स्त्रियाः सहसा धिक्कारेण दुःखं मा भूदिति परिहासकथां प्रवर्तयामास ॥ ५-७ ॥

८ ] ति० टी०-शूर्पनखीमिति शुद्धयौगिकम् ॥ ८ ॥

रा० टी०-एवमिति । राक्षस्या एवमुक्तः वाक्यकोविदः सौमित्रिः स्मित्वा संस्मित्य शूर्पनखीमब्रवीत् । शूर्पनखीमित्यत्र शुद्धयौगिकत्वस्वीकारात् णत्वाभावङीन्निषेधाभावौ ॥ ८ ॥

गो० टी०-एवमिति । शूर्पं इव नखो यस्याः सा शूर्पनखी संज्ञाया अविवक्षितत्वात् " स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् " इति ङीष् असंज्ञात्वादेव "पूर्वपदात्संज्ञायाम्-" इति णत्वाभावः॥८

९-१० ] ति० टी०-दासस्य मे भार्या भूत्वा कथं दासी भवितुमिच्छसीति योजना । परवान्पराधीनः । कमलवर्णिनी रक्तकमलसदृशवर्णवती ॥ ९ ॥ १० ॥

रा० टी०-तद्वचनाकारमाह-कथमिति । हे कमलवर्णिनि ! दासस्य मे दासी भार्या भवितुं त्वं कथमिच्छसि । ननु कथं दासत्वं त्वयीत्यत आह-आर्येण ज्येष्ठेन भ्रात्रा हेतुभूते न अहं परवान् परवशोऽस्मि ॥ ९ ॥

गो०टी०-कथमिति । दासस्य मे भार्या भूत्वा कथं दासी भवितुमिच्छसि । कस्य दासस्त्वमित्यत्राह-सोऽहमिति । आर्येण ज्येष्ठेन भ्रात्रा परवान् नाथवान् 'दूरानात्मोत्तमाः परा' इत्यमरः । तस्य दासोऽहमित्यर्थः । अकमलवर्णिनीत्यपि च्छेदः

रा० टी०-ननु मया किं कर्तव्यमित्यत आह-समिति समृद्धार्थस्य सकलैश्वर्यसंपन्नस्य आर्यस्य यवीयसी कनिष्ठा भार्या सिद्धार्था मुदिता सती त्वं भव ॥ १० ॥

गो० टी०-समृद्धार्थस्येति । सिद्धार्था सिद्धनिवृत्ति ' अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु ' इत्यमरः । अमुदि मलवर्णिनीत्यपि यवीयसी कनिष्ठा हीना च ॥ १० ॥

११-१२ ] ति० टी०-एतामिति । परमार्थस्तु-विशि रूपां विरूपां त्रैलोक्यसुन्दरीम् । असतीं न विद्यतेऽन्या सती यस्यास्ताम् करालामवयवसंनिवेशैर्युक्तैर्निम्नोन्नताम् निर्णतोदरी तनुमध्याम् । अर्थान्तरमपि प्रागुक्तरीत्या द्रष्टव्यम् । वृद्धां ज्ञा वृद्धाम्, अनादिं च ॥ ११ ॥ १२ ॥

रा० टी०-एतामिति । वृद्धां चिरकालं सेवितामेतां भा परित्यज्य त्वामेव भजिष्यति । अत्रासंभवाद्विपरीतलक्ष बोध्या, त्वद्बुद्ध्येति शेषो वा ॥ ११ ॥

गो० टी०-सीतायां विद्यमानायां कथं मां परिग्रहीष्यति त्यत्राह-एतामिति । एतादृशावस्थां त्वामेव परित्य सीतां भजिष्यतीति हार्दोर्थः । असतीम् अप्रशस्ताम् सीतापक्षे अतो न पुरःस्फूर्तिकदोषः । करालां दन्तुरां निर्ण निरतिशयम् उदरं यस्यास्ताम् ॥ ११ ॥

रा० टी०-क इति । इदं श्रेष्ठं रूपं संत्यज्य मानुषीषु को विचक्षणः भावं प्रेमाणं कुर्यात् ॥ १२ ॥

गो० टी०-को हीति । विपरीतलक्षणा ॥ १२ ॥

१३-१५ ] ति० टी०-कराला दारुणा । परिहासाविच णा तत्तद्वाक्ये परिहासत्वज्ञानरहिता ॥ १३-१५ ॥

१ नि इति ह्रस्वः गो. रा. पाठे । २ एनामिति गो. पाठः । ३ तथ्यमिति गो. पाठः । ४ एनामिति गो. पाठः ।

अद्येमां भक्षयिष्यामि पश्यतस्तव मानुषीम्। त्वया सह चरिष्यामि निःसपत्ना यथासुखम् ॥ १६ ॥
इत्युक्त्वा मृगशावाक्षीमलातसदृशेक्षणा। अभ्यगच्छत्सुसंक्रुद्धा महोल्का रोहिणीमिव ॥ १७ ॥
तां मृत्युपाशप्रतिमामापतन्तीं महाबलः। [२]निगृह्य रामः कुपितस्ततो लक्ष्मणमब्रवीत् ॥ १८ ॥
क्रूरैरनार्यैः सौमित्रे परिहासः कथंचन। न कार्यः पश्य वैदेहीं कथंचित्सौम्य जीवतीम् ॥ १९ ॥
इमां विरूपामसतीमातिमत्तां महोदरीम्। राक्षसीं पुरुषव्याघ्र विरूपयितुमर्हसि ॥ २० ॥
इत्युक्तो लक्ष्मणस्तस्याः क्रुद्धो रामस्य [३]पश्यतः। उद्धृत्य खड्गं चिच्छेद [४]कर्णनासे महाबलः ॥ २१ ॥
निकृत्तकर्णनासा तु विस्वरं सा विनद्य च। यथागतं प्रदुद्राव घोरा शूर्पणखा वनम् ॥ २२ ॥
सा विरूपा महाघोरा राक्षसी शोणितोक्षिता। ननाद विविधान्नादान्यथा प्रावृषि तोयदः ॥ २३ ॥

---

रा० टी०—इतीति। इति लक्ष्मणेनोक्ता परिहासाविचक्षणा परिहासविषयकनैपुण्याभाववती सा शूर्पणखा एतल्लक्ष्मणोक्तपरिहासबोधकं वचनं सत्यं मन्यते अमन्यत ॥ १३ ॥

गो० टी०—इतीति। परिहासाविचक्षणा परिहासानभिज्ञा ॥ १३ ॥

रा० टी०—सेति। सा लक्ष्मणेन प्रत्युक्ता शूर्पणखा सीतया सह उपविष्टं दुर्धर्षं राममब्रवीत् ॥ १४ ॥

गो० टी०—सेति। पर्णशालामित्यनेन लक्ष्मणो बहिरेव स्थित इति गम्यते ॥ १४ ॥

रा० टी०—तद्वचनाकारमाह—इमामिति। इमां भार्यामवष्टभ्य आश्रित्य मां त्वं न बहु मन्यसे अतः तव पश्यतः मानुषीमिमां भक्षयिष्यामि, अनन्तरं निःसपत्ना सपत्नरहिता अहं त्वया सह चरिष्यामि। श्लोकद्वयमेकान्वयि ॥ १५ ॥ १६ ॥

गो० टी०—एनामिति। अवष्टभ्य अवलम्ब्य ॥ १५ ॥

१६-१७ ] ति० टी०—पश्यतस्तव पश्यन्तं त्वामनादृत्य ॥ १६ ॥ १७ ॥

गो० टी०—अद्येति। पश्यतः तव त्वयि पश्यति निःसपत्ना निष्प्रतिबन्धिका ॥ १६ ॥

रा० टी०—इतीति। अलातसदृशेक्षणा अलातचक्रसदृशनेत्रा सुसंक्रुद्धा शूर्पणखा इति वचः उक्त्वा मृगशावाक्षीं मृगबालनेत्रसदृशनेत्रां सीतां महोल्का पतितोत्पातविशेषः। रोहिणीमिव अभ्यगच्छत् ॥ १७ ॥

गो० टी०—इतीति। अलातसदृशेक्षणा निर्ज्वालकाष्ठाग्नितुल्येक्षणा उल्का निर्गतज्वाला सा चोत्पातकालभाविनी प्रकृते विवक्षिता ॥ १७ ॥

१८ ] ति० टी०—निगृह्य वाचेति शेषः ॥ १८ ॥

रा० टी०—तामिति। मृत्युपाशप्रतिमां मृत्युपाशसदृशीम् आपतन्तीं तां शूर्पणखां महाबलो रामः प्रगृह्य लक्ष्मणमब्रवीत् ॥ १८ ॥

गो० टी०—तामिति। निगृह्य हुंकारेण प्रतिषिद्ध्य ॥ १८ ॥

१९ ] ति० टी०—अनार्यैः परिहासो न कथमपि कार्य इत्यत्रानुभवं प्रमाणयति—पश्य वैदेहीं भक्षयितुमुद्युक्ता अस्मत्कृतपरिहासदोषादिति शेषः। इदं परिहासेनाप्यनृतवचनं सत्यनिष्ठस्य रामस्य सर्वानर्थमूलं मूलाविद्यायां मायायां बीजावेशमूलं चेति कतकः। हे सौम्य! कथंचिज्जीवतीमित्युत्तरश्लोकान्वयि ॥ १९ ॥

रा० टी०—तद्वचनाकारमाह—क्रूरैरिति। अनार्यैः क्षुद्रैः सह परिहासः कथंचन न कार्यः कथंचिज्जीवतीं वैदेहीं पश्य ॥ १९ ॥

गो० टी०—क्रूरैरिति। अनार्यैः दुर्जनैः कथंचिज्जीवतीं शूर्पणखायाः कौर्यमालोक्य कथंचित् स्वास्थ्यमापन्नाम् ॥ १९ ॥

२० ] ति० टी०—इमां स्वतो विरूपां विरूपय। पार्श्वस्थित इति शेषः ॥ २० ॥

रा० टी०—इमामिति। मत्तामिमां राक्षसीं विरूपयितुं विरूपां कर्तुमर्हसि, एतेन विरूपकरणहेतुकशोकप्राप्त्या काममदध्वंसो भविष्यतीति सूचितम् ॥ २० ॥

गो० टी०—इमामिति। पूर्वमेव विरूपां पुनर्विरूपयेति भावः। एतावत्पर्यन्तमपराधाभावात्तूष्णीं स्थितम् अद्य सीताक्रमणव्याजेनेमां विरूपयेत्यर्थः ॥ २० ॥

२१-२२ ] ति० टी०—कर्णनासे इत्यार्षत्वादेकवत्त्वाभावः ॥ २१ ॥ २२ ॥

रा० टी०—इतीति। इत्युक्तो लक्ष्मणः खड्गमसिमुद्धृत्य अस्या राक्षस्याः कर्णनासे रामस्य पश्यतः चिच्छेद ॥ २१ ॥

गो० टी०—इत्युक्त इति। तस्याः कर्णनासमित्यन्वयः प्राण्यङ्गत्वादेकवद्भावः। रामे बद्धभावाया अपि शूर्पणखायास्तदीयापचारेण हानिर्जातेत्यनुसंधेयम् ॥ २१ ॥

रा० टी०—निकृत्तेति। निकृत्तं छिन्नं कर्णनासं यस्याः सा शूर्पणखा तु विस्वरं यथा स्यात्तथा विनद्य यथागतं प्रदुद्राव पलायांचक्रे ॥ २२ ॥

गो० टी०—निकृत्तेति। यथागतम् आगतमार्गमनतिक्रम्य वनं प्रदुद्रावेति संबन्धः ॥ २२ ॥

२३ ] ति० टी०—विविधान्नादान्ननाद चकारेत्यर्थः ॥ २३ ॥

रा० टी०—प्रद्रवप्रकारमाह—सेति। शोणितोक्षिता रुधि-

---

१ अभ्यधावदिति गो. पाठः। २ प्रगृह्येति रा. पाठः। ३ पार्श्वत इति गो. पाठः। ४ कर्णनासमिति गो. पाठः।

सा विक्षरन्ती रुधिरं बहुधा घोरदर्शना । प्रगृह्य बाहू गर्जन्ती प्रविवेश महावनम् ॥ २४ ॥
ततस्तु सा राक्षससङ्घसंवृतं खरं जनस्थानगतं विरूपिता ।
उपेत्य तं भ्रातरमुग्रतेजसं पपात भूमौ गगनाद्यथाऽशनिः ॥ २५ ॥
ततः सभार्यं भयमोहमूर्छिता सलक्ष्मणं राघवमागतं वनम् ।
विरूपणं चात्मनि शोणितोक्षिता शशंस सर्वं भगिनी खरस्य सा ॥ २६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डेऽष्टादशः सर्गः ॥ १८ ॥

## एकोनविंशः सर्गः ।

कुतस्ते वैरूप्यमिति खरपृष्टा शूर्पणखा रामप्रेरितलक्ष्मणं तदापादकं निर्दिदेशातः क्रुद्धेन तज्जिघांसुना खरेण प्रेषितैश्चतुर्दशरक्षोवीरैः समं रामाश्रममभिप्रतस्थे ।

तां तथा पतितां दृष्ट्वा विरूपां शोणितोक्षिताम् । भगिनीं क्रोधसंतप्तः खरः पप्रच्छ राक्षसः ॥ १ ॥

रसिक्ता महाघोरा राक्षसी सा शूर्पणखा प्रावृषि तोयदो मेघ इव विविधान्नादान् ननाद ॥ २३ ॥

गो० टी०-सेति । शोणितोक्षिता रक्तेन सिक्ता नादान्नाद नादान् चकारेत्यर्थः । ओदनपाकं पचतीतिवत् । प्रावृषि वर्षाकाले ॥ २३ ॥

२४ ] ति० टी०-प्रगृह्योद्यम्य ॥ २४ ॥

रा० टी०-सेति । रुधिरं बहुधा विक्षरन्ती विकिरन्ती बाहू प्रगृह्य गर्जन्ती घोरदर्शना सा शूर्पणखा महावनं प्रविवेश॥२४॥

गो० टी०-सा विक्षरन्तीति । विक्षरन्ती स्रवन्ती रुधिरं रक्तं प्रगृह्य उद्यम्य ॥ २४ ॥

२५ ] ति० टी०-अशनिरिव गगनाद्भूमौ पपात ॥२५॥

रा० टी०-तत इति । राक्षससंघैः राक्षसानां समूहैः संवृतं संयुक्तं जनस्थानगतं जनस्थाने रावणेन नियोजितम् उग्रतेजसं भ्रातरं खरमुपेत्य विरूपिता कर्णनासच्छेदेन विरूपं प्रापिता शूर्पणखा गगनात् अशनिर्वज्र इव भूमौ पपात ॥२५॥

गो० टी०-ततस्त्विति । तं रामवध्यत्वेन प्रसिद्धं यथाऽशनिः अशनिरिव गगनात् भूमौ पपात ॥ २५ ॥

२६ ] ति० टी०-अथास्याः खरं प्रति स्ववृत्तान्तकथनं कविः संक्षिप्याह-तत इति । भयजनितमोहेन विसंज्ञतया मूर्छिता व्याप्ता राघवं वनमागतं शशंस, आत्मविरूपणं च शशंस । अत्रेदं बोध्यम्-दशवर्षगमनोत्तरं पुनः सुतीक्ष्णाश्रमगमनं रामस्य । तत्र च वर्षाकालापगमपर्यन्तं स्थित्वा किंचिच्छिष्टे एकादशेऽगस्त्याश्रमगमनम् । ततो वर्षाकालारम्भे पञ्चवट्यां वासः 'मयूरनादिता रम्या' इति तत्रोक्तेः । एवं वसतस्तस्य शरद्व्यपाये हेमन्तर्तुः प्रविष्ट इत्युक्तेरत्र द्वादशवर्षपूर्तिः 'पञ्चमे पञ्चमे वर्षे द्वौ द्वावधिकमासकौ' इत्युक्तेर्मार्गशुक्लैकादश्यां त्रयोदशारम्भः । अत एव पाद्म उक्तम्-' तत्र तु द्वादशाब्दानि रामस्य अतिचक्रमुः । कस्मिंश्चिदथ काले तु राक्षसी कामरूपिणी । तत्र शूर्पणखा भेजे राघवं रावणानुजा ॥' इति केचित् । अन्ये तु--त्रयोदशे किंचिदवशिष्टे शूर्पणखागमनम्, ततो माघे सीताहरणमित्याहुः । भारते युधिष्ठिरवनवासस्याधिकमासं गृहीत्वार्वागेव समाप्तेः । 'पञ्चमे पञ्चमे वर्षे द्वौ मासावुपजायतः एषामभ्यधिका मासाः पञ्च च द्वादश क्षपाः । त्रयोदशानां वर्षाणामिति मे वर्तते मतिः' इति भीष्मेणोक्तत्वात्तद्रीत्यात्रापि तथैवोचितमिति पूर्वव्याख्यैव युक्तेति मम भाति । यत्तु 'तत्र त्रयोदशाब्दानि रामस्य अतिचक्रमुः' इति पाद्मे पाठः क्वचित् तत्रापि प्रवेशमात्रेण तदतिक्रमव्यवहारः । यथान्ये तु वादिनो मर्यावस्थितौ तद्व्यवहार इति बोध्यम् । प्रचुरस्तु 'द्वादशाब्दानि' इत्येव पाठः ॥ २६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डेऽष्टादशः सर्गः ॥ १८ ॥

रा० टी०-तत इति । ततः भूमिपातानन्तरं भयमोहमूर्च्छिता भयमोहेन भयहेतुकाविवेकेन मूर्छिता व्याप्ता शोणितोक्षिता रुधिरसिक्ता खरस्य भगिनी सा शूर्पणखा सभार्यं सलक्ष्मणं राघवं रामं वनमागतं प्राप्तमुक्त्वा आत्मनि विरूपणं सर्वं वृत्तान्तं च शशंस ॥ २६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डेऽष्टादशः सर्गः ॥ १८ ॥

गो० टी०-उत्तरसर्गार्थमेकेन संगृह्णाति-ततः सभार्यमिति । भयजो मोहो भयमोहः निःसंज्ञता तेन मूर्छिता व्याप्ता राघवं वनमागतं शशंस आत्मविरूपणं च सर्वं शशंस समूलं शशंसेत्यर्थः । खरस्य भगिनी सपत्नी भ्रातृपुत्रत्वान्मातृष्वसेयत्वाच्चेति पूर्वमुपपादितम् ॥ २६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्यानेऽष्टादशः सर्गः ॥ १८ ॥

१ ] ति० टी०-अथ पूर्वसर्गान्ते संक्षिप्ततया कथितास्यैव विस्तारः-तामिति ॥ १ ॥

१ उग्रदर्शनमिति गो. पाठः ।

उत्तिष्ठ तावदाख्याहि प्रमोहं जहि संभ्रमम् । व्यक्तमाख्याहि केन त्वमेवंरूपा विरूपिता ॥ २ ॥
कः कृष्णसर्पमासीनमाशीविषमनागसम् । तुदत्यभिसमापन्नमङ्गुल्यग्रेण लीलया ॥ ३ ॥
कालपाशं समासज्य कण्ठे मोहान्न बुध्यते । यस्त्वामद्य समासाद्य पीतवान्विषमुत्तमम् ॥ ४ ॥
बलविक्रमसंपन्ना कामगा कामरूपिणी । इमामवस्थां नीता त्वं केनान्तकसमागता ॥ ५ ॥
देवगन्धर्वभूतानामृषीणां च महात्मनाम् । कोऽयमेवं महावीर्यस्त्वां विरूपां चकार ह ॥ ६ ॥
नहि पश्याम्यहं लोके यः कुर्यान्मम विप्रियम् । अमरेषु सहस्राक्षं महेन्द्रं पाकशासनम् ॥ ७ ॥
अद्याहं मार्गणैः प्राणानादास्ये जीवितान्तगैः । सलिले क्षीरमासक्तं निष्पिबन्निव सारसः ॥ ८ ॥

---

रा० टी०–शूर्पणखाशंसनप्रकारं वर्णयितुमाह–तामित्यादिभिः । तथा विरूपां छिन्नकर्णनासिकामित्यर्थः, अत एव शोणितोक्षितां पतितां तां भगिनीं दृष्ट्वा क्रोधसंतप्तः खरो राक्षसः पप्रच्छ ॥ १ ॥

गो० टी०–अथ खरवधमूलभूतः खरक्रोध उच्यते एकोनविंशे–तामित्यादि । भगिनीं ज्येष्ठाम् 'अत्तिका भगिनी ज्येष्ठा' इत्यमरः ॥ १ ॥

२]ति० टी०–प्रमोहो विसंज्ञता, संभ्रमश्चित्ताप्रतिष्ठानम् । एवंरूपा अतिप्रसिद्धसौन्दर्या त्वं केन विरूपितेत्यन्वयः ॥ २ ॥

रा० टी०–तत्प्रश्नप्रकारमाह–उत्तिष्ठेति । संभ्रमं भयं प्रमोहं मूर्च्छां च जहि त्यज उत्तिष्ठ, रूपा प्रशस्तरूपविशिष्टा त्वं केनैवं विरूपितेति व्यक्तमाख्याहि ॥ २ ॥

गो० टी०–उत्तिष्ठेति । प्रमोहो विसंज्ञता, संभ्रमश्चित्ताप्रतिष्ठा एवंरूपा यथा भवसि तथा विरूपितेत्यर्थः ॥ २ ॥

३ ]ति० टी०–आशिषि दंष्ट्रायां विषं यस्य तं पृषोदरादित्वात्साधुः। अभिसमापन्नमभिमुखे स्थितं तुदति व्यथयति॥३॥

रा० टी०–स्वस्मिन् कृष्णसर्पत्वमारोप्याह–क इति । आशीविषं दंष्ट्राविषसंयुक्तमनागसमनपराधिनमासीनमभिसमापन्नं संमुखे प्राप्तं कृष्णसर्पमङ्गुल्यग्रेण लीलया कस्तुदति व्यथयति ॥ ३ ॥

गो० टी०–उत्तरकाल एवापकर्तुरनिष्टावाप्तिं सूचयन् पृच्छति–क इति । कृष्णे त्वमोघविषत्वव्यञ्जनाय आसीनं निश्चलमित्यर्थः । आशिषि दंष्ट्रायां विषं यस्येति सर्पविशेषणं पृषोदरादित्वात्सकारलोपः 'आशीरुरगदंष्ट्रायां प्रियवाक्याभिषङ्गयोः' इति निघण्टुः । ईकारान्तोऽप्याशीशब्दोऽस्ति तुदति व्यथयति अभिसमापन्नम् आभिमुख्येनागतमिति शीघ्रप्रतीकारमूलम् अङ्गुल्यग्रेण लीलयेति प्रभावानभिज्ञत्वोक्तिः । अनेन स्वस्य लीलया सद्यः प्रतीकारसामर्थ्यं द्योतितम् ॥ ३ ॥

४ ]ति० टी०–उत्तमं विषं त्वद्विरूपतालक्षणम् ॥ ४ ॥

रा० टी०–कर्णनासिकोच्छेदे कालपाशत्वं विषपानत्वं चारोप्याह–कालेति । यस्त्वां समासाद्य उत्तमं विषं पीतवान् स कालपाशं कण्ठे समासज्य मोहात् न बुध्यते ॥ ४ ॥

गो० टी०–पुनरपि स्वमहिमानं प्रकटयन् शूर्पणखां चाश्वासयन् पृच्छति–कः कालेति । यः कण्ठे कालपाशं मृत्युपाशम् आसज्य आबध्य न बुध्यते उत्तरक्षणे स्वमरणं न जानातीत्यर्थः, यश्च त्वाम् आसाद्य प्राप्य उत्तमं विषं कालकूटं पीतवान् स क इत्यन्वयः । अत्र आसादनशब्देन विरूपकरणमुच्यते त्वदासादनरूपं विषमित्यर्थः ॥ ४ ॥

५ ]ति० टी०–अन्तकसमा त्वं कस्य समीपं गता येनेमामवस्थां नीता, अन्तकसमा त्वं केनेमामवस्थां नीता सती अत्रागतेत्यर्थो वा ॥ ५ ॥

रा० टी०–बलेति । बलविक्रमसंपन्ना बलेन विक्रमेणाभिचलनसामर्थ्येन संपन्ना अत एव कामगा यथेच्छं विहरणशीला अन्तकसमागता कालसमत्वं प्राप्ता त्वमिमामवस्थां केन नीता ॥ ५ ॥

गो० टी०–अथ विस्मयेन पृच्छति–बलेति । इतो गता त्वं केनेमामवस्थां नीतेत्यन्वयः ॥ ५ ॥

६ ]ति० टी०–महात्मनां मध्ये इति शेषः ॥ ६ ॥

रा० टी०–देवेति । देवादीनां मध्ये यो महावीर्यस्त्वां विरूपां चकार स कः तं बोधयेत्यर्थः ॥ ६ ॥

गो० टी०–देवेत्यादि । निर्धारणे षष्ठी देवादीनां मध्ये अयम् एतादृशकार्यकर्ता कः एवं विरूपां चकार ॥ ६ ॥

७ ]ति० टी०–महेन्द्रमिति । सहस्राक्षत्वपाकशासनत्वे विशेषणे महेन्द्रमित्यस्यान्तरेणेति शेषः । पश्यामीत्यत्र तमित्यध्याहारः । मनुष्यादीनां तु स्वाप्रियकरणे संभावनैव नेति भावः । क्वचित्तु 'अन्तरेण सहस्राक्षम्' इत्येव पाठः ॥ ७ ॥

रा० टी०–नहीति । यो मम विप्रियं कुर्यात् तममरेषु सहस्राक्षं सहस्रनयनमिन्द्रं परमैश्वर्यवन्तं पाकशासनमपि न पश्यामि अन्येषां का गणनेति तात्पर्यम् ॥ ७ ॥

गो० टी०–स्वनिश्चयमाह—न हीति । अत्र तमित्यध्याहार्यं तस्य गर्वविशेषद्योतनाय इन्द्रस्य विशेषणद्वयम् ॥ ७ ॥

८ ]ति० टी०–जीवितस्यान्तं गमयन्ति प्रापयन्ति तैः तृषया निष्पिबन्सारसो हंसो यथा सलिल आसक्तं क्षीरमादत्ते एवं प्राणानादास्ये इत्यर्थः॥ ८ ॥

रा० टी०–अद्येति । जीवितान्तगैः जीवनान्तं प्रापयितृभिः मार्गणैर्बाणैः प्राणान् आदास्ये अपराधिन इति शेषः ।

---

१ कः कालपाशमासज्येति गो. पाठः । २ अन्तरेणेति गो. पाठः । ३ अन्तकैरिति गो. पाठः । ४ एतदमरकोशलेखने हेतुश्चिन्त्यः ।

निहतस्य मया संख्ये शरसंकृत्तमर्मणः । सफेनं रुधिरं कस्य मेदिनी पातुमिच्छति ॥ ९ ॥
कस्य पत्ररथाः कायान्मांसमुत्कृत्य संगताः । प्रहृष्टा भक्षयिष्यन्ति निहतस्य मया रणे ॥ १० ॥
तं न देवा न गन्धर्वा न पिशाचा न राक्षसाः । मयाऽपकृष्टं कृपणं शक्तास्त्रातुं महाहवे ॥ ११ ॥
उपलभ्य शनैः संज्ञां तं मे शंसितुमर्हसि । येन त्वं दुर्विनीतेन वने विक्रम्य निर्जिता ॥ १२ ॥
इति भ्रातुर्वचः श्रुत्वा क्रुद्धस्य च विशेषतः । ततः शूर्पणखा वाक्यं सबाष्पमिदमब्रवीत् ॥ १३ ॥
तरुणौ रूपसंपन्नौ सुकुमारौ महाबलौ । पुण्डरीकविशालाक्षौ चीरकृष्णाजिनाम्बरौ ॥ १४ ॥
फलमूलाशनौ दान्तौ तापसौ ब्रह्मचारिणौ । पुत्रौ दशरथस्यास्तां भ्रातरौ रामलक्ष्मणौ ॥ १५ ॥

---

तत्र दृष्टान्तः सलिले जले आसक्तं मिलितं क्षीरं निष्पिबन् सारसो हंस इव ॥ ८ ॥

गो० टी०—अद्येति । प्राणान् तस्येति शेषः । जीवितान्तकैः शत्रुजीवितविनाशकरैः मार्गणैः बाणैः सारसः हंसविशेषः ॥ ८ ॥

९ ] ति० टी०—शरैः संकृत्तानि मर्माणि यस्य तस्य कण्ठकर्तनकालिकं सफेनमित्युपलक्षणम् । दीर्घधारं सोष्णं च ॥ ९ ॥

रा० टी०—निहतस्येति । सङ्ख्ये सङ्ग्रामे मया निहतस्य अत एव शरसंकृत्तमर्मणः कस्य सफेनं रुधिरं मेदिनी पृथ्वी पातुमिच्छति ॥ ९ ॥

गो० टी०—निहतस्येति । संख्ये युद्धे शरसंकृत्तमर्मणः बाणच्छिन्नमर्मस्थलस्य सफेनं प्राणवायुनिर्गमनकालिकफेनसहितम् रक्तं रक्तवर्णम् अचिरप्रवृत्तत्वमनेनोच्यते । मेदिनी भूमिः ॥ ९ ॥

१०–११ ] ति० टी०—संगता मिलिताः पत्ररथाः पक्षिणः ॥ १० ॥ ११ ॥

रा० टी०—कस्येति । मया रणे निहतस्य कस्य कायात् मांसमुत्कृत्य निष्कृष्य प्रहृष्टाः संगताः संमिलिताः पत्ररथाः पक्षिणो भक्षयिष्यन्ति ॥ १० ॥

गो० टी०—कस्येति । पत्ररथाः पक्षिणः कायात् देहात् उत्कृत्य उच्छिद्य संगताः संघशः समवेताः ॥ १० ॥

रा० टी०—मदपराधिनो ध्रुवं विध्वंसो भवितेति बोधयन्नाह—तमिति । मया अपकृष्टं हिंसितत्वेन विवक्षितं कृपणं तमपराधिनं महाहवे महासंग्रामे देवादयस्त्रातुं न शक्ताः ॥ ११ ॥

गो० टी०—तमिति । मया आहवे अपकृष्टम् आकृष्टम् इहेति युद्धसन्निधानोक्तिः ॥ ११ ॥

१२–१३ ] ति० टी०—विक्रम्य शौर्यं कृत्वा ॥ १२ ॥ १३ ॥

रा० टी०—तत्क्षणकर्तव्यमाह—उपलभ्येति । शनैः संज्ञां बोधमुपलभ्य येन दुर्विनीतेन विक्रम्य विक्रमं कृत्वा त्वं निर्जितासि तं मे मह्यं शंसितुमर्हसि ॥ १२ ॥

गो० टी०—उपलभ्येति । उपलभ्य प्राप्य दुर्विनीतेन दुर्जनेन विक्रम्य शौर्यं कृत्वा ॥ १२ ॥

रा० टी०—इतीति । विशेषतः क्रुद्धस्य भ्रातुरिति वचः श्रुत्वा शूर्पणखा सबाष्पं साश्रु वाक्यमब्रवीत् ॥ १३ ॥

गो० टी०—इतीति । विशेषतः अतिशयेन क्रुद्धस्य क्रोधस्य ॥ १३ ॥

१४–१५ ] ति० टी०—श्रीरामचन्द्रे दोषाणामभावाद्गु[णान्] वक्त्यैव तं बोधयति—तरुणावित्यादि व्याख्यातप्रायम् १४-१[५]

रा० टी०—तद्वचनाकारमाह—तरुणाविति । तरुणत्वा[दि] विशिष्टौ दशरथस्य पुत्रौ रामलक्ष्मणौ भ्रातरौ आस्ताम्[।] देवौ वा दानवौ वेति तर्कयितुं नोत्सहे तर्केण निश्चेतुं साम[र्थ्यं] नास्तीत्यर्थः, तेन तयोः प्राकृतविलक्षणत्वं सूचितम् । श्लोक[द्व]यमेकान्वयि ॥ १४–१६ ॥

गो० टी०—तरुणावित्यादि । ननु व्यक्तमाख्याहि के त्वमेवंरूपा विरूपितेति पृच्छन्तं खरं प्रति पुत्रौ दशरथस्य[ा] भ्रातरौ रामलक्ष्मणावित्येव वक्तव्ये तरुणावित्यादिना राम[स्य] सौन्दर्यादिकं किमर्थं कथयतीति चेत्, अस्या वैरूप्ये जात[े] वैराग्याजननात् काममोहातिशयेन भ्रात्रादिसन्निधानेऽपि तमेवोक्तवती अनुकूलानां प्रतिकूलानां च रामं दृष्टवतामय[ं] स्वभावः अत एव यानि रामस्य चिह्नानीति पृष्टवतीं सी[तां] प्रति त्रिस्थिरस्त्रिप्रलम्बश्चेति वक्तव्ये रामः कमलपत्राक्षः स[र्व]सत्त्वमनोहर इत्येवमाह हनुमान् । यद्वा उन्मप्रमत्तकुपित[ानां] भावज्ञानं दृष्टमिति न्यायेन कर्णनासाछेदेन प्रमत्ता कुपिता शूर्पणखा हृद्गतमेवाह । तरुणौ कामिनीनां प्रथमाकर्षक[ं] एव हि अतस्तदुच्यते परस्परपरिहासकरणेनोभयत्र भावब[न्ध]विशेषाद्द्विवचनम् । वयसा तुल्यत्वेऽपि रूपे किमनयोस्तारत[म्य]मस्ति नेत्याह—रूपसंपन्नौ रूपं सौन्दर्यं तेन संपन्नौ स[म्य]ग् इतरेषां कामादीनां रूपमाभ्यां भिक्षित्वा संपादयितव्य[मि]ति मन्यमानावित्यर्थः । यद्वा रूपसंपन्नौ संपन्नरूपौ आहिताग्न्या[दि]त्वात्परनिपातः तेन उत्पन्नं द्रव्यं क्षणमगुणं तिष्ठतीति [न्या]यं विहाय रूपदाक्षिण्यसंपन्नः प्रसृत इत्युक्तरीत्या धार्मिणा स[ह] उत्पन्नरूपावित्यर्थः । वयोरूपसत्त्वेऽपि किं कठिनस्पर्शौ नेत्य[ाह] सुकुमारौ परुषतरभवच्छरीरवन्न भवत्यनयोः शरीरं [किन्तु] पुष्पहाससुकुमारौ । एवं सौकुमार्यसत्त्वेऽपि रतिवैयात्ये किं

---

१ रक्तं मेदिनी कस्य पास्यतीति गो. पाठः । २ इहाहवे इति गो. पाठः । ३ धर्मचारिणाविति गो. रा. पाठः ।

गन्धर्वराजप्रतिमौ पार्थिवव्यञ्जनान्वितौ । देवौ वा दानवावेतौ न तर्कयितुमुत्सहे ॥ १६ ॥
तरुणी रूपसंपन्ना सर्वाभरणभूषिता । दृष्टा तत्र मया नारी तयोर्मध्ये सुमध्यमा ॥ १७ ॥
ताभ्यामुभाभ्यां संभूय प्रमदामधिकृत्य ताम् । इमामवस्थां नीताऽहं यथाऽनाथाऽसती तथा ॥ १८ ॥
तस्याश्चानृजुवृत्तायास्तयोश्च हतयोरहम् । सफेनं पातुमिच्छामि रुधिरं रणमूर्धनि ॥ १९ ॥
एष मे प्रथमः कामः कृतस्तत्र त्वया भवेत् । तस्यास्तयोश्च रुधिरं पिबेयमहमाहवे ॥ २० ॥

न्तौ स्यातां नेत्याह—महाबलौ रामस्तु सीतया सार्धं विजहार बहूनृतूनित्याद्युक्तरीत्यानेकर्तुषु विहरणेऽपि श्रमलवरहितौ । एवं समुदायशोभासंपन्नत्वेऽपि किमवयवशोभासु वैकल्यं नेत्याह—पुण्डरीकविशालाक्षौ संरक्तनयना घोरा इत्युक्तरीत्या स्वादृशनयनवन्न भवति तन्नयनमित्यर्थः । पुण्डरीकं सिताम्भोजं तमोगुणोद्रेकेण निद्राकषायितत्वं रजोगुणोद्रेकेण संरक्तत्वं वा नास्ति किंतु सर्वदा सत्त्वप्रसन्ननयनावित्यर्थः । न केवलमेवावयवशोभातिशयः चीरकृष्णाजिनाम्बरौ ' किमिव हि मधुराणां मण्डनं नाकृतीनाम्' इत्युक्तरीत्या वल्कलाजिनधारणेऽप्यतिरमणीयौ । यद्वा कोऽयमेवं महावीर्य इति भीतं प्रति तयोर्दुर्बलत्वमुच्यते तरुणौ ऊनषोडशवर्ष इत्याद्युक्तरीत्या युद्धायोग्यौ । यद्वा 'यौवने विषयैषिणाम्' इत्याद्युक्तरीत्या विषयप्रावण्येन युद्धभीतौ रूपसंपन्नौ 'कन्या कामयते रूपम्' इत्युक्तरीत्या वनिताजनवशीकरणाय शरीरमुद्धासयन्तौ न पौरुषसंपन्नौ सुकुमारौ श्रीमत्पुत्रतया संपत्कुमारौ अतो भवदायुधप्रहारासहौ महाबलौ विपरीतलक्षणया द्वावेतौ दुर्बलौ ससैन्यस्य भवतो न पर्याप्तावित्यर्थः । यद्वा सुकुमारतराबलासहितौ युद्धविरोधिकलत्रसहितत्वान्न युद्धार्हौ । पुण्डरीकविशालाक्षौ तयोर्युद्धासामर्थ्यं यद्वैरूप्यकरणानन्तरं किं भविष्यतीति भीत्या शुभ्रीभूतलोचनतया चावगम्यते । चीरकृष्णाजिनाम्बरौ परिधानसंपादनस्याप्यशक्तौ तत्राप्येकरूपोत्तरीयरहितौ चीरकृष्णाजिनाम्बरौ स्थावरतिर्यग्भ्यां याचित्वा लब्धे अम्बरे बिभ्राणौ । यद्वा खरस्य प्रोत्साहनाय तयोर्बलातिशय उच्यते—तरुणावित्यादि । तरुणौ जयोत्साहयोग्यवयस्कौ रूपसंपन्नौ 'सिंहोरस्कं महाबाहुम्' इत्युक्तरीत्या युद्धाभावेऽपि दर्शनमात्रेण परहृदयकम्पजनकशरीरौ । सुकुमारौ लीलयैव सर्वसंहरणक्षमौ महाबलौ मनोबलबाहुबलोपायबलसंपन्नौ पुण्डरीकविशालाक्षौ वैरिषु गौरवबुद्धिमूलककालुष्यरहिततया विमलनेत्रौ, अनेन शत्रुदर्शनकृतक्षोभराहित्यमुच्यते । चीरकृष्णाजिनाम्बरौ सदा बद्धवसनतया युद्धसन्नद्धावित्यर्थः । एवमुत्तरत्रापि योज्यम् ॥ १४ ॥ १५ ॥

१६-१७ ] ति० टी०—देवौ वेति । यद्यपि दशरथपुत्राविति तत्सकाशाच्छ्रुतम्, अथाप्यमानुषचारित्र्यदर्शनादनिश्चय इति भावः ॥ १६ ॥ १७ ॥

गो० टी०—पुनरपि हृदये परिवर्तमानं तत्सौन्दर्यमाह—गन्धर्वेति । देवाविति यद्यपि दशरथसुताविति श्रुतं तथापि तत्प्रभावदर्शनेन तदसत्यमेवोक्तमिति मन्य इति भावः ॥ १६ ॥

रा० टी०—तरुणीति । तरुणी तारुण्यविशिष्टा अत एव रूपसंपन्ना सुमध्यमा नारी तत्राश्रमे तयोर्भ्रात्रोर्मध्ये मया दृष्टा ॥ १७ ॥

गो० टी०—तरुणीति । तत्र आश्रमे ॥ १७ ॥

१८ ] ति० टी०—तां प्रमदामधिकृत्य निमित्तीकृत्य ताभ्यामुभाभ्यां संभूयैकनियोगादपरेणेमामवस्थां नीता यथाऽनाथाऽसती कुलटा तथेत्यन्वयः ॥ १८ ॥

रा० टी०—ताभ्यामिति । उभाभ्यां ताभ्यां भ्रातृभ्यां संभूय एकत्र स्थित्वा तां प्रमदामधिकृत्य अबला अनाथा रक्षकरहिता असती पुंश्चली यथा तथाहमिमामवस्थां नीतास्मि ॥ १८ ॥

गो० टी०—ताभ्यामिति । प्रमदाम् अधिकृत्य निमित्तीकृत्य उभाभ्यां संभूय ऐकमत्यं प्राप्य इमामवस्थां नीतास्मि यथा अनाथा असती कुलटा नीयते तथा नीतास्मीति योजना ॥ १८ ॥

१९] ति० टी०—तस्या हताया इति विपरिणामः । रुधिरं पातुमिच्छामीत्यनेन स्वस्यास्तत्कामुकीत्वशङ्कां वारयति ॥१९॥

रा० टी०—तस्या इति । अनृजुवृत्तायाः दुर्ज्ञेयवृत्तान्ताया रणमूर्धनि हतायास्तस्या हतयोः तयोश्च सफेनं रुधिरं पातुमहमिच्छामि । हतयोरित्यस्य लिङ्गवचनविपरिणामेनान्यत्राप्यन्वयः ॥ १९ ॥

गो० टी०—तस्याश्चेति । अनृजुवृत्तायाः कुटिलवृत्तायाः अनेन तत्प्रेरणेनैव मां तौ विरूपितवन्तावित्यमन्यतेति गम्यते । रणमूर्धनि हतयोरित्यन्वयः । सीताया रणमूर्धनि गमनासंभवाद्धताया इति विपरिणामो न युक्तः अन्यथा अशक्यत्वाद्रणमूर्धनीत्युक्तम् ॥ १९ ॥

२० ] ति० टी०—उक्तमेवार्थमुत्कटेच्छाद्योतनाय पुनराह—एष इति ॥ २० ॥

रा० टी०—अभिलाषातिशयात्पुनस्तदेव भङ्ग्यन्तरेणाह—एष इति । आहवे रुधिरं पिबेयं एषः प्रथमो मुख्यो मे कामोऽभिलाषस्त्वया कृतो भवेत् कुर्वित्यर्थः ॥ २० ॥

गो० टी०—अवश्यकर्तव्यत्वाय पुनरप्याह—एष इति ।

१ मानुषौ वा ताविति गो० पाठः । २ तातेति गो० पाठः ।

इति तस्यां ब्रुवाणायां चतुर्दश महाबलान् । व्यादिदेश खरः क्रुद्धो राक्षसानन्तकोपमान् ॥ २१ ॥
मानुषौ शस्त्रसंपन्नौ चीरकृष्णाजिनाम्बरौ । प्रविष्टौ दण्डकारण्यं घोरं प्रमदया सह ॥ २२ ॥
तौ हत्वा तां च दुर्वृत्तामुपावर्तितुमर्हथ । इयं च भगिनी तेषां रुधिरं मम पास्यति ॥ २३ ॥
मनोरथोऽयमिष्टोऽस्या भगिन्या मम राक्षसाः । शीघ्रं संपाद्यतां गत्वा तौ प्रमथ्य स्वतेजसा ॥ २४ ॥
युष्माभिर्निहतौ दृष्ट्वा तावुभौ भ्रातरौ रणे । इयं प्रहृष्टा मुदिता रुधिरं युधि पास्यति ॥ २५ ॥
इति प्रतिसमादिष्टा राक्षसास्ते चतुर्दश । तत्र जग्मुस्तया सार्धं घना वातेरिता इव ॥ २६ ॥

[ ततस्तु ते तं समुदग्रतेजसं तथापि तीक्ष्णप्रदरा निशाचराः ।
न शेकुरेनं सहसा प्रमर्दितुं वनद्विपा दीप्तमिवाग्निमुत्थितम् ॥ ]

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे एकोनविंशः सर्गः ॥ १९ ॥

---

प्रथमः श्रेष्ठः कामः अभिलाषः 'प्रथमौ प्रवरादिमौ' इति वैजयन्ती । तातेति पितृवज्ज्येष्ठसंबोधनम् ॥ २० ॥

२१-२२ ] ति० टी०—चतुर्दशेति । प्रभुतया रामे मानुषबुद्धया च सेनारहितानामेव चतुर्दशानां प्रेषणम् । यद्यपि 'याज्ञवल्क्ययुता राजंस्त्रयो वै लोकविश्रुताः । चन्द्रकान्तमहामेघविजया ब्राह्मणोत्तमाः॥ खरश्च दूषणश्चैव त्रिशिरा ब्रह्मवित्तमाः। आसंस्तेषां च शिष्याश्च चतुर्दश सहस्रधा । ' इति शान्तिधर्मे भीष्मोक्तेरग्रे तेषां शिवशापेन राक्षसत्वं दाशरथेर्विष्णोर्हस्तेन शापमोक्षश्चोक्तः, तथापि शापवशादेव राक्षसयोनित्वाद्भगवद्रूपाज्ञानमादौ प्राणवियोगकाले च शापान्तं स्मृत्वा तत्स्वरूपज्ञानात्स्वस्वरूपप्राप्तिः । ब्रह्मवित्तमा इत्यत्र ब्रह्म वेद इत्याहुः ॥ २१ ॥ २२ ॥

रा० टी०—इतीति । इति अनेन प्रकारेण तस्यां ब्रुवाणायां सत्यामन्तकोपमान् कालसदृशान् महाबलान् चतुर्दश राक्षसान् क्रुद्धः खरो व्यादिदेश आज्ञापयामास ॥ २१ ॥

गो० टी०—इतीति । चतुर्दशेति चतुर्दशसहस्राध्यक्षानित्यर्थः ॥ २१ ॥

रा० टी०—तत्प्रकारमाह—मानुषाविति । घोरं दण्डकारण्यं शस्त्रसंपन्नौ मानुषौ प्रमदया सह प्रविष्टौ ॥ २२ ॥

गो० टी०—मानुषावित्यादि ॥ २२ ॥

२३-२५ ] ति० टी०—मम भगिनीयं तेषां रुधिरं पास्यतीत्यन्वयः । अत्र रुधिरं मम पास्यतीति विपरीतार्थापत्तियुक्तवाक्येन तेषां संनिधानप्रयुक्तो बुद्धिमोहः सूचितः कविना ॥२३-२५॥

रा० टी०—ताविति । तौ मानुषौ हत्वा दुर्वृत्तां तां प्रमदामुपावर्तितुं हन्तुमर्हथ । तत्प्रयोजनमाह—इयं मम भगिनी तेषां रुधिरं पास्यति ॥ २३ ॥

रा० टी०—मनोरथ इति । हे राक्षसाः ! मम भगिन्या अयमिष्टो मनोरथः शीघ्रं संपाद्यताम् ॥ २४ ॥

रा० टी०—युष्माभिरिति । उभौ तौ भ्रातरौ रणे निहतौ दृष्ट्वा प्रहृष्टा संतुष्टा मुदिता आनन्दं प्राप्ता इयं मम भगिनी रुधिरं पास्यति ॥ २५ ॥

गो० टी०—दुर्वृत्तां भगिनीवैरूप्यमूलत्वात् अपावर्तितुम् आनेतुं तां चेति चकारेण तावपीत्युच्यते । आनयनप्रयोजनमाह—इयं चेति । अस्या अयं मनोरथः मम चायमिष्टः संपाद्यतामित्यर्थः । प्रमथ्य हत्वा ॥ २३ ॥ २४ ॥

२६ ] ति० टी०—वातनुन्ना मेघा इव जग्मुरिति संबन्धः ॥ २६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्येऽरण्यकाण्ड एकोनविंशः सर्गः ॥ १९ ॥

रा० टी०—इतीति । इति अनेन प्रकारेण प्रतिसमादिष्टास्ते चतुर्दश राक्षसाः तया तद्भगिन्या सार्धं वातेरिताः पवनप्रवाहिता घना इव जग्मुः ॥ २६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे एकोनविंशः सर्गः ॥ १९ ॥

गो० टी०—इतीति । तयोर्मार्गं प्रदर्शयन्त्येति शेषः । खरेणाप्रेरितापि गतेति बोध्यम् ॥ २६ ॥

गो० टी०—तत इति । प्रदराः बाणाः 'प्रदरा भङ्गनारीरुग्बाणाः' इत्यमरः । तथा तीक्ष्णप्रदरा अपीति योज्यम् । तमेनमित्यन्वयः । उत्थितं राक्षसान् दृष्ट्वा अभिमुखमुद्गतमिति रामविशेषणम् । उत्तरसर्गसंग्रहोऽयं श्लोकः ॥ २६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने एकोनविंशः सर्गः ॥ १९ ॥

---

१ अपावर्तितुमिति गो. पाठः । २ तौ च...स्त्रेन तेजसेति गो. पाठः । ३ श्लोकोऽयं गो. नास्ति । ४ अथेति गो. पाठः । ५ श्लोकोऽयमधिको गो. पा

## विंशः सर्गः ।

शूर्पणखया समानीतान् राक्षसान्विलोकयन् रामः सीतारक्षणे लक्ष्मणं नियोज्य सज्जीकृतधनुः स्वनामकुले संश्राव्य चेज्जिजीविषा निवर्तध्वमित्यब्रवीत्तदनादृत्य युध्यमानांश्च जघान । शूर्पणखा खरान्तिकमेत्य राक्षसवधं शशंस ।

ततः शूर्पणखा घोरा राघवाश्रममागता । रक्षसानाचचक्षे तौ भ्रातरौ सह सीतया ॥ १ ॥
ते रामं पर्णशालायामुपविष्टं महाबलम् । ददृशुः सीतया सार्धं लक्ष्मणेनापि सेवितम् ॥ २ ॥
तां दृष्ट्वा राघवः श्रीमानागतांस्तांश्च राक्षसान् । अब्रवीद्भ्रातरं रामो लक्ष्मणं दीप्ततेजसम् ॥ ३ ॥
मुहूर्तं भव सौमित्रे सीतायाः प्रत्यनन्तरः । इमानस्या वधिष्यामि पदवीमागतानिह ॥ ४ ॥
वाक्यमेतत्ततः श्रुत्वा रामस्य विदितात्मनः । तथेति लक्ष्मणो वाक्यं राघवस्य प्रपूजयन् ॥ ५ ॥
राघवोऽपि महच्चापं चामीकरविभूषितम् । चकार सज्यं धर्मात्मा तानि रक्षांसि चाब्रवीत् ॥ ६ ॥
पुत्रौ दशरथस्यावां भ्रातरौ रामलक्ष्मणौ । प्रविष्टौ सीतया सार्धं दुश्चरं दण्डकावनम् ॥ ७ ॥
फलमूलाशनौ दान्तौ तापसौ ब्रह्मचारिणौ । वसन्तौ दण्डकारण्ये किमर्थमुपहिंसथ ॥ ८ ॥
युष्मान्पापात्मकान्हन्तुं विप्रकारान्महाहवे । ऋषीणां तु नियोगेन संप्राप्तः सशरासनः ॥ ९ ॥

१-३ ]ति० टी०–तत इति । सह सीतया वर्तमानाविति शेषः ॥ १-३ ॥

रा० टी०–खरप्रेषितचतुर्दशराक्षसागमनानन्तरकालिकं वृत्तान्तमाह–तत इत्यादिभिः । ततः चतुर्दशराक्षसागमनानन्तरं राघवाश्रममागता प्राप्ता शूर्पणखा सीतया सह भ्रातरौ रामलक्ष्मणौ राक्षसान् राक्षसेभ्यः आचचक्षे कथयामास ॥१॥

रा० टी०–ते इति । ते शूर्पणखया बोधिताः राक्षसाः पर्णशालायामुपविष्टं रामं ददृशुः ॥ २ ॥

रा० टी०–तामिति । श्रीमान् राघवो रामः आगतां तां शूर्पणखां तानागतान् राक्षसांश्च दृष्ट्वा लक्ष्मणमब्रवीत् ॥ ३ ॥

गो० टी०–अथ चतुर्दशराक्षसवधो विंशे–ततः शूर्पणखेत्यादि ॥ १-३ ॥

४-५ ] ति० टी०–प्रत्यनन्तरः प्रत्यासन्नः पालक इति यावत् । अस्याः पदवीं मार्गम् अस्याः पक्षपातेनास्मद्वधार्थमागतानिति यावत् ॥ ४ ॥५ ॥

रा० टी०–तद्वचनाकारमाह–मुहूर्तमिति । हे सौमित्रे ! सीतायाः प्रत्यनन्तरः रक्षणार्थं समीपवर्ती मुहूर्तं भव । तत्प्रयोजनमाह–अस्या राक्षस्याः पदवीं मार्गमागतान् तत्सहायत्वेन प्राप्तान् इमान् राक्षसान् इह अस्मिन्काले वधिष्यामि॥४॥

गो० टी०–मुहूर्तमिति । प्रत्यनन्तरः प्रत्यासन्नः रक्षक इति यावत् । अस्याः पदवीमागतानित्यन्वयः ॥ ४ ॥

रा० टी०–वाक्यमिति । विदितात्मनो रामस्य एतत् कथितं वाक्यं श्रुत्वा लक्ष्मणः रामस्य वाक्यं तथेति प्रत्यपूजयत् ॥ ५ ॥

गो० टी०–वाक्यमिति । प्रत्यपूजयत् परिपालितवान्॥५॥

६-७ ] ति० टी०–चामीकरं स्वर्णम् ॥ ६ ॥ ७ ॥

८ ] ति० टी०–उपहिंसथ यूयम् अस्मानिति शेषः ॥ ८ ॥

रा० टी०–राघव इति । राघवो रामः चामीकरविभूषितं महच्चापं सज्यं ज्यासहितं चकार रक्षांसि अब्रवीच्च ॥ ६ ॥

गो० टी०–राघवोऽपीति । चामीकरं स्वर्णम् ॥ ६ ॥

रा० टी०–तद्वचनाकारमाह–पुत्राविति । दुश्चरं दण्डकावनं प्रविष्टौ अत एव दण्डकारण्ये वसन्तौ दशरथस्य पुत्रौ आवां किमर्थमुपहिंसथ, एतेन अनपराधिकर्मकहिंसनं न युक्तमिति सूचितम् । श्लोकद्वयमेकान्वयि ॥ ७ ॥ ८ ॥

गो० टी०–स्वस्य कपटवेषत्वं परिहरन्नाह–पुत्रावित्यादि । आवां किमर्थमुपहिंसथ ॥ ७ ॥ ८ ॥

९ ] ति० टी०–अनपकारिणामस्माकं हिंसार्थया युष्मत्प्रवृत्त्या युष्मद्वधार्थमस्मदपेक्षितनिमित्तं संपन्नमित्याह–युष्मानिति । विप्रकारान्भवत्कृतपीडारूपान्निमित्ताजातनियोगेन युष्मान्हन्तुं सशरासनोऽहं संप्राप्तः संप्राप्तनिमित्तः, यद्वा विप्रकारानित्यत्रआयजन्तम् अस्मास्वस्मदीयेषु च वृथा वैरवतो युष्मानित्यर्थः ॥ ९ ॥

रा० टी०–नन्वस्मदपराधादर्शनेऽपि त्वया किमर्थं धनुः सज्यीकृतमित्यत आह–युष्मानिति । विप्रकारात् युष्मत्कृतानेकविधब्राह्मणापराधात् हेतोः ऋषीणां नियोगेन ऋषिकर्तृकभवद्वधनियोजनेन पापात्मकान् युष्मान् हन्तुं सशरासनः शरासनसहितोऽहं संप्राप्तः ॥ ९ ॥

गो० टी०–प्रत्युत युष्मानेवाहं हन्तुमागत इत्याह–युष्मानिति । विप्रकारान् हिंसकान् भवतां प्रथमप्रवृत्तिमाकाङ्क्षन् स्थितोऽस्मीत्यर्थः ॥ ९ ॥

१ रक्षसामिति गो. पाठः । २ वैदेह्या लक्ष्मणेन चेति गो. पाठः । ३ आगतां तां च राक्षसीमिति गो. पाठः । ४ रामस्य प्रत्यपूजयदिति गो. रा. पाठः । ५ धर्मचारिणाविति गो. रा. पाठः । ६ प्राप्तोऽहं सशरायुध इति गो. पाठः ।

तिष्ठतैवात्र संतुष्टा नोपावर्तितुमर्हथ । यदि प्राणैरिहार्थो वो निवर्तध्वं निशाचराः ॥ १० ॥
तस्य तद्वचनं श्रुत्वा राक्षसास्ते चतुर्दश । ऊचुर्वाचं सुसंक्रुद्धा ब्रह्मघ्नाः शूलपाणयः ॥ ११ ॥
संरक्तनयना घोरा रामं संरक्तलोचनम् । परुषा मधुराभाषं हृष्टा दृष्टपराक्रमम् ॥ १२ ॥
क्रोधमुत्पाद्य नो भर्तुः खरस्य सुमहात्मनः । त्वमेव हास्यसे प्राणान्सद्योऽस्माभिर्हतो युधि ॥ १३ ॥
का हि ते शक्तिरेकस्य बहूनां रणमूर्धनि । अस्माकमग्रतः स्थातुं किं पुनर्योद्धुमाहवे ॥ १४ ॥
एभिर्बाहुप्रयुक्तैर्नः परिघैः शूलपट्टिशैः । प्राणांस्त्यक्ष्यसि वीर्यं च धनुश्च करपीडितम् ॥ १५ ॥
इत्येवमुक्त्वा संरब्धा राक्षसास्ते चतुर्दश । उद्यतायुधनिस्त्रिंशा राममेवाभिदुद्रुवुः ॥ १६ ॥
चिक्षिपुस्तानि शूलानि राघवं प्रति दुर्जयम् । तानि शूलानि काकुत्स्थः समस्तानि चतुर्दश ॥ १७ ॥
तावद्भिरेव चिच्छेद शरैः काञ्चनभूषितैः । ततः पश्यन्महातेजा नाराचान्सूर्यसंनिभान् ॥ १८ ॥

---

१० ] ति० टी०—अतः संतुष्टा मत्तः प्राप्तयुद्धसंतोषा यूयमत्र तिष्ठतैव नोपावर्तितुमर्हथ । 'उपसर्पितुम्' इति पाठेऽप्ययमेवार्थः । इहार्थः इहलोके देहे चेत्यर्थः ॥ १० ॥

रा० टी०—नन्विममेव भवदपराधं ज्ञात्वा वयं युद्धे प्रवृत्ता इत्यत आह—तिष्ठतेति । अत्र संग्रामे यदि संतुष्टाः यूयं तर्हि तिष्ठत उपसर्पितुं पलायितुं नार्हथ यदि च इह लोके वो युष्माकं प्राणैरर्थः प्रयोजनं तर्हि निवर्तध्वम् । यदीत्युभयान्वयि ॥ १० ॥

गो० टी०—तिष्ठतैवेति । अत्रैव संतुष्टाः अभीता इति यावत् । तिष्ठत नोपावर्तितुमर्हथेति मा पलायध्वमित्यर्थः । यदि वा प्राणैः अर्थः प्रयोजनं प्राणापेक्षास्ति चेन्निवर्तध्वमित्यर्थः ॥ १० ॥

११ ] ति० टी०—ब्रह्मघ्ना इत्यार्षः ॥ ११ ॥

रा० टी०—तस्येति । तस्य रामस्य तद्वचनं श्रुत्वा संक्रुद्धाः ब्रह्मघ्नाः संरक्तनयनाः रामवचनश्रवणजनितकोपहेतुकारुण्यविशिष्टनेत्रवन्तः घोराः क्रूराः परुषाः रूक्षस्वभावाः ते खरप्रेषिताः चतुर्दश राक्षसाः संरक्तनयनं स्वाभाविकारुण्यविशिष्टनयनविशिष्टं, मधुराभाषं मधुरमाभाषणं यस्य तं, दृष्टपराक्रमं दृष्टः स्वबुद्ध्या इयत्तीकृतः पराक्रमः राक्षसबलं येन तं राममूचुः । एतेन अदृष्टपराक्रममिति छेदः सन्धिरार्ष इति भट्टोक्तिश्चिन्त्या । श्लोकद्वयमेकान्वयि ॥ ११ ॥ १२ ॥

गो० टी०—तस्येति । ब्रह्मघ्नाः ब्राह्मणघ्नाः ॥ ११ ॥

१२-१३ ] ति० टी०—अदृष्टपराक्रममिति छेदः । संधिरार्षः ॥ १२ ॥ १३ ॥

रा० टी०—तद्वचनाकारमाह—क्रोधमिति । सुमहात्मनो नोऽस्माकं भर्तुः स्वामिनः खरस्य क्रोधमुत्पाद्य अस्माभिर्युधि हतस्त्वं प्राणान् सद्यः हास्यसे एव ॥ १३ ॥

गो० टी०—क्रोधमित्यादि ॥ १२ ॥

१४-१७ ] ति० टी०—स्थातुमपि का ते शक्तिरिति योजना ॥ १४-१७ ॥

रा० टी०—ननु युद्धे जयपराजययोरीश्वराधीनत्वात्कथं ममैव हतिरुच्यते इत्यत आह—केति । रणमूर्धनि महासंग्रामे बहूनामस्माकमग्रतः स्थातुमेकस्य तव का शक्तिः नैवेत्यर्थः । आहवे योद्धुं नैवेति किमु वक्तव्यम् , एतेन काव्यापत्यलंकारेण द्रुतं त्वया पलायितव्यमिति सूचितम् ॥ १४ ॥

गो० टी०—का हीति । शक्तिः बलम् 'शक्तिर्बले प्रभावादौ' इति विश्वः ॥ १३ ॥

रा० टी०—विपक्षे दोषमाह—एभिरिति । बाहुप्रयुक्तैः अस्मद्बाहुभ्यः प्रक्षिप्तैः परिघादिभिः करपीडितं करेण गृहीतं धनुः वीर्यं च प्राणांश्च त्यक्ष्यसि ॥ १५ ॥

गो०टी०—एहीति।परिघैः गदाभेदैः पट्टिशैः असिभेदैः॥१४

रा० टी०—इतीति । संरब्धाः प्राप्तयुद्धविषयकावेशाः अत एव उद्यतायुधनिस्त्रिंशाः उद्यतानि आयुधानि निस्त्रिंशाः खड्गाश्च येषां ते राक्षसाः राममेवमुक्त्वा अभिदुद्रुवुः । खड्गस्य आयुधत्वेऽपि पृथगुपादानं गोबलीवर्दन्यायेन वैशिष्ट्यबोधनाय ॥ १६ ॥

रा० टी०—चिक्षिपुरिति । दुर्जयं जेतुमशक्यं राघवं प्रति तानि उद्यतानि शूलानि चिक्षिपुः । काकुत्स्थो रामः समस्तानि युगपदागतानि चतुर्दश शूलानि तावद्भिः चतुर्दशसंख्यापरिच्छिन्नैः काञ्चनभूषितैः शरैः चिच्छेद । सार्धश्लोक एकान्वयी ॥ १७ ॥

गो०टी०—इतीति।तानि शूलपाणय इति पूर्वमुक्तानि१५-१७

१८ ] ति० टी०—तावद्भिश्चतुर्दशरक्षोविमुक्तचतुर्दशशूलसंख्याकैः ॥ १८ ॥

रा० टी०—तत इति । ततः पश्चात् शूलच्छेदानन्तरं परमक्रुद्धः महातेजाः रामः शिलाशितान् शाणोपलसंस्कृतान् सूर्यसंनिभान् चतुर्दश नाराचान् बाणान् जग्राह । अर्धद्वयमेकान्वयि ॥ १८ ॥

गो० टी०—तत इति । नाराचान् अफलकान् बाणान् शिलाशितान् शिलास्वपि शितान् शिलानिर्भेदक्षमानित्यर्थः शाणोपलसंनिघृष्टानित्यप्याहुः ॥ १७ ॥

---

१ वेति गो. रा. पाठः । २ श्लोकोऽयं गो. नास्ति । ३ अद्येति गो. पाठः । ४ न इति गो. पाठः । ५ अर्धमेतत् गो. नास्ति । ६ भूषणैः गो. पाठः । ७ पश्चादिति गो. रा. पाठः ।

जग्राह परमक्रुद्धश्चतुर्दश शिलाशितान् । गृहीत्वा धनुरायम्य लक्ष्यानुदिश्य राक्षसान् ॥ १९ ॥
मुमोच राघवो बाणान्वज्रानिव शतक्रतुः [[1]रुक्मपुङ्खाश्च विशिखा दीप्ता हेमविभूषिताः] ॥
ते भित्त्वा रक्षसां वेगाद्वक्षांसि [2]रुधिरप्लुताः ॥ २० ॥
विनिष्पेतुस्तदा भूमौ [3]वल्मीकादिव पन्नगाः । [4]तैर्भग्नहृदया भूमौ [5]भिन्नमूला इव द्रुमाः ॥ २१ ॥
निपेतुः [6]शोणितस्नाता विकृता विगतासवः । तान्भूमौ पतितान्दृष्ट्वा राक्षसी क्रोधमूर्छिता ॥ २२ ॥
[ [7]परित्रस्ता पुनस्तत्र व्यसृजद्भैरवस्वनान् । सा नदन्ती पुनर्नादं जवाच्छूर्पणखा पुनः ॥ ]
[8]उपगम्य खरं सा तु किंचित्संशुष्कशोणिता । पपात पुनरेवार्ता सनिर्यासेव वल्लरी ॥ २३ ॥
भ्रातुः समीपे शोकार्ता ससर्ज निनदं [9]महत् । सस्वरं मुमुचे बाष्पं [10]विवर्णवदना तदा ॥ २४ ॥
निपातितान्प्रेक्ष्य रणे तु राक्षसान्प्रधाविता शूर्पणखा पुनस्ततः ।
वधं च तेषां निखिलेन रक्षसां शशंस सर्वं भगिनी खरस्य सा ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे विंशतितमः सर्गः ॥ २० ॥

---

१९-२०]ति० टी०-शिलाशितान्शाणोपलनिघृष्टान् १९-२०

रा० टी०-गृहीत्वेति । धनुः गृहीत्वा आयम्य शरैः संयोज्य राक्षसान् लक्ष्यानुद्दिश्य राघवो रामः वज्रान् शतक्रतुरिव मुमोच ॥ १९ ॥

गो० टी०-गृहीत्वेति । लक्ष्यान् वेध्यान् वज्रानित्यभूतोपमा ॥ १८ ॥

रा० टी०-ते इति । ते राममुक्ताः शराः वेगात् रक्षसां वक्षांसि भित्त्वा रुधिरप्लुताः सन्तः वल्मीकात्पन्नगाः कृष्णसर्पा इव विनिष्पेतुः ॥ २० ॥

गो० टी०-रुक्मपुङ्खा इति । न्यमजन्त न्यमजन्त चेत्यर्थः ॥ १९ ॥

२१-२२]ति० टी०-विनिष्पेतुर्विनिष्पत्य च निममज्जुः । वल्मीकाद्वल्मीकं प्राप्य पन्नगा इव निमग्ना इत्यर्थः ॥२१॥२२॥

रा० टी०-तैरिति । तैः रामबाणैः भग्नहृदयाः अत एव शोणितस्नाताः रुधिरालिप्ताः अत एव विगतासवः गतप्राणास्ते राक्षसाः छिन्नमूला द्रुमा इव भूमौ विनिष्पेतुः ॥ २१ ॥

गो० टी०-त इति । विकृताः विरूपाः, विगतासवः विगतप्राणाः ॥ २० ॥

रा० टी०-तानिति । भूमौ पतितांस्तान् राक्षसान् दृष्ट्वा क्रोधमूर्छिता किंचित् संशुष्कशोणिता सा राक्षसी खरमुपागम्य प्राप्य सनिर्यासा निर्याससहिता वल्लरी लता इव पुनः पपात ॥ २२ ॥ २३ ॥

गो० टी०-तानिति । भैरवस्वनान् भयंकरशब्दान् ॥२१॥

२३-२४ ] ति० टी०-नासाकर्णक्षतांशे किंचित्संशुष्कशोणितत्वात्सनिर्यासा वल्लरीव ॥ २३ ॥ २४ ॥

रा० टी०-भ्रातुरिति । तदा पतनसमये विवर्णवदना विकृतमुखा शोकार्ता राक्षसी सस्वरं बाष्पमश्रु मुमोच महत् निनदं शब्दं च ससर्ज चकार ॥ २४ ॥

गो० टी०-सेति । महानादं नदन्ती कुर्वन्तीत्यर्थः । निर्यासः क्षतप्रसृतत्वक्रसः, सल्लकीलताविशेषः ॥ २२-२४ ॥

२५ ] ति० टी०-उत्तरसर्गार्थस्य संक्षेपतः कथनम् ॥२५॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे विंशतितमः सर्गः ॥२०॥

रा० टी०-निपातितानिति । रणे निपातितान् रामबाणहतान् राक्षसान् प्रेक्ष्य प्रधाविता प्रद्रुता खरस्य भगिनी शूर्पणखा तेषां रक्षसां निखिलेन साकल्येन वधं सर्वं तत्रत्यवृत्तं च शशंस ॥ २५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे विंशतितमः सर्गः ॥ २० ॥

गो० टी०-पुनः सर्गार्थं संक्षेपेणाह-निपातितानिति । दृश्य दृष्ट्वा ॥ २५ ॥

अस्मिन् सर्गे पञ्चविंशतिः श्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने विंशः सर्गः ॥ २० ॥

---

१ एतदाद्यर्धं गो. अधिकम् । २ रुधिराप्लुता इति गो. पाठः । ३ न्यमज्यन्ताशनिस्वना इति गो. पाठः । ४ ते भिन्नहृदया भूमौ इति गो. पाठः । ५ छिन्नमूला इति गो. रा. पाठः । ६ शोणितार्द्राङ्गा इति गो. पाठः । ७ श्लोकोऽयमधिकः गो. पाठे । ८ उपागम्येति रा. पाठः । ९ मुहुरिति गो. पाठः । १० विषण्णवदनेति गो. पाठः । ११ मुखीति युक्तं भाति ।

## एकविंशः सर्गः ।

प्रत्यागत्याऽऽक्रोशन्तीं शूर्पणखां खरो रोदनकारणं पृच्छति । साऽपि प्रेषितराक्षसानां नाशमुक्त्वा खरं युद्धाय प्रोत्साययति ।

स पुनः पतितां दृष्ट्वा क्रोधाच्छूर्पणखां[1] पुनः । उवाच व्यक्तया वाचा तामनर्थार्थमागताम् ॥ १ ॥
मया त्विदानीं शूरास्ते राक्षसाः[2] पिशिताशनाः । त्वत्प्रियार्थं विनिर्दिष्टाः किमर्थं रुद्यते पुनः ॥ २ ॥
भक्ताश्चैवानुरक्ताश्च हिताश्च मम नित्यशः । ह[3]न्यमाना न हन्यन्ते न न कुर्युर्वचो मम ॥ ३ ॥
किमेतच्छ्रोतुमिच्छामि कारणं यत्कृते पुनः । हा नाथेति विनर्दन्ती सर्पवच्चेष्टसे[4] क्षितौ ॥ ४ ॥
अनाथवद्विलपसि [5]किं नु नाथे मयि स्थिते । उत्तिष्ठोत्तिष्ठ मा [6]मैवं वैक्लव्यं त्यज्यतामि[7]ति ॥ ५ ॥
इत्येवमुक्ता दुर्धर्षा खरेण परिसान्त्विता । विमृज्य नयने सास्रे खरं भ्रातरमब्रवीत् ॥ ६ ॥
अस्मीदानीमहं प्राप्ता [8]हतश्रवणनासिका । शोणितौघपरिक्लिन्ना त्वया च परिसान्त्विता ॥ ७ ॥
प्रेषिताश्च त्वया [9]शूरा राक्षसास्ते चतुर्दश । निहन्तुं राघवं [10]घोरं मत्प्रियार्थं सलक्ष्मणम् ॥ ८ ॥
ते तु रामेण सामर्षाः शूलपट्टिशपाणयः । समरे निहताः सर्वे सायकैर्मर्मभेदिभिः ॥ ९ ॥
तान्भूमौ पतितान्दृष्ट्वा क्षणेनैव महा[11]जवान् । रामस्य च महत्कर्म महांस्त्रासोऽभवन्मम ॥ १० ॥

---

१-२ ] ति० टी०—अनर्थार्थं स्वकुलस्येति शेषः ॥ १ ॥ २ ॥

रा० टी०—शूर्पणखापुनःपतनानन्तरकालिकं वृत्तान्तमाह—स इति । अनर्थार्थं राक्षसकुलानर्थसिद्ध्यर्थं पुनरागतां पतितां शूर्पणखां दृष्ट्वा क्रोधात् व्यक्तया वाचा स खरः उवाच ॥ १ ॥

रा० टी०—तद्वचनाकारमाह—मयेति । पिशिताशनाः रुधिरभक्षाः शूरा राक्षसाः त्वत्प्रियार्थमिदानीमेव विनिर्दिष्टाः पुनः किमर्थं रुद्यते त्वयेति शेषः ॥ २ ॥

गो० टी०—अथ खरप्रोत्साहनमेकविंशे—स पुनरित्यादि । अनर्थार्थं सर्वराक्षसविनाशार्थम् ॥ १ ॥ २ ॥

३ ] ति० टी०—भक्ता अत एव मय्यनुरक्ता अत एव मम हिताः परैर्हन्यमाना अपि ये न हन्यन्ते न हन्तुं शक्यन्ते । मम वचो न कुर्युरिति च न तत्किमर्थं रुद्यत इत्यर्थः ॥ ३ ॥

रा० टी०—तत्कर्तृकानिष्टसंभावना तु नास्तीति बोधयन्नाह—भक्ता इति । अनुरक्ताः मद्विषयकानुरागवन्तः अत एव मम हिताः अत एव नित्यशो भक्ताः मत्सेवानिरताः राक्षसाः रिपुभिः हन्यमानाः अपि न हन्यन्ते, एतेन तत्कर्मकवधशङ्का नास्तीति सूचितम् । मम वचो न कुर्युरिति न एतेन तद्गमनाभावशङ्का नास्तीति व्यक्तम् ॥ ३ ॥

गो० टी०—भक्ता इति । भक्ताः विश्वासभाजः, हिताः हितपराः, न कुर्युरिति न किंतु कुर्युरेवेत्यर्थः ॥ ३ ॥

४-६ ] ति० टी०—यत्कृते यच्छोकनिमित्तम् ॥ ४-६ ॥

रा० टी०—किमिति । यत्कृते यदर्थं हा नाथेति विनर्दन्ती सती सर्पवत् क्षितौ चेष्टसे तदेतत् किमनिर्वचनीयं कारणं श्रोतुमिच्छामि ॥ ४ ॥

गो० टी०—किमिति । किमेतदिति विस्मये यत्कृते य[...] कृते कृत इत्यव्ययं यन्निमित्तं लुठसि तस्य कारणं श्रोतुमिच्छामी[...]त्यन्वयः ॥ ४ ॥

रा० टी०—अनाथवदिति । मयि नाथे स्थिते स[...] अनाथवत् त्वं किं विलपसि नु अनुचितमेतत् इति हेतोः [...] मा मा न विलपेत्यर्थः, वैक्लव्यं त्यज्यताम् अतः उत्तिष्ठोत्तिष्ठ[...]

गो० टी०—अनाथवदिति । विलपसीति किमिति शेषः[...] वैक्लव्यं कातर्यम् इह मत्समीपे ॥ ५ ॥

रा० टी०—इतीति । खरेण इत्येवमुक्ता अत एव प[रि]सान्त्विता सान्त्वं प्रापिता दुर्धर्षा शूर्पणखा सास्रे अश्रुसहि[ते] नेत्रे विमृज्य भ्रातरं खरमब्रवीत् ॥ ६ ॥

गो० टी०—इतीति । दुर्धर्षा दुःसाध्या ॥ ६ ॥

७-९ ] ति० टी०—अहमिदानीं पूर्वं त्वत्समीपं प्रा[प्ता]स्मि त्वया च परिसान्त्वितास्मि । शूराश्च मदर्थं प्रेषिता[...] वृत्तान्तं वक्ष्यामीति ॥ ७-९ ॥

रा० टी०—तद्वचनाकारमाह—अस्मीति । शोणितौघप[रि]क्लिन्नाहं त्वया परिसान्त्विताऽस्मि ॥ ७ ॥

रा० टी०—प्रेषिता इति । घोराः क्रूराः सामर्षाः अ[...] राधासहनसहिताः शूलादिपाणयः शूरा ये राक्षसाः मत्प्रि[यार्थं] सलक्ष्मणं रामं हन्तुं प्रेषितास्ते सर्वे मर्मभेदिभिः सायकै[...] बाणैः समरे निहताः । श्लोकद्वयमेकान्वयि ॥ ८ ॥ ९ ॥

गो० टी०—खरोक्तमङ्गीकरोति—अस्मीत्यादिना ॥ ७-[९ ॥]

१० ] ति० टी०—क्षणेनैव न तु चिरकालयुद्धपूर्वमित्यर्[थः ।] रामस्य च महत्कर्म दृष्ट्वेत्यनुषङ्गः ॥ १० ॥

---

१ खर इति गो. पाठः । २ रुधिराशना इति गो. पाठः । ३ घ्नन्तोऽपि न निहन्तव्या इति गो. पाठः । ४ लुठसीति गो. पाठः । ५ नाथे मयि संस्थिते इति गो. पाठः । ६ मैषीरिति गो. पाठः । ७ इहेति गो. पाठः । ८ हतेति गो. पाठः । ९ वीरेति गो. पाठः । १० क्रोधादिति गो. [...] इति रा. पाठः । ११ बलानिति गो. पाठः ।

[1]सास्मि भीता समुद्विग्ना विषण्णा च निशाचर। शरणं त्वां पुनः प्राप्ता सर्वतो भयदर्शिनी ॥ ११ ॥
विषादनक्राध्युषिते परित्रासोर्मिमालिनि । किं मां न त्रायसे मग्नां विपुले शोकसागरे ॥ १२ ॥
एते च निहता भूमौ रामेण निशितैः शरैः । ये [2]च मे पदवीं प्राप्ता राक्षसाः पिशिताशनाः ॥ १३ ॥
मयि ते यद्यनुक्रोशो यदि रक्षःसु तेषु च । [3]रामेण यदि शक्तिस्ते तेजो वास्ति निशाचर ॥ १४ ॥
दण्डकारण्यनिलयं जहि राक्षसकण्टकम् । यदि [4]राममित्रघ्नं न त्वमद्य वधिष्यसि ॥ १५ ॥
तव चैवाग्रतः प्राणांस्त्यक्ष्यामि निरपत्रपा । बुद्ध्याहमनुपश्यामि न त्वं रामस्य संयुगे ॥ १६ ॥
स्थातुं प्रतिमुखे शक्तः सबलोऽपि[5] महारणे । शूरमानी न शूरस्त्वं मिथ्यारोपितविक्रमः ॥ १७ ॥
[6]अपयाहि जनस्थानात्त्वरितः सहबान्धवः । [7]जहि त्वं समरे मूढान्यथा तु कुलपांसन ॥ १८ ॥
मानुषौ [8]तौ न शक्नोषि हन्तुं [9]वै रामलक्ष्मणौ । निःसत्त्वस्याल्पवीर्यस्य वासस्ते कीदृशस्त्विह ॥ १९ ॥

रा० टी०–तानिति । महाजवान् अतिवेगाँस्तान् भूमौ पतितान् राक्षसान् रामस्य महत्कर्म अतिधैर्यबाणप्रक्षेपणादि च दृष्ट्वा मम महान् त्रासोऽभवत् ॥ १० ॥

११-१२ ] ति० टी०–भीता अत एव समुद्विग्ना कम्पमाना अत एत विषण्णा दुःखिता, सर्वतो भयदर्शिनी सर्वतो रामप्रतिभासनात् ॥ ११ ॥ १२ ॥

रा० टी०–सेति । हे निशाचर ! सा दृष्टरामपराक्रमाहं भीतास्मि अत एव समुद्विग्ना उद्विग्नचित्ता अत एव विषण्णा उदासीनचित्ता सर्वतः सर्वप्रदेशेषु भयदर्शिनी अहं शरणं रक्षकं त्वां पुनः प्राप्तास्मि । अस्मीत्युभयान्वयि ॥ ११ ॥

गो० टी०–अहमस्मीति । समुद्विग्ना भीता, विषण्णा दुःखिता। सर्वतो भयदर्शिनी सर्वत्र रामप्रतिभासवतीति भावः ११

रा० टी०–विषादेति । विषाद एव नक्रो मकरस्तेन अध्युषिते सेविते परित्रास एव ऊर्मिमाला तरङ्गसमूहस्तद्वति विपुले विशाले शोकसागरे मग्नं मां किं न त्रायसे ॥ १२ ॥

गो० टी०–विषादेति । नक्रो ग्राहः ॥ १२ ॥

१३ ] ति० टी०–ये च मे पदवीं प्राप्तास्त एते भूमौ स्थितेन पदातिना रामेण हताः ॥ १३ ॥

रा० टी०–एते इति । ये राक्षसाः मे पदवीं मार्गं प्राप्ताः मया सह गता इत्यर्थः, ते रामेण निहताः ॥ १३ ॥

गो० टी०–क्रोधभीतिभ्यां पूर्वोक्तं विस्मृत्य पुनराह–एते चेति ॥ १३ ॥

१४-१५]ति०टी०–यदि ते शक्तिः योद्धुमिति शेषः १४॥१५

रा० टी०–मयीति । मयि तेषु रक्षस्सु च यदि ते अनुक्रोशो दया यदि च रामेण सह योद्धुमिति शेषः, शक्तिः तेजः शौर्यं चास्ति तदा दण्डकारण्यं निलयो निवासो यस्य तं राक्षसकण्टकं रामं जहि । सार्धश्लोक एकान्वयी ॥ १४ ॥

गो० टी०–मयीति । अनुक्रोशो दया शक्तिरिति तुल्येति शेषः ॥ १४ ॥

रा० टी०–यदीति । अमित्रघ्नममित्रसूदनं रामं यदि न वधिष्यसि तदा निरपत्रपाहं तवाग्रे प्राणाँस्त्यक्ष्यामि ॥ १५ ॥

गो० टी०–यदीति । निरपत्रपा निर्लज्जा हृतकर्णनासात्वादिति भावः ॥ १५ ॥

१६ ] ति० टी०–निरपत्रपा छिन्नकर्णनासिकत्वात् । खरस्य क्रोधोत्पत्त्यर्थमाह–बुद्ध्येति ॥ १६ ॥

रा० टी०–युद्धाय तत्क्रोधमुत्पादयन्ती आह–बुद्ध्येति । सबलः ससैन्योऽपि त्वं संयुगे संग्रामे रामस्य प्रतिमुखे संमुखे स्थातुं न शक्त इति बुद्धया ज्ञानचक्षुषाऽहं पश्यामि अत एव शूरमानी त्वं महारणे शूरो न दृश्यसे इति शेषः, अत एव मिथ्याऽऽरोपितः अभिनिवेशितः विक्रमः स्वस्मिन् पराक्रमो येन सोऽसि । सार्धश्लोक एकान्वयी ॥ १६ ॥ १७ ॥

गो० टी०–बुद्ध्येति। प्रतिमुखे अग्रे सबलः ससैन्यः ॥१६॥

१७] ति० टी०–सबलोऽपि चतुरङ्गबलोपेतोऽपि महारणे इत्युत्तरान्वयि। मिथ्या मृषैव स्वस्मिन्नारोपितो विक्रमो येन१७

गो० टी०–शूरमानीति । मिथ्येति मिथ्यावचोभिरित्यर्थः, आरोपितविक्रमः कल्पितपराक्रमः ॥ १७ ॥ १८ ॥

१८ ] ति० टी०–अतस्त्वं सहबान्धवस्त्वरितो जनस्थानादपयाहि निर्गच्छ समरे तौ त्वं जहि हे कुलपांसन ! अन्यथा तु ॥ १८ ॥

रा० टी०–ननु कथं मयि शूरत्वं स्यादित्यत आह–अपेति। सहबान्धवस्त्वं जनस्थानात् त्वरितः सन्नपयाहि एतत्स्थानान्निर्गच्छ । समरे तावेतौ जहि हे मूढ ! हे कुलपांसन ! अन्यथा यदि तौ मानुषौ हन्तुं न शक्नोषि तर्हि निस्सत्त्वस्य निर्बलस्य अल्पवीर्यस्य अल्पप्रभावस्य तव इह वने वासः कीदृशः न भविष्यतीत्यर्थः। श्लोकद्वयमेकान्वयि ॥ १८ ॥ १९ ॥

१९ ] ति० टी०–तदेव व्याचष्टे–मानुषाविति । तौ

१ अहमस्मीति गो. पाठः । २ ऽपीति गो. पाठः । ३ अर्धमेतन्निःसत्त्वस्येत्यस्मात्पूर्वं गो. पाठे । ४ रामं ममामित्रमिति गो. पाठः । ५ च महात्मन इति गो. पाठः । ६ अर्धमेतन्निःसत्त्वस्येत्यर्धोत्तरं गो. पाठे । ७ दण्डकारण्यनिलयं जहि तमिति गो. पाठः । ८ याविति गो. पाठः । ९ ताविति गो. पाठः ।

रामतेजोभिभूतो हि त्वं क्षिप्रं विनशिष्यासि । स हि तेजःसमायुक्तो रामो दशरथात्मजः ॥ २० ॥
भ्राता चास्य महावीर्यो येन चास्मि विरूपिता । एवं विलप्य बहुशो राक्षसी प्रदरोदरी ॥ २१ ॥
भ्रातुः समीपे शोकार्ता नष्टसंज्ञा बभूव ह । कराभ्यामुदरं हत्वा रुरोद भृशदुःखिता ॥ २२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्ड एकविंशः सर्गः ॥ २१ ॥

## द्वाविंशः सर्गः ।

शूर्पणखां समाश्वास्य खरो दूषणं प्रति सेनां संनाहयितुमादिश्यानायितरथमधिरोहंश्चतुर्दशसहस्रराक्षससेनया युद्धाय प्रतिष्ठते

एवमाधर्षितः शूरः शूर्पनख्या खरस्ततः । उवाच रक्षसां मध्ये खरः खरतरं वचः ॥ १ ॥
तवापमानप्रभवः क्रोधोऽयमतुलो मम । न शक्यते धारयितुं लवणाम्भ इवोल्बणम् ॥ २ ॥
न रामं गणये वीर्यान्मानुषं क्षीणजीवितम् । आत्मदुश्चरितैः प्राणान्हतो योऽद्य विमोक्ष्यते ॥ ३ ॥
बाष्पः संधार्यतामेष संभ्रमश्च विमुच्यताम् । अहं रामं सह भ्रात्रा नयामि यमसादनम् ॥ ४ ॥

---

इन्तुं यदि न शक्नोषि तदा निर्वीर्यत्वादिगुणस्य ते इह कीदृशो वासः जुगुप्सित एवेत्यर्थः ॥ १९ ॥

गो० टी०—निःसत्त्वस्येति । कीदृश इति अत्यन्तायोग्य इत्यर्थः ॥ १९–२१ ॥

२० ] ति० टी०—तामेव शक्तिं द्रढयति—रामतेज इति २०

रा० टी०—वासाभावे कारणमाह—रामेति । रामतेजोभिभूतः रामतेजसा पराभूतस्त्वं क्षिप्रं विनशिष्यसि विनङ्क्ष्यसि । तत्र हेतुः दशरथात्मजः तेजस्समायुक्तोऽस्ति येनाहं विरूपितास्मि सोऽस्य रामस्य भ्राता महावीर्योऽस्ति । सार्धश्लोक एकान्वयी ॥ २० ॥

२१–२२ ] ति० टी०—प्रदरोदरी निम्नोदरी ॥ २१ ॥२२॥
इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्ड एकविंशः सर्गः ॥ २१ ॥

रा० टी०—एवमिति । प्रदरोदरी निम्नोदरविशिष्टा राक्षसी एवं बहुशो विलप्य भ्रातुः समीपे नष्टसंज्ञा विध्वस्तविवेका बभूव अत एव कराभ्यामुदरं हत्वा रुरोद ॥ २१ ॥ २२ ॥
इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे एकविंशतितमः सर्गः ॥ २१ ॥

गो० टी०—एवमिति । विततोदरी प्रहारार्थं विस्तृतोदरी २२
अत्र द्वाविंशतिः श्लोकाः ॥
इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने एकविंशः सर्गः ॥ २१ ॥

१ ] ति० टी०—आधर्षितः कोपादवमानितः । खरस्तीक्ष्णगुणः खरतरं तीक्ष्णतरम् ॥ १ ॥

रा०टी०—शूर्पणखारोदनानन्तरकालिकं वृत्तान्तमाह—एवमित्यादिभिः । शूर्पणख्या एवमाधर्षितः दुरुक्त्या तिरस्कृतः खरः खलत्वविशिष्टः रलयोरैक्यात् लस्य रत्वम् शूरः खरनामा राक्षसः खरतरमतितीक्ष्णं वचः रक्षसां मध्ये उवाच ॥ १ ॥

गो० टी०—अथ खरस्य युद्धोद्योगो द्वाविंशे—एवमित्यादि आधर्षितः अवमानितः खरः दारुणः, खरतरं परुषतरम् ॥ १

२ ] ति० टी०—तवापमानेत्यस्य त्वत्कृतापमानेत्यर्थः धारयितुम् आत्मनीति शेषः । ममेति मयेत्यर्थे संबन्धे षष्ठी लवणाम्भ इवोल्बणम् व्रण इति शेषः । व्रणे निक्षिप्तं लव युक्तमम्भ इव धारयितुं न शक्यत इत्यर्थ इति तीर्थः । ल णाम्भो लवणसमुद्राम्भ इवेत्यर्थ इति कतकः ॥ २ ॥

रा० टी०—तद्वचनाकारमाह—तवेति । तवापमानप्र अतुलोऽयं मम क्रोधः धारयितुं नियन्तुं न शक्यते । तत्र दृष्टा लवणाम्भः लवणसमुद्रः उल्बणं पर्वोत्थितं स्ववेगमिव ॥ २

गो० टी०—तवेति । लवणाम्भः लवणसमुद्राम्भः इति पर्वण्युल्बणम् ॥ २ ॥

३ ] ति० टी०—आत्मदुश्चरितैस्त्वद्विरूपकरणरूपैः स हत एव मद्दर्शनात्प्राणान्मोक्ष्यते तं रामं न गणये इत्यन्व वीर्यात्स्वपराक्रमात् ॥ ३ ॥

रा० टी०—नेति । यः आत्मदुश्चरितैः स्वकृतत्वद्विरूप रणादिरूपापराधैर्हतः प्राणान्विमोक्ष्यते तं क्षीणजीवितं मा रामं वीर्यात् स्वातिपराक्रमाद्धेतोः अहं न गणये ॥ ३ ॥

गो० टी०—न राममिति । य आत्मदुश्चरितैरेव हतः अद्य प्राणान् विमोक्ष्यति तं रामं न गणये ॥ ३ ॥

४ ] ति० टी०—संभ्रमो भयम् ॥ ४ ॥

रा० टी०—बाष्प इति । एषः बाष्पः अश्रु संधा निरुध्यतां संभ्रमो भयं च विमुच्यताम् । तत्र हेतुः भ्राता रामं यमसादनं यमगृहं नयामि ॥ ४ ॥

---

१ विततोदरीति गो० पाठः । २ अर्धमेतत् गो० नास्ति । ३ तदेति गो० पाठः । ४ अवेति गो० पाठः । ५ इवोत्थितमिति गो० पाठः । ६ मोक्ष्य गो० पाठः । ७ ध्रियतामिति गो० पाठः ।

परश्वधहतस्याद्य मन्दप्राणस्य [1]भूतले । रामस्य रुधिरं रक्तमुष्णं पास्यसि राक्षसि ॥ ५ ॥
[2]संप्रहृष्टा वचः श्रुत्वा खरस्य वदनाच्च्युतम् । प्रशशंस पुनर्मौर्ख्याद्भ्रातरं रक्षसां वरम् ॥ ६ ॥
तया परुषितः पूर्वं पुनरेव प्रशंसितः । अब्रवीद्दूषणं नाम खरः सेनापतिं तदा ॥ ७ ॥
चतुर्दश सहस्राणि मम चित्तानुवर्तिनाम् । रक्षसां भीमवेगानां समरेष्वनिवर्तिनाम् ॥ ८ ॥
नीलजीमूतवर्णानां [ [3]घोराणां क्रूरकर्मणाम् ] लोकहिंसा[4]विहारिणाम् । [ [5]बलिनामुग्रतेजसाम् ॥
तेषां शार्दूलदर्पाणां महास्यानां महौजसाम् ] सर्वोद्योगमुदीर्णानां रक्षसां सौम्य कारय ॥ ९ ॥
उपस्थापय मे क्षिप्रं रथं सौम्य धनूंषि च । शरांश्च चित्रान्खड्गांश्च शक्तीश्च विविधाः शिताः ॥ १० ॥
अग्रे निर्यातुमिच्छामि पौलस्त्यानां महात्मनाम् । वधार्थं दुर्विनीतस्य रामस्य रण[6]कोविद ॥ ११ ॥
इति तस्य ब्रुवाणस्य सूर्यवर्णं महारथम् । सदश्वैः शबलैर्युक्तमाचचक्षेऽथ दूषणः ॥ १२ ॥
तं मेरुशिखराकारं तप्तकाञ्चनभूषणम् । हेमचक्रमसंबाधं वैदूर्यमयकूबरम् ॥ १३ ॥

---

गो० टी०–बाष्प इति । संहियतां निवर्त्यतां सदनमेव सादनम् ॥ ४ ॥

५ ] ति० टी०–परश्वधहतस्येति । परश्वधस्तस्य मुख्यमायुधमित्यनेन ज्ञायते । रुधिरं रक्तम्, रक्तवर्णमित्यर्थः॥५॥

रा० टी०–परश्वधेति । हे राक्षसि ! परश्वधहतस्य अत एव मन्दप्राणस्य गतजीवितस्य अत एव भूतले पतितस्येति शेषः, रामस्य रक्तमरुणमुष्णं रुधिरं पास्यसि ॥ ५ ॥

गो० टी०–परश्वधेति । परश्वधः कुठारः मन्दप्राणस्य अल्पप्राणस्य औष्ण्यार्थमिदमुक्तं रक्तवर्णत्वार्थं च ॥ ५ ॥

६ ] ति० टी०–मौर्ख्यादव्यवस्थितचित्ततालक्षणात् । पुनः प्रशशंस च, त्वत्समो वीरो नास्तीत्येवमादि ॥ ६ ॥

रा० टी०–संप्रहृष्टेति । मौर्ख्यात् स्वाज्ञानात् खरस्य वदनान्मुखात् च्युतं कथितं वचः श्रुत्वा रक्षसां वरं भ्रातरं पुनः प्रशशंस, शूर्पणखेति शेषः ॥ ६ ॥

गो० टी०–सेति । मौर्ख्यात् अव्यवस्थिताचित्ततया पुनः प्रशशंस ॥ ६ ॥

७ ] ति० टी०–तदेवाह–तयेति ॥ ७ ॥

रा०टी०–तयेति । तया शूर्पणखया पूर्वं परुषितः परुषमुक्तः पुनः प्रशंसितः खरः दूषणं नाम सेनापतिमब्रवीत् ॥ ७ ॥

गो० टी०–अमुमर्थं विशदयति–तयेति ॥ ७ ॥

८–१० ] ति० टी०–यानि लोकानां प्राणिनां हिंसैवासाधारण्येन विहारः क्रीडा, येषां रक्षसां चतुर्दश सहस्राणि वर्तन्ते, तेषां सर्वोद्योगं सर्वप्रकारेणोद्योगं चतुरङ्गबलोपेततया सर्वायुधसामग्रीसमेततया चोद्योगं कारय ॥ ८–१० ॥

रा० टी०–तद्वचनाकारमाह–चतुर्दशेति । मम चित्तानुवर्तिनां भीमवेगानां भयोत्पादकवेगविशिष्टानां समरेषु अनिवर्तिनां निवर्तनाभावविशिष्टानां नीलजीमूतवर्णानां नीला एव जीमूताः मेघाः तादृशवर्णविशिष्टानां लोकहिंसाविहारिणां लोकहिंसया विहरणशीलानामुदीर्णानां युद्धोत्साहवतां रक्षसां चतुर्दश सहस्राणि चतुर्दशसहस्रसंख्याकराक्षसानित्यर्थः । सर्वोद्योगं सर्वप्रकारेण उद्योगं युद्धयोग्यचतुरङ्गबलसामग्रीसंपादनं, किंच सर्वेषां चतुरङ्गबलानामुद्योगं प्रस्थानप्रयत्नं कारय "ह्रक्रोः–" इति कर्मत्वम् । श्लोकद्वयमेकान्वयि ॥ ८ ॥ ९ ॥

गो० टी०–चतुर्दशेत्यादिश्लोकत्रयमेकं वाक्यम् । चतुर्दश सहस्राणि सन्तीति शेषः । घोराणां घोररूपाणां लोकहिंसाविहाराणां जनपदैकलीलानां महास्यानां विकृतमुखानामिति यावत् । उदीर्णानां गर्वितानां सर्वोद्योगं सर्वप्रकारैरुद्योगं सर्वायुधवाहनादिभिरुद्योगमित्यर्थः ॥ ८–१० ॥

रा० टी०–उपेति । मे रथादीनि क्षिप्रमुपस्थापय ॥१०॥

गो०टी०–उपस्थापयेति । शक्तीः आयुधविशेषान्॥११॥

११] ति० टी०–पौलस्त्यानां राक्षसानामग्रे रामस्य वधार्थं निर्यातुमिच्छामीत्यन्वयः ॥ ११ ॥

रा० टी०–अग्र इति । रामस्य वधार्थं महात्मनां पौलस्त्यानां राक्षसानामग्रे रणकोविदोऽहं निर्यातुमिच्छामि ॥ ११ ॥

गो० टी०–अग्र इति । पौलस्त्यानां पुलस्त्यवंश्यानामग्रे रणकोविदोऽहं गन्तुमिच्छामीत्यन्वयः । रामस्य रणज्ञत्वात् पौलस्त्यानां वधार्थमिति दैवी वाक् भाविसूचनी ॥ १२ ॥

१२ ] ति० टी०–शबलैश्चित्रवर्णैः आचचक्षे उपस्थितमिति शेषः ॥ १२ ॥

रा० टी०–इतीति । तस्य खरस्य इति वचः श्रुत्वा दूषणः शबलैः चित्रवर्णविशिष्टैः सदश्वैः युक्तं सूर्यवर्णं महारथं तत्समीपं प्रापयेति शेषः, आचचक्षे कथयामास ॥ १२ ॥

गो० टी०–इतीति । शबलैः नानावर्णैः । 'शबलैताश्च कर्बुरे' इत्यमरः । महारथं सदश्वैर्युक्तमाचचक्ष इत्यन्वयः ॥ १३ ॥

१३ ] ति० टी०–वैदूर्यमयौ कूबरौ युगंधरौ यस्य तम् असंबाधं विशालम् ॥ १३ ॥

रा० टी०–तमिति । मेरुशिखराकारं मेरुशिखरसदृशं तप्तकाञ्चनभूषणं तप्तकाञ्चनमयानि भूषणानि यस्य तं हेमचक्रं

---

१ संयुगे इति गो. पाठः । २ सेति गो. पाठः । ३ पादोऽयमधिकः गो. पाठे । ४ विहाराणामिति गो. पाठः । ५ पादत्रयमेतदधिकं गो. पाठे । ६ कोविदः इति गो. रा. पाठः ।

मत्स्यैः पुष्पैर्द्रुमैः शैलैश्चन्द्रकान्तैश्च काञ्चनैः । [1]माङ्गल्यैः पक्षिसंघैश्च ताराभिश्च [3]समावृतम् ॥ १४ ॥
ध्वजानिस्त्रिंशसंपन्नं किङ्किणीवरभूषितम् । सदश्वयुक्तं [4]सोऽमर्षादारुरोह खरस्तदा ॥ १५ ॥
[ [7]निशाम्य तु रथस्थं तं राक्षसा भीमविक्रमाः । तस्थुः संपरिवार्यैनं दूषणं च महाबलम् ॥ ]
खरस्तु [8]तन्महत्सैन्यं रथचर्मायुधध्वजम् । निर्यातेत्यब्रवीत्प्रेक्ष्य दूषणः सर्वराक्षसान् ॥ १६ ॥
ततस्तद्राक्षसं सैन्यं घोरचर्मायुधध्वजम् । निर्जगाम जनस्थानान्महानादं महाजवम् ॥ १७ ॥
मुद्गरैः पट्टिशैः शूलैः सुतीक्ष्णैश्च परश्वधैः । खड्गैश्चक्रैः [11]रथस्थैश्च भ्राजमानैः [12]सतोमरैः ॥ १८ ॥
शक्तिभिः परिघैर्घोरैरतिमात्रैश्च कार्मुकैः । गदासिमुसलैर्वज्रैर्गृहीतैर्भीमदर्शनैः ॥ १९ ॥
राक्षसानां सुघोराणां सहस्राणि चतुर्दश । निर्यातानि जनस्थानात्खरचित्तानुवर्तिनाम् ॥ २० ॥
तांस्तु [13]निर्धावतो दृष्ट्वा राक्षसान्भीम[14]दर्शनान् । खरस्यापि रथः किंचिज्जगाम तदनन्तरम् ॥ २१ ॥
ततस्ताञ्छबलानश्वांस्तप्तकाञ्चनभूषितान् । खरस्य [16]मतमाज्ञाय सारथिः [17]पर्यचोदयत् ॥ २२ ॥

---

सुवर्णनिर्मितचक्रविशिष्टमसंबाधं विशालं वैदूर्यमयकूबरं वैदूर्यमयौ कूबरौ युगंधरौ यस्य तम् ॥ १३ ॥

गो० टी०–तमित्यादि । तप्तकाञ्चनम् परिशुद्धकाञ्चनम् असंबाधं विस्तीर्णं कूबरः युगंधरः । 'कूबरस्तु युगंधरः' इत्यमरः ॥ १४ ॥

१४ ] ति० टी०–माङ्गल्यैर्मङ्गलमलंकारस्तत्प्रयोजनैः । काञ्चनैरिति मत्स्यादिसर्वान्वयि ॥ १४ ॥

रा० टी०–काञ्चनैः सुवर्णनिर्मितैः मत्स्यादिभिः समावृतं माङ्गल्यैः मङ्गलहेतुभिः ॥ १४ ॥

गो० टी०–मत्स्यैरित्यादि । मङ्गलैः मङ्गलावहैः अलंकारकरैरित्यर्थः, काञ्चनैः काञ्चनविकारैः इदं विशेषणद्वयं मत्स्यादिसर्वविशेषणम् । निस्त्रिंशः असिः ॥ १५–१८ ॥

१५ ] ति० टी०–किंकिणी क्षुद्रघण्टिका । अमर्षात्क्रोधात् ॥ १५ ॥

रा० टी०–ध्वजेति । ध्वजैः निस्त्रिंशैः खड्गादिभिश्च संपन्नं किङ्किणी क्षुद्रघण्टिका तद्वरेण भूषितं सदश्वैर्युक्तं रथं खरः सामर्षात् अमर्षसहितात् क्रोधात् आरुरोह ॥ १५ ॥

१६ ] ति० टी०–तन्महत्सैन्यं प्रेक्ष्य तत्प्रतिनिर्यातेत्यब्रवीत् । दूषणः दूषणश्चेत्यर्थः ॥ १६ ॥

रा टी०–खर इति । खरो दूषणश्च रथादिविशिष्टं सैन्यं सर्वराक्षसांश्च प्रेक्ष्य निर्यातेत्यब्रवीत् ॥ १६ ॥

१७ ] ति० टी०–तत उभयनियोगानन्तरं राक्षसं रक्षसामिदम् ॥ १७ ॥

रा० टी०–तत इति । राक्षसं रक्षःसंबन्धि मुद्गरादिभिरुपलक्षितं सैन्यं जनस्थानान्निर्जगाम । तत्र अतिमात्रैरित्यस्य महद्भिरित्यर्थः । श्लोकत्रयमेकान्वयि ॥ १७–१९ ॥

गो० टी०–तत इति । राक्षसं राक्षससंबन्धि ॥ १९

१८–२० ] ति० टी०–मुद्गरादय आयुधविशेषाः । व[...] वज्राकारैरष्टास्रैरायुधैः ॥ १८–२० ॥

रा० टी०–राक्षसानामिति । राक्षसानां चतुर्दश सहस्[...]णि जनस्थानात् निर्यातानि ॥ २० ॥

गो० टी०–मुद्गरैरित्यादि । मुद्गरः लोहमयगदा प[...] पट्टयामिति द्रमिडनामयुक्त आयुधविशेषः, तोमरः वल्लयमि[...] द्रमिडनामयुक्तः, शक्तिः ईट्टीति द्रमिडनामकः, परिघः कुण्[...]न्तडीति द्रमिडनामा । अतिमात्रैः महद्भिः वज्रैः अष्टा[...] रायुधैः ॥ २०–२२ ॥

२१ ] ति० टी०–खरस्य रथोऽपि सेनास्थानात्किंचि[...]न्तरं सर्वसेनानिर्याणं किंचित्कालं प्रतीक्ष्य जगामेत्यर्थः ॥२[...]

रा० टी०–तानिति । निर्धावतस्तान् राक्षसान् दृ[...] आस्थितस्य खरस्य रथोऽपि किंचित्तदनन्तरं सान्निध्यं य[...] स्यात्तथा जगाम ॥ २१ ॥

गो० टी०–तांस्त्विति । किंचिज्जगाम सेनासंमर्दा[...] भावः, खराज्ञाभावाद्वा ॥ २३ ॥

२२ ] ति० टी०–मतमाज्ञायाभीष्टं ज्ञात्वा ॥ २२ ॥

रा० टी०–रथगमनप्रकारमाह–तत इति । ततः स[...]न्यराक्षसगमनानन्तरं खरस्य मतं गमनाभिप्रायमाज्ञाय श[...]लान् चित्रवर्णविशिष्टान् अश्वान् सारथिः पर्यचोदयत् ॥ २२

गो० टी०–तत इति । मतिं संमतिं यात्राभिप्रायमि[...] यावत् ॥ २४ ॥

---

१ सूर्यैरिति गो. रा. पाठः । २ मङ्गलैरिति गो. पाठः । ३ अभिसंवृतमिति गो. पाठः । ४ कविराजितमिति गो. रवेति रा. पाठः । ५ सामर्षा[...] रा. पाठः । ६ रथमिति गो. रा. पाठः । ७ श्लोकोऽयमधिकः गो. पाठे । ८ तान्महेष्वासान्घोरवर्मायुधध्वजानिति गो. पाठः । ९ वर्मेति रा.पाठः । १०[...] रथस्थ इति गो. पाठः । ११ च हस्तस्थैरिति गो. पाठः । १२ चेति गो. पाठः । १३ अभिद्रवत इति गो. पाठः । १४ विक्रमानिति गो.पाठः । १५ ज[...]ति गो. पाठः । १६ मतिमिति गो. पाठः । १७ सममिति गो. पाठः ।

[१]संचोदितो रथः शीघ्रं खरस्य रिपुघातिनः । शब्देनापूरयामास दिशः सप्रदिशस्तथा ॥ २३ ॥
प्रवृद्धमन्युस्तु खरः खरस्वरो रिपोर्वधार्थं त्वरितो यथान्तकः ।
अचूचुदत्सारथिमुन्नदन्पुनर्महाबलो मेघ इवाश्मवर्षवान् ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

## त्रयोविंशः सर्गः ।

रणयात्रासमयसमुद्भूतदुर्निमित्तारिष्टादीनि विलोकयन्नप्युत्साहादविगणयन्नेव खरो दूषणादिकैः सममग्रे प्रतस्थे ।

[४]तत्प्रयातं बलं घोरमशिवं शोणितोदकम् । अभ्यवर्षन्महाघोरस्तुमुलो गर्दभारुणः ॥ १ ॥
निपेतुस्तुरगास्तस्य रथयुक्ता महाजवाः । समे पुष्पचिते देशे राजमार्गे यदृच्छया ॥ २ ॥
श्यामं रुधिरपर्यन्तं बभूव परिवेषणम् । अलातचक्रप्रतिमं प्रतिगृह्य दिवाकरम् ॥ ३ ॥
ततो ध्वजमुपागम्य हेमदण्डं समुच्छ्रितम् । समाक्रम्य महाकायस्तस्थौ गृध्रः सुदारुणः ॥ ४ ॥

---

२३-२४ ] ति० टी०-संचोदित इत्यादि श्लोकद्वयं कतकसंख्यारीत्या प्रक्षिप्तम् ॥ २३ ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

रा० टी०-समिति । रिपुघातिनः खरस्य शीघ्रं संचोदितः स रथः दिशः प्रदिशश्च शब्देन स्वनिर्घोषेण आपूरयामास॥२३॥

गो० टी०-स चोदित इति । शब्देन नेमिघोषेण प्रदिशः विदिशः । ॥ २६ ॥

रा० टी०-प्रवृद्धेति । प्रवृद्धमन्युः अतिक्रोधवान् अत एव खरस्वरः तीक्ष्णस्वरवान् रिपोर्वधार्थं त्वरितः खरः अन्तक इव अश्मवर्षवान् उपलवर्षणशीलः उन्नदन् मेघ इव च सारथिं पुनः अचूचुदत् ॥ २४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

गो० टी०-प्रवृद्धमन्युरिति । महाबलः झञ्झामारुतः 'झञ्झावातो महाबलः' इति निघण्टुः । तद्वान् " अर्श आद्यच्" झञ्झामारुतप्रेरित इत्यर्थः । महानिल इत्यपि पाठः । अश्मवर्षवान् अश्मवर्षोद्युक्त इत्यर्थः, घनम् उपरितनमेघम्॥२६॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने द्वाविंशः सर्गः ॥ २२ ॥

१ ] ति० टी०-अथ खरप्रस्थाने उत्पातवर्णनम्—शोणितसहितमुदकम् । प्रयातं प्रस्थितं गर्दभारुणो धूसरः तुमुलस्तुमुलशब्दः, अभ्यवर्षत् मेघ इति शेषः ॥ १ ॥

रा० टी०-ससैन्यखरनिर्गमानन्तरकालिकं वृत्तान्तमाह-तदित्यादिभिः । महाघोरः अतिभयंकरः तुमुलः तुमुलशब्दकारी गर्दभारुणः गर्दभनिष्ठारुण्यसदृशारुण्यवान् मेघ इति शेषः, घोरं भयंकरं प्रयातं तद्बलं खरसैन्यमुद्दिश्येति शेषः, अशिवममङ्गलं शोणितोदकमरुणजलं शोणितमेवोदकं वा अभ्यवर्षत् अरुणो धूसरः 'अव्यक्तरागस्त्वरुणः' इत्यमरः ॥ १ ॥

गो० टी०-अथ युद्धाय प्रयातस्य खरस्य उत्पातवर्णनं त्रयोविंशे-तस्मिन् यात इत्यादि । अशिवम् अशुभावहं शोणितोदकं रक्तवर्णजलं तुमुलः संकुलः गर्दभारुणः गर्दभवद्धूसरः ॥ १ ॥

२ ] ति० टी०-रथयुक्ता रथे युक्ताः पुष्पचिते पुष्पयुते अनेन पातनिमित्तराहित्यम् ॥ २ ॥

रा० टी०-उत्पातान्तरमाह-निपेतुरिति । महाजवाः अतिवेगाः रथयुक्तास्तस्य तुरगा अश्वाः समे निम्नोन्नतत्वरहिते पुष्पचिते पुष्पैरास्तृते राजमार्गे देशे यदृच्छया निपेतुः ॥ २ ॥

गो० टी०-निपेतुरिति । निपेतुः स्खलिताः रथयुक्ताः रथे बद्धाः पुष्पचिते पुष्पैः निबिडे यदृच्छया दैवगत्या ॥ २ ॥

३-४ ] ति० टी०-रुधिरो रक्तवर्णः पर्यन्तः प्रान्तभागो यस्य अलातचक्रप्रतिमं तद्वद्वर्तुलं दिवाकरं प्रतिगृह्य सूर्यमण्डलेनात्यन्तं संबध्य ॥ ३ ॥ ४ ॥

रा० टी०-उत्पातान्तरमाह-श्याममिति । श्यामं श्यामवर्णविशिष्टं रुधिरपर्यन्तं रुधिरो रक्तवर्णविशिष्टः पर्यन्तः प्रान्तभागो यस्य तत् अलातचक्रप्रतिमं वर्तुलाकारत्वेन अलातचक्रसदृशं परिवेषणं दिवाकरं सूर्यमण्डलं प्रतिगृह्य प्रावृत्य बभूव ॥ ३ ॥

गो० टी०-सूर्यपरिवेषमाह-श्याममिति । सर्वत्र श्यामं पर्यन्ते प्रान्ते रुधिरं रुधिरवर्णम् । अलातचक्रप्रतिममिति ह्रस्वत्वमुच्यते परिवेषणं परिवेषः परिगृह्य परितो व्याप्य ॥३॥

रा० टी०-चतुर्थमुत्पातमाह-तत इति । हेमदण्डं सुवर्ण-

---

१ स इति गो. पाठः । २ चेति गो. पाठः । ३ घनमिति गो. पाठः । ४ तस्मिन्याते जनस्थानादिति गो. पाठः । ५ मेघ इति गो. पाठः ।

जनस्थानसमीपे चे[1] समाक्रम्य खरस्वनाः । विस्वरान्विविधान्नादान्[2]मांसादान्मृगपक्षिणः ॥ ५ ॥
व्याजहु[3]रभिदीप्तायां दिशि वै भैरवस्वनम् । अशिवं यातुधानानां शिवा घोरा महास्वनाः ॥ ६ ॥
प्रभिन्न[4]गजसंकाशास्तोयशोणितधारिणः । आकाशं तदनाकाशं चक्रु[5]र्भीमाम्बुवाहकाः ॥ ७ ॥
बभूव तिमिरं घोरमुद्धतं रोमहर्षणम् । दिशो वा[6] प्रदिशो वापि सु[7]व्यक्तं न चकाशिरे ॥ ८ ॥
क्षतजार्द्रसवर्णाभा संध्या कालं विना बभौ । खरं[8] चा[9]भिमुखं नेदुस्तदा [10]घोरा मृगाः खगाः ॥ ९ ॥
कङ्कगोमायुगृध्राश्च चुक्रुशुर्भयशंसिनः । नित्या[11]शिवकरा युद्धे शिवा घोरनिदर्शनाः ॥ १० ॥
नेदुर्बलस्याभिमुखं ज्वालोद्गारिभिराननैः । कबन्धः परिघाभासो दृश्यते भास्करान्तिके ॥ ११ ॥

---

दण्डविशिष्टं समुच्छ्रितमत्युन्नतं ध्वजमुपागम्य प्राप्य समाक्रम्य संनमय्य महाकायो गृध्रः तस्थौ ॥ ४ ॥

गो० टी०—तत इति । समुच्छ्रितमुन्नतं ध्वजमुपागम्य समाक्रम्य परिक्रम्य तस्थौ ॥ ४ ॥

५ ] ति० टी०—खरस्वनाः परुषशब्दाः ॥ ५ ॥

रा०टी०—पञ्चमं षष्ठं चोत्पातमाह—जनेति । जनस्थानसमीपे समाक्रम्य प्राप्य खरस्वनाः भयंकरशब्दविशिष्टाः मांसादाः मृगपक्षिणः विविधान् अनेकप्रकारान् विस्वरान् विरुद्धस्वरत्वविशिष्टान् नादान् व्याजहुः अभिदीप्तायां सूर्यसंयुक्तायां दिशि यातुधानानां राक्षसानामशिवं शिवनिवर्तकं भैरवस्वनं शिवाः श्टगालस्त्रियश्च व्याजहुः । श्लोकद्वयमेकान्वयि ॥ ५ ॥ ६ ॥

गो० टी०—जनस्थानेति । खरस्वनाः परुषस्वनाः विस्वरान् विकृतस्वरान् मांसमदन्तीति मांसादाः ॥ ५ ॥

६ ] ति० टी०—अभिदीप्तायां रवियुक्तायाम् 'विवस्वदाप्ता भवति प्रदीप्ता' इति वसन्तराजोक्तेः । शिवा यातुधानानामशिवमशुभं व्याजहुः ॥ ६ ॥

गो० टी०—व्याजहुरिति । प्रदीप्तायां दिशि सूर्यसन्निहितदिशीत्यर्थः । शिवाः सृगालाः घोराः ज्वालामुखाः ॥ ६ ॥

७ ] ति० टी०—'प्रभिन्नगज--' इति पाठे मत्तगजेत्यर्थः । 'प्रभिन्नगिरि' इति पाठे गैरिकादिधातुस्राविण इत्यर्थः । तोयमिव शोणितं धरन्ति । अनाकाशमप्रकाशम् ॥ ७ ॥

रा० टी०—प्रथमोत्पातस्यैवाकारभेदेन भेदं प्रकल्प्य सप्तममुत्पातमाह—प्रभिन्नेति । प्रभिन्नगजसंकाशाः मत्तगजतुल्याः तोयशोणितधारिणः अरुणजलधारणशीलाः भीमाम्बुवाहकाः भयंकरमेघाः आकाशमनाकाशमवकाशरहितं प्रकाशरहितं वा चक्रुः अत एव उद्धतमतिप्रवृद्धं घोरं भयोत्पादकमत एव रोमहर्षणं तिमिरमन्धकारो बभूव अत एव दिशः प्रदिशश्च सुव्यक्तं सुस्फुटं न चकाशिरे अत एव क्षतजार्द्रसवर्णाभा रुधिरक्लिन्नसमानवर्णप्रकाशा द्यौरिति शेषः, संध्याकालं विनापि बभौ । सार्धश्लोकद्वयमेकान्वयि ॥ ७ ॥ ८ ॥

गो० टी०—प्रभिन्नेति । प्रभिन्नाः इन्द्रच्छिन्नपक्षाः तोयशोणितधारिणः शोणिततोयधारिणः परनिपातः । अनाकाश
अप्रकाशं छिन्नमिति यावत्, बलाहकाः मेघाः ॥ ७ ॥

८ ] ति० टी०—उद्धतं सान्द्रम् ॥ ८ ॥

गो० टी०—बभूवेति । उद्धतं सान्द्रम् ॥ ८ ॥

९ ] ति० टी०—क्षतजार्द्रसवर्णाभा रुधिरार्द्रवस्त्रादिसम
वर्णा संध्येति विशेष्यम् कालं विना बभौ । मेघेष्विति शेषः

रा० टी०—अष्टममुत्पातमाह—खरमिति । घोराः मृ
व्याघ्रादयः खगा उलूकादयः खरमभिमुखे नेदुः ॥ ९ ॥

गो० टी०—क्षतजेति । क्षतजार्द्रसवर्णाभा क्षतजेन र
नार्द्रं संसिक्तं यत् पटादिकं तत्तुल्याभा कालं विना स्वक
विना संध्या बभौ मेघेष्विति शेषः । खरस्येति । पूर्वं सूर्या
श्रितदिशि शिवारुतयुक्तम् अधुना खरस्याभिमुखमुच्यते । घो
मृगाः श्वापदादयः, कङ्काः स्थूलकाया भयंकराः मृतपशुन
दिभक्षणशीलाः पक्षिविशेषाः ॥ ९ ॥

१०-११ ] ति० टी०-युद्धे नित्यमशिवकरा अशुभ
सिन्यः शिवा घोरनिदर्शना भयदर्शिकाः खरबलस्य चाभि
नेदुः । पूर्वं दिगभिमुखं शिवाशब्द उक्तः इदानीं खरसैन्
भिमुख्येनेति भेदः । परिघाभासः परिघ आयुधविशेषस्तत
दृशः कबन्धो धूमकेतुरिति तीर्थः ॥ १० ॥ ११ ॥

रा० टी०—नवममुत्पातमाह- कङ्केति । भयशंसिनः
ङ्कादयः अभिमुखे चुक्रुशुः । दशममुत्पातमाह—नित्येति ।
नित्याशिवकराः नित्यममङ्गलप्रदर्शनवत्य इत्यर्थः, अत
घोरनिदर्शनाः भयंकरदर्शनवत्यः शिवाः श्टगालस्त्रियः ज्वालो
रिभिर्ज्वालोद्गरणशीलैः आननैः बलस्य सैन्यस्य अभिमुखं नेदु
पूर्वं सूर्यदिगभिमुखं शिवानाद उक्तः इदानीं सैन्याभिमुखमि
न पौनरुक्त्यम् ॥ १० ॥

गो० टी०—सेनाभिमुखशिवारुतमाह—नित्येति । युद्धे
त्यमशुभकराः अशुभशंसिनः घोरनिदर्शनाः घोरफलकनिदर्श
शिवाः गोमायवः । 'स्त्रियां शिवाभूरिमायगोमायुमृगधूर्तका
इत्यमरः । ज्वालामुद्गिरन्तीति ज्वालोद्गारीणि तैः आन
उपलक्षणे तृतीया ॥ १० ॥

---

१ तु समागम्येति गो. पाठः । २ चक्रुर्मांसादा इति गो. मांसादा इति रा. पाठः । ३ च प्रदीप्तायामिति गो. पाठः । ४ गिरीति गो. पाठः । ५ भीमा बलाहका इति गो. पाठः । ६ विदिश इति गो. पाठः । ७ न च व्यक्तमिति गो. पाठः । ८ खरस्याभिमुखा इति गो. पाठः । ९ अभिमुखे
रा. पाठः । १० घोरमृगा इति गो. पाठः । ११ अशुभकरा इति गो. पाठः ।

जग्राह सूर्यं स्वर्भानुरपर्वणि महाग्रहः । प्रवाति मारुतः शीघ्रं निष्प्रभोऽभूद्दिवाकरः ॥ १२ ॥
उत्पेतुश्च विना रात्रिं ताराः खद्योतसप्रभाः । संलीनमीनविहगा नलिन्यः शुष्कपङ्कजाः ॥ १३ ॥
तस्मिन्क्षणे बभूवुश्च विना पुष्पफलैर्द्रुमाः । उद्धूतश्च विना वातं रेणुर्जलधरारुणः ॥ १४ ॥
चीचीकूचीति वाश्यन्तो बभूवुस्तत्र सारिकाः । उल्काश्चापि सनिर्घोषा निपेतुर्घोरदर्शनाः ॥ १५ ॥
प्रचचाल मही चापि सशैलवनकानना । खरस्य च रथस्थस्य नर्दमानस्य धीमतः ॥ १६ ॥
प्राकम्पत भुजः सव्यः स्वरश्चास्यावसज्जत । सास्रा संपद्यते दृष्टिः पश्यमानस्य सर्वतः ॥ १७ ॥
ललाटे च रुजो जाता न च मोहान्न्यवर्तत । तान्समीक्ष्य महोत्पातानुत्थितान्रोमहर्षणान् ॥ १८ ॥
अब्रवीद्राक्षसान्सर्वान्प्रहसन्स खरस्तदा । महोत्पातानिमान्सर्वानुत्थितान्घोरदर्शनान् ॥ १९ ॥
[ न चिन्तयाम्यहं वीर्याद्बलवान्दुर्बलानिव । तारा अपि शरैस्तीक्ष्णैः पातयेयं नभस्तलात् ॥ २० ॥

रा० टी०—एकादशमुत्पातमाह—कबन्ध इति । परिघाभासः परिघसदृशः कबन्धः छिन्नशिराः पुरुषः भास्करान्तिके सूर्यसमीपे दृश्यते ॥ ११ ॥

गो० टी०—कबन्ध इति । परिघवत् परिघायुधवदाभासत इति परिघाभासः कबन्धः शिरःशून्यमनुष्यकायः भास्करान्तिके सूर्यस्य समीपे दृश्यते अदृश्यत । तथोक्तं कामन्दकीये—'सूर्यदृष्टकबन्धादिरकस्मान्मूढवाहनः' इति । कबन्धाकारमेघखण्ड इति यावत् । महानाग्रहो यस्य स महाग्रहः स्वर्भानुः राहुः अपर्वणि प्रतिपदर्शसंधिः पर्व तस्मादन्यस्मिन्नपि काले सूर्यं जग्राह । तदाह वराहमिहिरः—' अपर्वणि तथा राहुग्रहणं चन्द्रसूर्ययोः ' इति ॥ ११ ॥

१२ ] ति० टी०—शीघ्रं प्रचण्डं यथा भवति तथेत्यर्थः । संमुख इति शेषः ॥ १२ ॥

रा० टी०—द्वादशं त्रयोदशं चोत्पातमाह—जग्राहेति । अपर्वणि पर्वाभावविशिष्टदिवसेऽपि सूर्यं स्वर्भानुः राहुर्जग्राह मारुतो वायुः शीघ्रं प्रवाति अत एव दिवाकरो निष्प्रभोऽभूत् ॥ १२ ॥

गो० टी०—प्रवातीति । प्रवाति प्रतिकूलो वाति उत्पेतुः प्रचकाशिरे खद्योतसप्रभाः ज्योतिरिङ्गणसमानकान्तयः ॥१२॥

१३ ] ति० टी०—खद्योतसप्रभत्वं निस्तेजस्कत्वेन चाञ्चल्येन च ॥ १३ ॥

रा० टी०—त्रयोदशं चतुर्दशं चाह—उत्पेतुरिति । खद्योतसप्रभाः खद्योतसमानकान्तयस्ताराः रात्रिं विनापि उत्पेतुः शुष्कपङ्कजाः शुष्कानि पङ्कजानि यासां ताः अत एव संलीनमीनविहगाः संलीनाः पङ्कादिष्वासक्ता मीनविहगाः यासां ताः नलिन्यः सरस्यो बभूवुरिति शेषः ॥ १३ ॥

गो० टी०—संलीनेति । संलीनाः जलान्तर्गताः पुष्पफलैर्विना बभूवुः गलितपुष्पादिका बभूवुरित्यर्थः ॥ १३ ॥

१४ ] ति० टी०—विना पुष्पफलैः पुष्पादिरहिता बभूवुरित्यर्थः । उद्धूत उत्क्षिप्तः जलधरारुणो धूसरः ॥ १४ ॥

रा०टी०—पञ्चदशं षोडशं चोत्पातमाह—तस्मिन्निति । द्रुमाः वृक्षाः पुष्पफलैर्विना बभूवुः वातं विनापि जलधरारुणः धूसरवर्णविशिष्ट इत्यर्थः, रेणुः उद्धूतो बभूव ॥ १४ ॥

गो० टी०—उद्धूत इति । उद्धूतः उत्क्षिप्तः जलधरारुणः मेघवद्धूसरः चीचीकूचीति शब्दानुकारः वाश्यन्त्यः शब्दं कुर्वत्यः ॥ १४ ॥

१५-१६ ] ति० टी०—चीचीकूचीति शब्दानुकरणं वाश्यन्तः आर्षम् । न तु शिक्षितं शब्दमित्यर्थः ॥ १५ ॥ १६ ॥

रा० टी०—सप्तदशमष्टादशं चाह—चीति । सारिकाः चीचीकूचीति वाश्यन्तः चीचीति च कूचीति च शब्दं कुर्वत्यो बभूवुः । अनुकरणमेतत् वाश्यन्त इत्यार्षम् । सनिर्घोषाः निर्घोषसहिता अत एव घोरदर्शना उल्काश्च निपेतुः ॥ १५ ॥

गो० टी०—उल्का इति । उल्कानिर्घातौ ज्योतिर्वायुविशेषौ । अत्र वराहमिहिरः—' उल्का शिरसि विशाला निपतन्ती वर्धते तनुप्रभया । पवनाभिहता गगनादवनौ च यदा समापतति । भवति तदा निर्घातः स च पापो दीर्घखगविरुतः' इति ॥ १५ ॥

रा० टी०—एकोनविंशतितममुत्पातमाह—प्रेति । नर्दमानस्य खरस्य संबन्धिनी सशैलवनकानना मही चचाल । वनकाननयोः निबिडानिबिडत्वेन भेदात् न पौनरुक्त्यम् ॥ १६ ॥

गो० टी०—खरस्येति । अवसज्जत अवासज्जत गद्गदकण्ठतया प्रतिबद्धोऽभूदित्यर्थः ॥ १६ ॥

१७ ] ति० टी०—सव्यो वामः । स्वरश्चावसज्जत हीनोऽभूदित्यर्थः ॥ १७ ॥

रा० टी०—विंशतितमादित्रयमाह—अस्य खरस्य सव्यो वामः भुजः प्राकम्पत, स्वरश्च अवसज्जत हीनोऽभवत्, सर्वतः पश्यमानस्य अस्य दृष्टिः सास्रा अश्रुसहिता संपद्यते भवति॥१७॥

गो० टी०—सास्रेति । रुजा पीडा ' स्त्रीरुग्रुजा चोपतापरोगव्याधिगदामयाः' इत्यमरः । मोहात् अज्ञानात् न न्यवर्तत एवमनेकदुर्निमित्तदर्शनेऽपि युद्धगमनान्न न्यवर्ततेत्यर्थः ॥ १७ ॥

१८-२० ] ति० टी०—तानुत्पातानुत्थितान्समीक्ष्यापि मोहान्न न्यवर्तत युद्धयात्राया इति शेषः ॥ १८-२० ॥

१ वीचीति गो. पाठः । २ वाश्यन्त्य इति गो पाठः । ३ शारिका इति गो. पाठः । ४ सर्वैति गो. पाठः । ५ रुजेति गो. रा. पाठः । ६ स इति गो. पाठः ।७ पातयामि नभस्थलादिति गो. पाठः ।

मृत्युं मरणधर्मेण संक्रुद्धो योजयाम्यहम् । राघवं तं बलोत्सिक्तं भ्रातरं [1]चापि लक्ष्मणम् ॥ २१ ॥
अहत्वा सायकैस्तीक्ष्णैर्नोपावर्तितुमुत्सहे । [2]यन्निमि[3]त्तं तु रामस्य लक्ष्मणस्य विपर्ययः ॥ २२ ॥
सकामा भगिनी मेऽस्तु पीत्वा तु रुधिरं तयोः । न क्वचित्प्राप्तपूर्वो मे संयुगेषु पराजयः ॥ २३ ॥
युष्माकमेतत्प्रत्यक्षं नानृतं कथयाम्यहम् । देवराजमपि क्रुद्धो मत्तैरावत[4]गामिनम् ॥ २४ ॥
वज्रहस्तं रणे हन्यां किं पुनस्तौ [5]च मानवौ । सा तस्य गर्जितं श्रुत्वा [6]राक्षसानां महाचमूः ॥ २५ ॥
[7]प्रहर्षमतुलं लेभे मृत्युपाशावपाशिता । समेयुश्च महात्मानो युद्धदर्शनकाङ्क्षिणः ॥ २६ ॥
ऋषयो देवगन्धर्वाः सिद्धाश्च सह चारणैः । समेत्य चोचुः सहितास्तेऽन्योन्यं पुण्यकर्मणः ॥ २७ ॥
स्वास्ति गोब्राह्मणेभ्यस्तु लोकानां ये [8]च संमताः । जयतां राघवो [9]युद्धे पौलस्त्यान्रजनीचरान् ॥ २८ ॥
चक्रहस्तो यथा [10]विष्णुः सर्वानसुर[11]सत्तमान् । एतच्चान्यच्च बहुशो ब्रुवाणाः परमर्षयः ॥ २९ ॥
जातकौतूहलास्तत्र विमानस्थाश्च देवताः । ददृशुर्वाहिनीं तेषां राक्षसानां गतायुषाम् ॥ ३० ॥

रा० टी०–त्रयोविंशतितममाह–ललाट इति । ललाटे रुजा पीडा जाता तान् उदितान् प्राप्तान् महोत्पातान् समीक्ष्यापि मोहात् अविवेकात् न न्यवर्तत ॥ १८ ॥

गो० टी०–तानिति । उत्थितान् उद्भूतान् रोमहर्षणान् रोमाञ्चकरान् भयजनकानित्यर्थः । तदुक्तम् साहित्यचिन्तामणौ–'उल्कानिपातनिर्घातव्यालव्याघ्रादिदर्शनैः । उत्पन्नः सहसा चित्तविक्षोभस्त्रास इष्यते ॥ नेत्रसंमीलनोत्कम्पगात्रसंकोचगद्गदैः । वैवर्ण्यस्वेदरोमाञ्चस्तम्भाद्यैरनुभाव्यते' इति । प्रहसन्नित्यनेन गर्वः सूच्यते ॥ १८ ॥

रा० टी०–अब्रवीदिति । प्रहसन् सन् सर्वान् राक्षसान् अब्रवीत् । तद्वचनाकारमाह–दुर्बलान् इमान् महोत्पातान् वीर्यात् स्वप्रभावातिशयाद्धेतोः न चिन्तयामि । सार्धश्लोक एकान्वयी ॥ १९ ॥

रा० टी०–स्वप्रभावातिशयमेवाह–तारा इति । नभस्तलात्तारा अपि शरैः पातयेयम् ॥ २० ॥

गो० टी०–तत्कार्यप्रतिज्ञामाह–महोत्पातानिति । तथा चोक्तं चिन्तामणौ—'कुलरूपवयोविद्याबलैश्वर्यधनादिभिः । या भवेदात्मनः श्लाघा स गर्व इति कथ्यते । उद्ग्रीवावेक्षणावज्ञाप्रतिज्ञातिर्भवेदिह' । इति दुर्बलानिव पुरुषान् ॥ १९ ॥ २० ॥

२१ ] ति० टी०–बलोत्सिक्तं बलाधिकम् ॥ २१ ॥

रा० टी०–मृत्युमिति । संक्रुद्धोऽहं मृत्युमपि मरणधर्मेण योजयामि विध्वंसयामीत्यर्थः, अतः बलोत्सिक्तमातिबलं राघवमहत्वा उपावर्तितुं निवर्तितुं न उत्सहे ॥ २१ ॥

गो० टी०–राघवमिति । उत्सिक्तं गर्वितम् ॥ २१–२६ ॥

२२–२३ ] ति० टी०–यन्निमित्तं शूर्पणखानिमित्तं विपर्ययः क्रूरबुद्धिरूपः ॥ २२ ॥ २३ ॥

रा० टी०–यदिति । यन्निमित्तं यच्छूर्पणखाहेतोः रामस्य लक्ष्मणस्य च विपर्ययः विरूपकरणसूचितमतिवैपरीत्यवर्तनं स मे भगिनी तयोः रुधिरं पीत्वा सकामाऽस्तु ॥ २२ ॥

रा० टी०–नेति । संयुगेषु संग्रामेषु पराजयः क्वचित्प्राप्तपूर्वः दृष्टपूर्वो न एतद्युष्माकं प्रत्यक्षम्, अनृतं मिथ्या अहं कथयामि ॥ २३ ॥

२४–२६ ] ति० टी०–एतन्मम पराजयाभावरू वस्तु ॥ २४–२६ ॥

२७ ] ति० टी०–पुण्यकर्मणः पुण्यकर्माण इत्य आर्षम् ॥ २७ ॥

रा० टी०–देवेति । क्रुद्धोऽहं देवराजमपि हन्यां मानवौ किम् ॥ २४ ॥

रा० टी०–सेति । मृत्युपाशावपाशिता मृत्युपाशबद्धा राक्षसानां महाचमूस्तस्य खरस्य गर्जितं श्रुत्वा अतुलं प्र लेभे ॥ २५ ॥

रा० टी०–समेयुरिति । युद्धदर्शनकाङ्क्षिणः पुण्यकर्म पुण्यकर्माणः सहिताः सर्वहितास्ते ऋष्यादयः समेयुः सं प्रापुः, समेत्य प्राप्य ऊचुश्च । पुण्यकर्मण इत्यत्र संज्ञापूर्व विधेरनित्यत्वाद्दीर्घाभावः । अर्धत्रयमेकान्वयि ॥ २६ ॥ २७ ॥

गो० टी०–समीयुरिति । समीयुः सङ्गताः सहिताः लो हितपराः पुण्यकर्मणः पुण्यकर्माणः दीर्घाभाव आर्षः ॥ २६ ॥ २७

२८–३० ] ति० टी०–ये लोकानां संमता गोब्राह्म व्यतिरिक्तास्तेभ्यश्च स्वस्तीत्यर्थः ॥ २८–३० ॥

रा० टी०–तद्वचनाकारमाह–स्वस्तीति । ये लोकसंमत लोकेप्सितास्तेभ्यो गोब्राह्मणेभ्यः स्वस्त्यस्तु पौलस्त्यान् रा सान् असुरसत्तमान् विष्णुरिव राघवो जयत्नाम् । सार्धश्लो एकान्वयी ॥ २८ ॥

रा० टी०–एतदिति । एतदन्यच्च ब्रुवाणाः परमर्ष विमानस्था देवताश्च गतायुषां राक्षसानां वाहिनीं से ददृशुः ॥ २९–३० ॥

१ चास्येति गो. पाठः । २ एतदाद्यर्धयोर्व्यत्यासः गो. पाठे । ३ निमित्तस्त्विति गो. पाठः । ४ यायिनामिति गो. पाठः । ५ कुमानुषाविति गो. पाठः । ६ राक्षसस्येति गो. पाठः । ७ ऽरत्विति गो. पाठः । ८ ऽभिसंगता इति गो. पाठः । ९ संख्ये इति गो. पाठः । १० युद्धे इति गो. पाठः । ११ पुंगवानिति गो. पाठः ।

रथेन तु खरो वेगात्[१]सैन्यस्याग्राद्विनिःसृतः । [[२]तं दृष्ट्वा राक्षसं भूयो राक्षसाश्च विनिःसृताः । ]
श्येनगामी [३]पृथुग्रीवो यज्ञशत्रुर्विहङ्गमः ॥ ३१ ॥
दुर्जयः करवीराक्षः परुषः कालकार्मुकः । [५]हेममाली महामाली [६]सर्पास्यो रुधिराशनः ॥ ३२ ॥
द्वादशैते महावीर्याः प्रतस्थुरभितः खरम् । महाकपालः स्थूलाक्षः [७]प्रमाथस्त्रिशिरास्तथा ॥
चत्वार एते [८]सेनाग्रे दूषणं पृष्ठतोऽन्व[९]युः ॥ ३३ ॥

सा भीमवेगा समराभि[१०]काङ्क्षिणी सुदारुणा राक्षसवीरसेना ।
तौ राजपुत्रौ सहसाभ्युपेता माला ग्रहाणामिव चन्द्रसूर्यौ ॥ ३४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥

## चतुर्विंशः सर्गः ।

खराभिगमनकालिकदुर्निमित्तानि दक्षिणबाहुस्फुरणादिना स्वस्य जयप्राप्तिं च लक्ष्मणाय शंसन् रामस्तं सीतया सह गुहां प्रवेष्टुमादिशत् । रामसमरं दिदृक्षुषु देवगन्धर्वादिषु गगनाङ्गणसंप्राप्तेषु संनद्धं खरबलं राममभिगच्छति ।

आश्रमं प्रतियाते तु खरे खरपराक्रमे । तानेवौ[११]त्पातिकान्रामः सह भ्रात्रा ददर्श ह ॥ १ ॥
तानुत्पातान्महाघोरान्[१२]रामो दृष्ट्वाऽत्यमर्षणः । प्रजानामहितान्दृष्ट्वा वाक्यं लक्ष्मणमब्रवीत् ॥ २ ॥

गो० टी०—स्वस्तीत्यादि । लोकानामभिसंगता इति ये लोकानाम् अभिसंगताः अनुकूलाः तेभ्योऽपि स्वस्त्यस्त्वित्यर्थः । जयतां जयतु आर्षम् आत्मनेपदम् । संख्ये युद्धे चक्रहस्तो विष्णुः वाहिनीं सेनां गतायुषां गन्तुमुद्युक्तायुषाम् एतत् स्वस्तीत्यादिवाक्यम् अन्यच्च राघवजयविषयकं वाक्यं ब्रुवाणाः परमर्षयः विमानस्था देवताश्च जातकौतूहलाः सन्तः राक्षसानां वाहिनीं ददृशुरिति संबन्धः ॥ २९–३० ॥

३१–३३ ] ति० टी०—सैन्यस्याग्राद्विनिःसृतः पूर्वं सैन्यसंबद्ध एव तदग्रभागे स्थितः, इदानीं तु सेना बहुदूरे पृष्ठतस्त्यक्त्वा स्वयमेवाग्रे गत इत्यर्थः । श्येनगाम्यादयो द्वादश खरामात्याः ॥ ३१–३३ ॥

रा० टी०—रथेनेति । खरो रथेन सैन्यस्याग्राद्विनिःसृतः । अर्धं पृथक्–श्येनेति । श्येनादयो द्वादश खरामात्याः खरमभितः प्रतस्थुः ॥ ३१ ॥ ३२ ॥

रा० टी०—महाकपाल इति । महाकपालादयश्चत्वारः दूषणं पृष्ठतोऽन्वयुः ॥ ३३ ॥

गो० टी०—रथेनेति । वेगात् रथवेगात् विनिःसृतः गतः ३१
गो० टी०—श्येनेत्यादि । श्येनगाम्यादयो द्वादश खरामात्याः ॥ ३२–३४ ॥

३४ ] ति० टी०—सा सेना । तौ राजपुत्रौ । सहसा तत्क्षणमेवाभ्युपेतेत्यन्वयः ॥ ३४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥

रा० टी०—सेति । समराभिकाङ्क्षिणी राक्षसवीरसेना सूर्यचन्द्रमसौ ग्रहाणां मालेव तौ राजपुत्रौ सहसा अभ्युपेता ॥ ३४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥

गो० टी०—सेति । समराभिकामा युद्धेच्छुः ग्रहाणामङ्गारकादीनाम् ॥ ३६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने त्रयोविंशः सर्गः ॥ २३ ॥

१ ] ति० टी०—औत्पातिकानुत्पातान्, स्वार्थे ठक् ॥ १ ॥

रा० टी०—ससैन्यखरप्राप्त्यनन्तरकालिकं वृत्तान्तमाह–आश्रममित्यादिभिः । खरपराक्रमे उग्रपराक्रमविशिष्टे खरे आश्रमं प्रति याते प्राप्ते सति तान् राक्षसैरवलोकितान् औत्पातिकान् उत्पातान् स्वार्थे ठक् भ्रात्रा सह रामो ददर्श ॥ १ ॥

गो० टी०—अथ रामस्य युद्धसन्नाहश्चतुर्विंशे–आश्रममित्यादि । औत्पातिकानिति स्वार्थे ठक् ॥ १ ॥ २ ॥

२ ] ति० टी०—अत्यमर्षणोऽत्यस्वस्थचित्तः प्रजानां प्रकृतत्वाद्राक्षसा एवात्र प्रजाः ॥ २ ॥

रा० टी०—तानिति । अत्यमर्षणः मुनिखेदासहिष्णुः रामः प्रजानां दशरथराज्यनिवासिराक्षसानां किंच प्रकर्षेण जो मृत्युञ्जयो येषां तेषां राक्षसानाम् अहितान् घोरान् उत्पातान् दृष्ट्वा अवलोक्य दृष्ट्वा विचार्य च लक्ष्मणमब्रवीत् 'जो ना मृत्युञ्जये जन्यां तातमात्रे जनार्दने' इति मेदिनी ॥ २ ॥

१ उग्रसैन्य इति गो. पाठः । २ अधर्ममेतदधिकं गो. पाठे । ३ पृथुश्यामाविति रा. पाठः । ४ मुख इति रा. पाठः । ५ मेघमालीति गो. रा. पाठः । ६ वरास्य इति रा. पाठः । ७ प्रमाथीति गो. प्रमाथिरिति रा. पाठः । ८ सेनान्य इति गो. पाठः । ९ ययुरिति गो. पाठः । १० कामा महाबलेति गो. पाठः । ११ उत्पातिकानिति गो. पाठः । १२ उत्थितान् रोमहर्षणानिति गो. पाठः ।

इमान्पश्य महाबाहो सर्वभूतापहारिणः । समुत्थितान्महोत्पातान्संहर्तुं सर्वराक्षसान् ॥ ३ ॥
अमी रुधिरधारास्तु [1]विसृजन्ते खरस्वनाः । व्योम्नि मेघा विवर्तन्ते परुषा गर्दभारुणाः ॥ ४ ॥
सधूमाश्च शराः सर्वे मम युद्धाभि[2]नन्दिताः । रुक्मपृष्ठानि चापानि विचेष्टन्ते [3]विचक्षण ॥ ५ ॥
यादृशा इह कूजन्ति पक्षिणो वनचारिणः । अग्रतो नो भयं प्राप्तं संशयो जीवितस्य च ॥ ६ ॥
संप्रहारस्तु सुमहान्भविष्यति न संशयः । अयमाख्याति मे बाहुः स्फुरमाणो मुहुर्मुहुः ॥ ७ ॥
संनिकर्षे तु नः शूर जयं शत्रोः पराजयम् । [4]सुप्रभं च प्रसन्नं च तव वक्त्रं हि लक्ष्यते ॥ ८ ॥
उद्यतानां हि [5]युद्धार्थं येषां भवति लक्ष्मण । निष्प्रभं वदनं तेषां भवत्यायुःपरिक्षयः ॥ ९ ॥
रक्षसां नर्दतां घोरः श्रूयतेऽ[6]यं महाध्वनिः । आहतानां च भेरीणां राक्षसैः क्रूरकर्मभिः ॥ १० ॥

३-४ ] ति० टी०—सर्वभूतापहारिणस्तत्सूचकान्प्रकृते सर्वराक्षसान् । संहर्तुं तत्संहारं सूचयितुम् ॥ ३ ॥ ४ ॥

रा० टी०—तद्वचनाकारमाह—इमानिति । हे महाबाहो ! सर्वभूतापहारिणो राक्षसान् संहर्तुं समुत्थितानिमान् महोत्पातान् त्वं पश्य ॥ ३ ॥

गो० टी०—इमानिति । सर्वभूतापहारिणः सर्वभूतापहारसूचकान् प्रकृते तु सर्वराक्षसान् संहर्तुमुद्यतानिति योजना ॥ ३ ॥

रा० टी०—अमी इति । गर्दभारुणाः गर्दभनिष्ठारुण्यसदृशारुण्यवन्तः ये मेघाः व्योम्नि विवर्तन्ते ते खरस्वनाः सन्तः रुधिरधाराः विसृजन्ते ॥ ४ ॥

गो० टी०—अमी इति । रुधिरमय्यो धाराः येषां ते रुधिरधाराः खरस्वनान् घोरस्तनितानि विवर्तन्ते संचरन्ति ॥ ४ ॥

५ ] ति० टी०—राक्षसानां दुर्निमित्तान्युक्त्वा स्वस्य जयसूचकान्याह—सधूमा इति । उत्पातवशाद्धूमसंबद्धाः मम युद्धेऽभिनन्द आनन्दो येषां संजातस्तादृशाः अत एव विचेष्टन्ते तूणीरेषु चलन्ति स्वगतानन्दस्य शरेषूपचारः चापानि च विचेष्टन्ते स्वाधिष्ठातृदेवतासांनिध्यात्स्फुरज्ज्यानि भवन्ति ॥५॥

रा० टी०—राक्षसविनाशहेतुभूतानुत्पातानुक्त्वा स्वविजयसूचकशुभशकुनान्याह—सेति । सधूमाः राक्षसाशुभसूचकप्रभूतधूमसंबद्धाः सर्वे मम शराः युद्धाभिनन्दिताः युद्धाय अभिनन्दिताः प्राप्तानन्दाः लक्ष्यन्ते इति शेषः, रुक्मपृष्ठानि स्वर्णभूषितपृष्ठविशिष्टानि चापानि धनूंषि विचेष्टन्ते आकृष्टज्याभिः संबद्धुमिच्छन्ति ॥ ५ ॥

गो० टी०—सधूमा इति । प्रतापानलोद्युक्ता इति भावः । अत एव मम युद्धाभिनन्दिनः रुक्मपृष्ठानि स्वर्णमयपृष्ठानि चापानि धनूंषि । 'अथास्त्रियां धनुश्चापौ' इत्यमरः । विचेष्टन्ते चलन्ति युद्धसन्नद्धानि भवन्तीत्यर्थः । आत्मनश्चापद्वयं लक्ष्मणस्यैकमिति बहुवचनम् ॥ ५ ॥

६ ] ति०टी०—अग्रत आसन्नदेशकाले नो भयं जीवितसंशयश्च प्राप्तः । अभयं प्राप्तं चादसुराणां जीवितस्य संशयः प्राप्त इत्यर्थ इति तीर्थः ॥ ६ ॥

रा० टी०—यादृशा इति । यादृशा ये प्रसिद्धा वन[चा]रिणः पक्षिणः इहास्मिन्समये कूजन्ति तैरग्रतो भविष्यत् अभयं प्राप्तं जीवितस्य राक्षसानां जीवनस्य संशयश्च प्रा[प्तः] प्राप्तमिति लिङ्गविपरिणामेनान्यत्राप्यन्वेति ॥ ६ ॥

गो०टी०—यादृशा इति । यादृशाः प्रसिद्धाः पूर्वं कृतसं[वा]... इत्यर्थः । अग्रतः अव्यवहितोत्तरकाले नो भयमिति सुवाक् ॥

७ ] ति टी०—संप्रहारो रणः । एवं भयेष्वपि स्वस्य... यसूचकं निमित्तमाह—अयमिति । स्फुरमाणः स्फुर[न्] दक्षिण इति शेषः । तीर्थव्याख्याने जयसूचकान्तरमाहेति ... ख्ययेम् ॥ ७ ॥

रा० टी०—सामिति । मुहुर्मुहुः स्फुरमाणोऽयं मे बा[हुः] सुमहान्संप्रहारः स्वकर्तृकसंप्रहरणं भविष्यति अत्र संशयो [न] इति संनिकर्षे समीपे नोऽस्माकं जयं विजयं शत्रोः परा[जयं] चाख्याति बोधयति तव वक्त्रं सुप्रभं प्रसन्नं च लक्ष्यते, ए[त]... तवापि विजयो भविष्यतीति सूचितम् । श्लोकद्वयमेकान्वयि...

गो० टी०—संप्रहार इति । सुमहान् संप्रहारः युद्धं, बा[हुः] दक्षिणः, सन्निकर्षे अव्यवहितोत्तरकाले ॥ ७ ॥

८]ति०टी०—संनिकर्षे आसन्नकाले।जयमित्यादेराख्याती[ति]नेनान्वयः । तत्राप्यङ्गं शुभसूचकमित्याह—सुप्रभमिति ॥

गो० टी०—स्वमुखप्रसादादेः स्वयं द्रष्टुमशक्यत्वेन स्वस[मु]... नसुखे लक्ष्मणे निदर्शयति—सप्रभमिति । मुखप्रसाद... व्यतिरेकमुखेनाह—उद्यतानामिति ॥ ८—१० ॥

९-१० ] ति० टी०—येषां च वदनं निष्प्रभं भ[वति] तेषामायुःक्षयो भवति वर्तमानसामीप्ये लट् नैवमस्म... मिति शेषः । येषामायुःक्षयो भवति तेषां वदनं निष्प्रभ[मिति] व्याख्याने बीजं चिन्त्यम् ॥ ९ ॥ १० ॥

रा० टी०—विपक्षे दोषमाह—उद्यतानामिति । युद्धा[र्थम्] उद्यतानां येषां वदनं मुखं निष्प्रभं भवति तेषामायुःपरि[क्षयः] भवति ॥ ९ ॥

रा० टी०—रक्षसामिति । नर्दतां रक्षसां राक्ष...

१ विसृजन्तः खरस्वनानिति गो. पाठः । २ नन्दिन इति गो. पाठः । ३ च लक्ष्मण इति गो. रा. पाठः । ४ सप्रभमिति गो. पाठः । ५ ... इति रा. पाठः । ६ चेति गो. पाठः ।

अनागतविधानं तु कर्तव्यं शुभमिच्छता । [1]आपदा शङ्कमानेन पुरुषेण विपश्चिता ॥ ११ ॥
तस्माद्गृहीत्वा वैदेहीं शरपाणिर्धनुर्धरः । गुहामाश्रय शैलस्य दुर्गां पादपसंकुलाम् ॥ १२ ॥
प्रतिकूलितुमिच्छामि न हि वाक्यमिदं त्वया । शापितो मम पादाभ्यां गम्यतां वत्स मा चिरम् ॥ १३ ॥
त्वं हि शूरश्च बलवान्[2]हन्या एतान्न संशयः । स्वयं [3]निहन्तुमिच्छामि सर्वानेव निशाचरान् ॥ १४ ॥
एवमुक्तस्तु रामेण लक्ष्मणः सह सीतया । शरानादाय चापं च गुहां दुर्गां समाश्रयत् ॥ १५ ॥
तस्मिन्प्रविष्टे तु गुहां लक्ष्मणे सह सीतया । हन्त निर्युक्तमित्युक्त्वा रामः कवचमाविशत् ॥ १६ ॥
स तेनाग्निनिकाशेन कवचेन विभूषितः । बभूव रामस्तिमिरे [4]महानग्निरिवोत्थितः ॥ १७ ॥
स चापमुद्यम्य महच्छरानादाय वीर्यवान् । [5]संबभूवास्थितस्तत्र ज्यास्वनैः पूरयन्दिशः ॥ १८ ॥
ततो देवाः सगन्धर्वाः सिद्धाश्च सह चारणैः । समेयुश्च महात्मानो युद्धदर्शन[6]काङ्क्षया ॥ १९ ॥

---

राक्षसैराहतानां भेरीणां च घोरोऽयं महाध्वनिः श्रूयते, एतेन तेषां युद्धोद्योग इदानीमेवास्तीति सूचितम् ॥ १० ॥

११ ] ति० टी०—अनागतस्याजिगमिषितस्यानिष्टस्य विधानं प्रतिविधानं परिहारः ॥ ११ ॥

रा० टी०—अनागतेति । आपदं शङ्कमानेन आपद्विषयकशङ्कावता शुभं स्वकल्याणमिच्छता पुरुषेण अनागतविधानम् अनागतस्य प्राप्स्यमानस्य आपन्मात्रस्य विधानं प्रतीकारः कर्तव्यम् ॥ ११ ॥

गो० टी०—अनागतेति । आपदं निमित्तवशाच्छङ्कमानेन शुभम् आपत्परिहारम् इच्छता विपश्चिता दूरदर्शिना पुरुषेण अनागतविधानम् अनागतस्य भाविनोऽनर्थस्य विधानं प्रतिविधानं कर्तव्यम् ॥ ११

१२ ] ति० टी०—आश्रमं हित्वा शैलस्य दुर्गामितरैर्गन्तुमशक्यां गुहामाश्रय ॥ १२ ॥

रा० टी०—तस्मादिति । तस्मादुक्तहेतोः वैदेहीं गृहीत्वा शरपाणिर्धनुर्धरस्त्वं पादपसंकुलां वृक्षैर्व्याप्तामत एव दुर्गां दुर्गमां शैलस्य गुहामाश्रय ॥ १२ ॥

गो० टी०—तस्मादिति । गृहीत्वा रक्ष्यत्वेन गृहीत्वा पादपसंकुलां वृक्षावृताम् ॥ १२ ॥

१३ ] ति० टी०—इदं वाक्यं मयोच्यमानं त्वया प्रतिकूलितुं विपरीतं कर्तुं नेच्छामि । भिन्नकर्तृके तुमुन्नार्षः । उक्तं कुर्वित्यर्थः, मा चिरमविलम्बेन ॥ १३ ॥

रा० टी०—प्रतीति । इदं मद्वाक्यं त्वया प्रतिकूलयितुमन्यथा कर्तुमहं नेच्छामि समानकर्तृकत्वाभावे तुमुन्नार्षः, उद्यतं त्वामित्यध्याहारो वा । अत एव मम पादाभ्यां शापितः कृतशपथस्त्वं गम्यतां गच्छ असीति त्वयेति च शेषो वा किंच मम पादाभ्यां शापितः कृतशपथवता त्वया गम्यताम् इन्नन्तप्रकृतिकतृतीयान्तात्तसिः ॥ १३ ॥

गो० टी०—अहमेव योत्स्यामीति वक्तुमुद्यतं प्रत्याह—प्रतिकूलितुमिति । इदं वाक्यं प्रतिकूलितुं नेच्छामि मया शापितोऽसीति वक्तव्ये मम पादाभ्यामित्युक्तिर्लक्ष्मणव्यवहारानुसारेण ॥ १३ ॥

१४-१५ ] ति० टी०—त्वं हीति । अनेनासामर्थ्यान्मां वारयतीति शङ्का निराकृता । स्वयमिति । तथैव शापोद्धारस्य सत्त्वादिति भावः ॥ १४ ॥ १५ ॥

रा० टी०—नन्वेतत्कर्मकहनने ममापि सामर्थ्यमस्तीत्यत आह—त्वमिति । त्वमेतान् हन्याः अत्र संशयो न तथापि एतान् स्वयमागतान् सर्वान्निशाचरान् अहमेव हन्तुमिच्छामि ॥ १४ ॥

गो० टी०—त्वन्निवर्तनं न त्वदशक्त्या किंतु मुनिभ्यः प्रतिज्ञातान्मयैव तद्वधः कर्तव्य इत्याशयेनाह—त्वं हीति ॥ १४ ॥

रा० टी०—एवमिति । एवमुक्तो लक्ष्मणः शरान् चापं चादाय सीतया सह गुहां समाश्रयत् ॥ १५ ॥

गो० टी०—एवमिति । दुर्गाम् अन्यैर्दुरासदाम् ॥ १५ ॥

१६ ] ति० टी०—हन्तेति हर्षे । निर्युक्तं शीघ्रमस्मदुक्तं निर्व्यूढमित्युक्त्वा कवचमाविशद्धृतवान् ॥ १६ ॥

रा० टी०—तस्मिन्निति । लक्ष्मणे गुहां प्रविष्टे सति निर्युक्तं मदुक्तं झटित्यनुष्ठितं हन्त अतिहर्षोऽयमित्युक्त्वा रामः कवचमाविशत् दधार ॥ १६ ॥

गो० टी०—तस्मिन्निति । हन्तेति हर्षे नियुक्तं निश्चयेन उपायश्चिन्तित इत्यर्थः । 'योगः सन्नहनोपायध्यानसंगतियुक्तिषु' इत्यमरः । आविशत् प्राविशत् अधारयदित्यर्थः ॥ १६ ॥

१७] ति० टी०—नानारत्नकान्त्याऽग्निसादृश्यं कवचे ॥ १७ ॥

रा० टी०—स इति । अग्निनिकाशेन वह्निसदृशेन कवचेन विभूषितो रामः तिमिरे अन्धकारे उत्थितो महानग्निरिव बभूव ॥ १७ ॥

गो० टी०—स तेनेति । अत्रोपमालंकारेण क्षणेन रक्षःक्षयो ध्वन्यते ॥ १७ ॥ १८ ॥

१८-१९ ] ति० टी०—संबभूवास्थितः सम्यगास्थितो बभूवेत्यर्थः ॥ १८ ॥ १९ ॥

---

१ आपदमिति गो. रा. पाठः । २ हन्या ह्येतानिति गो. पाठः । ३ त्विति गो. पाठः । ४ विधूमोऽग्निरिति गो. पाठः । ५ बभूवावस्थित इति गो. पाठः । ६ काङ्क्षिण इति गो. पाठः । ७ परस्मैपदमयुक्तमिति भाति ।

ऋषयश्च महात्मानो लोके ब्रह्मर्षिसत्तमाः । समेत्य चोचुः सहितास्तेऽन्योन्यं पुण्यकर्मणः॥ २० ॥
स्वस्ति गोब्राह्मणानां च लोकानां चेति संस्थिता। जयतां राघवो युद्धे पौलस्त्यान्रजनीचरान् ॥ २१ ॥
चक्रहस्तो यथा युद्धे सर्वानसुरपुंगवान् । एवमुक्त्वा पुनः प्रोचुरालोक्य च परस्परम् ॥ २२ ॥
चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् । एकश्च रामो धर्मात्मा कथं युद्धं भविष्यति ॥ २३ ॥
इति राजर्षयः सिद्धाः सगणाश्च द्विजर्षभाः । जातकौतूहलास्तस्थुर्विमानस्थाश्च देवताः ॥ २४ ॥
आविष्टं तेजसा रामं संग्रामशिरसि स्थितम् । दृष्ट्वा सर्वाणि भूतानि भयाद्विव्यथिरे तदा ॥ २५ ॥
रूपमप्रतिमं तस्य रामस्याक्लिष्टकर्मणः । बभूव रूपं क्रुद्धस्य रुद्रस्येव महात्मनः ॥ २६ ॥
इति संभाष्यमाणे तु देवगन्धर्वचारणैः । ततो गम्भीरनिर्ह्रादं घोरचर्मायुधध्वजम् ॥ २७ ॥
अनीकं यातुधानानां समन्तात्प्रत्यपद्यत । वीरालापान्विसृजतामन्योन्यमभिगच्छताम् ॥ २८ ॥

---

२० ] ति० टी०—लोके ब्रह्मर्षिसत्तमाः । त्रैलोक्येऽपि ब्रह्मर्षित्वेन प्रसिद्धा इत्यर्थः । पुण्यकर्मणः पुण्यकर्माणः अदीर्घत्वमार्षम् ॥ २० ॥

रा० टी०—स इति । महत् चापमुद्यम्य शरानादाय वीर्यवान् स रामः ज्यास्वनैः दिशः पूरयन् सन् तत्रास्थितः संबभूव ॥ १८ ॥

रा० टी०—तत इति । देवादयस्तत्र समेयुः समेत्य ऊचुश्च । श्लोकद्वयमेकान्वयि ॥ १९ ॥ २० ॥

गो० टी०—ततो देवा इत्यादि । पूर्वसर्गे समागमनमुक्तम् अत्र सन्निधानम् । चारणाः देवजातिविशेषाः लोके त्रैलोक्ये ब्रह्मर्षिसत्तमाः भृग्वादयः पुण्यकर्मणः पुण्यकर्माणः ॥ १९॥२०॥

२१-२२ ] ति० टी०—गोब्राह्मणानामिति षष्ठी चतुर्थ्यर्थे आर्षी तेभ्य इत्यर्थः । 'लोकानां येऽभिसंगता' इति पाठे लोकानां लोकपालानां संगताः । हविर्होमादिद्वारोपकारका इत्यर्थः ॥ २१ ॥ २२ ॥

रा० टी०—तद्वचनाकारमाह—स्वस्तीति ॥ २१ ॥

रा० टी०—चक्रेति ॥ २२ ॥

गो० टी०—स्वस्तीत्यादि । लोकानां येऽभिसंगता इति । ये लोकानामभिसंगताः अनुकूलाः तेभ्योऽपि स्वस्त्यस्त्वित्यर्थः । देवादयः समेत्य स्वस्तीत्याद्यूचुः त एवैवमुक्त्वा कथं युद्धं भविष्यतीत्यन्तं पुनः प्रोचुरिति संबन्धः ॥ २१-२३ ॥

२३ ] ति० टी०—धर्मात्मा अच्छद्मयोधीत्यर्थः ॥ २३ ॥

रा० टी०—तद्वचनाकारमाह—चतुर्दशेति । रक्षसां चतुर्दशसहस्राणि सन्तीति शेषः, धर्मात्मा रामस्तु एक एवेति युद्धं कथं भविष्यति ॥ २३ ॥

२४ ] ति० टी०—सगणा विद्याधरादिदशदेवयोनिगणसहिताः । इतीत्यस्य वदन्त इति शेषः ॥ २४ ॥

रा० टी०—इतीति । इति अनेन हेतुना जातकौतूहलाः सन्तो राजर्ष्यादयस्तस्थुः ॥ २४ ॥

गो० टी०—इतीति । राजर्षयः देवत्वं प्राप्ताः यद्वा वानप्रस्थीभूताः सगणाः सपरिकराः ॥ २४ ॥

२५ ] ति० टी०—तेजसा वैष्णवेन क्षात्रेण एतेन सहजस्वभावो भगवतो ब्राह्म एव क्षात्रस्तु स्वेच्छया कार्याय भगवता स्वीक्रियत इति सूचितम् ॥ २५ ॥

रा० टी०—आविष्टमिति । तेजसा समाधिकरहितप्रतापेन आविष्टं संयुक्तं संग्रामार्थं स्थितं रामं दृष्ट्वा सर्वाणि भूतानि भयात् अनुमितरामपरिश्रमजनितभीतेः विव्यथिरे ॥ २५ ॥

गो० टी०—आविष्टमिति । संग्रामशिरसि युद्धाग्रे ॥ २५ ॥

२६] ति०टी०—रुद्रस्य रूपमिव रामस्य रूपमप्रतिमम् २६

रा० टी०—रूपमिति । न क्लिष्टं कस्मैचित् खेदप्रदं कर्मव्यापारो यस्य तस्य रामस्य अप्रतिमम् उपमारहितमपि रूपं महात्मनः क्रुद्धस्य रुद्रस्य रूपमिव बभूवेति वाक्ये देवगन्धर्वचारणैः संभाष्यमाणे सति गम्भीरनिर्ह्रादं गम्भीरनिर्ह्रादविशिष्टं घोराणि चर्मायुधध्वजानि यस्मिन् तत् यातुधानानां रक्षसामनीकं सैन्यं समन्तात् सर्वदिग्भ्यः ततः रामाधिष्ठितस्थानं समपद्यत । सार्धश्लोकद्वयमेकान्वयि ॥ २६ ॥ २७ ॥

गो० टी०—रूपमिति । रामस्य रूपं रुद्रस्य रूपमिव बभूव २६

२७ ] ति० टी०—इति वाक्ये संभाषमाणे त्वित्यर्थः॥२७

गो० टी०—तत इति । निर्ह्रादः शब्दः, वर्म कवचम् अनीकं सेना ॥ २७ ॥

२८ ] ति० टी०—अन्योन्यमभिगच्छताम् । एवं युद्धं कर्तव्यमिति च बोधनार्थमिति शेषः ॥ २८ ॥

रा० टी०—वीरेति । वीरालापान् वीरसूचकमहाशब्दान् विसृजताम् अन्योन्यं परस्परमभिगच्छताम् ॥ २८ ॥

गो० टी०—सिंहनादमित्यादि । अन्योऽन्यमभिगर्जताम् अहमेव शत्रुं हनिष्यामीति जल्पतामित्यर्थः । विस्फारयताम् ज्याशब्दं कुर्वताम् अभीक्ष्णशः भृशं जृम्भतां जृम्भमाणानां मदेनोद्गच्छतामित्यर्थः, विप्रघुष्टस्वनानां घोषो गुञ्जनाख्य

---

१ अन्योन्यमिति गो. पाठः । २ ब्राह्मणेभ्योऽस्त्विति गो. पाठः । ३ येऽभिसंगता इति गो. पाठः । ४ पिनाकिन इति गो. पाठः । ५ अर्धमे गो. नास्ति । ६ वर्मेति गो. पाठः । ७ अदृश्यतेति गो. पाठः । ८ सिंहनादमिति गो. पाठः । ९ गर्जतामिति गो. पाठः ।

चापानि विस्फारयतां जृम्भता चाप्यभीक्ष्णशः । विप्रघुष्टस्वनानां च दुन्दुभींश्चापि निघ्नताम् ॥ २९ ॥
तेषां सुविपुलः शब्दः पूरयामास तद्वनम् । तेन शब्देन वित्रस्ताः श्वापदा वनचारिणः ॥ ३० ॥
दुद्रुवुर्यत्र निःशब्दं पृष्ठतो नावलोकयन् । तच्चानीकं महावेगं रामं समनुवर्तत ॥ ३१ ॥
धृतनानाप्रहरणं गम्भीरं सागरोपमम् । रामोऽपि चारयंश्चक्षुः सर्वतो रणपण्डितः ॥ ३२ ॥
ददर्श खरसैन्यं तद्युद्धायाभिमुखो गतः । वितत्य च धनुर्भीमं तूण्याश्चोद्धृत्य सायकान् ॥ ३३ ॥
क्रोधमाहारयत्तीव्रं वधार्थं सर्वरक्षसाम् । दुष्प्रेक्ष्यश्चाभवत्क्रुद्धो युगान्ताग्निरिव ज्वलन् ॥ ३४ ॥
तं दृष्ट्वा तेजसाविष्टं प्राव्यथन्वनदेवताः । तस्य रुष्टस्य रूपं तु रामस्य ददृशे तदा ॥
दक्षस्येव क्रतुं हन्तुमुद्यतस्य पिनाकिनः ॥ ३५ ॥
[ आविष्टं तेजसा रामं संग्रामशिरसि स्थितम् । दृष्ट्वा सर्वाणि भूतानि भयार्तानि प्रदुद्रुवुः ] ॥
तत्कार्मुकैराभरणै रथैश्च तद्वर्मभिश्चाग्निसमानवर्णैः ।
बभूव सैन्यं पिशिताशनानां सूर्योदये नीलमिवाभ्रजालम् ॥ ३६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

---

निर्विशेषः 'घोषो गुञ्जनमञ्जने' इति वैजयन्ती । भावे निष्ठा तद्रूपस्वनवतामित्यर्थः ॥ २८ ॥ २९ ॥

२९-३० ] ति० टी०-जृम्भतां देहममताराहित्येन युद्धप्रवृत्तये मादकद्रव्यस्वीकारजं जृम्भणम् अभीक्ष्णशः पुनः-पुनः । 'पुनः पुनः' इत्येव पाठः विप्रघुष्टोऽतिशयेन कृतः स्वनो यैस्तेषाम् ॥ २९ ॥ ३० ॥

रा० टी०-चापानि विस्फारयताम् अभीक्ष्णशः प्रतिक्षणं जृम्भतां विप्रघुष्टस्वनानाम् अतिहर्षसूचकशब्दवतां दुन्दुभीः अभिनिघ्नतां तेषां राक्षसानां सुविपुलोऽतिविशालः शब्दः तद्वनं पूरयामास । अर्धचतुष्टयमेकान्वयि ॥ २९ ॥

रा० टी०-तेनेति । तेन शब्देन वित्रस्ताः वनचारिणः तद्वनमात्रनिवसनशीलाः श्वापदा हिंसका व्याघ्रप्रभृतयः यत्र निःशब्दं शब्दाभावस्तं देशं दुद्रुवुः पृष्ठतस्त्यक्तदिग्भागान् न अवलोकयन् अवालोकयन् ॥ ३० ॥

गो० टी०-तेनेति । श्वापदाः हिंस्रा व्याघ्रादयः यत्र निःशब्दं शब्दाभावः । "अव्ययं विभक्ति-" इत्यादिना अव्ययीभावः । तं देशं दुद्रुवुरित्यन्वयः । पृष्ठतः पश्चाद्भागम् ॥ ३० ॥

३१-३३ ] ति० टी०-यत्र निःशब्दं शब्दाभावस्तं देशं दुद्रुवुः । पृष्ठतो नावलोकयन् भीतिवशादिति शेषः ॥ ३१-३३ ॥

३४ ] ति० टी०-सर्वरक्षसां वधार्थं सर्वरक्षोवधद्वारत्वा-दस्य युद्धस्येति भावः । क्रोधमाहारयत्प्राप्तवान् ॥ ३४ ॥

रा० टी०-तदिति । धृतनानाप्रहरणम् उद्यतानेकविधायुधविशिष्टं गम्भीरम् अत एव सागरोपमं महावेगं तदनीकं सैन्यम् रामं समनुवर्तत रामं समन्ववर्तत ॥ ३१ ॥

गो० टी०-तच्चेति । समुपसर्पत समुपासर्पत् गम्भीरम् इतरदुष्प्रवेशम् ॥ ३१ ॥

रा० टी०-राम इति । रणपण्डितः रणकर्मनिपुणो रामोऽपि सर्वतः चक्षुः चारयन् उद्यतं धृतकवचादियुद्धाभिमुखं युद्धाय अभिमुखं संमुखं प्राप्तं तत् खरस्वामिकं सैन्यं ददर्श ॥ ३२ ॥

गो० टी०-रामोऽपीति । उत्थितम् उद्युक्तम् ॥ ३२ ॥

रा० टी०-वितत्येति । भीमं धनुर्वितत्य आकृष्य तूण्योः सायकान् बाणान् उद्धृत्य सर्वरक्षसां युद्धप्राप्तनिखिलराक्षसानां वधार्थं राक्षसत्वनिवृत्त्यर्थं तीव्रं क्रोधमाहारयत् स्वीचकार अत एव क्रुद्धः स्वीकृतकोपाभासो रामः युगान्ताग्निरिव ज्वलन् सन् दुष्प्रेक्ष्यः द्रष्टुमशक्योऽभवत् ॥ ३३ ॥ ३४ ॥

गो० टी०-वितत्येति । वितत्य किञ्चिद्बाणविसर्पणं कृत्वेत्यर्थः 'विततं संहितस्येषोः किंचिदेव विसर्पणम्' इति वैजयन्ती । तूण्योः पृष्ठपार्श्वद्वयबद्धयोः आहारयदित्यनेन करुणामूर्तिरप्याश्रितकण्टकोद्धारणाय क्रोधमारोपयामासेति गम्यते । भीमं धनुरुद्धृत्य तूण्योः शरांश्चोद्धृत्य वितत्य सर्वरक्षसां वधार्थं क्रोधमाहारयदित्यन्वयः ॥ ३३ ॥ ३४ ॥

३५ ] ति० टी०-प्राव्यथन्प्राव्यथन्त ॥ ३५ ॥

रा० टी०-तमिति । तेजसा आविष्टं प्रकटीकृतकिंचित्स्वतेजसं तं रामं दृष्ट्वा वनदेवताः प्राव्यथन् प्राद्रवन् । अर्धं पृथक्-तस्येति । रुष्टस्य रामस्य रूपं तु दक्षस्य क्रतुं हन्तुमुद्यतस्य पिनाकिनो महादेवस्य रूपमिव ददृशे राक्षसैरिति शेषः ॥ ३५ ॥

गो० टी०-तस्येति । दक्षस्येति क्रोधातिशयमात्रे दृष्टान्तः ॥ ३५ ॥ ३६ ॥

३६ ] ति० टी०-नीलाभ्रजालस्थानीया राक्षसाः सूर्योदयः सूर्यकिरणस्थानीयः कार्मुकादिसंबन्धः ॥ ३६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

---

१ दुन्दुभीरिति रा. पाठः । २ सुतुमुल इति गो. पाठः । ३ श्वापदा इति गो. रा. पाठः । ४ न व्यलोकयन्निति गो. पाठः । ५ तत्स्वनीकमिति गो. पाठः । ६ समुपसर्पतेति गो. पाठः । ७ युद्धाभिमुखमुत्थितमिति गो. युद्धाभिमुखमुद्यतमिति रा. पाठः । ८ तूण्योरिति गो. रा. पाठः । ९ दुष्प्रेक्षः स इति गो.पाठः । १० प्राद्रवन्निति गो.पाठः । ११ क्रुद्धस्येति गो.पाठः । १२ श्लोकोऽयमधिकः गो. पाठे । १३ ध्वजैश्च तैरिति गो.पाठः । १४ वृन्दमिति गो.पाठः ।

## पञ्चविंशः सर्गः ।

खरसैन्येन संभूतो रामस्य तुमुलाहवः प्रस्तूयते ।

अवष्टब्धधनुं रामं क्रुद्धं [1]तं रिपुघातिनम् । ददर्शाश्रममागम्य खरः सह पुरःसरैः ॥ १ ॥
तं दृष्ट्वा [2]सगुणं चापमुद्यम्य खरनिःस्वनम् । रामस्याभिमुखं सूतं चोद्यतामित्यचोदयत् ॥ २ ॥
स खरस्याज्ञया सूतस्तुरगान्समचोदयत् । यत्र रामो महाबाहुरेको धुन्वन्धनुः स्थितः ॥ ३ ॥
तं तु निष्पतितं दृष्ट्वा सर्वतो रजनीचराः । [3]मुञ्चमाना महानादं सचिवाः पर्यवारयन् ॥ ४ ॥
स तेषां यातुधानानां मध्ये रथगतः खरः । बभूव मध्ये ताराणां लोहिताङ्ग इवो[4]द्धतः ॥ ५ ॥
ततः शरसहस्रेण राममप्रतिमौजसम् । अर्दयित्वा महानादं ननाद समरे खरः ॥ ६ ॥
ततस्तं भीमधन्वानं क्रुद्धाः सर्वे निशाचराः । रामं नानाविधैः शस्त्रैरभ्यवर्षन्त दुर्जयम् ॥ ७ ॥
मुद्गरै[5]रायसैः शूलैः प्रासैः खड्गैः परश्वधैः । राक्षसाः समरे [6]शूरं निजघ्नू रोषतत्पराः ॥ ८ ॥

---

रा० टी०–तदिति । तत् तस्य कार्मुकादिभिः पिशिताशनानां सैन्यं सूर्योदये नीलमभ्रजालं मेघसमूह इव बभूव ॥३६॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

गो टी०–तदिति । कवचसूर्यकिरणयोः साम्यं नीलाभ्राणां रक्षसां च कार्मुकवत्त्वं च ध्वजवत्त्वं तुल्यं मेघे उत्पातध्वजसंभवात् ॥ ३७ ॥

अत्र सार्धसप्तत्रिंशच्छ्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने चतुर्विंशः सर्गः ॥२४॥

---

१ ] ति० टी०–उकारान्तोऽपि धनुःशब्दो धनुर्वाचकः अवष्टब्धमवलम्बितं धनुर्येन तम् ॥ १ ॥

रा० टी०–खरवृत्तान्तमाह–अवष्टब्धेति । अवष्टब्धः सम्यग् गृहीतः धनुश्चापं येन स तं क्रुद्धं रिपुघातिनं रामं पुरस्सरैः सह खरः आश्रममागम्य ददर्श उकारान्तधनुशब्दोऽपि धनुःपर्यायः ॥ १ ॥

गो० टी०–तुमुलयुद्धं पञ्चविंशे–अवष्टब्धेत्यादि । धन्यत इति धनुः । धन धान्य इत्यस्माद्धातोः "भृमृशीङ्तॄचरित्सरितनिधनिमिमस्जिभ्य उः" इत्यौणादिकसूत्रेण उप्रत्ययः । धनुषां च धनुं विदुः, 'धनुरिवाजनि वक्रः' इति कविकाव्यप्रयोगश्च ॥ १ ॥

२–३ ] ति० टी०–रामस्याभिमुखं रथश्चोद्यतामिति सूतमचोदयत् ॥ २ ॥ ३ ॥

रा० टी०–तमिति । रामं दृष्ट्वा सगुणं ज्यासहितं खरनिःस्वनं रूक्षशब्दविशिष्टं चापमुद्यम्य रामस्याभिमुखं चोद्यतां प्राप्यतामित्यर्थः, रथ इति शेषः इति सूतमचोदयत् प्रैरयत् ॥ २ ॥

रा० टी०–स इति । यत्र स्थले एको रामः धनुर्धुन्वन् स[...] स्थितस्तत्र खरस्याज्ञया सूतस्तुरगान् समचोदयत् ॥ ३ ॥

गो० टी०–तमिति । चोद्यतामिति रथ इति शेषः ॥२॥३॥

४ ] ति० टी०–सचिवाः श्येनगाम्यादयः ॥ ४ ॥

रा० टी०–तमिति । तं खरं रामसंनिधिं प्राप्तं दृ[...] महानादं मुञ्चमानाः रजनीचराः सचिवाः श्येनगाम्यादयः सर्व[...] पर्यवारयन् अवेष्टयन् ॥ ४ ॥

गो० टी०–तं त्विति । निष्पतितं युद्धोन्मुखं सचि[...] श्येनगाम्यादयः ॥ ४ ॥

५ ] ति० टी०–लोहिताङ्गो भौमः स इव क्रोधेनास्य[...] रक्ताङ्गत्वात् ॥ ५ ॥

रा० टी०–स इति । यातुधानानां मध्ये रथगतः ख[...] ताराणां मध्ये उत्थितो लोहिताङ्गो भौम इव बभूव ॥ ५ ॥

गो० टी०–स इति । लोहिताङ्गः अङ्गारकः ॥ ५ ॥

६–८ ] ति० टी०–अर्दयित्वाऽर्दयित्वेव ॥ ६–८ ॥

रा० टी०–तत इति । ततः रामसमीपागमनानन्तरस[...] मये शरसहस्रेण राममर्दयित्वा खरो महानादं ननाद ॥ ६ [...]

गो० टी०–तत इति । अर्दयित्वा पीडयित्वा महान[...] ननाद चकारेत्यर्थः ॥ ६ ॥

रा० टी०–तत इति । ततः खरकर्तृकहननानन्तरं भी[...] धन्वानं तं रामं सर्वे निशाचराः नानाविधैः शस्त्रैरभ्यवर्षन्त ॥[...]

गो० टी०–ततस्तमिति । भीमधन्वानं धनुषश्चेत्यन[...] समासान्तः । शस्त्रैः आयुधैः । 'शस्त्रमायुधलोहयोः' इ[...] मरः ॥ ७ ॥

रा० टी०–तत्प्रकारमाह–मुद्गरैरिति । रोषतत्प[...] राक्षसाः समरे शूरं रामं मुद्गराद्यैर्निजघ्नुः ॥ ८ ॥

गो० टी०–मुद्गरैरिति । मुद्गरैः स्थूलगदाभिः प्रासैः कु[...] रोषतत्पराः क्रोधपरवशाः ॥ ८ ॥

---

१ चेति गो. पाठः । २ सशरमिति गो. पाठः । ३ नर्दमाना इति गो. पाठः । ४ उदित इति गो. उत्थित इति रा. पाठः । ५ पट्टिशैरिति [...] पाठः । ६ राममिति गो. पाठः ।

ते बलाहकसंकाशा महाकाया महाबलाः । अभ्यधावन्त काकुत्स्थं रथैर्वाजिभिरेव च ॥ ९ ॥
गजैः पर्वतकूटाभै रामं युद्धे जिघांसवः । ते रामे शरवर्षाणि व्यसृजन्रक्षसां गणाः ॥ १० ॥
शैलेन्द्रमिव धाराभिर्वर्षमाणा महाघनाः । सर्वैः परिवृतो रामो राक्षसैः क्रूरदर्शनैः ॥ ११ ॥
तिथिष्विव महादेवो वृतः पारिषदां गणैः । तानि मुक्तानि शस्त्राणि यातुधानैः स राघवः ॥ १२ ॥
प्रतिजग्राह विशिखैर्नद्योघानिव सागरः । स तैः प्रहरणैर्घोरैर्भिन्नगात्रो न विव्यथे ॥ १३ ॥
रामः प्रदीप्तैर्बहुभिर्वज्रैरिव महाचलः । स विद्धः क्षतजादिग्धः सर्वगात्रेषु राघवः ॥ १४ ॥
बभूव रामः संध्याभ्रैर्दिवाकर इवावृतः । विषेदुर्देवगन्धर्वाः सिद्धाश्च परमर्षयः ॥ १५ ॥
एकं सहस्रैर्बहुभिस्तदा दृष्ट्वा समावृतम् । ततो रामस्तु संक्रुद्धो मण्डलीकृतकार्मुकः ॥ १६ ॥
ससर्ज निशितान्बाणाञ्छतशोऽथ सहस्रशः । दुरावारान्दुर्विषहान्कालपाशोपमान्रणे ॥ १७ ॥
मुमोच लीलया कङ्कपत्रान्काञ्चनभूषणान् । ते शराः शत्रुसैन्येषु मुक्ता रामेण लीलया ॥ १८ ॥

---

९-११ ] ति० टी०—बलाहका मेघाः ॥ ९-११ ॥

रा० टी०—ते इति । बलाहकसंकाशाः मेघसदृशास्ते राक्षसाः रथैर्वाजिभिश्च काकुत्स्थमभ्यधावन्त ॥ ९ ॥

गो० टी०—त इति । बलाहकसंकाशाः मेघतुल्याः कूटं शृङ्गम् अभ्यधावन्त आभिमुख्येनाधावन्त ॥ ९ ॥

रा० टी०—गजैरिति । पर्वतकूटाभैर्गिरिशिखरसदृशैर्गजैरुपलक्षिताः रामं जिघांसवः शैलेन्द्रं सुमेरुं जलधाराभिर्वर्षमाणा महाघना इव ते रक्षसां गणाः रामे शरवर्षाणि व्यसृजन् । सार्धश्लोक एकान्वयी ॥ १० ॥

गो० टी०—ते राम इति । शैलेन्द्रमिवेत्युपमानेन रामस्य निर्दुःखत्वमुक्तम् ॥ १० ॥

रा० टी०—सर्वैरिति । तिथिषु प्रदोषरात्रिषु परिषदां गणैर्वृतो महादेव इव क्रूरदर्शनैः सर्वैः राक्षसैः परिवृतो रामोऽभवदिति शेषः ॥ ११ ॥

गो० टी०—स तैरित्याद्यर्धमेकान्वयम् ॥ ११ ॥

१२ ] ति० टी०—तिथिषु प्रदोषतिथिषु । पारिषदां वुडभाव आर्षः ॥ १२ ॥

रा० टी०—तानीति । यातुधानैर्मुक्तानि शस्त्राणि राघवः नद्योघान् नदीप्रवाहान् सागर इव विशिखैर्बाणैर्जग्राह ॥ १२ ॥

गो० टी०—तानीति । विशिखैः बाणैः प्रतिजग्राह प्रतिरुरोध नद्योघान् नदीप्रवाहान् ॥ १२ ॥

१३ ] ति० टी०—प्रतिजग्राह तानि शस्त्राणि स्वशरैरवरुरोध । नद्योघा नदीप्रवाहाः ॥ १३ ॥

रा० टी०—स इति । भिन्नगात्रः भिन्नं प्राकृतविलक्षणं गात्रं शरीरं यस्य स रामस्तैः राक्षसप्रक्षिप्तैः प्रहरणैः शस्त्रास्त्रैर्न विव्यथे । तत्र दृष्टान्तः प्रदीप्तैः बहुभिर्वज्रैरचलः पर्वत इव ॥ १३ ॥

गो० टी०—स तैरिति । वज्रैः अशनिभिः ॥ १३ ॥

१४ ] ति० टी०—वज्रैरिव महाचल इत्यनेन लेशतोऽपि व्यथाभावः । स विद्धः अनेन द्रष्टॄणां किंचिद्घृणित्वं सूचयति । आदिग्ध आलिप्तः ॥ १४ ॥

रा० टी०—स इति । सर्वगात्रेषु विद्धः शस्त्रास्त्रैस्ताडितः क्षतजादिग्धः स्वीकृतकोपाभासहेतुकारुण्यविशिष्टत्वेन रुधिरेवलिप्त इव राघवो रामः संध्याभ्रैरावृतः दिवाकर इव बभूव ॥ १४ ॥

गो० टी०—स विद्ध इति । क्षतजादिग्धः रुधिरालिप्तः ॥ १४ ॥

१५-१६ ] ति० टी०—अत एव देवादयो विषेदुः ॥ १५ ॥ १६ ॥

रा० टी०—विषेदुरिति । एकं रामं बहुभिः सहस्रैः राक्षसैः समावृतं दृष्ट्वा देवादयो विषेदुः ॥ १६ ॥

गो० टी०—विषेदुरिति । बहुभिः सहस्रैः चतुर्दशसहस्रैः १६

रा० टी०—तत इति । ततः देवादिप्राप्तविषादानन्तरं मण्डलीकृतं कार्मुकं येन स रामः निशितान् अतितीक्ष्णान् दुरावारान् आवारयितुमशक्यान् दुर्विषहान् बाणान् ससर्ज तूणीरान्निस्सारयामास ॥ १६ ॥ १७ ॥

गो० टी०—तत इति । मण्डलीकृतकार्मुकः आकर्णाकर्षणेन मण्डलाकारीकृतधनुः विशिखान् बाणान् अर्धचन्द्राग्रबाणान् प्रथमं शतशः अनन्तरं सहस्रशः स निर्बिभेदेति योजना ॥ १६ ॥

१७ ] ति० टी०—दुरावारानशक्यनिवारणान् दुर्विषहान् अतिपीडाजनकानिति यावत् ॥ १७ ॥

गो० टी०—दुरावारानिति । दुरावारान् वारयितुमशक्यान् दुर्विषहान् दुःसहान् कालदण्डोपमान् यमदण्डतुल्यान् अजिह्मगान् अवक्रगामिनः अस्खलितलक्ष्यकानित्यर्थः । कङ्कपत्रान् बाणान् 'कङ्कपत्रशरमार्गणबाणाः' इति हलायुधः ॥ १७ ॥

१८ ] ति० टी०—कङ्कपत्रांस्तद्युतशरान् लीलयेति युगपत्सकलप्रपञ्चसंहारस्वरूपस्यैतावन्मात्रं लीलैवेति नाश्चर्यमिति भावः ॥ १८ ॥

रा० टी०—मुमोचेति । अजिह्मगान् अकुटिलगतीन् कङ्कपत्रान् कङ्कपत्रविशिष्टान् शरान् रामो लीलया मुमोच ।

---

१ महानादा महौजस इति गो.पाठः । २ बलाहका इति गो.पाठः । ३ स तैः···घोरै राघवो रक्षसां गणैरिति गो.पाठः । ४ अर्धमेतत् गो.नास्ति । ५ परिषदामिति रा. पाठः । ६ विशिखानिति गो.पाठः । ७ दण्डेति गो.पाठः । ८ रामः कङ्कपत्रानाजिह्मगानिति गो.रा. पाठः । ९ रुधिर लिप्त इति भाति ।

आददू रक्षसां प्राणान्पाशाः कालकृता इव । भित्त्वा राक्षसदेहांस्तांस्ते शरा रुधिराप्लुताः ॥ १९ ॥
अन्तरिक्षगता रेजुर्दीप्ताग्निसमतेजसः । असंख्येयास्तु रामस्य सायकाश्चापमण्डलात् ॥ २० ॥
विनिष्पेतुरतीवोग्रा रक्षःप्राणापहारिणः । तैर्धनूंषि ध्वजाग्राणि [1]चर्माणि कवचानि च ॥ २१ ॥
बाहून्सहस्ताभरणानूरून्करिकरोपमान् । चिच्छेद रामः समरे शतशोऽथ सहस्रशः ॥ २२ ॥
हयान्काञ्चनसंनाहान्रथयुक्तान्ससारथीन् । गजांश्च [2]सगजारोहान्सहयान्सादिनस्तदा ॥ २३ ॥
[3]चिच्छिदुर्बिभिदुश्चैव रामबाणा गुणच्युताः । पदातीन्समरे हत्वा [4]अनयद्यमसादनम् ॥ २४ ॥
ततो नालीकनाराचैस्तीक्ष्णाग्रैश्च विकर्णिभिः । भीममार्तस्वरं चक्रुश्[5]छिद्यमाना निशाचराः ॥ २५ ॥
तत्सैन्यं विविधैर्बाणैरर्दितं मर्मभेदिभिः । न रामेण सुखं लेभे शुष्कं वनमिवाग्निना ॥ २६ ॥
केचिद्भीमबलाः शूराः [6]प्रासाञ्शूलान्परश्वधान् । [7]चिक्षिपुः परमक्रुद्धा रामाय रजनीचराः ॥ २७ ॥
[8]तेषां बाणैर्महाबाहुः शस्त्राण्यावार्य वीर्यवान् । जहार समरे प्राणांश्चिच्छेद च शिरोधरान् ॥ २८ ॥

अर्थं पृथक्–ते इति । शत्रुसैन्येषु रामेण मुक्तास्ते शराः कालकृताः पाशा इव रक्षसां प्राणान् आददुः ॥ १८ ॥

गो० टी०–ते शरा इति । प्राणानाददुः अमारयन्नित्यर्थः । कालकृताः यमसृष्टा इत्यर्थः ॥ १८ ॥

१९ ] ति० टी०–रुधिराप्लुतास्तत्सिक्ताः ॥ १९ ॥

रा० टी०–भित्त्वेति । तान् लक्ष्यीभूतान् राक्षसदेहान् भित्त्वा रुधिराप्लुता दीप्ताग्निसमतेजसस्ते शराः अन्तरिक्षगताः सन्तो रेजुः ॥ १९ ॥

गो० टी०–भित्त्वेति । रुधिराप्लुता इति विशेषणं दीप्ताग्न्युपमानसिद्ध्यर्थम् ॥ १९ ॥

२० ] ति० टी०–अत एव दीप्ताग्निसमतेजसः चापमण्डलात् संधानमोचनशैघ्र्यान्मण्डलाकारता चापस्य ॥ २० ॥

रा० टी०–असंख्येया इति । रक्षःप्राणापहारिणः अतीवोग्राः असंख्येयाः रामस्य सायकाः चापमण्डलात् विनिष्पेतुः॥२०॥

गो० टी०–असंख्येया इति । सायकाः बाणाः ॥२०॥

२१ ] ति० टी०–चर्माणि फलकान् ॥ २१ ॥

रा० टी०–तैरिति । तैः स्वप्रक्षिप्तैर्बाणैः शतशः सहस्रशः धनुरादीनि समरे रामः चिच्छेद ॥ २१ ॥ २२ ॥

गो० टी०–तैरित्याद्यर्धत्रयमेकं वाक्यम् । चर्माणि कवचानि ॥ २१ ॥

२२–२३] ति० टी०–सहस्ताभरणान्साङ्गदान्॥२२॥२३॥

२४ ] ति० टी०–छेदभेदौ द्वैधीभावविदारणरूपौ । पदातीन्हत्वा यमगृहंमप्रापयदित्यन्वयः ॥ २४ ॥

रा० टी०–हयानिति । काञ्चनसन्नाहान् काञ्चनसन्नाहविशिष्टान् रथयुक्तान् ससारथीन् सारथिसहितान् सगजारोहान् गजारोहसहितान् सहयान् हयसहितान् सादिनोऽश्वारोहांश्च पदातींश्च गुणच्युता रामबाणाः चिच्छिदुः बिभिदुश्च जघ्नुरित्यर्थः। हत्वा यमसादनम् ईनां सर्वसंपत्तीनाम् अमः नित्यं प्राप्तिर्यस्मिँस्तदेव सादनं गृहं यस्मिँस्तं नित्यलोकमन[illegible] श्लोकद्वयमेकान्वयि ॥ २३ ॥ २४ ॥

गो० टी०–हयानिति । काञ्चनसंनाहान् काञ्चन[illegible]णान् रथयुक्तान् रथबद्धान् सगजारोहान् सनिषादान् सा[illegible] अश्वारोहान् सदनमेव सादनं स्वार्थे अण् ॥ २२ ॥ २३ ॥

२५–२७ ] ति० टी०–नालीका मुखमात्रायःसं[illegible] नाराचाः सर्वत आयसाः, विकार्णिनोऽग्राङ्कुशा[illegible] प्राणहराः ॥ २५–२७ ॥

रा० टी०–तत इति । नालीकादिभिः छिद्यमानाः [illegible]चराः आर्तस्वरं चक्रुः । तत्र नालीकाः लोहसंयुक्तमुखम[illegible] नाराचाः सर्वतो लोहमयाः, विकार्णिनः उद्धारे प्राणहराः [illegible]ङ्कुशाः ॥ २५ ॥

गो० टी०–तत इति । नालीकाः नालमात्रशराः ना[illegible] आयसशराः विकर्णिनः कर्णशराः । भीममिति क्रिया[illegible]षणम् ॥ २५ ॥

रा० टी०–तदिति । मर्मभेदिभिः मर्मभेदनशीलैः [illegible] धैर्बाणैः अग्निना शुष्कं वनमिव रामेण अर्दितं तत्सैन्यं न लेभे ॥ २६ ॥

गो० टी०–तत्सैन्यमिति । रामेण कर्त्रा बाणैः [illegible] पीडितं तत्सैन्यं सुखं दुःखनिवृत्तिम् अग्निना अर्दितं वनमिव न लेभे ॥ २६ ॥

रा० टी०–केचिदिति । परमक्रुद्धाः केचित् रजनी[illegible] रामाय शूलादींश्चिक्षिपुः ॥ २७ ॥

गो० टी०–केचिदिति । परमायुधानिति शला[illegible]शेषणम् ॥ २६ ॥

२८ ] ति० टी०–आवार्य वारितानि कृत्वा ॥ [illegible]

रा० टी०–तेषामिति । महाबाहुः रामस्तेषां शस्त्रा[illegible]

१ वर्माणि च शिरांसीति गो. पाठः । २ तथेति गो. पाठः । ३ अर्धमेतत् गो. नास्ति । ४ ह्यनयदिति गो. पाठः । ५ भिद्यमाना इति गो. [illegible] ६ शूलान्खड्गानिति गो. पाठः । ७ रामस्याभिमुखं गत्वा चिक्षिपुः परमायुधानिति गो. पाठः । ८ तानीति गो. पाठः । ९ गृहं प्रापयदिति युक्तं [illegible]

ते छिन्नशिरसः पेतुश्छिन्नचर्मशरासनाः । सुपर्णवातवि[2]क्षिप्ता जगत्यां पादपा यथा ॥ २९ ॥
अवशिष्टाश्च ये तत्र विषण्णास्ते[3] निशाचराः । खरमेवाभ्यधावन्त शरणार्थं शरा[4]र्दिताः ॥ ३० ॥
तान्सर्वान्धनुरादाय समाश्वास्य च दूषणः । [6]अभ्यधावत्सुसंक्रुद्धः क्रुद्धं क्रुद्ध इवान्तकः ॥ ३१ ॥
निवृत्तास्तु पुनः सर्वे दूषणाश्रयनिर्भयाः । राममेवाभ्यधावन्त सालतालशिलायुधाः ॥ ३२ ॥
शूलमुद्गरहस्ताश्च पा[7]शहस्ता महाबलाः । सृजन्तः शरवर्षाणि शस्त्रवर्षाणि संयुगे ॥ ३३ ॥
द्रुमवर्षाणि मुञ्चन्तः शिलावर्षाणि राक्षसाः । तद्बभूवाद्भुतं युद्धं तुमुलं रोमहर्षणम् ॥ ३४ ॥
[8]रामस्यास्य महाघोरं पुनस्तेषां च रक्षसाम् । ते समन्तादभिक्रुद्धा राघवं पुन[9]रार्दयन् ॥ ३५ ॥
[10]ततः सर्वा दिशो दृष्ट्वा प्रदिशश्च समावृताः । राक्षसैः [11]सर्वतः प्राप्तैः शरवर्षाभिरावृतः ॥ ३६ ॥
स कृत्वा भैरवं नादमस्त्रं परमभास्वरम् । [12]समयोजयद्गान्धर्वं राक्षसेषु महाबलः ॥ ३७ ॥
ततः शरसहस्राणि निर्ययुश्चापमण्डलात् । सर्वा दश दिशो बाणैरा[13]पूर्यन्त समागतैः ॥ ३८ ॥

---

आवार्य तेषां रक्षसां शिरोधरान् चिच्छेद अत एव प्राणान् जहार ॥ २८ ॥

गो० टी०–तानीति । आवार्य निवार्य शिरोधरानिति पुंलिङ्गत्वमार्षं शिरोधरांश्चिच्छेद प्राणान् जहारेति क्रमः॥ २७ ॥

२९ ] ति० टी०–सुपर्णवातेन गरुडपक्षवातेनामृतहरणयुद्धे विक्षिप्ता भग्नाः पादपा नन्दनस्थाः कल्पवृक्षादयो यथा तद्वत् । समग्रालंकारयुतशरीरत्वाद्रक्षस्तनूनां कल्पवृक्षादिसाम्यमिति कतकः ॥ २९ ॥

रा० टी०–ते इति । छिन्नशिरसः छिन्नचर्मशरासनास्ते राक्षसाः सुपर्णवातनिःक्षिप्ताः गरुडवाताभिहताः पादपा वृक्षा इव जगत्यां पेतुः । अमृतहरणसमये नन्दनवाटिकावृक्षाः गरुडेनोत्पाटिता इति पुराणप्रसिद्धिः ॥ २९ ॥

गो० टी०–त इति । सुपर्णो गरुडः तस्य वातेन पक्षानिलेन विक्षिप्ताः उन्मूलिताः जगत्यां भुवि ॥ २८ ॥

३० ] ति० टी०–अवशिष्टा हतावशिष्टाः ॥ ३० ॥

रा० टी०–अवशिष्टा इति । ये निशाचरास्तत्र तस्मिन् समये अवशिष्टास्तेऽपि शरार्दिताः शरोऽस्मान् हनिष्यतीति पीडिताः सन्तः शरणार्थं रक्षणार्थं खरमेव अभ्यधावन्त ॥३०॥

गो० टी०–अवशिष्टा इति । तत्र सैन्येषु अवशिष्टाः हतावशिष्टाः विषण्णाः दुःखिताः शरणार्थं रक्षणार्थमिति यावत् ॥ २९ ॥

३१ ] ति० टी०–तान्सर्वाञ्शरणार्थिनः क्रुद्धं रामं क्रुद्धोऽन्तक इवाभ्यधावत् ॥ ३१ ॥

रा० टी०–तानिति । तान् समाश्वास्य धनुः आदाय दूषणः क्रुद्धोऽन्तक इव सुसंक्रुद्धः सन् क्रुद्धं राममभ्यधावत्॥३१॥

गो० टी०–तानिति । आदाय खरसमीपगमनान्निवर्त्य अन्तकः रुद्रपराजितो यमः ॥ ३० ॥

३२–३५ ] ति० टी०–दूषणाश्रयेण दूषणाश्रयबलेन निर्भयाः ॥ ३२–३९ ॥

रा० टी०–निवृत्ता इति । दूषणाश्रयनिर्भयाः दूषणरूपाश्रयेण विगतभया अत एव निवृत्ताः सर्वे राक्षसाः शालायायुधाः सन्तः राममेव अभ्यधावन्त ॥ ३२ ॥

गो० टी०–निवृत्ता इति । निवृत्ताः युद्धान्निवृत्ताः दूषणरूपाश्रयेण निर्भयाः सन्तः अभ्यधावन्त अभिमुखमाजग्मुः प्रायशो नष्टायुधत्वात्सालतालेत्याद्युक्तम् ॥ ३१ ॥

रा० टी०–शूलेति । संयुगे संग्रामे शरवर्षाणि सृजन्तः कुर्वन्तः द्रुमवर्षाणि शिलावर्षाणि च मुञ्चन्तः महाबला राक्षसा आसन्निति शेषः, अतस्तत् युद्धमद्भुतं बभूव । श्लोकद्वयमेकान्वयि ॥ ३३ ॥ ३४ ॥

गो० टी०–शूलेत्यादि । शस्त्रवर्षाणि शरभिन्नायुधवर्षाणीत्यर्थः । सृजन्त इति आसन्निति शेषः ॥ ३२ ॥

गो० टी०–तदिति । रामस्य रक्षसां च तुमुलं संकुलं महाघोरम् अत एव रोमहर्षणं भयातिरेकेण रोमाञ्चजनकम् अत एवाद्भुतं तद्युद्धं पुनरपि बभूव ॥ ३३ ॥

रा० टी०–रामस्येति । रामस्य अस्य दूषणस्य च पुनः रक्षसां च महत् घोरं युद्धमभवत् । अभिक्रुद्धास्ते राक्षसाः राघवं समन्तात् आर्दयन् ॥ ३५ ॥

गो० टी०–त इत्यर्धमेकं वाक्यम् । अभ्ययुः आवव्रुः ३४

३६–३८ ] ति० टी०–ततः सर्वा दिशः प्रदिशश्चावृता दृष्ट्वा स रामो भैरवं नादं कृत्वा सर्वतः प्राप्तैः राक्षसैः शरवर्षाभिः शरवृष्टिभिरावृतः कालोचितं परमभास्वरं गान्धर्वमस्त्रं राक्षसेषु राक्षसविषये समयोजयत् । धनुषीत्यर्थः ॥ ३६–३८ ॥

रा० टी०–तत इति । सर्वतः प्राप्तैः राक्षसैः समावृता दिशः प्रदिशश्च दृष्ट्वा शरवर्षाभिरावृतो महाबलो रामः भैरवं

---

१ वर्मेति गो. रा. पाठः । २ निःक्षिप्ता इति रा.पाठः । ३ चेति गो. पाठः । ४ अर्दिता इति गो. रा. पाठः । ५ पुनरिति गो. पाठः । ६ अभ्यधावत काकुत्स्थं क्रुद्धो रुद्रमिति गो. पाठः । ७ चापेति गो. पाठः । ८ रामस्य चेति गो. पाठः । ९ अभ्ययुरिति गो. अर्दयान्निति रा. पाठः । १० तैश्चेति गो. पाठः । ११ उद्यतप्रासैः शस्त्रवर्षाभिवर्षिभिरिति गो. पाठः । १२ संयोजयतेति गो. पाठः । १३ आवार्यन्तेति गो. पाठः।

नाददानं शरान्घोरान्विमुञ्चन्तं शरोत्तमान । विकर्षमाणं पश्यन्ति राक्षसास्ते शरार्दिताः ॥ ३९ ॥
शरान्धकारमाकाशमावृणोत्सदिवाकरम् । बभूवावस्थितो रामः प्रक्षिपन्निव ताञ्छरान् ॥ ४० ॥
युगपत्पतमानैश्च युगपच्च हतैर्भृशम् । युगपत्पतितैश्चैव विकीर्णा वसुधाऽभवत् ॥ ४१ ॥
निहताः पतिताः क्षीणाश्छिन्ना भिन्ना विदारिताः । तत्र तत्र स्म दृश्यन्ते राक्षसास्ते सहस्रशः ॥ ४२ ॥
सोष्णीषैरुत्तमाङ्गैश्च साङ्गदैर्बाहुभिस्तथा । ऊरुभिर्बाहुभिश्छिन्नैर्नानारूपैर्विभूषणैः ॥ ४३ ॥
हयैश्च द्विपमुख्यैश्च रथैर्भिन्नैरनेकशः । चामरव्यजनैश्छत्रैर्ध्वजैर्नानाविधैरपि ॥ ४४ ॥
रामेण बाणाभिहतैर्विच्छिन्नैः शूलपट्टिशैः । [ खड्गैः खण्डीकृतैः प्रासैर्विकीर्णैश्च परश्वधैः ।
चूर्णिताभिः शिलाभिश्च शरैश्चित्रैरनेकशः ।] विच्छिन्नैः समरे भूमिर्विस्तीर्णाऽभूद्भयंकरा ॥ ४५ ॥

नादं कृत्वा गान्धर्वं परमभास्वरमस्त्रं राक्षसेषु समयोजयत् । श्लोकद्वयमेकान्वयि ॥ ३६ ॥ ३७ ॥

गो० टी०–इदमनुवदन्नाह—तैश्चेत्यादिश्लोकद्वयमेकं वाक्यम् । महाबलः स रामः दिशः प्रदिशश्च तैरावृताः दृष्ट्वा भैरवं भयंकरं नादं कृत्वा राक्षसेषु राक्षसनिमित्तं गान्धर्वमस्त्रं धनुषि संयोजयत समयोजयत् शरवर्षाभिवर्षिभिः शरवर्षकारिभिरित्यर्थः ॥ ३९ ॥ ३६ ॥

रा० टी०–तत इति । ततः संयोजनानन्तरं चापमण्डलात् शरसहस्राणि निर्ययुः अत एव समागतैर्बाणैः सर्वा दश-दिश आपूर्यन्त । अत्र दशशब्दोपादानेनैव सर्वदिशो ग्रहणे सिद्धे पुनः सर्वशब्दोपादानमवान्तरदेशव्याप्तिपरिग्रहाय ॥ ३८ ॥

गो० टी०–तत इति । चापमण्डलात् संहितगान्धर्वास्त्रात् आकर्षणातिशयेन मण्डलीकृताच्चापान्निर्ययुः समागतैस्तैर्बाणैर्दश दिशः सर्वाः अन्यूनाः अवार्यन्त ॥ ३७ ॥

३९ ] ति० टी०–नाददानमिति । अतिशैघ्र्यवशाच्छरग्रहणमोचने न पश्यन्ति, किं तु विकर्षमाणमेव धनुः पश्यन्ति ॥ ३९ ॥

रा० टी०–नेति । घोरान् शरोत्तमान् शरान् आददानं गृह्णन्तं शरार्दिताः राक्षसाः न पश्यन्ति ॥ ३९ ॥

गो० टी०–नाददानमिति । राक्षसा रामस्य शरादानकर्षणमोचनानि नापश्यन् किंतु स्वहिंसनमेवापश्यन्निति क्रियाप्रधानो निर्देशः । यद्यपि गान्धर्वास्त्रप्रयोगे विचित्रबाणनिर्गमोऽस्ति तदस्मिन् श्लोके नोच्यते किंतु तदनन्तरभाविकेवलशरमोक्ष इति ज्ञेयम् ॥ ३८ ॥

४० ] ति० टी०–दिवाकरसहितमाकाशं कर्म शरान्धकारं कर्तृ आवृणोत् । अन्धकारोऽस्त्रियाम् । प्रक्षिपन्निव भूयो भूयः प्रक्षिपन्नेवेत्यर्थः । इवशब्द एवार्थे ॥ ४० ॥

रा० टी०–शरेति । शरान्धकारं शररूपोऽन्धकारः सदिवाकरमाकाशमावृणोत् अवस्थितः स्वास्थ्येन स्थितो रामः प्रक्षिपन्निव बभूव प्रक्षिपन्निवेत्यनेन अभिप्रायविज्ञानमात्रेण स्वतश्चलन्तीति सूचितं, तेन रामबाणानां चेतनत्वं सूचितम् ॥ ४० ॥

गो० टी०–शरान्धकारमिति । अन्धकारमिति [illegible]त्वमार्षं प्रवमन् उद्गिरन् ॥ ३९ ॥

४१ ] ति० टी०–विकीर्णा कृताच्छादना । 'विस्ती[illegible]' इति पाठेऽप्ययमेवार्थः ॥ ४१ ॥

रा० टी०–युगपदिति । युगपत् पतमानैः एककाल[illegible]च्छेदेन वर्तमानकालिकपतनाश्रयैः एवमन्यत्रापि वसुधा वि[illegible]र्णा व्याप्ता अभवत् ॥ ४१ ॥

गो० टी०–युगपच्छरनिर्गमः समुत्प्रेक्ष्यते--युगपदिति पतमानैः पतद्भिः एककाले शरहतैः एककाले भूमौ पत[illegible] एककाले पतितैश्च राक्षसैः वसुधा विकीर्णा व्याप्ताऽभव[illegible] युगपच्छरनिर्गमनकार्योक्तिः ॥ ४० ॥

४२ ] ति० टी०–निहताः सद्योहताः, प[illegible]पातानन्तरं मृताः, क्षीणाः कण्ठगतप्राणाः । छिन्नभिन्नौ [illegible]ख्यातौ ॥ ४२ ॥

रा० टी०–निहता इति । सहस्रशो राक्षसा निहत[illegible]दिविशिष्टाः दृश्यन्ते ॥ ४२ ॥

गो० टी०–अथ हिंसावैचित्र्यमाह–निहता इ[illegible] निहताः केवलं प्रहताः पतिताः अशनिपात इव भयेन [illegible] पतिताः क्षीणाः कण्ठगतप्राणाः छिन्नाः द्विधा कृताः [illegible] खण्डितावयवाः विदारिताः नृसिंहेन हिरण्यवदाभिकण्ठ[illegible]न्नशरीराः । तत्र तत्रेत्यनेन कश्चिच्छिन्नः कश्चिद्विदारितः [illegible] कश्चित् भिन्न इत्येवं विचित्रशववत्त्वमुक्तम् ॥ ४१ ॥

४३–४४ ] ति० टी०–विभूषणैरुपलक्षिताः राक्षसा[illegible] शेषः ॥ ४३ ॥ ४४ ॥

४५ ] ति० टी०–विच्छिन्नैर्विशेषतश्छिन्नैश्चामरादिभि[illegible]ताश्छिन्नैः शूलपट्टिशैश्चेत्यर्थः ॥ ४६ ॥

रा० टी०–सेति । रामेण बाणाभिहतैः सोष्णीषै[illegible] माङ्गैः शिरोभिः साङ्गदैः अङ्गदसहितैर्बाहुभिः । छिन्नैरुरु[illegible] हुभिश्च छिन्नैः हयादिभिश्च छिन्नैः शूलपट्टिशैश्च विस्तीर्णा [illegible] भयंकराऽभूत् ॥ ४३–४६ ॥

गो० टी०–चित्रवधं दर्शयति–सोष्णीषैरित्यादि[illegible]

१ न मुञ्चन्तं शिलीमुखानिति गो. पाठः । २ प्रवमन्निति गो. पाठः । ३ जानुभिरिति गो. पाठः । ४ रूपविभूषणैरिति गो. पाठः । ५ रा[illegible] गो. पाठः । ६ विचित्रैरिति गो. पाठः । ७ श्लोकोऽयमधिकः गो. पाठे । ८ विकीर्णैति गो. पाठः ।

तान्दृष्ट्वा निहतान्सर्वे राक्षसाः परमातुराः । न तत्र चलितुं शक्ता रामं परपुरंजयम् ॥ ४६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे पञ्चविंशः सर्गः ॥ २५ ॥

## षड्विंशः सर्गः ।

स्वसेनाक्षयात्कुपितो दूषणः पञ्चसाहस्रराक्षसै राममभियाति । रामेण सेनापतित्रयसहितदूषणे निहते द्वादशभिः सेनाध्यक्षैर्युतः खरो राममभियाति तेषामपि च सैनिकानां नाशे स्वयमेव राममभिपतति ।

दूषणस्तु स्वकं सैन्यं हन्यमानं विलोक्य च । संदिदेश महाबाहुर्भीमवेगान्दुरासदान् ॥ १ ॥
राक्षसान्पञ्चसाहस्रान्समरेष्वनिवर्तिनः । ते शूलैः पट्टिशैः खड्गैः शिलावर्षैर्द्रुमैरपि ॥ २ ॥
शरवर्षैरविच्छिन्नं ववर्षुस्तं[1] समन्ततः । तद्द्रुमाणां[2] शिलानां च वर्षं प्राणहरं महत् ॥ ३ ॥
प्रतिजग्राह धर्मात्मा राघवस्तीक्ष्णसायकैः । प्रतिगृह्य च तद्वर्षं निमीलित इवर्षभः ॥ ४ ॥
रामः क्रोधं परं लेभे[3] वधार्थं सर्वरक्षसाम् । ततः क्रोधसमाविष्टः प्रदीप्त इव तेजसा ॥ ५ ॥
शरैरभ्यकिरत्सैन्यं[4] सर्वतः सहदूषणम् । ततः सेनापतिः क्रुद्धो दूषणः शत्रुदूषणः ॥ ६ ॥

सोष्णीषैः शिरोवेष्टनवद्भिः उत्तमाङ्गैः केवलशिरोभिः नानारूपविभूषणैरित्यूरुजानूनां विशेषणं साधोंरुकैरूरुभिः सकटकैर्जोदभिश्चेत्यर्थः । अनेकशो भिन्नैरिति हयादित्रयविशेषणं, विच्छिन्नैरिति चामरादिसर्वविशेषणं, विचित्रैरिति शूलादिविशेषणं, नानाविधैरिति चामरादिविशेषणं, पूर्वोक्तैरेतैर्विकीर्णा अत एव भयंकराऽभूदिति योजना । एतावता ग्रन्थेन रामशरप्रभावातिशयो दर्शितः ॥ ४२–४६ ॥

अस्मिन् सर्गे पञ्चचत्वारिंशच्छ्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने पञ्चविंशः सर्गः ॥ २५ ॥

४६ ] ति० टी०–रामं चलितुं रामं प्रति संमुखं गन्तुम् ॥ ४६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे पञ्चविंशः सर्गः ॥ २५ ॥

रा० टी०–तानिति । निहतान् दृष्ट्वा सर्वे उर्वरिता राक्षसाः परमातुराः सन्तः रामं चलितुं न शक्ता बभूवुरिति शेषः ॥४६॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे पञ्चविंशः सर्गः ॥ २५ ॥

१ ] ति० टी०–दूषणस्त्विति ॥ १ ॥

रा० टी०–सैन्यहनननानन्तरकालिकं वृत्तान्तमाह–दूषण इत्यादिभिः । स्वसैन्यं हन्यमानं दूषणो विलोक्य दुरासदान् आसादितुमशक्यान् समरेषु अनिवर्तिनः पञ्चसाहस्रान् राक्षसान् संदिदेश । सार्धश्लोक एकान्वयी ॥ १ ॥

गो० टी०–अथ दूषणप्रमुखखरसर्वसैन्यविनाशः षड्विंशे– दूषणस्त्वित्याद्यर्धत्रयमेकं वाक्यम् । निरीक्ष्य चेति खिन्नश्चेत्यर्थः भीमवेगान् भयंकरधावनान् अत एव दुरासदान् । पञ्चसाहस्रानित्यनेन पञ्चसाहस्री पूर्वं हतेति व्यज्यते॥१॥

२–३ ] ति० टी०–पञ्चसाहस्रान्स्वसैन्यरूपान् ॥२॥३॥

रा० टी०–ते इति । ते राक्षसाः शूलादिभिः समन्ततः अविच्छिन्नं निरन्तरं तं रामं ववर्षुः ॥ २ ॥

गो० टी०–त इति । तं रामम् ॥ २ ॥

रा० टी०–तदिति । प्राणहरं तद्द्रुमादीनां वर्षं धर्मात्मा राघवस्तीक्ष्णसायकैः प्रतिजग्राह ॥ ३ ॥

गो० टी०–स इति । प्राणहरम् अन्येषामिति शेषः प्रतिजग्राह प्रतिरुरोध धर्मात्मेत्यनेन कूटयोधित्वव्युदासः ॥ ३ ॥

४–६ ] ति० टी०–प्रतिजग्राह रुरोध । निमीलितो वर्षधारया निमीलिताक्षः ॥ ४–६ ॥

रा० टी०–प्रतीति । निमीलितः निमीलितनयनः ऋषभः सर्वश्रेष्ठो रामः सर्वरक्षसां वधार्थं परं क्रोधमिव लेभे । इवेन तस्य राक्षसदुष्टत्वनिवर्तकत्वात्कृपालुत्वं सूचितम् ॥ ४ ॥

गो० टी०–प्रतिगृह्येति । निमीलित इवर्षभ इत्यनेन शरवर्षेऽपि निर्व्यथत्वमनायासत्वं च द्योत्यते ॥ ४ ॥

रा० टी०–तत इति । तेजसा प्रदीप्तः क्रोधसमाविष्ट इव रामः सहदूषणं दूषणसहितं सैन्यं शरैः सर्वतः अभ्यकिरत्॥५॥

रा० टी०–तत इति । शत्रुदूषणः क्रुद्धो दूषणः अशनिकल्पैः शरैस्तं राघवं समवारयत् ॥ ६ ॥

गो० टी०–तत इति । क्रोधसमाविष्ट इति राम इति शेषः, प्रदीप्त इव तेजसेति तेजोयुक्तत्वेन प्रदीप्त इव स्थित इत्यर्थः । सहदूषणं दूषणसहितं दूषणः खरस्य सेनापतिः ॥ ६ ॥ ६ ॥

[1] श्लोकोऽयं गो. नास्ति । [2] ववृषुरिति गो. पाठः । [3] सद्द्रुमाणामिति गो. पाठः । [4] भेजे इति गो. पाठः । [5] अवाकिरदिति गो. पाठः ।

शरैरशनिकल्पैस्तं राघवं समवारयत् । ततो रामः सुसंक्रुद्धः क्षुरेणास्य महद्धनुः ॥ ७ ॥
चिच्छेद समरे वीरश्चतुर्भिश्चतुरो हयान् । हत्वा चाश्वान्शरैस्तीक्ष्णैरर्धचन्द्रेण सारथेः ॥ ८ ॥
शिरो जहार तद्रक्षस्त्रिभिर्विव्याध वक्षसि । स च्छिन्नधन्वा विरथो हताश्वो हतसारथिः ॥ ९ ॥
जग्राह गिरिशृङ्गाभं परिघं रोमहर्षणम् । वेष्टितं काञ्चनैः पट्टैर्देवसैन्याभिमर्दनम् ॥ १० ॥
आयसैः शङ्कुभिस्तीक्ष्णैः कीर्णं परवसोक्षितम् । वज्राशनिसमस्पर्शं परगोपुरदारणम् ॥ ११ ॥
तं महोरगसंकाशं प्रगृह्य परिघं रणे । दूषणोऽभ्यपतद्रामं क्रूरकर्मा निशाचरः ॥ १२ ॥
तस्याभिपतमानस्य दूषणस्य च राघवः । द्वाभ्यां शराभ्यां चिच्छेद सहस्ताभरणौ भुजौ ॥ १३ ॥
भ्रष्टस्तस्य महाकायः पपात रणमूर्धनि । परिघश्छिन्नहस्तस्य शक्रध्वज इवाग्रतः ॥ १४ ॥
कराभ्यां च विकीर्णाभ्यां पपात भुवि दूषणः । विषाणाभ्यां विशीर्णाभ्यां मनस्वीव महागजः ॥ १५ ॥
दृष्ट्वा तं पतितं भूमौ दूषणं निहतं रणे । साधु साध्विति काकुत्स्थं सर्वभूतान्यपूजयन् ॥ १६ ॥

---

७–८ ] ति० टी०–क्षुरेण क्षुरधारेण शरेण ॥ ७ ॥ ८ ॥

रा० टी०–तत इति । ततः दूषणशरसंवारणानन्तरं सुसंक्रुद्धो रामः क्षुरेण क्षुरधारेण बाणेन अस्य महद्धनुः चतुर्भिर्बाणैश्चतुरो हयांश्च चिच्छेद ॥ ७ ॥

गो० टी०–तत इति । चतुर्भिरिति शरैरित्यनुषङ्गः ॥ ७ ॥

रा० टी०–हत्वेति । तीक्ष्णैः शरैः अश्वान् हत्वा अर्धचन्द्रेण सारथेः शिरो जहार त्रिभिर्बाणैः तत् रक्षो दूषणं वक्षसि विव्याध ॥ ८ ॥

गो० टी०–हत्वेति । तद्रक्षः दूषणं वक्षसि विव्याधेति संबन्धः ॥ ८ ॥

९–१०] ति० टी०–तद्रक्षः कर्म व्यधने रामः कर्ता॥९॥१०॥

११–१३ ] ति० टी०–परेषां शत्रूणां वसयोक्षितं सिक्तम् । शत्रूणां गाव इन्द्रियाणि तेषां पुरं शरीरं तस्य दारणं विदारणम्, यद्वा तेषां पुरद्वारविदारकम् ॥ ११–१३ ॥

रा० टी०–स इति । विरथः स दूषणः गिरिशृङ्गाभं परिघं जग्राह ॥ ९ ॥

रा० टी०–वेष्टितमिति । काञ्चनैः स्वर्णमयैः पट्टैर्बन्धनैर्वेष्टितं तीक्ष्णैरायसैर्लोहनिर्मितैः शङ्कुभिः कीर्णं परवसोक्षितं परवसया शत्रुमेदसा उक्षितं सिक्तं परगोपुरदारणं शत्रुपुरद्वारविदारकं महोरगसंकाशं तं परिघं प्रगृह्य दूषणो राममभ्यपतत् । सार्धश्लोकद्वयमेकान्वयि ॥ १०–१२ ॥

गो० टी०–स इति । परितो हन्यतेऽनेनेति परिघः तं पट्टैः बन्धनैः परवसोक्षितं शत्रुमेदःसिक्तम् । 'हृन्मेदस्तु वपा वसा' इत्यमरः । वज्राशनिसमस्पर्शं वज्रं वज्राख्यरत्नम् । अशनिः वज्रायुधं तदुभयसदृशकाठिन्यं परगोपुरदारणं परेषां शत्रूणां यत् गोपुरं पुरद्वारं तस्य दारणं भेदकम् । 'पुरद्वारं तु गोपुरम्' इत्यमरः ॥ ९–१२ ॥

रा० टी०–तस्येति । अभिपतमानस्य दूषणस्य सहस्ताभरणौ हस्ताभरणसहितौ भुजौ द्वाभ्यां शराभ्यां राघवः चिच्छेद ॥ १३ ॥

गो० टी०–तस्येति । अभिपतमानस्य अभिपततः सहस्ताभरणावित्यनेन शौर्यबिरुदवत्त्वं लक्ष्यते ॥ १३ ॥

१४ ] ति० टी०–हस्तच्छेदानन्तरं भ्रष्टो घूर्णनेन स्थानाद्भ्रष्टः तथा छिन्नहस्तस्य परिघः पपात ॥ १४ ॥

रा० टी०–भ्रष्ट इति । भ्रष्टः आघूर्णनेन स्खलितः तस्य महाकायः रणमूर्धनि संग्राममध्ये पपात, छिन्नहस्तस्य परिघः शक्रध्वज इव अग्रतः पपात ॥ १४ ॥

गो० टी०–भ्रष्ट इति । रणमूर्धनि छिन्नहस्तस्य तस्य दूषणस्य भ्रष्टः हस्ताच्च्युतः महाकायः महाप्रमाणः परिघः शक्रध्वज इवाग्रतः पपातेत्यन्वयः ॥ १४ ॥

१५–१६ ] ति० टी०–विकीर्णाभ्यां विक्षिप्ताभ्यां भुजाभ्यामुपलक्षितो दूषणश्च पपात विगतासुरिति शेषः । विषाणाभ्यां दन्ताभ्याम् ॥ १५ ॥ १६ ॥

रा० टी०–पतनमेव भङ्ग्यन्तरेणाह–कराभ्यामिति विकीर्णाभ्यां प्रक्षिप्ताभ्यां कराभ्यामुपलक्षितो दूषणः विशीर्णाभ्यां पतिताभ्यां दन्ताभ्यामुपलक्षितो मनस्वी महागज इव भुवि पपात ॥ १५ ॥

गो० टी०–स इति । कराभ्यां सह पपातेत्यन्वयः मनस्वी धीरः ॥ १५ ॥

रा० टी०–दृष्ट्वेति । रणे निहतं दूषणं दृष्ट्वा सर्वभूतानि काकुत्स्थं रामं साधु साध्विति अपूजयन् ॥ १६ ॥

गो० टी०–तमिति । अपूजयन् अस्तुवन् ॥ १६ ॥

---

१ भवाकिरदिति गो. पाठः । २ सैन्यप्रमर्दनमिति गो. पाठः । ३ स इति गो. रा. पाठः । ४ स कराभ्यामिति गो. पाठः ।

एतस्मिन्नन्तरे क्रुद्धास्त्रयः सेनाग्रयायिनः । संहत्याभ्यद्रवन्रामं मृत्युपाशावपाशिताः ॥ १७ ॥
महाकपालः स्थूलाक्षः प्रमाथी च महाबलः । महाकपालो विपुलं शूलमुद्यम्य राक्षसः ॥ १८ ॥
स्थूलाक्षः पट्टिशं गृह्य प्रमाथी च परश्वधम् । दृष्ट्वैवापततस्तांस्तु राघवः सायकैः शितैः ॥ १९ ॥
तीक्ष्णाग्रैः प्रतिजग्राह संप्राप्तानतिथीनिव । महाकपालस्य शिरश्चिच्छेद रघुनन्दनः ॥ २० ॥
असंख्येयैस्तु बाणौघैः प्रममाथ प्रमाथिनम् । स्थूलाक्षस्याक्षिणी स्थूले पूरयामास सायकैः ॥ २१ ॥
स पपात हतो भूमौ विटपीव महाद्रुमः । दूषणस्यानुगान्पञ्चसाहस्रान्कुपितः क्षणात् ॥ २२ ॥
हत्वा तु पञ्चसाहस्रैरनयद्यमसादनम् । दूषणं निहतं श्रुत्वा तस्य चैव पदानुगान् ॥ २३ ॥
व्यादिदेश खरः क्रुद्धः सेनाध्यक्षान्महाबलान् । अयं विनिहतः संख्ये दूषणः सपदानुगः ॥ २४ ॥
महत्या सेनया सार्धं युद्धा रामं कुमानुषम् । शस्त्रैर्नानाविधाकारैर्हनध्वं सर्वराक्षसाः ॥ २५ ॥
एवमुक्त्वा खरः क्रुद्धो राममेवाभिदुद्रुवे । श्येनगामी पृथुग्रीवो यज्ञशत्रुर्विहंगमः ॥ २६ ॥
दुर्जयः करवीराक्षः परुषः कालकार्मुकः । हेममाली महामाली सर्पास्यो रुधिराशनः ॥ २७ ॥
द्वादशैते महावीर्या बलाध्यक्षाः ससैनिकाः । राममेवाभ्यधावन्त विसृजन्तः शरोत्तमान् ॥ २८ ॥
ततः पावकसंकाशैर्हेमवज्रविभूषितैः । जघान शेषं तेजस्वी तस्य सैन्यस्य सायकैः ॥ २९ ॥
ते रुक्मपुङ्खा विशिखाः सधूमा इव पावकाः । निजघ्नुस्तानि रक्षांसि वज्रा इव महाद्रुमान् ॥ ३० ॥

---

१७-२२ ] ति० टी०-संहत्य मिलित्वा । मृत्युपाशेनावपाशिता बद्धाः ॥ १७-२२ ॥

रा० टी०-एतस्मिन्निति । अन्तरे समये मृत्युपाशावपाशिताः आसन्नमृत्यव इत्यर्थः, क्रुद्धाः महाकपालादयः त्रयः सेनाग्रयायिनः संहत्य एकीभूय रामम् अभ्यद्रवन् । सार्धश्लोक एकान्वयी ॥ १७ ॥

रा० टी०-त्रयाणामभिद्रवणप्रकारमाह-महाकपाल इति । महाकपालः शूलमुद्यम्य, स्थूलाक्षः पट्टिशं, प्रमाथी परश्वधं च गृह्य गृहीत्वा अद्रवन्निति शेषः । अर्धद्वयमेकान्वयि ॥ १८ ॥

गो० टी०-एतस्मिन्निति । त्रीनेवाह-महाकपाल इति । कः किमायुधं गृहीत्वाऽभ्यद्रवदित्यत्राह-महाकपाल इति ॥ १७ ॥ १८ ॥

रा० टी०-दृष्ट्वेति । आपततस्तान् दृष्ट्वा राघवस्तु तीक्ष्णाग्रैः शितैः सायकैः संप्राप्तान् अतिथीनिव प्रतिजग्राह॥१९॥

गो० टी०-दृष्ट्वेति । शितैः शाणोल्लीढैः प्रतिजग्राह तेषु बाणानर्पयामासेत्यर्थः । यथा गृहं प्राप्तानतिथीनुपचारैः प्रतिगृह्णाति तथेत्यर्थः ॥ १९ ॥

रा० टी०-महाकपालस्येति । असंख्येयैः अतिद्रुतगमनवत्त्वेन संख्यातुमशक्यैः बाणौघैः महाकपालस्य शिरश्चिच्छेद, प्रमाथिनं तु प्रममाथ स्थूलाक्षस्य अक्षिणी तु सायकैः पूरयामास ॥ २० ॥ २१ ॥

रा० टी०-स इति । सः सेनाग्रयायिसमूहः विटपी बहुशाखावान् महाद्रुम इव भूमौ पपात । अर्धं पृथक्-दूषणस्येति । पञ्चसाहस्रान् दूषणस्यानुगान् क्षणात् हत्वा तान् पञ्चसाहस्रान् यमसादनं सकलसंपत्तिविशिष्टलोकविशेषमनयत् 'हत्वा तान् पञ्चसाहस्रान्' इति पाठः ॥ २२ ॥

गो० टी०-प्रतिजग्राहेत्युक्तं विवृणोति-महाकपालस्येत्यादिना । प्रममाथ चूर्णीचकारेत्यर्थः । चूर्णशरीरत्वे दृष्टान्ततयोक्तं विटपीति ॥ २०-२३ ॥

२३-२४ ] ति० टी०-पञ्चसाहस्रान्पञ्चसाहस्रैरित्यनेन भगवतोऽमोघेषुत्वं सूचितम् ॥ २३ ॥ २४ ॥

२५-३० ] ति० टी०-हनध्वमित्यार्षम् ॥ २५-३० ॥

रा० टी०-दूषणमिति । दूषणं तस्य पदानुगांश्च निहतं श्रुत्वा क्रुद्धः खरः महाबलान् सेनाध्यक्षान् व्यादिदेश ॥ २३ ॥

रा० टी०-व्यादेशप्रकारमाह-अयमिति । सपदानुगः सानुचरः अयं दूषणः निहतः अतः हे सर्वराक्षसाः! महत्या सेनया सार्धं युद्धा रामेणेति शेषः कुमानुषं रामं हनध्वं गणकार्यस्यानित्यत्वान्न शपो लुक् ॥ २४ ॥ २५ ॥

गो० टी०-अयमिति । हनध्वं घ्नत ॥ २४ ॥ २५ ॥

रा० टी०-एवमिति । क्रुद्धः खरः एवमुक्त्वा राममेव अभिदुद्रुवे । अर्धं पृथक्-श्येनेति । ससैन्यकाः श्येनगाम्यादयः द्वादश बलाध्यक्षाः शरोत्तमान् विसृजन्तो राममेव अभ्यधावन्त । सार्धश्लोकद्वयमेकान्वयि ॥ २६-२८ ॥

गो० टी०-सेनाध्यक्षानेवाह-श्येनगामीत्यादिना २६-२८

रा० टी०-तत इति । ततः ससैन्यबलाध्यक्षसहितखरपतनानन्तरं हेमवज्रविभूषितैः सायकैः सैन्यस्य शेषं तेजस्वी रामो जघान ॥ २९ ॥

---

१ तूर्णमिति गो. पाठः । २ परमेषुभिरिति गो. पाठः । ३ एतदाद्यर्धद्वयं व्यत्यस्तं गो. पाठे । ४ तीक्ष्णैरिति गो. पाठः । ५ बाणौघैरिति गो. पाठः । ६ दृष्ट्वेति गो. पाठः । ७ मेघेति गो. पाठः ।

रक्षसां तु शतं रामः शतेनैकेन कर्णिना । सहस्रं तु सहस्रेण जघान रणमूर्धनि ॥ ३१ ॥
तैर्भिन्नवर्माभरणाश्छिन्नभिन्नशरासनाः । निपेतुः शोणितादिग्धा धरण्यां रजनीचराः ॥ ३२ ॥
तैर्मुक्तकेशैः समरे पतितैः शोणितोक्षितैः । [2]विस्तीर्णा वसुधा कृत्स्ना महावेदिः कुशैरिव ॥ ३३ ॥
[3]तत्क्षणे तु महाघोरं वनं निहतराक्षसम् । बभूव निरयप्रख्यं मांसशोणितकर्दमम् ॥ ३४ ॥
चतुर्दशसहस्राणि रक्षसां भीमकर्मणाम् । हतान्येकेन रामेण मानुषेण पदातिना ॥ ३५ ॥
तस्य सैन्यस्य सर्वस्य खरः शेषो महारथः । राक्षसस्त्रिशिराश्चैव रामश्च रिपुसूदनः ॥ ३६ ॥
शेषा हता [4]महावीर्या राक्षसा रणमूर्धनि । घोरा दुर्विषहाः सर्वे लक्ष्मणस्याग्रजेन ते ॥ ३७ ॥
ततस्तु तद्भीमबलं महाहवे समीक्ष्य [5]धर्मेण हतं बलीयसा ।
रथेन रामं महता खरस्[6]ततः समाससादेन्द्र इवोद्यताशनिः ॥ ३८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे षड्विंशः सर्गः ॥ २६ ॥

---

गो० टी०—तत इति । वज्रं वज्रमणिः तेजस्वी राम इति शेषः ॥ २९ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—त इति । वज्रा महाद्रुमानिव रुक्मपुङ्खास्ते विशिखा रामबाणाः तानि अभिपतितानि रक्षांसि निजघ्नुः ॥ ३० ॥

गो० टी०—त इति । सधूमा इत्यनेन दहनोन्मुखत्वं व्यज्यत इत्यङ्गारावस्थाव्यावृत्तिः । वज्रा इवेति वज्रमस्त्रिया-मित्युभयलिङ्गो वज्रशब्दः ॥ ३० ॥

३१ ] ति० टी०—शतमेकेन शतेन तत्संख्याकेन कर्णिना बाणविशेषेण । एवं सहस्रं सहस्रेण ॥ ३१ ॥

रा० टी०—हननप्रकारमाह--रक्षसामिति । एकेन शतेन कर्णिना रक्षसां शतं रक्षसां सहस्रं तु सहस्रेण रणमूर्धनि जघान ॥ ३१ ॥

गो ०टी०—रक्षसामिति । कर्णिना कर्णाकारशरीरेण ॥ ३१ ॥

३२ ] ति० टी०—शोणितादिग्धाः शोणितलिप्ताः ॥ ३२ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—तैरिति । तैः रामबाणैभिन्नवर्माभरणाः अत एव शोणितादिग्धाः शोणितव्याप्ताः रजनीचराः धरण्यां निपेतुः ॥ ३२ ॥

गो० टी०—तैरिति । छिन्नं खण्डितं भिन्नं विदारितम् । आदिग्धाः आलिप्ताः ॥ ३२ ॥

३३-३४ ] ति० टी०—विस्तीर्णा विशेषेण छन्ना महावेदिरश्वमेधादिवेदिः ॥ ३३ ॥ ३४ ॥

रा० टी०—तैरिति । मुक्ता ग्रन्थिरहिताः केशाः येषां तैः पतितैः राक्षसैः कृत्स्ना वसुधा कुशैर्विस्तीर्णा महावेदिरिव विस्तीर्णा अभवदिति शेषः ॥ ३३ ॥

गो० टी०—तैर्मुक्तेति । रणाग्रपतितत्वातिशयात्कुशसाम्योक्तिः ॥ ३३ ॥

रा० टी०—तत्क्षण इति । निहतराक्षसं निहता राक्षसा यस्मिंस्तत् अत एव मांसशोणितकर्दमं मांसशोणितरूपकर्दमविशिष्टं वनं तत्क्षणे तस्मिन् समये निरयप्रख्यं नरकसदृशं बभूव ॥ ३४ ॥

गो० टी०—क्षणेनेति । निरयप्रख्यं नरकतुल्यं मांसशोणितैः कृतः कर्दमः पङ्को यस्य तत्तथा ॥ ३४ ॥

३५ ] ति० टी०—मानुषेण मानुषवेषेणापि ॥ ३५ ॥

रा० टी०—रामप्रभावस्याश्चर्यत्वमाह—चतुर्दशेति । रक्षसां चतुर्दश सहस्राणि एकेन रामेण हतानि ॥ ३५ ॥

गो० टी०—चतुर्दशेति । मानुषेण ऋजुना पदातिना वाहनरहितेनेत्यद्भुतोक्तिः ॥ ३५ ॥

३६-३७ ] ति० टी०—त्रिशिराश्चैवेति । स्वस्वमूलबलसहेति शेषः ॥ ३६ ॥ ३७ ॥

रा० टी०—तस्येति । सर्वस्य घातकसहितस्यापीत्यर्थः शेषः अवशिष्टः खरः त्रिशिराः रिपुसूदनो रामश्च ॥ ३६ ॥

रा० टी०—शेषा इति । शेषाः एतत्त्रितयातिरिक्ताः लक्ष्मणस्याग्रजेन हताः ॥ ३७ ॥

गो० टी०—तस्येत्यादि । सैन्यस्य युद्धप्रवृत्तस्य अतो रामस्यापि तत्रान्तर्भावः खरादित्रयं शेषः अवशिष्ट इत्यर्थः । शेषाः सर्वे राक्षसा हता इत्यन्वयः । महासत्त्वा इत्यादिविशेषणैर्महारथा एव हताः क्षुद्राः केचन भीरवो न हता इति गम्यते । अत एवोत्तरसर्गे हतशेषा इति वक्ष्यति । लक्ष्मणस्याग्रजेनेति रामस्य विष्ण्वर्धांशभाक्त्वेनाधिकबलत्वोक्तिः ॥ ३६ ॥ ३७ ॥

३८ ] ति० टी०—उद्यताशनिरुद्यतवज्रः ॥ ३८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्येऽरण्यकाण्डे षड्विंशः सर्गः ॥ २६ ॥

---

१ चेति गो. पाठः । २ आस्तीर्णेति गो. पाठः । ३ क्षणेन त्विति गो. पाठः । ४ महासत्त्वा इति गो. पाठः । ५ रामेणेति गो. पाठः । ६ तदेति गो. पाठः ।

## सप्तविंशः सर्गः ।

रामममभियान्तं खरं विनिवर्त्य रामवधं प्रतिज्ञाय प्राप्ते त्रिशिरसि रामेण निहते खरो राममभिययौ ।

खरं तु रामाभिमुखं प्रयान्तं वाहिनीपतिः । राक्षसस्त्रिशिरा नाम संनिपत्येदमब्रवीत् ॥ १ ॥
मां नियोजय विक्रान्तं त्वं निवर्तस्व साहसात् । पश्य रामं महाबाहुं संयुगे विनिपातितम् ॥ २ ॥
प्रतिजानामि ते सत्यमायुधं चाहमालभे । यथा रामं वधिष्यामि वधार्हं सर्वरक्षसाम् ॥ ३ ॥
अहं वास्य रणे मृत्युरेष वा समरे मम । विनिवर्त्य रणोत्साहं मुहूर्तं प्राश्निको भव ॥ ४ ॥
प्रहृष्टो वा हते रामे जनस्थानं प्रयास्यसि । मयि वा निहते रामं संयुगाय प्रयास्यसि ॥ ५ ॥
खरस्त्रिशिरसा तेन मृत्युलोभात्प्रसादितः । गच्छ युध्येत्यनुज्ञातो राघवाभिमुखो ययौ ॥ ६ ॥
त्रिशिरास्तु रथेनैव वाजियुक्तेन भास्वता । अभ्यद्रवद्रणे रामं त्रिशृङ्ग इव पर्वतः ॥ ७ ॥

---

रा० टी०—तत इति । ततः स्वसैन्यविध्वंसनानन्तरं भीमबलं भयंकरस्वसैन्यं बलीयसा रामेण धर्मेण हतं समीक्ष्य महता रथेन उद्यताशनिरिन्द्र इव खरः रामं समाससाद॥३८॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे षड्विंशः सर्गः ॥ २६ ॥

गो० टी०—ततस्त्विति । भीमबलं भीमसैन्यम् उद्यताशनिः उद्यतवज्रः ॥ ३८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने षड्विंशः सर्गः ॥ २६ ॥

---

१ ] ति० टी०—खरमिति । संनिपत्य त्वरया तत्समीपमागम्य ॥ १ ॥

रा० टी०—त्रितयावशेषानन्तरकालिकं वृत्तान्तमाह—खरमित्यादिभिः । वाहिनीपतिः सेनाधीशः त्रिशिरा नाम राक्षसः रामाभिमुखं प्रयान्तं खरं दृष्ट्वा संनिपत्य तत्समीपं प्राप्य इदमब्रवीत् ॥ १ ॥

गो० टी०—त्रिशिरःशिरसां छेदृष्टान्तेन स्वसेविनाम् ।
दुःखत्रयनिहन्तारं लक्ष्मणाग्रजमाश्रये ॥

खरं त्वित्यादि । वाहिनीपतिः सेनापतिः संनिपत्य समीपमागत्येत्यर्थः ॥ १ ॥

२ ] ति० टी०—विनिपातितं मयेति शेषः ॥ २ ॥

रा० टी०—तद्वचनाकारमाह—मामिति । विक्रान्तमतिविक्रमविशिष्टं मां नियोजय युद्धे इति शेषः, त्वं साहसात् सहसाप्रवृत्तगमनात् त्वं निवर्तस्व रामं विनिपातितं पश्य ॥ २ ॥

गो० टी०—मामिति । साहसात् युद्धाभिमुख्यलक्षणात् विनिपातितमिति मयेति शेषः ॥ २ ॥

३ ] ति० टी०—आलभे स्पृशामि । यथा वधिष्यामि तथा प्रयतिष्ये इति शेषः । सर्वरक्षसां वधार्हं सर्वरक्षसां वध्यमित्यर्थः ॥ ३ ॥

रा० टी०—प्रतीति । ते तवाग्रे अहं सत्यं प्रतिजानामि आयुधं चालभे आयुधशपथं करोमीत्यर्थः, सर्वरक्षसां वधार्हं संमिलितनिखिलराक्षसकर्तृकवधयोग्यं रामं यथा यथावद्वधिष्यामि ॥ ३ ॥

गो० टी०—प्रतिजानामीति । आलभे स्पृशामि । प्रतिज्ञाप्रकारमाह—यथेति । सर्वरक्षसां सर्वरक्षोभिः ॥ ३ ॥

४ ] ति० टी०—'अहं वा समरे' इति पाठे मृत्युरित्यस्यास्येति शेषः । 'रणोत्साहात्' इति पाठे ततो मनो निवर्त्येत्यर्थः। प्राश्निको मध्यस्थः उभययुद्धसाक्षीत्यर्थः ॥ ४ ॥

रा० टी०—जयपराजययोः परमात्मायत्तत्वेन निश्चयाभावादाह—अहमिति । अस्य रामस्य मृत्युर्विनाशकः अहं वा एष रामो वा मम मृत्युः, एतेन पलायितो न भविष्यामीति सूचितम् । अतः रणोत्साहं तात्कालिकयुद्धोत्कटेच्छां निवर्त्य मुहूर्तं प्राश्निकः मध्यस्थो भव साक्षितया युद्धं पश्येत्यर्थः ॥ ४ ॥

गो० टी०—अहं वेति । मृत्युः मारयिता प्राश्निकः जयापजयनिर्णायकः ॥ ४ ॥

५ ] ति० टी०—संयुगाय संयुगं कर्तुम् ॥ ५ ॥

रा० टी०—युद्धदर्शनानन्तरकालिकं तत्कर्तव्यमाह—प्रहृष्ट इति । संयुगाय संग्रामाय प्रयास्यति ॥ ५ ॥

गो० टी०—प्रहृष्ट इति । प्रहृष्टे गर्विष्ठे संयुगाय युद्धं कर्तुम् "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इति चतुर्थी ॥ ५ ॥

६-७] ति० टी०—मृत्युलोभान्मृत्युकृतयुद्धलोभात् । मृत्युसमये रक्षःप्रकृतिविपर्ययात्तस्य भगवत्तत्त्वं ज्ञात्वा तद्धस्तमृत्युलोभादित्यर्थश्च । युध्य युद्धं कुरुष्व । अनुज्ञातः खरेणेति शेषः ॥ ६ ॥ ७ ॥

रा० टी०—खर इति । मृत्युलोभात् मृत्युनिवृत्तिविषयकोत्कटेच्छातः किं च मृत्युलोभात् मृत्युविषयकाविवेकात् अस्य मृत्युर्न भविष्यतीति भ्रमादित्यर्थः, त्रिशिरसा प्रसादितः प्रसन्नचित्तः खरः अभवदिति शेषः, अत एव गच्छ युध्य युद्धं कुरु इत्यभिज्ञातः त्रिशिराः इति शेषः, राघवाभिमुखः सन् ययौ ॥ ६ ॥

---

१ वृत्य रणोत्साहादिति गो. पाठः । २ प्रहृष्टे इति गो. पाठः । ३ हास्यसीति गो. पाठः । ४ उपयास्यसीति गो. पाठः । ५ चेति गो. पाठः

शरधारासमूहान्स महामेघ इवोत्सृजन् । व्यसृजत्सदृशं नादं जलार्द्रस्येव दुन्दुभेः ॥ ८ ॥
आगच्छन्तं त्रिशिरसं राक्षसं प्रेक्ष्य राघवः । धनुषा प्रतिजग्राह विधुन्वन्सायकाञ्शितान् ॥ ९ ॥
स संप्रहारस्तुमुलो रामत्रिशिरसोस्तदा । संबभूवातिबलिनोः सिंहकुञ्जरयोरिव ॥ १० ॥
ततस्त्रिशिरसा बाणैर्ललाटे ताडितस्त्रिभिः । अमर्षी कुपितो रामः संरब्ध इदमब्रवीत् ॥ ११ ॥
अहो विक्रमशूरस्य राक्षसस्येदृशं बलम् । पुष्पैरिव शरैर्यो ऽहं ललाटे ऽस्मि परिक्षतः ॥ १२ ॥
ममापि प्रतिगृह्णीष्व शरांश्चापगुणाच्च्युतान् । एवमुक्त्वा तु संरब्धः शरानाशीविषोपमान् ॥ १३ ॥
त्रिशिरोवक्षसि क्रुद्धो निजघान चतुर्दश । चतुर्भिस्तुरगानस्य शरैः संनतपर्वभिः ॥ १४ ॥
न्यपातयत तेजस्वी चतुरस्तस्य वाजिनः । अष्टभिः सायकैः सूतं रथोपस्थे न्यपातयत् ॥ १५ ॥
रामश्चिच्छेद बाणेन ध्वजं चास्य समुच्छ्रितम् । ततो हतरथात्तस्मादुत्पतन्तं निशाचरम् ॥ १६ ॥

गो० टी०—खर इति । मृत्युलोभात् मृत्युना कृतो लोभो युद्धलोभस्तस्मात् प्रसादितः निवर्तित इति यावत् । युध्य युद्धं कुरु अनुज्ञातः खरेणेति शेषः, त्रिशिरा इति सिद्धम् ॥ ६ ॥

रा० टी०—त्रिशिरा इति । भास्वता प्रकाशमानेन वाजियुक्तेन रथेनोपलक्षितत्रिशृङ्गः पर्वत इव त्रिशिराः रामम् अभ्यद्रवत् ॥ ७ ॥

गो० टी०—त्रिशिराश्चेति । चकारो न समुच्चयार्थः॥७॥

८–११ ] ति० टी०—जलार्द्रस्येति । अनेन नादवैपरीत्येन मृत्युसांनिध्यं सूचितम् ॥ ८–११ ॥

रा० टी०—शरेति । स त्रिशिराः महामेघ इव शरधारासमूहान् उत्सृजंस्त्यजन् सन् जलार्द्रस्य दुन्दुभेः सदृशमेव नादं व्यसृजत् । इवशब्द एवार्थे ॥ ८ ॥

गो० टी०—शरधारेति । शरा एव धाराः आसाराः तासां समूहान् । जलार्द्रस्येति दुन्दुभिशब्दः पुंलिङ्गः । 'भेरी स्त्री दुन्दुभिः पुमान्' इत्युक्तेः । दुन्दुभेः दुन्दुभिनादस्य जलार्द्रस्येत्यनेनास्य हीनस्वरत्वमुक्तम् ॥ ८ ॥

रा० टी०—आगच्छन्तमिति । त्रिशिरसम् आगच्छन्तं प्रेक्ष्य धनुषा सह शितान् सायकान् विधुन्वन् सन् राघवः प्रतिजग्राह ॥ ९ ॥

गो० टी०—आगच्छन्तमिति । धनुषा सायकान् विधून्वन् कम्पयन् मुञ्चन्निति यावत् ॥ ९ ॥

रा० टी०—स इति । तदा उभयोः समागमे सति अतिबलिनोः रामत्रिशिरसोः सिंहकुञ्जरयोरिव तुमुलः संप्रहारः संबभूव ॥ १० ॥

गो० टी०—स इति । संप्रहारो युद्धम् ॥ १० ॥

रा० टी०—तत इति । ततः समागमनानन्तरं त्रिभिर्बाणैः त्रिशिरसा ललाटे ताडितः अमर्षी ऋष्यपराधासहनशीलः अत एव कुपितः स्वीकृतकोपाभासो रामः संरब्धः राक्षसकोपोत्पादकः सन् इदमब्रवीत् । संरब्ध इत्यत्र अन्तर्भावितणिजर्थः कर्तरि निष्ठा तु कर्माविवक्षयाऽकर्मकत्वात् ॥ ११ ॥

गो० टी०—तत इति । संरब्धं सकोपमित्यर्थः । लोके कश्चित्कुपितोऽपि वचनेन कोपं न प्रकटयति अयं तु प्रकटयतीति भावः ॥ ११ ॥

१२–१३ ] ति० टी०—अहो इत्यादि व्यङ्ग्योक्तिः । पुष्पैरिव परिक्षत इत्यनेन त्वमपि न विद्धेत्याशयः ॥ १२ ॥ १३ ॥

रा० टी०—तद्वचनाकारमाह–अहो इति । यस्य राक्षसस्य शरैः पुष्पैरिव ललाटेऽहं परिक्षतो हतोऽस्मि तस्य विक्रमशूरस्य परपराभवविषयकशौर्यविशिष्टस्य राक्षसस्य ईदृशं बलम् अहो आश्चर्यम् एतेन राक्षसानां परमात्रपराभवशक्तिमत्वे तन्निहतबाणस्य पुष्पवत्त्वं न स्यादिति सूचितं तेन तव पराक्रमो नास्तीति सूचितम् ॥ १२ ॥

रा० टी०—ममेति । चापगुणात् ज्यातः च्युतान् ममापि शरान् प्रतिगृह्णीष्व एवमुक्त्वा सुसंरब्धः समुत्पादितराक्षसकोपः क्रुद्धः स्वीकृतकोपाभासो रामः आशीविषोपमान् चतुर्दश शरान् त्रिशिरसो वक्षसि निजघान । सार्धश्लोक एकान्वयी ॥ १३ ॥

गो० टी०—अहो इत्यादिव्यङ्ग्योक्तिः । विक्रमः पराभिभवनं तत्र शूरस्य समर्थस्येत्यर्थः । ईदृशमित्यस्यैव विवरणम् पुष्पैरिवेत्यर्धम् । ललाटे स्वललाटे ललाटे स्वल्पापिक्षतिर्बाधिका भवति सापि नास्तीति सूचयितुं पुष्पतौल्यम् । चापगुणः चापमौर्वी एवमिति संरब्धः सन्नेवमुक्त्वा क्रुद्धो निजघानेत्यन्वयः ॥ १२ ॥ १३ ॥

१४–१५ ] ति० टी०—वाजिनस्तुरगान् वेगवतोऽश्वानित्यर्थः ॥ १४ ॥ १५ ॥

रा० टी०—चतुर्भिरिति । संनतानि पर्वाणि येषां तैश्चतुर्भिः शरैः अस्य त्रिशिरसः वाजिनः अतिवेगयुक्तान् चतुरस्तुरगान् स्तेजस्वी रामः न्यपातयत अष्टभिः सायकैः रथोपस्थे सूतं न्यपातयत् ॥ १४ ॥ १५ ॥

गो० टी०—चतुर्भिरिति । सन्नतपर्वभिः ऋजुपर्वभिः वाजिनः वेगवतः ॥ १४ ॥

गो० टी०—अष्टभिरिति । रथोपस्थे रथोपरिभागे॥१५॥

१६ ] ति० टी०—हतरथाद्धतहयसारथिकाद्रथात् ॥ १६॥

१ लिति गो. पाठः । २ महानिति गो. पाठः । ३ बभूवातीवेति गो. पाठः । ४ संरब्धमिति गो. पाठः । ५ यस्येति गो. पाठः । ६ गुणच्युतानिति गो. पाठः । ७ उक्त्वा सुसंरब्ध इति रा. पाठः । ८ अष्टाभिरिति रा. पाठः । ९ रथोपस्थादिति गो. पाठः ।

[1]चिच्छेद रामस्तं बाणैर्हृदये सोऽभवज्जडः । सायकैश्चाप्रमेयात्मा [2]सामर्षात्तस्य रक्षसः ॥ १७ ॥
शिरांस्यपातयत्[3]त्रीणि वेगवद्भिस्त्रिभिः [4]शरैः । सधूमशोणितोद्गारी रामबाणाभिपीडितः ॥ १८ ॥
न्यपतत्पतितैः पूर्वं [5]समरस्थो निशाचरः । हतशेषास्ततो भग्ना राक्षसाः खरसंश्रयाः ॥ १९ ॥
द्रवन्ति स्म न तिष्ठन्ति [6]व्याधत्रस्ता मृगा इव । तान्खरो द्रवतो दृष्ट्वा निवर्त्य रुषितस्त्वरन् ॥
राममेवाभिदुद्राव राहुश्चन्द्रमसं यथा ॥ ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

---

## अष्टाविंशः सर्गः ।

खरेण रामधनुर्गुणे निकृत्तेऽगस्त्यदत्तचापं दधानो रामः खरं विरथीचकार । रथभङ्गाद्गदां परिगृह्यावनिमवतीर्णे खरे व्योमयानस्था युसदो रामशिरसि कुसुमानि वर्षन्तो जयघोषैः प्रतुष्टुवुः ।

निहतं दूषणं दृष्ट्वा रणे त्रिशिरसा सह । खरस्याप्यभवत्त्रासो दृष्ट्वा रामस्य विक्रमम् ॥ १ ॥
स दृष्ट्वा राक्षसं सैन्यमविषह्यं महाबलम् । हतमेकेन रामेण [8]दूषणस्त्रिशिरा अपि ॥ २ ॥
तद्बलं हतभूयिष्ठं विमनाः प्रेक्ष्य राक्षसः । आससाद खरो रामं नमुचिर्वासवं यथा ॥ ३ ॥
विकृष्य बलवच्चापं नाराचान्रक्तभोजनान् । खरश्चिक्षेप रामाय क्रुद्धानाशीविषानिव ॥ ४ ॥

---

रा० टी०–राम इति । समुच्छ्रितं ध्वजं बाणेन रामः चिच्छेद । अर्धं पृथक्—तत इति । ततोऽनन्तरं हतरथात् तस्मात् उत्पतन्तं तं निशाचरं बाणैः हृदये रामः चिच्छेद अत एव स त्रिशिराः जडः जडसदृशः अभवत् ॥ १६ ॥

गो० टी०–तत इति । हतरथात् हतहयसारथिकरथात् हृदये वक्षसि बिभेदेत्यन्वयः । जडः निश्चेष्टः ॥ १६ ॥ १७ ॥

१७–१८]ति०टी०–जडः आयुधपरिग्रह इति शेषः१७–१८

रा० टी०–सायकैरिति । अप्रमेयात्मा इयत्तारहितधैर्यादिः रामः शरैरुपलक्षितस्य तस्य रक्षसः त्रीणि शिरांसि त्रिभिः सायकैः अपातयत् ॥ १७ ॥

रा० टी०–सेति । रामबाणाभिपीडितः अत एव सधूमशोणितोद्गारी धूमसहितरुधिरोद्गरणशीलः समरस्थः पूर्वपतितैः पतितशरकृतव्रणैरुपलक्षितो निशाचरः न्यपतत् ॥ १८ ॥

गो० टी०–स इति । पूर्वं पतितैः शिरोभिः हेतुभिः स्वयं न्यपतत् ॥ १८ ॥

१९–२१ ] ति० टी०–पूर्वं पतितैः शिरोभिरुपलक्षितः पश्चान्न्यपतत् । 'चतुर्दश सहस्राणि मम चित्तानुवर्तिनाम्' इति सेनोद्योगे खरोक्तेश्चतुर्दश सहस्राणि हतानि खरत्रिशिरसावेवावशिष्टाविति पूर्वसर्गान्ते उक्तेर्हतशेषान्निवर्त्येति अत्रत्योक्तेश्चतुर्दशसहस्रं यूथपा अत्रेति ज्ञायते । हतशेषा इति तु खरीयमूलबलाभिप्रायं बोध्यम् ॥ १९–२१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

रा० टी०–हतेति । ततः त्रिशिरोवधानन्तरं हतशेषाः भग्नाः छिन्नाङ्गुलिप्रभृतयः राक्षसाः व्याघ्रत्रस्ता मृगा इव खरसंश्रयाः सन्तः द्रवन्ति स्म अत एव न तिष्ठन्ति स्म । अर्धचतुष्टयमेकान्वयि ॥ १९ ॥

रा० टी०–तानिति । द्रवतस्तान् राक्षसान् दृष्ट्वा रुषितः प्राप्तरोषः खरः त्वरन् सन् निवर्त्य राहुः चन्द्रमसमिव राममेवाभिदुद्राव ॥ २० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

गो०टी०–हतशेषा इति । खरसंश्रयाः खरसेवकाः॥१९–२०

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने सप्तविंशः सर्गः ॥ २७ ॥

---

१ ] ति० टी०–निहतमिति ॥ १ ॥

रा० टी०–त्रिशिरोविध्वंसानन्तरकालिकं वृत्तान्तमाह–निहतमित्यादिभिः । त्रिशिरसा सह रणे निहतं दूषणं दृष्ट्वा अत एव रामस्य विक्रमम् अनियतपराक्रमं च दृष्ट्वा खरस्यापि त्रासः स्वसहितस्वकुलविध्वंसजनितोद्वेगः अभवत् ॥ १ ॥

गो० टी०–महामोहसहायस्य दर्पस्याश्रयनिग्रहम् ।
व्यङ्क्तुं खरोपकरणं हन्तारं राममाश्रये ॥

निहतमित्यादि । निहतं दूषणं दृष्ट्वा रामस्य विक्रमं च दृष्ट्वा स्थितस्य खरस्य त्रासोऽभवदिति योजना ॥ १ ॥

२]ति०टी०–रक्षसामिदं राक्षसं सैन्यं हतं दृष्ट्वेत्यन्वयः॥२॥

३–४ ] ति० टी०–हतभूयिष्ठमल्पावशेषम् ॥ ३ ॥ ४ ॥

---

१ बिभेदेति गो. पाठः । २ सामर्षस्तस्येति गो. पाठः । ३ राम इति गो. पाठः । ४ शितैरिति गो. पाठः । ५ स्वशिरोभिरिति गो. पाठः । ६ व्याघ्रेति गो. रा. पाठः । ७ स्वयमिति गो. पाठः । ८ त्रिशिरोदूषणावपीति गो. पाठः ।

ज्यां विधुंन्वन्सुबहुशः शिक्षयास्त्राणि दर्शयन् । चचार समरे मार्गाञ्शरैरथ गतः खरः ॥ ५ ॥
स सर्वाश्च दिशो बाणैः प्रदिशश्च महारथः । पूरयामास तं दृष्ट्वा रामोऽपि सुमहद्धनुः ॥ ६ ॥
स सायकैर्दुर्विषहैर्विस्फुलिङ्गैरिवाग्निभिः । नभश्चकाराविवरं पर्जन्य इव वृष्टिभिः ॥ ७ ॥
तद्बभूव शितैर्बाणैः खररामविसर्जितैः । पर्याकाशमनाकाशं सर्वतः शरसंकुलम् ॥ ८ ॥
शरजालावृतः सूर्यो न तदा स्म प्रकाशते । अन्योन्यवधसंरम्भादुभयोः संप्रयुध्यतोः ॥ ९ ॥
ततो नालीकनाराचैस्तीक्ष्णाग्रैश्च विकर्णिभिः । आजघान रॅणे रामं तोत्रैरिव महाद्विपम् ॥ १० ॥
तं रथस्थं धनुष्पाणिं राक्षसं पर्यवस्थितम् । ददृशुः सर्वभूतानि पाशहस्तमिवान्तकम् ॥ ११ ॥
हन्तारं सर्वसैन्यस्य पौरुषे पर्यवस्थितम् । परिश्रान्तं महासत्त्वं मेने रामं खरस्तदा ॥ १२ ॥
तं सिंहमिव विक्रान्तं सिंहविक्रान्तगामिनम् । दृष्ट्वा नोद्विजते रामः सिंहः क्षुद्रमृगं यथा ॥ १३ ॥
ततः सूर्यनिकाशेन रथेन महता खरः । आससादा॑थ तं रामं पतङ्ग इव पावकम् ॥ १४ ॥

---

रा० टी०–स इति । अविषह्यं परैः सोढुमशक्यं महाबलं राक्षससैन्यम् एकेन रामेण हतं दृष्ट्वा त्रिशिरोदूषणावपि हतौ दृष्ट्वा तद्बलं त्रिशिरोदूषणयोः सैन्यं च हतभूयिष्ठं हताः भूयिष्ठाः बलवन्तो यस्मिँस्तत्प्रेक्ष्य विमनाः खरो राक्षसः नमुचिर्वासवमिव आससाद । श्लोकद्वयमेकान्वयि ॥ २॥ ३ ॥

गो० टी०–स दृष्ट्वेति । रक्षसां संबन्धि राक्षसं त्रिशिरोदूषणौ हतावित्यनुषङ्गः । बलं सैन्यं हतभूयिष्ठं हतप्रवरराक्षसं चतुर्दशसहस्रसंख्याकाः प्रधाना हताः अवशिष्टं सैन्यं प्रेक्ष्येत्यर्थः । विमनाः विगतगर्वावस्थं मनो यस्य स तथा ॥ २ ॥ ३ ॥

रा० टी०–विकृष्येति । बलवत् अतिदृढं चापं विकृष्य क्रुद्धान् आशीविषानिव रक्तभोजनान्नाराचान् बाणविशेषान् रामाय खरश्चिक्षेप ॥ ४ ॥

गो० टी०–विकृष्येति । बलवदत्यन्तं नाराचान् 'प्रक्ष्वेडनास्तु नाराचाः' इत्यमरः । रक्तभोजनानिति रक्तरूषितत्वेन रक्तभोजनत्वव्यपदेशः आशीविषानिव सर्पानिव स्थितान् ॥ ४ ॥

५–६ ] ति० टी०–शिक्षया धनुर्विद्याभ्यासेन मार्गाञ्शरसंधानक्षेपणादिप्रकारभेदान्दर्शयन्रथस्थः खरः समरे चचार अनेकविधरथसंचरणैः ॥ ५ ॥ ६ ॥

रा० टी०–ज्यामिति । सुबहुशोऽनेकवारं ज्यां विधुन्वन् सन् शिक्षया गुरुगृहीतधनुर्विद्याभ्यासेन अस्त्राणि दर्शयन् रथगतः खरः समरे मार्गान् चचार ॥ ५ ॥

गो० टी०–ज्यामिति । शिक्षया धनुर्वेदशिक्षापाटवेन ज्यां विधून्वन् अस्त्राणि दर्शयन् अस्त्रप्रयोगपाटवं दर्शयन्नित्यर्थः, समरे शरैः मार्गान् नानाप्रकारांश्चकार ॥ ५ ॥

रा० टी०–स इति । स खरः दिशः प्रदिशश्च बाणैः पूरयामास तं तादृशक्रियाविशिष्टं खरं दृष्ट्वा रामोऽपि सुमहत् धनुर्जग्राहेति शेषः ॥ ६ ॥

गो० टी०–स इति । स रामोऽपि तं दृष्ट्वा बाणैः सुम[हद्ध]नुः सर्वा दिशः प्रदिशश्च पूरयामासेत्यन्वयः ॥ ६ ॥

७ ] ति० टी०–स रामः नभ आकाशमविवरं नीर[न्ध्रं] चकार ॥ ७ ॥

रा० टी०–स इति । सः गृहीतचापो रामः विस्फुलि[ङ्गै] विस्फुलिङ्गाकारैः अग्निभिरिव दुर्विषहैः सायकैः वृष्टिभिः पर्जन्य इव नभः आकाशम् अविवरं विवराभाववत् चकार ॥ ७ ॥

गो० टी०–स सायकैरिति । सः रामः अविवरं नी[र]न्ध्रम् ॥ ७ ॥

८–११ ] ति० टी०–पर्याकाशं परितो विद्यमानमाका[श]मनाकाशं निरवकाशं बभूव ॥ ८–११ ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–तदिति । खररामवि[स]र्जितैः बाणैः पर्याकाशं सर्वत्र विद्यमानमवकाशवदाकाशं शर[-]संकुलं सत् अनाकाशम् अवकाशरहितत्वेनाकाशरहितं बभूव॥

गो० टी०–तदिति । पर्याकाशं परितः स्थितमाकाशं [ख]ररामयोश्चतुःपार्श्ववर्त्याकाशमित्यर्थः, सर्वतः सर्वत्र अनाका[शम्] अनवकाशं बभूव ॥ ८ ॥

रा० टी०–शरेति । अन्योन्यवधाय संरम्भः कोप[स्त]स्मात् हेतोर्युध्यतोरुभयोः शरजालावृतः सूर्योऽभवदिति शे[षः] अत एव तदा न प्रकाशते स्म ॥ ९ ॥

गो० टी०–शरजालेति । संरम्भात् कोपात् 'संर[म्भः] संभ्रमे कोपे' इत्यमरः । उभयोः शरजालावृत इत्यन्वयः ॥ ९

रा० टी०–तत इति । नालीकादिभिः बाणविशेषैस्तो[त्रै]र्महाद्विपमिव रणे राममाजघान ॥ १० ॥

रा० टी०–तमिति । रथस्थं पर्यवस्थितं राक्षसं पा[शह]स्तमन्तकमिव सर्वभूतानि ददृशुः ॥ ११ ॥

गो० टी०–तत इति । तोत्रैः गजशिक्षणयष्टिभिः॥१०॥१[१]

१२–१४ ] ति० टी०–सर्वसैन्यस्य हन्तारं रामं

---

१ धून्वन्निति गो पाठः । २ खर इति गो. पाठः । ३ रणे इति गो. पाठः ।

ततोऽस्य सशरं चापं मुष्टिदेशे महात्मनः । खरश्चिच्छेद रामस्य दर्शयन्हस्तलाघवम् ॥ १५ ॥
स पुनस्त्वपरान्सप्त शरानादाय मर्मणि । निजघान रणे क्रुद्धः शक्राशनिसमप्रभान् ॥ १६ ॥
ततः शरसहस्रेण राममप्रतिमौजसम् । अर्दयित्वा महानादं ननाद समरे खरः ॥ १७ ॥
ततस्तत्प्रहतं बाणैः खरमुक्तैः सुपर्वभिः । पपात कवचं भूमौ रामस्यादित्यवर्चसम् ॥ १८ ॥
स शरैरर्पितः क्रुद्धः सर्वगात्रेषु राघवः । रराज समरे रामो विधूमोऽग्निरिव ज्वलन् ॥ १९ ॥
ततो गम्भीरनिर्ह्रादं रामः शत्रुनिबर्हणः । चकारान्ताय स रिपोः सज्यमन्यन्महद्धनुः ॥ २० ॥
सुमहद्वैष्णवं यत्तदतिसृष्टं महर्षिणा । वरं तद्धनुरुद्यम्य खरं समभिधावतः ॥ २१ ॥
ततः कनकपुङ्खैस्तु शरैः संनतपर्वभिः । चिच्छेद रामः संक्रुद्धः खरस्य समरे ध्वजम् ॥ २२ ॥

---

परिश्रान्तं मेने । अनेनायं प्रहारावसर इति खरबोधः सूचितः । अत एवाग्रुपदं तेन रामधनुषश्छेदः ॥ १२–१४ ॥

रा० टी०–हन्तारमिति । तदा स्वबाणप्रक्षेपणसमये सर्वसैन्यस्य हन्तारं महासत्त्वमतिबलवन्तं पौरुषे परमपुरुषत्वे पर्यवस्थितं रामं खरः परिश्रान्तं मेने, एतेन खरस्याज्ञानं सूचितम् ॥ १२ ॥

गो० टी०–हन्तारमिति । खरः सर्वसैन्यहननपरिश्रान्तमपि रामं पौरुषे पर्यवस्थितं महासत्त्वं मेने, यद्वा उक्तविशेषणं रामं परिश्रान्तं मेने ॥ १२ ॥

रा० टी०–तमिति । सिंहमिव विक्रान्तं सिंहवद्विक्रमविशिष्टं सिंहविक्रान्तवत् सिंहगमनवद्गच्छति तच्छीलं तं खरं दृष्ट्वा सिंहः क्षुद्रमृगमिव दृष्ट्वा रामो नोद्विजते ॥ १३ ॥

गो०टी०–तमिति । नोद्विजते नाचलत् क्षुद्रमृगं शशम् ॥ १३ ॥

रा० टी०–तत इति । सूर्यनिकाशेन सूर्यवत्प्रतिभासमानेन महता रथेनोपलक्षितः खरः पतङ्गः पावकमिव खरो रामम् आससाद ॥ १४ ॥

गो० टी०–तत इति । पतङ्ग इत्यनेन अमृत्वा अनिवृत्तिरुच्यते ॥ १४ ॥

१५ ] ति० टी०–मुष्टिदेशे धनुर्ग्रहणप्रदेशोपरिदेशे ॥ १५ ॥

रा० टी०–तत इति । अस्य रामस्य सशरं शरसहितं चापं खरो हस्तलाघवं दर्शयन् सन् मुष्टिदेशे चिच्छेद, एतेन तद्धनुषोऽदिव्यत्वं सूचितम् यदि तु वस्तुतस्तु चिच्छेदेत्यस्य छिधाभवनानुकूलव्यापारं चकारेत्यर्थः, नहि व्यापारमात्रेण फलसिद्धिः सार्वत्रिकीत्यत्र फलसिद्धेरभावात् चापस्य दिव्यत्वमक्षतमेव ॥ १५ ॥

गो० टी०–ततोऽस्येति । मुष्टिदेशे मुष्टिबन्धनसमीपदेशे महात्मन इत्यनेन मुष्टिदेशे पततो बाणस्य परिहरणसामर्थ्यं व्यज्यते । लाघवं शैघ्र्यं चिच्छेद रामस्य किंचिच्छ्रान्तत्वेनानवधानादिति भावः ॥ १५ ॥

१६–१७ ] ति० टी०–स खरः मर्मणि कवचबन्धसंधिषु ॥ १६ ॥ १७ ॥

रा० टी०–स इति । स खरः शक्राशनिसमप्रभान् अपरान् सप्त शरानादाय वर्मणि कवचे जघान ॥ १६ ॥

गो० टी०–पाणिलाघवमेवाह–स पुनरित्यादिना । वर्मणि निजघान अवदारयति स्म ॥ १६ ॥

रा० टी०–तत इति । अप्रतिमौजसम् अनुपमपराक्रमं रामं शरसहस्रेण अर्दयित्वा खरो महानादं ननाद ॥ १७ ॥

गो० टी०–तत इति । आदित्यवर्चस इत्यनेन कवचपतनानन्तरं प्रकाशमानतेजोविशेष उच्यते ॥ १७ ॥ १८ ॥

१८ ] ति० टी०–प्रहतं कवचं पपात ॥ १८ ॥

रा० टी०–तत इति । खरमुक्तैर्बाणैः प्रहतं ताडिताश्रयत्वेनेच्छाविषयीभूतमादित्यवर्चसं तत् रामकवचं भूमौ पपात ताडितस्वसंस्पर्शजनितरामखेदसंभावनया बाणसंबन्धात्पूर्वमेव रामशरीरान्निस्सृत्य खरप्रक्षिप्तबाणान् गृहीत्वा पृथिव्यामतिष्ठदित्यर्थः ॥ १८ ॥

१९–२० ] ति० टी०–शरैरर्पितः संक्षतः कृतः ॥ १९ ॥ २० ॥

रा० टी०–स इति । शरैः सर्वगात्रेषु अर्दितः प्राप्तः क्रुद्धो रामः विधूमोऽग्निरिव ज्वलन् सन् समरे रराज ॥ १९ ॥

गो० टी०–स शरैरिति । अर्पितः संयुक्तः विधूम इत्यनेन ज्वालाधिक्यमुच्यते ॥ १९ ॥

रा० टी०–तत इति । ततः खरकृतप्रहारानन्तरं शत्रुनिबर्हणः स रामः रिपोरन्ताय निर्ह्रादं शब्दविशेषम् अन्यद्धनुः सज्यं चकार ॥ २० ॥

गो० टी०–तत इति । गम्भीरनिर्ह्रादं गम्भीरध्वनिकं धनुः रिपोरन्ताय नाशाय सज्जं चकारेत्यन्वयः ॥ २० ॥

२१–२२ ] ति० टी०–महर्षिणाऽगस्त्येन अतिसृष्टं दत्तम्, वरं श्रेष्ठम् ॥ २१ ॥ २२ ॥

रा० टी०–सुमहदिति । यत् वैष्णवं विष्णुसंस्कृतं सुमहत् धनुः महर्षिणा अगस्त्येन अतिसृष्टं दत्तं तद्वरं धनुरुद्यम्य खरं समभिधावत राम इति शेषः । अगस्त्येन दत्तमित्यनेन मद्दत्तचापेनैव खरो हन्तव्य इत्यगस्त्यप्रार्थना सूचिता तेनागस्त्यस्याप्यनेन कश्चिदपराधः कृत इति सूचितम् ॥ २१ ॥

---

१ पाणीति गो. पाठः । २ वर्मणीति गो. रा. पाठः । ३ खर इति गो. पाठः । ४ सप्तदशाष्टादशयोः गो. पाठव्यत्यासः । ५ वर्चस इति गो. पाठः । ६ धावतेति गो. रा. पाठः । ७ इदम् 'सज्यमन्यन्महद्धनुः' इति विंशतितमपद्यान्त्यपादार्थविरुद्धम् ।

स दर्शनीयो बहुधा [1]विच्छिन्नः काञ्चनो ध्वजः । जगाम धरणीं सूर्यो देवतानामिवाज्ञया ॥ २३ ॥
तं चतुर्भिः खरः क्रुद्धो रामं गात्रेषु मार्गणैः । विव्याध हृदि मर्मज्ञो मातङ्गमिव [2]तोयदैः ॥ २४ ॥
स रामो बहुभिर्बाणैः खरकार्मुकनिःसृतैः । विद्धो रुधिरसिक्ताङ्गो बभूव रुषितो भृशम् ॥ २५ ॥
स धनुर्धन्विनां श्रेष्ठः [3]संगृह्य परमाहवे । मुमोच परमेष्वासः षट् शरानभिलक्षितान् ॥ २६ ॥
शिरस्येकेन बाणेन द्वाभ्यां बाह्वोरथार्पयत् । त्रिभिश्चन्द्रार्धवक्त्रैश्च वक्षस्यभिजघान ह ॥ २७ ॥
ततः पश्चान्महातेजा नाराचान्भास्करोपमान् । जघान राक्षसं क्रुद्धस्त्रयोदश [6]शिलाशितान् ॥ २८ ॥
रथस्य युगमेकेन चतुर्भिः शबलान्हयान् । षष्ठेन च शिरः संख्ये [9]चिच्छेद खरसारथेः ॥ २९ ॥
त्रिभिस्त्रिवेणून्बलवान्द्वाभ्यामक्षं महाबलः । द्वादशेन तु बाणेन खरस्य सशरं धनुः ॥ ३० ॥
छित्त्वा वज्रनिकाशेन राघवः प्रहसन्निव । त्रयोदशेनेन्द्रसमो बिभेद समरे खरम् ॥ ३१ ॥
प्रभग्नधन्वा विरथो हताश्वो हतसारथिः । गदापाणिरवप्लुत्य तस्थौ भूमौ खरस्तदा ॥ ३२ ॥

---

गो० टी०—सुमहदिति । यत्तदिति प्रसिद्ध्यतिशयवाची महर्षिणा अगस्त्येन अतिसृष्टं दत्तं समभिधावत समभ्यधावत ॥ २१ ॥

रा० टी०—तत इति । कनकपुङ्खैः शरैः खरस्य ध्वजं संक्रुद्धो रामः चिच्छेद ॥ २२ ॥

गो० टी०—तत इति । सन्नतपर्वभिः ऋजुपर्वभिः ॥ २२ ॥

२३–२५ ] ति० टी०—देवतानामाज्ञया सूर्य इवेति कविकल्पितोपमानिकोपमेयम् ॥ २३–२५ ॥

रा० टी०—स इति । बहुधा बहुप्रकारं विच्छिन्नः दर्शनीयः काञ्चनो ध्वजः देवतानामाज्ञया सूर्य इव धरणीं जगाम । अस्याप्रसिद्धत्वे अभूतोपमात्वम् ॥ २३ ॥

गो० टी०—स इति । दर्शनीयः रम्यः आज्ञया शापेन उत्प्रेक्षेयम् ॥ २३ ॥

रा० टी०—तमिति । क्रुद्धः खरः तं रामं तोमरैर्मातङ्गं गजमिव मार्गणैर्बाणैः हृदि विव्याध ॥ २४ ॥

रा० टी०—स इति । खरकार्मुकनिःसृतैः खरचापच्युतैर्बहुभिर्बाणैः विद्धस्ताडितः रुधिरसिक्ताङ्गः निहतानेकराक्षसशरीरजनितशोणितोक्षितो रामः भृशं रुषितो बभूव ॥ २५ ॥

गो० टी०—तमिति । मातङ्गं गजं तोमरैः गजशिक्षादण्डैः चतुर्भिरित्यत्र वीप्सा बोध्या बहुभिरित्यनुवादात् ॥ २४ ॥ २५ ॥

२६ ] ति० टी०—अभिलक्षितानभिलक्षितविषयान् ॥ २६ ॥

रा० टी०—स इति । धन्विनां श्रेष्ठः परमेष्वासः गृहीतपरमचापः स रामः अभिलक्षितान् लक्ष्योद्देश्यत्वेन बोधितान् षट् शरान् मुमोच ॥ २६ ॥

गो० टी०—स धनुरिति । परमेष्वासः उत्कृष्टशरासनः अभिलक्षितान् प्रसिद्धान् ॥ २६ ॥

२७ ] ति० टी०—तानेव विषयानाह—शिरस्येकेनेत्यादि ॥ २७ ॥

रा० टी०—तत्प्रकारमाह—शिरसीति । एकेन बाणेन शिरसि द्वाभ्यां बाह्वोः अताडयत्, चन्द्रार्धवक्त्रैः त्रिभिः बाणैः वक्षसि अभिजघान ॥ २७ ॥

गो० टी०—षण्णां विनियोगप्रकारमाह—शिरसीत्यादिना । द्वाभ्यामिति बाह्वोरिति एकैकस्य बाहोरेकैकेनेत्यर्थः । चन्द्रार्धवक्त्रैः अर्धचन्द्राकारमुखैरित्यर्थः ॥ २७ ॥

२८ ] ति० टी०—भास्करोपमानित्यस्य गृहीत्वेति शेषः ॥ २८ ॥

रा० टी०—तत इति । ततः पश्चात् षड्बाणप्रक्षेपानन्तरं महातेजाः रामः भास्करोपमान् त्रयोदश नाराचान् राक्षसं जघान ॥ २८ ॥

गो० टी०—तत इति । त्रयोदश नाराचान् समाददे इत्यन्वयः । अन्तिमपादे त्रयोदश शरान् शितानिति पाठे मुमोचेति क्रियाध्याहार्या ॥ २८ ॥

२९ ] ति० टी०—उपात्तत्रयोदशानां विनियोगमाह—रथस्येत्यादि ॥ २९ ॥

रा० टी०—तत्प्रकारमाह—रथस्येति । एकेन बाणेन रथस्य युगं रथाङ्गं यद्यपि ' युगो रथहलाद्यङ्गे ' इतिकोशात् युगेनैव रथाङ्गग्रहणे सिद्धे रथस्येति निरर्थकं तथापि स्पष्टार्थम् इतराङ्गव्यावृत्तये तदुपात्तम् । अन्वयस्तु विशेषणाविवक्षया चतुर्भिः शबलान् चित्रान् हयान् षष्ठेन च सारथेः शिरः चिच्छेद ॥ २९ ॥

गो० टी०—त्रयोदशानां विनियोगमाह—ततोऽस्येत्यादिना । छित्त्वेत्युत्तरत्र स्थिता क्रिया सर्वत्र संबध्यते । त्रिवेणुर्नाम रथमुखस्थो युगाधारदण्डः प्रहसन्निव लीलयेत्यर्थः ॥ २९–३१ ॥

३० ] ति० टी०—त्रिवेणुर्नाम रथमुख्यो युगाधारदण्डः ॥ ३० ॥

३१–३२ ] ति० टी०—प्रहसन्निव लीलयैव बिभेद खरं हृदीति शेषमाह कतकः ॥ ३१ ॥ ३२ ॥

रा० टी०—त्रिभिरिति । त्रिभिः त्रिवेणून् रथमुख

---

१ विकीर्णः काञ्चनध्वज इति गो. पाठः । २ तोमरैरिति गो. रा. पाठः । ३ प्रगृह्येति गो. पाठः । ४ अर्दयदिति गो. अताडयदिति रा. पाठः । ५ जिघां रिति गो. पाठः । ६ समाददे इति गो. पाठः । ७ ततोऽस्येति गो. पाठः । ८ चतुर इति गो. पाठः । ९ खरस्य रथसारथेरिति गो. पाठः । १० शरमिति गो. पा

तत्कर्म रामस्य महारथस्य समेत्य देवाश्च महर्षयश्च ।
अपूजयन्प्राञ्जलयः प्रहृष्टास्तदा विमानाग्रगताः समेताः ॥ ३३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डेऽष्टाविंशः सर्गः ॥ २८ ॥

## एकोनत्रिंशः सर्गः ।

सगर्हणं सवीरवादमाक्षिप्तखरेण विमुक्तां गदां रामः शरवर्षेण सवीरनादं चिच्छेद ।

खरं तु विरथं रामो गदापाणिमवस्थितम् । मृदुपूर्वं महातेजाः परुषं वाक्यमब्रवीत् ॥ १ ॥
गजाश्वरथसंबाधे बले महति तिष्ठता । कृतं [1]ते दारुणं कर्म सर्वलोकजुगुप्सितम् ॥ २ ॥
उद्वेजनीयो भूतानां नृशंसः पापकर्मकृत् । त्रयाणामपि लोकानामीश्वरोऽपि न तिष्ठति ॥ ३ ॥
कर्म लोकविरुद्धं तु कुर्वाणं क्षणदाचर । तीक्ष्णं सर्वजनो हन्ति सर्पं दुष्टमिवागतम् ॥ ४ ॥

युगाधारदण्डं द्वाभ्याम् अक्षं चक्राधारं द्वादशेन तु खरस्य सकरं करसहितं धनुः छित्वा वज्रनिकाशेन वज्रसदृशेन त्रयोदशेन इन्द्रसमो राघवः खरं बिभेद । श्लोकद्वयमेकान्वयि ॥ ३० ॥ ३१ ॥

रा० टी०–प्रभग्नेति । प्रभग्नं धनुर्यस्य स खरः अवप्लुत्य भग्नरथाद्बहिरागत्य गदापाणिः सन् भूमौ तस्थौ ॥ ३२ ॥

गो० टी०–प्रभग्नेति । अवप्लुत्य रथात् समुल्लङ्घ्य ॥ ३२ ॥

३३ ] ति० टी०–महारथस्य पूज्यस्य तत्कर्म दृष्ट्वेति शेषः, अपूजयन् नमस्कारस्तुत्यादिभिस्तमतोषयन्नित्यर्थः ॥ ३३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डेऽष्टाविंशः सर्गः ॥ २८ ॥

रा० टी०–तदिति । विमानाग्रगता देवाः समेताः समदृष्टयो महर्षयश्च प्राञ्जलयः प्रहृष्टाः सन्तः समेत्य तत् अद्भुतं रामस्य कर्म अपूजयन् प्राशंसन् ॥ ३३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डेऽष्टाविंशतितमः सर्गः ॥ २८ ॥

गो० टी०–तदिति । तत्कर्म खरभङ्गकर्म अपूजयन् अस्तुवन् समेत्य समूहीभूय समेताः आगताः ॥ ३३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्यानेऽष्टाविंशः सर्गः ॥ २८ ॥

१ ] ति० टी०–मृदुपूर्वं न्यायमवलम्ब्य मृदूक्तिपूर्वम् । परुषं परुषार्थकम् ॥ १ ॥

रा० टी०–खररथादिच्छेदनानन्तरकालिकं वृत्तान्तमाह—खरमित्यादिभिः । गदापाणिमवस्थितं खरं महातेजाः रामः परुषं रूक्षत्वेन प्रतिभासमानं मृदुपूर्वं मृदु मृदुत्वं पूर्वमिव यस्मिन् तत् वाक्यमब्रवीत् ॥ १ ॥

गो० टी०–अहंकारस्य हीनस्य व्यक्तां शक्तिमिव स्थिताम् ।
गदां खरस्य निर्भिद्य राजन्तं राममाश्रये ॥

सर्वसाधनवैकल्येन खरस्यानुकूल्यमपि भवेदिति तच्चित्तपरीक्षार्थमाह–खरं त्वित्यादिना । मृदुपूर्वं न्यायावलम्बनेनोक्तं परुषं मर्मोद्घाटनरूपत्वात् ॥ १ ॥

२ ] ति० टी०–त्वत्कृतान्यायेनायं तव नाश इत्याह—गजेत्यादि । बले तिष्ठता बलविषयस्वामित्वेन तिष्ठता, ईदृशेन यद्दारुणं कर्म कृतं भवति तत्सर्वं लोकनिन्द्यं भवति ॥ २ ॥

रा० टी०–तद्वचनाकारमाह–गजेति । गजाश्वरथसंबाधे गजादिभिः संकुले महति बले तिष्ठता त्वया सर्वलोकजुगुप्सितं सर्वलोकैर्निन्दितं दारुणं क्रूरं कर्म कृतम् ॥ २ ॥

गो०टी०–गजाश्वेति । तिष्ठता अधिपतित्वेन तिष्ठतेत्यर्थः ॥ २

३ ] ति० टी०–एवंविधकर्मकर्तुर्नेह सुखमित्याह—उद्वेजनीय इति उद्वेजक इत्यर्थः । नृशंसो घातुकः क्रूरः एवंगुणक ईश्वरोऽपि न तिष्ठति न चिरं तिष्ठति ॥ ३ ॥

रा० टी०–ननु तेन कर्मणा किं भवितेत्यत आह–उद्विति । भूतानां जन्तूनामुद्वेजनीयः भयप्रदः अत एव नृशंसः क्रूरकर्मा अत एव पापकर्मकृत् जन्तुः त्रयाणां लोकानामीश्वरोऽपि न तिष्ठति । एतेन यदि लोकेश्वरस्य पापकृतो न स्थितिस्तर्हि तव नेति किं वक्तव्यमिति काव्यार्थापत्तिरलंकारो व्यक्तः ॥ ३ ॥

गो० टी०–मृदुपूर्वत्वसिद्धये लोकन्यायमाह–उद्वेजनीय इति । उद्वेजनीयः उद्वेजकः नृशंसो घातुकः एवंविधो लोकानामीश्वरोऽपि न तिष्ठति न जीवेत् किंपुनर्भवादृश इति भावः ॥ ३ ॥

४ ] ति० टी०–तदेवाह–कर्मेत्यादि । सर्वजनो हन्ति अकृतापकारोऽपि हन्ति स सर्ववध्य इति यावत् ॥ ४ ॥

रा० टी०–कर्मेति । हे क्षणदाचर ! क्षणदासु रात्रिषु चरति तत्संबोधनम् लोकविरुद्धं तीक्ष्णं कर्म कुर्वाणं जनम् आगतं गृहे प्राप्तं दुष्टं सर्पमिव सर्वजनो हन्ति ॥ ४ ॥

गो०टी०–कर्मेति । सर्वजन इति दयालुरपीति भावः ॥ ४ ॥

१ त्विति गो. पाठः ।

लोभात्पापानि कुर्वाणः कामाद्वा यो न बुध्यते । [1]हृष्टः पश्यति तस्यान्तं ब्राह्मणी करकादिव ॥ ५ ॥
वसतो दण्डकारण्ये तापसान्धर्मचारिणः । किं नु हत्वा महाभागान्फलं प्राप्स्यसि राक्षस ॥ ६ ॥
न चिरं पापकर्माणः क्रूरा लोकजुगुप्सिताः । ऐश्वर्यं प्राप्य तिष्ठन्ति शीर्णमूला इव द्रुमाः ॥ ७ ॥
अवश्यं लभते [2]कर्ता फलं पापस्य कर्मणः । घोरं पर्यागते काले [3]द्रुमः पुष्पमिवार्तवम् ॥ ८ ॥
न चिरात्प्राप्यते लोके पापानां कर्मणां फलम् । सविषाणामिवान्नानां भुक्तानां क्षणदाचर ॥ ९ ॥
पापमाचरतां घोरं लोकस्याप्रियमिच्छताम् । अहमासादितो [4]राजा प्राणान्हन्तुं निशाचर ॥ १० ॥
अद्य [5]भित्त्वा मया मुक्ताः शराः काञ्चनभूषणाः । विदार्या[6]पिपतिष्यन्ति वल्मीकमिव पन्नगाः ॥ ११ ॥

५ ] ति० टी०–अप्राप्तप्राप्तीच्छा कामः, प्राप्ताधिकेच्छा लोभः । तस्य पापस्यान्तं स्वनाशरूपं परिपाकं पश्यति पापफलमनुभवतीत्यर्थः । करका वर्षोपलास्तानत्ति करकात्सा ब्राह्मणी रक्तपुच्छिकेव रक्तपुच्छिकायाः करका विषम् तन्निगरणमात्रेण तन्मृत्युरिति प्रसिद्धिः सा यथा स्वानर्थमपश्यन्ती तद्भुङ्क्ते भोजनोत्तरं तन्नाशं लोकः पश्यति एवं यः कर्मकरणकाले नाशकामिदमिति न बुध्यते तस्य तत्कर्मप्राप्तमन्तं नाशं लोको हृष्टः सन्पश्यतीत्यर्थ इति कतकः ॥ ५ ॥

रा० टी०–लोभादिति । लोभात् अविवेकात् कामात् शरीरपोषणाद्युत्कटेच्छातो वा पापानि पापकर्माणि हिंसादीनि कुर्वाणः अत एव हृष्टः यो न बुध्यते परपीडादि ज्ञात्वा न निवर्तते स जन्तुस्तस्य कर्मणः अन्तं फलं पश्यति प्राप्नोति । किंच तस्य कर्मणः कर्ता स जन्तुः अन्तं स्वविध्वंसं पश्यति । तत्र दृष्टान्तः–ब्राह्मणी रक्तपुच्छिका करकात् वर्षोपलात् तद्भक्षणादिवेत्यर्थः, वर्षोपलं रक्तपुच्छिकाया विषमिति प्रसिद्धम् ॥ ५ ॥

गो० टी०–लोभादिति । लोभात् लब्धस्य त्यागासहिष्णुतया कामात् अपूर्वलाभेच्छया न बुध्यते न पश्चात्तापं करोतीत्यर्थः । भ्रष्टः ऐश्वर्यात् भ्रष्टः तस्य कर्मणः अन्तं फलं पश्यति अनुभवति कथमिव करकात् ब्राह्मणीव करकाः वर्षोपलाः । 'वर्षोपलस्तु करका' इत्यमरः । तानत्तीति करकात् ब्राह्मणी रक्तपुच्छिका 'ब्राह्मणी रक्तपुच्छिका' इति निघण्टुः । तस्यास्तद्भक्षणं विषभक्षणवन्मारकमिति प्रसिद्धिः यथा ब्राह्मणी स्वमारकं कर्म स्वयमेव करोति तथा त्वमपीत्यर्थः ॥ ५ ॥

६ ] ति० टी०–ततः किं तत्राह—वसत इति । किं नु फलमग्रे प्राप्स्यसि तन्न विद्म इति शेषः ॥ ६ ॥

रा० टी०–ननु किं क्रूरं कर्म मया कृतमित्यत आह–वसत इति । दण्डकारण्ये वसतो धर्मचारिणस्तापसान् हत्वा किं नु फलं सुभोगं प्राप्स्यसि नेत्यर्थः ॥ ६ ॥

गो० टी०–किं पापं मया कृतमित्यत्राह–वसत इति ॥ ६ ॥

७ ] ति० टी०–इदं तु प्रत्यक्षमित्याह—नेति । पापकर्माणः पूर्वपुण्येनैश्वर्यं प्राप्यापि न चिरं तिष्ठन्ति ॥ ७ ॥

रा० टी०–नेति । पापकर्माणः पुरुषाः ऐश्वर्यं कस्यचित्सुकर्मणः फलभूतसंपदं प्राप्य चिरं न तिष्ठन्ति, तत्र दृष्टान्त शीर्णमूलाः द्रुमा वृक्षा इव ॥ ७ ॥

गो० टी०–ननु तर्हि कथं पापिनोऽपि बहवो जीवन्तीत्यत्राह–न चिरमिति । केवलपापिनो जन्मान्तरे फ भुञ्जते क्रूरास्तु पुण्यलेशेन ऐश्वर्यं प्राप्यापि न चिरं तिष्ठन्ति क्षिप्रमेव विनश्यन्तीत्यर्थः ॥ ७ ॥

८–९ ] ति० टी०–काले पापानुभवकाले । घोरं दुःखरूपफलम् ॥ ८ ॥ ९ ॥

रा० टी०–अवश्यमिति । पापस्य कर्मणः कर्ता का पर्यागते प्राप्ते सति घोरं फलमवश्यं लभते, तत्र दृष्टान्तः आर्तवम् ऋतुप्राप्तं पुष्पं द्रुम इव ॥ ८ ॥

गो० टी०–अवश्यमिति । पापस्य कर्ता जन्तुः का प्राप्ते अवश्यं घोरं दुःखरूपं फलं लभते ऋतुलक्षणे काले पर्यागते प्राप्ते आर्तवं तत्तदृतुप्राप्तं पुष्पमिव ॥ ८ ॥

रा० टी०–नेति । पापानां पापजनकानां कर्मणा अत्युग्रक्रियाणां फलं विपत्तिः चिरान्न प्राप्यते झटित्येव प्राप्य इत्यर्थः, तत्र दृष्टान्तः भुक्तानां सविषाणाम् अन्नानामिव ॥ ९ ॥

गो० टी०–नचिरादिति । नचिरादित्येकं पदम् अवि म्बेनेत्यर्थः । अत्र पुरुष इति शेषः, पापानाम् अत्युत्कटाना मित्यर्थः ॥ ९ ॥

१० ] ति० टी०–घोरं कर्मणः फलं भवतीति शेषः । अ तो हेतोरहं राजा दुष्टनिग्रहाधिकारी । हे निशाचर ! रज प्राणान्हन्तुमासादितः ऋषिभिरिति शेषः, त्वयेति वा । 'रा इति पाठे राज्ञा दशरथेनासादितो नियुक्त इत्यर्थ इ तीर्थः ॥ १० ॥

रा० टी०–ननु यो यत्कर्म करिष्यति स तत्फलं प्रा स्यैवेति त्वदुक्तिर्व्यर्थैवेत्यत आह–पापमिति । लोकस्य अ यमिच्छतामत एव पापमाचरतां जनानां प्राणान्हन्तुं रा पित्रा अहमासादितः वनं प्रापितः । राजेति पाठेऽपि क्विबन्तत स एवार्थः ॥ १० ॥

गो० टी०–एवं मृदुपूर्वमुक्त्वा परुषमाह–पापमित्य दिना । आसादितः प्राप्तोऽस्मि आगमने हेतुमाह–राज्ञेति ॥ १

११ ] ति० टी०–अद्य मया मुक्ता बाणास्त्वद्वपुर्भि

१ भ्रष्ट इति गो. पाठः । २ जन्तुरिति गो. पाठः । ३ द्रुमा इति गो. पाठः । ४ राज्ञेति गो. रा. पाठः । ५ हि त्वामिति गो. पाठः । ६ निपतिष्यन्ती गो. अतिपतिष्यन्तीति रा. पाठः ।

ये त्वया दण्डकारण्ये भक्षिता धर्मचारिणः । तानद्य निहतः संख्ये ससैन्योऽनुगमिष्यसि ॥ १२ ॥
अद्य त्वां [1]निहतं बाणैः पश्यन्तु परमर्षयः । निरयस्थं विमानस्था ये त्वया [2]निहताः पुरा ॥ १३ ॥
प्रहरस्वै यथाकामं कुरु यत्नं कुलाधम । अद्य ते पातयिष्यामि शिरस्तालफलं यथा ॥ १४ ॥
एवमुक्तस्तु रामेण क्रुद्धः संरक्तलोचनः । प्रत्युवाच ततो रामं प्रहसन्क्रोधमूर्छितः ॥ १५ ॥
प्राकृतान्राक्षसान्हत्वा युद्धे दशरथात्मज । आत्मना कथमात्मानमप्रशस्यं प्रशंससि ॥ १६ ॥
विक्रान्ता बलवन्तो वा ये भवन्ति नरर्षभाः । कथयन्ति न ते किंचित्तेजसा चातिगर्विताः ॥ १७ ॥
प्राकृतास्त्वकृतात्मानो लोके क्षत्रियपांसनाः । निरर्थकं विकत्थन्ते यथा राम विकत्थसे ॥ १८ ॥
कुलं व्यपदिशन्वीरः समरे कोऽभिधास्यति । मृत्युकाले तु संप्राप्ते स्वयमप्रस्तवे स्तवम् ॥ १९ ॥

भूमिं विदार्यातिपतिष्यन्ति भुवमतिक्रम्य पतिष्यन्ति पातालं गमिष्यन्तीति यावत् ॥ ११ ॥

रा० टी०–अद्येति । काञ्चनभूषणाः मया मुक्ताः शराः भित्त्वा त्वद्देहं छित्त्वा भुवं विदार्य च वल्मीकं पन्नगा इव अतिपतिष्यन्ति प्रवेक्ष्यन्ति भुवमिति शेषः ॥ ११ ॥

गो० टी०–अद्य हीति । मया मुक्ताः शराः त्वां विदार्य निपतिष्यन्ति प्रवेक्ष्यन्ति यथा पन्नगाः सर्पाः वल्मीकं प्रविशन्ति तथा ॥ ११ ॥

१२ ] ति० टी०–अत्र ऋष्यनुगमनं प्राणनाशमात्रेण अत एव निरयस्थमिति वक्ष्यति ॥ १२ ॥

रा० टी०–ये इति । दण्डकारण्ये ये धर्मचारिणस्त्वया भक्षितास्ताँस्तत्सदृशं मरणं मया निहतः सन्ननुगमिष्यसि प्राप्स्यसि ॥ १२ ॥

गो० टी०–ये त्वयेति ।ताननुगमिष्यसीति पापिनामपि समरे हतानां स्वर्गसंभवादिति भावः ॥ १२ ॥

१३ ] ति० टी०–निरयस्थमिति । ननु भगवता हतस्य मृतिसमये भगवद्दर्शनवतः कथं निरयस्थत्वमिति चेन्न, अत्युग्रस्य ब्रह्मवधकर्मणः फलस्यावश्यं भोक्तव्यत्वेनादौ भगवदिच्छयैव निरयभोगपूर्वमुत्तमपदप्राप्तेः सत्त्वेनादोषात् ॥ १३ ॥

रा० टी०–अद्येति । ये त्वया निहतास्ते विमानस्थाः परमर्षयः बाणैर्निहतं निरयस्थं निर्गतः अयः पुनरिहलोके पुत्रपौत्रादिदर्शनार्थं गमनं यस्मात् तल्लोकविशेषस्थं त्वां पश्यन्तु ॥ १३ ॥

गो० टी०–अद्य त्वामिति । निरयस्थं नरकसदृशं दुःखं भूमौ पतित्वाऽनुभवन्तमित्यर्थः ॥ १३ ॥

१४–१६ ] ति० टी०–कुलाधम कुलेनाधम॥ १४–१६॥

रा० टी०–प्रहरस्वेति । हे कुलाधम ! ते शिरस्तालफलमिव पातयिष्यामि अतः यथाकामं त्वं प्रहरस्व यत्नं स्ववधाभावप्रयत्नं कामं यथेच्छं कुरु, अनवधानतया हतोऽस्मीति न वक्तव्यमिति तात्पर्यम् ॥ १४ ॥

रा० टी०–एवमिति । रामेण एवमुक्तः क्रुद्धः अत एव क्रोधमूर्च्छितः खरः प्रहसन् सन् रामं प्रत्युवाच ॥ १५ ॥

गो० टी०–प्रहरेति । तालफलं यथेत्यनेनानायासोक्तिः ॥ १४ ॥ १५ ॥

रा० टी०–तत्प्रतिवचनाकारमाह–प्राकृतानिति । हे दशरथात्मज ! प्राकृतान् राक्षसान् हत्वा आत्मना स्वेनैव अप्रशस्यमात्मानं कथं प्रशंससि ॥ १६ ॥

गो० टी०–प्राकृतानिति । आत्मना स्वयमेव ॥ १६ ॥

१७ ] ति० टी०–गर्विता अति न कथयन्तीत्यन्वयः ॥ १७ ॥

रा० टी०–विक्रान्ता इति । विक्रान्ता कामचारगमनाः बलवन्तश्च तेजसा च अतिगर्विताः ये नरर्षभास्ते किंचित् स्वमहत्त्वसूचकं वाक्यं न कथयन्ति ॥ १७ ॥

गो० टी०–विक्रान्ता इति । तेजसा प्रतापेन ॥ १७ ॥

१८ ] ति० टी०–अकृतात्मानः कल्मषचित्ताः ॥ १८ ॥

रा० टी०–प्राकृता इति । हे राम ! यथा त्वं निरर्थकं विकत्थसे तथा अकृतात्मानः अजितमनसः प्राकृताः क्षत्रियपांसनाः विकत्थन्ते, एतेन त्वयैवं न वक्तव्यमिति सूचितम् तेन रामस्य प्राकृतविलक्षणत्वं ध्वनितम् ॥ १८ ॥

गो० टी०–प्राकृता इति । प्राकृताः क्षुद्राः अकृतात्मानः अप्रतिष्ठितधृतयः क्षत्रियपांसनाः क्षत्रियाधमाः निरर्थकं निष्प्रयोजनं यथा तथा विकत्थन्ते श्लाघन्ते ॥ १८ ॥

१९ ] ति० टी०–कलुषं व्यपदिशन्कुलीनत्वं प्रकटयन्मृत्युकाले तत्तुल्ययुद्धकाले संप्राप्ते अप्रस्तवेऽप्रस्तावे घञभाव आर्षः स्वस्तवरूपं वचनं कोऽभिधास्यति न कोऽपीत्यर्थः । 'अहमासादितो राजा' इति रामोक्तेरिदमुक्तवान् ॥ १९ ॥

रा० टी०–कुलमिति । मृत्युकाले मृत्युसंशयप्रापके समरे प्राप्ते सति अप्रस्तवे प्रस्तावाभावे कुलं स्वकुलवैभवं व्यपदिशन् सन् स्तवं स्वस्तुतिवचनं कोऽभिधास्यति कथयिष्यति ॥ १९ ॥

गो० टी०–कुलमिति । कुलं व्यपदिशन् आत्मनो महाकुल-

१ पतितमिति गो. पाठः । २ हिंसिता इति गो. पाठः । ३ त्वमिति गो. पाठः । ४ खर इति गो. पाठः । ५ स्वेनेति गो. पाठः । ६ हीति गो. पाठः ।

सर्वथा तु लघुत्वं ते कत्थनेन विदर्शितम् । सुवर्णप्रतिरूपेण तप्तेनेव कुशाग्निना ॥ २० ॥
न तु मामिह तिष्ठन्तं पश्यसि त्वं गदाधरम् । धराधरमिवाकम्प्यं पर्वतं धातुभिश्चितम् ॥ २१ ॥
पर्याप्तोऽहं गदापाणिर्हन्तुं प्राणान्रणे तव । त्रयाणामपि लोकानां पाशहस्त इवान्तकः ॥ २२ ॥
कामं बह्वपि वक्तव्यं त्वयि वक्ष्यामि न त्वहम् । अस्तं प्राप्नोति सविता युद्धविघ्नस्ततो भवेत् ॥ २३ ॥
चतुर्दश सहस्राणि राक्षसानां हतानि ते । त्वद्विनाशात्करोम्यद्य तेषामश्रुप्रमार्जनम् ॥ २४ ॥

प्रस्तुतत्वं प्रकटयन् को वीरः मृत्युकाले संप्राप्ते अप्रस्तवे अनवसरे स्वयं स्तवमभिधास्यतीत्यन्वयः ॥ १९ ॥

२० ] ति० टी०—कत्थनेन प्राकृतेन ते त्वया सर्वथैवात्मनो लघुत्वं दर्शितम् । यथा सुवर्णतुल्यरूपेण पित्तलेन कुशाग्निना स्वर्णादिशोधनाग्निना तप्तेन यथा स्वस्य कृष्णवर्णत्वरूपं लाघवं दर्शितं भवति तद्वत्तापात्पूर्वं हि तत्र स्वर्णताबुद्धिः सा तापे यथा नश्यति तथा त्वया स्वस्मिन्स्थिता प्राक्शूरत्वबुद्धिः कत्थनेनापहृतेत्यर्थः । 'तुषाग्निना' इति पाठान्तरम् ॥ २० ॥

रा० टी०—सर्वथेति । कत्थनेन स्वश्लाघया ते लघुत्वं सर्वथा विदर्शितं बोधितम्, तत्र दृष्टान्तः कुशाग्निना स्वर्णशोधकाग्निना तप्तेन सुवर्णप्रतिरूपेण पित्तलेनेव तद्वह्नितापेन तस्य कृष्णरूपत्वं भवतीति प्रसिद्धम् । यथा तापात्पूर्वं सूक्ष्मविचारमन्तरा पित्तले स्वर्णबुद्धिरुत्पद्यते तापेन तु विनश्यति तथा स्वश्लाघावचनोच्चारणात्पूर्वं त्वच्छूरत्वविषयिणी बुद्धिर्ममोत्पन्ना त्वत्कर्तृकस्वश्लाघाकत्थनेन तु सा विनष्टेत्यर्थः ॥ २० ॥

गो० टी०—सर्वथैव लघुत्वं ते कत्थनेन विदर्शितम् । सुवर्णप्रतिरूपेण तप्तेनेव कुशाग्निना, इति । ते कत्थनेन लघुत्वमल्पत्वं सर्वथैव स्पष्टमेव विदर्शितं यथा तप्तेन अत एव सुवर्णसदृशेन कुशाग्निना कुशं दर्भमाश्रितेनाग्निना लघुत्वं विदर्श्यते तद्वत् यथा तृणाग्निः सुवर्णतुल्यतया भासमानोऽपि ज्वलन्नप्युत्तरकाले दाहकार्यकरो न भवति तथा कत्थनेन वीरवत् भासमानोऽपि पुरुषः उत्तरकाले लघुरेव भविष्यतीत्यर्थः । शीघ्रं ज्वलन् तृणाग्निः यथा सद्यः शान्तो न दग्धुमीष्टे तथा कत्थमानः पुरुषः स्वकत्थनानुरूपं कार्यं न करोतीति सिद्धमिति ॥ २० ॥

२१ ] ति० टी०—अयमेव ते कत्थने हेतुरित्याह—न त्विति । गदाधरं मां यतो न पश्यसि सारतो न जानासि अतो विकत्थसे इत्यन्वयः । धराधरमिति पर्वतविशेषणम् तेन कुलाचलसादृश्यबोधनम् ॥ २१ ॥

रा० टी०—श्लाघाकरणे हेतुमाह—नेति । धातुभिः स्वर्णादिभिः चितं प्रवृद्धम् अकम्प्यं कम्पयितुमशक्यं धराधरं पृथ्वीधारकं पर्वतं कुलाचलमिव तिष्ठन्तं गदाधरं मां त्वं न पश्यसि तत्त्वतो न जानासि, एतेन तत्त्वतो मत्कर्मकज्ञाने त्वयि स्वश्लाघाबुद्धिर्नैवोत्पद्येत इति सूचितम् ॥ २१ ॥

गो० टी०—न त्विति । इह तव पुरतः तिष्ठन्तं निश्चलतया स्थितं गदाधरं शत्रुरक्तोक्षितगदावन्तं मां सर्वनिर्वाहकं पर्वतमिवाकम्प्यं न पश्यसि अत एवैवं कत्थस इति भावः ॥ २१ ॥

२२ ] ति० टी०—स्वकं सारं दर्शयति—पर्याप्त इति गदापाणिरिति गदाहस्त इत्यर्थः । तव त्रयाणां लोकानां चेत्यर्थः ॥ २२ ॥

रा० टी०—ननु यज्ज्ञानेन मयि स्वश्लाघाबुद्धिर्नोत्पद्येत तत्किं त्वय्यस्तीत्यत आह—पर्याप्त इति । गदापाणिः तव प्राणान् त्रयाणां लोकानां च प्राणान् हन्तुं पाशहस्तोऽन्तक इव पर्याप्तोऽस्मीति शेषः ॥ २२ ॥

गो० टी०—पर्याप्त इति । गदापाणिरहं पाशहस्तोऽन्तक इव तव त्रयाणां लोकानामपि प्राणान् हन्तुं पर्याप्तः समर्थ इति योजना ॥ २२ ॥

२३ ] ति० टी०—यद्यपि त्वद्विषये कामं बहु वक्तव्यमस्ति, अथाप्यहं न वक्ष्यामि त्वद्वल्लघुत्वापत्तेः । हेत्वन्तरमप्याह—अस्तमिति ॥ २३ ॥

रा० टी०—काममिति । यद्यपि त्वयि त्वद्विषये काममत्यन्तं यथा स्यात्तथा बहु वक्तव्यमस्ति तथापि अहं न वक्ष्यामि । तत्र हेतुः—सविता सूर्योऽस्तं प्राप्नोति ततोऽस्ते सति युद्धविघ्नो भवेत् एतेन रात्रौ राक्षसानां बलवर्धनस्य प्रसिद्धत्वान्निशि युद्धे अल्पबलेन रामेण साकं युद्धं प्रवृत्तमिति ममोपहासास्पदत्वं स्यादिति सूचितम् ॥ २३ ॥

गो० टी०—काममिति । त्वयि आत्मश्लाघिनि विषये कामं यद्यपि बहु पारुष्यं वक्तव्यमस्ति तथापि तन्न वक्ष्यामि कुतः हि यस्मात् सविता अस्तं गच्छेत् ततः अस्तमयेन युद्धविघ्नो भवेत् यद्यपि स्वस्य रात्रिर्बलायैव तथापि रात्र्यशक्तव्यपदेशे स्वस्य न कापि कीर्तिरिति खरहृदयम् ॥ २३ ॥

२४ ] ति० टी०—यानि ते त्वया हतानि तेषां तत्सम्बन्धिस्त्रीपुत्रादीनामश्रुप्रमार्जनं करिष्यामि त्वद्विनाशकरणात् ॥ २४ ॥

रा० टी०—चतुर्दशेति । यानि रक्षसां चतुर्दश सहस्राणि त्वया निहतानि तेषां रक्षसामश्रुप्रमार्जनं संतापनाशमित्यर्थः त्वद्विनाशात्करोमि ॥ २४ ॥

गो० टी०—चतुर्दशेति । ते त्वया एष इत्यव्यवधानोक्तिः तेषां तद्बन्धूनामित्यर्थः, यद्वा तद्वधप्रतिक्रियां करिष्यामीति हृदयम् ॥ २४ ॥

१ गच्छेद्वीति गो. पाठः । २ एष इति गो. पाठः ।

इत्युक्त्वा परमक्रुद्धः स गदां परमाङ्गदाम् । खरश्चिक्षेप रामाय प्रदीप्तामशनिं यथा ॥ २५ ॥
खरबाहुप्रमुक्ता सा प्रदीप्ता महती गदा । भस्म वृक्षांश्च गुल्मांश्च कृत्वाऽगात्तत्समीपतः ॥ २६ ॥
तामापतन्तीं महतीं मृत्युपाशोपमां गदाम् । अन्तरिक्षगतां रामश्चिच्छेद बहुधा शरैः ॥ २७ ॥
सा विशीर्णा शरैर्भिन्ना पपात धरणीतले । गदा मन्त्रौषधिबलैर्व्यालीव विनिपातिता ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

## त्रिंशः सर्गः ।

रामेण सवीरवादमधिक्षिप्तः खरस्तज्जिघांसया निरायुधोऽपि वृक्षमेव तदुपरि चिक्षेप। रामो वृक्षमुपर्येव विच्छिद्य स्रवद्रुधिरमभियान्तं खरमुरसि शरार्पणेन जघान । खरनिधनतुष्टा देवर्षयः सपुष्पवर्षं रामं तुष्टुवुः । लक्ष्मणेन सह गुहामुखान्निसृता सीता सानन्दं रामं परिषस्वजे ।

भित्त्वा तु तां गदां बाणै राघवो धर्मवत्सलः । स्मयमान इदं वाक्यं संरब्धमिदमब्रवीत् ॥ १ ॥
एतत्ते बलसर्वस्वं दर्शितं राक्षसाधम । शक्तिहीनतरो मत्तो वृथा त्वमुपगर्जसि ॥ २ ॥
एषा बाणविनिर्भिन्ना गदा भूमितलं गता । अभिधानप्रगल्भस्य तव प्रत्ययघातिनी ॥ ३ ॥
यत्त्वयोक्तं विनष्टानामिदमश्रुप्रमार्जनम् । राक्षसानां करोमीति मिथ्या तदपि ते वचः ॥ ४ ॥
नीचस्य क्षुद्रशीलस्य मिथ्यावृत्तस्य रक्षसः । प्राणानपहरिष्यामि गरुत्मानमृतं यथा ॥ ५ ॥
अद्य ते [10]भिन्नकण्ठस्य फेनबुद्बुदभूषितम् । विदारितस्य मद्बाणैर्मही पास्यति शोणितम् ॥ ६ ॥

---

२५ ] ति० टी०—परमा अङ्गदाः कनकवलयानि यस्यास्तां प्रसिद्धां हस्तस्थां गदां चिक्षेप ॥ २९ ॥

रा० टी०—इतीति । इत्युक्त्वा परमक्रुद्धः खरः परमाङ्गदां परमाः अङ्गदाः कनकवलयानि यस्यास्तां प्रसिद्धां गदामशनिमिव चिक्षेप ॥ २९ ॥

गो० टी०—इतीति । परमाङ्गदः गदाप्रहारसामर्थ्यबिरुदयुक्त इत्यर्थः । अशनिं वज्रम् ॥ २९ ॥

२६–२७ ] ति० टी०—भस्म कृत्वा स्वज्वालयेति शेषः। तत्समीपतो रामसमीपतः॥ २६ ॥ २७ ॥

रा० टी०—खरेति । खरबाहुप्रमुक्ता प्रदीप्ता सा महती गदा वृक्षान् गुल्मांश्च भस्म कृत्वा तत्समीपतः रामसंनिधौ अगात्॥२६॥

रा० टी०—तामिति । मृत्युपाशोपमामापतन्तीमाकाशगतां तां महतीं गदां रामः बहुधा बहुप्रकारं शरैः चिच्छेद ॥ २७ ॥

गो० टी०—खरेति । भस्म कृत्वा तत्समीपमगादित्यन्वयः। समीपत इति सार्वविभक्तिकस्तसिः ॥ २६ ॥ २७ ॥

२८ ] ति० टी०—मन्त्रादिबलैर्विनिपातिता व्यालीव॥२८॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

रा० टी०—सेति । शरैः रामबाणैः विशीर्णा हता अत एव भिन्ना विदीर्णा सा गदा मन्त्रौषधिबलैर्निपातिता व्यालीव धरणीतले पपात ॥ २८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

गो० टी०—सेति । व्याली पन्नगी ॥ २८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने एकोनत्रिंशः सर्गः ॥२९॥

१ ] ति० टी०—भित्त्वेति ॥ १ ॥

रा० टी०—खरगदाभेदनानन्तरकालिकं वृत्तान्तमाह—भित्त्वेति । धर्मवत्सलो राघवस्तां खरप्रक्षिप्तां गदां शरैः भित्त्वा स्मयमानः सन् संरब्धं कोपसूचकमिदं वाक्यं खरमब्रवीत्॥१॥

गो० टी०—निरस्तनिखिलालम्बमहंकारमिव स्थितम् ।
खरं निहत्य साधूनां सुखावहमहं भजे ॥

भित्त्वा त्वित्यादि । धर्मवत्सल इत्यनेन निरायुधवधोऽनुचित इति श्रीरामोऽमन्यतेति गम्यते । स्मयमानः परिहसन्नित्यर्थः, संरब्धं भ्रान्तमिति खरविशेषणम् 'संरम्भः संभ्रमे कोपे' इत्यमरः ॥ १ ॥ २ ॥

२ ] ति० टी०—लब्धावसरो भगवांस्त्वयैव कत्थनं कृतमित्याह—एतदिति । शक्तिहीनतरः शक्त्या हीनतरः ॥ २ ॥

रा० टी०—एतदिति । हे राक्षसाधम ! ते एतत् बलसर्वस्वं दर्शितं त्वयैवेति शेषः, शक्तिहीनतरस्त्वं मत्तो वृथा उपगर्जसि स्वप्राबल्यं कथयसि ॥ २ ॥

३–६ ]ति० टी०—अभिधाने केवलं प्रगल्भस्य तवानया शत्रुवधो भवत्येवेत्ययं यः प्रत्ययो विश्वासस्तस्य स्वनाशेन घातिका ॥ ३–६ ॥

---

१ तामिति गो. रा. पाठः । २ परमाङ्गद इति गो. पाठः । ३ ज्वलितामिति गो. पाठः । ४ भग्नेति गो. पाठः । ५ औषधेति गो. पाठः । खरमिति गो. रा. पाठः । ७ अवेति गो. पाठः । ८ अरीति गो. पाठः । ९ अहमिति गो. पाठः । १० छिन्नेति गो. पाठः ।

पांसुरूषितसर्वाङ्गः स्रस्तन्यस्तभुजद्वयः । स्वप्स्यसे गां समाश्लिष्य दुर्लभां प्रमदामिव ॥ ७ ॥
प्रवृद्धनिद्रे शयिते त्वयि राक्षसपांसने । भविष्यन्ति शरण्यानां शरण्या दण्डका इमे ॥ ८ ॥
जनस्थाने हतस्थाने तव राक्षस मच्छरैः । निर्भया विचरिष्यन्ति सर्वतो मुनयो वने ॥ ९ ॥
अद्य विप्रसरिष्यन्ति राक्षस्यो हतबान्धवाः । बाष्पार्द्रवदना दीना भयादन्यभयावहाः ॥ १० ॥
अद्य शोकरसज्ञास्ता भविष्यन्ति [३]निरर्थिकाः । अनुरूपकुलाः पत्न्यो यासां त्वं पतिरीदृशः ॥ ११ ॥
नृशंस[४]शील क्षुद्रात्मन्नित्यं ब्राह्मणकण्टक । [५]त्वत्कृते शङ्कितैरग्नौ मुनिभिः पात्यते हविः ॥ १२ ॥
तमेवमभिसंरब्धं ब्रुवाणं राघवं [६]वने । खरो निर्भर्त्सयामास रोषात्खरतरस्[७]वरः ॥ १३ ॥

रा० टी०–एषेति । अभिधानप्रगल्भस्य स्वप्राबल्यकथनधृष्टस्य तव एषा गदा बाणविनिर्भिन्ना अत एव तव प्रत्ययघातिनी प्रत्ययस्य परैरच्छेद्यातोऽनया शत्रुविध्वंसो भविष्यत्येवेति-विश्वासस्य घातिनी निवर्तिका सती भूमितलं गता प्राप्ता ॥ ३॥

रा० टी०–यदिति । यत् वचस्त्वया उक्तं तदपि वचः मिथ्या ॥ ४ ॥

गो० टी०–एषेति । अभिधाने वचसि प्रगल्भस्य धृष्टस्य प्रत्यरिघातिनीति वीप्सायां प्रतिः अरीनरीन् प्रतिघातिनी गदा ॥ ३ ॥ ४ ॥

रा० टी०–नीचस्येति । नीचस्य तव प्राणान् गरुत्मान् गरुडोऽमृतमिव अपहरिष्यामि ॥ ५ ॥

गो० टी०–नीचस्येति । नीचस्य केवलवाचाटकत्वेन क्षुद्रस्य क्षुद्रशीलस्य हीनस्वभावस्य मिथ्यावृत्तस्य असद्वृत्तस्य ॥ ५॥

रा० टी०–अद्येति । मद्बाणैर्विदारितस्य अत एव भिन्नकण्ठस्य तव फेनबुद्बुदभूषितं फेनबुद्बुदाभ्यां शोभितं शोणितं मही पास्यति ॥ ६ ॥

गो० टी०–अद्येति । फेनबुद्बुदाभ्यां भूषितम् अलंकृतम् अनेन नतनत्वमुक्तम् । विदारितस्य विदारितोदरस्य ॥ ६ ॥

७ ] ति० टी०–स्रस्तं स्थानादत एव भूमौ न्यस्तं भुजद्वयं येन सः । गां भुवम् ॥ ७ ॥

रा० टी०–पांस्विति । पांसुरूषितसर्वाङ्गः धूलीव्याप्तशरीरः स्रस्तं शरीरदेशाच्च्युतम् अत एव न्यस्तं भूमौ संस्थापितं भुजद्वयं यस्य स त्वं दुर्लभां प्रमदामिव गां पृथ्वीं समाश्लिष्य स्वप्स्यसे ॥ ७ ॥

गो० टी०–पांसुरूषितेति । रूषितं लिप्तं स्रस्तं यथा तथा भुवि न्यस्तं भुजद्वयं येन गां भूमिं समालिङ्ग्येत्यनेनावाग्भूतत्वमुच्यते ॥ ७ ॥

८ ] ति० टी०–प्रवृद्धनिद्रे प्रवृद्धदीर्घनिद्रे । शरण्याः सुखवासभूताः । शरण्यानां तपोमहिम्ना सर्वजनशरण्यानाम् ॥ ८ ॥

रा० टी०–प्रवृद्धेति । प्रवृद्धा अतिदैर्घ्यं प्राप्ता निद्रा यस्य तस्मिन् राक्षसपांसने त्वयि शयिते सति इमे दण्डकाः दण्डकारण्यं शरण्यानां शरणे हितानां मुनीनां शरण्या भविष्यन्ति॥८॥

गो० टी०–प्रवृद्धेति । प्रवृद्धनिद्रे दीर्घनिद्रे अशरण्यानाम् ऋष्यादीनामगतीनां शरण्याः सुखावासभूताः ॥ ८ ॥

९ ] ति० टी०–हतस्थाने हतराक्षसवासे ॥ ९ ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–जनेति । हे राक्षस ! मच्छरैः हतं निवृत्तं स्थानं राक्षसस्थितिर्यस्मात् तस्मिन् तव जनस्थाने वने मुनयो विचरिष्यन्ति ॥ ९ ॥

गो० टी०–जनस्थान इति । हतस्थाने हतराक्षसावस्थानसन्निवेशे ॥ ९ ॥

१० ] ति० टी०–विप्रसरिष्यन्ति मद्भयेन जनस्थानात्पलायिष्यन्तीत्यर्थः ॥ १० ॥

रा० टी०–अद्येति । याः अन्यभयावहाः राक्षस्यः ता अद्य हतबान्धवाः अत एव दीनाः बाष्पार्द्रवदनाः सत्यः भयात् विप्रसरिष्यन्ति ॥ १० ॥

गो० टी०–अद्येति । पूर्वमन्यभयावहाः राक्षस्यः अद्य मद्भयात् जनस्थानात् विप्रसरिष्यन्ति पलायिष्यन्ते ॥ १० ॥

११ ] ति० टी०–शोकरसज्ञाः शोकस्थायिकरसज्ञाः । निरर्थिका निःशेषतो नष्टोऽर्थः कामादिपुरुषार्थो यासां ताः । अनुरूपकुलास्त्वत्सदृशदुर्वृत्तत्वादिगुणवत्कुलाः। ईदृशः पापकर्मा॥११॥

रा० टी०–अद्येति । यासां पतिस्त्वमीदृशः स्वदुराचरणेन विध्वस्तस्ता अनुरूपकुलाः दुराचरणेन स्वकुलयोग्या राक्षस्यः निरर्थिकाः सत्यः शोकरसज्ञा भविष्यन्ति ॥ ११ ॥

गो० टी०–अद्य शोकेति । यासां त्वमीदृशः पापी पतिः ताः पत्न्यः अनुरूपकुलाः त्वत्सदृशदुर्वृत्ता इत्यर्थः, इतः पूर्वं शोकानभिज्ञा अपि अद्य शोकरसज्ञाः निरर्थकाः निर्गतकामपुरुषार्थाः भविष्यन्ति ॥ ११ ॥

१२–१३ ] ति० टी०–अस्यैव विवरणम्–नृशंसेत्यादि शङ्कितैस्त्वद्भयेभ्यः । यद्यपि भगवत ईदृशेषु क्षुद्रेष्वेवं वादोऽनुचितः, तथापि निरयस्थमिति स्त्रोक्तिं सत्यां कर्तुं मरणकालक्रोधजनकतमोगुणोद्रेकस्य तामसगुणगतिसंपादकस्योद्भावनं बोध्यम् ॥ १२ ॥ १३ ॥

रा० टी०–नृशंसेति । हे नृशंस ! त्वत्कृते सत्कर्मा...

१ आलिङ्ग्येति गो. पाठः । २ अशरण्यानामिति गो. पाठः । ३ निरर्थका इति गो. पाठः । ४ नीचेति गो. पाठः । ५ यत्कृते इति गो. पाठः । ६ रणे इति गो. पाठः । ७ स्वन इति गो. पाठः । ८ अत्रात्मनेपदं युक्तमिति भाति ।

दृढं खल्ववलिप्तोऽसि भयेष्वपि च निर्भयः । वाच्यावाच्यं ततो हि त्वं [1]मृत्योर्वश्यो न बुध्यसे ॥ १४ ॥
कालपाशपरिक्षिप्ता भवन्ति पुरुषा हि ये । कार्याकार्यं न जानन्ति ते निरस्तषडिन्द्रियाः ॥ १५ ॥
एवमुक्त्वा ततो रामं संरुध्य [2]भृकुटिं ततः । स ददर्श महासालमविदूरे निशाचरः ॥ १६ ॥
रणे प्रहरणस्यार्थे सर्वतो ह्यवलोकयन् । स तमुत्पाटयामास [3]संदष्टदशनच्छदम् ॥ १७ ॥
तं समुत्क्षिप्य बाहुभ्यां [4]विनर्दित्वा महाबलः । राममुद्दिश्य चिक्षेप हतस्त्वमिति चाब्रवीत् ॥ १८ ॥
तमापतन्तं बाणौघैश्छित्त्वा रामः प्रतापवान् । रोषमाहारयत्तीव्रं निहन्तुं समरे खरम् ॥ १९ ॥
जातस्वेदस्ततो रामो [5]रोषरक्तान्तलोचनः । निर्बिभेद सहस्रेण बाणानां समरे खरम् ॥ २० ॥

साय त्वत्प्रयत्ने सति शङ्कितैः मुनिभिः हविरग्नौ पात्यते, एतेन महानपराधो युष्माभिः कृत इति सूचितम् ॥ १२ ॥

रा० टी०–तमिति । एवं संरब्धं वचो ब्रुवाणं राघवं रोषात्खरतरस्वरः खरो निर्भर्त्सयामास ॥ १३ ॥

गो० टी०–ईदृश इत्युक्तं विवृणोति–नृशंसेति । नृशंस घातुक ! नीच वृत्ततो हीन ! क्षुद्रात्मन् क्षुद्रबुद्धे ! ब्राह्मणकण्टक ब्राह्मणशत्रो ! मुनिभिः यत्कृते यन्निमित्तं शङ्कितैः सद्भिः अग्नौ हविः पात्यते हविर्दानसमयेऽपि किमेतदपहरिष्यन्तीति भीता भवन्तीत्यर्थः ॥ १२ ॥ १३ ॥

१४ ] ति० टी०–ततो हि अवलिप्तत्वादेव । मृत्युवश्योऽपि वाच्यावाच्यं न जानीषे ॥ १४ ॥

रा० टी०–तत्प्रकारमाह–दृढमिति । त्वं दृढमत्यन्तमवलिप्तो गर्ववानसि अत एव भयेषु मरणभीतिषु प्राप्तेषु अपि निर्भयस्तत एव हेतोः मृत्योर्वश्यस्त्वं वाच्यावाच्यं न बुध्यसे ॥१४॥

गो० टी०–दृढमिति । अवलिप्तोऽसि गर्वितोऽसि दृढं निश्चितं ततः कारणात् भयेषु भयकारणेषु सत्स्वपि निर्भयोऽसि वाच्यं चावाच्यं च वाच्यावाच्यम् । "येषां च विरोधः शाश्वतिकः" इति द्वन्द्वैकवद्भावः । तन्मृत्युवश्यः सन् न बुध्यस इति योजना ॥ १४ ॥

१५ ] ति० टी०–परिक्षेपो बन्धः । निरस्तषडिन्द्रियाः सान्तःकरणचक्षुरादिपञ्चेन्द्रियैर्निरस्ता विनाशितस्वातन्त्र्याः । मृत्युकाले स्फुरितभगवद्रूपः । श्लेषेण स्वाविनयं क्षमापयति ? च–कालेति । अतस्त्वया मदुक्तयः क्षन्तव्या इति व्यङ्ग्यमित्यन्ये तेषां निरयस्थमिति भगवदुक्तेरसंगतिः स्पष्टैव ॥ १५ ॥

रा० टी०–मृत्युवशत्वमेव द्रढयन्नाह–कालेति । ये पुरुषाः कालपाशपरिक्षिप्ता भवन्ति ते निरस्तषडिन्द्रियाः सन्तः कार्याकार्यं न जानन्ति । मनसोऽपीन्द्रियत्वमिति मतेन मनसः प्रधानत्वेन चेन्द्रियाणां षट्त्वमिति नानुपपत्तिः ॥ १५ ॥

गो० टी०–उक्तमर्थं विशिष्य दर्शयति–कालेति । परिक्षिप्ताः बद्धाः निरस्तषडिन्द्रियाः निरस्तषडिन्द्रियव्यापाराः ॥१५॥

१६ ] ति० टी०–भृकुटिं संनिरुध्य संनिबध्य ॥ १६ ॥

रा० टी०–एवमिति । राममेवमुक्त्वा भृकुटीं संरुध्य संनिबध्य प्रहरणस्यार्थे प्रहारार्थं सर्वतोऽवलोकयन् पश्यन् स निशाचरः अविदूरे निकटे महासालं वृक्षविशेषं ददर्श । सार्धः श्लोक एकान्वयी ॥ १६ ॥

गो० टी०–एवमिति । भ्रुकुटीं संरुद्ध्य कृत्वेत्यर्थः । प्रहरणस्यार्थे आयुधार्थं सर्वतोऽवलोकयन् सन्नपि दूरे महासालं ददर्शेत्यन्वयः ॥ १६ ॥

१७ ] ति० टी०–प्रहरणमायुधं तदर्थं सर्वतः प्रसृतमिति शेषः । तादृशसालमवलोकयन्नित्यर्थः । दशनच्छदमधरम्, संदष्टदशनच्छदं यथा भवति तथा ॥ १७ ॥

रा० टी०–स इति । स खरः संदष्टदशनच्छदं यथा भवति तथा तं महाशालमुत्पाटयामास ॥ १७ ॥

गो० टी०–स इति । दशनच्छदम् अधरं संदश्य निपीड्य अनेन सालस्य दुर्ग्रहत्वमुक्तं बाहुभ्यामित्यनेन सालस्थौल्यमुक्तं विनद्येत्यादिना जयाशोच्यते ॥ १७ ॥ १८ ॥

१८-१९ ] ति० टी०–समुत्क्षिप्य भ्रामयित्वा ? हतो मारितः ॥ १८ ॥ १९ ॥

रा० टी०–तमिति । महाबलः खरस्तं महासालं बाहुभ्यामुत्क्षिप्य ऊर्ध्वमुत्थाप्य विनर्दित्वा विनद्य च राममुद्दिश्य चिक्षेप त्वं हत इत्यब्रवीच्च ॥ १८ ॥

रा० टी०–तमिति । आपतन्तं तं समरे संग्रामे बाणौघैः छित्त्वा प्रतापवान् रामः खरं निहन्तुं तीव्रं रोषमाहारयत् ॥१९॥

गो० टी०–तमिति । रोषमिति सर्वसामग्रीविरहेऽप्यानुकूल्यलेशाभावादिति भावः ॥ १९ ॥

२० ] ति० टी०–जातस्वेदः रोषादिति शेषः, न तु श्रमादिति । अयं रोषोऽपि भगवतारोपित एव नटवन्न तु वास्तवो मानुषत्वस्थिरीकरणायेति बोध्यम् । रक्तवर्णेऽन्तभागेऽपाङ्गभागे लोचने यस्य सः । सहस्रेणानन्तेन ॥ २० ॥

रा० टी०–जात इति । ततस्तीव्ररोषस्वीकारानन्तरं रोषरक्तान्तलोचनः रोषेण रक्तेऽन्तलोचने लोचनान्तभागौ यस्य स जातस्वेदो रामः बाणानां सहस्रेण खरं निर्बिभेद ॥ २० ॥

गो० टी०–जातस्वेद इति । रोषाज्जातस्वेदः नतु श्रमात्, रक्तान्तलोचनः रक्तवर्णापाङ्गः ॥ २० ॥

१ मृत्युवश्य इति गो. पाठः । २ भ्रुकुटीमिति गो. भृकुटीमिति रा. पाठः । ३ संदश्येति गो. पाठः । ४ विनद्य चेति गो. पाठः । ५ रोषादिति गो. पाठः ।

तस्य बाणान्तराद्रक्तं बहु सुस्राव फेनिलम् । गिरेः प्रस्रवणस्येव धाराणां च परिस्रवः ॥ २१ ॥
[2]विकलः स कृतो बाणैः खरो रामेण संयुगे । मत्तो रुधिरगन्धेन तमेवाभ्यद्रवद्द्रुतम् ॥ २२ ॥
तमापतन्तं [3]संक्रुद्धं कृतास्त्रो रुधिराप्लुतम् । अपासर्पद्[4]त्रिपदं किंचित्त्वरितविक्रमः ॥ २३ ॥
ततः पावकसंकाशं वधाय समरे शरम् । खरस्य रामो जग्राह ब्रह्मदण्डमिवापरम् ॥ २४ ॥
स [5]तं दत्तं मघवता सुरराजेन धीमता । संदधे [6]च स धर्मात्मा मुमोच च खरं प्रति ॥ २५ ॥
स विमुक्तो महाबाणो निर्घातसमनिःस्वनः । रामेण धनुरायम्य खरस्योरसि चापतत् ॥ २६ ॥
स पपात खरो भूमौ दह्यमानः शराग्निना । रुद्रेणेव विनिर्दग्धः श्वेतारण्ये यथा[7]न्धकः ॥ २७ ॥

---

२१ ] ति० टी०—बाणान्तराद्बाणक्षतविवरात्प्रस्रवणस्य प्रस्रवणाख्यस्य परिस्रवः प्रवाहः ॥ २१ ॥

रा० टी०—तस्येति । बाणान्तरात् बाणकृतव्रणान्तरालात् प्रस्रवणस्य तदभिधस्य गिरेः धाराणां परिश्रव इव फेनिलं रक्तं बहु सुस्राव ॥ २१ ॥

गो० टी०—तस्येति । बाणान्तरात् बाणक्षतविवरात् फेनिलं फेनवत् प्रस्रवणस्य प्रस्रवणाख्यस्य परिस्रवः प्रवाहः॥२१॥

२२ ] ति० टी०—विकलः परवशः कृतः न तु मृत इत्यर्थः। तदेवाह—मत्त इति ॥ २२ ॥

रा० टी०—विकल इति । रामेण बाणैः खरो विकलः कृतः अत एव रुधिरगन्धेन मत्तः स खरस्तं राममेव द्रुतमभ्यद्रवत् ॥ २२ ॥

गो० टी०—विह्वल इति । विह्वलः विक्लवः रुधिरगन्धेनोपलक्षितः ॥ २२ ॥

२३ ] ति० टी०—आपतन्तं बाणक्षेपावकाशो यथा न भवति तथोपर्यापतन्तं खरं दृष्ट्वाऽत्यासत्तौ धनुर्व्यापारो न स्यादिति स्वशरीरे तद्रुधिरपातभिया च द्वित्रीणि पदानि त्वरितपदन्यासो बाणं संदधदेव पृष्ठतोऽपासर्पत् । अनेन महाबलत्वं खरस्योक्तं नह्यन्यथा रामधनुश्छेदोऽनन्ततद्बाणसहनं वा सुशकम्। अत एवाग्रे तद्वधाय विशिष्य स्वशक्तिरूपवैष्णवबाणग्रहणम् २३॥

रा० टी०—तमिति । कृतास्त्रः कृतानि छिन्नानि अस्त्राणि खरायुधानि येन स त्वरितविक्रमो रामः रुधिराप्लुतं संक्रुद्धमापतन्तं तं खरं प्रतिपदं तत्स्थानं प्रति किंचिदपासर्पत् बाणप्रहारयोग्यान्तराललाभायापासर्पयत् अन्तर्भावितणिजर्थः अन्यथा तच्छब्दार्थस्य कर्मत्वाप्राप्त्या तद्वाचकात् द्वितीयानापत्तेः पञ्चम्यापत्तेश्च दृष्टेत्यस्याध्याहारे तु गौरवम् 'द्वित्रिपदम्' इति भट्टपाठः ॥ २३ ॥

गो० टी०—तमापतन्तमिति । संरब्धं संभ्रान्तं प्रतिपदम् अस्त्रमोचनप्रतिकूलं तं खरं किंचिदपासर्पत् पश्चादागतः तस्मादपासर्पदित्यर्थः । अपसर्पणनिमित्तमाह—कृतास्त्र इति । सहितास्त्रत्वात् अस्त्रमोचनावकाशलाभायापासर्पदिति भावः । निमित्तान्तरमाह—रुधिराप्लुतमिति तत्स्पर्शबीभत्सेनापसर्पणमित्यर्थः। यद्यपि रणे किंचिदपसर्पणं शूरस्यायुक्तं तथापि सर्वतो बलवती ह्यन्यथाऽनुपपत्तिरिति न्यायेनापसर्पणं विना तत्संहारहेत्वलाभादपसर्पणं न दोष इति हृदयम् ॥ २३ ॥

२४ ] ति० टी०—ब्रह्मदण्डमिव ब्रह्मास्त्रमिवामोघम् ॥२४॥

रा० टी०—तत इति । ततस्तदपासर्पणानन्तरं रामः खरस्य वधाय अपरं ब्रह्मदण्डमिव पावकसंकाशं शरं जग्राह ॥२४॥

गो० टी०—तत इति । ततः बाणपातावसरलाभात् ब्रह्मदण्डं ब्रह्मशापम् ॥ २४ ॥

२५ ] ति० टी०—मघवता दत्तमगस्त्यद्वारा ॥ २५ ॥

रा० टी०—स इति । स रामः सुरराजेन मघवता दत्तं शरं संदधे स खरं प्रति मुमोच च ॥ २५ ॥

गो० टी०—स तमिति । धीमता भावज्ञेन दत्तम् अगस्त्यमुखेनेति शेषः ॥ २५ ॥

२६ ] ति० टी०—धनुरायम्य विमुक्तः स खरस्योरस्यपतदित्यन्वयः ॥ २६ ॥

रा० टी०—स इति । धनुरायम्य रामेण विमुक्तः निर्घातसमनिस्वनः महाबाणः खरस्य उरसि अपतत् ॥ २६ ॥

गो० टी०—स विमुक्त इति । रामेण धनुरायम्य आकृष्य विमुक्त इत्यन्वयः ॥ २६ ॥

२७ ] ति० टी०—श्वेतारण्ये यथान्धकः । अन्धकासुरः श्वेतारण्ये रुद्रेण हत इति पुराणप्रसिद्धम् । रुद्रेणेवेति इवशब्दो वाक्यालंकारे । 'श्वेतारण्ये यथान्तकः' इति प्रचुरः पाठः। तत्र कावेरीतीरवर्तिनि श्वेतारण्ये मार्कण्डेयचिरजीवित्वायान्तकसंहारो रुद्रेण कृत इति तन्माहात्म्ये प्रसिद्धिः । कौर्मे तूत्तरखण्डे श्वेतस्य राजर्षेः परमशैवस्य कालञ्जरे पर्वते तपस्यभिरतस्य मारणायागतस्यान्तकस्य शिवेन वामपादप्रहारेण संहारः कृत इति षट्त्रिंशेऽध्याये उक्तम् ॥ २७ ॥

रा० टी०—स इति । रुद्रेण विनिर्दग्धः श्वेतारण्येऽन्धक इव शराग्निना दह्यमानः खरः भूमौ पपात ॥ २७ ॥

गो० टी०—स इति । स खरः शराग्निना दह्यमानः सन् रुद्रेण रुद्रनेत्राग्निना दग्धोऽन्तक इव श्वेतारण्ये यथा श्वेतारण्ये भूमौ पपात ॥ २७ ॥

---

१ तोयधारापरिस्रव इति गो. पाठः । २ विह्वल इति गो. पाठः । ३ संरब्धमिति गो. पाठः । ४ प्रतिपदमिति गो. पाठः । ५ तमिति गो. पाठः । ६ चापीति गो. पाठः । ७ अन्तक इति गो. पाठः ।

स वृत्र इव वज्रेण फेनेन नमुचिर्यथा । बलो वेन्द्राशनिहतो निपपात हतः खरः ॥ २८ ॥
एतस्मिन्नन्तरे देवाश्चारणैः सह संगताः । दुन्दुभींश्चाभिनिघ्नन्तः पुष्पवर्षं समन्ततः ॥ २९ ॥
रामस्योपरि संहृष्टा [1]ववर्षुर्विस्मितास्तदा । अर्धाधिकमुहूर्तेन रामेण निशितैः शरैः ॥ ३० ॥
चतुर्दश सहस्राणि रक्षसां [2]कामरूपिणाम् । खरदूषणमुख्यानां निहतानि [3]महामृधे ॥ ३१ ॥
अहो बत महत्कर्म रामस्य विदितात्मनः । अहो वीर्यमहो [4]दार्ढ्यं विष्णोरिव हि दृश्यते ॥ ३२ ॥
इत्येवमुक्त्वा ते सर्वे ययुर्देवा यथागतम् । [5]ततो राजर्षयः सर्वे संगताः परमर्षयः ॥ ३३ ॥
सभाज्य मुदिता रामं [6]सागस्त्या इदमब्रुवन् । एतदर्थं महातेजा महेन्द्रः पाकशासनः ॥ ३४ ॥
शरभङ्गाश्रमं पुण्यमाजगाम पुरंदरः । आनीतस्त्वमिमं देशमुपायेन महर्षिभिः ॥ ३५ ॥
एषां वधार्थं [7]शत्रूणां रक्षसां पापकर्मणाम् । तदिदं नः कृतं कार्यं त्वया दशरथात्मज ॥ ३६ ॥
[8]स्वधर्मं प्रचरिष्यन्ति दण्डकेषु महर्षयः । एतस्मिन्नन्तरे वीरो लक्ष्मणः सह सीतया ॥ ३७ ॥
गिरिदुर्गाद्विनिष्क्रम्य [9]संविवेशाश्रमे सुखी । ततो रामस्तु विजयी पूज्यमानो महर्षिभिः ॥ ३८ ॥
प्रविवेशाश्रमं वीरो लक्ष्मणेनाभिपूजितः । तं दृष्ट्वा शत्रुहन्तारं महर्षीणां सुखावहम् ॥ ३९ ॥
बभूव हृष्टा वैदेही भर्तारं परिषस्वजे । मुदा परमया युक्ता दृष्ट्वा रक्षोगणान्हतान्
रामं चैवाव्ययं दृष्ट्वा तुतोष जनकात्मजा ॥ ४० ॥

---

२८-२९ ] ति० टी०-वज्रेण वृत्र इव फेनेन तदाच्छादितवज्रेण नमुचिरिव । न शुष्केण नार्द्रेणेति ब्रह्मणा तस्मै वरदानात् । अशनिहतो बलो वा वाशब्द इवार्थे बल इव । एवं च अन्तकादिवधस्य रुद्रेन्द्रातिरिक्तासाध्यत्ववत्खरवधस्य रामातिरिक्तासाध्यत्वं प्रकाशितं कविना ॥ २८ ॥ २९ ॥

रा० टी०-स इति । वज्रेण वृत्र इव फेनेन नमुचिरिव इन्द्राशनिहतो बलो वा इव हतो रामेण निहतः खरो निपपात आर्द्रशुष्काभ्यां तद्धननाभावस्य ब्रह्मवरेण सिद्धत्वात्फेनेन वध इत्यन्यत्र प्रपञ्चितम् ॥ २८ ॥

गो० टी०-स वृत्र इवेति । सः रामबाणेन हतः खरः अमोघबाणहतत्वज्ञापनाय प्रथमो दृष्टान्तः, लीलया हतत्वज्ञापनाय द्वितीयः, समर्थाधिष्ठितत्वज्ञापनाय तृतीयः, आर्द्राच्छुष्काच्चावध्यत्वं नमुचेर्लब्धं तदर्थं फेनेन हतः बलो वेति वाशब्द इवार्थः । वृत्रादित्रयमिन्द्रेणैव हतम् ॥ २८ ॥

रा० टी०-एतस्मिन्निति । एतस्मिन् अन्तरे समये चारणैः सह संगताः संमिलिताः संहृष्टाः देवा दुन्दुभीन् अभिनिघ्नन्तः सन्तः रामस्योपरि समन्ततः पुष्पवर्षं ववृषुः । सार्धश्लोक एकान्वयी ॥ २९ ॥

३०-३२ ] ति० टी०-अर्धाधिकमुहूर्तेन किंचिदूनघटिकात्रयेण ॥ ३०-३२ ॥

रा० टी०-अर्धेति । अर्धाधिकमुहूर्तेन घटीत्रयेण खरदूषणमुख्यानां रक्षसां चतुर्दश सहस्राणि महामृधे रामेण निहतानि ॥ ३० ॥ ३१ ॥

रा० टी०-अहो इति । विदितात्मनो रामस्य आश्चर्यीभूतकर्मादित्रयमिव विष्णोः कर्मादित्रयं दृश्यते ॥ ३२ ॥

गो० टी०-रामं स्तुवन्ति-अर्धेत्यादिना । अर्धाधिकमुहूर्तेन घटिकात्रयेण दाक्ष्यं सर्वसंहारचातुर्यम् ॥ ३४-३६ ॥

३३ ] ति० टी०-राजर्षयो नहुषाद्याः । परमर्षयो भृग्वाद्याः ३३

रा० टी०-इतीति । सर्वे देवा इत्येवमुक्त्वा यथागतं ययुः । ततस्तद्गमनानन्तरं संगताः सर्वे सागस्त्याः राजर्षयः परमर्षयो ब्रह्मर्षयश्च रामं सभाज्य पूजयित्वा इदमब्रुवन् ॥ ३३ ॥

गो० टी०-तत इति । परमर्षयः सभाज्य संपूज्य ॥ २९ ॥

३४-३६ ] ति० टी०-सभाज्य पूजयित्वा । एतदर्थं रक्षसां वधायैतद्देशवासनियोजनार्थम् । क्षणं स्थित्वा रामं प्रस्थाप्य भवद्भिर्ब्रह्मलोकाय प्रस्थातव्यमित्युक्त्वा शरभङ्गं प्रतीन्द्रो गत इत्याशयः ॥ ३४-३६ ॥

रा० टी०-तद्वचनाकारमाह-एतदर्थमिति । महेन्द्रोऽत्यैश्वर्यवान् पुरन्दरः रिपुपुरविदारकः पाकशासन इन्द्रः एतदर्थं त्वत्कर्तृकराक्षसवधप्रार्थनार्थं शरभङ्गाश्रममाजगाम अत एव एषां शत्रूणां रक्षसां वधार्थं महर्षिभिः उपायेन इमं देशं त्वमानीतः ॥ ३४ ॥ ३५ ॥

गो० टी०-एतदर्थमिति । एतदर्थम् एतद्वधाय ॥ ३० ॥

गो० टी०-इदमुपपादयति-आनीत इति । उपायेन तत्तदाश्रमदर्शनव्याजेन ॥ ३१ ॥ ३२ ॥

रा० टी०-तदिति । तत् अस्माभिरीप्सितमिदं नः कार्यं त्वया कृतम् अतः दण्डकेषु महर्षयः स्वधर्मं प्रचरिष्यन्ति॥ ३६॥

गो० टी०-एतस्मिन्नित्याद्यर्धत्रयमेकान्वयम् ॥ ३३ ॥

३७-४० ] ति० टी०-एतस्मिन्नन्तरे देवानाम् ऋषीणां च निर्गमनसमये ॥ ३७-४० ॥

---

१ ववृषुरिति गो. रा. पाठः । २ भीमकर्मणामिति गो. पाठः । ३ महाहवे इति गो. पाठः । ४ दाक्ष्यमिति गो. पाठः । ५ एतदाद्याश्चत्वारः श्लोका एतस्मिन्नन्तरे देवा इत्यस्मात्पूर्वं गो. पाठे । ६ इदं वचनमिति गो. पाठः। ७ क्रूराणामिति गो. पाठः। ८ सुखं धर्ममिति गो. पाठः। ९ आश्रममिति गो. पाठः ।

ततस्तु तं राक्षससङ्घमर्दनं [१]संपूज्यमानं मुदितैर्महात्मभिः ।
पुनः परिष्वज्य मुदान्वितानना बभूव हृष्टा जनकात्मजा तदा ॥ ४१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे त्रिंशः सर्गः ॥ ३० ॥

---

रा० टी०—एतस्मिन्निति । सीतया सह लक्ष्मणः गिरिदुर्गात् विनिष्क्रम्य आश्रमे स्वपर्णशालायां सुखी सन् संविवेश ॥ ३७ ॥

रा० टी०—तत इति । महर्षिभिः पूज्यमानो वीरो विजयी रामः आश्रमं प्रविवेश । ततोऽनन्तरं लक्ष्मणेनाभिपूजितोऽभवदिति शेषः ॥ ३८ ॥

गो० टी०—एतस्मिन्निति । अन्तरे अवसरे गिरिदुर्गात् गिरिदुर्गप्रदेशात् सुखी रामपराक्रमदर्शनजन्यसंतोषवान् ॥ ३७-३८ ॥

रा० टी०—तमिति । महर्षीणां सुखावहं भर्तारं तं रामं दृष्ट्वा हृष्टा बभूव अत एव परिषस्वजे ॥ ३९ ॥

गो० टी०—तं दृष्ट्वा शत्रुहन्तारं महर्षीणां सुखावहम् । बभूव हृष्टा वैदेही भर्तारं परिषस्वजे ॥ चतुर्दशसहस्ररक्षोभिरयमेकाकी किं करिष्यतीत्युद्विग्ना सीता रामेण जिते वीरतारतम्याभिज्ञकुलप्रसूततया सबहुमानं परिषस्वज इत्याह—तं दृष्ट्वा पूर्वं महासमरे अदृश्यतया स्थितम् इदानीं दृष्ट्वा तं दृष्ट्वा वीरव्रणेन विगलद्रुधिरेण रोमकूपोल्लसद्भिरपि घर्मपयःकणौघैः। कोदण्डदण्डमवलम्ब्य विनीय वर्म किंचित्परिश्रमभृतं प्रियमीक्षमाणा इत्युक्तप्रकारं दृष्ट्वा तं दृष्ट्वा ततोद्ग्रथितजटामण्डलेन दृढबद्धकक्ष्यतया स्कन्धावलम्बितूणीरेण रणावसाननिर्वापितकोपाग्नितया प्रसन्नवदनेन सीतालक्ष्मणमार्गावलोकनेन पुनरपि किमागमिष्यन्ति राक्षसा इति दत्तावधानेन च लक्षितं दृष्ट्वा पूर्वं वीर इति श्रुतम् इदानीं निर्वर्तितवीरकृत्यं दृष्ट्वा । दर्शनप्रकारमाह—शत्रुहन्तारं हननव्यापारे कर्मभावः शत्रूणां स्वस्य तु कर्तृभाव एव हन्तारं हननव्यापार एव दृष्टः नतु शरसंधानादिव्यापार इत्यर्थः । शत्रुपदेन देवगन्धर्वादिसंघे सत्यपि शत्रूनेव हतवानित्युच्यते । दुष्टनिग्रह उक्तः शिष्टपरिपालनमाह—महर्षीणां सुखावहं महर्षीणां तपोलेशेन हन्तुं सामर्थ्येऽपि रक्षकस्वरूपस्य रक्ष्यभूतस्वस्वरूपस्य च हानिर्माभूदिति केवलं रक्षकव्यापारप्रतीक्षाणां रामप्रतिज्ञामेवावलोकयतां सुखावहम् । एहि पश्य शरीराणीत्युक्तदुःखगन्धं निवर्त्य सुखस्यैव प्रापकं बभूव बहुतरशत्रुगणाक्रमणाद्रामस्यैकाकितया च पूर्वं सत्तारहिता सीता संप्रति सत्तां लेभे जगत्प्राणस्य रामस्य सत्तालाभात् स्वयमपि सत्तामवाप । आत्मा वै पुरुषस्य दारा इत्युक्तरीत्या रामसत्तालाभात् स्वस्या अपि सत्ता जातेति भावः । यद्वा भूप्राप्तावित्यस्माल्लिटि व्यत्ययेन परस्मैपदम् । भर्तारं विजयिनमालोक्य सरभसं गुहान्तरादागत्यर्थः । हृष्टा सति धर्मिणि धर्मा इति न्यायेन धर्मिलाभानन्तरं तद्धर्महर्षोऽभूदित्यर्थः। यद्वा आन्तरप्रीत्यङ्कुरोपमरोमाञ्चाञ्चितेत्यर्थः । एवं शौर्यावलोकनप्रीतत्वे हेतुमाह—वैदेही मिथिलाधिपतिर्वीर इत्युक्तरीत्या वीरकुलप्रसूतत्वादित्यर्थः । भर्तारं परिषस्वजे तादृशनिरवधिकप्रेमभारभरिततया स्वयमौलिङ्गि भर्तारं लोकभर्तारं सर्वलोकमातृत्वेन सर्वप्रजारक्षणं दृष्ट्वा परिषस्वजे आयुधक्षतव्रणेषु सुखोष्णाभ्यां स्तनाभ्यां पस्पर्श परिषस्वजे पर्याप्तं सस्वजे पश्चात् पुरस्तात् पार्श्वतः पस्पर्शेत्यर्थः । यद्यपि रणे अपलायमानस्य पृष्ठे शरपातप्रसङ्ग एव नास्ति तथापि सर्वतः समावृत्य आयुधप्रक्षेपात् पृष्ठतोऽपि व्रणसंभवः बाणानां सम्यक् क्षिप्तानां पृष्ठतो निर्गमोऽपि संभवति महर्षीणां सुखावहं परिषस्वजे पुत्रविषये स्वभर्त्रोपकारकरणे पुत्रवात्सल्यात् भर्तरि संतुष्टा भार्येव ऋषिजनसंरक्षणे प्रीता परिषस्वजे । रामं विना गुहागता सीता ततो निर्गता निरस्तसमस्तशत्रुं रामं परिषस्वज इत्यनेन हृदयगुहागतो जीवः परतन्त्रः आचार्यमुखेन परमशेषिणं दृष्ट्वा तेन सकलविरोधिवर्गे निवर्तिते ततो निर्गत्य नित्यसूरिपरिषदासीनं शेषिणमासाद्य तद्भोगपरिवाहमनुबभूवेति ध्वन्यते ॥ ३९ ॥

रा० टी०—मुदेति । जनकात्मजा वैदेही रक्षोगणान् हतान् दृष्ट्वा अव्ययं चित्तविकाररहितं रामं च दृष्ट्वा तुतोष ॥ ४० ॥

गो० टी०—उक्तमेवार्थं विशदं दर्शयति द्वाभ्याम्—मुदेत्यादि ॥ ४० ॥ ४१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने त्रिंशः सर्गः ॥ ३० ॥

४१ ] ति० टी०—हर्षातिशयात्पुनरालिङ्गनम् । इदं प्रायः शिशिरार्धे ॥ ४१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्येऽरण्यकाण्डे त्रिंशः सर्गः ॥ ३० ॥

रा० टी०—उपसंहरन्नाह—तत इति । राक्षससङ्घमर्दनं अत एव महात्मभिः पूज्यमानं तं रामं मुदान्वितानना जनकात्मजा पुनः परिष्वज्य हृष्टा अतिसंतुष्टा बभूव ॥ ४१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे त्रिंशः सर्गः ॥ ३० ॥

---

१ समाज्यमानमिति गो. पाठः । २ शशिप्रभाननेति गो. पाठः । ३ अत्रात्मनेपदमयुक्तमिति भाति ।

## एकत्रिंशः सर्गः ।

अकम्पननामा रात्रिंचरो लङ्कामेत्य रामकृतराक्षसक्षपणं रावणं कथयति । ततो रामवधं प्रतिज्ञाय प्रस्थितं च दशमुखं रामपराक्रमं वर्णयन्सीताहरणं तद्वधोपायत्वेन सूचयति । गृहीततद्युक्ती रावणो मारीचाश्रमं प्राप्तस्तं सीताहरणे साहाय्यं याचते । स तु रामप्रभावं प्रस्तावयन् तदजय्यत्वं निश्चिन्वानो दशग्रीवं लङ्कां प्रति निवर्तयति ।

त्वरमाणस्ततो गत्वा जनस्थानादकम्पनः । प्रविश्य लङ्कां वेगेन रावणं वाक्यमब्रवीत् ॥ १ ॥
जनस्थानस्थिता राजन्राक्षसा बहवो हताः । खरश्च निहतः संख्ये कथंचिदहमागतः ॥ २ ॥
एवमुक्तो दशग्रीवः क्रुद्धः संरक्तलोचनः । अकम्पनमुवाचेदं निर्दहन्निव तेजसा ॥ ३ ॥
[1]तेन भीमं जनस्थानं हतं मम परासुना । को हि सर्वेषु लोकेषु गतिं नाधिगमिष्यति ॥ ४ ॥
न हि मे विप्रियं कृत्वा शक्यं मघवता सुखम् । प्राप्तुं वैश्रवणेनापि न यमेन [2]च विष्णुना ॥ ५ ॥
कालस्य चाप्यहं कालो दहेयमपि पावकम् । मृत्युं मरणधर्मेण संयोजयितुमुत्सहे ॥ ६ ॥

---

१ ] ति० टी०–त्वरमाण इति । खरसङ्ग्रामात्पलायितः शूर्पणखागमनात्पूर्वमेव लङ्कां प्रविश्येत्यर्थः । संपूर्णं दण्डकारण्यं जनस्थानपदवाच्यम् अतो गोदावरीतीराद्गतोऽपि जनस्थानाद्गत इत्युक्तः ॥ १ ॥

रा० टी०–ससैन्यसामात्यखरविध्वंसानन्तरकालिकं वृत्तान्तमाह–त्वरमाण इत्यादिभिः । अकम्पनः खरवधेन पलायितोऽकम्पनाभिधराक्षसस्त्वरमाणः सन् जनस्थानात् लङ्कां गत्वा वेगेन प्रविश्य च रावणमब्रवीत् ॥ १ ॥

गो० टी०–एवं शरणागतिमन्त्रविवरणरूपे श्रीरामायणे इयता ग्रन्थसंदर्भेण उत्तरखण्डार्थो विवृतः अनुष्ठानदशायां हि प्रथमखण्डार्थस्य प्राथम्यं व्युत्पत्तिदशायां तूत्तरखण्डार्थस्य फलानुसारेणोपायप्रवृत्तेः अतो द्वितीयखण्डार्थः प्रथमं विवृतः । तत्र बालकाण्डे प्रथमपदार्थभूतपुरुषकारयोगो दर्शितः । अयोध्याकाण्डे द्वितीयपदार्थभूतसौलभ्यादिगुणयोगः । आरण्यकाण्डे शूर्पणखागमनात् पूर्वभाविवृत्तान्तेन चतुर्थ्यर्थभूता किंकरवृत्तिरुक्ता । ततः खरवधान्तवृत्तान्तेन चरमपदार्थभूता विरोधिनिवृत्तिरिति । अथ पूर्वखण्डार्थ उच्यते शास्त्रशेषेण । तत्र चारण्यकाण्डशेषेण विभीषणस्य पुरुषकारसान्निध्यमुच्यते, किष्किन्धाकाण्डेन नारायणपदार्थभूतं वात्सल्यं, सुन्दरकाण्डेन चरणशब्दोक्तदिव्यमङ्गलविग्रहवैशिष्ट्यं, रामः कमलपत्राक्ष इत्यादिना तथोक्तेः । युद्धकाण्डे शरणागतिः, उत्तरकाण्डे प्रपन्नचर्येति बोध्यम् । एवमानुषङ्गिकमुनिजनशरणागतिफलं देवशरणागतिकार्यरावणवधाङ्गत्वेनोक्त्वा अथ तन्निमित्तभूतसीतापहाररूपबीजमुपाक्षिपति–त्वरमाण इत्यादिना । संहृत्य सकलं लोकं पुनः स्रष्टु च यः क्षमः तमहं शिरसा वन्द जानकीप्राणनायकम् ॥ त्वरमाणः शूर्पणखागमनापेक्षयेति शेषः । अकम्पनो रावणचारः त्वरमाणो गत्वा वेगेनाब्रवीदित्यन्वयः ॥ १ ॥

२–३ ] ति० टी०–खरश्चेति । चेन दूषणत्रिशिरसोः संग्रहः । कथंचिदहमागतः केवलं प्रेक्षकतया स्थितत्वाद्रामबाणाविषयीकृततयेत्याशयः ॥ २ ॥ ३ ॥

रा० टी०–तद्वचनाकारमाह–जनस्थानेति । हे राजन् ! जनस्थानस्थिताः त्वया संस्थापिता बहवो राक्षसाः संख्ये संग्रामे हताः खरश्च चकारेणोपलक्षणतया वा दूषणश्च निहतः॥ २॥

गो० टी०–जनस्थानेति । कथंचिदिति स्त्रीवेषधारणेनेति भावः । अत एव शूर्पणखा वक्ष्यति ‘ एका कथंचिन्मुक्ताहं परिभूय महात्मना । स्त्रीवधं शङ्कमानेन राघवेण महात्मना ’ इति ॥ २ ॥

रा० टी०–एवमिति । एवमुक्तः अत एव क्रुद्धः अत एव संरक्तलोचनः दशग्रीवो रावणः तेजसा दहन्निव त्रिलोकीमिति शेषः, अकम्पनमुवाच ॥ ३ ॥

गो० टी०–एवमिति । क्रुद्धत्वं नारोपितमिति ज्ञापयितुं संरक्तलोचन इत्युक्तं कोपातिरेकं दृष्टान्तमुखेनाह–निर्दहन्निवेति ॥ ३ ॥

४–६ ] ति० टी०–भीमं सर्वलोकभयदं जनस्थानम् । परासुनेति क्रोधान्मुमूर्षुणेत्यर्थे प्रयुक्तम् । गतिं स्थितिम्॥ ४–६॥

रा० टी०–तद्वचनाकारमाह–केनेति । केन परासुना परागतप्राणेन किंच परवशप्राणेन किंचोत्कृष्टप्राणवता अतिधृष्टेनेत्यर्थः, भीमं जनस्थानं हतम् अत एव सर्वेषु लोकेषु गतिं स्थितिं को नाधिगमिष्यति प्राप्स्यति जनस्थानध्वंसिनो मृतिरवश्यं भविष्यतीत्यर्थः ॥ ४ ॥

रा० टी०–तत्र हेतुमाह–न हीति । मे विप्रियं कृत्वा इन्द्रादिनापि सुखं प्राप्तुं न शक्यम् ॥ ५ ॥

गो० टी०–केनेति । परागताः असवः प्राणाः यस्य तेन परासुनेति परुषभाषणमात्रम् । गम्यत इति गतिः स्थानम्॥ ४॥ ५॥

रा० टी०–तत्रापि हेतुमाह–कालस्येति । कालस्यापि

---

१ केन रम्यामिति गो. पाठः । २ चेति गो. पाठः । ३ नेति गो. रा. पाठः ।

वातस्य तरसा वेगं निहन्तुमपि चोत्सहे । दहेयमपि संक्रुद्धस्तेजसाऽऽदित्यपावकौ ॥ ७ ॥
तथा क्रुद्धं दशग्रीवं कृताञ्जलिरकम्पनः । भयात्संदिग्धया वाचा रावणं याचतेऽभयम् ॥ ८ ॥
दशग्रीवोऽभयं तस्मै प्रददौ रक्षसां वरः । स विस्रब्धोऽब्रवीद्वाक्यमसंदिग्धमकम्पनः ॥ ९ ॥
पुत्रो दशरथस्यास्ते सिंहसंहननो युवा । रामो नाम महास्कन्धो वृत्तायतमहाभुजः ॥ १० ॥
श्यामः पृथुयशाः श्रीमानतुल्यबलविक्रमः । हतस्तेन जनस्थाने खरश्च सहदूषणः ॥ ११ ॥
अकम्पनवचः श्रुत्वा रावणो राक्षसाधिपः । नागेन्द्र इव निःश्वस्य इदं वचनमब्रवीत् ॥ १२ ॥
स सुरेन्द्रेण संयुक्तो रामः सर्वामरैः सह । उपयातो जनस्थानं ब्रूहि कच्चिदकम्पन ॥ १३ ॥
रावणस्य पुनर्वाक्यं निशम्य तदकम्पनः । आचचक्षे बलं तस्य विक्रमं च महात्मनः ॥ १४ ॥
रामो नाम महातेजाः श्रेष्ठः सर्वधनुष्मताम् । दिव्यास्त्रगुणसंपन्नः परं धर्मं गतो युधि ॥ १५ ॥
तस्यानुरूपो बलवान्रक्ताक्षो दुन्दुभिस्वनः । कनीयाँलक्ष्मणो भ्राता राकाशशिनिभाननः ॥ १६ ॥

---

अहं कालो नियन्ता अत एव पावकमपि दहेयं मृत्युमपि मरणधर्मेण संयोजयितुमुत्सहे ॥ ६ ॥

गो० टी०–कालस्य चापीति । कालस्यापि काल इत्यत्रोपपत्तिमाह–मृत्युमिति ॥ ६ ॥

७ ] ति० टी०–निहन्तुं भङ्कुम् । आदित्यपावकौ उभावपि युगपदिति शेषः ॥ ७ ॥

रा० टी०–वातस्येति । तरसा स्ववेगेन वातस्य वेगं निहन्तुमुत्सहे संक्रुद्धोऽहम् आदित्यपावकौ दहेयम् ॥ ७ ॥

गो० टी०–दहेयमिति । आदित्यपावकौ परस्परसाहाय्येन संयुक्तावपीत्यर्थः, अतो न पुनरुक्तिः ॥ ७ ॥

८-९ ] ति० टी०–संदिग्धया संदिग्धाक्षरया । अभयमिति छेदः ॥ ८ ॥ ९ ॥

रा० टी०–तथेति । तथा तेन प्रकारेण क्रुद्धं दशग्रीवं कृताञ्जलिरकम्पनः भयात् रावणहेतुकभीतेर्हेतोः संदिग्धया शोभनमशोभनं वैतदितिसंदेहास्पदया वाचा अभयं दृढतरज्ञानाभावात् संशयास्पदीभूतमदुक्तिहेतुको दण्डो भवता न कार्य इति भयाभावं रावणं याचते द्विकर्मकोऽयम् ॥ ८ ॥

रा० टी०–दशग्रीव इति । रक्षसां वरो दशग्रीवः तस्मै अकम्पनाय अभयं प्रददौ । विस्रब्धः अभयविषयकप्राप्तविश्वासोऽकम्पनः असंदिग्धं संदेहरहितं वाक्यमब्रवीत् ॥ ९ ॥

गो० टी०–तथेति । संदिग्धया संदिग्धाक्षरया याचते अयाचत अभयमिति छेदः ॥ ८–११ ॥

१० ] ति० टी०–'वराङ्गरूपोपेतो यः सिंहसंहननो हि सः' इति कोशः ॥ १० ॥

११ ] ति० टी०–अतुल्यं केनापि तुलानर्हं बलं विक्रमश्च यस्य सः । स दूषणः खरश्च हत इत्यन्वयः ॥ ११ ॥

रा० टी०–तद्वचनाकारमाह–पुत्र इत्यादिभिः । सिंहसंहननः सिंहसदृशः सुन्दरावयवः महास्कन्धः पूज्यमानस्कन्धविशिष्टः वृत्तायतमहाभुजः वृत्तौ वर्तुलौ आयतौ दीर्घौ महाभु[जौ] यस्य सः पृथुयशाः महायशस्कः अतुल्यौ तोलयितुमशक्[यौ] बलविक्रमौ यस्य सः युवा रामो नाम दशरथस्य पुत्र आस्[ते] तेन सह दूषणः खरः जनस्थाने हतः । श्लोकद्वयमेकान्व[यि] 'वराङ्गरूपोपेतो यः सिंहसंहननो हि सः' इत्यमरः ॥१०॥११॥

१२ ] ति० टी०–नागेन्द्रः सर्पश्रेष्ठः ॥ १२ ॥

रा० टी०–अकम्पनेति । अकम्पनवचः श्रुत्वा राव[णः] नागेन्द्र इव निःश्वस्य इदं वचनमब्रवीत् ॥ १२ ॥

गो० टी०–अकम्पनवच इति । नागेन्द्रः सर्पेन्द्रः ॥१[२॥]

१३-१४ ] ति० टी०–स रामः सर्वामरसहितेन[...] जनस्थानं कच्चिदुपागत इत्यन्वयः ॥ १३ ॥ १४ ॥

रा० टी०–तद्वचनाकारमाह–स इति । सर्वामरैः सुरे[न्द्रे]ण च सह स रामः जनस्थानमुपयातः कच्चित् हे अकम्पन! ब्रू[हि] तत्त्वं वद, एतेन राममात्रकर्तृकखरादिवधस्यासंभवः सूचितः॥१[३॥]

रा० टी०–रावणस्येति । अकम्पनः तत् रावणस्य [वा]क्यं श्रुत्वा तस्य रामस्य बलं विक्रमं च आचचक्षे ॥ १४ ॥

गो० टी०–स सुरेन्द्रेणेति । स रामः सुरेन्द्रेणामरै[ः] युक्तः सन् जनस्थानमुपयातः कच्चित् अन्यथा तस्यैतादृश[सा]मर्थ्यं न युज्यत इति भावः ॥ १३ ॥ १४॥

१५ ] ति० टी०–परं धर्ममतिशयितं शौर्यम् ॥ १५ ॥

रा० टी०–तद्वचनाकारमाह–राम इत्यादिभिः । [दि]व्यास्त्रगुणसंपन्नो रामः युधि परममत्युत्कृष्टमन्यत्रादृष्टमित्य[र्थः] धर्मं शौर्यं गतः प्राप्तः ॥ १५ ॥

गो० टी०–इन्द्रादिसहायानपेक्षो राम इत्याशयेनाह–रा[मो] नामेत्यादिना । दिव्यास्त्रगुणसंपन्नः दिव्यास्त्रकृता[ति]शययुक्तः ॥ १५ ॥

१६ ] ति० टी०–राकाशशिनिभानन इति । रा[का] पूर्णिमा । 'पूर्णे राका निशाकरे' इत्यमरः । पूर्णनिशाकर[...] इत्यर्थः ॥ १६ ॥

---

१ एतदाद्यर्धद्वयं व्यत्यस्तं गो. पाठे । २ अहमुत्सहे इति गो. रा. पाठः । ३ वृषस्कन्ध इति गो. पाठः । ४ वीर इति गो. पाठः । ५ हतं[...] जनस्थानमिति गो. पाठः । ६ पुरंदरसम इति गो. पाठः । ७ नाम भ्रातेति गो. पाठः ।

स तेन सह संयुक्तः पावकेनानिलो यथा । श्रीमान्राजवरस्तेन जनस्थानं निपातितम् ॥ १७ ॥
नैव देवा महात्मानो नात्र कार्या विचारणा । शरा रामेण तूत्सृष्टा रुक्मपुङ्खाः पतत्रिणः ॥ १८ ॥
सर्पाः पञ्चानना भूत्वा भक्षयन्ति स्म राक्षसान् । येन येन च गच्छन्ति राक्षसा भयकर्षिताः ॥ १९ ॥
तेन तेन स्म पश्यन्ति राममेवाग्रतः स्थितम् । इत्थं विनाशितं तेन जनस्थानं तवानघ ॥ २० ॥
अकम्पनवचः श्रुत्वा रावणो वाक्यमब्रवीत् । गमिष्यामि जनस्थानं रामं हन्तुं सलक्ष्मणम् ॥ २१ ॥
अथैवमुक्ते वचने प्रोवाचेदमकम्पनः । शृणु राजन्यथावृत्तं रामस्य बलपौरुषम् ॥ २२ ॥
असाध्यः कुपितो रामो विक्रमेण महायशाः । आपगायास्तु पूर्णाया वेगं परिहरेच्छरैः ॥ २३ ॥
सताराग्रहनक्षत्रं[1] नभश्चाप्यवसादयेत् । असौ रामस्तु सीदन्तीं श्रीमानभ्युद्धरेन्महीम्[2] ॥ २४ ॥
भित्त्वा वेलां समुद्रस्य लोकानाप्लावयेद्विभुः । वेगं वापि समुद्रस्य वायुं वा विधमेच्छरैः ॥ २५ ॥

---

रा० टी०—तस्येति । तस्य रामस्यानुरूपः रक्ताक्षः दुन्दुभिस्वनः राकाशशिनिभाननः पूर्णिमाचन्द्रसदृशाननवान् कनीयान् लक्ष्मणो भ्राताऽस्तीति शेषः ॥ १६ ॥

गो० टी०—तस्येति । रक्ताक्षः रक्तरेखाञ्चितनयनः दुन्दुभिस्वनः दुन्दुभिवत् गम्भीरस्वनसंयुक्त इति वर्तत इति शेषः ॥ १६ ॥ १७ ॥

१७ ] ति० टी०—राजवरः राजराज इति यावत् ॥ १७ ॥

रा० टी०—स इति । संयुक्तोऽतिविचारवान् राजवरः स रामः तेन भ्रात्रा सह पावकेनानिल इवाऽस्तीति शेषः, तेन रामेण जनस्थानं निपातितम् ॥ १७ ॥

१८ ] ति० टी०—महात्मानो देवाः । नैवागता इति शेषः। रामेण तु न तु लक्ष्मणेनापीत्यर्थः ॥ १८ ॥

रा० टी०—नेति । महात्मानः देवाः तत्र नागता इति शेषः, अत्रास्मिन् विषये विचारणा विचारो न कार्या । अर्धं पृथक् । नन्वेकेन रामेण कथं ते राक्षसा हता इत्यत आह—शरा इति । रुक्मपुङ्खाः सुवर्णनिर्मितपुङ्खविशिष्टाः पतत्रिणः कङ्कपक्षविशिष्टाः रामेणोत्सृष्टाः शराः बाणाः पञ्चाननाः पञ्चमुखाः सर्पाः भूत्वा राक्षसान् भक्षयन्ति स्म ॥ १८ ॥

गो० टी०—नैव देवा इति । साहाय्यार्थमागता इति शेषः१८

१९-२१ ] ति० टी०—भयात्पलायनाय येन मार्गेण गच्छन्ति राक्षसास्तेन तेन मार्गेणागत्याग्रतः स्थितमेव रामं पश्यन्ति । अनेनानन्ताकारताप्रदर्शनेन रामस्यापरिच्छिन्नशक्तित्वं च सूचितम् ॥ १९-२१ ॥

रा० टी०—येनेति । भयकर्शिताः रामबाणभयपीडिताः राक्षसाः येन येन मार्गेण गच्छन्ति तेन तेन मार्गेणाग्रतः स्थितं राममेव पश्यन्ति स्म इत्थमनेन प्रकारेण तव जनस्थानं तेन रामेण विनाशितम् ॥ १९ ॥ २० ॥

रा० टी०—अकम्पनेति । रावणः अकम्पनवचः श्रुत्वा सलक्ष्मणं रामं हन्तुं जनस्थानमहं गमिष्यामीति वाक्यमब्रवीत् ॥ २१ ॥

गो० टी०—शरा इति । पञ्चाननाः विस्तृताननाः भूत्वा भक्षयन्ति स्मेत्युत्प्रेक्षा ॥ १९ ॥

गो० टी०—येन येनेति । राक्षसाः भयकर्शिताः भयपीडिताः सन्तो येन येन मार्गेण गच्छन्ति तेन तेन मार्गेणाग्रतः स्थितं राममेव पश्यन्ति स्म । अत्र विशेषणसामर्थ्याद्रामदर्शनं भयकृतमिति व्यज्यते ॥ २० ॥ २१ ॥

२२ ] ति० टी०—बलं पराभिभवसामर्थ्यम् । पौरुषं महापुरुषकर्म। वृत्तं चरितम् । यथा यादृशं तत्सर्वं शृण्वित्यर्थः२२

रा० टी०—अथेति । एवमनेन प्रकारेण वचने उक्ते सति अकम्पनः इदं प्रोवाच । तद्वचनाकारमाह—राजन् हे रावण ! रामस्य बलपौरुषं यथावृत्तं वृत्तमनतिक्रम्य शृणु ॥ २२ ॥

गो० टी०—अथेति । यथावृत्तं परमार्थभूतमित्यर्थः॥२२॥

२३ ] ति० टी०—कुपितः कुपितोऽन्तक इव संहारे प्रवृत्तो रामः पराक्रमेण ततो निवर्तयितुमसाध्यः । ब्रह्मादिभिरपीति शेषः, परिहरेत्परावर्तयेत् , अनेन कृष्णबलभद्रावतारस्यापि सूचनम् ॥ २३ ॥

रा० टी०—असाध्य इति । महायशाः विक्रमेण कस्यचित्पौरुषेणासाध्यः नियमितुमशक्यः कुपितो रामः पूर्णायाः आपगायाः नद्याः वेगं शरैः परिहरेत् यथेच्छं वाहयेदित्यर्थः॥२३॥

गो० टी०—असाध्य इति । असाध्यः अनिग्राह्यः ॥२३॥

२४ ] ति० टी०—नभोऽप्यवसादयेत्ताराराहितं कुर्यात् , त्रिविक्रमावतार इव । महीमभ्युद्धरेत् , यज्ञवराह इव । शक्यर्थे एते लिङः ॥ २४ ॥

रा० टी०—सेति । असौ रामः सताराग्रहनक्षत्रं नभः अवसादयेत् यथेच्छं पीडयेत् सीदन्तीं महीं तु उद्धरेत् दुःखनिवर्तनेनेत्यर्थः ॥ २४ ॥

गो० टी०—सतारेति । ग्रहा नव ग्रहाः नक्षत्राणि सप्तविंशतिनक्षत्राणि तारास्तदन्यज्योतींषि अवसादयेत् विशीर्णं कुर्यात् मज्जन्तीं समुद्र इति शेषः ॥ २४ ॥

२५ ] ति० टी०—वेलां मर्यादामाप्लावयेत् प्रलयकाल इव ।

---

१ सताराग्रहेति गो. पाठः । २ मज्जन्तीमिति गो. पाठः ।

संहृत्य वा पुनर्लोकान्विक्रमेण महायशाः । शक्तः [१]श्रेष्ठः स पुरुषः स्रष्टुं पुनरपि प्रजाः ॥ २६ ॥
नहि रामो दशग्रीव शक्यो जेतुं [२]रणे त्वया । रक्षसां वापि लोकेन स्वर्गः पापजनैरिव ॥ २७ ॥
न तं वध्यमहं मन्ये सर्वैर्देवासुरैरपि । अयं तस्य वधोपायस्तन्ममैकमनाः शृणु ॥ २८ ॥
भार्या तस्योत्तमा लोके सीता नाम सुमध्यमा । श्यामा समविभक्ताङ्गी स्त्रीरत्नं रत्नभूषिता ॥ २९ ॥
नैव देवी न गन्धर्वी नाप्सरा [३]न च पन्नगी । तुल्या सीमन्तिनी [४]तस्य मानुषी तु कुतो भवेत् ॥ ३० ॥
तस्यापहर भार्यां त्वं तं प्रमथ्य महावने । सीतया रहितो [५]रामो न चैव हि भविष्यति ॥ ३१ ॥
अरोचयत तद्वाक्यं रावणो राक्षसाधिपः । चिन्तयित्वा महाबाहुरकम्पनमुवाच ह ॥ ३२ ॥
बाढं [६]कल्यं गमिष्यामि [७]एकः सारथिना सह । [८]आनेष्यामि च वैदेहीमिमां हृष्टो महापुरीम् ॥ ३३ ॥
[९]तदेवमुक्त्वा प्रययौ खरयुक्तेन रावणः । रथेनादित्यवर्णेन दिशः सर्वाः प्रकाशयन् ॥ ३४ ॥

---

समुद्रस्य वेगं विधमेत् । समुद्रे सेतुबन्धनसामर्थ्यं दर्शितम् । वायुमित्युपलक्षणं भूतपञ्चकस्य ॥ २५ ॥

रा० टी०—भित्त्वेति । विभुः समर्थो रामः समुद्रस्य वेलां मर्यादां भित्त्वा लोकानाप्लावयेत् समुद्रस्य वेगं वायुं च शरैः विधमेत् दहेन्नाशयेदित्यर्थः ॥ २५ ॥

गो० टी०—भित्त्वेति । विप्लावयेत् सिञ्चेत् विधमेत् दहेत् ध्माशब्दाग्निसंयोगयोरिति धातोर्लिङि धमादेशः ॥ २५ ॥

२६ ] ति० टी०—संहृत्य पुनः स्रष्टुं शक्तः । अत्र पुनरपिशब्दाभ्यां सर्वसृष्टिसंहाराणां तदधीनत्वमुक्तम् । अनेन जगत्स्थितिसंहारकर्तृत्वमस्य व्यङ्ग्यम् । अकम्पनस्यापि भगवत्प्रसाददेवं ज्ञानम् ॥ २६ ॥

रा० टी०—संहृत्येति । महायशाः रामः विक्रमेण स्वपराक्रमेण लोकान् संहृत्य विनाश्य प्रजापतिरिव पुनः स्रष्टुं शक्तः समर्थः ॥ २६ ॥

गो० टी०—संहृत्येति । लोकान् भूरादीन् संहृत्य पुनः स्रष्टुं शक्तः इमाः प्रजाश्च संहृत्य पुनः स्रष्टुं शक्त इत्यर्थः ॥ २६ ॥

२७] ति० टी०—लोकेन समूहेन सहितेनापीति शेषः ॥ २७ ॥

रा० टी०—न हीति । हे दशग्रीव ! रक्षसां लोकेन समूहेन विशिष्टेनापि त्वया रामो जेतुं स्वाधीनीकर्तुं न शक्यः । तत्र दृष्टान्तः पापजनैः पापिजन्तुभिः स्वर्ग इव ॥ २७ ॥

गो० टी०—न हीति । लोकेन समूहेन ॥ २७ ॥

२८ ] ति० टी०—अपिना त्वयापि । एतेनेन्द्रजिन्निर्जितेन्द्रादिसाहाय्येऽपि तस्य जयोऽशक्य इति ध्वनितम् । ममेति मुखादिति शेषः ॥ २८ ॥

रा० टी०—न केवलं तव एवाजेयः किंतु सर्वेषामित्याह—नेति । सर्वैर्देवासुरैरपि तं रामं वध्यमहं न मन्ये तत्तस्माद्धेतोः योऽयं तस्य वधोपायस्तं मम मत्तः एकमनाः सन् शृणु ॥ २८ ॥

गो० टी०—न तमिति । मम मत्तः एकमनाः सावधानः २८

२९ ] ति० टी०—श्यामा यौवनमध्यस्था ॥ २९ ॥

रा० टी०—उपायमेवाह—भार्येति । सुमध्यमा शोभनकटिविशिष्टा श्यामा षोडशवार्षिकी समविभक्ताङ्गी समानि न्यूनाधिकरहितानि विभक्तानि असंश्लिष्टानि अङ्गानि करचरणादीनि यस्याः सा रत्नभूषिता लोके सर्वभुवने उत्तमा उद्गतः तमः आकाङ्क्षा यस्या रामातिरिक्तसर्वाकाङ्क्षारहिता स्त्रीरत्नं सर्वस्त्रीश्रेष्ठा सीता नाम भार्या अस्तीति शेषः, अत एव देव्यादिसीमन्तिनी स्त्री तस्या तुल्या न इति मानुषी मनुष्यस्त्री तुल्या कथं भवेत् । श्लोकद्वयमेकान्वयि ॥ २९ ॥ ३० ॥

गो० टी०—भार्येति । 'श्यामा यौवनमध्यस्था' इत्युत्पलः । समं यथा तथा विभक्तानि नेत्रकर्णाद्यङ्गानि यस्याः सा तथोक्ता स्त्रीरत्नं स्त्रीश्रेष्ठा अस्तीति शेषः ॥ २९ ॥

३० । ति० टी०—कुतो भवेत् तुल्येति शेषः ॥ ३० ॥

गो० टी०—नैवेति । देवी देवस्त्री "पुंयोगादाख्यायाम्" इति ङीष् एवमुत्तरत्रापि । अप्सरःशब्द एकवचनान्तोऽप्यस्ति । सीमन्तिनी स्त्री ॥ ३० ॥

३१ ] ति० टी०—तं रामं प्रमथ्य केनाप्युपायेनोन्माथ्येतीति यावत् । तस्य भार्यामपहर बलात्कारेण हर ॥ ३१ ॥

रा० टी०—तस्येति । तं रामं प्रमथ्य कथंचिदनवधानीकृत्य तस्य रामस्य भार्यां त्वमपहर । ननु तदपहरणेन किमित्यत आह—सीतया रहितो रामो नैव भविष्यति न जीवितेत्यर्थः ॥ ३१ ॥

गो० टी०—तस्येति । महावने प्रमथ्य विलोड्य येन केनाप्युपायेन रामं वञ्चयेत्यर्थः ॥ ३१ ॥

३२ ] ति० टी०—अरोचयतेष्टत्वेन ज्ञातवान् चिन्तयित्वा रामस्य सीतया सहानवस्थानोपायम् ॥ ३२ ॥

रा० टी०—अरोचयतेति । महाबाहुः रावणः चिन्तयित्वा तद्वधोपायं विचार्य तद्वाक्यम् अरोचयत स्वीचकार अत एव अकम्पनमुवाच । हो हेतौ ॥ ३२ ॥

गो० टी०—अरोचयतेति । चिन्तयित्वा रामोच्चाटनोपायमिति शेषः ॥ ३२ ॥

३३–३४ ] ति० टी०—कल्यं प्रातः मान्तमव्ययम् । हृष्ट इति अकम्पनवाक्यं श्रुत्वा त्रेतामुखे श्रीरामोऽवतरिष्य-

---

१ स पुरुषव्याघ्र इति गो. पाठः । २ त्वया युधीति गो. पाठः । ३ नापि दानवीति गो. पाठः । ४ तस्या मानुषीष्विति गो. पाठः । ५ कामी रामो हास्यति जीवितमिति गो. पाठः । ६ काल्यामिति गो. पाठः । ७ ह्येक इति गो. पाठः । ८ आनयिष्यामीति गो. पाठः । ९ अथैवमिति गो. पाठः ।

स रथो राक्षसेन्द्रस्य नक्षत्रपथगो महान् । चञ्चूर्यमाणः शुशुभे जलदे चन्द्रमा इव ॥ ३५ ॥
स दूरे चाश्रमं गत्वा ताटकेयमुपागमत् । मारीचेनार्चितो राजा भक्ष्यभोज्यैरमानुषैः ॥ ३६ ॥
तं स्वयं पूजयित्वा तु आसनेनोदकेन च । अर्थोपहितया वाचा मारीचो वाक्यमब्रवीत् ॥ ३७ ॥
कच्चित्सुकुशलं राजँल्लोकानां राक्षसाधिप । आशङ्के नाधिजाने त्वं यतस्तूर्णमुपागतः ॥ ३८ ॥
एवमुक्तो महातेजा मारीचेन स रावणः । ततः पश्चादिदं वाक्यमब्रवीद्वाक्यकोविदः ॥ ३९ ॥

---

तीति सनत्कुमारवाक्यस्मरणाद्बुद्धः । तदेतदुत्तररामायणे स्पष्टम् । तत्र हि सनत्कुमारं प्रति विष्णुहस्तमृतानां का गतिरिति रावणेन पृष्टे तेन हतानां तल्लोकप्राप्तिरिति सनत्कुमारवचः श्रुत्वा 'एवं श्रुत्वा महाबाहू राक्षसेन्द्रः प्रतापवान् । त्वया सह विरोधेऽप्युश्चिन्तयामास राघव ॥ एतदर्थं महाबाहो रावणेन दुरात्मना । सुता जनकराजस्य हृता राम महावने ॥' इत्युक्तमिति तीर्थः । उत्तमस्त्रीलाभो भविष्यतीति हृष्ट इत्यर्थ उचितः । श्रुतस्यापि तस्यार्थस्य नामसत्त्वेन विस्मरणात् । ते पद्ये तु न यथाश्रुतार्थे वक्ष्यमाणविष्णुपुराणविरोधात् । किं तु श्रीरामस्य स्वमृत्योरवतारं श्रुत्वा त्वया सह मृत्युविघातकविरोधेच्छुस्तां हृतवान् । तद्वियोगे तव मरणमित्याशयेनेति तयोरर्थ इत्यन्ये । वस्तुतस्त्वेतेषां श्लोकानां तद्वतां सर्गाणां च प्रक्षिप्तत्वान्न ते प्रमाणभूताः । अत एव ते सर्गाः कतकादिभिस्तीर्थेन च न व्याख्याताः । एतेन 'एतदर्थं महाबाहो रावणेन दुरात्मना । विज्ञायापहृता सीता त्वत्तो मरणकाङ्क्षया ॥' इति तत्र पाठो दृश्यते तत्र च त्वदुक्तार्थासंभव इत्यपास्तम् ॥ ३३ ॥ ३४ ॥

रा० टी०—तद्वचनाकारमाह—बाढमिति । बाढं तवोक्तमङ्गीकृतमित्यर्थः अत एव काल्यं प्रातः सारथिना सह एकः सजातीयान्तररहितो हृष्टोऽहं गमिष्यामि वैदेहीमिमां सीतां महापुरीं लङ्कामानेष्यामि च ॥ ३३ ॥

गो० टी०—बाढमिति । बाढमित्यङ्गीकारे काल्यं प्रातः ३३

रा० टी०—तदिति । तत् सीताहरणबोधकं वाक्यमेवमुक्त्वा रावणः सर्वाः दिशः प्रकाशयन् सन् खरयुक्तेन रथेन प्रययौ रामं संजगाम ॥ ३४ ॥

गो० टी०—अथेति । खराः अश्वतराः । तत्स्वरूपमुक्तमश्वशास्त्रे 'अश्वसृग्भ्यः समुत्पन्नास्तस्मादश्वतराः खराः । खररूपस्वरास्तीक्ष्णाः खरशीलाः खराङ्घ्रयः' इति ॥ ३४ ॥

३५ ] ति० टी०—चञ्चूर्यमाणो भृशं चरन् । जलदसदृशं गगनं चन्द्रसदृशो रथः ॥ ३५ ॥

रा० टी०—स इति । नक्षत्रपथे स्वर्गे गीयते प्रशस्यते सः राक्षसेन्द्रस्य रावणस्य महान् रथः जलदे मेघे चञ्चूर्यमाणः कुटिलं चरन् सन् चन्द्रमा इव शुशुभे ॥ ३५ ॥

गो० टी०—स रथ इति । नक्षत्रपथगः आकाशगः संचार्यमाणः[1] प्रेर्यमाणः ॥ ३५ ॥

३६ ] ति० टी०—मारीचाश्रमम्[2] । पूर्वं रामनिरस्तस्य दुःखात्तपःप्रवृत्तेरेवमुक्तिः । ताटकेयं ताटकापत्यम् ॥ ३६ ॥

रा० टी०—स इति । स रावणः मारीचाश्रमं गत्वा प्राप्य ताटकेयं ताटकासुतं मारीचमुपागमत् । अमानुषैः मानुषालभ्यैः भक्ष्यभोज्यैः करणैः मारीचेन कर्त्रा राजा रावणः अर्चितः पूजितोऽभवदिति शेषः ॥ ३६ ॥

गो० टी०—स इति । ताटकेयं ताटकापुत्रं भक्ष्यभोज्यैः पेयखाद्यैः अमानुषैः मनुष्यलोकदुर्लभैः ॥ ३६ ॥

३७ ] ति० टी०—अर्थोपहितया किंप्रयोजनमत्रागमनमिति प्रयोजनयुक्तया ॥ ३७ ॥

रा० टी०—तमिति । आसनेन उदकेन च तं रावणं मारीचः स्वयं पूजयित्वा अर्थोपहितया सप्रयोजनया वाचाऽब्रवीत् ॥ ३७ ॥

गो० टी०—तमिति । अर्थोपहितया अर्थेन प्रयोजनेन उपहितया विशिष्टया ॥ ३७ ॥

३८-३९ ] ति० टी०—कच्चित्सुकुशलमिति सामान्यप्रश्नः । लोकानां राक्षसलोकानाम् आशङ्के भयमिति शेषः । नाधिजाने[4] क्षेममिति शेषः । यतस्त्वमेकाकी तूर्णमागतः ॥ ३८ ॥ ३९ ॥

रा० टी०—तद्वचनाकारमाह—कच्चिदिति । हे राजन् ! हे राक्षसाधिप ! सुकुशलं कच्चिदस्तीति शेषः । ननु मत्कुशलविध्वंसकाभावात्कथमेवं प्रश्न इत्यत आह—यतस्त्वं तूर्णमुपागतः अतः लोकानां भवज्जनानां सुकुशलं नाधिजाने निश्चिनोमि अत एव आशङ्के संशयं प्राप्नोमि, एतेनागमनप्रयोजनं वदेति सूचितम् ॥ ३८ ॥

गो० टी०—कच्चिदिति । हे राजन् ! लोकानां राक्षसलोकानां राक्षसेश्वरेति[3] समभिव्याहारादयमर्थो लभ्यते । सुकुशलं कच्चिदिति सामान्येन प्रश्नः अथ अथवा त्वं यतस्तूर्णमिहागतः ततः कारणात् किंचिदत्याहितमस्तीत्याशङ्के तद्विशिष्य न जाने महत्कार्यं विना भवतस्तूर्णमागमनं नोपपद्यत इति भावः । यद्वा लोकानां कच्चित् सुकुशलम् अथ अथवा तेषां कुशलं नेत्याशङ्के यतस्त्वं तूर्णमागतः न जाने तद्विशिष्य न जाने इत्यर्थः ॥ ३८ ॥

रा० टी०—एवमिति । मारीचेन एवमुक्तः वाक्यकोविदः स रावणः ततः पश्चादिदमब्रवीत् ॥ ३९ ॥

---

१ संचार्यमाण इति गो. पाठः । २ मारीचाश्रमं प्राप्येति गो. मारीचाश्रममिति रा. पाठः । ३ राक्षसेश्वरेति गो. पाठः । ४ नाथ जाने इति गो. पाठः ।

आरक्षो मे हतस्तात रामेणाक्लिष्टकारिणा । जनस्थानमवध्यं तत्सर्वं युधि निपातितम् ॥ ४० ॥
तस्य मे कुरु साचिव्यं तस्य भार्यापहारणे । राक्षसेन्द्रवचः श्रुत्वा मारीचो वाक्यमब्रवीत् ॥ ४१ ॥
आख्याता केन वा सीता मित्ररूपेण शत्रुणा । त्वया राक्षसशार्दूल को न नन्दति नन्दितः ॥ ४२ ॥
सीतामिहानयस्वेति को ब्रवीति ब्रवीहि मे । रक्षोलोकस्य सर्वस्य कः शृङ्गं छेत्तुमिच्छति ॥ ४३ ॥
प्रोत्साहयति यश्च त्वां स च शत्रुरसंशयम् । आशीविषमुखाद्दंष्ट्रामुद्धर्तुं चेच्छति त्वया ॥ ४४ ॥
कर्मणाऽनेन केनासि कापथं प्रतिपादितः । सुखसुप्तस्य ते राजन्प्रहृतं केन मूर्धनि ॥ ४५ ॥
विशुद्धवंशाभिजनाग्रहस्तस्तेजोमदः संस्थितदोर्विषाणः ।
उदीक्षितुं रावण नेह युक्तः स संयुगे राघवगन्धहस्ती ॥ ४६ ॥

गो० टी०—एवमुक्त इति । ततः पश्चात् तद्वाक्यादनन्तरम् ॥ ३९ ॥

४०-४१ ] ति० टी०—आरक्षः समाजस्थानं जनस्थानाख्यम् । आरक्षोऽन्तपालः खरादिरित्यर्थ इत्यन्ये ॥४०॥४१॥

रा० टी०—तद्वचनाकारमाह—आरक्ष इति । मे आरक्षः सर्वतो रक्षणकर्ता खरादिरित्यर्थः, अक्लिष्टकर्मणा रामेण युधि हतः अत एव अवध्यं तत्सर्वं जनस्थानं निपातितम्॥४०॥

रा० टी०—तस्येति । तस्य रामस्य भार्यापहारणे भार्याया अपहरणे उद्युक्तस्येति शेषः, तस्य निपातितस्वसैन्यरक्षकस्य मे साचिव्यं सचिवकर्म साहाय्यमित्यर्थः, कुरु । अथ पृथक्—राक्षसेन्द्रस्य रावणस्य वचः वचनं श्रुत्वा मारीचो वाक्यमब्रवीत् ॥ ४१ ॥

गो० टी०—आरक्ष इति । आरक्षः अन्तपालः । उक्तमुपपादयति—जनस्थानमित्याद्यर्धेन । जनस्थानशब्देन तत्स्थो रक्षोगणो लक्ष्यते तत् प्रसिद्धं साचिव्यं साहाय्यं तस्य मे हतस्वजनस्य मे ॥ ४० ॥ ४१ ॥

४२] ति० टी०—सा सीता केनाख्याता हर्तव्यत्वेन कथिता । येन कथिता स मित्ररूपस्ते शत्रुः । त्वया दानादिना नन्दितः को न नन्दति । 'निन्दितः' इति पाठे निन्दितोऽवमानितः कस्त्वां न नन्दति न संतुष्यति । क्रुध्यतीति यावत् । त्वया तिरस्कृतस्तावकमैश्वर्यमसहमानः संस्त्वया सह कृत्रिममित्रभावं प्राप्तः संस्तवेदृशीं बुद्धिमुपदिशतीति भावः ॥ ४२ ॥

रा० टी०—तद्वचनाकारमाह—आख्यातेत्यादिभिः । हे राक्षसशार्दूल ! मित्ररूपेण मित्ररूपसदृशरूपविशिष्टेन शत्रुणा केन सा सीता आख्याता हरणीयात्वेन कथिता त्वया नन्दितः संवर्धितः कः पुमान् न नन्दति स्ववर्धकं वर्धयितुमिच्छति॥४२॥

गो० टी०—आख्यातेत्याद्यर्धत्रयमेकान्वयम् । यः सीताया आख्याता स मित्ररूपः शत्रुः यश्च तामानयेत्युपदेष्टा सः त्वया निन्दितः सन् तिरस्कृतः सन् त्वदैश्वर्यं न नन्दति तावुभौ ब्रूहीत्यर्थः । ब्रवीहीत्यत्र ईडागमश्छान्दसः ॥ ४२ ॥

४३ ] ति० टी०—सीतामिहानयेति को ब्रवीति तं ब्रवीहि । ईडार्षः । शृङ्गमौन्नत्यम् ॥ ४३ ॥

रा० टी०—सीतामिति । सीताम् इह स्वगृहे आनयस्व इति कोऽब्रवीति अब्रूत "वर्तमानसामीप्ये" इति भूते लट् ब्रवीहि ईट्गुणावार्षौ सर्वस्य रक्षोलोकस्य राक्षसजनस्य शृङ्गं मुख्यं त्वां छेत्तुं क इच्छति ॥ ४३ ॥

गो० टी०—रक्षोलोकस्येत्यादि । शृङ्गं प्राधान्यम् 'शृङ्गं प्राधान्यसान्वोश्च' इत्यमरः । प्रोत्साहयति सीतानयनं प्रतीति शेषः, सच स एव ॥ ४३ ॥

४४ ] ति० टी०—स च शत्रुरसंशयमित्यत्र हेतुमाह—आशीविषेत्यादि च । यस्मात्त्वया प्रयोज्येनाशीविषमुखाद्दंष्ट्रामुद्धर्तुमुद्धारयितुमिच्छति ॥ ४४ ॥

रा० टी०—प्रोत्साहयतीति । यस्त्वां प्रोत्साहयति सीतानयनविषयकोत्साहमुत्पादयति सः शत्रुस्तव रिपुरेव न संशयः अत्र संशयो न अत एव त्वया करणेन आशीविषमुखात् दंष्ट्राम् उद्धर्तुमिच्छति ॥ ४४ ॥

गो० टी०—आशीविषेति । आशीविषः सर्पविशेषः उद्धर्तुम् उद्धारयितुं क इति शेषः, तेन कर्मणा सीतापहारलक्षणकर्मणा कापथं कुमार्गम् । "ऋक्पूरब्धूः पथामानक्षे" इति समासान्तः अप्रत्ययः प्रतिपादितः । 'उपदिष्टोऽसि कर्मणा केन' इति पाठे केन पुरुषेण केन कर्मणा केनोपायेन कापथं प्रतिपादितोऽसीत्यन्वयः । मूर्ध्नि केन प्रहृतं केन प्रहारः कृतः वृथैव केन दुःखमुत्पादितमित्यर्थः ॥ ४४ ॥ ४५ ॥

४५ ] ति० टी०—केन शत्रुणानेन कर्मणा एतत्कर्मोपदेशेन कापथं नाशमार्गमिति यावत् । प्रहृतम् वृथैव दुःखमुत्पादितमित्यर्थः ॥ ४५ ॥

रा० टी०—कर्मणेति । अनेन अपहरणरूपेण कर्मणा कापथं कुत्सितमार्गं केन त्वं प्रतिपादितः उपदिष्टः प्रापित इत्यर्थः, हे राजन् ! सुखसुप्तस्य ते मूर्धनि केन प्रहृतं ताडितं दुःखमुत्पादितमित्यर्थः ॥ ४५ ॥

४६ ] ति० टी०—राघवरूपो गन्धहस्ती । यस्य गन्धं समाघ्रायान्ये गजाः पलायन्ते स गन्धहस्ती मत्तगज उदीक्षितुमपीह देशे काले न युक्तः, किं पुनर्योद्धुमित्यर्थः । विशुद्धवंशेऽभिजनोऽभिजननमेवाग्रहस्तः शुण्डाग्रं

१ कर्मणेति गो. पाठः । २ सा सीतेति गो. सा सीतेति रा. पाठः । ३ निन्दित इति गो. पाठः । ४ कश्चित्त्वां स हि शत्रुरसंशय इति गो. पाठः । ५ शत्रुर्न संशय इति रा. पाठः ।

असौ रणान्तःस्थितिसंधिवालो विदग्धरक्षोमृगहा नृसिंहः ।
सुप्तस्त्वया बोधयितुं न शक्यः शराङ्गपूर्णो निशितासिदंष्ट्रः ॥ ४७ ॥
चापापहारे भुजवेगपङ्के शरोर्मिमाले सुमहाहवौघे ।
न रामपातालमुखेऽतिघोरे प्रस्कन्दितुं राक्षसराज युक्तम् ॥ ४८ ॥
प्रसीद लङ्केश्वर राक्षसेन्द्र लङ्कां प्रसन्नो भव साधु गच्छ ।
त्वं स्वेषु दारेषु रमस्व नित्यं रामः सभार्यो रमतां वनेषु ॥ ४९ ॥
एवमुक्तो दशग्रीवो मारीचेन स रावणः । न्यवर्तत पुरीं लङ्कां विवेश च गृहोत्तमम् ॥ ५० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्ड एकत्रिंशः सर्गः ॥ ३१ ॥

---

यस्य । तेजः प्रताप एव मदो यस्य सः । संस्थितौ समीचीनावस्थानौ दोषौ बाहू एव विषाणे दन्तौ यस्य ॥ ४६ ॥

रा० टी०–विशुद्धेति । हे रावण! विशुद्धवंशाभिजनः विशुद्धवंशोत्पन्नः त्वम् अग्रः श्रेष्ठः हस्तः शुण्डादण्डो यस्य सः तेज एव मदो यस्य सः संस्थितौ विन्यस्तौ दोषौ बाहू एव विषाणौ दन्तौ यस्य सः राघवगन्धहस्ती राघवरूपोत्कटमदविशिष्टो हस्ती उदीक्षितुमपराद्धुमित्यर्थः, न युक्तः ॥ ४६ ॥

गो० टी०–रामे कं गुणं दृष्ट्वैवं वदसीत्याशङ्क्याह–विशुद्धेति । अनेन रामस्य मत्तगजसमाधिरुच्यते विशुद्धवंशे अभिजनः अभिजननं तदेवाग्रहस्तो यस्य स तथा द्वयोरौन्नत्यकरत्वसाम्याद्रूपकं निरूढं तेजोमदः तेजः प्रताप एव मदो यस्य सः तेजोमदयोर्दुर्धर्षताहेतुत्वसाम्याद्रूपकोपपत्तिः उपरितनपदे संस्थितत्वसाम्याद्रूपकम् । संस्थितौ समीचीनसंस्थानवन्तौ दोषौ बाहू एव विषाणे यस्य सः राघव एव गन्धहस्ती मदगजः यस्य गन्धमात्रेणान्ये गजाः पलायन्ते स गन्धहस्तीत्युच्यते उदीक्षितुमपि इहास्मिन् देशे काले च न युक्तः ॥ ४६ ॥

४७ ] ति० टी०–रणान्तःस्थितिरूपा रणमध्यावस्थानरूपाः संधयो बालाश्च यस्य । विदग्धरक्षसां रणचतुराणां राक्षसमृगाणां हन्ता । शररूपैरङ्गैः पूर्णः ॥ ४७ ॥

रा० टी०–असाविति । रणान्तः रणमध्ये स्थितये संधिः संधानमुत्सुकत्वम् एव वालो यस्य विदग्धानि रणचतुराणि रक्षांस्येव मृगास्तान् हन्ति सः शराङ्गपूर्णः शररूपाङ्गैर्व्याप्तः निशितस्तीक्ष्णोऽसिरेव दंष्ट्रा यस्य सः सुप्तः त्वदपकारविषयकोद्योगरहितः नृसिंहः मनुष्यरूपः सिंहः असौ रामः बोधयितुं स्वापकारं कारयितुमित्यर्थः, न शक्यः ॥ ४७ ॥

गो० टी०–पुनरप्यतिशयं वक्तुं रामस्य सिंहसाम्यमाह–असाविति । रणान्तो रणाग्रं तत्र स्थितिर्नासीरावस्थानं सैव संधिवालो यस्य स तथा संदधातीति संधिः । "उपसर्गे घोः किः" इति किः । संधिभूतः लोमसंघभूत इत्यर्थः । वालो लाङ्गूलं यद्वा संधिर्मध्यः तद्गतो वालो लाङ्गूलं यस्य स तथेति वा सिंहस्य लाङ्गूलं क्रोधदशायां मध्योपरिप्रदेशे वर्तत इति प्रसिद्धिः । तस्य मृगाणां गर्वहेतुत्वेन रणाग्रस्थितिसाम्यम् । विदग्धानि पटूनि रक्षांस्येव मृगाः तान् हन्तीति तथा ब्रह्मादिव्यतिरिक्तेऽप्युपपदे प्रयोगानुसारात् क्विप् । शराङ्गपूर्णः शरा एवाङ्गानि नखाद्यवयवाः तैः पूर्णः निशितासिरेव दंष्ट्रे यस्य स तथा नृसिंहो नरश्रेष्ठः सिंह इत्यपि ध्वन्यते, यद्वा नृसिंह एव सिंह इत्येकशेषः, यद्वा विद्वन्मानसहंस इतिवत् श्लिष्टरूपकं, यद्वा नृसिंहो रामः पुरुषसिंह इति व्यङ्ग्यम् ॥ ४७ ॥

४८–५० ] ति० टी०–चाप एवापहारः प्राणिप्राणापहारको ग्राहो यस्मिन् । भुजयोः शरग्रहणसंधानमोक्षविषयो वेग एव पङ्को यस्मिन्दुस्तरत्वात्तत्र । शरा एवोर्मिमालास्तरङ्गा यस्मिन् । सुमहानाहव एव ओघो जलं यस्य तस्मिन् । राम एव पातालं पातालप्रविष्टमहार्णवस्तस्य मुखे वडवामुखरूपे । प्रस्कन्दितुं पतितुम् ॥ ४८–५० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्ड एकत्रिंशः सर्गः ॥ ३१ ॥

रा० टी०–चापेति । चाप एव अपहारः हिंसकजन्तुर्यस्मिन् भुजवेगपङ्के भुजवेग एव पङ्कः कर्दमो यस्मिन् शरा एव ऊर्मिमालास्तरङ्गसमूहा यस्मिन् तस्मिन् सुमहाहवः संग्राम एव ओघो गङ्गाजलवेगो यस्मिन् तस्मिन् अतिघोरे अतिभयङ्करे रामपातालमुखे प्रस्कन्दितुं संस्खलितुं न युक्तम् ॥ ४८ ॥

गो० टी०–सिंहाभिमुखगमनेऽपि दैवादृष्टिवैषम्यान्निवर्तितुं शक्यं न तु राममहाहवगमन इत्याशयेन रामस्य पातालसाम्यमाह–चापेति । चाप एवावहारो ग्राहो यस्मिन् स तथा । 'ग्राहोऽवहारः' इत्यमरः अनेन पतनकाल एव ग्रहणसामर्थ्युक्ता । भुजवेगः शरमोक्षणवेगः स एव पङ्को यस्य स तथा अनेन मज्जने निर्गमयोग्यतोक्ता । शरा एवोर्मिमाला तरङ्गपङ्क्तिर्यस्य स तथा अनेन मज्जनसामर्थ्युक्ता । सुमहाहव एव ओघो जलपूरो यस्य स तथा अनेन दुस्तरत्वमु-

---

१ युक्त इति गो. पाठः । २ अवहारे इति गो. पाठः ।

## द्वात्रिंशः सर्गः ।

खरादिवधेन प्रत्यक्षीकृतरामविक्रमाप्यशिथिलेर्ष्याकालुष्या शूर्पणखा लङ्कामेत्य रावणाय स्ववैरूप्यं दर्शयति ।

ततः शूर्पणखा दृष्ट्वा सहस्राणि चतुर्दश । हतान्येकेन रामेण रक्षसां भीमकर्मणाम् ॥ १ ॥
दूषणं च खरं चैव हतं त्रिशिरसं रणे । दृष्ट्वा पुनर्महानादान्ननाद जलदोपमा ॥ २ ॥
सा दृष्ट्वा कर्म रामस्य कृतमन्यैः सुदुष्करम् । जगाम परमोद्विग्ना लङ्कां रावणपालिताम् ॥ ३ ॥
सा ददर्श विमानाग्रे रावणं दीप्ततेजसम् । उपोपविष्टं सचिवैर्मरुद्भिरिव वासवम् ॥ ४ ॥
आसीनं सूर्यसंकाशे काञ्चने परमासने । रुक्मवेदिगतं प्राज्यं ज्वलन्तमिव पावकम् ॥ ५ ॥
देवगन्धर्वभूतानामृषीणां च महात्मनाम् । अजेयं समरे घोरं व्यात्ताननमिवान्तकम् ॥ ६ ॥

---

क्रम । अतिघोरे राम एव पातालं महाबिलं तस्य मुखे मध्ये प्रस्कन्दितुं पतितुं न युक्तम् ॥ ४८ ॥

रा० टी०–प्रसीदेति । हे लङ्केश्वर ! त्वं प्रसीद अत एव लङ्कां प्रसन्नः प्रासादको भव अत एव साधु सुमार्गं गच्छ प्राप्नुहि । सुमार्गमेवाह–त्वं स्वेषु दारेषु नित्यं रमस्व सभार्यो रामः वनेषु रमताम्। प्रसन्न इत्यत्र अन्तर्भावितणिजर्थः पूर्वं कर्मणोऽविवक्षया " गत्यर्थ–"इति कर्तरि निष्ठा ॥ ४९ ॥

रा० टी०–एवमिति । मारीचेन एवमुक्तः स रावणः पुरीं लङ्कां न्यवर्तत प्रावर्तत गृहोत्तमं मुख्यं स्वगृहं विवेश च॥५०॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

गो० टी०–एवं वस्तुस्थितिमुक्त्वा प्रेमातिशयेन पुनः पुनः सान्त्वयति–प्रसीदेति ॥ ४९ ॥ ५० ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने एकत्रिंशः सर्गः ॥ ३१ ॥

---

१ ] ति० टी०–तत इति ॥ १ ॥

२–४ ] ति०टी०–महानादान्ननाद शोकादिति शेषः ॥२–४॥

रा० टी०–मारीचोपदिष्टरावणकर्तृकस्वगृहगमनानन्तरकालिकं वृत्तान्तमाह–तत इत्यादिभिः । जलदोपमा शूर्पणखा एकेन रामेण रक्षसां चतुर्दशसहस्राणि हतानि दृष्ट्वा दूषणादिकं च हतं दृष्ट्वा ततस्तस्माद्धेतोः महानादं यथा भवति तथा ननाद शोकसूचकशब्दं चकार। श्लोकद्वयमेकान्वयि॥१॥२॥

गो० टी०–तपोबाहुबलोपेतं सर्वभूतभयंकरम् ।
यो हनिष्यति दुर्बुद्धिं रावणं सोऽस्तु मे मुदे ॥

ततः शूर्पणखीत्यादि । शूर्पणखीत्यार्षो ङीषादिः महानादमिति क्रियाविशेषणम् ॥ १ ॥ २ ॥

रा० टी०–सेति । सा शूर्पणखा अन्यैः सुदुष्करं रामस्य कृतं कर्म दृष्ट्वा रावणपालितां लङ्कां परमोद्विग्ना सती जगाम॥३॥

गो० टी०–सेति । कृतं कर्म पर्याप्तं कर्म परमोद्विग्ना अत्यन्तभीता ॥ ३ ॥

रा० टी०–सेति । सा शूर्पणखा मरुद्भिर्देवैर्वासवमिन्द्रमिव सचिवैः उपोपविष्टं दीप्ततेजसं रावणं विमानाग्रे ददर्श॥४॥

गो० टी०–सा ददर्शेत्यादि । विमानाग्रे पुष्पकविमानाग्रे उपोपविष्टम् उपोपेत्येकनिपातः उपनिविष्टमित्यर्थः मरुद्भिः देवैः रुक्मवेदिगतं हिरण्येष्टकाचितवेदिगतम् । तदुक्तमापस्तम्बेन–" सावित्रं स्वर्गकामश्चिन्वीत पञ्चाशीतिशतं हिरण्येष्टकाः " इत्यादिना । प्रभूतमाज्यं यस्य तं प्राज्यं प्रभूतेनाज्येन वर्धितमित्यर्थः, अत एव ज्वलन्तं विमर्देषु युद्धेषु वज्राशनिकृतव्रणमित्यनेन तदवध्यत्वमुक्तम् उद्घृष्टम् उल्लेखनं भावे क्तः तेन जातो यः किणः तदङ्कितवक्षसं विंशद्भुजं विंशतिभुजं दर्शनीयपरिच्छदं दर्शनीयच्छत्रचामरादिकं स्निग्धवैडूर्यैः कान्तियुक्तवैडूर्यरत्नैः आभरणस्थैः संकाशं भासमानं सुभुजं दीर्घवृत्तभुजं विष्णुचक्रनिपातैरित्यत्र ताडितमित्यनुषज्यते क्षोभणं क्षोभकर्तारं योक्तारं प्रयोक्तारं यज्ञेति उच्छेत्तारमित्यत्र उच्छात्रवर्तित्वमुक्तम् अत्र परयज्ञध्वंसकरत्वम् । भोगवतीं सर्पनगरीं पराजित्य बलात्कृत्येति यावत् नरवाहनं कुबेरं नलिनीं कुबेरस्य पुष्करिणीं नन्दनं वनम् इन्द्रोद्यानं देवोद्यानानि नन्दनवनादन्यानि उत्तिष्ठन्तौ उद्यन्तौ उपजहार पूजोपकरणानि चकार देवदानवेति देवादिभिः कर्तृभिः मृत्युतः मृत्योः षष्ठ्यर्थे तसिः अभयं भयाभावः अस्तीति गम्यमानत्वादप्रयोगः मनुष्यादृते मनुष्यं विना मनुष्यात्तु भयमस्तीत्यर्थः, मन्त्रैरिति अध्वरेषु यागेषु हविर्दानेषु सोमाभिषवशालासु मन्त्रैः प्रातरनुवाकग्रावस्तोत्रादिभिः करणैः द्विजातिभिः कर्तृभिः अभिषुतं क्षरितं सोमम् उपहन्ति होमकाले नाशयतीत्यर्थः । आप्तयज्ञहरम् आप्तान् दक्षिणाकालं प्राप्तान् यज्ञान् हरतीति तथा कर्कशं निर्दाक्षिण्यं निरनुक्रोशं निर्दयं रावणं रावकं सा ददर्श महाबलमित्युपसंहारः । अतो न सर्गादिस्थेन ददर्शेतिपदेन पौनरुक्त्यम् ॥ ४–२१ ॥

५–६ ] ति० टी०–रुक्मवेदिं प्राप्तं हिरण्येष्टकचितां वेदिं प्राप्तम् । प्राज्यं भूर्याज्यहोमवन्तम् अत एव ज्वलन्तम् ॥५॥६॥

रा० टी०–रावणं वर्णयन्नाह–आसीनमित्यादिभिः । काञ्चने स्वर्णनिर्मिते सूर्यसंकाशे परमासने आसीनं रुक्मवेदिगतं

---

१ णखीति गो. पाठः । २ त्रिशिरसा सहेति गो. पाठः । ३ नादमिति गो. रा. पाठः । ४ ययेति गो. पाठः । ५ शूरमिति गो. पाठः ।

देवासुरविमर्देषु वज्राशनिकृतव्रणम् । ऐरावतविषाणाग्रै[1]रुत्कृष्टकिणवक्षसम् ॥ ७ ॥
विंशद्भुजं दशग्रीवं दर्शनीयपरिच्छदम् । विशालवक्षसं वीरं राजलक्षणल[2]क्षितम् ॥ ८ ॥
[3]नद्धवैदूर्यसंकाशं तप्तकाञ्चनभू[4]षणम् । सुभुजं शुक्लदशनं महास्यं पर्वतोपमम् ॥ ९ ॥
विष्णुचक्रनिपातैश्च शतशो देवसंयुगे । अन्यैः श[5]स्त्रैः प्रहारैश्च महायुद्धेषु ताडितम् ॥ १० ॥
[6]अहताङ्गैः समस्तैस्तं[7] देवप्रहरणैस्तदा । अक्षोभ्याणां समुद्राणां क्षोभणं क्षिप्रकारिणम् ॥ ११ ॥
क्षेप्तारं [8]पर्वताग्राणां सुराणां च प्रमर्दनम् । उच्छेत्तारं च धर्माणां परदाराभिमर्शनम् ॥ १२ ॥
सर्वदिव्यास्त्रयोक्तारं यज्ञविघ्नकरं सदा । पुरीं भोगवतीं ग[10]त्वा पराजित्य च वासुकिम् ॥ १३ ॥
तक्षकस्य प्रियां भार्यां पराजित्य जहार यः । कै[11]लासं पर्वतं गत्वा विजित्य नरवाहनम् ॥ १४ ॥
विमानं पुष्पकं तस्य कामगं वै जहार यः । वनं चैत्ररथं दिव्यं नलिनीं नन्दनं वनम् ॥ १५ ॥
विनाशयति यः क्रोधाद्देवोद्यानानि वीर्यवान् । चन्द्रसूर्यौ महाभागावुत्तिष्ठन्तौ परंतपौ ॥ १६ ॥
निवारयति बाहुभ्यां यः शैलशिखरोपमः । दशवर्षसहस्राणि तपस्तप्त्वा महावने ॥ १७ ॥
पुरा स्वयंभुवे धीरः शिरांस्युपजहार यः । देवदानवगन्धर्वपिशाचपतगोरगैः ॥ १८ ॥

---

हिरण्येष्टकाचितां वेदिप्राप्तां प्राज्यं बह्वाज्यहोमवन्तमत एव पावकमिव ज्वलन्तम् ॥ ६ ॥

रा० टी०–देवादीनां समरे अजेयं व्यात्ताननं प्रसारितवदनमन्तकमिव घोरं भयङ्करम् ॥ ६ ॥

७ ] ति० टी०–विमर्दो युद्धम् । वज्राशनिकृतव्रणमित्यनेन तदवध्यत्वमुक्तम् । ऐरावतदन्ताग्रैरुत्कृष्टं विलेखनं तेन जातो यः किणस्तदङ्कितवक्षसम् ॥ ७ ॥

रा० टी०–देवासुरविमर्देषु देवरक्षःसङ्ग्रामेषु वज्राशनिकृतव्रणं मणिविशेषसंलग्नाशनिकृतव्रणविशिष्टम् ऐरावतविषाणाग्रैः ऐरावतदन्ताग्रभागैः उत्कृष्टेन भेदनेन यः किणः दन्ताकारव्रणः तद्युक्तं वक्षो यस्य तम् ॥ ७ ॥

८ ] ति० टी०–परिच्छदश्छत्रचामरालंकरणादीनि ॥ ८ ॥

रा० टी०–विंशद्भुजं विंशतिसंख्याकभुजविशिष्टं दशग्रीवं दशसंख्याकग्रीवाविशिष्टं दर्शनीयाः परिच्छदाः छत्रचामरादयो यस्य तम् ॥ ८ ॥

९–१० ] ति० टी०–वैदूर्यं श्यामरक्तम् श्याममित्यन्ये । स्वशरीरनद्धवैदूर्यकान्तिसदृशशरीरकान्तिमित्यर्थः । 'स्निग्धवैदूर्य–' इति पाठो बहुलम् ॥ ९ ॥ १० ॥

रा० टी०–नद्धम् आभरणतया शरीरे संलग्नं यत् वैदूर्यमणिविशेषः तत्संकाशं तद्वर्णसदृशवर्णविशिष्टं महास्यं बृहदाननविशिष्टम् । 'स्निग्धवैदूर्य–' इति पाठो बहुलमिति भट्टाः ॥ ९ ॥

रा० टी०–देवसंयुगे महायुद्धेषु विष्णुमात्रसङ्ग्रामेषु च शतशो विष्णुचक्रनिपातैः अन्यैश्चक्रभिन्नैः शस्त्रप्रहारैश्च ताडितम् ॥ १० ॥

११–१२ ति० टी०–क्षोभणं क्षोभकर्तारम् ॥ ११ ॥ १२ ॥

रा० टी०–समस्तैः देवप्रहरणैः देवानामायुधैः आहताङ्गम् आहतानि ताडितानि अङ्गानि यस्य तम्, अक्षोभ्याणां क्षोभयितुमशक्यानां समुद्राणां क्षोभणं क्षिप्रकारिणं झटिति सर्वकार्यप्रवर्तकम् ॥ ११ ॥

रा० टी०–धर्माणामुच्छेत्तारं निवर्तकमत एव परदाराभिमर्शनम् ॥ १२ ॥

१३–१४ ] ति० टी०–परदाराभिमर्शनं विवृणोति–पुरीमिति ॥ १३ ॥ १४ ॥

रा० टी०–सर्वदिव्यास्त्रयोक्तारं सर्वदिव्यास्त्राणां तत्प्रयोगाणां योक्तारं कर्तारम्, यः भोगवतीं नागस्वामिकां पुरीं गत्वा वासुकिं पराजित्य तक्षकस्य तक्षकं च पराजित्य तक्षकस्य प्रियां भार्यां जहार । तक्षकस्येत्युभयान्वयि ॥ १३ ॥

रा० टी०–कैलासं गत्वा नरवाहनं कुबेरं विजित्य कामगं तस्य पुष्पकं नाम विमानं यो जहार ॥ १४ ॥

१५ ] ति० टी०–नलिनीं चैत्ररथवनमध्यवर्तिनीं सरसीम् ॥ १५ ॥

रा० टी०–चैत्ररथं तत्संज्ञकं वनं कुबेरकाननं नलिनीं तदन्तर्वर्तिसरसीं च नन्दनं तत्संज्ञकं वनमिन्द्रकाननं च देवोद्यानानि च यो विनाशयति ॥ १५ ॥

१६–१७ ] ति० टी०–उत्तिष्ठन्तावुदयन्तौ ॥ १६ ॥ १७ ॥

रा० टी०–चन्द्रेति । शैलशिखरोपमो यः उत्तिष्ठन्तौ चन्द्रसूर्यौ बाहुभ्यां निवारयति ॥ १६ ॥

रा० टी०–दशवर्षसहस्राणि तपस्तप्त्वा स्वयंभुवे ब्रह्मणे शिरांसि य उपजहार बलित्वेन प्रापयामास ॥ १७ ॥

१८ ] ति० टी०–उपजहारोपहारत्वेन दत्तवान् ॥ १८ ॥

---

१ उद्घृष्टेति गो. पाठः । २ शोभितमिति गो. पाठः । ३ स्निग्धेति गो. पाठः । ४ कुण्डलमिति गो. पाठः । ५ शस्त्रप्रहारैरिति गो. रा. पाठः । ६ आहताङ्गमिति गो.रा.पाठः । ७ चेति गो.पाठः । ८ तथेति गो.पाठः । ९ पर्वतेन्द्राणामिति गो. पाठः । १० प्राप्येति गो.पाठः । ११ कैलासपर्वतमिति गो.पाठः ।

अभयं यस्य सङ्ग्रामे मृत्युतो मानुषादृते । मन्त्रैरभिष्टुतं पुण्यमध्वरेषु द्विजातिभिः ॥ १९ ॥
हविर्धानेषु यः सोममुपहन्ति महाबलः । प्राप्तयज्ञहरं दुष्टं ब्रह्मघ्नं क्रूरकारिणम् ॥ २० ॥
कर्कशं निरनुक्रोशं प्रजानामहिते रतम् । रावणं सर्वभूतानां सर्वलोकभयावहम् ॥ २१ ॥
राक्षसी भ्रातरं क्रूरं सा ददर्श महाबलम् । तं दिव्यवस्त्राभरणं दिव्यमाल्योपशोभितम् ॥ २२ ॥
आसने सूपविष्टं तं काले कालमिवोद्यतम् । राक्षसेन्द्रं महाभागं पौलस्त्यकुलनन्दनम् ॥ २३ ॥
उपगम्याब्रवीद्वाक्यं राक्षसी भयविह्वला । रावणं शत्रुहन्तारं मन्त्रिभिः परिवारितम् ॥ २४ ॥

तमब्रवीद्दीप्तविशाललोचनं प्रदर्शयित्वा भयलोभमोहिता ।
सुदारुणं वाक्यमभीतचारिणी महात्मना शूर्पणखा विरूपिता ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे द्वात्रिंशः सर्गः ॥ ३२ ॥

## त्रयस्त्रिंशः सर्गः ।

दाशरथिपराक्रमाश्रयं जनस्थानवृत्तं निवेदयन्ती शूर्पणखा रावणे राजगुणराहित्यमारोप्य सदःस्थं तमुपालभते ।

ततः शूर्पणखा दीप्ता रावणं लोकरावणम् । अमात्यमध्ये संक्रुद्धा परुषं वाक्यमब्रवीत् ॥ १ ॥

रा० टी०–मानुषात् नित्यनराकृतिपरमात्मनः ऋते विना मृत्युतो मरणात् यस्याभयमत एव देवादिभिश्चाभयम् ॥ १८ ॥

१९ ] ति० टी०–यस्य सङ्ग्रामे मृत्युतोऽभयम् । मनुष्यातिरिक्ततो मरणभयहीन इत्यर्थः । मन्त्रैः प्रातरनुवाकग्रावस्तोत्रादिभिरभिष्टुतम् ॥ १९ ॥

रा० टी०–हविर्धानेषु सोमसवनकर्मविशिष्टेषु अध्वरेषु यागेषु द्विजातिभिः कर्तृभिः मन्त्रैरभिष्टुतं सोमं चन्द्रमसं यो महाबलः उपहन्ति तम् ॥ १९ ॥

२०] ति० टी०–सोमं हविर्धानेषु सोमाभिषवशालासूपहन्ति नाशयति । प्राप्तान्दक्षिणाकालं प्राप्तान्यज्ञान्हरति तम् ॥ २० ॥

२१]ति०टी०–सर्वभूतानां रावणमाक्रोशशब्दकारिणम् २१

रा० टी०–प्राप्तयज्ञहरम् आसन्नसमाप्तिकालिकयागविध्वंसकमत एव क्रूरकारिणम् अत एव कर्कशम् अतिरूक्षम् अत एव निरनुक्रोशं दयारहितम् अत एव जनानामहिते रतम् अत एव सर्वलोकभयावहं क्रूरं भ्रातरं रावणं राक्षसी सा शूर्पणखा ददर्श । सार्धसप्तदशश्लोक एकान्वयी ॥ २० ॥ २१ ॥

२२ ] ति० टी०–राक्षसी शूर्पणखा ॥ २२ ॥

२३-२४ ] ति० टी०–काले प्रलयकाले पौलस्त्या राक्षसाः ॥ २३ ॥ २४ ॥

रा० टी०–तमिति । काले प्रलयसमये उद्यतं प्राप्तं प्रसिद्धं कालं महामृत्युमिव आसने सूपविष्टं राक्षसेन्द्रं मन्त्रिभिः परिवारितं तं रावणम् उपगम्याब्रवीत् । सार्धश्लोकद्वयमेकान्वयि ॥ २२-२४ ॥

गो० टी०–तमित्यादि । कालकालं मृत्योरपि मृत्युम् उद्यतम् उद्युक्तं पौलस्त्यानां कुलं नन्दयतीति तथा॥२२-२४॥

२५ ] ति० टी०–उपगम्याब्रवीदित्युक्तं तस्य विवरणम्–तमिति । प्रदर्शयित्वा स्वकं वैरूप्यमिति शेषः । भयं राक्षसवधेन रामजम् । लोभस्तत्सौन्दर्यात्तद्विषयस्ताभ्यां मोहिता। अभीतं यथा भवति तथा सर्वलोकेषु चरति तच्छीला ॥ २५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे द्वात्रिंशः सर्गः ॥ ३२ ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–तमिति । दीप्ते प्रकाशिते विशाले लोचने यस्य तं रावणं भयलोभमोहिता भयेन राक्षसविनाशजनितभीत्या लोभेन अतिसुन्दररामविषयकप्राप्त्युत्कटेच्छया च मोहिता कर्तव्यविषयकाविवेकं प्राप्ता अभीतचारिणी अभीताचरणशीला महात्मना विरूपिता शूर्पणखा प्रदर्शयित्वा रामकृतं स्ववैरूप्यं प्रदर्श्य सुदारुणं वाक्यमब्रवीत्॥२५॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे द्वात्रिंशः सर्गः ॥ ३२ ॥

गो० टी०–पुनः सर्गान्ते संग्रहश्लोकः—तमिति । प्रदर्शयित्वा स्वकं वैरूप्यमिति शेषः । विरूपितेत्युक्तेः अभीततया सर्वपुरुषेषु सर्वलोके च चारोऽस्या अस्तीति सा ॥ २५॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने द्वात्रिंशः सर्गः॥ ३२ ॥

१ ] ति० टी०–तत इति ॥ १ ॥

१ आप्तयज्ञहरं क्रूरमिति गो. पाठः । २ दुष्टचारिणमिति गो.पाठः । ३ शूरमिति गो. पाठः । ४ च कालकालमिति गो. पाठः । ५ एतदाद्यर्धद्वयं व्यत्यस्तं गो. पाठे । ६ अभिगम्येति गो. पाठः । ७ मोहमूर्छितेति गो. पाठः ।

प्रमत्तः कामभोगेषु स्वैरवृत्तो निरङ्कुशः । समुत्पन्नं भयं घोरं बोद्धव्यं नावबुध्यसे ॥ २ ॥
सक्तं ग्राम्येषु भोगेषु कामवृत्तं महीपतिम् । लुब्धं न बहु मन्यन्ते श्मशानाग्निमिव प्रजाः ॥ ३ ॥
स्वयं कार्याणि यः काले नानुतिष्ठति पार्थिवः । स तु वै सह राज्येन तैश्च कार्यैर्विनश्यति ॥ ४ ॥
अयुक्तचारं दुर्दर्शमस्वाधीनं नराधिपम् । वर्जयन्ति नरा दूरान्नदीपङ्कमिव द्विपाः ॥ ५ ॥
ये न रक्षन्ति विषयमस्वाधीनं नराधिपाः । ते न वृद्ध्या प्रकाशन्ते गिरयः सागरे यथा ॥ ६ ॥
आत्मवद्भिर्विगृह्य त्वं देवगन्धर्वदानवैः । अयुक्तचारश्चपलः कथं राजा भविष्यसि ॥ ७ ॥
त्वं तु बालस्वभावश्च बुद्धिहीनश्च राक्षस । ज्ञातव्यं तन्न[२] जानीषे कथं राजा भविष्यसि ॥ ८ ॥

---

रा० टी०—संदर्भशुद्धये पुनस्तदेवाह—तत इति । दीना शूर्पणखा अमात्यमध्ये परुषं वाक्यमब्रवीत् ॥ १ ॥

गो० टी०—अमर्यादो भृशं मूर्खो वध्यो यस्य निशाचरः ।
तमहं नीतिसंपन्नं रघुनाथं समाश्रये ॥

ततः शूर्पणखेत्यादि । दीना रामपरिभूतत्वात् स्वपरिभवदर्शनेऽपि भ्रातुर्निश्चलतया संक्रुद्धा ॥ १ ॥

२ ] ति० टी०—कामभोगेषु प्रमत्तोऽतिशयप्रसक्तः । निरङ्कुशः सन्बोद्धव्यं नावबुध्यस इत्यन्वयः॥ २ ॥

रा० टी०—तद्वचनाकारमाह—प्रमत्त इति । कामभोगेषु प्रमत्तः प्रसक्तः अत एव निरङ्कुशः नीतिमर्यादारहितः अत एव स्वैरवृत्तः यथेष्टाचरणस्त्वं बोद्धव्यं ज्ञातव्यं समुत्पन्नं घोरं भयं नावबुध्यसे ॥ २ ॥

गो० टी०—प्रमत्त इति । कामभोगेषु स्वैरवृत्तः स्वतन्त्रः सदा कामपरवश इत्यर्थः, निरङ्कुशः कामभोग एव निष्प्रतिबन्धः घोरं भयं शृण्वतामपि भयंकरमित्यर्थः, बोद्धव्यं चारमुखेनेति शेषः ॥ २ ॥

३ ] ति० टी०—हेयोपादेयराजगुणानाह रावणस्य गुणहीनत्वं वक्तुम्—सक्तमिति । ग्राम्यभोगः स्त्र्यादिभोगः । तदेवाह—कामवृत्तमिति । कामचेष्टापरम् लुब्धं भोगलोलुपम् । श्मशानाग्निमिव अस्पृश्यत्वेन सादृश्यम् ॥ ३ ॥

रा० टी०—सक्तमिति । ग्राम्येषु अनभिज्ञजनसंबन्धिषु भोगेषु स्त्र्यादिप्रसङ्गेषु सक्तम् अत एव कामवृत्तं यथेष्टाचरणं लुब्धं महीपतिं श्मशानाग्निमिव प्रजाः न बहुमन्यन्ते ॥ ३ ॥

गो० टी०—एवं कामवृत्तस्य संभावितां हानिं लोकरीत्या दर्शयति—सक्तमित्यादिना । ग्राम्येषु मैथुनादिषु कामवृत्तं यथेच्छव्यापारम् ॥ ३ ॥

४ ] ति० टी०—तैः कार्यैरननुष्ठितैः ॥ ४ ॥

रा० टी०—स्वयमिति । काले साधनसमये यः पार्थिवः कार्याणि स्वयं न अनुतिष्ठति साधयति स पार्थिवः राज्येन तैः कार्यैश्च सह विनश्यति नाशं प्राप्नोति ॥ ४ ॥

गो० टी०—स्वयमिति । कार्याणि पालनादीनि ॥ ४ ॥

५] ति० टी०—अयुक्तचारमनियोजितचारम् । दुर्दर्शमुचिते काले प्रजाभ्यो दर्शनदानरहितम् । अस्वाधीनं स्त्र्यादिपरतन्त्रम् ५

रा० टी०—अयुक्तेति । अयुक्तचारं न युक्ताः कार्येषु नियोजिताः चाराः येन तम् अत एव दुर्दर्शं दुरवृत्तदर्शनानर्हम् अस्वाधीनं भोगवशमित्यर्थः, नराधिपं नराः नदीपङ्कं द्विपा इव दूरात् वर्जयन्ति ॥ ५ ॥

गो० टी०—अयुक्तचारमिति । अयुक्तचारम् अनियोजितचारं दुर्दर्शम् उचितकाले सभायां प्रजादर्शनप्रदानरहितम् । अस्वाधीनं पत्न्यादिपरतन्त्रं परप्रत्ययनेयबुद्धिं वा पङ्केऽपि विशेषणद्वयं योज्यम् अयुक्तश्चारो यस्मिन् स्वस्य संचारकर्तुरधीनो न भवतीत्यर्थः ॥ ५ ॥

६ ] ति० टी०—विषयं देशम् । अस्वाधीनं स्वभिन्नाधीनम् । पूर्वं स्वाधीनं देशं पश्चात्परायत्तं ये न रक्षन्ति स्वाधीनीकरणेनेति शेषः, ते न प्रकाशन्ते सागरे मग्ना गिरय इव ॥ ६ ॥

रा० टी०—ये इति । ये नराधिपाः अस्वाधीनं स्वानवधानतया स्वाधीनरहितं विषयं देशं न रक्षन्ति ते सागरे निमग्ना इति शेषः, गिरय इव वृद्ध्या स्वसंपत्त्याधिक्येन न प्रकाशन्ते ॥ ६ ॥

गो० टी०—येन रक्षन्तीति । विषयं स्वराज्यं वृद्ध्या वर्तमानयाऽपीति शेषः ॥ ६ ॥

७-८ ] ति० टी०—आत्मवद्भिर्वशीकृतान्तर्बहिरिन्द्रियैः विगृह्य विरुध्य ॥ ७ ॥ ८ ॥

रा० टी०—आत्मेति । आत्मवद्भिः प्रशस्तयत्नविशिष्टैः देवादिभिः सह विगृह्य विग्रहं कृत्वा अयुक्तचारः चपलस्त्वं राजा कथं भविष्यसि ॥ ७ ॥

गो० टी०—आत्मवद्भिरिति । आत्मवद्भिः यत्नवद्भिः स्वत्प्रतीकारदत्तावधानैरित्यर्थः, चपलः विषयचपलः ॥ ७ ॥

रा० टी०—त्वमिति । हे राक्षस! यतस्त्वं हीनबुद्धिः अत एव बालस्वभावः अत एव ज्ञातव्यं न जानीषे अतः राजा कथं भविष्यसि ॥ ८ ॥

गो० टी०—उक्तमेवार्थं पुनरपि प्रलपति रावणस्याग्रहोत्पादनाय—त्वमित्यादिना । बालस्येव स्वभावो विवेकशून्यत्वं यस्य स तथा बुद्धिहीनः विवेकहेतुर्बुद्धिः तया हीनः ॥ ८ ॥

---

१ अस्वाधीना इति गो. पाठः । २ त्विति गो. पाठः ।

येषां चाराश्च कोशश्च नयश्च जयतां वर । अस्वाधीना नरेन्द्राणां प्राकृतैस्ते जनैः समाः ॥ ९ ॥
यस्मात्पश्यन्ति दूरस्थान्सर्वानर्थान्नराधिपाः । चारेण तस्मादुच्यन्ते राजानो दीर्घचक्षुषः ॥ १० ॥
अयुक्तचारं मन्ये त्वां प्राकृतैः सचिवैर्युतैः । स्वजनं च यतः स्थानं निहतं नावबुध्यसे ॥ ११ ॥
चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् । हतान्येकेन रामेण खरश्च सहदूषणः ॥ १२ ॥
ऋषीणामभयं दत्तं कृतक्षेमाश्च दण्डकाः । धर्षितं च जनस्थानं रामेणाक्लिष्टकारिणा ॥ १३ ॥
त्वं तु लुब्धः प्रमत्तश्च पराधीनश्च रांक्षस । विषये स्वे समुत्पन्नं यद्भयं नावबुध्यसे ॥ १४ ॥
तीक्ष्णमल्पप्रदातारं प्रमत्तं गर्वितं शठम् । व्यसने सर्वभूतानि नाभिधावन्ति पार्थिवम् ॥ १५ ॥
अतिमानिनमग्राह्यमात्मसंभावितं नरम् । क्रोधनं व्य ने हन्ति स्वजनोऽपि नराधिपम् ॥ १६ ॥
नानुतिष्ठति कार्याणि भयेषु न बिभेति च । क्षिप्रं राज्याच्च्युतो दीनस्तृणैस्तुल्यो भवेदिह ॥ १७ ॥
शुष्ककाष्ठैर्भवेत्कार्यं लोष्टैरपि च पांसुभिः । न तु स्थानात्परिभ्रष्टैः कार्यं स्याद्वसुधाधिपैः ॥ १८ ॥
उपभुक्तं यथा वासः स्रजो वा मृदिता यथा । एवं राज्यात्परिभ्रष्टः समर्थोऽपि निरर्थकः ॥ १९ ॥

---

९-१० ] ति० टी०-प्राकृतैः राजव्यवहारानर्हदासीदासजनैः ॥ ९ ॥ १० ॥

रा० टी०-येषामिति । येषां नरेन्द्राणां चारादयः अस्वाधीनाः ते प्राकृतैर्जनैः साधारणप्रजाभिः समास्तुल्याः ॥९॥

गो० टी०-येषामिति । स्वपरराष्ट्रकार्याकार्यज्ञापकश्चारः कोशो धनसमृद्धिः नयो नीतिः प्राकृतैर्जनैः साधारणैर्जनैः ॥९॥

रा० टी०-यस्मादिति । नराधिपाः चारेण दूरस्थानर्थान् यस्माद्धेतोः पश्यन्ति तस्मात् राजानो दीर्घचक्षुषः उच्यन्ते॥१०॥

गो० टी०-चारप्रयोजनमाह-यस्मादिति ॥ १० ॥

११-१२ ] ति० टी०-स्वजनं स्वस्य जना यस्मिंस्तत् ॥ ११ ॥ १२ ॥

रा० टी०-चारायुक्तत्वे हेतुं वदन्ती आह-अयुक्तेति । प्राकृतैः प्रकृतिः स्वभाव एव येषां तैः शास्त्रसंस्काररहितैरित्यर्थः, सचिवैर्युतं त्वां मन्ये अत एव अयुक्तचारं मन्ये अत एव निहतं स्वजनं जनस्थानं च त्वं नावबुध्यसे ॥ ११ ॥

रा० टी०-चतुर्दशेति । रक्षसां चतुर्दश सहस्राणि एकेन रामेण हतानि ॥ १२ ॥

गो० टी०-एवं लोकरीत्योक्तं रावणे उपसंहरति-अयुक्तेत्यादिना । जनस्थानं जनस्थानस्थम् ॥ ११ ॥ १२ ॥

१३-१४ ]ति०टी०-कृतं क्षेमं येषु ते कृतक्षेमाः॥१३॥१४॥

रा० टी०-ननु किमर्थं राक्षसा निहता इत्यत आह-ऋषीणामिति । ऋषीणामभयं भयाभावः दत्तं प्रतिज्ञातमत एव दण्डकाः कृतक्षेमा आसन्निति शेषः, अत एव रामेण जनस्थानं धर्षितं विध्वंसितम् ॥ १३ ॥

गो० टी०-स्वजनवधादपि दुःसहं कार्यान्तरमाह-ऋषीणामिति ॥ १३ ॥

रा० टी०-त्वमिति । हे रावण ! प्रमत्तः अत एव लुब्धः अविवेकं प्राप्तः पराधीनः विषयभोगतन्त्रस्त्वं स्वे विषये देशे समुत्पन्नं यद्भयं तन्नावबुध्यसे ॥ १४ ॥

गो० टी०-त्वमिति । लुब्धः चारादीनामभिमताप्रदाता ॥ १४ ॥

१५ ] ति० टी०-तीक्ष्णं स्वामात्यादिविषये तैक्ष्ण्यादिगुणविशिष्टम् । शठो गूढविप्रियकारी तादृशं राजानं सर्वभूतानि भृत्यामात्यादिसर्वप्रजा नाभिधावन्ति तद्रक्षणाय न प्रवर्तते ॥ १५ ॥

रा० टी०-तीक्ष्णमिति । तीक्ष्णत्वादिधर्मविशिष्टं पार्थिवं राजानं व्यसने दुःखेऽपि सर्वभूतानि नाभिधावन्ति तद्रक्षणेद्योगं न कुर्वन्तीत्यर्थः ॥ १५ ॥

गो० टी०-तीक्ष्णमिति । तीक्ष्णं क्रूरं शठं गूढविप्रियकारिणं व्यसने व्यसनकाले सर्वभूतानि भृत्यामात्यादीनि नाभिधावन्ति तद्रक्षणाय न प्रवर्तन्ते ॥ १५ ॥

१६ ] ति० टी०-अग्राह्यं स्वीयैरनुपसर्प्यम् । आत्मसंभावितमात्मना स्वेनैव संभावितं बहुमानं प्राप्तम् । अक्रोधनमस्थाने क्रोधवन्तम् ॥ १६ ॥

रा० टी०-अतीति । अतिमानिनं बहुगर्ववन्तमत एव अग्राह्यं सर्वैर्महद्भिरस्वीकरणीयमत एव आत्मसंभावितं स्वेनैव स्वमहत्त्वादिना चिन्तितं क्रोधनं क्रोधयुक्तं नराधिपं व्यसने दुःखप्राप्तिसमये स्वजनोऽपि हन्ति ॥ १६ ॥

गो० टी०-अतिमानिनमिति । अग्राह्यं सद्भिरिति शेषः, आत्मना स्वेनैव बहुमानं प्राप्तः सोऽयमात्मसंभावितः तं क्रोधिनम् अस्थाने क्रोधवन्तं व्यसने व्यसनकाले स्वजनोऽपि अमात्यादिरपि ॥ १६ ॥

१७-१९ ] ति० टी०-नानुतिष्ठति यस्यामात्यादिस्वजनोऽपीत्याकर्षः, स राज्याच्च्युतो भवेदित्यन्वयः ॥ १७-१९ ॥

---

१ चारश्चेति गो. रा. पाठः । २ वृतामिति गो. युतामिति रा. पाठः । ३ तु जनस्थानं हतं य इति गो. पाठः । ४ जनस्थानमिति रा. पाठः । ५ क्रूरेति गो. पाठः । ६ कर्मणेति गो. रा. पाठः । ७ रावणेति गो. रा. पाठः । ८ महीपतिमिति गो. पाठः । ९ भविष्यतीति गो. पाठः । १० शुष्कैः काष्ठैरिति गो. पाठः ।

अप्रमत्तश्च यो राजा सर्वज्ञो विजितेन्द्रियः । कृतज्ञो धर्मशीलश्च स राजा तिष्ठते चिरम् ॥ २० ॥
नयनाभ्यां प्रसुप्तो वा जागर्ति नयचक्षुषा । व्यक्तक्रोधप्रसादश्च स राजा पूज्यते जनैः ॥ २१ ॥
त्वं तु रावण दुर्बुद्धिर्गुणैरेतैर्विवर्जितः । यस्य तेऽविदितश्चारै रक्षसां सुमहान्वधः ॥ २२ ॥
परावमन्ता विषयेषु सङ्गवान्न देशकालप्रविभागतत्त्ववित् ।
अयुक्तबुद्धिर्गुणदोषनिश्चये विपन्नराज्यो न चिराद्विपत्स्यते ॥ २३ ॥
इति स्वदोषान्परिकीर्तितांस्तया समीक्ष्य बुद्ध्या क्षणदाचरेश्वरः ।
धनेन दर्पेण बलेन चान्वितो विचिन्तयामास चिरं स रावणः ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

---

रा० टी०–नेति । कार्याणि कर्तव्यस्वजनरक्षणानि यो नानुतिष्ठति न करोति अत एव भयेषु प्राप्तस्वजनभीतिषु न बिभेति स पुरुषः क्षिप्रं राज्याच्च्युतः अत एव तृणैः तुल्यो भवेत् सर्वानादरणीयः स्यादित्यर्थः ॥ १७ ॥

रा० टी०–शुष्केति । शुष्ककाष्ठैः लोष्ठैश्च पांशुभिर्धूलीभिश्च कार्यं किंचित्प्रयोजनं भवेत् स्थानात्परिभ्रष्टैर्वसुधाधिपैस्तु कार्यं किंचित्प्रयोजनं न स्यात् ॥ १८ ॥

गो० टी०–नानुतिष्ठतीति । भयेषु भयहेतुषु न बिभेति साशङ्को न वर्तत इत्यर्थः ॥ १७ ॥ १८ ॥

रा० टी०–उपभुक्तमिति । उपभुक्तं परिधृतं वासो वस्त्रं यथा निरर्थकमन्यप्रयोजनासाधकं, मृदिताः परिमर्दिताः स्रजो माला यथा निरर्थिकाः एवं समर्थोऽपि राज्यात्परिभ्रष्टो राजा निरर्थकः । निरर्थक इति लिङ्गवचनविपरिणामेनान्यत्राप्यन्वेति एकत्र शब्दोऽपरत्रार्थो वा ॥ १९ ॥

गो० टी०–उपभुक्तमिति । उपभुक्तवस्त्रादिदृष्टान्तः परेषामयोग्यत्वप्रदर्शनाय ॥ १९ ॥

२० ] ति० टी०–सर्वज्ञः स्वपरसर्ववृत्तान्तज्ञः ॥ २० ॥

रा० टी०–अप्रमत्त इति । अप्रमत्तः अनवधानतारहितः विजितेन्द्रियश्च यो राजा स चिरं तिष्ठते तिष्ठति ॥ २० ॥

गो० टी०–अप्रमत्त इति । चिरं तिष्ठन्तत इत्यत्र आर्षमात्मनेपदम् ॥ २० ॥

२१ ] ति० टी०–प्रसुप्तो वा प्रसुप्तोऽपि । व्यक्तक्रोधप्रसादः फलदानेन ॥ २१ ॥

रा० टी०–नयनाभ्यामिति । यो राजा नयनाभ्यां प्रसुप्तः नयचक्षुषा जागर्ति स व्यक्तक्रोधप्रसादः व्यक्तौ दण्डदानाभ्यां प्रकटितौ क्रोधप्रसादौ यस्य सः जनैः चिरं पूज्यते ॥ २१ ॥

गो० टी०–नयनाभ्यामिति । जागर्ति अप्रमत्तो भवतीत्यर्थः ॥ २१ ॥

२२ ] ति० टी०–अविदितः येन त्वया न ज्ञात इत्यर्थः ॥ २२ ॥

रा० टी०–त्वमिति । हे रावण ! रक्षसां सुमहान्वधः यस्य ते चारैरविदितः स त्वम् एतैः राजोचितैर्गुणैर्विवर्जितः अत एव दुर्बुद्धिरसीति शेषः ॥ २२ ॥

गो० टी०–त्वमिति । यस्य ते येन त्वया अविदित इति छेदः ॥ २२ ॥

२३ ] ति० टी०–परेषामवमन्ता केवलमवमन्तैव न तु तन्नाशविषयबुद्धिः, न चिरात्क्षिप्रं विपत्स्यसे आपदं प्राप्स्यसीत्यर्थः ॥ २३ ॥

रा० टी०–परेति । यो विषयेषु सङ्गवान् अत्यासक्तिविशिष्टः अत एव परावमन्ता सर्वानादरकारी अत एव देशकालप्रविभागतत्त्ववित्र अत एव गुणदोषनिश्चये अयुक्तबुद्धिः न युक्ता बुद्धिर्यस्य सः राजा त्वं न चिराद्विपन्नराज्यः सन् विपत्स्यसे ॥ २३ ॥

गो० टी०–सर्गार्थमेकेन संगृह्णाति–परेति । परावमन्ता शत्रूपेक्षावान् विषयेषु शब्दादिषु सङ्गतः सङ्गवान् नदेशकालप्रविभागतत्त्वविदित्येकं पदं नगनैकादिवन्नसमासः देशकालभेदातत्त्वज्ञ इत्यर्थः, गुणदोषनिश्चये विषये अयुक्तबुद्धिः अनियोजितबुद्धिः अप्रवृत्तबुद्धिरित्यर्थः, न चिरात् क्षिप्रं विपत्स्यसे आपदं प्राप्स्यसीत्यर्थः, त्वमिति शेषः ॥ २३ ॥ २४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

२४ ] ति० टी०–धनेनाक्षयकोशेन, दर्पेण राजत्वाहंकारेण, बलेन प्राणबलेन चतुरङ्गबलेन च चिन्तयामास । मारीचः कलहं निवारयति, एषा कलहार्थं प्रोत्साहयति, किमत्र कर्तव्यमिति विचारयामासेत्यर्थः ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

रा० टी०–इतीति । तया शूर्पणखया इत्यनेन प्रकारेण परिकीर्तितान् बुद्ध्या समीक्ष्य विचार्य धनादिना अन्वितः क्षणदाचरेश्वरः रावणः चिरेण विचिन्तयामास ॥ २४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

---

१ ऽपीति गो. पाठः । २ संगत इति गो. पाठः ।

## चतुस्त्रिंशः सर्गः ।

रामानुबन्धीतिवृत्तं पृच्छन् रावणः शूर्पणखां प्रति तत्कृतकर्णनासच्छेदनकारणं पृच्छति । रामलक्ष्मणसीतागुणाननुवर्णयन्ती सा त्वदर्थं सीतामपहरन्त्यहं लक्ष्मणेन विरूपिताऽतः शीघ्रं सीतामपहरेत्येनं प्रोत्साहयति ।

ततः शूर्पणखां दृष्ट्वा ब्रुवतीं परुषं वचः । अमात्यमध्ये संक्रुद्धः[1] परिपप्रच्छ रावणः ॥ १ ॥
कश्च रामः कथंवीर्यः किंरूपः किंपराक्रमः । किमर्थं दण्डकारण्यं प्रविष्टश्च सुदुस्तरम्[2] ॥ २ ॥
आयुधं किं च रामस्य [3]येन ते राक्षसा हताः । खरश्च निहतः संख्ये दूषणस्त्रिशिरास्तथा ॥ ३ ॥
तत्त्वं[4] ब्रूहि मनोज्ञाङ्गि केन त्वं च विरूपिता । इत्युक्ता राक्षसेन्द्रेण राक्षसी क्रोधमूर्छिता ॥ ४ ॥
ततो रामं यथान्यायमाख्यातुमुपचक्रमे । दीर्घबाहुर्विशालाक्षश्चीरकृष्णाजिनाम्बरः ॥ ५ ॥
कन्दर्पसमरूपश्च रामो दशरथात्मजः । चक्रचापनिभं चापं विकृष्य कनकाङ्गदम् ॥ ६ ॥
दीप्तान्क्षिपति नाराचान्सर्पानिव महाविषान् । नाददानं शरान्घोरान्विमुञ्चन्तं[6] महाबलम् ॥ ७ ॥
न कार्मुकं विकर्षन्तं रामं पश्यामि संयुगे । हन्यमानं तु तत्सैन्यं पश्यामि शरवृष्टिभिः ॥ ८ ॥
इन्द्रेणेवोत्तमं सस्यमाहतं त्वश्मवृष्टिभिः । रक्षसां भीमवीर्याणां[7] सहस्राणि चतुर्दश ॥ ९ ॥
निहतानि शरैस्तीक्ष्णैस्तेनैकेन पदातिना । अर्धाधिकमुहूर्तेन खरश्च सहदूषणः ॥ १० ॥
ऋषीणामभयं दत्तं कृतक्षेमाश्च दण्डकाः ॥ ॥ ११ ॥

१-४ ] ति० टी०-तत इति ॥ १-४ ॥

रा० टी०-शूर्पणखावचनश्रवणानन्तरकालिकं वृत्तान्तमाह-तत इत्यादिभिः । ततः शूर्पणखावचनश्रवणानन्तरकाले अमात्यमध्ये परुषं वचो ब्रुवतीं शूर्पणखां दृष्ट्वा संकुद्धो रावणः परिपप्रच्छ ॥ १ ॥

रा० टी०-तत्प्रश्नाकारमाह-क इत्यादिभिः । रामः कः कस्य पुत्र इत्यर्थः, कथंवीर्यः कीदृक्तेजोविशिष्ट इत्यर्थः, किंरूपः कीदृक्रूपविशिष्टः, दण्डकारण्यं किमर्थं प्रविष्टः ॥ २ ॥

रा० टी०-आयुधमिति । येनायुधेन ते राक्षसाः हताः तत् रामस्यायुधं किम् ॥ ३ ॥

गो० टी०-परगोष्ठीप्रसिद्धानां गुणानामाकरो महान् ।
अनुजो यस्य सौमित्रिस्तमहं राममाश्रये ॥

तत इत्यादि । संकुद्धः शत्रुविषयेऽतीव क्रोधवान् कथंवीर्यः कीदृशवीर्यः येन खरदूषणत्रिशिरःप्रभृतयो राक्षसा निहतास्तादृशं तदीयमायुधं किं किंरूपम् इति परिपप्रच्छेति पूर्वेणान्वयः॥१-३॥

रा० टी०-तत्त्वमिति । हे मनोज्ञाङ्गि ! त्वं केन हेतुना विरूपिता तत्त्वं ब्रूहि । अर्थं पृथक्-इतीति । इत्युक्ता राक्षसी यथान्यायमाख्यातुं कथयितुमुपचक्रमे ॥ ४ ॥

गो० टी०-इतीति । स्पष्टम् ॥ ४ ॥

५]ति०टी०-किंरूप इत्यस्योत्तरम्-दीर्घबाहुरित्यादि५॥

रा० टी०-तदाख्यानमेवाह-दीर्घबाहुरित्यादिभिः । दीर्घबाहुः रामः कन्दर्पसमरूपो दशरथात्मजः दशरथपुत्रश्च । अनेन कः किंरूपश्चेत्यनयोरुत्तरम् ॥ ५ ॥

गो० टी०-रामानुजपरवशहृदयापि तदग्रजकृतमहोन्मादहेतुभूतं रामलावण्यं संग्रहेणाभिधत्ते-दीर्घबाहुरित्यादिना॥५॥

६-९] ति० टी०-कश्च राम इत्यस्योत्तरम्-दशरथात्मजः । कनकाङ्गदं कनकवलयभूषितं चापम् ॥ ६-९ ॥

रा० टी०-शक्रेति । कनकाङ्गदं स्वर्णवलयविशिष्टं चापं विकृष्य दीप्तान् महाविषान् सर्पानिव नाराचान् बाणविशेषान् क्षिपति ॥ ६ ॥

गो० टी०-शक्रेति । कनकाङ्गदं कनकमयपट्टबन्धम्॥६॥

रा० टी०-नेति । शरानाददानं विमुञ्चन्तं कार्मुकं विकर्षन्तं रामं न पश्यामि अत एव अश्मवृष्टिभिः आहतम् उत्तमं सस्यमिव शरवृष्टिभिर्हन्यमानं तत्सैन्यं तु पश्यामि । अर्धचतुष्टयमेकान्वयि ॥ ७-९ ॥

गो० टी०-नाददानमिति । अत्रादानमोचनविकर्षणानि लक्ष्यन्ते वेगातिशयेनादानादिकं न पश्यामि किंतु हननमेवेति भावः । अश्मवृष्टिभिः करकामयवर्षैः ॥ ७ ॥ ८ ॥

रा० टी०-रक्षसामिति । एकेन रामेण रक्षसां चतुर्दश सहस्राणि सहदूषणः खरश्च निहतानि अत एव ऋषीणामभयं दत्तं दण्डकाश्च कृतक्षेमा अभवन्निति शेषः । श्लोकद्वयमेकान्वयि ॥ १० ॥ ११ ॥

गो० टी०-रक्षसामित्यादि । अर्धाधिकमुहूर्तेन घटिकात्रयेण ससैन्यः खरो हत इत्यर्थः ॥ ९ ॥ १० ॥

१० ] ति० टी०-खरश्च सहदूषणो हत इत्यर्थः ॥ १० ॥

११ ] ति० टी०-किमर्थं दण्डकारण्यं प्रविष्ट इत्यस्योत्तरम्-ऋषीणामित्यादि ॥ ११ ॥

१ क्रुद्धामिति गो. पाठः । २ स दुरासदामिति गो. पाठः । ३ निहता येन राक्षसा इति गो. पाठः । ४ अर्धमेतद् गो. नास्ति । ५ तत्त्वमिति गो. पाठः । ६ न मुञ्चन्तं शिलीमुखानिति गो. पाठः । ७ रूपाणामिति गो. पाठः ।

एका कथंचिन्मुक्ताहं परिभूय महात्मना । स्त्रीवधं शङ्कमानेन रामेण विदितात्मना ॥ १२ ॥
भ्राता चास्य महातेजा गुणतस्तुल्यविक्रमः । अनुरक्तश्च भक्तश्च लक्ष्मणो नाम वीर्यवान् ॥ १३ ॥
अमर्षी दुर्जयो जेता विक्रान्तो बुद्धिमान्बली । रामस्य दक्षिणो बाहुर्नित्यं प्राणो बहिश्चरः ॥ १४ ॥
रामस्य तु विशालाक्षी पूर्णेन्दुसदृशानना । धर्मपत्नी प्रिया नित्यं भर्तुः प्रियहिते रता ॥ १५ ॥
सा सुकेशी [1]सुनासोरूः सुरूपा च यशस्विनी । देवतेव वनस्यास्य राजते श्रीरिवापरा ॥ १६ ॥
तप्तकाञ्चनवर्णाभा रक्ततुङ्गनखी शुभा । सीता नाम वरारोहा वैदेही तनुमध्यमा ॥ १७ ॥
नैव देवी न गन्धर्वी न यक्षी न च किंनरी । [2]तथारूपा मया नारी दृष्टपूर्वा महीतले ॥ १८ ॥
यस्य सीता भवेद्भार्या यं च हृष्टा परिष्वजेत् । [3]अभिजीवेत्स सर्वेषु लोकेष्वपि पुरंदरात् ॥ १९ ॥
सा सुशीला वपुःश्लाघ्या रूपेणाप्रतिमा भुवि । तवानुरूपा भार्या [4]सा त्वं च तस्याः [5]पतिर्वरः ॥ २० ॥

---

१२-१३ ] ति० टी०-पूर्ववृत्तं स्ववृत्तं गोपायन्त्याह-एकेति । परिभूय नासाकर्णहीनां कृत्वा ॥ १२ ॥ १३ ॥

रा० टी०-एकेति । स्त्रीवधं शङ्कमानेन महात्मना रामेण एकाहं परिभूय कथंचिन्मुक्ता ॥ १२ ॥

गो० टी०-एकेति । स्त्रीवधं शङ्कमानेन स्त्रीवधो भविष्यतीति शङ्कमानेनेत्यर्थः ॥ ११ ॥

रा० टी०-भ्रातेति । तुल्यविक्रमो महातेजा लक्ष्मणो नाम अस्य भ्राता गुणतः रामनिष्ठातिसौशील्यादेर्हेतोः अनुरक्तः रामविषयकात्यनुरागवान् भक्तः तत्सेवानिरतश्च ॥ १३ ॥

गो० टी०-भ्रातेति । अनुरक्तः अनुरागवान् भक्तः तत्कार्यभजनशीलः दक्षिणो बाहुरित्यनेन सर्वकार्यधुरंधरत्वमुक्तं प्राणत्वरूपणेन निरतिशयप्रेमास्पदत्वम् अनुरक्त इत्यस्य दृष्टान्तोऽयमिति न पुनरुक्तिः ॥ १२ ॥ १३ ॥

१४-१८ ] ति० टी०-रामस्य दक्षिणो बाहुरित्यनेन सर्वतत्कार्यधुरंधरत्वम् । बहिश्चरः प्राण इत्यनेन निरतिशयप्रेमास्पदत्वं सूच्यते ॥ १४-१८ ॥

रा० टी०-अमर्षीति । अमर्षी रामापराधासहनशीलः विक्रान्तः कामचारगमनवान् लक्ष्मण इति शेषः । रामस्य दक्षिणो बाहुरिव सर्वकार्यसाधक इत्यर्थः, बहिश्चरः प्राण इव अतिप्रिय इत्यर्थः ॥ १४ ॥

रा० टी०-रामस्येति । विशालाक्षी विशालनेत्रविशिष्टा भर्तुः प्रियहिते नित्यं रता अत एव भर्तुः नित्यं प्रिया सुकेशी शोभनकेशवती तप्तकाञ्चनवर्णाभा रक्तानि तुङ्गनखानि यस्याः सा तनुमध्यमा अस्य वनस्य अपरा श्रीरिव देवतेव च या राजते सा वरारोहा सीता नाम रामस्य धर्मपत्नी । श्लोकत्रयमेकान्वयि ॥ १५-१७ ॥

गो० टी०-रामस्येति । रामस्य प्रियाऽस्तीत्यन्वयः॥१४॥

गो० टी०-तां वर्णयति—सेत्यादिना । यशस्विनी उक्तरूपादिमत्स्वकीर्तिमती वनस्य देवतेव स्थिता श्रीरिव राजते तप्तकाञ्चनवर्णाभा तप्तकाञ्चनवर्णतुल्या आभा यस्याः सा वैदेही विदेहराजेन पुत्रीकृता ॥ १५ ॥ १६ ॥

रा० टी०-नेति । यथारूपा नारी सीता मया महीतले दृष्टपूर्वा दृष्टं दर्शनं पूर्वं यस्याः सा तथारूपा नारी देव्यादिर्न ॥१८॥

गो० टी०-नैव देवीति । एवंरूपा देवी च न दृष्टपूर्वा गन्धर्वी च न दृष्टपूर्वा यक्षी च न दृष्टपूर्वा किंनरी च न दृष्टपूर्वा एवंरूपा नारी महीतलेऽपि न दृष्टपूर्वा इत्यन्वयः । उत्तरार्धे महीतल इत्यनेन पूर्वार्धे स्वर्गलोक इति सिद्धं देव्यादीनां तत्रैव वाससंभवात्, यद्वा महीतल इति सर्वलोकोपलक्षणम् ॥ १७ ॥

१९-२० ] ति० टी०-यस्य सीता भार्या यं च हृष्टा परिष्वजेत्स एव सर्वेषु कालेषु लोकेषु च पुरंदरादप्यभ्यधिकं जीवेत् । तस्या लक्ष्म्यवतारत्वादिति व्यङ्ग्यम् ॥ १९ ॥ २० ॥

रा० टी०-यस्येति । सीता यस्य भार्या भवेत् अत एव हृष्टा सती यं परिष्वजेत् स पुरुषः सर्वेषु लोकेषु पुरन्दरादप्यधिकमभिजीवेत् ॥ १९ ॥

गो० टी०-यस्येति । परिष्वङ्गं विना भार्यात्वेन स्थिता चेत् सः सर्वेषु लोकेषु सर्वानपि लोकान् अतिजीवेत् अतीत्य जीवेत् सर्वलोकोत्तीर्णपरमसुखमयजीवन इत्यर्थः, परिष्वङ्गाभावेऽपि सदा सन्निधानादिसौख्यादिति भावः, भार्यात्वं विनापि यं सकृत् परिष्वजेत् सः पुरंदरादपि पुरंदरमपि अतिजीवेत् अतिशय्य जीवेत् ॥ १८ ॥

रा० टी०-सेति । सुशीला शोभनशीलवती वपुःश्लाघ्या वपुः श्लाघ्यं स्तुत्यं यस्याः सा रूपेण अप्रतिमा असदृशी सा सीता तव भार्या सा त्वद्भार्या प्रकाशिका अतः तस्याः वरः श्रेष्ठः पतिः पालको भव ॥ २० ॥

गो० टी०-सा सुशीलेति । वपुःश्लाघ्या वपुषा श्लाघ्या सर्वानवद्याङ्गीत्यर्थः ॥ १९ ॥

---

१ सुनासोरुरिति गो० पाठः । २ नैवंरूपेति गो० पाठः । ३ अतीति गो० पाठः । ४ स्यादिति गो० पाठः । ५ तथा पतिरिति गो० पाठः ।

ता तु विस्तीर्णजघनां पीनोत्तुङ्गपयोधराम् । भार्यार्थे तु तवानेतुमुद्यताहं वराननाम् ॥ २१ ॥
विरूपितास्मि क्रूरेण लक्ष्मणेन महाभुज । तां तु दृष्ट्वाद्य वैदेहीं पूर्णचन्द्रनिभाननाम् ॥ २२ ॥
मन्मथस्य शराणां च त्वं विधेयो भविष्यसि । यदि तस्यामभिप्रायो भार्यात्वे तव जायते ॥
शीघ्रमुद्ध्रियतां पादो जयार्थमिह दक्षिणः । [ कुरु प्रियं तथा तेषां रक्षसां राक्षसेश्वर ।
वधात्तस्य नृशंसस्य रामस्याश्रमवासिनः ॥ तं शरैर्निशितैर्हत्वा लक्ष्मणं च महारथम् ।
हतनाथां सुखं सीतां यथावदुपभोक्ष्यसि ॥ ] ॥ २३ ॥
रोचते यदि ते वाक्यं ममैतद्राक्षसेश्वर । क्रियतां निर्विशङ्केन वचनं मम रावण ॥ २४ ॥
विज्ञायैषामशक्तिं च क्रियतां च महाबल । सीता तवानवद्याङ्गी भार्यात्वे राक्षसेश्वर ॥ २५ ॥
निशम्य रामेण शरैरजिह्मगैर्हताञ्जनस्थानगतान्निशाचरान् ।
खरं च दृष्ट्वा निहतं च दूषणं त्वमद्य कृत्यं प्रतिपत्तुमर्हसि ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

---

२१-२२ ] ति० टी०-तवानेतुमुद्यताहमिति मृषावचो रावणसंतोषार्थम् ॥ २१ ॥ २२ ॥

रा० टी-केन त्वं च विरूपिता इत्यस्योत्तरं संकोचात्स्वविषयकप्रीत्युत्पत्तेश्च मृषावचनेनाह-तामिति । वराननां तां सीतां तव भार्यार्थे आनेतुमहमुद्यता अतः क्रूरेण लक्ष्मणेनाहं विरूपितास्मि । सार्धश्लोक एकान्वयी ॥ २१ ॥

रा०टी०-ननु किमर्थमेवं प्रयत्नस्त्वया कृत इत्यत आह-तामिति । तां वैदेहीं दृष्ट्वैव मन्मथस्य शराणां विधेयः लक्ष्यस्त्वं भविष्यसि नितरां चिन्तयिष्यसि एतेन तव प्रियार्थमेवायं यत्नः कृत इति सूचितम् ॥ २२ ॥

गो० टी०-तां त्विति । विस्तीर्णजघनां विशालजघनां तव चेत्यन्वयः ॥ २०—२४ ॥

२३-२४ ] ति० टी०-भार्यात्वे भार्यात्वेन संपादने ॥ २३ ॥ २४ ॥

रा० टी०-यदीति । तस्यां सीतायां भार्यात्वे भरणीयात्वेन स्वीकारे यदि तेऽभिप्राय इच्छाविशेषो जायते तर्हि इहास्मिन् क्षणे जयार्थं दक्षिणः पादः शीघ्रमुद्ध्रियताम् ॥ २३ ॥

रा० टी०-रोचत इति । हे राक्षसेश्वर ! मम एतद्वाक्यं यदि ते रोचते तर्हि निर्विशङ्केन त्वया मम वचनं क्रियताम् ॥ २४ ॥

गो० टी०-रोचत इति । ते तुभ्यम् "रुच्यर्थानां प्रीयमाणः" इति चतुर्थी । निर्विशङ्केन त्वयेति शेषः ॥ २६ ॥

२५ ]ति टी०-एषां रामादीनामशक्तिं तेषां राज्याबभावाबकारात्तव शक्तिं च विज्ञाय सीता तव भार्यात्वे क्रियताम्, भार्यात्वे तद्व्यवहारे यथा विषयो भवति तथा क्रियताम् यत्यतामित्यर्थः ॥ २६ ॥

रा० टी०-विज्ञायेति । हे महाबल ! हे राक्षसेश्वर ! एषां राक्षसानामशक्तिं रामजयकारकशक्त्यभावं विज्ञाय अनवद्याङ्गी सीता तव भार्यात्वे भरणीयात्वे क्रियतां सीता ह्रियतामित्यर्थः, एतेन सीतापहरणे रामः प्राणान्न धारयितेति सूचितम् ॥ २५ ॥

गो० टी०-विज्ञायेति । आत्मशक्तिं स्वबलम् 'शक्तिर्बले प्रभावादौ' इति विश्वः । विज्ञाय पर्यालोच्य बलात् पौरुषेण सीता भार्यार्थे ह्रियताम् ॥ २६ ॥

२६ ] ति० टी०-अथ कृत्यमेतत्कालोचितकृत्यं कर्तुं योग्यं तत्प्रतिपत्तुं निश्चित्य ज्ञात्वा प्रवर्तयितुमर्हसीत्यर्थः॥२६॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

रा० टी०-निशम्येति । रामेण अजिह्मगैः शरैः हतान् जनस्थानगतान् निशाचरान् हतं खरं दूषणं च निशम्य श्रुत्वा अद्य कृत्यं प्रतिपत्तुं निश्चेतुमर्हसि ॥ २६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

गो० टी०-उक्तमर्थं सर्गान्ते पुनः संगृह्णाति-निशम्येति । प्रतिपत्तुं ज्ञातुम् ॥ २७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने चतुस्त्रिंशः सर्गः ॥ ३४ ॥

---

१ श्रोणीपय इति गो. पाठः । २ चेति गो. पाठः । ३ वै इति गो. पाठः । ४ श्लोकद्वयमेतदधिकं गो. पाठे । ५ इहात्मेति गो. पाठः । ६ ह्रियतां बला बलादिति गो. पाठः । ७ सर्वानवद्येति गो. पाठः । ८ भार्यार्थं इति गो. पाठः । ९ बुद्ध्वेति गो. पाठः । १० अत्रेति गो. पाठः ।

## पञ्चत्रिंशः सर्गः ।

निश्चितसीतापहारः सूज्वलपरिच्छदपरिवारितो रथारूढ उत्साही रावणो दक्षिणसागरानूपान्यतिक्रामन्नमृताहरणोद्यतसुपर्णाधिष्ठानं सुभद्रं नाम न्यग्रोधमवलोक्य मारीचाश्रमं प्राप । तेन कृतातिथ्यः पृष्टश्च स्वागमनहेतुं निवेदितुमुपक्रमते ।

ततः शूर्पणखावाक्यं तच्छ्रुत्वा रोमहर्षणम् । सचिवानभ्यनुज्ञाय कार्यं बुद्ध्वा जगाम ह॑ ॥ १ ॥
तत्कार्यमनुगम्यान्तर्यथावदुपलभ्य च । दोषाणां च गुणानां च संप्रधार्य बलाबलम् ॥ २ ॥
इति कर्तव्यमित्येव कृत्वा निश्चयमात्मनः । स्थिरबुद्धिस्ततो रम्यां यानशालां जगाम ह ॥ ३ ॥
यानशालां ततो गत्वा प्रच्छन्नं राक्षसाधिपः । सूतं संचोदयामास रथः संयुज्यतामिति ॥ ४ ॥
एवमुक्तः क्षणेनैव सारथिर्लघुविक्रमः । रथं संयोजयामास तस्याभिमतमुत्तमम् ॥ ५ ॥
कामगं रथमास्थाय काञ्चनं रत्नभूषितम् । पिशाचवदनैर्युक्तं खरैः कनकभूषणैः ॥ ६ ॥

---

१ ] ति० टी०—तत इति । 'शूर्पं शोणितभाजनम्' । 'नख विदूषणे' इति धातुः । शूर्पेण शोणितभाजनेन यज्ञादि सत्क्रियां नखयति विदूषयतीति शूर्पणखेति तीर्थः । शूर्पाकारनखवतीत्यर्थे संज्ञायां शूर्पणखा, अन्यत्र शूर्पणखीति परे । रोमहर्षणं शूर्पणखावाक्यस्य कामविकारजनकतया रोमाञ्चकरत्वं सचिवेभ्यस्तद्वाक्यस्य प्रतिपाद्यं कार्यं बुद्ध्वा तत्संमतिपूर्वकं तत्कर्तव्यत्वेन निर्धार्य तानभ्यनुज्ञाय दत्ताभ्यनुज्ञान्कृत्वा जगाम । मारीचाश्रममिति शेषः ॥ १ ॥

रा० टी०—शूर्पणखावचनश्रवणानन्तरकालिकं रावणवृत्तान्तमाह—तत इत्यादिभिः । ततः शूर्पणखाकथनोत्तरकाले रोमहर्षणं शूर्पणखावाक्यं श्रुत्वा कार्यं स्वकर्तव्यं बुद्ध्वा निश्चित्य सचिवान् अनुज्ञाय जगाम मारीचाश्रममिति शेषः ॥ १ ॥

गो० टी०—यद्वाहनस्य माहात्म्यं सर्वेषां विस्मयावहम् ।
अवतीर्णं रघोर्वंशे तमहं विष्णुमाश्रये ॥

ततः शूर्पणखावाक्यमित्यादि । रोमहर्षणं भयोत्पादकत्वेन रोमाञ्चकरं सचिवमुखेन कार्यं बुद्ध्वा तानभ्यनुज्ञाय विसृज्य ॥१॥

२-३ ] ति० टी०—तत्कार्यं सीतापहाररूपम् । अन्तश्चित्ते अनुगम्योद्दिश्य दोषाणां गुणानां च स्वरूपं यथावदुपलभ्य सीतापहारे एतावन्तो गुणा इति निश्चित्य बलाबलं यथावत्संप्रधार्य इत्येव कर्तव्यमित्यात्मनः स्वस्य निश्चयं कृत्वा अकम्पनशूर्पणखाभ्यामुक्तत्वात्सीताहरणमवश्यं कर्तव्यमिति निश्चित्य यानशालां जगाम ॥ २ ॥ ३ ॥

रा० टी०—तदेव भङ्ग्यन्तरेण वदन्नाह—तदिति । तत् शूर्पणखाबोधितापहरणं कार्यमन्तर्मनसि अनुगम्य संस्थाप्य यथावदुपलभ्य विचार्य च तत्र दोषाणाम् 'अहो दुरन्ता बलवद्विरोधिता' इत्यादीनां गुणानां 'महात्मभिः सह विरोधोऽपि वरम्' इत्यादीनां बलाबलं प्रधार्य विचार्य महात्मभिर्विरोधमेवोत्कृष्टत्वेन स्वीकृत्येत्यर्थः, ततो हेतोः इति इदमपहरणं कर्तव्यमित्येव आत्मनो निश्चयं कृत्वा स्थिरबुद्धिः सन् रावणः रम्यां यानशालां यानस्थितिदेशं जगाम । श्लोकद्वयमेकान्वयि ॥ २ ॥ ३ ॥

गो० टी०—तदित्यादिश्लोकद्वयमेकान्वयम् । अनुगम्य स्वयमनुसंधाय पर्यालोच्येत्यर्थः । यथावदुपलभ्य इदमित्थमिति निश्चित्य पुनरपि दार्ढ्याय गुणदोषप्राबल्यदौर्बल्यविषयचिन्तां निर्णयान्तां दर्शयति—दोषाणां चेति । इदमत्र संप्रधार्य स्वेन चिकीर्षितं सीतापहारलक्षणं कार्यं किं पौरुषेण सुकरम् आहोस्विच्चौर्येण कर्तव्यमिति कतरस्मिन् पक्षे दोषाल्पत्वं गुणभूयस्त्वमिति तत्र पौरुषेण कर्तुमशक्यं खरादियुद्धे रामस्याचिन्त्यपराक्रमत्वेन श्रुतत्वात् उपायपरिकल्पितचौर्याश्रयणे तादात्विकदोषा न लक्ष्यन्ते सीतारहितेन तद्व्यसनिना रामेण कापि हानिर्न संभाव्यते तस्मादयमेव पक्षः सम्यगिति एवं निश्चित्य प्रावर्ततेत्यर्थः । स्थिरबुद्धिः निश्चलबुद्धिः यानशालाम् अश्वशालाम् ॥ २ ॥ ३ ॥

४-५ ] ति० टी०—दुष्टे कर्मणि प्रवृत्तौ वृद्धादिनिरोधशङ्कया प्रच्छन्नं गूढम् ॥ ४ ॥ ५ ॥

रा० टी०—यानेति । प्रच्छन्नं यथा भवति तथा राक्षसाधिपः यानशालां गत्वा रथः संयुज्यतां संयोज्यतामिति सूतं संचोदयामास ॥ ४ ॥

रा० टी०—एवमिति । एवमुक्तो लघुविक्रमः सारथिः तस्य रावणस्याभिमतमिच्छाविषयीभूतमुत्तमं रथं संयोजयामास ॥ ५ ॥

गो० टी०—यानशालामिति । प्रच्छन्न इति प्रकाशश्चेद्वृद्धा मन्दोदर्यादयश्च वारयिष्यन्तीति भावः, यद्वा पौरुषं विहाय चौर्यमार्गाश्रयणं लज्जावहमिति प्रच्छन्नमार्गाश्रयणं यद्वा तत इत्यादि । सचिवान् तदानीं सभास्थितान् विसृज्य स्वयं कार्यं बुद्ध्वेत्यर्थः । अत एव सचिवैः पर्यालोचनाभावात् प्रच्छन्न इत्युक्तम् । अत एव कुम्भकर्णादिभिरुच्यते । सचिवैरमन्त्रयित्वा कृतस्य कथमिदानीं प्रतीकार इति । खरलक्षणं पूर्वमुक्तम् ॥ ४—७ ॥

६ ] ति० टी०—देवयोनिभेदाः पिशाचाः, वदनभागे तत्सदृशैरित्यर्थः ॥ ६ ॥

---

१ स इति गो. पाठः । २ अथेति गो. पाठः । ३ प्रच्छन्न इति गो. पाठः । ४ योज्यतामिति गो. पाठः । ५ काञ्चनमिति गो. पाठः। ६ कामगमिति गो. पाठः । ७ काञ्चनेति गो. पाठः ।

मेघप्रतिमनादेन स तेन धनदानुजः । राक्षसाधिपतिः श्रीमान्ययौ नदनदीपतिम् ॥ ७ ॥
स श्वेतवालव्यजनः श्वेतच्छत्रो दशाननः । स्निग्धवैदूर्यसंकाशस्तप्तकाञ्चनभूषणः ॥ ८ ॥
[2]दशग्रीवो विंशतिभुजो दर्शनीयपरिच्छदः । त्रिदशारिर्मुनीन्द्रघ्नो दशशीर्ष इवाद्रिराट् ॥ ९ ॥
कामगं रथमास्थाय शुशुभे राक्ष[3]साधिपः । विद्युन्मण्डलवान्मेघः सबलाक इवाम्बरे ॥ १० ॥
[4]सशैलसागरानूपं वीर्यवानवलोकयन् । नानापुष्पफलैर्वृक्षैरनुकीर्णं सहस्रशः ॥ ११ ॥
शीतमङ्गलतोयाभिः पद्मिनीभिः समन्ततः । विशालैराश्रमपदैर्वेदिमद्भिरलंकृतम् ॥ १२ ॥
[6]कदल्यटविसंशोभं नारिकेलोपशोभितम् । सालैस्तालैस्तमालैश्च [7]तरुभिश्च सुपुष्पितैः ॥ १३ ॥
[8]अत्यन्तनियताहारैः शोभितं परमर्षिभिः । नागैः सुपर्णैर्गन्धर्वैः किंनरैश्च सहस्रशः ॥ १४ ॥
जितकामैश्च सिद्धैश्च चारणै[9]श्चोपशोभितम् । [10]आजैर्वैखानसैर्माषैर्वालखिल्यैर्मरीचिपैः ॥ १५ ॥
दिव्याभरणमाल्याभिर्दिव्यरूपाभिरावृतम् । क्रीडा[11]रतैर्विधिज्ञाभिरप्सरोभिः सहस्रशः ॥ १६ ॥

७-९ ] ति० टी०-नदनदीपतिः समुद्रः तं तीर्वा ययौ ॥ ७-९ ॥

१० ] ति० टी०-विद्युत्स्थाने आभरणानि, मेघस्थाने रावणः, बलाकास्थाने छत्रम् ॥ १० ॥

रा० टी०-कामगमिति । पिशाचवदनैः पिशाचा देवयोनयः तत्सदृशमुखैः कनकभूषणैः खरैर्युक्तं रत्नभूषितं काञ्चनं कामगं रथमास्थाय राक्षसाधिपतिः धनदानुजो मेघप्रतिमवचनेनोपलक्षितो रावणः नदनदीपतिं समुद्रं ययौ । श्लोकद्वयमेकान्वयि ॥ ६ ॥ ७ ॥

रा० टी०-स इति । श्वेतं शुक्कं वालानां चमरीपुच्छकेशानां व्यजनं यस्य सः श्वेतछत्रः शुल्कच्छत्रविशिष्टः दशाननः दशमुखविशिष्टः दर्शनीयपरिच्छदः दर्शनीयसामग्रीविशिष्टः मुनीन्द्रघ्नः मुनीन्द्राणां घातकः दशशीर्षाद्रिराट्सदृशः राक्षसाधिपो रावणः कामगं रथमास्थाय अम्बरे आकाशे सबलाकः बकपङ्क्तिसहितः विद्युन्मण्डलवान्मेघ इव शुशुभे तत्र सुवर्णाभरणानां विद्युन्मण्डलोपमा छत्रस्य च बलाकोपमा रावणस्य च मेघोपमा । श्लोकत्रयमेकान्वयि ॥ ८-१० ॥

गो० टी०-स श्वेतवालव्यजन इत्यादि । विद्युत्स्थाने आभरणानि मेघस्थाने रावणः बलाकस्थाने अलंकृतरथः ॥ ८--१० ॥

११-१२ ] ति० टी०-शैलसहितसागरानूपं तत्कूलम् तस्यैव वर्णनं नानापुष्पैरित्यादिना ॥ ११ ॥ १२ ॥

रा० टी०-सेति । पुष्पादिभिरवकीर्णं व्याप्तम् ॥ ११ ॥

रा० टी०-शीतमङ्गलतोयाभिः पद्मिनीभिः सरसीभिः वेदिमद्भिः विशालैः आश्रमपदैश्च अलंकृतम् ॥ १२ ॥

गो० टी०-सशैलमित्यादि । सशैलं शैलसहितं सागरानूपं समुद्रतीरं मङ्गलतोयाभिः शुभजलाभिः पद्मिनीभिरिति समावृतमित्यनुकर्षः । आढकिः सूपोपयुक्तधान्यस्तम्बः सुपर्णैः गरुडैः अजैः अयोनिजैः वैखानसैः ब्रह्मनखजैः "ये नखास्ते वैखानसाः" इति श्रुतेः । माषैः माषगोत्रजैः वालखिल्यैः ब्रह्मवालजैः "ये वालास्ते वालखिल्याः" इति श्रुतेः । मरीचिपैः रविकिरणपानव्रतनिष्ठैः अमृताशिभिः देवैश्चेति शेषः, यद्वा ऋतामृताभ्यां जीवेतेत्युक्तायाचितलब्धाशिभिः । 'ऋतमुञ्छशिलं प्रोक्तममृतं स्यादयाचितम्' इति मनुः । प्लवा जलकुक्कुटाः मण्डूका इत्यप्याहुः । वैडूर्यप्रस्तरं वैडूर्यमयाः प्रस्तराः शिलाः यस्मिन् तम् 'पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत्' इत्यमरः । तपसा जितलोकानां पुरुषाणां विमानानीत्यन्वयः । अभिसंपतन् मार्गवशात् प्राप्नुवन् सशैलं नानापुष्पफलैर्वृक्षैरनुकीर्णमित्यारभ्य सागरतेजसा स्निग्धमित्यन्तविशेषणविशिष्टं सागरानूपमवलोकयन् पाण्डुरत्वादिविशेषणविशिष्टानि तपसा जितलोकानां विमानान्यभिसंपतन् गन्धर्वाप्सरसो ददर्शेत्यन्वयः ॥ ११—२० ॥

१३] ति०टी०-कदल्यटविः कदलीवनं तेन शोभावत्॥१३॥

१४ ] ति० टी०-अत्यन्तमतिशयेन पर्णवातादिरूपो नियत आहारो येषां तैः ॥ १४ ॥

रा० टी०-कदल्यटविभिः कदलीवनैः संशोभा यस्य तम् सालादिभिः अत्यन्तनियताहारैः परमर्षिभिः नागादिभिश्चोपशोभितम् ॥ १३ ॥ १४ ॥

१५-१६ ] ति० टी०-अजो ब्रह्मा तत्पुत्रैर्वैखानसैरयोनिजैः प्रसिद्धैः । माषैर्माषसंज्ञकैः ॥ १५ ॥ १६ ॥

रा० टी०-जितकामैः सिद्धैः चारणैश्च आजैः अजस्य

१ कुण्डल इति गो. पाठः । २ विंशद्भुजो दशग्रीव इति गो. दशास्य इति रा. पाठः । ३ ईश्वर इति गो. पाठः । ४ सशैलमिति गो. पाठः । ५ समावृतमिति गो. पाठः । ६ कदल्याढकिसंबाधमिति गो. पाठः । ७ पुष्पितैस्तरुभिर्वृतमिति गो. पाठः । ८ एतदाद्यर्धचतुष्टयं व्यत्यस्तं गो. पाठे । ९ उपेति गो. पाठः । १० अजैरिति गो. पाठः । ११ रतीति गो. रसेति रा. पाठः ।

सेवितं देवपत्नीभिः श्रीमतीभिरुपासितम् । देवदानवसङ्घैश्च चरितं त्वमृताशिभिः ॥ १७ ॥
हंसक्रौञ्चप्लवाकीर्णं सारसैः संप्रसादितम् । वैदूर्यप्रस्तरं स्निग्धं सान्द्रं सागरतेजसा ॥ १८ ॥
[3]पाण्डुराणि विशालानि दिव्यमाल्ययुतानि च । तूर्यगीताभिजुष्टानि विमानानि समन्ततः ॥ १९ ॥
तपसा जितलोकानां कामगान्यभिसंपतन् । गन्धर्वाप्सरसश्चैव ददर्श धनदानुजः ॥ २० ॥
निर्यासरसमूलानां चन्दनानां सहस्रशः । वनानि पश्यन्सौम्यानि घ्राणतृप्तिकराणि च ॥ २१ ॥
[4]अगुरूणां च मुख्यानां वनान्युपवनानि च । [5]तक्कोलानां च जात्यानां [6]फलानां च सुगन्धिनाम् ॥२२॥
पुष्पाणि च तमालस्य गुल्मानि मरिचस्य च । [7]मुक्तानां च समूहानि शुष्यमाणानि तीरतः ॥ २३ ॥
[8]शैलानि प्रवरांश्चैव प्रवालनि[9]चयांस्तथा । काञ्चनानि च [10]शृङ्गाणि राजतानि [11]तथैव च ॥ २४ ॥
प्रस्रवाणि मनोज्ञानि प्रसन्नान्य[12]द्भुतानि च । धनधान्योपपन्नानि स्त्रीरत्नै[13]रावृतानि च ॥ २५ ॥
हस्त्यश्वरथगाढानि नगराणि [14]विलोकयन् । तं समं सर्वतः स्निग्धं मृदुसंस्पर्शमारुतम् ॥ २६ ॥

---

ब्रह्मण इमे तैः, किंच शरीरसंबन्धेनोत्पत्तिरहितैः मानसैरित्यर्थः, आङीषदर्थे। किंच स्वसिद्ध्याऽनेकशरीरधारिभिः वैखानसैः ब्रह्मनखोत्पन्नैः श्रुतिश्च "ये नखास्ते वैखानसाः" इति माषैर्माषाभिधैः वालखिल्यैः ब्रह्मकेशजैः। तथा च श्रुतिः "ये वालास्ते वालखिल्याः" इति मरीचिपैः। किरणमात्रपानकर्तृभिश्च शोभितम् ॥ १६ ॥

रा० टी०–दिव्याभरणमाल्याभिः दिव्याभरणमाल्यविशिष्टाभिः क्रीडारसविधिज्ञाभिः क्रीडारसोत्पादननिपुणाभिः सहस्रशोऽप्सरोभिरावृतम् ॥ १६ ॥

१७ ] ति० टी०–अमृताशिभिरमृतभोजनैः ॥ १७ ॥

रा० टी०–श्रीमतीभिः देवपत्नीभिः सेवितमत एव उपासितं प्रकाशितं देवादिभिश्च चरितम् ॥ १७ ॥

१८–१९ ] ति० टी०–प्लवा मण्डूकाः । वैदूर्यप्रस्तरं वैदूर्यसदृशश्यामप्रस्तरम् । सागरतेजसा सागरोर्मिवैभवेन स्निग्धं सान्द्रं शीतलम् ॥ १८ ॥ १९ ॥

रा० टी०–हंसादिभिः आकीर्णं सारसैः संप्रसादितं संशोभितं वैदूर्यप्रस्तरं वैदूर्यसदृशश्यामप्रस्तरविशिष्टं सागरतेजसा स्निग्धम् अतिस्नेहोत्पादकं सान्द्रं चिक्कणं सशैलसागरानूपं शैलसहितसागरदेशम् ॥ १८ ॥

२० ] ति० टी०–अभिसंपतन्गच्छन्मार्गवशाद्विमानानि गन्धर्वाप्सरसश्च ददर्श ॥ २० ॥

रा० टी०–अभिसंपतन् गच्छन् अवलोकयंश्च सन् धनदानुजो रावणः पाण्डुराणि पाण्डुरवर्णविशिष्टानि विशालानि विस्तीर्णानि दिव्यमाल्ययुतानि तूर्यगीतैः अभिजुष्टानि सेवितानि तपसा जितलोकानां कामगानि समन्ततो विमानानि गन्धर्वाप्सरसश्च ददर्श। श्लोकदशकमेकान्वयि ॥ १९ ॥ २० ॥

२१ ] ति० टी०–निर्यासरूपरसयुक्तमूलानां चन्दनानामित्यर्थः । यद्वा निर्यासरसस्य मूलानामुपादानकारणानां गुग्गुलादिवृक्षाणां चन्दनानां च वनानि पश्यन् ॥ २१ ॥

२२–२३ ] ति० टी०–जात्यानामुत्तमानाम् । तक्कोलाः सुगन्धफला वृक्षविशेषास्तेषां वनानि पश्यन् ॥ २२ ॥ २३ ॥

रा० टी०–निर्यासेति । निर्यासरूपरसविशिष्टानि मूलानि येषां चन्दनानां सौम्यानि घ्राणतृप्तिकराणि सहस्रशो वनानि पश्यन् मुख्यानामगरूणां जात्यानामुत्तमानां फलिनां फलविशिष्टानां सुगन्धिनाम् अङ्कोलानां वृक्षविशेषाणां च वनान्युपवनानि ॥ २१ ॥ २२ ॥

रा० टी०–तमालस्य पुष्पाणि मरिचस्य गुल्मानि च तीरतः तीरे समूहानि समूहवन्ति शुष्यमाणानि मुक्तानि च ॥ २३ ॥

गो० टी०–निर्यासरसमूलानामित्यादिसार्धश्लोकषट्कमेकान्वयम् । निर्यासरसमूलानां हिङ्गुरूपनिर्यासरसयुक्तमूलानां मूलाख्यौषधीविशेषाणां मूलाख्यौषधीमूलाद्धिङ्गुरूपनिर्यासा उत्पद्यन्त इति प्रसिद्धिः । वनानि अकृत्रिमाणि उपवनानि कृत्रिमाणि तक्कोलानां गन्धद्रव्याणां जात्यानां जातिभवानां फलानां जातिफलानामित्यर्थः, सुगन्धिनाम् उपवनानीत्यन्वयः । गुल्मानि स्तम्बान् मरिचस्य मरीचस्य समूहानीति नपुंसकत्वमार्षं शुष्यमाणानि चिरसङ्गतत्वेनानाद्रर्णीत्यर्थः । तीरतः तीरे शैलानीति नपुंसकत्वमार्षं तथा प्रस्रवहृदशब्दयोः प्रस्तरं समूहं निचयं समूहं प्रस्रवाणि प्रस्रवणानि निर्झरानित्यर्थः । गाढानि निबिडानि एवं बहुधा सागरानूपवर्णनं पुनर्बहुदूरमार्गगमनप्रयासेन मारीचोपदेशान्निवर्त्याध्यवसायविशेषं व्यञ्जयितुम् ॥ २१—२६ ॥

२४ ] ति० टी०–शैलानि शिलासमूहान् ॥ २४ ॥

रा० टी०–शैलानि शिलाखण्डानि प्रवरान् श्रेष्ठान् प्रवालनिचयांश्च शृङ्गाणि च ॥ २४ ॥

२५ ] ति० टी०–प्रस्रवाणि निर्झराः ॥ २५ ॥

२६ ] ति० टी०–समं समभूतलं देशम् ॥ २६ ॥

---

१ श्रेयावृतामिति गो. पाठः । २ रम्यं स्निग्धमिति गो. पाठः । ३ पाण्डराणीति गो. पाठः । ४ अगर्वीति गो. रा. पाठः । ५ अङ्कोलानामिति रा. पाठः । ६ फलिनामिति रा. पाठः । ७ मुक्तानीति रा. पाठः । ८ शङ्खानां प्रस्तरमिति गो. पाठः । ९ निचयमिति गो. निचया इति रा. पाठः । १० शैलानीति गो. पाठः । ११ च सर्वशः इति गो. पाठः । १२ ह्रदानीति गो. रा. पाठः । १३ शोभितानीति गो. पाठः । १४ अवेति गो. पाठः ।

अनूपे सिन्धुराजस्य ददर्श त्रिदिवोपमम् । तत्रापश्यत्स मेघाभं न्यग्रोधं मुनिभिर्वृतम् ॥ २७ ॥
समन्ताद्यस्य ताः शाखाः शतयोजनमायताः । यस्य हस्तिनमादाय महाकायं च कच्छपम् ॥ २८ ॥
भक्षार्थं गरुडः शाखामाजगाम महाबलः । तस्य तां सहसा शाखां भारेण पतगोत्तमः ॥ २९ ॥
सुपर्णः पर्णबहुलां बभञ्जाथ महाबलः । तत्र वैखानसा माषा वालखिल्या मरीचिपाः ॥ ३० ॥
अजा बभूवुर्धूम्राश्च संगताः परमर्षयः । तेषां दयार्थं गरुडस्तां शाखां शतयोजनाम् ॥ ३१ ॥
भग्नामादाय वेगेन तौ चोभौ गजकच्छपौ । एकपादेन धर्मात्मा भक्षयित्वा तदामिषम् ॥ ३२ ॥
निषादविषयं हत्वा शाखया पतगोत्तमः । प्रहर्षमतुलं लेभे मोक्षयित्वा महामुनीन् ॥ ३३ ॥
स तुं तेन प्रहर्षेण द्विगुणीकृतविक्रमः । अमृतानयनार्थं वै चकार मतिमान्मतिम् ॥ ३४ ॥
अयोजालानि निर्मथ्य भित्त्वा रत्नगृहं वरम् । महेन्द्रभवनाद्गुप्तमाजहारामृतं ततः ॥ ३५ ॥

रा० टी०—मनोज्ञानि रमणीयानि प्रस्रवणानि निर्झरान् ह्रदानि च धनधान्योपपन्नानि क्षीरत्नैरावृतानि हस्त्यश्वरथगाढानि हस्त्यादिभिः संकुलानि नगराणि च विलोकयन् सर्वतः समं स्निग्धं मृदुसंस्पर्शो मारुतो यस्मिन् तं त्रिदिवोपमं स्वर्गतुल्यं सिन्धुराजस्य अनूपं देशं ददर्श । तत्र कूले मेघाभं मुनिभिर्वृतम् न्यग्रोधं स रावणोऽपश्यत् । श्लोकसप्तकमेकान्वयि ॥ २६–२७ ॥

२७ ] ति० टी०—तत्र समुद्रानूपे ॥ २७ ॥

गो० टी०—यस्य वाहनप्रभावोऽप्यपरिच्छेद्यस्तेन रामेण विरुणद्धि । रावणो मूढ इति परिहसन्नाह—तत्रापश्यदित्यादिना । ताः प्रसिद्धाः ॥ २७ ॥

२८–३३ ] ति० टी०—यस्य दिव्यवटस्य । प्रसङ्गात्तन्माहात्म्यं कविराह—यस्येति षड्भिः श्लोकैः । गरुडोऽमृताहरणप्रस्तावे भक्षार्थं महाकायं गजं कच्छपं चादाय क्वचित्स्थित्वा भक्षणाय यस्य शाखां जगाम, गत्वा च यस्य शाखां भारेण बभञ्ज । तस्या भग्नशाखाया अधो वैखानसाद्या अनेके ऋषयः समागता बभूवुः । तेषां शाखापातेन नाशो मा भूदिति तां शाखां तौ गजकच्छपौ च महाबलत्वादादायान्यत्र जगाम । तदा गच्छन्नेव तौ शाखां चैकपादेन धृत्वान्तरिक्ष एव तदामिषं गजकच्छपरूपं भक्षयित्वा तया शाखया प्रक्षिप्तया निषादविषयं निषाददेशं हत्वा मुनींश्च वधान्मोक्षयित्वा प्रहर्षं लेभे ॥ २८–३३ ॥

रा० टी०—समन्तादिति । यस्य शाखाः समन्तात् शतयोजनमायताः सन्ति महाकायं हस्तिनं कच्छपं चादाय भक्षार्थं यस्य शाखां महाबलो गरुडः आजगाम पर्णबहुलां तस्य तां शाखां पतगोत्तमः सुपर्णः सहसा बभञ्ज । सार्धश्लोकद्वयमेकान्वयि ॥ २८ ॥ २९ ॥

गो० टी०—यस्येति । गरुडः महाकायं महाप्रमाणं हस्तिनं गजं कच्छपं चादाय यस्य शाखामाजगामेत्यन्वयः । भारेण बभञ्ज न तु यत्नेनेत्यर्थः । महागजकच्छपवहनात् भारेण शाखा भग्नाऽभूदित्यर्थः ॥ २८ ॥ २९ ॥

रा० टी०—तत्रेति । तत्र न्यग्रोधे वैखानसादयः परमर्षयः संगताः बभूवुः ॥ ३० ॥

गो० टी०—तत्रेति । तत्र शाखाया अधःप्रदेशे ये सङ्गता मरीचिपाः रविकिरणपानव्रताः धूम्राः धूमपाः तेषां दयार्थं शाखापातेन पीडा माभूदिति तदनुग्रहार्थमित्यर्थः, एकपादेन आदाय अवष्टभ्येत्यर्थः, भक्षयित्वा आकाश एवेति शेषः ॥ ३० ॥ ३१ ॥

रा० टी०—तेषामिति । तेषां परमर्षीणां दयार्थं दयाहेतोः वेगेन भग्नां शतयोजनां तां शाखामुभौ गजकच्छपौ च धर्मात्मा गरुडः एकपादेनादाय तदामिषं भक्षयित्वा शाखया तत्प्रक्षेपेण निषादविषयं निषाददेशं हत्वा महामुनीन् तच्छाखाधोवर्तिपरमर्षीन् मोक्षयित्वा अतुलं प्रहर्षं लेभे अर्धपञ्चकमेकान्वयि ॥ ३१–३३ ॥

गो० टी०—आमिषं गजकच्छपरूपं मांसं निषादविषयं निषादग्रामं शाखया हत्वा तानपि भक्षयित्वा महामुनीन् वैखानसादीन् निषादविषयस्थब्राह्मणान् वा निषादैः पीड्यमानान्वा तद्रक्षणार्थमेव तद्धननमिति भावः । तादृशशाखारूपप्रहरणलाभेन तदैव मुनिबाधकनिषाददेशं सर्वं हत्वा शिष्टपालनाद्दुष्टनिग्रहाच्चातुलं प्रहर्षं लेभ इति भावः ॥ ३२ ॥ ३३ ॥

३४ ] ति० टी०—स तेनैव हर्षेणामिषभक्षणनिषादनाशनमुनिरक्षणजसंतोषेण ॥ ३४ ॥

रा० टी०—स इति । तेन स्वपुरुषार्थजन्येन प्रहर्षेण द्विगुणीकृतविक्रमः स गरुडः अमृतानयनार्थं मतिं चकार ॥ ३४ ॥

गो० टी०—तेनैव भक्षणजन्येनेत्यर्थः । अयोजालानि अयोनिर्मितजालकानि निर्मथ्य ध्वंसयित्वा तदन्तर्वर्तिरत्नमयं गृहं भित्त्वा ततः तदन्तरे गुप्तममृतं महेन्द्रभवनादाजहार ॥ ३४ ॥ ३५ ॥

३५ ] ति० टी०—अयोजालान्ययःशृङ्खलानाम् रत्नमयगेहोपरि पक्षिप्रवेशपरिहाराय बद्धानि बलान्निर्मथ्य रत्नमयगृहं च भित्त्वा गुप्तममृतं महेन्द्रभवनादाजहार ॥ ३५ ॥

१ अनूपमिति गो. रा. पाठः । २ ऋषिभिरिति गो. पाठः । ३ चेति गो. पाठः । ४ अजा इति गो. पाठः । ५ जगामेति गो. पाठः । ६ तेनैवेति गो. पाठः । ७ मयं गृहमिति गो. पाठः ।

तं महर्षिगणैर्जुष्टं सुपर्णकृतलक्षणम् । नाम्ना सुभद्रं न्यग्रोधं ददर्श धनदानुजः ॥ ३६ ॥
तं तु गत्वा परं पारं समुद्रस्य नदीपतेः । ददर्शाश्रममेकान्ते पुण्ये रम्ये वनान्तरे ॥ ३७ ॥
तत्र कृष्णाजिनधरं जटामण्डलधारिणम् । ददर्श नियताहारं मारीचं नाम राक्षसम् ॥ ३८ ॥
स रावणः समागम्य विधिवत्तेन रक्षसा । मारीचेनार्चितो राजा सर्वकामैरमानुषैः ॥ ३९ ॥
तं स्वयं पूजयित्वा च भोजनेनोदकेन च । अर्थोपहितया वाचा मारीचो वाक्यमब्रवीत् ॥ ४० ॥
कच्चित्ते कुशलं राजँल्लङ्कायां राक्षसेश्वर । केनार्थेन पुनस्त्वं वै तूर्णमेव इहागतः ॥ ४१ ॥
एवमुक्तो महातेजा मारीचेन स रावणः । ततः पश्चादिदं वाक्यमब्रवीद्वाक्यकोविदः ॥ ४२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

## षट्त्रिंशः सर्गः ।

जनस्थानवृत्तं निवेदयन् रावणश्चिकीर्षितसीतापहरणे मारीचं प्रति साहाय्यं याचतेऽथ रामवार्ताश्रवणमात्रेण त्रस्तविषण्णचेता मारीचो रावणाय हितमुपदेष्टुमुपक्रमते ।

मारीच श्रूयतां तात वचनं मम भाषतः । आर्तोऽस्मि मम चार्तस्य भवान्हि परमा गतिः ॥ १ ॥

रा० टी०—अमृतानयनप्रकारमाह—अय इत्यादिभिः । अयोजालानि पक्षिप्रवेशाभावाय गृहोपरिक्षिप्तलोहरचितजालानि निर्मथ्य छित्त्वा वरं रत्नगृहम् अमृताधिकरणीभूतवेश्म भित्त्वा गुप्तं तत्र गोपितममृतं ततो महेन्द्रभवनात् आजहार ॥ ३५ ॥

३६–३८ ] ति० टी०—सुपर्णेन कृतं भग्नैकमहाशाखात्वरूपं लक्षणं यस्य तम् ॥ ३६ ॥ ३८ ॥

रा० टी०—तमिति । महर्षिगणैर्जुष्टं सेवितं सुपर्णकृतलक्षणं गरुडकृतशाखाभङ्गरूपलक्षणविशिष्टं नाम्ना सुभद्रं सुभद्रनामानं तं न्यग्रोधं धनदानुजो रावणः ददर्श ॥ ३६ ॥

रा० टी०—तमिति । नदीपतेः समुद्रस्य परं पारं गत्वा रम्ये पुण्ये एकान्ते वनान्तरे वनमध्ये आश्रमं ददर्श ॥ ३७ ॥

गो० टी०—सुपर्णकृतलक्षणं सुपर्णेन गरुडेन कृतं भग्नैकशाखत्वरूपं लक्षणं चिह्नं यस्य ॥ ३६ ॥ ३७ ॥

रा० टी०—तत्रेति । तत्र आश्रमे नियताहारं मारीचं नाम राक्षसं ददर्श ॥ ३८ ॥

गो० टी०—तत्रेति । कृष्णाजिनेत्यादिना रामभक्ततया जनितवैराग्यचिह्नोक्तिः ॥ ३८ ॥

३९–४० ] ति० टी०—सर्वकामैरभिलषितसर्वभोग्यवस्तुभिरर्चितो बभूवेति शेषः ॥ ३९ ॥ ४० ॥

रा० टी०—स इति । रक्षसा मारीचेन स रावणः विधिवत्समागम्य अमानुषैः मानुषालभ्यैः सर्वकामैः अर्चित आसीदिति शेषः ॥ ३९ ॥

रा० टी०—तमिति । भोजनेनोदकेन च स रावणं मारीचः स्वयं पूजयित्वा अर्थोपहितया प्रयोजनयुक्तया वाचा अब्रवीत्४०

गो० टी०—स रावण इति । समागम्य मारीचं प्राप्य सर्वकामैः सर्वभोग्यवस्तुभिः अर्चितो बभूव ॥ ३९ ॥ ४० ॥

४१ ] ति० टी०—पूजोत्तरं कुशलं पृच्छति—कच्चिदिति ४१

रा० टी०—तद्वचनाकारमाह—कच्चिदिति । हे राक्षसेश्वर! लङ्कायां ते कुशलं कच्चित् केनार्थेन प्रयोजनेन पुनस्त्वं तूर्णमिहागतः ॥ ४१ ॥

गो० टी०—कच्चिदिति । एवं तूर्णम् एकाकितया शीघ्रम् ॥ ४१ ॥

४२ ] ति० टी०—इदमग्रिमसर्गवक्ष्यमाणम् ॥ ४२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

रा० टी०—एवमिति । मारीचेन एवमुक्तो महातेजाः स रावणः ततः पश्चात् तदुक्तेरनन्तरम् इदं वाक्यमब्रवीत् ॥ ४२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

गो० टी०—एवमिति । इदम् उत्तरसर्गे वक्ष्यमाणम् ॥ ४२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने पञ्चत्रिंशः सर्गः ॥ ३५ ॥

१ ] ति० टी०—मारीचेति । तातेत्युपलालनेन कार्यं वदिष्यन्पूर्वं वृत्तं स्मारयति ॥ १ ॥

रा० टी०—रावणोक्तिप्रकारमाह—मारीचेत्यादिभिः । हे मारीच ! हे तात ! भाषतो मम वचनं श्रूयताम् । तत्र हेतुः अहमार्तोऽस्मि आर्तस्य मम भवानेव परमा गतिः ॥ १ ॥

गो० टी०—महासमरमध्येऽपि गाम्भीर्यं यस्य निश्चलम् । तमहं शिरसा वन्दे जानकीप्राणवल्लभम् ॥

१ वल्कलेति गो. पाठः । २ त्विति गो. पाठः । ३ स्विति गो. पाठः । ४ तूर्णमेवमिति गो. पाठः । ५ तं त्विति गो. पाठः ।

जानीषे त्वं जनस्थानं भ्राता यत्र खरो मम । दूषणश्च महाबाहुः स्वसा शूर्पणखा च मे ॥ २ ॥
त्रिशिराश्च महाबाहू राक्षसः पिशिताशनः । अन्ये च बहवः शूरा लब्धलक्षा निशाचराः ॥ ३ ॥
वसन्ति मन्नियोगेन अधिवासं च राक्षसाः । बाधमाना महारण्ये मुनीन्ये[4] धर्मचारिणः ॥ ४ ॥
चतुर्दशसहस्राणि रक्षसां भीमकर्मणाम् । शूराणां लब्धलक्षाणां खरचित्तानुवर्तिनाम् ॥ ५ ॥
ते त्विदानीं जनस्थाने वसमाना महाबलाः । संगताः परमायत्ता रामेण सह संयुगे ॥ ६ ॥
नानाशस्त्रप्रहरणाः खरप्रमुखराक्षसाः । तेन संजातरोषेण रामेण रणमूर्धनि ॥ ७ ॥
अनुक्त्वा परुषं किंचिच्छरैर्व्यापारितं धनुः । चतुर्दशसहस्राणि रक्षसामुग्रतेजसाम् ॥ ८ ॥
निहतानि शरै[6]र्दीप्तैर्मानुषेण पदातिना । खरश्च निहतः संख्ये दूषणश्च निपातितः ॥ ९ ॥
हत्वा त्रिशिरसं चापि निर्भया दण्डकाः कृताः । पित्रा निरस्तः क्रुद्धेन सभार्यः क्षीणजीवितः ॥ १० ॥
स हन्ता तस्य सैन्यस्य रामः क्षत्रियपांसनः । अशीलः कर्कशस्तीक्ष्णो मूर्खो लुब्धोऽजितेन्द्रियः ॥ ११ ॥

---

मारीचेत्यादि । भाषतः भाषमाणस्य ॥ १ ॥

२ ] ति० टी०—जानीषे इति । भ्रात्रादयो मन्नियोगाज्जनस्थानं प्राप्य वसन्तीति त्वं जानीषे किलेत्यन्वयः ॥ २ ॥

३ ] ति० टी०—लब्धलक्षा लब्धयुद्धोत्साहाः ॥ ३ ॥

४-५ ] ति० टी०—अथ तत्र स्थित्वा क्रियमाणं वृत्तं च जानीषे इत्याह—अधिवासं चेति । मुनीन्बाधमाना बाधहेतवे हेतौ शानच् । अधिवासं च कुर्वन्ति मन्नियोगादिति शेषः । अधिवास उपद्रव इति कतकः । 'रतिवासम्' इति पाठे रतिवासं रत्या प्रीत्या वासो यत्र कर्मणि तथा ॥ ४ ॥ ५ ॥

रा० टी०—जानीष इति । यत्र खरादयः लब्धलक्षाः प्राप्तयुद्धोत्साहा अन्ये च बहवः शूराः महारण्ये ये धर्मचारिणः तान्मुनीन्बाधमानाः बाधयितुं मन्नियोगेनाधिवासं निरन्तरं वासं वसन्ति कुर्वन्ति तं जनस्थानं त्वं जानीषे । श्लोकत्रयमेकान्वयि ॥ २-४ ॥

रा० टी०—चतुर्दशेति । लब्धलक्षाणां प्राप्तयुद्धोत्साहानां खरचित्तानुवर्तिनां खरानुयायिनां येषां रक्षसां चतुर्दशसहस्राणि इदानीं जनस्थाने सन्तीति शेषः, ते वसमानाः वसन्तः महाबलाः नानाशस्त्रप्रहरणाः खरप्रमुखराक्षसाः परमायत्ताः सन्तः संयुगे रामेण सह संगताः तेन हेतुना संजातरोषेण मानुषेण पदातिना रामेण परुषमपि किंचिदनुक्त्वा तूष्णीमेवेत्यर्थः, शरैर्धनुर्व्यापारितम् अत एव दीप्तैः शरैः रक्षसां चतुर्दशसहस्राणि निहतानि खरश्च निहतो दूषणश्च निपातितः त्रिशिरसं च हत्वा दण्डका निर्भयाः कृताः । सार्धश्लोकपञ्चकमेकान्वयि ॥ ५-९ ॥

गो० टी०— कर्तव्यं वक्ष्यन् पूर्ववृत्तं स्मारयति—जानीष इत्यादिना । अनुवर्तिनामित्यन्तमेकं वाक्यम् । खरादयश्चतुर्दशसहस्राणि राक्षसाः जनस्थाने नित्यवासं यथा तथा वसन्तीति जानीष इत्यन्वयः । 'रतिवासम्' इति पाठे रत्या प्रीत्या वासो यस्मिन् कर्मणि तत्तथा ॥ २-६ ॥

६-७ ] ति० टी०—चतुर्दशसहस्राणि यानि सन्ति ते त्विदानीमित्यन्वयः । वसमाना वसन्तः रामेण संयुगे संगताः तेन सह समरमकार्षुरित्यर्थः । परमत्यर्थमायत्ताः संनद्धाः ॥ ६ ॥ ७ ॥

८-९ ] ति० टी०—किंचिदपि परुषमनुक्त्वा शरैः शरमोक्षणव्यापारैर्व्यापारितं संजातव्यापारं कृतम् ॥ ८ ॥ ९ ॥

गो० टी०—ते त्विति । वसमानाः ताच्छील्ये शानच् । संयुगे रामेण सह संगताः रामेण सह युद्धमकुर्वन्नित्यर्थः । परम् अत्यन्तम् आयत्ताः सन्नद्धाः प्रहरणमायुधम् ॥ ६ ॥

गो० टी०—तेनेति । अनुक्त्वा परुषं किंचिदित्यनेन गाम्भीर्यं विवक्ष्यते व्यापारितं संधानमोक्षणव्यापारविशिष्टं कृतं संख्ये युद्धे । 'युद्धमायोधनम्' इत्यारभ्य 'मृधमास्कन्दनं संख्यम्' इत्यमरः ॥ ७-९ ॥

१० ] ति० टी०—अथ भगिनीवैरूप्यं निष्कारणं मन्यमानः क्रोधाद्दूषयति रामम्—पित्रेत्यादिना । क्षीणजीवितः निरपराधं स्त्रीवैरूप्यकरणादेव तथात्वं मन्यते ॥ १० ॥

रा० टी०—पित्रेति । क्षत्रियपांसनःक्षत्रियान् पाति रक्षति स एव अंसनः अतिप्रकाशवान् अशीलः संयुगे शीलरहितः अत एव कर्कशः अत एव तीक्ष्णः अमूर्खो वेदशास्त्रसंपन्न इत्यर्थः, अलुब्धः लोभरहितः जितेन्द्रियः ॥ १० ॥

गो० टी०—पित्रेत्यादि । कर्कशः कठिनहृदयः ॥ १० ॥ ११ ॥

११ ] ति० टी०—अत एवाशीलोऽजितेन्द्रियश्च अस्थाने क्रोधात् ॥ ११ ॥

रा० टी०—त्यक्तधर्मा त्यक्तः त्याजितो धर्मो राक्षसकर्म येन अत एव अधर्मात्मा राक्षसधर्मामनस्कः अत एव भूतानामस्मदादीनामहिते रतः अत एव तस्य सैन्यस्य हन्ता यो

---

१ स्थाने यथा भ्रातेति गो. पाठः । २ तेजा इति गो. पाठः । ३ नित्येति गो. पाठः । ४ वै इति गो. पाठः । ५ प्रहरणोपेता इति गो. पाठः । ६ तीक्ष्णैरिति गो. पाठः । ७ हतश्च त्रिशिरा इति गो. पाठः । ८ दुःशील इति गो. पाठः ।

त्यक्तधर्मा त्वधर्मात्मा भूतानामहिते रतः । येन वैरं विनाऽरण्ये सत्त्वमास्थाय केवलम् ॥ १२ ॥
कर्णनासापहारेण भगिनी मे विरूपिता । अस्य भार्यां जनस्थानात्सीतां सुरसुतोपमाम् ॥ १३ ॥
आनयिष्यामि विक्रम्य सहायस्तत्र मे भव । त्वया ह्यहं सहायेन पार्श्वस्थेन महाबल ॥ १४ ॥
भ्रातृभिश्च सुरान्सर्वान्नाहमत्राभिचिन्तये । तत्सहायो भव त्वं मे समर्थो ह्यसि राक्षस ॥ १५ ॥
वीर्ये युद्धे च दर्पे च नह्यस्ति सदृशस्तव । उपायतो महाञ्शूरो महामायाविशारदः ॥ १६ ॥
एतदर्थमहं प्राप्तस्त्वत्समीपं निशाचर । शृणु तत्कर्म साहाय्ये यत्कार्यं वचनान्मम ॥ १७ ॥
सौवर्णस्त्वं मृगो भूत्वा चित्रो रजतबिन्दुभिः । आश्रमे तस्य रामस्य सीतायाः प्रमुखे चर ॥ १८ ॥
त्वां तु निःसंशयं सीता दृष्ट्वा तु मृगरूपिणम् । गृह्यतामिति भर्तारं लक्ष्मणं चाभिधास्यति ॥ १९ ॥
ततस्तयोरपाये तु शून्ये सीतां यथासुखम् । निराबाधो हरिष्यामि राहुश्चन्द्रप्रभामिव ॥ २० ॥
ततः पश्चात्सुखं रामे भार्याहरणकर्शिते । विस्रब्धं प्रहरिष्यामि कृतार्थेनान्तरात्मना ॥ २१ ॥
तस्य रामकथां श्रुत्वा मारीचस्य महात्मनः । शुष्कं समभवद्वक्त्रं परित्रस्तो बभूव च ॥ २२ ॥

रामः स सभार्यः क्रुद्धेन पित्रा निरस्तः अत एव क्षीणजीवितः प्रजापालनरहितोऽस्तीति शेषः । श्लोकद्वयमेकान्वयि ॥ ११ ॥

१२-१४ ] ति० टी०-सत्त्वं बलमेव केवलमाश्रित्य न तु धर्मम् ॥ १२-१४ ॥

रा० टी०-येनेति । येन रामेण वैरं विना केवलमसत्त्वं प्राणिविरोधमास्थाय कर्णनासापहारेण मे भगिनी विरूपिता अस्य भार्यां विक्रम्य आनयिष्यामि आनेष्यामि तत्र त्वं सहायो भव । अर्धचतुष्टयमेकान्वयि ॥ १२ ॥ १३ ॥

गो० टी०-येनेति । सत्त्वं बलं केवलमाश्रित्य न तु धर्ममित्यर्थः । 'सत्त्वं बले च जन्तौ च' इति विश्वः । आनयिष्यामि आनेष्यामि इडार्षः ॥ १२ ॥ १३ ॥

रा० टी०-त्वयेति । पार्श्वस्थेन सहायेन त्वया भ्रातृभिश्च सहायैः सर्वान् सुरान् अहं नानुचिन्तये न गणये । सहायशब्दः वचनविपरिणामेनान्यत्राप्यन्वेति ॥ १४ ॥

गो० टी०-त्वयेति । भ्रातृभिः कुम्भकर्णादिभिः समग्रान् संपूर्णान् नाभिचिन्तये न गणयामि ॥ १४ ॥

१५ ] ति० टी०-भ्रातृभिः कुम्भकर्णादिभिः । नाभिचिन्तये न गणयामि ॥ १५ ॥

१६ ] ति० टी०-उपायतः उपायेष्वित्यर्थः । तत्रैव हेतुगर्भं विशेषणम्—महामायेत्यादि ॥ १६ ॥

रा० टी०-तदिति । यतः वीर्यादौ ते सदृशो न अतः त्वं समर्थोऽसि तत् तस्माद्धेतोः उपायतः मत्कल्पितयत्नेषु महामायाविशारदस्त्वं मे सहायो भव ॥ १५ ॥ १६ ॥

गो० टी०-तत्सहायो भवेत्यादि । श्रृणु तत् कर्मेत्यत्र तदिति भिन्नं पदं प्रकृते कार्यसाहाय्ये यत्कर्म कार्यं कर्तव्यं तन्मम वचनाच्छृण्विति संबन्धः ॥ १६ ॥ १७ ॥

१७-१९ ] ति० टी०-मम साहाय्ये यत्कर्म त्वया कार्यं तत्कर्म शृण्वित्यन्वयः ॥ १७-१९ ॥

रा० टी०-एतदर्थमेव त्वत्समीपमहं प्राप्तः । ननु मया किं साहाय्यं कर्तव्यमित्यत आह-साहाय्ये साहाय्यार्थं यत्कर्म कार्यं कर्तव्यं तत् मे वचनात् श्रृणु ॥ १७ ॥

रा० टी०-तद्वचनाकारमाह-सौवर्ण इति । रजतबिन्दुभिः उपलक्षितः अत एव चित्रः सौवर्णो मगो भूत्वा तस्य रामस्याश्रमे सीतायाः प्रमुखे संमुखे चर ॥ १८ ॥

गो० टी०-सौवर्ण इति । प्रमुखे अग्रे ॥ १८ ॥

रा० टी०-ननु किमनेनेत्यत आह-त्वामिति । मृगरूपिणं त्वां दृष्ट्वा गृह्यतामिति भर्तारं लक्ष्मणं च सीता निःसंशयमभिधास्यति ॥ १९ ॥

गो० टी०-त्वामिति । गृह्यतामिति अयमिति शेषः॥१९॥

२० ] ति० टी०-अपायेऽपगमे ॥ २० ॥

रा० टी०-तत इति । ततः तस्मात्स्थानात् तयोः रामलक्ष्मणयोः अपाये अपगमे सति शून्ये रामलक्ष्मणरहितदेशे निराबाधः आबाधारहितोऽहं राहुश्चन्द्रप्रभामिव यथासुखं हरिष्यामि ॥ २० ॥

गो० टी०-तत इति । तयोः रामलक्ष्मणयोः अपाये अपगमे सति शून्ये प्रदेशे निराबाधः अप्रतिबन्धः ॥ २० ॥

२१ ] ति० टी०-ततः सुखं क्लेशरहितं यथा भवति तथा विस्रब्धं यथा भवति तथा च प्रहरिष्यामि ॥ २१ ॥

रा० टी०-तत इति । ततः पश्चात् भार्यापहरणकर्शिते विश्रब्धं यथा भवति तथाऽहं कृतार्थेन अन्तरात्मना मनसा सुखं प्रहरिष्यामि ॥ २१ ॥

गो० टी०-ततः पश्चादिति । विस्रब्धः निःशङ्कः अन्तरात्मना अन्तस्थधैर्येण ॥ २१ ॥

२२ ] ति० टी०-रामकथां रामप्रसङ्गं श्रुत्वा मारीचस्त्रस्तो बभूव तेन त्रासेन च तस्य मुखं शुष्कमभवत् ॥ २२॥

१ धर्मो ह्यधर्मात्मेति गो. पाठः । २ आश्रित्येति गो. पाठः । ३ अपहरणादिति गो. पाठः । ४ तस्येति गो. पाठः । ५ सहेति रा. पाठः । ६ युद्धे समग्रान्नेति गो. पाठः । ७ अन्विति रा. पाठः । ८ उपायज्ञ इति गो. पाठः । ९ सर्वैति गो. पाठः । १० विस्रब्ध इति गो. पाठः । ११ हेति गो. पाठः।

ओष्ठौ परिलिहञ्शुष्कौ नेत्रैरनिमिषैरिव । मृतभूत इवार्तस्तु रावणं समुदैक्षत ॥ २३ ॥
स रावणं त्रस्तविषण्णचेता महावने रामपराक्रमज्ञः ।
कृताञ्जलिस्तत्त्वमुवाच वाक्यं हितं च तस्मै हितमात्मनश्च ॥ २४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे षट्त्रिंशः सर्गः ॥ ३६ ॥

## सप्तत्रिंशः सर्गः ।

रावणं प्रति सीतारामयोः प्रभावातिशयमनुवर्णयन्मारीचः सीताहरणं ते मरणमेवातस्ततो निवर्तस्वेति प्रार्थयते ।

तच्छ्रुत्वा राक्षसेन्द्रस्य वाक्यं वाक्यविशारदः । प्रत्युवाच [१]महातेजा मारीचो राक्षसेश्वरम् ॥ १ ॥
सुलभाः पुरुषा राजन्सततं प्रियवादिनः । अप्रियस्य [२]च पथ्यस्य वक्ता [३]भोक्ता च दुर्लभः ॥ २ ॥

रा० टी०–तस्येति । रामकथां श्रुत्वा परित्रस्तो बभूव मारीच इति शेषः, अत एव तस्य प्रसिद्धस्य महात्मनो मारीचस्य वक्रं शुष्कं समभवत् ॥ २२ ॥

गो० टी०–तस्येति । सः मारीचः रामकथां श्रुत्वा परित्रस्तो बभूव तेन त्रासेन तस्य वक्रं शुष्कं समभवदित्यन्वयः॥२२॥

२३ ] ति० टी०–चिन्तावशादनिमिषैरिव नेत्रैरुपलक्षित इति शेषः । मृतभूतो मृतप्रायः ॥ २३ ॥

रा० टी०–ओष्ठाविति । शुष्कौ ओष्ठौ परिलिहन् सन् अनिमिषैः निमेषरहितैरिव नेत्रैः मृतभूत इव आर्तो मारीचः रावणं समुदैक्षत ॥ २३ ॥

गो० टी०–भयकार्यान्तरमाह–ओष्ठाविति । शुष्कौ ओष्ठौ परिलिहन् सः अनिमिषैः निमेषरहितैः नेत्रैः नेत्रव्यापारैः मृतभूत इव मृतजन्तुरिवार्तः सन् रावणं समुदैक्षत ॥ २३ ॥

२४ ] ति० टी०–आत्मनो हितमित्यार्षी षष्ठी ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे षट्त्रिंशः सर्गः ॥ ३६ ॥

रा० टी०–स इति । महावने रामपराक्रमज्ञः अत एव त्रस्तेन त्रासेन विषण्णं चेतो यस्य स मारीचः कृताञ्जलिः सन् तस्मै रावणाय हितम् आत्मनश्च हितं तत्त्वं वाक्यमुवाच॥२४॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे षट्त्रिंशः सर्गः ॥ ३६ ॥

गो० टी०–उत्तरसर्गार्थं संगृह्णाति–स इति । त्रस्तविषण्णचेताः भीतदुःखितमनाः । तत्र हेतुः–रामपराक्रमज्ञ इति । पूर्वं दण्डकारण्ये यो रामपराक्रम आसीत् तज्ज्ञ इत्यर्थः । तस्मै रावणाय हितम् अनपायम् । "हितयोगे च" इति वार्तिकेन चतुर्थी ॥ २४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने षट्त्रिंशः सर्गः ॥ ३६ ॥

१ ] ति० टी०–तदिति ॥ १ ॥

रा० टी०–रावणवचनश्रवणानन्तरकालिकीं मारीचोक्तिमाह–तदित्यादिभिः । वाक्यविशारदो मारीचः राक्षसेन्द्रस्य रावणस्य तद्वाक्यं श्रुत्वा राक्षसेश्वरं रावणं प्रत्युवाच ॥ १ ॥

गो० टी०–सीतापतित्वसंभूतमप्रमेयं वहन्महः ।
समस्तापायरहितो रामो जयतु मे धनम् ॥
तच्छ्रुत्वेत्यादि ॥ १ ॥

२ ] ति० टी०–प्रियवादिनः स्वामिहिताहितविचारमुपेक्ष्य राज्ञ आपातप्रियतया संतोषाय तत्कालमधुरवाक्यवक्तारः पुरुषाः सुलभाः । अपि तु अप्रियस्यापि तत्कालमप्रियतया प्रतीयमानस्यापि कालान्तरे पथ्यस्य वचसो वक्ता भृत्यस्तस्य च भोक्ताऽहितवत्प्रतिभासमानमपीदं पथ्यमेवेति ग्रहीता राजा विवेकी दुर्लभः । अतो मयोच्यमानमापाततोऽप्रियमिव भासमानमप्युदर्के परमहितं शृण्विति शेषः ॥ २ ॥

रा० टी०–तत्प्रतिवचनाकारमाह–सुलभा इति । सततं निरन्तरं प्रियवादिनः स्वाम्यहितमिदमिति ज्ञात्वाऽपि तात्कालिकसंतोषाय हितमेवेदमिति प्रियवक्तारः पुरुषाः सुलभाः बहवः सन्तीत्यर्थः, अप्रियस्य स्वामिप्रीत्यविषयीभूतस्य पथ्यस्य स्वामिहितस्य वचनस्य वक्ता राजकल्याणाय हितं कथयिता श्रोता तदनुमन्ता चेत्यर्थः, दुर्लभः अल्पोऽस्तीत्यर्थः । 'भोक्ता' इति पाठेऽप्ययमेवार्थः एतेन वक्ष्यमाणस्ववाक्यस्यापाततोऽप्रियत्वं तत्त्वतश्च प्रियत्वं सूचितम् ॥ २ ॥

गो० टी०–सुलभा इति । सततम् आपत्प्राप्तावपि प्रियवादिनः स्वामिहिताहितविमर्शमुपेक्ष्य केवलं स्वप्रयोजनाय यथेच्छावादशीलाः पुरुषाः सुलभाः राज्ञः अप्रियस्य तु अप्रियस्यापि तत्काले श्रवणकटुतया प्रतीयमानस्यापि कालान्तरे पथ्यस्य हितस्य शुभोदर्कस्येत्यर्थः, वचनस्य वक्ता भृत्यः तथाविधवचनस्य श्रोता च पथ्यभक्षणवन्ममेदं हितमिति ग्रहीता राजा च दुर्लभः अतो मयोच्यमानमप्रियमिव स्थितमपि परमहितमिति गृहाणेति भावः ॥ २ ॥

१ महाप्राज्ञ इति गो. पाठः । २ त्विति गो. पाठः । ३ श्रोतेति गो. रा. पाठः ।

न नूनं बुध्यसे रामं [1]महावीर्यगुणोन्नतम् । अयुक्तचारश्चपलो महेन्द्रवरुणोपमम् ॥ ३ ॥
अपि स्वस्ति भवेत्तात सर्वेषा[2]मपि रक्षसाम् । अपि रामो न संक्रुद्धः कुर्या[3]ल्लोकानराक्षसान् ॥ ४ ॥
अपि ते जीवितान्ताय नोत्पन्ना जनकात्मजा । अपि सीतानिमित्तं च न भवेद्व्यसनं [4]महत् ॥ ५ ॥
अपि त्वामीश्वरं प्राप्य कामवृत्तं निरङ्कुशम् । न विनश्येत्पुरी लङ्का त्वया सह सराक्षसा ॥ ६ ॥
त्वद्विधः कामवृत्तो हि दुःशीलः पापमन्त्रितः । आत्मानं स्वजनं राष्ट्रं स राजा हन्ति दुर्मतिः ॥ ७ ॥
न च पित्रा परित्यक्तो नामर्यादः कथंचन । न लुब्धो न च दुःशीलो न च क्षत्रियपांसनः ॥ ८ ॥
न च धर्मगुणैर्हीनः कौसल्या[5]नन्दवर्धनः । न [6]च तीक्ष्णो हि भूतानां सर्वभूतहिते रतः ॥ ९ ॥
वञ्चितं पितरं दृष्ट्वा कैकेय्या सत्यवादिनम् । करिष्यामीति धर्मात्मा [7]ततः प्रव्रजितो वनम् ॥ १० ॥

---

३ ] ति० टी०–अबोधे हेतुः–अयुक्तचारत्वमनियुक्तचारत्वम् ॥ ३ ॥

रा० टी०–नन्वेतावता प्रकृते किमायातमित्यत आह–नेति। महेन्द्रवरुणोपमं महावीर्यम् अतिपराक्रमवन्तं गुणोन्नतं गुणैः समाधिकरहितसौशील्यादिभिः उन्नतं सर्वश्रेष्ठं रामं चपलः स्वस्थचित्तरहितः अत एव अयुक्तचारः न युक्ताः लोकवृत्तान्तज्ञानार्थं नियोजिताः चाराः प्रेष्या येन स त्वं न बुध्यसे तद्बलादिकं न जानासीत्यर्थः, नूनं निश्चितमेतत् । एतेन तद्बलादिज्ञाने तद्विरोधविषया ते बुद्धिर्न स्यादिति सूचितम् ॥ ३ ॥

गो० टी०–पथ्यवचनमेवाह–न नूनमित्यादिना । अयुक्तचारः अनियोजितचारः चपलतया अयुक्तचारत्वाद्वा तद्वीर्यं सम्यक् न जानासीत्यर्थः ॥ ३ ॥

४–६ ] ति० टी०–एतदबोधकृतश्च तवानर्थो भावीत्याह–अपीति । रक्षसां स्वस्तीत्यार्षम् । अपि स्वस्ति भवेदपि क्षेमं संपद्येतापि किम् । तव दुर्बुद्धिनिवृत्त्येति शेषः । तथा संक्रुद्धो रामो लोकमरक्षस्कं न कुर्यादपि किम् । एवमग्रेऽपि बोध्यम् ॥ ४–६ ॥

रा० टी०–तात्पर्यवृत्त्या रामवीर्यं वर्णयन्नाह–अपीत्यादिभिः । सर्वेषां रक्षसां स्वस्ति भवेत् । ननु किमर्थं स्वस्तिप्रार्थनेत्यत आह–संक्रुद्धः भवता संकोपितो रामः लोकान् अराक्षसान् राक्षसरहितान् कुर्यात् ॥ ४ ॥

रा० टी०–अपीति । जनकात्मजा सीता ते जीवितान्ताय नोत्पन्ना । अपिः संभावनार्थकः। सीतानिमित्तं तवापहृतसीतार्थं महद्व्यसनं सर्वराक्षसमरणं न भवेत् ॥ ५ ॥

गो० टी०–अद्यैव निर्गत्य पुनरागमनान्नूनं न मे वचनं श्रोष्यतीति निश्चित्य रावणचापलेन संभावितानर्थानाह–अपीत्यादिना । अपिः संभावनायां काकुस्वरोऽपि द्रष्टव्यः। एवमुत्तरवाक्येष्वपि स्वरपर्यवसानेनार्थपरिच्छेदः कार्यः । रक्षसां सजातीयानां स्वस्ति भवेदपि आर्षी षष्ठी । अकार्यनिवृत्त्यर्थं तातेति संबोधनम् ॥ ४ ॥ ६ ॥

रा० टी०–अपीति । कामवृत्तं स्वेच्छाचरणशीलमत एव निरङ्कुशं शुभमन्त्र्याद्यङ्कुशरहितम् ईश्वरं राजानं त्वां प्राप्य त्वया सह सराक्षसा पुरी लङ्का न विनश्येत् ॥ ६ ॥

गो० टी०–अपि त्वामिति । ईश्वरं स्वामिनं कामवृत्तं यथेच्छव्यापारं निरङ्कुशममर्यादम् ॥ ६ ॥

७ ] ति० टी०–पापमन्त्रितः पापैः सह कृतकर्तव्यार्थविचारः ॥ ७ ॥

रा० टी०–कामवृत्तत्वादिविशिष्टस्य दोषमाह–त्वद्विति । त्वद्विधो दुर्मतिः अत एव पापमन्त्रितः अघकारकमन्त्रवान् स राजा आत्मादित्रयं हन्ति ॥ ७ ॥

गो० टी०–त्वद्विध इति । य इत्यध्याहार्यं पापं दुष्टं मन्त्रितं विचारो यस्य तम् ॥ ७ ॥

८ ] ति० टी०–एवं महावीर्यत्वं रामे प्रतिपाद्य रावणोक्तदूषणानि निराचष्टे—न च पित्रेत्यादि ॥ ८ ॥

९ ] ति० टी०–तैक्ष्ण्याभावे हेतुः—सर्वभूतहिते रतत्वम् ॥ ९ ॥

रा० टी०–आपाततोऽवगतार्थे एतस्याभिप्रायो मास्त्वित्यति बोधयितुं स्वाज्ञानेनैव रामे दोष आरोपित इत्याह–नेति । धर्मगुणैर्हीनो न। श्लोकद्वयमेकान्वयि ॥ ८ ॥ ९ ॥

गो० टी०–पित्रा निरस्त इत्यादिना पूर्वं रावणोक्तदूषणानि परिहरति–न चेत्यादिना । कौसल्यानन्दिवर्धन इति । आनन्दिरानन्दः "सर्वधातुभ्य इन्" इति इन् ॥ ८ ॥ ९ ॥

१० ] ति० टी०–कैकेय्या वञ्चितं पितरं दृष्ट्वा तं सत्यवादिनं करिष्यामीति वनं स्वयमेव प्रव्राजितः, न तु किंचित्पापात्पित्रा प्रवासित इत्यर्थः ॥ १० ॥

रा० टी०–ननु पितृकर्तृकपरित्यागाभावे कथमत्र रामागमनमित्यत आह–वञ्चितमिति । पितरं सत्यवादिनं करिष्यामीति हेतोः ततोऽयोध्यानगरात् वनं प्रव्रजितः ॥ १० ॥

गो० टी०–वञ्चितमिति । कैकेय्या वञ्चितं पितरं दृष्ट्वा तं सत्यवादिनं करिष्यामीति स्वयं प्रव्रजितः गतः तातेति सान्त्वोक्तिः ॥ १० ॥

---

१ महावीर्य मिति गो. पाठः । २ भुवीति गो. पाठः । ३ लोकमराक्षसमिति गो. पाठः । ४ ममेति गो. पाठः । ५ नन्दीति गो. पाठः । ६ तीक्ष्णो न च भूताना सर्वेषामहित इति गो. पाठः । ७ ताततेति गो. पाठः ।

कैकेय्याः प्रियकामार्थं पितुर्दशरथस्य च । हित्वा राज्यं च भोगांश्च प्रविष्टे दण्डकावनम् ॥ ११ ॥
न रामः कर्कशस्तात नाविद्वान्नाजितेन्द्रियः । अनृतं न श्रुतं चैव नैव त्वं वक्तुमर्हसि ॥ १२ ॥
रामो विग्रहवान्धर्मः साधुः सत्यपराक्रमः । राजा सर्वस्य लोकस्य देवानामिव वासवः ॥ १३ ॥
कथं नु तस्य वैदेहीं रक्षितां स्वेन तेजसा । ईच्छसे प्रसभं हर्तुं प्रभामिव विवस्वतः ॥ १४ ॥
शरार्चिषमनाधृष्यं चापखड्गेन्धनं रणे । रामाग्निं सहसा दीप्तं न प्रवेष्टुं त्वमर्हसि ॥ १५ ॥
धनुर्व्यादितदीप्तास्यं शरार्चिषममर्षणः । चापबाणधरं तीक्ष्णं शत्रुसेनापहारिणम् ॥ १६ ॥
राज्यं सुखं च संत्यज्य जीवितं चेष्टमात्मनः । नात्यासादयितुं तात रामान्तकमिहार्हसि ॥ १७ ॥
अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा । न त्वं समर्थस्तां हर्तुं रामचापाश्रयां वने ॥ १८ ॥

---

११ ] ति० टी०–कैकेय्याः प्रियस्य कामस्य मनोरथस्य पूरणार्थम् ॥ ११ ॥

रा० टी०–कैकेय्या इति । कैकेय्याः दशरथस्य च प्रियकामार्थं प्रियः प्रीतिविषयीभूतः कामः इच्छाविषयीभूतः स एव स इति कर्मधारयः तदर्थं राज्यं भोगांश्च त्यक्त्वा दण्डकावनं प्रविष्टः ॥ ११ ॥

गो० टी०–वनगमने हेत्वन्तरमाह–कैकेय्या इति । प्रियस्य कामः कामना स एवार्थो यस्मिन् कर्मणि ॥ ११ ॥

१२–१३ ] ति० टी०–अनृतं न श्रुतं चैवानृतप्रसङ्गमपि न जानाति । तेन तत्कथनं दूरापास्तमित्यर्थः । एवं वक्तुं रामं दुर्गुणं वक्तुम् ॥ १२–१३ ॥

रा० टी०–नेति । अनृतं मिथ्या न श्रुतम् रामे इति शेषः, अत एवं वक्तुं त्वं नार्हसि ॥ १२ ॥

गो० टी०–न राम इति । अनृतमिति । अनृतम् असत्यं दुःश्रुतं वैपरीत्येन श्रुतं च भवान् वक्तुं नार्हसीत्यन्वयः ॥ १२ ॥

रा० टी०–प्रातिभासिकरावणारोपितदुर्गुणान् प्रतिषिध्य गुणानाह–राम इति । सत्यपराक्रमः साधुः सर्वोपकारनिरतः विग्रहवान् प्राकृतविलक्षणावयवविशिष्टो धर्मो रामः देवानां वासव इव सर्वस्य लोकस्य भुवनस्य राजा ॥ १३ ॥

गो० टी०–राम इति । रामः विग्रहवान् मूर्तो धर्म एव तत्र दोषसंभावना कथंचिदपि न कार्येति भावः । यथा वासवो देवानां नायकस्तथा रामः सर्वेषां लोकानां नायक इत्यर्थः ॥ १३ ॥

१४ ] ति० टी०–अथ सीतापहारस्याशक्यत्वमाह–कथं न्विति । स्वेन तेजसा पातिव्रत्यवैभवेन किं च तस्य रामस्य स्वेन तेजसा सहजप्रतापेनेत्यर्थः ॥ १४ ॥

रा० टी०–कथमिति । स्वेन तेजसा रक्षितां तस्य रामस्य प्रियां वैदेहीं प्रसभं हठात् विवस्वतः सूर्यस्य प्रभामिव हर्तुं कथमिच्छसे इच्छसि ॥ १४ ॥

गो० टी०–कथमिति । स्वेन तेजसा पातिव्रत्यवैभवेन प्रसभं बलात्कृत्य ॥ १४ ॥

१५ ] ति० टी०–शरार्चिषं शरज्वालं खड्गचापपदेन तद्वतशस्त्रवस्तद्रूपमिन्धनं यस्य ॥ १५ ॥

रा० टी०–शरेति । शरः अर्चिर्ज्वाला यस्मिन् तं चापखड्गा रिपूणां चापानि खड्गाश्च इन्धनानि यस्य तमनाधृष्यं दीप्तं रामाग्निं रणे सहसा प्रवेष्टुं त्वं नार्हसि ॥ १५ ॥

गो० टी०–शरार्चिषमिति । शरपदं खड्गधाराया अप्युपलक्षणं चापखड्गेन्धनमिति रूपणात् । सहसा साहसेन ॥ १५ ॥

१६ ] ति० टी०–रामेऽन्तकरूपकोपपादकविशेषणान्याह–धनुरिति । धनुरेव व्यादितं व्यात्तमिति यावत् । दीप्तं ज्वालादीप्तमास्यं यस्य रामरूपान्तकस्य । ज्वालादीप्तत्वमेव शरार्चिषमित्यनेनोक्तम् ॥ १६ ॥

१७ ] ति० टी०–अत्यासादयितुमत्यन्तं प्राप्तुम् ॥ १७ ॥

रा० टी०–रामेऽग्निरूपकत्वमुपपाद्यान्तकरूपकत्वमुपपादयन्नाह–धनुरिति । धनुर्व्यादितं धनुषो व्यादानं दीप्तमास्यं यस्य शरः अर्चिः प्रकाशो यस्य तम् अमर्षणं चापबाणधरम् अत एव शत्रुसेनापहारिणं रामान्तकं राज्यादिकं संत्यज्य अत्यासादयितुम् अतिनिकटं प्राप्तुं त्वं नार्हसि, एतेन तत्र तथागमने ध्रुवं ते विध्वंसो भवितेति सूचितम् । श्लोकद्वयमेकान्वयि ॥ १६ ॥ ॥ १७ ॥

गो० टी०–धनुरित्यादि । श्लोकद्वयमेकान्वयम् । धनुरेव व्यादितदीप्तास्यं व्यादितं विवृतम् अत्यासादयितुम् अत्यन्तमासन्नो भवितुम् ॥ १६ ॥ १७ ॥

१८ ] ति० टी०–अप्रमेयं हि तत्तेज इत्यनेनावाङ्मनसगोचरत्वं ध्वनितम् । यस्य सेत्यनेन तस्या अपि तत्त्वं सूचितम् ॥ १८ ॥

रा० टी०–अप्रमेयमिति । यस्य रामस्य प्रिया जनकात्मजा तत्तेजोऽप्रमेयम् अतः रामचापाश्रयां तां हर्तुं त्वं न समर्थोऽसि ॥ १८ ॥

गो० टी०–अप्रमेयमिति । जनकात्मजा यस्य यत्संबन्धिनी तत्तेजः तस्य तेजः अप्रमेयम् अपरिच्छेद्यम् । श्रद्धया देवो देवत्वमश्नुत इत्युक्तरीत्या सीतासंबन्धेन रामस्याति-

---

१ दुःश्रुतमिति गो. पाठः । २ मघवानिवेति गो. पाठः । ३ त्वमिति गो. पाठः । ४ इच्छसीति गो. पाठः । ५ अमर्षणमिति गो. रा. पाठः । ६ पाशधरं वीरमिति गो. पाठः । ७ शत्रुसैन्यप्रहारिणमिति गो. पाठः ।

तस्य [1]वै नरसिंहस्य सिंहोरस्कस्य भामिनी । प्राणेभ्योऽपि प्रियतरा भार्या नित्यमनुव्रता ॥ १९ ॥
न सा धर्षयितुं शक्या मैथिल्योजस्विनः प्रिया । दीप्तस्येव हुताशस्य शिखा सीता सुमध्यमा ॥ २० ॥
किमुद्यमं व्यर्थमिमं कृत्वा ते राक्षसाधिप । दृष्टश्चेत्त्वं रणे तेन तदन्तमुपजीवितम् ॥ २१ ॥
जीवितं च सुखं चैव राज्यं चैव सुदुर्लभम् । [ [3]यदीच्छसि [4]चिरं भोक्तुं मा कृथा रामविप्रियम् । ]
स सर्वैः सचिवैः सार्धं विभीषणपुरस्कृतैः ॥ २२ ॥
मन्त्रयित्वा स [5]धर्मिष्ठैः कृत्वा निश्चयमात्मनः । दोषाणां च गुणानां च संप्रधार्य बलाबलम् ॥ २३ ॥
आत्मनश्च बलं ज्ञात्वा राघवस्य च तत्त्वतः । [7]हितं हि तव निश्चित्य क्षमं त्वं कर्तुमर्हसि ॥ २४ ॥
अहं तु मन्ये तव न क्षमं रणे समागमं कोसलराजसूनुना ।
इदं हि भूयः शृणु वाक्यमुत्तमं क्षमं च युक्तं च निशाचराधिप ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे सप्तत्रिंशः सर्गः ॥ ३७ ॥

---

शय उक्तः । वने सावधानतया रक्षणीयप्रदेशे रामचापाश्रयामिति रामवैभवोक्तिः उभयथापि न हर्तुं शक्येत्यर्थः । जनकात्मजेति कुलप्रभावादपि न हर्तुं शक्येत्यर्थः ॥ १८ ॥ २० ॥

१९ ] ति० टी०—नरसिंहस्येत्यनेन हिरण्यकशिपुप्रभृतिहन्तायमेवेति सूचितम् । नित्यमनुव्रतेत्यनेन तस्यास्तच्छक्तित्वं सूचितम् ॥ १९ ॥

रा० टी०—तस्येति । सिंहोरस्कस्य नरसिंहस्य तस्य रामस्य नित्यमनुव्रता भामिनी अतिप्रकाशविशिष्टा भार्या सीता प्राणेभ्योऽपि प्रियतराऽस्तीति शेषः ॥ १९ ॥

२० ] ति० टी०—न सेति । रजस्तमःप्रधानेन । त्वादृशेनेत्यर्थः ॥ २० ॥

रा० टी०—नेति । सुमध्यमा ओजस्विनो रामस्य प्रिया मैथिली मिथिलोद्भवा सा सीता दीप्तस्य हुताशस्य शिखेव धर्षयितुं न शक्या ॥ २० ॥

२१ ] ति० टी०—व्यर्थमिममुद्यमं कृत्वा ते न किमपि हितमित्यर्थः । तेन चेत्त्वं रणे दृष्टस्तदा तदन्तं तद्दर्शनावसानं तव जीवितमित्यर्थः ॥ २१ ॥

रा० टी०—किमिति । इमं त्वयोक्तम् उद्यमं सीतापहरणोद्योगं कृत्वा किं साध्यमिति शेषः, न किमपीत्यर्थः । तत्र हेतुः—तेन रामेण रणे त्वं दृष्टश्चेत् तदा तदन्तं तेन रणे रामदर्शनेन अन्तो विध्वंसो यस्य तत् उपजीवितं स्वजीवनं विद्धीति शेषः ॥ २१ ॥

गो० टी०—किमिति । व्यर्थमिममुद्यममुद्योगं कृत्वा ते किं किं फलं प्राप्तव्यमित्यर्थः । तदन्तं दर्शनान्तम् ॥ २१ ॥

२२–२४] ति० टी०—जीवितमिति । जीवितायुद्दिश्य स त्वं विभीषणपुरोगमैर्धर्मिष्ठैर्मन्त्रयित्वा अनन्तरं निश्चयं कृत्वा दोषगुणबलाबलनिर्धारणविषयमात्मनो रामस्य च दोषगुणबलाबलं संप्रधार्य विचार्य तदनन्तरं स्वस्य रामस्य च बलं तत्त्वतो ज्ञात्वा निश्चित्य तव आत्मनो हितमिदमिति निश्चित्य यत्क्षमं तत्कर्तुमर्हसीत्यर्थः ॥ २२–२४ ॥

रा० टी०—जीवितमिति । सुदुर्लभं जीवितं रोगराहित्यादिना जीवनं सुखं पुत्रपौत्रादिहेतुकप्रमोदं च राज्यं च सुखं यथा भवति तथा भोक्तुमनुभवितुं यदीच्छसि तर्हि रामविप्रियं रामानिष्टं मा कृथाः ॥ २२ ॥

गो० टी०—न केवलं जीवितं सुखादिकं च दुर्लभमित्याह—जीवितं चेति ॥ २२ ॥

रा० टी०—स इति । धर्मिष्ठैः विभीषणपुरस्कृतैः सर्वैः सचिवैः सार्धं मन्त्रयित्वा आत्मनः स्वमनसः निश्चयं चाञ्चल्यराहित्यं कृत्वा दोषाणां दुष्टाचरणानां गुणानां शोभनाचरणानां च बलाबलं च संप्रधार्य सम्यग्ज्ञात्वा आत्मनो राघवस्य च बलं ज्ञात्वा तव आत्मनो हितं च निश्चित्य क्षमं क्षमां कर्तुं त्वमर्हसि, एतेन रावणबलस्य रामबलादल्पत्वं सूचितम् । सार्धश्लोकद्वयमेकान्वयि ॥ २३ ॥ २४ ॥

गो० टी०—स इत्यादि । सार्धश्लोकद्वयमेकान्वयम् । स त्वमित्यन्वयः । क्षमं साधु ॥ २३–२४ ॥

२५ ] ति० टी०—सत्सचिवान्तर्गतस्य मम त्वेष निश्चय इत्याह—अहं त्विति । इदं वक्ष्यमाणम् ॥ २५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे सप्तत्रिंशः सर्गः ॥ ३७ ॥

रा० टी०—स्वसंमतिं बोधयन्नाह—अहमिति । कोशलराजसूनुना रामेण रणे समागमं क्षमं योग्यं न मन्ये इदं वक्ष्यमाणं युक्तं योग्यमत एव क्षमं सहनीयं च उत्तमं वाक्यं मद्वचनं शृणु । एकश्चकारो हेत्वर्थः ॥ २५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे सप्तत्रिंशः सर्गः ॥ ३७ ॥

---

१ सेत गो. पाठः । २ तवेति गो. पाठः । ३ अर्धमेतदधिकं गो. रा. पाठे । ४ सुखमिति रा. पाठः । ५ पुरोगमैरिति गो. पाठः । ६ त्विति गो. पाठः । ७ हिताहितं वीति गो. पाठः ।

# अष्टात्रिंशः सर्गः ।

मत्कृतोपसर्गमसहमानेन विश्वामित्रेणानीतेन रामेणाहं सागराम्भसि सुदूरं प्रक्षिप्त इति रामप्रभावं वर्णयन्मारीचः सीतापहरणमिहामुत्रापि महानर्थकरमतस्ततो निवर्तस्वेति रावणं प्रार्थयते ।

कदाचिदप्यहं वीर्यात्पर्यटन्पृथिवीमिमाम् । बलं नागसहस्रस्य धारयन्पर्वतोपमः ॥ १ ॥
नीलजीमूतसंकाशस्तप्तकाञ्चनकुण्डलः । भयं लोकस्य जनयन्किरीटी परिघायुधः ॥ २ ॥
व्यचरन्दण्डकारण्यमृषिमांसानि भक्षयन् । विश्वामित्रोऽथ धर्मात्मा मद्वित्रस्तो महामुनिः ॥ ३ ॥
स्वयं गत्वा दशरथं नरेन्द्रमिदमब्रवीत् । अयं रक्षतु मां रामः पर्वकाले समाहितः ॥ ४ ॥
मारीचान्मे भयं घोरं समुत्पन्नं नरेश्वर । इत्येवमुक्तो धर्मात्मा राजा दशरथस्तदा ॥ ५ ॥
प्रत्युवाच महाभागं विश्वामित्रं महामुनिम् । ऊनद्वादशवर्षोऽयमकृतास्त्रश्च राघवः ॥ ६ ॥
कामं तु मम तत्सैन्यं मया सह गमिष्यति । बलेन चतुरङ्गेण स्वयमेत्य निशाचरम् ॥ ७ ॥
वधिष्यामि मुनिश्रेष्ठ शत्रुं तव यथेप्सितम् । एवमुक्तः स तु मुनी राजानमिदमब्रवीत् ॥ ८ ॥

---

गो० टी०—अधुना स्ववृद्धिं दर्शयति—अहं त्विति । युक्तं युक्तिसहितम् ॥ २९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने सप्तत्रिंशः सर्गः ॥ ३७ ॥

१-२ ] ति० टी०—अथ स्वानुभवसिद्धं रामबलमाह—कदाचिदित्यादि । अहमपीति संबन्धः ॥ १ ॥ २ ॥

रा० टी०—मारीचवचनाकारमाह—कदाचिदित्यादिभिः। कदाचित् कस्मिंश्चित्समये पर्वतोपमः पर्वतसदृशः नीलजीमूतसंकाशः नीलमेघसदृशरूपवान् तप्तकाञ्चनकुण्डलः किरीटी किरीटविशिष्टः परिघायुधः परिघ आयुधं यस्य स नागसहस्रस्य बलं धारयन्नहं वीर्यात् हेतोः इमां पृथिवीं पर्यटन् लोकस्य भयं जनयन् ऋषिमांसानि भक्षयंश्च सन् दण्डकारण्यं व्यचरम् । सार्धश्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

गो० टी०—आबाल्यसिद्धसहजशौर्यादिगुणशेवधिः ।
रघुनाथो महाप्रीत्या परिस्फुरतु सर्वतः ॥

तद्गुणजातं न युक्त्या कल्पयित्वोच्यते किं त्वनुभवसिद्धमित्याह—कदाचिदित्यादिना । सार्धश्लोकद्वयमेकान्वयम् । अहं व्यचरमित्यन्वयः । नागो गजः । भयजनने हेतुमाह—नीलेत्यादिना ॥ १ ॥ २ ॥

३ ] ति० टी०—मद्वित्रस्तः मत्तो वित्रस्त इत्यर्थः ॥ ३ ॥

रा० टी०—विश्वामित्र इति । मद्वित्रस्तः मत्तः प्राप्तत्रासः धर्मात्मा विश्वामित्रः नरेन्द्रं दशरथं स्वयं गत्वा इदमब्रवीत् ॥ ३ ॥

गो० टी०—विश्वामित्र इति । मदिति पञ्चमी ॥ ३ ॥

४-५ ] ति० टी०—पर्वकाले यागकाले ॥ ४-५ ॥

रा० टी०—विश्वामित्रवचनाकारमाह—अयमिति । हे नरेश्वर! मारीचात् मे घोरं भयं समुत्पन्नम् अतः पर्वकाले प्राप्ते सति समाहितः अयं रामः मां रक्षतु ॥ ४ ॥

रा० टी०—इतीति । एवमुक्तो धर्मात्मा राजा दशरथः विश्वामित्रमिति इदं प्रत्युवाच ॥ ५ ॥

गो० टी०—अथेति । पर्वकाले यज्ञसुत्याकाले ॥ ४ ॥ ५ ॥

६-८ ] ति० टी०—पञ्चदशवर्षोऽपि तथा दशरथेनानन्दितो ऽप्यत्यन्तबाल्ययोतनायातिबालेनापीदृशं कृतं किमधुना वाच्यमिति रावणस्यात्यन्तभयाय मारीचेन तथा दशरथेनोक्त इत्यूनद्वादशवर्ष इत्युक्तम् । 'ऊनषोडशवर्षोऽयम्' इति पाठान्तरम् ॥ ६-८ ॥

रा० टी०—तत्प्रतिवचनाकारमाह—ऊनेति । अयं राघव ऊनद्वादशवर्षः किंचिन्मासोनषोडशवार्षिक इत्यर्थः, अयमर्थः द्वौ च द्वौ च द्वौ चेत्येकशेषेण लब्धः, अत्र बीजं तु बालकाण्डघटकीभूतोनषोडशवर्षो मे इतिपद्ये निरूपितम् अत एव अकृतास्त्रः अस्त्राभ्यासरहितोऽस्तीति शेषः, अतः मया सह ममैतत्सैन्यं कामं यथेच्छं गमिष्यति ॥ ६ ॥

रा० टी०—गमनप्रकारमाह—बलेनेति । चतुरङ्गेण बलेन स्वयमेत्य तव शत्रुं निशाचरं यथेप्सितं वधिष्यामि ॥ ७ ॥

गो० टी०—बाल इति । द्वादशवर्षः द्वादशवर्षवयस्कः । केचित्तु इदं रावणविभीषयोक्तं वस्तुत ऊनषोडशवर्ष इत्युक्तमित्यूचुः । कामं भृशं यत्सैन्यं तदित्यध्याहार्यम् ॥ ६ ॥ ७ ॥

रा० टी०—एवमिति । एवमुक्तो मुनिः राजानमब्रवीत् ॥ ८ ॥

गो० टी०—इतीति । रामादन्यत् बलं सैन्यं तस्य न पर्याप्तं न समर्थम् । दशरथस्य कोपो माभूदिति सान्त्वयति—देवतानामिति । आसीदिति । तव कृतं त्वया कृतं कर्म त्रिलोके लोकत्रये आर्षत्वान्न ङीप् विदितं प्रसिद्धम् । यद्यपि महत्सैन्यमस्त्वस्तु तथापि तत्सर्वमिह तिष्ठतु प्रकृतकार्यासामर्थ्यादिति भावः ॥ ८ ॥ १२ ॥

---

१ अरण्ये इति गो. पाठः । २ अथेति गो. पाठः । ३ बाल इति गो. पाठः । ४ निशाचरानिति गो. पाठः । ५ शत्रूँस्ते मनसेप्सितानिति गो. पाठः । ६ इत्येवमुक्तः स इति गो. पाठः ।

रामान्नान्यद्बलं लोके पर्याप्तं तस्य रक्षसः । देवतानामपि भवान्समरेष्वभिपालकः ॥ ९ ॥
आसीत्तव कृतं कर्म [1]त्रिलोकविदितं नृप । काममस्ति महत्सैन्यं तिष्ठत्विह परंतप ॥ १० ॥
बालोऽप्येष महातेजाः समर्थस्तस्य निग्रहे । गमिष्ये राममादाय स्वस्ति तेऽस्तु परंतप ॥ ११ ॥
इत्येवमुक्त्वा स मुनिस्तमादाय नृपात्मजम् । जगाम परमप्रीतो विश्वामित्रः स्वमाश्रमम् ॥ १२ ॥
तं तथा दण्डकारण्ये यज्ञमुद्दिश्य दीक्षितम् । बभूवोपस्थितो रामश्चित्रं विस्फारयन्धनुः ॥ १३ ॥
अजातव्यञ्जनः श्रीमान्बालः श्यामः शुभेक्षणः । एकवस्त्रधरो धन्वी शिखी कनकमालया ॥ १४ ॥
शोभयन्दण्डकारण्यं दीप्तेन स्वेन तेजसा । अदृश्यत तदा रामो बालचन्द्र इवोदितः ॥ १५ ॥
ततोऽहं मेघसंकाशस्तप्तकाञ्चनकुण्डलः । बली दत्तवरो दर्पादाजगामाश्रमान्तरम् ॥ १६ ॥
तेन दृष्टः प्रविष्टोऽहं सहसैवोद्यतायुधः । मां तु दृष्ट्वा धनुः सज्यमसंभ्रान्तश्चकार ह ॥ १७ ॥
अवजानन्न संमोहाद्बालोऽयमिति राघवम् । विश्वामित्रस्य तां वेदिमभ्यधावं कृतत्वरः ॥ १८ ॥

---

९-१२ ] ति० टी०-यद्यपि भवान्देवानामपि सहायकृदासीत् अन्यच्च तव त्वया कृतं कर्म त्रिलोकविदितं त्रिषु लोकेषु विदितं तथापि रामादन्यद्बलं तस्य रक्षसो न पर्याप्तम्, अतः कामं तव बलं यदस्ति तदत्रैव तिष्ठतु तदुपयोगाभावात् अत एव बालोऽपि यतस्तन्निग्रहसमर्थोऽतो देय एवेति शेषः ॥ ९-१२ ॥

रा० टी०-तद्वचनाकारमाह-रामादिति । यद्यपि समरेषु देवानामपि अभिपालकः साहाय्यकर्ता भवानासीत् अतस्तव कृतं कर्म त्रिलोकविदितं त्रिषु लोकेषु प्रसिद्धमासीत् तव सैन्यमपि महत् अतिप्रवृद्धमस्ति तथापि रामादन्यत् भिन्नं यत् लोके बलं तत् तस्य रक्षसः पर्याप्तं नास्ति अतः इहैव कामं यथेष्टं तिष्ठतु भवान् सैन्यं चेति शेषः । श्लोकद्वयमेकान्वयि ॥ ९ ॥ १० ॥

रा० टी०-बाल इति । महातेजाः बालोऽपि एष रामः तस्य मारीचस्य निग्रहे समर्थः अतो राममादाय अहं गमिष्ये ते स्वस्त्यस्तु ॥ ११ ॥

रा० टी०-इतीति । स मुनिर्विश्वामित्रः एवमुक्त्वा नृपात्मजं राममादाय स्वमाश्रमं जगाम ॥ १२ ॥

१३ ] ति० टी०-उपस्थितो रामस्तद्रक्षणार्थं समीपं प्राप्तः सन् ॥ १३ ॥

रा० टी०-तमिति । दण्डकारण्ये यज्ञमुद्दिश्य दीक्षितं तं विश्वामित्रं धनुर्विस्फारयन् सन् रामः उपस्थितो बभूव ॥१३॥

गो० टी०-तमिति । रामः चित्रं धनुः विस्फारयन् नयन् सन् उपस्थितः रक्षणाय समीपं प्राप्तो बभूवेत्यर्थः ॥ १३ ॥

१४-१५ ] ति० टी०-अजातव्यञ्जनः श्मश्र्वादिपुंस्त्वचिह्नप्रादुर्भावहीन इत्यर्थः । एकवस्त्रधरो ब्रह्मचर्ये स्थितः । शिखी काकपक्षधरः । कनकमालयोपलक्षितः ॥ १४-१५ ॥

रा० टी०-अजातेति । अजातव्यञ्जनः न जातं व्यञ्जनं पुरुषाभिव्यञ्जकं श्मश्र्वादि यस्य सः एकवस्त्रधरः धन्वी धनुर्धरः शिखी प्रशस्तशिखावान् कनकमालया उपलक्षितः दीप्तेन स्वेन तेजसा दण्डकारण्यं शोभयन् सन् उदितो बालचन्द्र इव रामः अदृश्यत । श्लोकद्वयमेकान्वयि ॥ १४ ॥ १५ ॥

गो० टी०-अजातेत्यादि । श्लोकद्वयमेकान्वयम् । अजातव्यञ्जनः अनुत्पन्नयौवनलक्षणः एकवस्त्रधरः ब्रह्मचर्यव्रते स्थित इत्यर्थः । शिखी कुलोचितशिखायुक्तः व्रीह्यादित्वादिनिः । कनकमालयेत्युपलक्षणे तृतीया । शोभयन् मयूरकण्ठच्छायया व्याप्तं कुर्वन्नित्यर्थः । उदितचन्द्रौपम्येन विरोधिनिरसनोद्युक्तत्वं गम्यते । शत्रोरपि विग्रहवर्णनमाकर्षकतया ॥ १४ ॥ १५ ॥

१६ ] ति० टी०-आजगामेत्युत्तमपुरुषः । अत्र पारोक्ष्यार्थकलिटा दैवपारवश्याद्देवाहमागतो न तु तदागमनं मम प्रत्यक्षमिति ध्वनयति, यद्वा बहुकालिकत्वेन विस्मृतत्वाद्वा तत्त्वारोपः । आर्षो वा लिट् । आश्रमान्तरमाश्रममध्यम् । दत्तवरो ब्रह्मदत्तदेवावध्यत्ववरः ॥ १६ ॥

रा० टी०-तत इति । ततः रामागमनानन्तरं मेघसंकाशः दत्तवरः दत्तः ब्रह्मणा संपादितः वरः देवावध्यत्वं यस्मै सोऽहम् आश्रमान्तरं विश्वामित्राश्रममध्यम् आजगाम अत्र लिट्प्रयोगः दैर्घकालिकत्वेन परोक्षत्वारोपात् ॥ १६ ॥

गो० टी०-तत इति । आजगामेत्युत्तमपुरुषः॥१६॥१७॥

१७-१८]ति०टी०-प्रविष्टोऽहं तेन न दृष्ट इत्यन्वयः१७-१८

रा० टी०-तेनेति । तेन रामेण दृष्टः उद्यतायुधोऽहं सहसा प्रविष्टः मां दृष्ट्वैव असंभ्रान्तो रामः धनुः सज्यं चकार ॥ १७ ॥

रा० टी०-अवेति । मोहात् स्वाज्ञानात् अयं बालः इति हेतोः राघवम् अवजानन् तिरस्कुर्वन् अहं विश्वामित्रस्य तां वेदिम् अभ्यधावम् ॥ १८ ॥

गो० टी०-अवजानन्निति । मोहात् अवजानन् तिरस्कुर्वन् ॥ १८ ॥

---

१ त्रिलोके इति गो. पाठः । २ अस्त्विति गो. पाठः । ३ तदेति गो. पाठः । ४ पद्मपत्रनिभेक्षण इति गो. पाठः । ५ तत इति गो. पाठः । ६ आजगाम तदाश्रममिति गो. पाठः । ७ स इति गो. पाठः । ८ अहमिति गो. रा. पाठः ।

तेन मुक्तस्ततो बाणः शितः शत्रुनिबर्हणः । तेनाहं ताडितः क्षिप्तः समुद्रे शतयोजने ॥ १९ ॥
नेच्छता तात मां हन्तुं तदा वीरेण रक्षितः । रामस्य शरवेगेन निरस्तो [2]भ्रान्तचेतनः ॥ २० ॥
पातितोऽहं तदा तेन गम्भीरे सागराम्भसि । प्राप्य संज्ञां चिरात्तात लङ्कां प्रति गतः पुरीम् ॥ २१ ॥
एवमस्मि तदा मुक्तः सहायास्ते[3] निपातिताः । अकृतास्त्रेण रामेण बालेनाक्लिष्टकर्मणा ॥ २२ ॥
तन्मया वार्यमाणस्[4]तु यदि रामेण विग्रहम् । करिष्यस्यापदं घोरां क्षिप्रं [5]प्राप्य न शिष्यसि ॥ २३ ॥
क्रीडारतिविधिज्ञानां समाजोत्सवद[6]र्शिनाम् । रक्षसां चैव संतापमनर्थं चाहरिष्यसि ॥ २४ ॥
हर्म्यप्रासादसंबाधां नानारत्नविभूषिताम् । द्रक्ष्यसि त्वं पुरीं लङ्कां विनष्टां मैथिलीकृते ॥ २५ ॥
अकुर्वन्तोऽपि पापानि शुचयः पापसंश्रयात् । परपापैर्विनश्यन्ति मत्स्या नागह्रदे यथा ॥ २६ ॥
दिव्यचन्दनदिग्धाङ्गान्दिव्याभरणभूषितान् । द्रक्ष्यस्यभिहतान्भूमौ तव दोषात्तु राक्षसान् ॥ २७ ॥

---

१९ ] ति० टी०–शतयोजने तटात्तत्पर्यन्तदेशास्थिते समुद्रे क्षिप्तः ॥ १९ ॥

रा० टी०–तेनेति । ततः अभिधावनानन्तरं तेन रामेण शत्रुनिबर्हणः शितो बाणो मुक्तः तेन राममुक्तबाणेन ताडितोऽहं शतयोजने समुद्रे क्षिप्तः ॥ १९ ॥

गो० टी०– तेनेति । तेन रामेण बाणो मुक्तः मयि क्षिप्त इत्यर्थः ॥ १९ ॥

२०–२१ ] ति० टी०–नेच्छता निच्छता । एतच्च रक्षणं केवलं कृपाजन्यमिति मारीचाशयः । भाविकार्यार्थमिति वस्तुतत्त्वम् ॥ २० ॥ २१ ॥

रा० टी०–नेति । हे तात ! तदा तस्मिन्काले मां हन्तुं नेच्छता वीरेण रामेण अहं रक्षितः अत एव रामस्य शरवेगेन अचेतनोऽहं निरस्त एव ‘ सर्वं वाक्यं सावधारणं भवति ’ इतिन्यायेनैवकारलाभः तेन हननव्यवच्छेदः ॥ २० ॥

रा० टी०–पातित इति । तेन रामेण गम्भीरे सागराम्भसि पातितोऽहं चिरात् बहुकालतः संज्ञां विवेकं प्राप्य लङ्कां पुरीं प्रति गतः ॥ २१ ॥

गो० टी०–नेच्छतेति । नेच्छता अनिच्छता नशब्दस्य सुप्सुपेति समासः । अनिच्छाहेतुर्न ज्ञायते स्वयं हन्तुं समर्थ एवेति भावः । अचेतनः निश्चेष्टः मूर्छितो वा ॥ २० ॥ २१ ॥

२२–२३ ] ति० टी०–ये मे सहाया अपरे गतास्ते निपातिता इत्यन्वयः ॥ २२ ॥ २३ ॥

रा० टी०–एवमिति । अकृतास्त्रेण रामेण एवमनेन प्रकारेणाऽहं मुक्तोऽस्मि ते प्रसिद्धाः सहाया ममानुगामिनो निपातिताः हताः ॥ २२ ॥

रा० टी०–तदिति । तत् रामप्रभावस्य दुरवगाह्यत्वाद्धेतोः मया वार्यमाणस्त्वं यदि रामेण विग्रहं वैरं करिष्यसि तदा क्षिप्रं घोरामापदं विपत्तिं प्राप्य नशिष्यसि नङ्क्ष्यसि॥ २३॥

गो० टी०–एवमस्मीति । निपातिताः हताः ॥२२॥२३॥

२४–२५ ] ति० टी०–अनर्थं मरणरूपमाहरिष्यसि यत्नात्संपादयिष्यसि ॥ २४ ॥ २५ ॥

रा० टी०–आपत्तिस्वरूपमाह–क्रीडेति । क्रीडारत्योः लीलाभोगयोः विधिं क्रमं जानन्ति तेषां समाजोत्सवशालिनां समाजो रक्षसां सभाः तत्र य उत्सव आनन्दः तद्वतामनित्यं त्वत्सभासेविनामित्यर्थः, रक्षसां संतापो यस्मिन् तमनर्थं मरणम् आहरिष्यसि संपादयिष्यसि ॥ २४ ॥

गो० टी०–क्रीडेति । क्रीडा लीला रतिः भोगः तयोर्विधिः क्रमः तज्ज्ञानां तत्र सक्तानामित्यर्थः । समाजः सभा अनर्थं दुःखं संतापः तत्कार्यम् आहरिष्यसि यत्नेन संपादयिष्यसि ॥ २४ ॥

रा० टी०–हर्म्येति । हर्म्यप्रासादसंबाधां हर्म्यादिनिबिडां नानारत्नविभूषितां लङ्कां पुरीं मैथिलीकृते विनष्टां द्रक्ष्यसि॥२५॥

गो० टी०–हर्म्येति । ‘ हर्म्यादि धनिनां वासः प्रसादो देवभूभुजाम् ’ इत्यमरः । संबाधां निबिडां रत्नविभूषितां गुरद्वारादौ ॥ २५ ॥

२६–२७ ] ति० टी०–सङ्गदोषाद्रक्षःकुलमात्रस्य नाशः प्राप्नोतीत्याह––अकुर्वन्तोऽपीति । परपापैः परेषां पापात्मनां पापैर्निमित्तैः । नागह्रदे सर्पयुक्तह्रदे सर्पनिग्रहाय प्रविष्टेन राजप्रेरितधीवरादिना गरुडेन वा यथाप्रसङ्गान्मत्स्या नश्यन्ति तद्वत् ॥ २६ ॥ २७ ॥

रा० टी०–ननु ममापराधेन अन्येषां कथं विनाश इत्यत आह–अकुर्वन्त इति । पापानि अकुर्वन्तः अत एव शुचयोऽपि पापसंश्रयात् पापिजनसंबन्धात् हेतोः परपापैः स्वसंबन्धिनागदोषैः हेतुभिः नागह्रदे नागविशिष्टह्रदे मत्स्याः नागविध्वंसोद्देश्यकागमनवत् गरुडादिनिहतमीना इव विनश्यन्ति २६

गो० टी०–त्वद्दोषेण सकलराक्षसक्षयो भविष्यतीति दर्शयिष्यन् तदर्थमसत्सङ्गदोषन्यायारूढमुपवर्णयति–अकुर्वन्तोऽपीति । शुचयः परिशुद्धाः अपापा इत्यर्थः । पापान्यकुर्वन्तो

---

१ त्वाहत इति गो. पाठः । २ ऽहमचेतन इति गो. पाठः । ३ त्विति गो. पाठः । ४ त्वमिति गो. रा. पाठः । ५ प्राप्स्यसि रावणेति गो. पाठः । ६ शालिनामिति गो. पाठः ।

हृतदारान्सदारांश्च दश विद्रवतो दिशः । हतशेषानशरणान्द्रक्ष्यसि त्वं निशाचरान् ॥ २८ ॥
शरजालपरिक्षिप्तामग्निज्वालासमावृताम् । प्रदग्धभवनां लङ्कां द्रक्ष्यसि त्वमसंशयम् ॥ २९ ॥
परदाराभिमर्शात्तु नान्यत्पापतरं महत् । प्रमदानां सहस्राणि तव राजन्परिग्रहे ॥ ३० ॥
भव स्वदारनिरतः स्वकुलं रक्ष राक्षसान् । मानं वृद्धिं च राज्यं च जीवितं चेष्टमात्मनः ॥ ३१ ॥
कलत्राणि च सौम्यानि मित्रवर्गं तथैव च । यदीच्छसि चिरं भोक्तुं मा कृथा रामविप्रियम् ॥ ३२ ॥
निवार्यमाणः सुहृदा मया भृशं प्रसह्य सीतां यदि धर्षयिष्यसि ।
गमिष्यसि क्षीणबलः सबान्धवो यमक्षयं रामशरास्तजीवितः ॥ ३३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डेऽष्टात्रिंशः सर्गः ॥ ३८ ॥

---

## एकोनचत्वारिंशः सर्गः ।

पूर्वं रामेण कृतवैरानुबन्धोऽहं तज्जिघांसया कृतमृगरूपेण मित्रद्वयेन कृतमृगरूपोऽनुगम्यमानो रामेण शरद्वयपातान्निहतसहायः पलायमानः कथंचित्तृतीयशरतः प्रमुक्त इति वृत्तं तन्निवर्तनेच्छया प्रस्तुत्य युद्धेन क्षमया वा निस्तर वैरं न कदापि सीताहरणं चिन्तयेति मारीच उपदिशति ।

एवमस्मि तदा मुक्तः कथंचित्तेन संयुगे । इदानीमपि यद्वृत्तं तच्छृणुष्व यदुत्तरम् ॥ १ ॥

---

पि पापसंश्रयात् पापपुरुषसंसर्गात् परपापैर्विनश्यन्ति यथा नागह्रदे सर्पह्रदे नागनिग्रहाय प्रवृत्तेन मत्स्या अपि तत्सहवासादन्यन्ते तद्वदित्यर्थः ॥ २६ ॥

रा० टी०–दिव्येति । दिव्यचन्दनदिग्धाङ्गान् चन्दनलिप्तशरीरान् तव दोषात् भूमौ अभिहतान् राक्षसान् द्रक्ष्यसि ॥ २७ ॥

गो० टी०–दिव्येति । तव दोषात्तु तव दोषादेव ॥ २७ ॥

२८–२९ ] ति० टी०–हृतदारान्परिहृतदारान् त्यक्तदारानिति यावत् ॥ २८ ॥ २९ ॥

रा० टी०–हृतेति । अशरणान् रक्षकहीनान् अत एव दशदिशो विद्रवतः हतशेषान् निशाचरान् त्वं द्रक्ष्यसि ॥ २८ ॥

गो० टी०– हृतेति । हृतदारान् त्यक्तदारान् अशरणान् रक्षकरहितान् ॥ २८ ॥

रा० टी०–शरेति । शरजालपरिक्षिप्तां शरसमूहव्याप्ताम् अग्निज्वालासमावृताम् अग्निज्वालायुक्तामत एव प्रदग्धभवनां लङ्कां द्रक्ष्यसि ॥ २९ ॥

गो० टी०–शरजालेति । प्रदग्धभवनां प्रकर्षेण दग्धगृहाम् ॥ २९ ॥

३०–३३ ] ति० टी०–तव परिग्रहेऽन्तःपुरे प्रमदानां सहस्राणि, अतस्तास्वेव रमस्व नान्यत्र मनो धेहीत्यर्थः ॥ ३०–३३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डेऽष्टात्रिंशः सर्गः ॥ ३८ ॥

रा० टी०–पापेभ्यस्तं निवर्तयितुं रावणकृतपापस्यातिमहत्त्वं द्योतयन्नाह–परेति । परदाराभिमर्शात् अन्यत् पापतरमपि महत् न । अर्धं पृथक्–प्रमदानामिति । हे राजन् ! तव परिग्रहे अन्तःपुरे प्रमदानां सहस्राणि सन्तीति शेषः, अतः स्वदारनिरतो भव अत एव स्वकुलं राक्षसांश्च रक्ष । अर्धद्वयमेकान्वयि ॥ ३० ॥

रा० टी०–मानमिति । मानादीन् यदि चिरं भोक्तुमिच्छसि तर्हि रामविप्रियं मा कृथाः ॥ ३१ ॥ ३२ ॥

गो० टी०–एवं दृष्टदोषमुपपाद्यादृष्टदोषं दर्शयति–परदारेति । 'परिग्रहः कलत्रे स्यात्' इति शाश्वतः । जात्याभिप्रायेणैकवचनं रामविप्रियं रामापराधम् ॥ ३०–३२ ॥

रा० टी०–निवार्यमाण इति । सुहृदा मया निवार्यमाणस्त्वं सीतां यदि प्रसह्य धर्षयिष्यसि अपहरिष्यसि तर्हि क्षीणबलः सबान्धवस्त्वं रामशरास्तजीवितः सन् यमक्षयं पुनरागमनरहितलोकं गमिष्यसि ॥ ३३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डेऽष्टात्रिंशः सर्गः ॥ ३८ ॥

गो० टी०–निवार्यमाण इति । प्रसह्य बलात्कृत्य मामनादृत्येत्यर्थः । रामशरेण आस्तम् आकृष्टं नाशितमिति यावत् तादृशं जीवितं यस्य सः ॥ ३३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने अष्टात्रिंशः सर्गः ॥३८॥

१ ]ति०टी०–पुनः स्वानुभवसिद्धं रामवृत्तमाह–एवमिति ।

---

१ न संशय इति गो. पाठः । २ परिग्रह इति गो. पाठः । ३ राक्षसेति गो. पाठः । ४ आत्तेति गो. पाठः । ५ निरुत्तरमिति गो. पाठः ।

राक्षसाभ्यामहं द्वाभ्यामनिर्विण्णस्तथाकृतः । सहितो मृगरूपाभ्यां प्रविष्टो दण्डकावने ॥ २ ॥
दीप्तजिह्वो महादंष्ट्रस्तीक्ष्णशृङ्गो महाबलः । व्यचरन्दण्डकारण्यं मांसभक्षो महामृगः ॥ ३ ॥
अग्निहोत्रेषु तीर्थेषु चैत्यवृक्षेषु रावण । अत्यन्तघोरो व्यचरंस्तापसांस्तान्प्रधर्षयन् ॥ ४ ॥
निहत्य दण्डकारण्ये तापसान्धर्मचारिणः । रुधिराणि पिबंस्तेषां तन्मांसानि च भक्षयन् ॥ ५ ॥
ऋषिमांसाशनः क्रूरस्त्रासयन्वनगोचरान् । तदा रुधिरमत्तोऽहं व्यचरं दण्डकावनम् ॥ ६ ॥
तदाहं दण्डकारण्ये विचरन्धर्मदूषकः । आसादयं तदा रामं तापसं धर्ममाश्रितम् ॥ ७ ॥
वैदेहीं च महाभागां लक्ष्मणं च महारथम् । तापसं नियताहारं सर्वभूतहिते रतम् ॥ ८ ॥
सोऽहं वनगतं रामं परिभूय महाबलम् । तापसोऽयमिति ज्ञात्वा पूर्ववैरमनुस्मरन् ॥ ९ ॥
अभ्यधावं सुसंक्रुद्धस्तीक्ष्णशृङ्गो मृगाकृतिः । जिघांसुरकृतप्रज्ञस्तं प्रहारमनुस्मरन् ॥ १० ॥
तेन त्यक्तास्त्रयो बाणाः शिताः शत्रुनिबर्हणाः । विकृष्य सुमहच्चापं सुपर्णानिलतुल्यगाः ॥ ११ ॥

---

तदा विश्वामित्रयज्ञरक्षणसमये तेन कथंचिन्मुक्तोऽस्मि । इदानीं प्रौढावस्थायामपि यद्वृत्तं मद्विषयं यदुत्तरं यत्सर्वलोकोत्तरं तदतिरिक्तासाध्यं तच्छृणुष्व शृण्विति यावत् ॥ १ ॥

रा० टी०–रामवीर्यं वर्णयितुं मारीचः स्ववृत्तान्तरमाह–एवमित्यादिभिः । एवमुक्तप्रकारेण तेन रामेण कथंचिन्मुक्तो यत् यत्नवान् योऽहमस्मि तस्य मे उत्तरं लोकविलक्षणं यद्वृत्तं तच्छृणुष्व अहं वच्मीत्यर्थः ॥ १ ॥

गो० टी०–अपराधविहीनेषु नापराधं करोति यः ।
दयालुं सर्वभूतेषु तमहं राममाश्रये ॥

एवमित्यादि । इदानीमपि प्रौढावस्थायामपि यद्वृत्तं मद्विषयमभूत् तत् निरुत्तरं श्रृणुष्व मध्ये वाक्यविच्छेदाकरणेन श्रृण्वित्यर्थः । 'यदुत्तरम्' इति पाठे यत्सर्वान्तोत्तरं तदतिरिक्तासाध्यं तदपि श्रृण्वित्यर्थः ॥ १ ॥

२ ] ति० टी०–पूर्वं तथा कृतः प्राणसंकटं प्रापितोऽप्यहमनिर्विण्णोऽप्राप्ततद्विषयप्रवृत्तिवैराग्यः । ताभ्यां मृगरूपाभ्यां सहितोऽहमपि मृगरूपः सन्प्रविष्ट इत्यन्वयः ॥ २ ॥

रा० टी०–तद्वचनाकारमाह–राक्षसाभ्यामिति । तथा कृतः प्राप्तरामशरप्रक्षेपोऽप्यहम् अनिर्विण्णः रामयुद्धेष्वप्राप्तवैराग्यः सन् मृगरूपाभ्यां द्वाभ्यां राक्षसाभ्यां सहितो मृगरूपोऽहं दण्डकावनं प्रविष्टः । महामृग इत्युत्तरग्रन्थस्वारस्यात् मृगरूपाभ्यामिति विभक्तिवचनविपरिणामेनान्यत्राप्यन्वेति॥२॥

गो० टी०–राक्षसाभ्यामिति । तथाकृतः उक्तरीत्या प्राणसंकटं प्रापितोऽपि अनिर्विण्णः निर्वेदरहितः निर्वेदो निष्फलत्वधीः अप्राप्ततद्विषयप्रवृत्तिवैराग्य इत्यर्थः ॥ २ ॥

३–५ ] ति० टी०–तदेवाह–दीप्तेति ॥ ३–५ ॥

६ ] ति० टी०–वनगोचरानृषीनन्यजीवांश्च ॥ ६ ॥

रा० टी०–दीप्तेति । दीप्तजिह्वत्वादिविशिष्टोऽहं दण्डकारण्यं व्यचरम् ॥ ३ ॥

रा० टी०–अग्नीति । अत्यन्तघोरोऽहं तापसान् प्रधर्षयन् सन् अग्निहोत्रादिषु व्यचरम् ॥ ४ ॥

रा० टी०–निहत्येति । तापसान् निहत्य तेषां रुधिराणि पिबन् मांसानि भक्षयंश्च अत एव वनगोचरान् त्रासयन् ऋषिमांसाशनः ऋषिमांसभक्षकः रुधिरप्रमत्तोऽहं दण्डकावनं व्यचरम् । श्लोकद्वयमेकान्वयि ॥ ५ ॥ ६ ॥

गो० टी०–दीप्तजिह्व इत्यादि । विशेषणत्रयेण निरपेक्षहननसाधनभूयस्त्वं विवक्ष्यते ॥ ३–७ ॥

७–९ ] ति० टी०–आसादयं प्राप्तवान् । तापसं धर्मं तापससंबन्धिधर्ममाश्रितम् ॥ ७–९ ॥

रा० टी०–तदेति । तदा तस्मिन् काले धर्मदूषकोऽहं दण्डकारण्ये विचरन् तापसं धर्मम् आश्रितं तदारामं तदः अमृतदाता आरामो विहारो यस्य तं रामम् आसादयम् अपीडयं च ॥ ७ ॥

रा० टी०–वैदेहीमिति । वैदेहीं लक्ष्मणं च तापसं महाबलं रामं च तापसोऽयम् इदानीं न युद्धनिपुण इत्यर्थः, इति ज्ञात्वा पूर्ववैरमनुस्मरन् सन् परिभूय अनादृत्य आसमिति शेषः । श्लोकद्वयमेकान्वयि ॥ ८ ॥ ९ ॥

गो० टी०–तापसमित्यादि । रामपराक्रमं जानन्नपि कथं तत्परिभवायोद्युक्त इत्यत्राह–तापसोऽयमिति । ज्ञात्वेति तापसत्वादहिंसापरेण भवितव्यमिति विश्वस्येत्यर्थः । एवंविधदुर्व्यापारप्रयोजकं वैरस्मरणम् अकृता अप्रवर्तिता प्रज्ञा बुद्धिर्यस्य सः ॥ ८–१० ॥

१०–११ ] ति० टी०–अकृतप्रज्ञोऽकृतविचारः । तं प्रहारं पूर्वं रामदत्तप्रहारम् ॥ १० ॥ ११ ॥

रा० टी०–अभीति । तं प्रसिद्धप्रहारं रामबाणकृतप्रक्षेपमनुस्मरन् सन् सुसंकुद्धः जिघांसुः राममिति शेषः, अकृतप्रज्ञः विचाररहितोऽहमभ्यधावम् ॥ १० ॥

---

१ वनमिति गो. रा. पाठः । २ कायस्तीक्ष्णदंष्ट्र इति गो. पाठः । ३ तथेति गो. पाठः । ४ तथेति गो. पाठः । ५ विचरन्धर्मदूषक इति गो. पाठः । ६ अर्धमेतद् गो. नास्ति । ७ धर्मचारिणमिति गो. पाठः । ८ ह्रीति गो. पाठः । ९ मुक्ता इति गो. पाठः । १० वलवदिति गो. पाठः । ११ निरस्ता इति गो. पाठः ।

ते बाणा वज्रसंकाशाः सुघोरा रक्तभोजनाः । आजग्मुः सहिताः सर्वे त्रयः संनतपर्वणः ॥ १२ ॥
पराक्रमज्ञो रामस्य शठो दृष्टभयः पुरा । समुत्क्रान्तस्ततो मुक्तस्तावुभौ राक्षसौ हतौ ॥ १३ ॥
शरेण मुक्तो रामस्य कथंचित्प्राप्य जीवितम् । इह प्रव्राजितो युक्तस्तापसोऽहं समाहितः ॥ १४ ॥
वृक्षे वृक्षे हि पश्यामि चीरकृष्णाजिनाम्बरम् । गृहीतधनुषं रामं पाशहस्तमिवान्तकम् ॥ १५ ॥
अपि रामसहस्राणि भीतः पश्यामि रावण । राममूतमिदं सर्वमरण्यं प्रतिभाति मे ॥ १६ ॥
राममेव हि पश्यामि रहिते राक्षसेश्वर । दृष्ट्वा स्वप्नगतं राममुद्भ्रमामीव चेतनः ॥ १७ ॥
रकारादीनि नामानि रामत्रस्तस्य रावण । रत्नानि च रथाश्चैव वित्रासं जनयन्ति मे ॥ १८ ॥
अहं तस्य प्रभावज्ञो न युद्धं तेन ते क्षमम् । बलिं वा नमुचिं वापि हन्याद्धि रघुनन्दनः ॥ १९ ॥

---

रा० टी०–तेनेति । सुमहच्चापं विकृष्य सुपर्णानिलतुल्यगाः गरुडवायुसदृशवेगवन्तः शत्रुनिबर्हणाः रिपुध्वंसकाः शितास्त्रयो बाणाः तेन रामेण त्यक्ताः ॥ ११ ॥

१२ ] ति० टी०–संनतपर्वणः अदीर्घत्वमार्षम् ॥ १२ ॥

रा० टी०–त इति । वज्रसंकाशाः वज्रस्यापि प्रकाशकाः सुघोराः शत्रुभ्यो भयप्रदाः सन्नतपर्वणः सन्नतपर्वाणः सर्वे ते रामप्रयुक्तास्त्रयो बाणाः सहिताः सन्तः आजग्मुः ॥ १२ ॥

गो० टी०–ते बाणा इति । सर्वे इति प्रयोगयौगपद्यार्थमुक्तं सन्नतपर्वणः सन्नतपर्वाणः ॥ ११ ॥

१३ ] ति० टी०–शठो गूढविप्रियकारी । दृष्टभयः रामादिति शेषः । समुत्क्रान्तः पलायितः ॥ १३ ॥

रा०टी०–पराक्रम इति । रामस्य पराक्रमज्ञः शठः अपराधं विनापि हननाय प्रवृत्तः पुरा दृष्टभयः दृष्टं भयं येन सोऽहं समुत्क्रान्तः पलायित आसमिति शेषः, ततः पलायनात् अहं मुक्तः तौ मया सह गतौ उभौ राक्षसौ हतौ पलायनान्मुक्त इत्यनेन पलायनपरं रामबाणो न हन्तीति सूचितं तेन तद्बाणस्यापि परमधर्मज्ञत्वं सूचितम् ॥ १३ ॥

गो० टी०–पराक्रमज्ञ इति । दृष्टं भयं येन करणेन स दृष्टभयः उद्भ्रान्तः पलाय्य गतः । मुक्त इति पलायितेषु रामशराप्रवृत्तेरिति भावः । रामस्येति पदं काकाक्षिन्यायात् पूर्वोत्तरपदयोरन्वेति । यतः मया रामस्य शरः पुरा दृष्टभयः ततः रामस्य पराक्रमज्ञोऽहं समुद्भ्रान्तः सन् मुक्तः रामपराक्रमज्ञौ तावुभौ राक्षसौ तु हतावित्यन्वयः ॥ १२ ॥

१४–१६ ] ति० टी०–प्रव्राजितः परिव्राजितः कृतसकलदुर्वृत्तपरित्यागः । युक्तो योगाभ्यासरतः, अत एव तापसस्तपोनिष्ठः । समाहितः स्थिरान्तःकरणः ॥ १४–१६ ॥

रा० टी०–शरेणेति । रामस्य शरेण कथंचिन्मुक्तोऽहं जीवितं जीवनं प्राप्य इह प्रव्राजितः त्यक्तदुष्कृतकर्मा अत एव युक्तः योगक्रियानिरतः तापसः कृच्छ्रचान्द्रायणादिनिरतः अत एव समाहितः एकाग्रचित्तोऽहमस्मीति शेषः ॥ १४ ॥

गो० टी०–शरेणेति । प्रव्राजितः कृतसकलदुर्वृत्तपरित्याग इत्यर्थः । युक्तः उचिताचरणः तापसः तपोनिष्ठः समाहितः नियतमनस्कः ॥ १३ ॥

रा० टी०–स्वस्यातिरामभीतत्वं द्योतयन्नाह–वृक्षे इति । वृक्षे वृक्षे प्रतिवृक्षं चीरकृष्णाजिनाम्बरं चीरकृष्णाजिने अम्बरे यस्य तं गृहीतधनुषं रामं पाशहस्तमन्तकमिव पश्यामि ॥१५॥

गो० टी०–वृक्षे वृक्ष इति । 'हृदयान्नापयातोऽसि दिक्षु सर्वासु दृश्यसे । रामभूतं जगदभूद्रामे राज्यं प्रशासति' इत्यादाविव शोकरागभयादिजनितनिरन्तरसंतन्यमानचिन्तासक्तस्य साक्षात्कारोपपत्तिः । भयस्योत्तरोत्तरभूमिकामिप्रायेण दर्शनस्याप्युत्तरोत्तरदशेत्यनुसंधेयम् ॥ १४ ॥

रा० टी०–अपीति । हे रावण ! रामसहस्राण्यपि भीतोऽहं पश्यामि अत एव इदं सर्वमरण्यं रामभूतं मे प्रतिभाति ॥ १६ ॥

गो० टी०–एकस्यैव रामस्य प्रतिवृक्षं गत्वा गत्वा दृश्यमानत्वमुच्यत इति भ्रमं वारयति–अपीति । न केवलं प्रतिवृक्षं किंतु सर्वत्र प्रदेश इत्याह–रामभूतमिति ॥ १५ ॥

१७ ] ति० टी०–रहिते रामरहितेऽपि वने उद्भ्रमामि भीतो भवामीव । चेतनः सुषुप्तौ नष्टचैतन्योऽपि तद्दर्शनवशाल्लब्धचैतन्यः प्रलपामीत्यर्थः ॥ १७ ॥

रा० टी०–राममिति । हे राक्षसेश्वर ! रहिते रामाभाववत्यपि देशे राममेव पश्यामि अत एव स्वप्नगतं रामं दृष्ट्वा चेतनः प्राप्तजाग्रच्चैतन्य इव उद्भ्रमामि अनेकविधभ्रान्तिं प्राप्नोमि ॥ १७ ॥

गो० टी०–नेदं रामस्य मायाकृतमित्याह–राममेवेति । रहिते रामरहिते प्रदेशे । न केवलं जाग्रद्दशायामेव प्रतीतोऽयं किंतु स्वप्नदशायामपीत्याह–दृष्ट्वेति । उद्भ्रमामि भ्रान्तं प्रलापं करोमीत्यर्थः ॥ १६ ॥

१८–१९ ] ति० टी०–रकारादीनीति । एवं च साक्षाद्दर्शने यत्त्रासः स वक्तुमशक्य इति भावः । तन्नामैकदेशसत्त्वादपि नाम भयजनकम्, किं वक्तव्यं संपूर्णतन्नाम्नो भयजनकत्वमिति । 'स्थाने हृषीकेश तव प्रकीर्त्या' इति गीताश्लोकार्थोऽत्र व्यङ्ग्यः ॥ १८ ॥ १९ ॥

---

१ सुमुक्ता इति गो. पाठः । २ शर इति गो. पाठः । ३ समुद्भ्रान्त इति गो. पाठः । ४ चेति गो. पाठः । ५ राक्षसाधिपेति गो. पाठः । ६ विचेतन इति गो. पाठः । ७ त्रासं संजनयन्तीति गो. पाठः ।

रणे रामेण युध्यस्व क्षमां वा कुरु रावण[1] । न ते रामकथा कार्या यदि मां द्रष्टुमिच्छसि ॥ २० ॥
बहवः साधवो लोके युक्ता धर्ममनुष्ठिताः । परेषामपराधेन विनष्टाः सपरिच्छदाः ॥ २१ ॥
सोऽहं परापराधेन[2] विनशेयं[3] निशाचर । कुरु यत्ते क्षमं तत्त्वमहं त्वां[4] नानुयामि वै[5] ॥ २२ ॥
रामश्च हि महातेजा महासत्त्वो महाबलः । अपि राक्षसलोकस्य भवेदन्तकरोऽपि हि[6][7] ॥ २३ ॥
यदि शूर्पणखाहेतोर्जनस्थानगतः खरः । अतिवृत्तो हतः पूर्वं रामेणाक्लिष्टकर्मणा
अत्र ब्रूहि यथातत्त्वं को रामस्य व्यतिक्रमः ॥ ॥ २४ ॥

---

रा० टी०-रकारादीनीति । हे रावण ! रकारादीनि रत्नरथप्रभृतीनि नामानि रामत्रस्तस्य मे वित्रासं जनयन्ति, एतेन रकारोच्चारणमात्रेण राममेवोच्चारयतीति भ्रान्तिरुत्पद्यते इति सूचितं, तेन रामेतिनाम्ना रामवाच्यमयत्वं बोधितं, तेन यदि रकारोच्चारणमात्रेण भीतिस्तर्हि रामोच्चारणे भीतिरिति किं वक्तव्यमिति काव्यार्थापत्तिरलङ्कारो ध्वनितः, तेन रामसमीपगमनयोग्यता मम नास्तीति सूचितम् ॥ १८ ॥

रा० टी०-अहमिति । तस्य रामस्य अहं प्रभावज्ञः समाधिकरहितप्रभावविज्ञाता अतः तेन रामेण ते युद्धं न क्षमं न योग्यम् । तत्प्रभावमेवाह-रघुनन्दनः बलिं वापि नमुचिं वापि हन्यात् ॥ १९ ॥

गो० टी०-न केवलं दर्शनदशायां भीतिकार्यं श्रवणदशायामपीत्याह-रकारादीनीति । कारप्रत्ययश्छान्दसः । रेफादीनि यानि रत्नादीनि नामानि तेषामाद्यक्षरोच्चारणे राममेवायमब्रवीदिति त्रासो जायते द्वितीयाक्षरोच्चारणे शनैः स निर्वतत इति भावः ॥ १७ ॥ १८ ॥

२० ] ति० टी०-तस्माद्रामेण रणे युध्यस्वैतदुचितम्, न तु तद्दारापहार उचितः सर्वकुलनाशकत्वात् । युद्धे एकस्यैव नाशादिति भावः । मुख्यपक्षमाह-क्षमां वेति । यदि मां जीवन्तं द्रष्टुमिच्छसि तदा रामकथा न कार्या । तत्कथाया रक्षस्तेजोपहारकत्वादुभयोरपि तेजोनाशे मरणादप्यधिका दुःखावस्थेति भावः ॥ २० ॥

रा० टी०-रणे इति । हे रावण ! रणे रामेण सह युध्यस्व क्षमां वा कुरु यदि मां द्रष्टुमिच्छसि तर्हि ते त्वया रामकथा न कार्या ॥ २० ॥

गो० टी०-रण इति । वैरनिर्यातनं कर्तुमिच्छसि तदा रामेण रणे युध्यस्व, यद्वा क्षमां कुरु खरादिवधं सहस्व, सर्वथा चौर्यव्यापारो न कर्तव्य इति भावः । हितं चाह-न त इति । रामकथा रामप्रसङ्गोऽपि ते त्वया न कार्या यदि मां द्रष्टुमिच्छसि जीवितुमिच्छसीत्यर्थः ॥ १९ ॥

२१ ] ति० टी०-साधवोऽकृतपरापचाराः । युक्ता योगवन्तः । अनुष्ठिता इति कर्तरि निष्ठा ॥ २१ ॥

रा० टी०-बहव इति । धर्ममनुष्ठिताः युक्ताः समाधिमन्तः सपरिच्छदाः परिकरसहिताः बहवः साधवः परेषामपराधेन विनष्टाः ॥ २१ ॥

गो० टी०-लोकन्यायमाह-बहव इति । युक्ताः सम्यगाचाराः धर्मम् अनुष्ठिताः अनुष्ठितवन्तः साधवोऽपि परेषामपराधेन विनष्टाः असत्संसर्गदोषेणेत्यर्थः ॥ २० ॥

२२ ] ति० टी०-परापराधेन तवापराधेनेत्यर्थः । विनशेयं विनशिष्यामि । अतः हे राक्षस ! यत्ते क्षमं रणः क्षमा वा तत्त्वमेव कुरु । अहं तु त्वां नानुयामि । त्वद्बुद्धिं नानुगच्छामीत्यर्थः ॥ २२ ॥

रा० टी०-स इति । सः ज्ञाततत्त्वोऽहं परापराधेन विनश्येयम् अतः यत् ते क्षमम् उचितं तत्त्वं कुरु अहं त्वां न अनुयामि अनुगच्छामि ॥ २२ ॥

गो० टी०-सामान्यन्यायं स्वविषये दर्शयति-सोऽहमिति । सोऽहं साधुभूतोऽहं यत्ते क्षमं यत्त्वया कर्तुं शक्यं तत् त्वमेव कुरु अहं त्वा त्वां नानुयामि अनर्थस्य निश्चितत्वादित्यर्थः ॥ २१ ॥

२३ ] ति० टी०-तत्र हेतुमाह-रामश्च हीति । तेजः पराक्रमः । सत्त्वं बुद्धिबलम् । बलं शारीरम् । हि यतो महातेजस्त्वादिगुणै रामः प्रसिद्धः, अत ईदृशो रामो राक्षसलोकस्यान्तकरो हि निश्चयेन भवेदित्यपि संभाव्यते, अतो नानुयामि त्वद्बुद्धिं सकलराक्षसकुलनाशभियेति भावः ॥ २३ ॥

रा० टी०-अनुगमने ध्रुवं विनाशो भवितेति बोधयन्नाह-राम इति । हि यतः रामो महातेजा महाबलश्च अतः राक्षसलोकस्य अन्तकरः भवेत् हि निश्चितमेतत् अपि एतदहं संभावयामि ॥ २३ ॥

गो० टी०-तत्र हेतुमाह-रामश्च हीति । हिः प्रसिद्धौ अपिः कामचारकरणे । 'अपिः संभावनाप्रश्नशङ्कागर्हासमुच्चये । तथा युक्तपदार्थेषु कामचारक्रियासु च ' इति विश्वः । द्वितीयोपिशब्दः अवधारणे ॥ २२ ॥

२४ ] ति० टी०-खरादिनाशस्य तत्कृतान्यायमूलत्वात्तत्र क्षमैव युक्तेत्याह-यदीति । सीताहननप्रयत्नदोषनिरूपितशूर्पणखाहेतोरातिवृत्तस्तूष्णीमवस्थितेन रामेण यदि शूर्पणखावाक्यजनितरोषात्स्वयं योद्धुं गतो रामेण हतस्तदा को रामस्य व्यतिक्रमोऽन्यायस्तत्त्वमेव ब्रूहि ॥ २४ ॥

---

१ राक्षसेति गो. पाठः । २ त्वंवेति गो. पाठः । ३ नश्येयमिति रा. पाठः । ४ त्वेति गो. पाठः । ५ हेति गो. पाठः । ६ न भवेदन्तकोऽपि स इति गो. पाठः । ७ अन्तकरो हि स इति रा. पाठः ।

इदं वचो बन्धुहितार्थिना मया यथोच्यमानं यदि नाभिपत्स्यसे।
सबान्धवस्त्यक्ष्यसि जीवितं रणे हतोऽद्य रामेण शरैरजिह्मगैः ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्ड एकोनचत्वारिंशः सर्गः ॥३९॥



## चत्वारिंशः सर्गः।

रावणो मारीचं परुषोक्तिभिरुपालभ्य कथिताकरणेऽहं त्वामत्रैव हन्मीति बिभीषयते।

मारीचस्य तु तद्वाक्यं क्षमं युक्तं च रावण। उक्तो न प्रतिजग्राह मर्तुकाम इवौषधम् ॥ १ ॥
तं पथ्यहितवक्तारं मारीचं राक्षसाधिपः। अब्रवीत्परुषं वाक्यमयुक्तं कालचोदितः ॥ २ ॥
दुष्कुलैतदयुक्तार्थं मारीच मयि कथ्यते। वाक्यं निष्फलमत्यर्थं बीजमुप्तमिवोखरे ॥ ३ ॥
त्वद्वाक्यैर्न तु मां शक्यं भेत्तुं रामस्य संयुगे। मूर्खस्य पापशीलस्य मानुषस्य विशेषतः ॥ ४ ॥

रा० टी०—यदीति। यदि जनस्थानगतः खरः शूर्पणखाहेतोः अतिवृत्तः अत एव अक्लिष्टकर्मणा रामेण पूर्वं हतः तर्हि अत्र अस्मिन्खरादिवधे रामस्य व्यतिक्रमः रामकर्तृकातिवर्तनं कः तत्त्वं यथा यथावत् ब्रूहि। सार्धश्लोक एकान्वयी॥२४॥

गो० टी०—खरवधेन नाग्रहः कार्य इत्याह—यदीति। सीतापरिभवकरणेन शूर्पणखा विरूपिता खरश्चातिवृत्तो रामस्योपरि गत्वा प्रहारोद्युक्तो रामेण हतः अत्र रामस्य व्यतिक्रमः कः न कोऽपीत्यर्थः ॥ २३ ॥ २४ ॥

२५ ] ति० टी०—सिद्धान्तमाह—इदमिति। यथोच्यमानं परमार्थत उच्यमानं यदि नाभिपत्स्यसे नाङ्गीकरिष्यसि तदा रणे हतः सबान्धवस्त्वं जीवितं त्यक्ष्यसि इति मया अद्यैव निश्चीयते ॥ २६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

रा० टी०—इदमिति। बन्धुहितार्थिना मया यथा यथावदुच्यमानमिदं वचः यदि न अभिपत्स्यसे ग्रहीष्यसि तर्हि रामेण अजिह्मगैः शरैः हतः सबान्धवस्त्वं जीवितं त्यक्ष्यसि॥२६॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

गो० टी०—अवश्यं वक्तव्यमर्थं पुनर्निष्कृष्य दर्शयति—इदमिति। यथोच्यमानं परमार्थत उच्यमानं नाभिपत्स्यसे नाङ्गीकरोषि ॥ २६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

१–२ ] ति० टी०—मारीचस्य मारीचेन क्षमं निवृत्तिसमर्थं युक्तं न्याय्यं कालोचितं च वाक्यमुक्त उपदिष्टो रावणो मुमूर्षुरौषधमिव तदुक्तं न प्रतिजग्राह ॥ १ ॥ २ ॥

रा० टी०—मारीचवचनश्रवणानन्तरकालिकं रावणवृत्तान्तमाह—मारीचस्येति। युक्तं योग्यमत एव क्षमं सहनीयं मारीचस्य तद्वाक्यम् उक्तो मारीचेनोपदिष्टो रावणो मर्तुकाम औषधमिव न जग्राह ॥ १ ॥

गो० टी०—यस्य तत्त्वसद्बुद्धिं नाभिजानन्ति दुर्जनाः।
तमहं शिरसा वन्दे रघुनाथं गुणार्णवम् ॥

मारीचेन त्वित्यादि। क्षमं निवर्तनसमर्थं युक्तं कार्यं पथ्यम् अनपायं हितं सुखावहम् ॥ १ ॥

रा० टी०—तमिति। राक्षसाधिपः कालचोदितो रावणः पथ्यहितवक्तारं तं मारीचं परुषं वाक्यमब्रवीत् ॥ २ ॥

गो० टी०—तमिति। अयुक्तम् अयुक्तार्थम् ॥ २ ॥

३ ] ति० टी०—शत्रोर्मानुषस्य स्तावकत्वात्क्रोधेनाह—दुष्कुलेति। अयुक्तार्थं राजचित्तप्रतिकूलत्वादयुक्तार्थम्। निष्फलं तमोगुणाक्रान्ते मम हृदये तस्यानवकाशात् ॥ ३ ॥

रा० टी०—तद्वचनाकारमाह—दुष्कुलेति। दुष्कुल हे प्रतिकूल! हे मारीच न युक्तः शक्त्ययोग्यः अर्थो यस्य तत् अत्यर्थम् अर्थं प्रयोजनमतिक्रान्तं निष्प्रयोजनमित्यर्थः, वाक्यं यन्मयि कथ्यते तत् ऊषरे निष्फलं फलजननायोग्यं भर्जितमित्यर्थः, बीजमिवोप्तम् ॥ ३ ॥

गो० टी०—यत्किलेति। अयुक्तार्थं राजचित्तप्रतिकूलत्वादनुचितार्थम् उप्तं निक्षिप्तम् ॥ ३ ॥

४ ] ति० टी०—संयुगे पापशीलत्वादिगुणकस्य सीताटकाहन्तृत्वाद्रामस्य भार्याहरणविषये स्थितं मां तद्वाक्यैर्भेत्तुं निवर्तयितुं न शक्यमित्यर्थः। मामिति द्वितीया छान्दसत्वात् ॥ ४ ॥

रा० टी०—त्वदिति। मूर्खस्य रामस्य संयुगे उद्यतं मां भेत्तुं चालयितुं त्वद्वाक्यैर्न शक्यम् ॥ ४ ॥

गो० टी०—त्वदिति। रामस्य संयुगे विषये मां भेत्तुं सीतापहरणोपायाद्युद्धे मां प्रवर्तयितुं त्वद्वाक्यैर्न शक्यम्। तत्र

१ मारीचेनेति गो. पाठः। २ निशाचर इति गो. पाठः। ३ यत्किलेति गो. दुष्कुलैरिति रा. पाठः।

यस्त्यक्त्वा सुहृदो राज्यं मातरं पितरं तथा। स्त्रीवाक्यं प्राकृतं श्रुत्वा वनमेकपदे गतः॥ ५ ॥
अवश्यं तु मया तस्य संयुगे खरघातिनः। प्राणैः प्रियतरा सीता हर्तव्या तव संनिधौ॥ ६ ॥
एवं मे निश्चिता बुद्धिर्हृदि मारीच विद्यते। न व्यावर्तयितुं शक्या सेन्द्रैरपि सुरासुरैः॥ ७ ॥
दोषं गुणं वा संपृष्टस्त्वमेवं वक्तुमर्हसि। अपायं वा उपायं वा कार्यस्यास्य विनिश्चये॥ ८ ॥
संपृष्टेन तु वक्तव्यं सचिवेन विपश्चिता। उद्यताञ्जलिना राज्ञो य इच्छेद्भूतिमात्मनः॥ ९ ॥
वाक्यमप्रतिकूलं तु मृदुपूर्वं शुभं हितम्। उपचारेण वक्तव्यो युक्तं च वसुधाधिपः॥ १० ॥
सावमर्दं तु यद्वाक्यमथवा हितमुच्यते। नाभिनन्देत तद्राजा मानार्थी मानवर्जितम्॥ ११ ॥
पञ्चरूपाणि राजानो धारयन्त्यमितौजसः। अग्नेरिन्द्रस्य सोमस्य यमस्य वरुणस्य च॥ १२ ॥

---

हेतुत्रयम्—पापेत्यादि। पापशीलत्वान्मूर्खत्वाद्विशेषतो मानुषत्वाच्च। तेन नाहं योद्धुमर्हः किंतु तद्भार्यापहरणमेव तदपकाराय प्रतिक्रियेति भावः॥ ४॥

५ ] ति० टी०—तत्र मूर्खत्वमुपपादयति—य इति। प्राकृतमसारम्। स्त्री कैकेयी। एकपदे द्राक्॥ ५॥

६–७ ] ति० टी०—संयुगे खरहन्तुरित्यन्वयः॥ ६–७॥

रा० टी०—तन्मूर्खत्वमेवोपपादयन्नाह—य इति। प्राकृतं स्त्रीवाक्यं श्रुत्वा एकपदे तत्क्षणे एव सुहृदादीन् त्यक्त्वा यो वनं गतस्तस्य संयुगे खरघातिनो रामस्य प्राणैः प्रियतरा सीता मयाऽवश्यं हर्तव्या। प्राणैः प्रियतरेत्यनेन तद्दुःखार्थमेव सीताहरणमिति सूचितम्। श्लोकद्वयमेकान्वयि॥ ५॥ ६॥

गो० टी०—मूर्खत्वमुपपादयति—यदिति। प्राकृतम् असारं स्त्रीवाक्यं कैकेयीवाक्यम् एकपदे उत्तरक्षणे प्राणैः प्राणेभ्यः प्रियतरा तत्प्राणापहरणादपि वरं तत्स्त्रियोऽपहरणमिति भावः। तव सन्निधौ सति हर्तव्या त्वत्सन्निधिमुखेन हर्तव्येत्यर्थः॥ ५॥ ६॥

रा० टी०—एवमिति। हे मारीच! मे हृदि एवं निश्चिता या बुद्धिर्ज्ञानं वर्तते सा बुद्धिः सेन्द्रैः इन्द्रसहितैः सुरासुरैरपि व्यावर्तयितुं न शक्या॥ ७॥

गो० टी०—एवमिति। निश्चिता निश्चयरूपा सेन्द्रैः किं पुनस्त्वयेति भावः॥ ७॥

८ ] ति० टी०—अपि चापृष्टोत्तरप्रलापस्तवासंगत इत्याह—दोषं गुणं वेति। कस्यचित्संदिग्धस्य कार्यस्य निश्चये निश्चयसिद्ध्यर्थमत्रानुष्ठिते को गुणः, को दोषः, क उपायः, कोऽपायः, इति यदि पृष्टं स्यात्तदा एवं वक्तुमर्हसि गुणदोषादिकमित्यर्थः। मया तु निश्चिते कार्ये केवलं साहाय्ये नियुज्यसे, अतो न ते जल्पः संगत इति भावः॥ ८॥

रा० टी०—दोषमिति। अस्य चिकीर्षितस्य कार्यस्य विनिश्चये विनिश्चयार्थं गुणं वा दोषं वा अपायं तद्विघ्नध्वंसं वा उपायं तत्साधनं वा यदि त्वं पृष्टस्तदा एवं वक्तुमर्हसि एतेन तन्मया न पृष्टमिति सूचितं, तेन अपृष्टं न वक्तव्यमिति व्यञ्जितम्॥ ८॥

गो० टी०—अपि चापृष्टोत्तरप्रलापस्तवासंगत इत्याह—दोषमिति। कार्यनिश्चये विषये कौ गुणदोषौ तत्साधने कावुपायाविति पृष्टश्चेदुत्तरं वक्तुमर्हसि नास्माकं तज्जिज्ञासा ततो नैवं वक्तुं युक्तमित्यर्थः॥ ८॥

९ ] ति० टी०—पृष्टोत्तरमेव राजनि सचिवेन विनीतेन वाच्यमित्याह—संपृष्टेन त्विति। उद्यताञ्जलिनेत्यनेन विनीतता दर्शिता॥ ९॥

रा० टी०—संपृष्टेनेति। राज्ञः सकाशात् यः आत्मनो भूतिमिच्छेत् तेन विपश्चिता उद्यताञ्जलिना सचिवेन संपृष्टेनैव वक्तव्यं पृष्टमेव उत्तरितव्यमित्यर्थः॥ ९॥

गो० टी०—प्रसङ्गाद्राजसन्निधौ विज्ञापनप्रक्रियां दर्शयति—संपृष्टेनेत्यादिना। विपश्चिता विदुषा राजसेवाप्रकारज्ञेनेति यावत्। भूतिम् ऐश्वर्यम्॥ ९॥

१० ] ति० टी०—उपचारेण राजनीत्युक्तामार्गेण युक्तम्॥ १०॥

रा० टी०—वाक्यमिति। अप्रतिकूलं प्रतिकूलरहितं मृदुपूर्वं शुभं मधुरवर्णविशिष्टं हितं पथ्यम् उपचारेण नीतिशिक्षया युक्तं वाक्यं वसुधाधिपो वक्तव्यः॥ १०॥

गो० टी०—एवं वक्तृगुणा उक्ताः अथ वचनप्रकारमाह—वाक्यमिति। उपचारेण युक्तं बहुमानेन पुरस्कृतं हितमप्युपचारपूर्वं वक्तव्यमित्यर्थः॥ १०॥

११ ] ति० टी०—सावमर्दं तु राजपृष्टावमर्दसहितम्। अथवा यद्यप्यर्थे। यद्यपि हितं तथापि नाभिनन्देत। त्वं त्वपृष्ट एव ममाहितमवमर्दसहितं मानहीनं वदसीत्यनुचितमिति भावः॥ ११॥

रा० टी०—सेति। सावमर्दं राजपृष्टविघातकं मानवर्जितं वा हितमपि तद्वाक्यं मानार्थी राजा नाभिनन्देत॥ ११॥

गो० टी०—प्रकारान्तरेण न वक्तव्यमित्याह—सावमर्दमिति। सावमर्दं तिरस्कारसहितम्॥ ११॥

१२ ] ति० टी०—ततो वक्तुरनिष्टमपीत्याह—पञ्चेति। के पञ्चेत्यत्राह—अग्नेरिति॥ १२॥

रा० टी०—ननु किं तदभिनन्दनेनेत्यत आह—पञ्चेति।

---

१ वर्तत इति गो. पाठः। २ राज्ञे इति गो. पाठः। ३ मारीचेति गो. पाठः। ४ नन्दतीति गो. पाठः। ५ मानार्ह इति गो. पाठः। ६ स्त्रिया इति युक्तमिति भाति।

औष्ण्यं तथा विक्रमं च सौम्यं दण्डं प्रसन्नताम् । धारयन्ति महात्मानो राजानः क्षणदाचर ॥ १३ ॥
तस्मात्सर्वास्ववस्थासु मान्याः पूज्याश्च [1]नित्यदा। त्वं तु धर्ममविज्ञाय केवलं मोहमाश्रितः ॥ १४ ॥
अभ्यागतं तु दौरात्म्यात्परुषं वदसीदृशम् । गुणदोषौ न पृच्छामि क्षेमं चात्मनि राक्षस ॥ १५ ॥
मयोक्तमपि चैतावत्त्वां प्रत्यमितविक्रम । अस्मिंस्तु स भवान्कृत्ये साहाय्यं कर्तुमर्हसि ॥ १६ ॥
शृणु तत्कर्म साहाय्ये यत्कार्यं वचनान्मम । सौवर्णस्त्वं मृगो भूत्वा चित्रो रजतबिन्दुभिः ॥ १७ ॥
आश्रमे तस्य रामस्य सीतायाः प्रमुखे चर । प्रलोभयित्वा वैदेहीं यथेष्टं गन्तुमर्हसि ॥ १८ ॥
त्वां हि मायामयं दृष्ट्वा काञ्चनं जातविस्मया । आनयैनमिति क्षिप्रं रामं वक्ष्यति मैथिली ॥ १९ ॥
अपक्रान्ते च काकुत्स्थे दूरं गत्वाप्युदाहर । हा सीते लक्ष्मणेत्येवं रामवाक्यानुरूपकम् ॥ २० ॥
तच्छ्रुत्वा रामपदवीं सीतया च प्रचोदितः । अनुगच्छति [12]संभ्रान्तं सौमित्रिरपि सौहृदात्॥ २१ ॥
अपक्रान्ते च काकुत्स्थे लक्ष्मणे च यथासुखम् । आहरिष्यामि वैदेहीं सहस्राक्षः शचीमिव ॥ २२ ॥
एवं कृत्वा त्विदं कार्यं यथेष्टं गच्छ राक्षस । राज्यस्यार्धं प्रदास्यामि मारीच तव सुव्रत ॥ २३ ॥

---

अमितौजसो राजानः अग्न्यादीनां पञ्चानां पञ्चरूपाणि धारयन्ति ॥ १२ ॥

गो० टी०—पञ्चेति । पञ्च रूपाणि अग्न्यादिपञ्चकस्य यानि रूपाणि तानि धारयन्तीत्यर्थः ॥ १२ ॥

१३ ] ति० टी०—कानि रूपाणि तत्राह क्रमेण—औष्ण्यमिति । औष्ण्यं तैक्ष्ण्यम् । सौम्यं दयार्द्रचित्तत्वम् । दण्डं दुष्टनिग्रहम् । एवं च तादृशे वक्तरि तीक्ष्णदण्डपात इत्याशयः॥१३॥

रा० टी०—तानि रूपाणि क्रमेणाह—औष्ण्यमिति । महात्मानो राजानः औष्ण्यादीनि धारयन्ति तत्रौष्ण्यं तीक्ष्णत्वं, विक्रमो बलातिशयः, सौम्यं कृपालुता, दण्डः दुष्टनिग्रहः, प्रसन्नता प्रसादः, एतेन राजा द्रोहिणोऽवश्यं विनाशयतीति सूचितम्॥१३॥

गो० टी०—तान्येवाह—औष्ण्यमिति । औष्ण्यं तैक्ष्ण्यं सौम्यम् आह्लादकरत्वं दण्डं दुष्टनिग्रहं मान्याः मनसा पूज्याः, पूज्याः वाचा बहुमन्तव्याः ॥ १३ ॥

१४ ] ति० टी०—धर्मं राजधर्मम् ॥ १४ ॥

रा० टी०—तस्मादिति । तस्मात् स्वकल्याणहेतोः सर्वास्ववस्थासु सर्वकालेषु पार्थिवा मान्याः पूज्याश्च । अर्थं पृथक्-त्वमिति । धर्मं सचिवकर्म अविज्ञाय केवलं मोहमज्ञानमाश्रितः त्वं तु दौरात्म्यात् दुष्टस्वभावत्वाद्धेतोः अभ्यागतं त्वत्संमुखं प्राप्तं माम् ईदृशं परुषं वदसि ॥ १४ ॥

गो० टी०—सामान्यत उक्तमर्थं प्रकृते संगमयति—त्वं त्विति । धर्मं राजधर्मं मोहम् अज्ञानं दौरात्म्यात् दौर्जन्यात् ॥ १४ ॥

१५ ] ति० टी०—अभ्यागतमतिथिमित्यनेन पूज्यत्वातिशयं सूचयति—गुणदोषप्रश्ने किं मम हितमिति प्रश्ने वा ईदृशं वक्तुं युक्तम्, न चैतदेकमपि मया पृष्टमिति भावः ॥ १५ ॥

रा० टी०—ननु त्वया पृष्ट एवाहमुक्तवानित्यत आह—गुणेति । हे राक्षस ! हे अमितविक्रम ! गुणदोषौ मत्कर्तव्ये को गुणः कश्च दोष इति आत्मनि मयि क्षमम् उचितं न वेति चेत्यहं न पृच्छामि किंतु अस्मिन् कृत्ये सभवान् सभः सभावान् राजा तद्वान् नित्यं राजसेवीत्यर्थः, त्वं साहाय्यं कर्तुमर्हसि एतावदेव त्वां प्रति मयोक्तम् ॥ १५ ॥ १६ ॥

गो० टी०—तर्हि कथं मया वक्तव्यमित्यत्राह—गुणेति । गुणदोषौ आत्मनि क्षेमं च न पृच्छामि किंतु संप्रति मया तव तुभ्यं मयोक्तमेतावत् ॥ १५ ॥

१६ ] ति० टी—अपि च अपि तु मया त्वां प्रत्येतावदेवोक्तम् । किं तत्राह—अस्मिन्सीतापहाररूपे कृत्ये स भवान्मया नियुक्तः साहाय्यं कर्तुमर्हसीति ॥ १६ ॥

गो० टी०—किंतदित्यत्राह—अस्मिन्निति । कृत्ये कार्ये श्रृण्विति साहाय्ये करणीये यत्कार्यं तद्वचनं तद्विषयं वचनं श्रृणु ॥ १६ ॥

१७–१९ ] ति० टी०—किं तन्मत्कर्तव्यं साहाय्यं तत्राह—शृण्विति । साहाय्ये मम वचनाद्यत्कार्यं तत्कर्म शृण्विति संबन्धः ॥ १७–१९ ॥

रा० टी०—मदुक्तं साहाय्यं कर्म विस्मृतं चेत् पुनरुच्यते इत्याह—शृण्विति ॥ १७ ॥

रा० टी०—आश्रम इति ॥ १८ ॥

गो० टी०—सौवर्ण इति । प्रमुखे अग्रे ॥ १७ ॥ १८ ॥

रा० टी०—त्वामिति ॥ १९ ॥

गो० टी०—किं तस्य प्रयोजनं तत्राह—त्वामिति ॥ १९ ॥

२०–२३ ] ति० टी०—रामवाक्यानुरूपकं रामध्वनिसदृशध्वनियुक्तम् ॥ २०–२३ ॥

---

१ पार्थिवा इति गो. रा. पाठः । २ आस्थित इति गो. पाठः । ३ मामिति गो. पाठः । ४ वक्तुमिच्छसीति गो. पाठः । ५ क्षेममिति गो. रा. पाठः । ६ तव चैतावत्संप्रतीति गो. पाठः । ७ त्वं महाकृत्य इति गो. पाठः । ८ तु मायामृगमिति गो. पाठः । ९ एवमिति गो. पाठः । १० त्विति गो. पाठः । ११ यात्वा व्युदाहरेति गो. पाठः । १२ संभ्रान्त इति गो. पाठः । १३ आनयिष्यामीति गो. पाठः । १४ प्रयच्छामीति गो. पाठः ।

गच्छ सौम्य शिवं मार्गं कार्यस्यास्य विवृद्धये । अहं त्वानुगमिष्यामि सरथो दण्डकावनम् ॥ २४ ॥
प्राप्य सीतामयुद्धेन वञ्चयित्वा तु राघवम् । लङ्कां प्रति गमिष्यामि कृतकार्यः सह त्वया ॥ २५ ॥
नो चेत्करोषि मारीच हन्मि त्वामहमद्य वै । एतत्कार्यमवश्यं मे बलादपि करिष्यसि ॥
राज्ञो विप्रतिकूलस्थो न जातु सुखमेधते ॥ ॥ २६ ॥
आसाद्य तं जीवितसंशयस्ते मृत्युर्ध्रुवो ह्यद्य मया विरुध्यतः ।
एतद्यथावत्परिगण्य बुद्ध्या यदत्र पथ्यं कुरु तत्तथा त्वम् ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

---

रा० टी०-अपक्रान्त इति । काकुत्स्थे रामे अपक्रान्ते सति हा सीते ! हा लक्ष्मणेत्येवम् एतद्रूपं रामवाक्यानुरूपकं रामवाक्यमेवेदमिति बोधकं वाक्यं दूरं गत्वा त्वमुदाहर ॥२०॥

गो० टी०-अपक्रान्त इति । अनुरूपकं स्वार्थे कप्रत्ययः ॥ २० ॥

रा० टी०-तदिति । तत् रामवाक्यानुरूपकं वाक्यं श्रुत्वा सीतया प्रचोदितः संभ्रान्तः सौमित्रिरपि सौहृदात् रामपदवीम् अनुगच्छति अनुगन्ता ॥ २१ ॥

गो० टी०-तदिति । पदवीं मार्गम् ॥ २१ ॥

रा० टी०-अपक्रान्त इति । अपक्रान्ते अपगते सति वैदेहीम् आहरिष्यामि ॥ २२ ॥

रा० टी०-तत्र दृष्टान्तः-एवमिति । एवम् इदं कार्यं कृत्वा निश्चित्य यथेष्टं गच्छ । तत्फलमाह-राज्यस्यार्धं स्वकीयमर्धं राज्यं प्रदास्यामि तुभ्यमिति शेषः ॥ २३ ॥

गो० टी०-अपक्रान्त इति । यथासुखं यत्नं विना २२॥२३

२४-२५ ] ति० टी०-शिवं मार्गं गच्छ सौम्यो भूत्वा प्रस्थितो भवेत्यर्थः । किं च शिवं मनोहरं मार्गं मृगरूपं गच्छ प्राप्नुहि ॥ २४ ॥ २५ ॥

रा० टी०-गच्छेति । हे सौम्य ! अस्य मदुक्तस्य कार्यस्य विवृद्धये सम्यक्सिद्धये इत्यर्थः, शिवं कल्याणकारकं मार्गं गच्छ त्वा त्वाम् अहमनुगमिष्यामि ॥ २४ ॥

रा० टी०-प्राप्येति । राघवं वञ्चयित्वा अयुद्धेन युद्धाभावेन सीतां प्राप्य आहृत्य कृतकार्योऽहं त्वया सह लङ्कां प्रति गमिष्यामि ॥ २५ ॥

गो० टी०-गच्छेति । मार्गं मृगसंबन्धिरूपं शिवं मनोहरं गच्छ प्राप्नुहि ॥ २४ ॥ २५ ॥

२६ ] ति० टी०-अथ राजत्वात्स्ववाक्याकरणे दण्डमाह-नो चेदिति । मद्वचनानुष्ठाने मरणमेवानुष्ठाने तु जीवनं मत्तो बहुधनादिप्राप्तिश्च । एवं प्रार्थनयाऽकरणे बलान्मद्बलहेतुकमरणभयात्त्वं च करिष्यस्येव ॥ २६ ॥

रा० टी०- नो इति । हे मारीच ! चेद्यदि त्वं नो करोषि मदुक्तं न करिष्यसि तर्हि अद्य अस्मिन्दिने एव त्वां हन्मि हनिष्यामि । अर्धं पृथक् । ननु अपराधमन्तरा हननमयुक्तमित्यत आह-एतदिति । एतदुक्तं मे कार्यं बलादपि करिष्यसि । अकरणे दोषमाह-राज्ञो विप्रतिकूलस्थः अननुकूलाचरणः जनः जातु कदाचिदपि सुखं न एधते ॥ २६ ॥

गो० टी०-न चेदिति । बलादपि करिष्यसि अनिच्छतात्वया सर्वथा अहमेतत्कार्यं कारयिष्यामीत्यर्थः । विपक्षे बाधकमाह-राज्ञ इति ॥ २६ ॥

२७ ] ति० टी०-रामात्पर्यायद्वये इव कदाचिज्जीवनं संभाव्यत एव मद्वचनाकरणे तु सर्वथाऽद्य मृत्युरेवेत्याह-आसाद्येति । तं रामम् । संशयो न तु नाशनिश्चयः । एतन्मदुक्तवचनम् ॥ २७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

रा० टी०-ननु रामकर्तृकवधभिया न गमिष्यामीत्यत आह-आसाद्येति । तं राममासाद्य प्राप्य ते जीवितसंशयः तस्य बलवत्त्वे तव चापलायने वधः तवैव बलवत्त्वे पलायने वा वधाभावः मया विरुध्यतस्तु ते मृत्युर्ध्रुवः मद्बलवत्त्वस्य निश्चितत्वेन समीपस्थत्वात्पलायनानर्हत्वेन च मरणे न संशय इति तात्पर्यम् अतः बुद्ध्या एतत् मदुक्तं परिगण्य विचार्य अनयोर्मध्ये यत् पथ्यं हितं तत् तथा निश्चितबुद्ध्या कुरु ॥२७॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

गो० टी०-कार्यकरणाकरणयोर्गुणदोषौ दर्शयति-आसाद्येति । तं रामम् आसाद्य मृगरूपेण प्राप्य जीवितस्य संशयः दैवाज्जीवितं लभ्येतापि मद्विरोधे तु जीवितहानिरेव स्यात् प्रतिगृह्य निश्चित्य अत्र कार्यद्वये यत्ते पथ्यं तत्कुरु मदुक्ताकरणे अवश्यं हननमित्यर्थः ॥ २७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने चत्वारिंशः सर्गः ॥ ४० ॥

---

१ नेति गो. पाठः । २ विरुध्येति गो. पाठः । ३ प्रतिगृह्येति गो. पाठः ।

## एकचत्वारिंशः सर्गः ।

धाष्टर्यान्मारीचः पुना रावणमुपालभमानः सीताहरणं महानर्थहेतुस्त्वयाऽऽसादित इति परिशोचति ।

आज्ञप्तो रावणेनेत्थं प्रतिकूलं च राजवत् । अब्रवीत्परुषं वाक्यं [3]निःशङ्को राक्षसाधिपम् ॥ १ ॥
केनायमुपदिष्टस्ते विनाशः पापकर्मणा । सपुत्रस्य [4]सराज्यस्य सामात्यस्य निशाचर ॥ २ ॥
कस्त्वया सुखिना राजन्नाभिनन्दति पापकृत् । केनेदमुपदिष्टं ते मृत्युद्वारमुपायतः ॥ ३ ॥
शत्रवस्तव सुव्यक्तं हीनवीर्या [5]निशाचर । इच्छन्ति त्वां विनश्यन्तमुपरुद्धं बलीयसा ॥ ४ ॥
केनेदमुपदिष्टं ते क्षुद्रेणा[6]हितबुद्धिना । यस्त्वामिच्छति नश्यन्तं स्वकृतेन निशाचर ॥ ५ ॥
वध्याः खलु न [7]वध्यन्ते सचिवास्तव रावण । ये त्वामुत्पथमारूढं न निगृह्णन्ति सर्वशः ॥ ६ ॥
अमात्यैः कामवृत्तो हि राजा कापथमाश्रितः । निग्राह्यः सर्वथा सद्भिः [8]स निग्राह्यो न गृह्यते ॥ ७ ॥

---

१ ] ति० टी०—राजवद्राजयोग्यं रावणेनाज्ञप्तो रामलक्ष्मणप्रतारणरूपं कार्यं प्रतिकूलमन्यथा वधं करिष्यामीत्येवं प्रतिकूलवाक्यसहितं यथाज्ञप्तो मृत्योर्निःशङ्को मारीचः परुषं शब्दतोऽर्थतश्च वाक्यमब्रवीत् ॥ १ ॥

रा० टी०—रावणपरुषवचनश्रवणानन्तरकालिकं मारीचवृत्तान्तमाह—आज्ञप्त इत्यादिभिः । इत्यनेन प्रकारेण रावणेन प्रतिकूलमाज्ञप्तो निश्शङ्को रावणात् शङ्कारहितो मारीचो राजवत् परुषं वाक्यं राक्षसाधिपमब्रवीत् ॥ १ ॥

गो० टी०—येन सर्वात्मना वर्ज्यं प्रातिकूल्यं हितैषिणाम् ।
सर्वलोकानुकूलं तमाश्रये रघुनायकम् ॥

आज्ञप्त इत्यादि । अराजवत् यदा रामप्रातिकूल्ये प्रवृत्तस्तदैव राजत्वं गतमिति मुनेराशयः, यद्वा राजवत् राजार्हं "तदर्हम्" इत्यर्हार्थे वतिः, यद्वा राजवदिति पूर्वसर्गोक्तमौद्धत्यं लक्ष्यते वाक्यं वाक्यार्थानुष्ठानं मृगरूपमासाद्य त्वया गन्तव्यमित्येवंरूपं प्रतीत्यर्थः, यद्वा प्रतिकूलवाक्यम् आज्ञप्तः चोदितः उक्त इत्यर्थः ॥ १ ॥

२ ] ति० टी०—विनाशो विनाशोपायः ॥ २ ॥

रा० टी०—तद्वचनाकारमाह—केनेति । हे निशाचर ! पुत्रादिसहितस्य तव अयं सीतापहारो विनाशः विध्वंसोपायः केन पापकर्मणा उपदिष्टः ॥ २ ॥

गो० टी०—केनायमिति । विनाशः विनाशोपायः ॥ २ ॥

३ ] ति० टी०—सुखिना त्वया सहावस्थानमिति शेषः । को नाभिनन्दति केन पापकृता । उपायत उपायव्याजेन ॥ ३ ॥

रा० टी०—क इति । सुखिना त्वया करणेन कः पापकृत् नाभिनन्दति अत एव हेतोः उपायतो मृत्युद्वारं केनोपदिष्टम् ॥ ३ ॥

गो० टी०—क इति । सुखिना त्वया अवस्थानमिति शेषः । मृत्युद्वारं मृत्युद्वारतुल्यमिदं कार्यम् उपायतः व्याजेन ॥ ३ ॥

४ ] ति० टी०—तथोपदेष्टारस्त्वत्तो हीनवीर्यास्तव शत्रवः ये त्वां त्वत्तो बलवत्तरेण शत्रुणोपरुद्धं विनश्यन्तं द्रष्टुमिच्छन्ति ॥ ४ ॥

रा० टी०—शत्रव इति । हे निशाचर ! हीनवीर्याः तव शत्रवः बलीयसा अतिबलवता शत्रुणोपरुद्धम् अत एव विनश्यन्तं त्वामिच्छन्ति ॥ ४ ॥

गो० टी०—शत्रव इति । बलीयसा रामेण उपरुद्धम् आक्रान्तम् अत एव विनश्यन्तं त्वामिच्छन्ति त्वद्विनाशं रामविरोधमुखेनेच्छन्तीत्यर्थः ॥ ४ ॥

५ ] ति० टी०—स्वकृतेन स्वनिर्मितविनाशोपायेन ॥ ५ ॥

रा० टी०—तदेव भङ्गयन्तरेणाह—केनेति । स्वकृतेन क्षुद्रेण कर्मणा विनश्यन्तं त्वां य इच्छति तेनाहितबुद्धिना केनेदमुपदिष्टम् ॥ ५ ॥

गो० टी०—न केवलं शत्रवः तत्रापि क्षुद्रा एवेदं कार्यमिच्छन्तीत्याह—केनेति । स्वकृतेन त्वत्कृताकृत्येन ॥ ५ ॥

६ ] ति० टी०—ये त्वामेवं कुपथमारूढं न निगृह्णन्ति न वारयन्त्यमात्यास्ते वध्या वधयोग्याः कुतस्त्वया न वध्यन्त इत्यर्थः ॥ ६ ॥

रा० टी०—उचितवधोपेक्षा ते न युक्तेति बोधयन्नाह—वध्या इति । उत्पथमारूढं त्वां ये न निगृह्णन्ति ते वध्याः सर्वशः सचिवा न वध्यन्ते खलु अनुचितमेतदित्यर्थः ॥ ६ ॥

गो० टी०—वध्या इति । ये उत्पथं लोकशास्त्रविरुद्धमार्गम् आरूढं प्रविष्टं त्वां न निगृह्णन्ति तस्मान्मार्गान्न निवर्तयन्ति ते सचिवाः वध्याः वधार्हाः ॥ ६ ॥

७ ] ति० टी०—तत्र नीतिशास्त्रमाह—अमात्यैरिति॥७॥

रा० टी०—अमात्यैरिति । कामवृत्तः अत एव कापथमाश्रितो राजा सद्भिरमात्यैः निग्राह्यः स कापथमाश्रितः अत एव निग्राह्यस्त्वं न गृह्यसे ग्राह्यत्वेन न स्वीकियसे ॥ ७ ॥

गो० टी०—एतदुपयुक्तत्वेन सचिवकर्तव्यं दर्शयन् प्रकृते

---

१ ऽराजवद्वाक्यमिति गो. पाठः । २ निशाचर इति गो. पाठः । ३ मारीच इति गो. पाठः । ४ सराष्ट्रस्येति गो. पाठः । ५ निशाचरा इति गो. पाठः । ६ ऽहितवादिनेति गो. पाठः । ७ हन्यन्त इति गो. पाठः । ८ न‥‥‥निगृह्यस इति गो. पाठः ।

धर्ममर्थं च कामं च यशश्च जयतां वर । स्वामिप्रसादात्सचिवाः प्राप्नुवन्ति निशाचर ॥ ८ ॥
विपर्यये तु तत्सर्वं व्यर्थं भवति रावण । व्यसनं स्वामिवैगुण्यात्प्राप्नुवन्तीतरे जनाः ॥ ९ ॥
राजमूलो हि धर्मश्च यशश्च जयतां वर । तस्मात्सर्वास्ववस्थासु रक्षितव्या नराधिपाः ॥ १० ॥
राज्यं पालयितुं शक्यं न तीक्ष्णेन निशाचर । न चातिप्रतिकूलेन नाविनीतेन राक्षस ॥ ११ ॥
ये तीक्ष्णमन्त्राः सचिवा भुज्यन्ते सह तेन वै । विषमेषु रथाः शीघ्रं मन्दसारथयो यथा ॥ १२ ॥
बहवः साधवो लोके युक्तधर्ममनुष्ठिताः । परेषामपराधेन विनष्टाः सपरिच्छदाः ॥ १३ ॥
स्वामिना प्रतिकूलेन प्रजास्तीक्ष्णेन रावणः । रक्ष्यमाणा न वर्धन्ते मृगा गोमायुना यथा ॥ १४ ॥
अवश्यं विनशिष्यन्ति सर्वे रावण राक्षसाः । येषां त्वं कर्कशो राजा दुर्बुद्धिरजितेन्द्रियः ॥ १५ ॥

तदभावं चतुर्थपादेनाह—अमात्यैरिति । कापथं कुमार्गं निग्राह्यः निवर्तनीयः ॥ ७ ॥

८ ] ति० टी०—कुतस्तैरेवमनुष्ठेयं तत्राह—धर्ममिति ॥ ८ ॥

रा० टी०—कापथमाश्रितो राजाऽवश्यं निग्राह्य इत्यत्र हेतुमाह—धर्ममिति । हे निशाचर ! सचिवाः स्वामिप्रसादात् धर्मादीन् प्राप्नुवन्ति विपर्यये स्वामिप्रसादाभावे तु तत्सर्वं धर्मादिकं व्यर्थं भवति स्वामिवैगुण्यादेव इतरे जनाः व्यसनं दुःखं प्राप्नुवन्ति ॥ ८ ॥ ९ ॥

गो० टी०—धर्ममिति । स्वामिप्रसादात् स्वामिनः प्रसन्नभावात् स्वामिसाद्गुण्यादित्यर्थः ॥ ८ ॥

९-१० ] ति० टी०—विपर्यये स्वामिवैगुण्ये । तत्र न केवलं तेषामेव व्यसनप्राप्तिः, किं तु सर्वजनानाम् । तदाह—इतरे जना इति । अपीति शेषः ॥ ९ ॥ १० ॥

गो० टी०—विपर्यय इति । विपर्यये स्वामिवैगुण्ये स्वामिवैगुण्यात्र केवलममात्या एव नश्यन्ति किंतु तदितरेऽपि जना इत्याह—व्यसनमिति ॥ ९ ॥

रा० टी०—राजेति । धर्मो यशश्च राजमूल एव तस्मात् हेतोः सर्वास्ववस्थासु नराधिपाः रक्षितव्याः ॥ १० ॥

गो० टी०—राजमूल इति । उक्तमर्थमुपसंहरति—तस्मादिति ॥ १० ॥

११ ] ति० टी०—तीक्ष्णेन क्रूरदण्डेन । प्रतिकूलेन स्वप्रकृतीनामिति शेषः ॥ ११ ॥

रा० टी०—राज्यमिति । हे निशाचर ! तीक्ष्णेन पुरुषेण राज्यं पालयितुं न शक्यम् अतिप्रतिकूलेन सर्वानिष्टकारकेन न अविनीतेन महात्मसु नम्रतारहितेन च न ॥ ११ ॥

गो० टी०—राज्यमिति । तीक्ष्णेन क्रूरदण्डेन प्रतिकूलेन प्रजाविरुद्धेन अविनीतेन इन्द्रियजयरहितेन 'विनयो हीन्द्रियजयः' इति कामन्दकः ॥ ११ ॥

१२ ] ति० टी०—तीक्ष्णमन्त्रास्तीक्ष्णोपायप्रयोक्तारस्तेन तन्मन्त्रग्राहिणा राज्ञा सह भुज्यन्ते स्वसमतया स्थाप्यन्ते । मन्दो मन्दबुद्धिः सारथिर्येषां ते रथा यथा विषमे सारथिभिः सह नश्यन्ति तथा ते राजानो मन्त्रिभिः सह नश्यन्ति ॥ १२ ॥

रा० टी०—ये इति । ये सचिवास्तीक्ष्णमन्त्रास्तैक्ष्ण्योपदेष्टारः तैः सचिवैः तेन राज्ञा सह भुज्यन्ते दुःखानीति शेषः । तत्र दृष्टान्तः—मन्दसारथयः मन्दः प्रज्ञाहीनः सारथिर्येषां ते रथाः विषमेषु उन्नतनिम्नप्रदेशेषु यथा ॥ १२ ॥

गो० टी०—य इति । तीक्ष्णमन्त्राः तीक्ष्णोपायप्रयोक्तारः तेन स्वमन्त्रग्राहिराज्ञा सह विषमे निम्नोन्नतप्रदेशे शीघ्रगास्तुरगाः मन्दसारथयः अपटुसारथयः सन्तः यथा सारथिना सह नश्यन्ति तथेत्यर्थः ॥ १२ ॥

१३ ] ति० टी०—युक्तधर्ममनुष्ठिता युक्तधर्मानुष्ठातारः । साधवो नीतिमार्गनिष्ठाः । सपरिच्छदाः सपरिजनाः ॥ १३ ॥

रा० टी०—बहव इति । अयं श्लोकः समनन्तरं व्याख्यातः ॥ १३ ॥

गो० टी०—उत्तरश्लोकवक्ष्यमाणस्य सामान्यन्यायं दर्शयति—बहव इति । साधवो धर्मज्ञाः युक्ताः नीतिमार्गनिष्ठाः धर्मम् अनुष्ठिताः अनुष्ठितवन्तः । "गत्यर्थाकर्मक—"इत्यादिना कर्तरि क्तः । सपरिच्छदाः सपरिवाराः ॥ १३ ॥

१४ ] ति० टी०—तीक्ष्णदण्डेन प्रजानां प्रतिकूलेन रक्ष्यमाणाः प्रजा न वर्धन्ते गोमायुना मृगघातकजीवेन रक्ष्यमाणा मृगा इव ॥ १४ ॥

रा० टी०—स्वामिनेति । प्रतिकूलेन अननुकूलाचरणशीलेन तीक्ष्णेन उग्रदण्डदात्रा स्वामिना रक्ष्यमाणा अपि प्रजाः गोमायुना हिंसकेन रक्ष्यमाणा मृगा इव न वर्धन्ते ॥ १४ ॥

गो० टी०—स्वामिनेति । गोमायुना क्रोष्ट्रा स हि मेषघातुक इति प्रसिद्धिः ॥ १४ ॥

१५ ] ति० टी०—कर्कशः क्रूरबुद्धिः कठिनश्च ॥ १५ ॥

रा० टी०—अवश्यमिति । हे रावण ! येषां त्वं राजा ते सर्वे राक्षसा अवश्यं विनशिष्यन्ति विनङ्क्ष्यन्ति ॥ १५ ॥

गो० टी०—अवश्यमिति । कर्कशः क्रूरबुद्धिः ॥ १५ ॥

१ जयश्रेति गो. पाठः । २ चापीति गो. पाठः । ३ भज्यन्त इति गो. पाठः । ४ तुरगाः शीघ्रा इति गो. पाठः । ५ युक्ता इति गो. पाठः । ६ रावणेति गो. रा. पाठः । ७ मेषा इति गो. पाठः ।

तदिदं काकतालीयं घोरमासादितं मया । अत्र त्वं शोचनीयोऽसि ससैन्यो विनशिष्यसि ॥ १६ ॥
मां निहत्य तु रामोऽसावचिरात्त्वां वधिष्यति । अनेन कृतकृत्योऽस्मि म्रिये चाप्यरिणा हतः ॥ १७॥
दर्शनादेव रामस्य हतं मामवधारय । आत्मानं च हतं विद्धि हृत्वा सीतां सबान्धवम् ॥ १८॥
आनयिष्यसि चेत्सीतामाश्रमात्सहितो मया । नैव त्वमपि नाहं वै नैव लङ्का न राक्षसाः ॥ १९ ॥
निवार्यमाणस्तु मया हितैषिणा न मृष्यसे वाक्यमिदं निशाचर ।
परेतकल्पा हि गतायुषो नरा हितं न गृह्णन्ति सुहृद्भिरीरितम् ॥ ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्ड एकचत्वारिंशः सर्गः ॥ ४१ ॥

---

१६ ] ति० टी०–तदिदं त्वत्तो मरणरूपं घोरं काकतालीयमाकस्मिकं मयाऽऽसादितं यद्यपि तथापि तत्प्रति न मया शोकः क्रियते 'जातस्य हि ध्रुवो मृत्युः' इति न्यायात्। तथापि त्वं ससैन्यो विनशिष्यसि यद्यत्रार्थे त्वं मया शोचनीयोऽसि ॥ १६ ॥

रा० टी०–तदिति । तत् भवद्दुर्वृत्तत्वात् हेतोः इदं घोरं दुःखमित्यर्थः, काकतालीयं काकतालीयन्यायेन अकस्मात् मया आसादितं प्राप्तम् अत्रास्मिन् दुर्वृत्ते ससैन्यस्त्वं विनशिष्यसि अतस्त्वं शोचनीयोऽसि ॥ १६ ॥

गो० टी०–तदिदमिति । काकतालीयं यादृच्छिकं घोरं भयंकरमिदं कृत्यम् मया आसादितं ततो नाहं शोच्यः नहि प्रमादविपन्नः शोच्य इति भावः । ससैन्यस्त्वं विनशिष्यसीत्यत्रैव कृत्ये त्वं मे शोचनीयः बुद्धिपूर्वकारी त्वमेव हि शोच्य इति भावः, यद्वा ससैन्यो विनशिष्यसीति यत् तदिदं काकतालीयं घोरं कार्यं त्वया आसादितम् अत्रैव मया त्वं शोचनीयः हन्त दैवान्महाननर्थो राज्ञ उपस्थित इति शोचामीत्यर्थः ॥ १६ ॥

१७ ] ति० टी०–ननु मम मरणं कथं निश्चितं तत्राह–मामिति । मां निहत्य रामस्त्वां सबान्धवमचिराद्वधिष्यति । तस्मादुभयथापि मरणं निश्चितं त्वत्तो वा रामाद्वा । तत्रानेन वधेन कृतकृत्योऽस्मि । यन्मृधे रणेऽरिणा हतो म्रिये । राजतो बलान्मरणापेक्षया रणे शत्रुतो मृत्योः स्वर्गदत्वादायमृत्योरपमृत्युत्वेन दुर्मरणत्वेन शास्त्रे उक्ते राज्ञा मारितस्य शौचोदकदानाद्यभावश्रवणाद्रामतो मरणेन कृतकृत्योऽहमिति व्यङ्ग्यम् । ईदृशं ज्ञानं चास्य तपसा योगेन च शुद्धचित्तत्वादिति बोध्यम् ॥ १७ ॥

रा० टी०–मामिति । असौ रामः मां निहत्य अचिरात् शीघ्रं त्वां वधिष्यति अनेन हेतुना अरिणा हतोऽप्यहं कृतकृत्योऽस्मि एतेन तव वधाभावे जीवलोकोपद्रवः स्यात् वधे तु निवृत्तिरिति हेतुः सूचितः ॥ १७ ॥

गो० टी०–त्वयि विद्यमाने मम का हानिरित्यत्राह–मामिति । न चिरात्क्षणेनैव अहं न शोचनीय इत्यत्र हेतुमाह–अनेनेति । तदरिणा रामेण हतो म्रिये इति यत् अनेन हेतुना कृतकृत्योऽस्मि विश्वामित्रयागसंरक्षणप्रभृतिखरादिवधान्तातिमानुषचारित्रात्दुस्त्यतिकृताऽसाधारणमहिमस्फूर्त्या राघवं परमपुरुषं निश्चितवतो मम तत्करप्रापितमरणस्य परमपुरुषार्थत्वादिति भावः । तथोक्तं नृसिंहपुराणे–'रामादपि हि मर्तव्यं मर्तव्यं रावणादपि । उभयोरपि मर्तव्ये वरं रामान्न रावणात्' इति । यद्वा त्वत्तो निरुपाधिकवधाच्छत्रुहस्ताद्वधो निःश्रेयसकर इति भावः ॥ १७–१९ ॥

१८ ] ति० टी०–आत्मानं रावणम् । सबान्धवमात्मानमित्यन्वयः ॥ १८ ॥

रा० टी०–विध्वंसोऽवश्यं भवितेत्याह–दर्शनादिति । रामस्य दर्शनादेव मां हतमवधारय सीतां हृत्वा तु सबान्धवमात्मानं हतं विद्धि ॥ १८ ॥

१९ ] ति० टी०–कदाचिद्यदि मया जीवता सहैव सीतामानयिष्यसि तदा पश्चादपि सर्ववधो निश्चित इत्यर्थः ॥ १९ ॥

रा० टी०–आनयिष्यसीति । मया सहितस्त्वं चेत् यदि सीतामानयिष्यसि आनेष्यसि तर्हि त्वदादयो न ॥ १९ ॥

२० ] ति० टी०–न मृष्यसे प्रतिकूलबुद्ध्या न परिगृह्णासीत्यर्थः । परेतकल्पा मृतप्रायाः ॥ २० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्ड एकचत्वारिंशः सर्गः ॥ ४१ ॥

रा० टी०–निवार्यमाण इति । हि यतः गतायुषः अत एव परेतकल्पाः ईषदपरिसमाप्तमरणाः नराः सुहृद्भिः ईरितं कथितं हितं वचो न गृह्णन्ति अत एव हितैषिणा मया निवार्यमाणस्त्वमिदं हितं वाक्यं न मृष्यसे सहसे ॥ २० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे एकचत्वारिंशः सर्गः ॥ ४१ ॥

गो० टी०–उक्तमर्थं न्यायप्रदर्शनेन प्रतिपादयति–निवार्यमाण इति । हितैतौ यस्मात् गतायुषो नराः हितं न गृह्णन्ति तस्माद्वाक्यमिदं न मृष्यसे न सहसे गतायुष्कत्वादितं न-

---

१ अत्रैव शोचनीयस्त्वामिति गो. पाठः । २ रामश्च न चिरादिति गो. पाठः । ३ यदरिणेति गो. पाठः । ४ उपधारयेति गो. पाठः । ५ असीति गो. पाठः । ६ चेति गो. पाठः ।

## द्विचत्वारिंशः सर्गः ।

उररीकृतरावणनिदेशो मारीचस्तेन सह रथमधिरुह्य रामाश्रमान्तिकं प्राप्तो मायया विचित्रमृगपरिग्रहमाचरन्नाश्रमाभ्यासे चिक्रीड । कुसुमचिचीषयाऽऽश्रमान्निर्गता वैदेही तं ददर्श ॥

एवमुक्त्वा तु पैरुषं मारीचो रावणं ततः । गच्छावेत्यब्रवीद्दीनो भयाद्रात्रिंचरप्रभोः ॥ १ ॥
दृष्टश्चाहं पुनस्तेन शरचापासिधारिणा । मद्वधोद्यतशस्त्रेण निहतं जीवितं च मे ॥ २ ॥
नहि रामं पराक्रम्य जीवन्प्रतिनिवर्तते । वर्तते प्रतिरूपोऽसौ यमदण्डहतस्य ते ॥ ३ ॥
किं तु कर्तुं मया शक्यमेवं त्वयि दुरात्मनि । एष गच्छाम्यहं तात स्वस्ति तेऽस्तु निशाचर ॥ ४ ॥
प्रहृष्टस्त्वभवत्तेन वचनेन स रैक्षसः । परिष्वज्य सुसंश्लिष्टमिदं वचनमब्रवीत् ॥ ५ ॥
एतच्छौटीर्ययुक्तं ते मच्छैन्दवशवर्तिनः । इदानीमसि मारीचः पूर्वमन्यो हि राक्षसः ॥ ६ ॥

---

गृह्णासीत्यर्थः, परेतकल्पाः आसन्नमरणाः । ईषदसमाप्तौ कल्पप्प्रत्ययः ॥ २० ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने एकचत्वारिंशः सर्गः ॥४१॥

---

१ ] ति० टी०–रात्रिंचरप्रभो रावणाद्यद्भयमधुनैव निव्यमरणरूपं तस्माद्गच्छावेत्यब्रवीत् । त्वमहं चेत्यर्थः ॥ १ ॥

रा० टी०–मारीचपरुषोक्त्यनन्तरकालिकं मारीचवृत्तान्तमाह–एवमित्यादिभिः । एवं परुषमुक्त्वा रात्रिंचरप्रभोः रावणस्य ततस्तस्मादुक्तात् भयात् भयवचनाद्धेतोः दीनः मारीचः आवां गच्छाव त्वया सह गमिष्यामीत्यर्थः, इति रावणमब्रवीत् ॥ १ ॥

गो० टी०–क्षणं क्षणार्धमपि वा वियोगो यस्य दुःखदः ।
तमहं शिरसा वन्दे जानकीप्राणवल्लभम् ॥

एवमित्यादि । भयात् रावणादधुनैव वधो भविष्यतीति भयात् ॥ १ ॥

२ ] ति० टी०–तथा वदन्नेव निजदुःखमप्याह–दृष्टश्चाहमिति । पुनर्यदाद्य ते न दृष्टो भविष्यामि तदोच्यमानविशेषणेन रामेण जीवितं निहतं नष्टमेव । चकारात्तव च जीवितं नष्टम् ॥ २ ॥

रा० टी०–मारीचस्यैव वचनान्तराण्याह–दृष्ट इत्यादिभिः । मद्वधोद्यतशस्त्रेण मद्वधाय उद्यतं शस्त्रं यस्य तेन शरचापासिधारिणा रामेण च यदि पुनरहं दृष्टस्तदैव मे जीवितं चकारान्तरेण तवापि जीवितं निहतम् । एकश्चस्त्वर्थे ॥ २ ॥

गो० टी०–दीन इत्युक्तं दौस्थ्यमुपपादयति–दृष्ट इत्यादिना । यद्यहं तेन दृष्टः तदा मे जीवितं विनष्टमित्यन्वयः॥२॥

३] ति० टी०–यमदण्डहतस्य तेऽसौ रामः प्रतिरूपो यमदण्डप्रतिरूपो वर्तते ॥ ३ ॥

रा० टी०–न हीति । यतः रामं पराक्रम्य जीवन् सन् कश्चिज्जनः न प्रतिवर्तते अतः असावहमित्यर्थः, यमदण्डहतस्य त्वद्दुराचरणाद्गमितरामबाणनिहतस्येत्यर्थः, ते प्रतिरूपः सदृशः वर्तते एतेन सर्वरक्षसां वधोऽवश्यं भवितेति सूचितं यदि तु असावित्यनेन राक्षससमुदायो गृह्येत तदा नेदं सूचनम् ॥ ३ ॥

गो० टी०–न हीति । वर्तत इति यमदण्डहतस्य ते प्रतिरूपः सदृशः असौ जनो वर्तते त्वमिवाहमपि यमदण्डहत इत्यर्थः ॥ ३–४ ॥

४ ] ति० टी०–अथाशक्यपरिहारमनर्थं शोचति–किं त्विति ॥ ४ ॥

रा० टी०–किमिति । त्वयि एवं दुरात्मनि सति मया किं कर्तुं शक्यं न किमपीत्यर्थः, अतः एषः प्राप्तत्वदाज्ञोऽहं गच्छामि ते स्वस्त्यस्तु ॥ ४ ॥

५ ] ति० टी०–तेन वचनेन गच्छामीति वचनेन । सुसंश्लिष्टं गाढम् ॥ ५ ॥

रा० टी०–प्रहृष्ट इति । राक्षसः स रावणः तेन मारीचोक्तेन वचनेन प्रहृष्टोऽभवत् अत एव सुसंश्लिष्टं गाढं परिष्वज्य इदमब्रवीत् ॥ ५ ॥

गो० टी०–प्रहृष्ट इति । सुसंश्लिष्टं दृढम् ॥ ५ ॥

६ ] ति० टी०–मच्छन्दवशवर्तिनः मदभिप्रायवशवर्तिनः शौटीर्यं वीर्यं तद्युक्तम् एतद्वचो योग्यमिति शेषः । इदानीं मारीचोऽसि स्वप्रकृतिं प्राप्तोऽसि । पूर्वमन्यो हि राक्षसस्तदाविष्ट इति शेषः ॥ ६ ॥

रा० टी०–तद्वचनाकारमाह–एतदिति । मच्छन्दवशवर्तिनः मदभिप्रायानुकूलवर्तनशीलस्य ते एतत् वचः शौण्डीर्ययुक्तं त्वद्वीर्ययोग्यम् अत एव इदानीम् एतद्वचनकथनकाले त्वं मारीचोऽसि पूर्वं तु अन्यः साधारणो निशाचरः एतेन पूर्वं त्वं प्रकृतेश्च्युतः इदानीं च तां प्राप्तोऽसीति सूचितम् ॥६॥

गो० टी०–एतदिति । शौण्डीर्यं वीरत्वम् । "कृष्टपृकटि-

---

१ वचनमिति गो. पाठः । २ विनष्टमिति गो. पाठः । ३ नु शक्यं मया कर्तुमिति गो. न्विति रा. पाठः । ४ रावण इति गो. पाठः । ५ शौण्डीर्यैति गो. रा. पाठः । ६ मच्छन्दादिव भाषितमिति गो. पाठः । ७ निशाचर इति गो. पाठः ।

आरुह्यतामयं शीघ्रं खगो रत्नविभूषितः । मया सह [1]रथो युक्तः पिशाचवदनैः खरैः ॥ ७ ॥
प्रलोभयित्वा वैदेहीं यथेष्टं गन्तुमर्हसि । तां शून्ये प्रसभं सीतामानयिष्यामि मैथिलीम् ॥ ८ ॥
[2]ततस्तथेत्युवाचैनं रावणं ताटकासुतः । ततो रावणमारीचौ विमानमिव तं रथम् ॥ ९ ॥
[4]आरुह्याययतुः शीघ्रं तस्मादाश्रममण्डलात् । तथैव तत्र पश्यन्तौ पत्तनानि वनानि च ॥ १० ॥
[3]गिरींश्च सरितः सर्वा राष्ट्राणि नगराणि च । समेत्य दण्डकारण्यं राघवस्याश्रमं ततः ॥ ११ ॥
ददर्श सहमारीचो रावणो राक्षसाधिपः । अवतीर्य रथात्तस्मात्ततः काञ्चनभूषणात् ॥ १२ ॥
हस्ते गृहीत्वा मारीचं रावणो वाक्यमब्रवीत् । एतद्रामाश्रमपदं दृश्यते कदलीवृतम् ॥ १३ ॥
क्रियतां तत्सखे शीघ्रं यदर्थं वयमागताः । [5]स रावणवचः श्रुत्वा मारीचो राक्षसस्तदा ॥ १४ ॥
मृगो भूत्वाऽऽश्रमद्वारि रामस्य विचचार ह । स तु रूपं समास्थाय महदद्भुतदर्शनम् ॥ १५ ॥

पटिशौण्डिभ्य ईरन्" इत्यौणादिकसूत्रेण शौडि गर्वे इत्यस्मादीरन् प्रत्ययः । 'शौण्डीरो वीरः' इति वृत्तिकारः 'शौण्डीरस्त्यागिवीरयोः, इति निघण्टुः तत्कर्म तद्भावो वा शौण्डीर्यं गुणवचनत्वात् ष्यञ् । शौण्डीर्ययुक्तमेतत्ते भाषितं मच्छन्दादिव मदभिप्रायादिव भाषितं मत्सदृशं भाषितमित्यर्थः। पूर्वमन्यो यः कश्चन निशाचरोऽपि विक्लवभाषणात् इदानीं मारीचोऽसि मारीच इति लोकप्रसिद्धनामधेयानुरूपव्यापारोऽसि स्वप्रकृतिं प्राप्तोऽसीत्यर्थः ॥ ६ ॥

७ ] ति० टी०–खग आकाशगामी रथः ॥ ७ ॥

रा० टी०–आरुह्यतामिति । पिशाचवदनैः खरैः युक्तः खगः आकाशगामी रत्नविभूषितोऽयं रथः मया सह आरुह्यताम् ॥ ७ ॥

गो० टी०–आरुह्यतामिति । तथेति समुच्चये खरैर्युक्तो रत्नविभूषितश्चेत्यर्थः ॥ ७–८ ॥

८–९ ] ति० टी०–शून्ये रामलक्ष्मणरहिते समये ॥८॥९॥

रा० टी०–तत्प्रयोजनमाह–प्रलोभयित्वेति । यथेष्टं वैदेहीं प्रलोभयित्वा प्रलोभ्य गन्तुमर्हसि एतेन त्वदाहरणार्थं सीतया प्रेषितौ रामलक्ष्मणौ त्वामनुगमिष्यत इति सूचितम् अत एव शून्ये रामलक्ष्मणरहितसमये सीताम् आनयिष्यामि आनेष्यामि ॥ ८ ॥

रा० टी०–तत इति । ततः रावणोक्तिश्रवणानन्तरं ताटकासुतो मारीचः तथेति रावणमुवाच । ततः तथेत्युक्त्यनन्तरं रावणमारीचौ विमानमिव रथमारुह्य तस्मादाश्रममण्डलात् शीघ्रं ययतुः । सार्धश्लोक एकान्वयी ॥ ९ ॥

गो० टी०–तत इति । तस्मात् मारीचीयात् ॥ ९ ॥

१०–१५ ] ति० टी०–आश्रममण्डलान्मारिचाश्रममण्डलादित्यर्थः । पत्तननगरयोरराजधानीराजधानीत्वेन भेदः । पत्तनशब्दोऽर्धर्चादिः ॥ १०–१६

रा० टी०–तथेति । तत्र तस्मिन् समये तथा रथारूढावेव पत्तनादीनि पश्यन्तौ मारीचरावणौ दण्डकारण्यं समेत्य तस्थतुरिति शेषः, ततोऽनन्तरं सहमारीचो रावणः राघवस्याश्रमं ददर्श । अर्धचतुष्टयमेकान्वयि ॥ १० ॥ ११ ॥

गो० टी०–तथैवेति । तथैव रथरूढावेव सहैव स्थितावित्यर्थः पत्तनानि नगरविशेषान् नगाः वृक्षाः सन्त्येष्विति नगराणि उद्यानाकीर्णपुराणीत्यर्थः । "नगपांसुपाण्डुभ्यश्च" इति मत्वर्थीयो रप्रत्ययः । नगरपत्तनादिलक्षणमुक्तं वास्तुशास्त्रे- 'ग्रामश्च नगरं चैव पत्तनं खर्वटं पुरम् । खेटकं कुसुमं चैव शिबिरं राजवासिकम् ॥ सेनामुखमितित्वेवं दशधा कीर्तितं बुधैः । विप्राणां च सभृत्यानां वासो ग्राम इतीरितः ॥ स एव विप्रैराकीर्णस्त्वग्रहार इति स्मृतः । कुटुम्बिभेदैरेकोनत्रिंशद्भिश्च समन्वितः ॥ अनेकनारीसंबद्धं नानाशिल्पिजनैर्वृतम् ॥ क्रयविक्रयकैः कीर्णं सर्वदेवैः समन्वितम् ॥ नगरं त्विति विख्यातं पत्तनं शृणु सांप्रतम् । द्वीपान्तरागतद्रव्यक्रयविक्रयकैर्युतम् ॥ पत्तनं त्वब्धितीरे स्यात्तयोर्मिश्रं तु खर्वटम् । क्रयविक्रयकैर्युक्तं नानाजातिसमन्वितम् ॥ तन्तुवायसमायुक्तं तत्पुरं त्विति कथ्यते । एतैरधिष्ठितं यत्तत् खेटकं परिकीर्तितम् ॥ तेषामेकान्तरेष्वेव वासः कुसुममुच्यते' इत्यादिना ॥ १०–११ ॥

रा० टी०–अवतीर्येति । काञ्चनभूषणात् ततस्तस्मात् रथादवतीर्य मारीचं हस्ते गृहीत्वा रावणोऽब्रवीत् ॥ १२ ॥

गो० टी०–अवतीर्येति । हस्ते गृहीत्वेत्यनेनावश्यकत्वं द्योत्यते ॥ १२ ॥

रा० टी०–तद्वचनाकारमाह–एतदिति । कदलीवृतं कदलीभिः शोभितं यत् दृश्यते तदेतद्रामाश्रमपदम् अतः यदर्थं वयमागताः तत् शीघ्रं क्रियताम् ॥ १३ ॥

रा० टी०–रावणस्येति । स मारीचः रावणस्य वचः श्रुत्वा मृगो भूत्वा महत् प्रशंसनीयम् अद्भुतदर्शनं रूपं समास्थाय रामस्य आश्रमद्वारि विचचार । अर्धत्रयमेकान्ययि । क्वचित् ' सरावण ' इति पाठस्तत्र स तु रूपमित्यत्र स इत्यनेन पौनरुक्त्यवारणाय सरावणस्य रावणत्वसहितस्य वच इत्यर्थो वाच्यः ॥ १४ ॥ १५ ॥

गो० टी०–एतदिति । यदर्थं यत्कार्यार्थं तत् कार्यं क्रियताम् आगमनप्रयोजननिर्वाहकं मृगरूपं भजस्वेत्यर्थः ॥ १३ ॥ १४ ॥

गो० टी०–संग्रहेणोक्तं विवृणोति–स त्वित्यादिना ।

१ रथ इति गो. पाठः । २ तथेति गो. पाठः । ३ अर्धमेतत् गो. नास्ति । ४ आरुह्य ययतुरिति गो. रा. पाठः । ५ रावणस्य वच इति रा. पाठः ।

मणिप्रवरशृङ्गाग्रः सितासितमुखाकृतिः । रक्तपद्मोत्पलमुख इन्द्रनीलोत्पलश्रवाः ॥ १६ ॥
किंचिदत्[1]युन्नतग्रीव इन्द्र[2]नीलनिभोदरः । [ कु[3]न्देन्दुवज्रसंकाशमुदरं चास्य भास्वरम् । ]
मधूकनिभपार्श्वश्च कं[4]ज्ञकिञ्जल्कसंनिभः ॥ ॥१७ ॥
वैदूर्यसंकाशखुरस्तनुजङ्घः सुसंहतः । इन्द्रायुधसवर्णेन पुच्छेनोर्ध्वं वि[5]राजितः ॥ १८ ॥
मनोहरास्निग्धवर्णो रत्नैर्नानाविधैर्वृतः । क्षणेन राक्षसो जातो मृगः परमशोभनः ॥ १९ ॥
वनं प्रज्वलयन्रम्यं रामाश्रमपदं च तत् । मनोहरं दर्शनीयं रूपं कृत्वा स राक्षसः ॥ २० ॥
प्रलोभनार्थं वैदेह्या नानाधातुविचित्रितम् । विचरन्गच्छते स[8]म्यक् शाद्वलानि समन्ततः ॥ २१ ॥
रौप्यैर्बिन्दुश[7]तैश्चित्रं भूत्वा च प्रियनर्न्दनः । विटपीनां किसलयान्भ[9]क्षयन्विचचार ह ॥ २२ ॥

---

अद्भुतं विस्मयावहं दर्शनं यस्य तत्तथा मणिप्रवरः इन्द्रनीलः तत्तुल्ये शृङ्गाग्रे यस्य स तथा क्वचित्सिता क्वचिदसिता च मुखस्याकृतिः शोभा रेखा यस्य। "वर्णो वर्णेन" इति समानाधिकरणसमासः अवयवद्वारेण सितासितशब्दौ समुदाये वर्तमानौ समानाधिकरणौ भवतः । रक्तपद्मोत्पलमुखः मुखपुटयोरेको रक्तपद्मवर्णः अन्यस्तूत्पलवर्ण इत्यर्थः। इन्द्रनीलोत्पलश्रवाः श्रवसोरिन्द्रनीलसादृश्यं नीलभास्वररूपेण उत्पलसादृश्यं रूपेण इन्द्रनीलदलवदधरो यस्य स तथा । कुन्देति । अस्य मृगरूपस्य कुन्देन्दुवज्रसंकाशमुदरमासीत् तस्मात्तादृशोदर इति विपरिणमयितव्यम् अन्यथा पूर्वापरविरोधः । मधूकनिभपार्श्वः गुडपुष्पतुल्यवर्णैकपार्श्वः पार्श्वान्तरे हेमवर्णस्य वक्ष्यमाणत्वात्, पद्मकिञ्जल्कसन्निभः उक्तावयवव्यतिरिक्तपृष्ठसर्वप्रदेशे पद्मकेसरवर्णः सुसंहतः सुश्लिष्टसंधिबन्धः ऊर्ध्वं पुच्छोर्ध्वपार्श्वे इन्द्रायुधसवर्णेन इन्द्रधनुर्वन्नानावर्णेन पुच्छेनोपलक्षितः स्निग्धवर्ण इति पूर्वोक्तसर्ववर्णानां स्निग्धत्वं विशेषणम्। रत्नैः रत्नाकारबिन्दुभिः। उपसंहरति–क्षणेनेति। प्रज्वलयन् प्रकाशयन् मृगो जात इति पूर्वेणान्वयः॥ १६–१९ ॥

१६ ] ति० टी०–मणिप्रवरशृङ्गाग्र इन्द्रनीलरत्नाकारशृङ्गाग्रः। मणिशब्दः केवल इन्द्रनीले इति कविसमय इति कतकः। क्वचित्सिता क्वचिदसिता मुखस्याकृतिः शोभा यस्य सः । यदेवाह–रक्तपद्मोत्पलेति । उत्पलं नीलोत्पलम्। इन्द्रनीलवदुत्पलवच्छ्रवः श्रवणं यस्य सः॥ १६ ॥

रा० टी०–तद्रूपमेव वर्णयन्नाह–मणीत्यादिभिः । मणिप्रवरशृङ्गाग्रः मणिप्रवरेण इन्द्रनीलमणिना युक्तं शृङ्गाग्रं यस्य सः मणिप्रवरशब्दः केवलेन्द्रनीले इति कविसमय इति कतकः। क्वचित् सिता शुक्ला क्वचित् असिता कृष्णा मुखाकृतिर्यस्य सः रक्तपद्ममरुणकमलमुत्पलं नीलकमलं च तद्वत् मुखे मुखोभयभागौ यस्य सः इन्द्रं शोभायमानं यत् नीलोत्पलं तत्सदृशं श्रवः श्रवणं यस्य सः किं च इन्द्रनीलोत्पले इव श्रवसी यस्य सः तत्रेन्द्रनीलो मणिविशेषः ॥ १६ ॥

१७ ] ति० टी०–मधूकपुष्पसदृशपार्श्वद्वयः । कञ्जं पद्मं तत्किञ्जल्कसदृशवर्णः॥ १७ ॥

१८–१९ ] ति० टी०–सुसंहतः श्लिष्टसंधिबन्धः॥१८॥१९॥

रा० टी०–किंचित् अभ्युन्नता ग्रीवा यस्य सः इन्द्रनीलनिभः अधरो यस्य सः मधूकनिभौ मधूकपुष्पसदृशौ पार्श्वौ यस्य सः कञ्जकिञ्जल्कसन्निभः कमलकिञ्जल्कसदृशवर्णः॥ १७॥

रा० टी०–वैदूर्यसंकाशौ खुरौ यस्य सः तनू सूक्ष्मे जङ्घे यस्य सः सुसंहतः श्लिष्टसंधिबन्धविशिष्टः इन्द्रायुधसवर्णेन इन्द्रायुधसदृशवर्णविशिष्टेन पुच्छेन ऊर्ध्वं विराजितः शोभितः॥ १८ ॥

रा० टी०–मनोहरः हृदयापहारकः स्निग्धः स्नेहोत्पादकः वर्णो यस्य सः परमशोभनो मृगः क्षणेन राक्षसो मारीचो जातः । श्लोकचतुष्टयमेकान्वयि ॥ १९ ॥

२० ] ति० टी०–प्रज्वलयन्प्रदीपयन् ॥ २० ॥

२१ ] ति० टी–शाद्वलानि विचरन्भक्षयन्गच्छते गच्छति॥२१॥

रा० टी०–वनमिति। वैदेह्याः प्रलोभनार्थं नानाधातुविचित्रितं मनोहरं दर्शनीयं रूपं कृत्वा रामस्य अश्रमपदं यस्मिन् तत् रम्यं वनं प्रज्वलयन् शष्पं हरिततृणं विचरन् भक्षयन् सन् शाद्वलानि घासयुक्तस्थलानि समन्ततो गच्छते गच्छति। श्लोकद्वयमेकान्वयि ॥ २० ॥ २१ ॥

गो० टी०–मनोहरमित्यादिसार्धश्लोक एकान्वयः । धातुवर्णः शाद्वलानि शादाः बालतृणानि 'शादो जम्बालशष्पयोः' इत्यमरः। तद्वन्ति स्थलानि शाद्वलानि । "नडशादाड्ड्वलच्" इति ड्वलच् प्रत्ययः विचरन् भक्षयन्। 'चर' गतिभक्षणयोः। गच्छते गच्छति ॥ २० ॥ २१ ॥

२२ ] ति० टी०–चित्रमिति क्रियाविशेषणम्। विटपीनामिति दीर्घं आर्षश्छन्दोनुरोधात् । 'भक्त्वादन्' इति पाठ आर्षोऽनुनासिकलोपः॥ २२॥

रा० टी०–रौप्यैरिति । रौप्यैः राजतैः बिन्दुशतैश्चित्रं यथा भवति तथा प्रियनन्दनो भूत्वा विटपीनां विटपिनां वृक्षाणां किसलयान् नवीनपत्राणि भक्षयन् विचचार मारीच इति शेषः ॥ २२ ॥

---

१ अभ्युन्नतेति गो. रा. पाठः । २ नीलदलाधर इति गो. पाठः । ३ अर्धमेतदधिकं गो. पाठे । ४ पद्मेति गो. पाठः । ५ विराजतेति गो. पाठः । ६ तस्मादिति गो. शष्पमिति रा. पाठः । ७ रूप्यैर्बिन्दुशतैश्चित्र इति गो. पाठः । ८ दर्शन इति गो. पाठः । ९ भक्त्वाऽदन्निति गो. पाठः ।

कदलीगृहकं गत्वा कर्णिकारानितस्ततः । [1]तमाश्रमं मन्दगतिं सीतासंदर्शनं [2]ततः ॥ २३ ॥
राजीवचित्रपृष्ठः स विरराज महामृगः । रामाश्रमपदाभ्याशे विचचार यथासुखम् ॥ २४ ॥
पुनर्गत्वा निवृत्तश्च विचचार मृगोत्तमः । गत्वा मुहूर्तं त्वरया पुनः प्रतिनि[3]वर्तते ॥ २५ ॥
विक्रीडंश्च [4]पुनर्भूमौ पुनरेव निषीदति । आश्रमद्वारमागम्य मृगयूथानि गच्छति ॥ २६ ॥
मृगयूथैरनुगतः पुनरेव निवर्तते । सीतादर्शनमाकाङ्क्षन्राक्षसो मृगतां गतः ॥ २७ ॥
परिभ्रमति चित्राणि मण्डलानि विनिष्पतन् । समुद्वीक्ष्य च सर्वे तं मृगा [5]येऽन्ये वनेचराः ॥ २८ ॥
उपगम्य समाघ्राय विद्रवन्ति दिशो दश । राक्षसः सोऽपि तान्वन्यान्मृगान्मृगवधे रतः ॥ २९ ॥
प्रच्छादनार्थं भावस्य न भक्षयति संस्पृशन् । तस्मिन्नेव ततः काले वैदेही शुभलोचना ॥ ३० ॥
कुसुमा[6]पचये व्यग्रा पादपानत्य[7]वर्तत । कर्णिकारानशोकांश्च चूतांश्च मदिरेक्षणा ॥ ३१ ॥

---

गो० टी०–रूप्यैरिति । विटपीनामिति दीर्घश्छान्दसः किसलयान् पल्लवान् पुल्लिङ्गत्वमार्षम् ॥ २२ ॥

२३–२५ ] ति० टी०–कदलीगृहं कदलीवाटिकाम् । कर्णिकारांस्तद्वनं च गत्वा त्यक्त्वा सीतासंदर्शनमपेक्ष्येतस्ततो मन्दगतिं समाश्रयन्विचचार विरराज च ॥ २३–२५ ॥

रा० टी०–कदलीति । ततो भक्षणपूर्वकविचरणानन्तरं कदलीगृहकं कदलीनां वनम् कर्णिकारान् वृक्षविशेषांश्च गत्वा सीतायाः संदर्शनं यस्मिन् तत् स्थलम् इतस्ततः समाश्रयन्सन् मन्दगतिः राजीवचित्रपृष्ठः महामृगो मारीचः रामाश्रमपदाभ्यासे रामाश्रमसमीपे यथासुखं विचचार विरराज च । श्लोकद्वयमेकान्वयि ॥ २३ ॥ २४ ॥

गो० टी०–कदलीति । कदलीगृहकं कृत्रिमकदलीमयगृहं तदनन्तरं कर्णिकारान् गत्वा ततः सीता संदृश्यतेऽस्मिसीतासंदर्शनम् अधिकरणे ल्युट्, सीतासंदर्शनयोग्यस्थानमित्यर्थः । तथेति समुच्चये ! तदपि गत्वा मन्दगतिः सन् इतस्ततः समाश्रयत् ॥ २३ ॥

गो० टी०–राजीवेति । राजीवचित्रपृष्ठः राजीवकेसरवदाश्चर्यकरपृष्ठदेशः चित्रत्वं पूर्वस्माद्विशेषः । रामाश्रमपदाभ्याशे रामाश्रमस्थानसमीपे ॥ २४ ॥

रा० टी०–पुनरिति । पुनर्गत्वा स्थलान्तरमिति शेषः, निवृत्तः सन् विचचार मुहूर्तं पुनस्त्वरया गत्वा इतस्ततो द्रुतं भ्रान्त्वा पुनः प्रतिनिवर्तते ॥ २५ ॥

गो० टी०–पुनर्गत्वेति । पुनर्निवृत्तश्चेत्यन्वयः । निवृत्य गमनमुक्त्वा गत्वा निवर्तनमाह–गत्वेति ॥ २५ ॥

२६–२७ ] ति० टी०–मृगयूथानि गच्छति, तत्पृष्ठतो गच्छतीत्यर्थः ॥ २६ ॥ २७ ॥

रा० टी०–विक्रीडन्निति । विक्रीडन् सन् पुनर्निषीदति पुनराश्रमद्वारमागम्य मृगयूथानि गच्छति ॥ २६ ॥

गो० टी०–विक्रीडन्निति । एवं गमनागमनाभ्यां विक्रीडन् सन् पुनः क्वचित्तूष्णीं निषीदति ॥ २६ ॥

रा० टी०–मृगेति । मृगतां मृगत्वं गतः प्राप्तोऽत एव मृगयूथैरनुगतो राक्षसः सीतादर्शनमाकाङ्क्षन् सन् पुनरपि निवर्तते । एवोऽप्यर्थे ॥ २७ ॥

गो० टी०–मृगयूथैरित्यादि । विनिष्पतन् संचरन् ॥ २७ ॥

२८ ] ति० टी०–विनिष्पतन् प्रागल्भ्येन कुर्वन्नित्यर्थः ॥ २८ ॥

रा० टी०–परीति । विनिष्पतन् सीतासमीपमागच्छन् सन् चित्राणि मण्डलानि परिभ्रमति तं मृगमन्ये वनेचरा मृगाः समुद्वीक्ष्य उपगम्य तत्समीपं प्राप्य समाघ्राय दश दिशो विद्रवन्ति । सार्धश्लोक एकान्वयी ॥ २८ ॥

गो० टी०–समुद्वीक्ष्येति । समाघ्रायेति घ्राणेन विशेषं जानन्ति तिर्यञ्च इति प्रसिद्धिः ॥ २८ ॥

२९ ] ति० टी०–विद्रवन्ति अमृगत्वनिश्चयादिति शेषः ॥ २९ ॥

रा० टी०–राक्षस इति । मृगवधे रतोऽपि स राक्षसः भावस्य राक्षसस्वभावस्य प्रच्छादनार्थं तानाघ्राणकर्तॄन् वन्यान् मृगान् संस्पृशन्नपि न भक्षयति ॥ २९ ॥

गो० टी०–राक्षस इति । भावस्य क्रौर्यस्य प्रच्छादनार्थं मृगवधे रतोऽपि मृगान्न भक्षयति किंतु संस्पृशन्नास्ते ॥ २९ ॥

३० ] ति० टी०–मृगवधे रतोऽपि भावस्य राक्षसस्य संछादनार्थं संस्पृशन्नपि मृगान्न भक्षयति ॥ ३० ॥

रा० टी०–तस्मिन्निति । कुसुमापचये पुष्पग्रहणे व्यग्रा शुभलोचना वैदेही तस्मिन् काले एव पादपान् अत्यवर्तत ॥ ३० ॥

गो० टी०–तस्मिन्निति । ततः आश्रमादभ्यवर्ततेत्यन्वयः ॥ ३० ॥

३१ ] ति० टी०–अपचयो ग्रहणम् । अत्राशोकचूतकुसुमानामपचयोक्त्या शिशिरान्तकालोऽयम् । 'गन्धवान्सुरभिर्मासो जातपुष्पफलद्रुमः' इति, 'संतापयति सौमित्रे क्रूरश्चैत्रवनानिलः' इति च पम्पातीरे रामोक्तेश्च । किंचाग्रे द्वादशमासोत्तरं यद्येषा मां नाङ्गीकरोति तदैनां हन्मीति रावणप्रतिज्ञा । ततो हनुमद्दर्शनकाले च तं प्रति सीतावाक्यम्–'वर्तते दशमो मासो द्वौ तु शेषौ प्लवङ्गम' इति संगच्छते । माघशुक्ला-

---

१ समाश्रयन्मन्दगतिरिति गो. रा. पाठः । २ तथेति गो. पाठः । ३ विवर्तत इति गो. पाठः । ४ क्वचिदिति गो. पाठः । ५ ह्यन्य इति गो. पाठः । ६ अपचयव्यग्रेति गो. पाठः । ७ अभ्यवर्ततेति गो. पाठः ।

कुसुमान्यपचिन्वन्ती चचार रुधिरानना । अनर्हा वनवासस्य सा तं रत्नमयं मृगम् ॥ ३२ ॥
मुक्तामणिविचित्राङ्गं ददर्श परमाङ्गना । तं वै रुचिरदन्तोष्ठं रूप्यधातुतनूरुहम् ॥ ३३ ॥
विस्मयोत्फुल्लनयना सस्नेहं समुदैक्षत । स च तां रामदयितां पश्यन्मायामयो मृगः ॥ ३४ ॥
विचचार ततस्तत्र दीपयन्निव तद्वनम् । अदृष्टपूर्वं दृष्ट्वा तं नानारत्नमयं मृगम् ॥
विस्मयं परमं सीता जगाम जनकात्मजा ॥ ॥ ३५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे द्विचत्वारिंशः सर्गः ॥ ४२ ॥

## त्रिचत्वारिंशः सर्गः ।

चित्रमृगदर्शनेन प्राप्तोत्कण्ठा सीता रामलक्ष्मणावाहूय तं दर्शयति । क्वचिदपि चित्रमृगासंभवादसौ न मृगः किंतु मारीचमायेयमिति लक्ष्मण आक्षिपति । सीताऽऽक्षेपं निवार्य तद्ग्रहणे तौ प्रेरयति । निश्चितमायिकत्वोऽपि रामोऽगस्त्येन वातापिरिवायं मेऽवश्यं वध्योऽत एनं निहत्याजिनमानेष्य इति प्रतिज्ञाय सीतारक्षणे लक्ष्मणं नियोजयति ।

सा तं संप्रेक्ष्य सुश्रोणी कुसुमानि विचिन्वती । हेमराजतवर्णाभ्यां पार्श्वाभ्यामुपशोभितम् ॥ १ ॥
प्रहृष्टा चानवद्याङ्गी मृष्टहाटकवर्णिनी । भर्तारमपि चक्रन्द लक्ष्मणं चैव सायुधम् ॥ २ ॥
आहूयाहूय च पुनस्तं मृगं साधु वीक्षते । आगच्छागच्छ शीघ्रं वै आर्यपुत्र सहानुज ॥ ३ ॥

---

द्धम्यां हरणे हि मार्गशुक्लाष्टम्यां ततोऽर्वागेव वा दशमसमाप्त्या तस्य वर्तमानत्वोक्तिरसंगतैव स्यात् । तच्छुक्लपक्षान्ते इष्टमतस्तद्दर्शनात् ॥ ३१ ॥

रा० टी०-पुष्पग्रहणप्रकारमाह-कर्णिकारानिति । रुचिरानना सीता कुसुमानि अपचिन्वती सती कर्णिकारादीन् चचार ॥ ३१ ॥

गो० टी०-कर्णिकारानिति । मदिरम् आनन्दजनकम् ईक्षणं यस्याः सा मदिरेक्षणा । अनेन रुचिराननेत्यनेन च वक्ष्यमाणकार्योपयोग्युल्लासो द्योत्यते ॥ ३१ ॥

३२ ] ति० टी०-अनर्हा वनवासस्येत्यनेन नगरवासः सूचितः ॥ ३२ ॥

रा० टी०-अनर्हेति । वनवासस्य अनर्हा परमाङ्गना सा सीता मुक्तामणिविचित्राङ्गं रत्नमयं मृगं ददर्श ॥ ३२ ॥

गो० टी०-अनर्हेति । अरण्यवासस्यानर्हेत्यनेन सन्निहितत्रतसमाप्तिकालत्वकथनान्मृगग्रहणत्वरातिशयो द्योत्यते । रत्नमयं श्रेष्ठभूतं स्वार्थे मयट् । 'रत्नं स्वजातौ श्रेष्ठेऽपि' इत्यमरः । मुक्तामणिशब्देन तत्तुल्यबिन्दुमत्त्वमुक्तम् ॥ ३२ ॥

३३-३५ ] ति० टी०-रूप्यं रजतम्, धातवो गैरिकाद्याः, तत्सदृशरोमयुक्तम् ॥ ३३-३५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे द्विचत्वारिंशः सर्गः ॥ ४२ ॥

रा० टी०-तमिति । रुचिरदन्तोष्ठी सीता रूप्यधातुतनूरुहं रूप्यैः रजतैर्धातुभिर्गैरिकादिभिश्च तुल्यास्तनूरुहा यस्य तं मृगं विस्मयोत्फुल्लनयना सती सस्नेहं समुदैक्षत सम्यगपश्यत् ॥ ३३ ॥

गो० टी०-सा तमिति । रुचिरदन्तोष्ठीत्यनेन कुतुकानुभाव उक्तः । रूप्यं रजतं धातवः ताम्रगैरिकादयः तत्तुल्यतनूरुहम् 'तनूरुहं रोम लोम' इत्यमरः ॥ ३३ ॥

रा० टी०-स इति । मायामयः स मृगः तां रामदयितां पश्यन् ततो दर्शनादेव हेतोः तद्वनं दीपयन्निव तत्र विचचार ॥ ३४ ॥

रा० टी०-अदृष्टेति । अदृष्टपूर्वं दृष्टपूर्वभिन्नं तं मृगं दृष्ट्वा सीता परमं विस्मयं जगाम ॥ ३५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे द्विचत्वारिंशः सर्ग ॥ ४२ ॥

गो० टी०-स चेति । दीपयन् प्रकाशयन् ॥ ३४ ॥ ३५ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने द्विचत्वारिंशः सर्गः ॥ ४२ ॥

---

१ ] ति० टी०-सा तमिति ॥ १ ॥

२-३ ] ति० टी०-मृष्टहाटकं शुद्धं हेम तत्सदृशवर्णा । चक्रन्द आह्वाने कदिः । चक्रन्देति रोदनार्थेन भाव्यशुभमिति सूचितं कविना ॥ २ ॥ ३ ॥

रा० टी०-मृगावलोकनानन्तरकालिकं सीतावृत्तान्तमाह-सेत्यादिभिः । कुसुमानि विचिन्वती सुश्रोणी मृष्टहाटकवर्णिनी प्रतप्तसुवर्णसदृशवर्णविशिष्टा अनवद्याङ्गी दोषसंसर्गरहिताङ्गविशिष्टा सा सीता हेमराजतवर्णाभ्यां सुवर्णरजतसदृशवर्ण-

---

१ ऽरण्यवासस्येति गो. पाठः । २ सा तं रुचिरदन्तोष्ठीति गो. रुचिरदन्तोष्ठीति रा. पाठः । ३ पुनश्चित्रमिति गो. पाठः । ४ अपचिन्वतीति गो. पाठः । ५ हैमेति गो. रा. पाठः । ६ अभीति गो. पाठः । ७ अपीति गो. पाठः । ८ श्लोकोऽयं गो. न दृश्यते । ९ चाभीति रा. पाठः ।

तावाहूतौ नरव्याघ्रौ वैदेह्या रामलक्ष्मणौ । वीक्षमाणौ तु तं देशं तदा ददृशतुर्मृगम् ॥ ४ ॥
शङ्कमानस्तु तं दृष्ट्वा लक्ष्मणो वाक्यमब्रवीत् । तमेवैनमहं मन्ये मारीचं राक्षसं मृगम् ॥ ५ ॥
चरन्तो मृगयां हृष्टाः पापेनोपाधिना वने । अनेन निहता राम राजानः कामरूपिणा ॥ ६ ॥
अस्य मायाविदो माया मृगरूपमिदं कृतम् । भानुमत्पुरुषव्याघ्र गन्धर्वपुरसंनिभम् ॥ ७ ॥
मृगो ह्येवंविधो रत्नविचित्रो नास्ति राघव । जगत्यां जगतीनाथ मायैषा हि न संशयः ॥ ८ ॥
एवं ब्रुवाणं काकुत्स्थं प्रतिवार्य शुचिस्मिता । उवाच सीता संहृष्टा छद्मना हृतचेतना ॥ ९ ॥
आर्यपुत्राभिरामोऽसौ मृगो हरति मे मनः । आनयैनं महाबाहो क्रीडार्थं नो भविष्यति ॥ १० ॥
इहाश्रमपदेऽस्माकं बहवः पुण्यदर्शनाः । मृगाश्चरन्ति सहिताश्चमराः सृमरास्तथा ॥ ११ ॥
ऋक्षाः पृषतसङ्घाश्च वानराः किंनरास्तथा । विहरन्ति महाबाहो रूपश्रेष्ठा महाबलाः ॥ १२ ॥

---

विशिष्टाभ्यां पार्श्वाभ्याम् उपशोभितं मृगं संप्रेक्ष्य प्रहृष्टा सती भर्तारं लक्ष्मणं च चक्रन्द आजुहाव । श्लोकद्वयमेकान्वयि॥१॥२॥

रा० टी०—आहूयेति । आगच्छागच्छेत्याहूय तं मृगं पुनरभिवीक्षते ॥ ३ ॥

गो० टी०—सीतायास्त्वेकनाथायाः पूरयिष्यन् मनोरथम् ।
मायामृगं योऽनुययौ श्रीरामं तमुपास्महे ॥

सा तमित्यादि । हैमराजतवर्णाभ्यामित्यनेन द्वयोः पार्श्वयोर्वर्णभेद उच्यते । मृष्टं शुद्धं हाटकं सुवर्णं तस्य वर्णोऽस्या अस्तीति तथा 'स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्' इत्यमरः । अभिचक्रन्द उच्चैराह्वयत् 'क्रदि आह्वाने रोदने च' इति धातुः । सायुधमित्यनेनायुधेन सहागन्तव्यमित्याहूतवतीति गम्यते ॥ १–४ ॥

४–५ ] ति० टी०—तावाहूतौ सीतयेति शेषः ॥ ४ ॥५॥

रा० टी०—ताविति । वैदेह्या आहूतौ तं सीताधिष्ठितदेशं वीक्षमाणौ रामलक्ष्मणौ मृगं ददृशतुः॥ ४ ॥

रा० टी०—शङ्कमान इति । तं मृगं दृष्ट्वा शङ्कमानो लक्ष्मणः वाक्यमब्रवीत् । तद्वचनाकारमाह– एनं मृगं तं प्रसिद्धं मारीचं राक्षसमेवाहं मन्ये ॥ ५ ॥

६ ] ति० टी०—मृगयां चरन्तस्तां कुर्वन्तः । उपाधिना मृगरूपच्छलेन ॥ ६ ॥

रा० टी०—चरन्त इति । हे राम ! पापेन पापकर्मनिरतेन कामरूपिणा अनेन राक्षसेन कर्त्रा उपाधिना कपटरूपेण मृगयां चरन्तः राजानः निहताः ॥ ६ ॥

गो० टी०—चरन्त इति । मृगयां चरन्तः मृगयार्थं पर्यटन्तो राजानः अनेन पापेन मृगरूपोपाधिना निमित्तेन हताः ॥ ६ ॥

७ ] ति० टी०—अस्य मायाविदो माया या श्रुता सा मृगरूपमिदं कृतम् मायैव मृगरूपेण परिणतेत्यर्थः । भानुमत्प्रकाशयुतं गन्धर्वपुरवदापातरमणीयम् ॥ ७ ॥

रा० टी०—अस्येति । हे पुरुषव्याघ्र ! भानुमत् प्रकाशविशिष्टं कृतं निष्पादितं गन्धर्वपुरसंनिभम् इदं मृगरूपं मायाविदः मायानां वेदितुः अस्य मारीचस्य मायैव ॥ ७ ॥

गो० टी०—अस्येति । मायां वेत्तीति मायावित् अस्य मायैव मृगरूपं कृतं मृगाकारेण परिणतं भानुमत् प्रकाशवत् गन्धर्वपुरं नानाविधविस्मयनीयाकारसंस्थानं क्षणभङ्गुरमभ्रं तत्संनिभं तद्वद्विस्मयनीयमित्यर्थः । जगत्यां भूमौ ॥ ६ ॥ ७ ॥

८ ] ति० टी०—नास्ति एवमुपादानकमृगासंभवात् ॥ ८ ॥

रा० टी०—ननु कथं त्वं वेत्सीत्यत आह–मृग इति । हे जगतीनाथ ! एवंविधो रत्नविचित्रः मृगो जगत्यां नास्ति अतः एषा मायैव संशयो न ॥ ८ ॥

९ ] ति० टी०—काकुत्स्थं लक्ष्मणं प्रतिवार्य नायं राक्षसः, अपि तु चित्रमृगः । नैतद्ग्रहणविघ्नस्त्वया कार्य इत्युक्त्वेत्यर्थः । छद्मना वञ्चनेन हृतचेतना सेव ॥ ९ ॥

रा० टी०—एवमिति । छद्मना तत्कपटरूपेण आहृता प्रापिता चेतना बुद्ध्यन्तरं यया सा संहृष्टा शुचिस्मिता सीता एवं ब्रुवाणं लक्ष्मणं प्रतिवार्य काकुत्स्थं राममुवाच, अनेन सीतायाः लीलाप्रियात्वं मर्यादापालकत्वं वा सूचितम् ॥ ९ ॥

गो० टी०—एवमिति । काकुत्स्थं प्रतिवार्य निवर्त्य उवाच राममिति शेषः । तत्र हेतुश्छर्मणेति । हृतचेतना हृतप्रज्ञा ॥ ८ ॥

१० ] ति० टी०—नोऽस्माकम् । अयोध्यागमनोत्तरम् । तत्र सख्यभिप्रायेण बहुवचनम् ॥ १० ॥

रा० टी०—तद्वचनाकारमाह–आर्येति । हे आर्यपुत्र असौ अभिरामो मृगः मे मनो हरति अतः एनम् आनय । तत्प्रयोजनमाह–नोऽस्माकं क्रीडार्थं भविष्यति ॥ १० ॥

गो० टी०—आर्यपुत्रेति । नो भविष्यति नः भविष्यति न भविष्यतीत्यपि वाग्दोषः ॥ ९ ॥

११-१२ ] ति० टी०—सृमरचमरौ कृष्णशुक्लपुच्छौ॥११॥१२॥

रा० टी०—ननु बहूनां मृगाणामिह सत्त्वात्कुतोऽस्मिन्नेव स्पृहेत्यत आह–इहेति । अस्माकम् इह आश्रमपदे यद्यपि

---

१ तयेति गो. पाठः । २ राममिति गो. पाठः । ३ राजन्निति गो. पाठः । ४ चर्मणेति गो. पाठः । ५ मनोहरा इति गो. पाठः । ६ पादानकेति भाति ।

न चान्यः सदृशो राजन्दृष्टः पूर्वं मृगो मया । तेजसा क्षमया दीप्त्या यथायं मृगसत्तमः ॥ १३ ॥
नानावर्णविचित्राङ्गो रत्नभूतो ममाग्रतः । द्योतयन्वनमव्यग्रं द्योतते शशिसंनिभः ॥ १४ ॥
अहो रूपमहो लक्ष्मीः स्वरसंपच्च शोभना । मृगोऽद्भुतो विचित्राङ्गो हृदयं हरतीव मे ॥ १५ ॥
यदि ग्रहणमभ्येति जीवन्नेव मृगस्तव । आश्चर्यभूतं भवति विस्मयं जनयिष्यति ॥ १६ ॥
समाप्तवनवासानां राज्यस्थानां च नः पुनः । अन्तःपुरे विभूषार्थो मृग एष भविष्यति ॥ १७ ॥
भरतस्यार्यपुत्रस्य श्वश्रूणां मम च प्रभो । मृगरूपमिदं दिव्यं विस्मयं जनयिष्यति ॥ १८ ॥
जीवन्न यदि तेऽभ्येति ग्रहणं मृगसत्तमः । अजिनं नरशार्दूल रुचिरं तु भविष्यति ॥ १९ ॥
निहतस्यास्य सत्त्वस्य जाम्बूनदमयत्वचि । शष्पबृस्यां विनीतायामिच्छाम्यहमुपासितुम् ॥ २० ॥

पुण्यदर्शनाः सहिताः संघीभूताः मृगाश्चरन्ति रूपश्रेष्ठाः महाबलाः चमरादयश्च विहरन्ति तथापि तेजआदिना उपलक्षितो यथा अयं मृगसत्तमः पूर्वः प्रथमो मया दृष्टः तादृशः अन्यो मृगो न दृष्टः एतेन सर्वोत्तमत्वादस्मिन् स्पृहेति सूचितम् । श्लोकत्रयमेकान्वयि ॥ ११-१३ ॥

गो० टी०-इहेत्यादि । सहिताः संघीभूताः सृमराः व्यालमृगाः 'सृमरः स्याद्व्यालमृगः' इति वैजयन्ती । चमराः चामरमृगाः, ऋक्षाः भल्लूकाः, पृषताः बिन्दुमृगाः, किन्नराः मृगविशेषाः ॥ १० ॥ ११ ॥

१३ ] ति० टी०-अन्यः सदृश एतत्सदृशोऽन्य इत्यर्थः । तेजसा विचित्रगतिसामर्थ्येन । क्षमया सौम्यभावेन । दीप्त्या देहकान्त्या ॥ १३ ॥

गो० टी०-न चास्येति । तेजसा वर्णेन क्षमया अत्वरया दीप्त्या शरीरप्रकाशेन यथायं मृगो दृश्यते तथा तेजआदिभिः अस्य सदृशो मृगो न दृष्टपूर्वः पुरा भाविकालेऽपि न दृश्यत इति शेषः । 'स्यात्प्रबन्धे चिरातीते निकटागामिके पुरा' इत्यमरः ॥ १२ ॥

१४ ] ति० टी०-शशिसंनिभत्वेनाह्लादकत्वम् ॥ १४ ॥

रा० टी०-नानेति । नानावर्णैर्विचित्राण्यङ्गानि यस्य सः रत्नबिन्दुभिः समन्वितो व्याप्तः शशिसंनिभोऽयं मृगः वनं द्योतयन् सन् अव्यग्रं यथा स्यात् तथा द्योतते प्रकाशते ॥१४॥

गो० टी०-नानावर्णेति । समाचितः व्याप्तः अव्यग्रं समग्रं यथा तथा शोभते शशिसन्निभः आनन्दकरत्वेन शशिसाम्यम् ॥ १३ ॥

१५ ] ति० टी०-स्वरसंपद्ध्वनिसमृद्धिः ॥ १५ ॥

रा० टी०-अहो इति । अस्य रूपं लक्ष्मीश्च अहो आश्चर्यम् शोभना स्वरसंपच्च अहो अतो मृगभूतः मृगत्वं प्राप्तः विचित्रः असौ मे हृदयं हरतीव ॥ १५ ॥

गो० टी०-अहो इति । रूपं वर्णः लक्ष्मीः कान्तिः । उक्तानुवादपूर्वकं मनोहरत्वमाह-मृग इति । अतो न पूर्वार्थेन गतार्थता ॥ १४ ॥

१६-१८ ] ति० टी०-तव ग्रहणं त्वत्कर्तृकग्रहणम् । जीवतो ग्रहणमाश्चर्यभूतं भवति यतोऽतो विस्मयं जनयिष्यति॥१६-१८॥

रा० टी०-यदीति । जीवन्नेव मृगः यदि तव ग्रहणम् अभ्येति तदा आश्चर्यभूतं भवति अत एव विस्मयं सर्वेषामाश्चर्यं जनयिष्यति ॥ १६ ॥

रा० टी०-समाप्तेति । समाप्तः वनवासः वनवासावधिर्येषां तेषामत एव राज्यस्थानां नोऽस्माकमन्तःपुरेऽपि भूषार्थ एष मृगो भविष्यति ॥ १७ ॥

गो०टी०-यदीति । श्लोकद्वयमेकान्वयम् । तव ग्रहणं त्वत्कर्तृकग्रहणं कर्तरि षष्ठी । तदा एष मृगः आश्चर्यभूतम् अस्माकं विस्मयावहं सत्त्वं भवति इदानीमिति शेषः । समाप्तवनवासानाम् अत एव पुनः राज्यस्थानां च नः विस्मयं जनयिष्यति किंच अन्तःपुरविभूषार्थोऽपि भविष्यति ॥ १५ ॥ १६ ॥

रा० टी०-भरतस्येति । दिव्यं दिव्यत्वेन प्रतीयमानम् इदं मृगरूपम् आर्यपुत्रस्य भरतस्य श्वश्रूणां मम च विस्मयं जनयिष्यति ॥ १८ ॥

गो० टी०-भरतस्येति । आर्यपुत्रस्य तव श्वश्रूणां मम श्वश्रूणां चेति योजना । मृगरूपं प्रशस्तमृगः प्रशंसायां रूपप् प्रत्ययः । मृगस्य रूपं वा ॥ १७ ॥

१९ ] ति० टी०-हतोऽपि यदि ते ग्रहणं प्राप्नोति तदापि मे प्रयोजनमित्याह-अजिनमिति ॥ १९ ॥

रा० टी०-जीवन्निति । मृगसत्तमः जीवन् सन् ते ग्रहणं न अभ्येति तर्हि रुचिरमजिनं चर्म तु किं भविष्यति ॥ १९ ॥

गो० टी०-जीवतः अग्रहणेऽपि प्रयोजनमाह-जीवन्निति । अजिनं चर्म रुचिरं प्रियम् ॥ १८ ॥

२० ] ति० टी०-शष्पबृस्यां बालतृणपरिकल्पिततापसासने विनीतायां प्रसारितायामस्य जाम्बूनदमयत्वच्युपासितुं त्वत्समीपे स्थातुमिच्छामि । यद्वा भगवदुपासनां कर्तुमित्यर्थः२०

रा० टी०-निहतस्येति । निहतस्य क्रूरतावशात् त्यक्तप्राणस्य अस्य मृगरूपस्य सत्त्वस्य जाम्बूनदमयत्वचि सत्यां शष्पवृस्यां कोमलतृणरचिततापसोचितासने विनीतायां प्रसा-

१ अस्येति गो. पाठः । २ दृष्टपूर्वो मृगः पुरेति गो. दृष्टः पूर्वो मृगो मयेति रा. पाठः । ३ रत्नबिन्दुसमाचित इति गो. समान्वित इति रा. पाठः । ४ शोभत इति गो. पाठः । ५ पुरविभूषार्थ इति गो. पुरेऽपीति रा. पाठः । ६ व्यक्तमिति गो. पाठः । ७ मे इति गो. पाठः ।

कामवृत्तमिदं रौद्रं स्त्रीणामसदृशं मतम् । वपुषा त्वस्य सत्त्वस्य विस्मयो जनितो मम ॥ २१ ॥
तेन काञ्चनरोम्णा तु मणिप्रवरशृङ्गिणा । तरुणादित्यवर्णेन नक्षत्रपथवर्चसा ॥ २२ ॥
बभूव राघवस्यापि मनो विस्मयमागतम् । इति सीतावचः श्रुत्वा दृष्ट्वा च मृगमद्भुतम् ॥ २३ ॥
लोभितस्तेन रूपेण सीतया च प्रचोदितः । उवाच राघवो हृष्टो भ्रातरं लक्ष्मणं वचः ॥ २४ ॥
पश्य लक्ष्मण वैदेह्याः स्पृहामुल्लसितामिमाम् । रूपश्रेष्ठतया ह्येष मृगोऽद्य न भविष्यति ॥ २५ ॥
न वने नन्दनोद्देशे न चैत्ररथसंश्रये । कुतः पृथिव्यां सौमित्रे योऽस्य कश्चित्समो मृगः ॥२६॥

रितायां जाम्बूनदमयत्वचि सुवर्णमयसदृशचर्मणि उपासितुं त्वया सह स्थातुमिच्छामि मृगमयत्वचेत्यावर्तते अत एव न सत्यसंकल्पात्वहानिः ॥ २० ॥

गो० टी०—प्रियत्वमेव विवृणोति—निहतस्येति । जाम्बूनदमयत्वचि स्वर्णसदृशत्वचि शष्पबृस्यां बालतृणैः कृतायां बृस्यां मध्यमपदलोपिसमासः । 'व्रतिनामासनं बृसी' इत्यमरः । तस्यां विनीतायाम् आस्तृतायाम् उक्तरूपत्वचि उपासितुं स्थातुम् इच्छामि त्वया सहेति शेषः ॥ १९ ॥

२१ ] ति० टी०—इदं कामेन स्वप्रयोजनेच्छया पतिनियोजनरूपं रौद्रम्, अत एव स्त्रीणामसदृशं कैकेयीवदिति मम निर्णीतं तथाप्यस्य सत्त्वस्य वपुषा मम विस्मयो जनित इति जातकौतुकनिवृत्त्यर्थमनुचितमपि करोतीति शेषः ॥ २१ ॥

रा० टी०—कामेति । कामवृत्तं स्वेच्छाविषयीभूतम् इदं मत्प्रेरितं रौद्रं कर्म यद्यपि स्त्रीणामसदृशमनुचितं मतं तथापि अस्य सत्त्वस्य वपुषा आश्चर्यमयरूपविशिष्टशरीरेण मम विस्मयो जनितः एतेन विस्मयनिवृत्तेः मत्कर्तृकप्रेरणमन्तरा सिद्ध्यभावेन इदं प्रेरणं प्रवृत्तमिति सूचितम् ॥ २१ ॥

गो० टी०—अथ सविनयमाह—कामवृत्तमिति । रौद्रं घोरम् इदं कामवृत्तं भर्तृप्रेरणरूपस्वेच्छाव्यापारः स्त्रीणाम् असदृशम् अयुक्तं कैकेयीवत् तथाप्यस्य सत्त्वस्य तु वपुषा विलक्षणदेहेन मम विस्मयो जनितः ममात्यन्तं कुतूहलं वर्तते आनयेति वक्तुमप्ययुक्तम् अतः तवापि कुतूहलमस्ति चेत्तथा क्रियतामिति भावः । अनेन पूर्वमानयेति प्रमादादुक्तस्य क्षमापणं कृतम् ॥ २० ॥

२२ ] ति० टी०—'काञ्चनरूपेण' इति पाठे रूपेण मृगेण । 'रूपं मृगेऽपि विज्ञेयम्' इति हलायुधः । नक्षत्रसदृशनानाबिन्दूपलक्षितत्वात्तत्पथसदृशेन ॥ २२ ॥

रा० टी०—तेनेति । काञ्चनरोम्णा स्वर्णमयरोमविशिष्टेन मणिप्रवरशृङ्गिणा इन्द्रनीलमणिसदृशशृङ्गविशिष्टेन तरुणादित्यवर्णेन तरुणादित्यवर्णवत् वर्णो वर्णनयोग्यता यस्मिन् अतिप्रकाशमानेनेत्यर्थः, नक्षत्रपथवर्चसा नक्षत्रपथवद्वर्चः बहुबिन्दुजनितविचित्रतेजो यस्य तेन मृगेण राघवस्यापि मनः विस्मयमहो एतद्वाश्चर्यमित्याश्चर्यमागतम् । सार्धश्लोक एकान्वयी ॥ २२ ॥

गो० टी०— न केवलं स्त्रीपारवश्येन कृतवान् किंतु स्वविस्मयेनापीत्याह—तेनेत्यादिना । मणिप्रवरो नीलरत्नं काञ्चनवर्णरोमत्वात् बालसूर्यवर्णत्वं नक्षत्रपथः छायापथः तत्तुल्यवर्चसा नक्षत्रसदृशबिन्दूपलक्षितत्वात् आगतं प्राप्तम् ॥ २१ ॥

२३ ] ति० टी०—राघवस्यापि संभावितासंभावितवस्तुतत्त्वनिरूपणकुशलमतेरपि मनो विस्मयमागतं प्राप्तं तदिव बभूव । भवितव्यतायाः प्राबल्यात् ॥ २३ ॥

२४ ] ति० टी०—तदेवाह—लोभित इति ॥ २४ ॥

रा० टी०—इतीति । सीतावचः श्रुत्वा अद्भुतं मृगं दृष्ट्वा च सीतया प्रचोदितस्तेन मृगनिष्ठेन रूपेण लोभितः यशःप्रख्यातिरूपलोभं प्रापितः हृष्टो राघवो रामः भ्रातरं लक्ष्मणमुवाच ॥ २३ ॥ २४ ॥

गो० टी०—एवमित्यादि । रूपेण मृगेण 'रूपं मृगेऽपि विज्ञेयम्' इति हलायुधः ॥ २२ ॥ २३ ॥

२५ ] ति० टी०—रूपेणालौकिकविचित्रस्वरूपेण श्रेष्ठः । सर्वश्रेष्ठरूपेण हेतुना । अद्यैव मृगो न भविष्यति न जीविष्यति जीवनमस्य न संभावितमित्यर्थः । प्रायेण मृगत्वमत्र न संभावितमित्यर्थ इति कतकः ॥ २५ ॥

रा० टी०—तद्वचनाकारमाह—पश्येत्यादिभिः । हे लक्ष्मण ! उल्लसितां प्रकाशं प्राप्तां वैदेह्याः स्पृहां पश्य । ननु कथमेवमस्मिन्नेव मृगे स्पृहा जातेत्यत आह—रूपश्रेष्ठतया यः कश्चिन्मृगः अस्य समो भवेत् स एष बुद्धिस्थो मृगः नन्दनादौ न भविष्यति पृथिव्यां कुतः एतेनापूर्वदर्शनमेव स्पृहामुदपादयदिति व्यञ्जितम् । श्लोकद्वयमेकान्वयि ॥ २५ ॥ २६॥

गो० टी०—पश्येति । सीतास्पृहा युक्तेति भावः । तत्र हेतुमाह—रूपेति । मृगेषु श्रेष्ठतया रूपेण श्रेष्ठतया वा एष मृगः एतादृशमृगः अद्य वनवासे न भविष्यति न लप्स्यते दुर्लभ इत्यर्थः ॥ २४ ॥

२६ ] ति० टी०—नन्दन इत्युद्देशः कीर्तनं यस्य तत्र वने चैत्ररथसंश्रये तदाख्ये वनेऽपि न योऽस्य कश्चित्समो मृगः स पृथिव्यामस्ति इति कुतः संभाव्यते इत्यर्थः ॥ २६ ॥

गो० टी०—न केवलमत्र देशान्तरेऽपि दुर्लभ इत्याह—न वन इति । नन्दन इत्युद्देशः कीर्तनं यस्य तस्मिन् वने चैत्ररथसंश्रये चैत्ररथाख्ये वने च न भविष्यतीत्यनुषज्यते पृथिव्यां कुतो हेतोर्भविष्यति ॥ २६ ॥

१ तरुणा दिव्येति गो. पाठः । २ एवमिति गो. पाठः । ३ तं दृष्ट्वेति गो. पाठः । ४ स्पृहां मृगगतामिति गो. पाठः ।

प्रतिलोमानुलोमाश्च रुचिरा रोमराजयः । शोभन्ते मृगमाश्रित्य चित्राः कनकबिन्दुभिः ॥ २७ ॥
पश्यास्य जृम्भमाणस्य दीप्तामग्निशिखोपमाम् । जिह्वां मुखान्निःसरन्तीं मेघादिव शतहृदाम् ॥ २८ ॥
मसारगल्वर्कमुखः शङ्खमुक्तानिभोदरः । कस्य नामानिरूप्योऽसौ न मनो लोभयेन्मृगः ॥ २९ ॥
कस्य रूपमिदं दृष्ट्वा जाम्बूनदमयप्रभम् । नानारत्नमयं दिव्यं न मनो विस्मयं व्रजेत् ॥ ३० ॥
मांसहेतोरपि मृगान्विहारार्थं च धन्विनः । घ्नन्ति लक्ष्मण राजानो मृगयायां महावने ॥ ३१ ॥
धनानि व्यवसायेन विचीयन्ते महावने । धातवो विविधाश्चापि मणिरत्नसुवर्णिनः ॥ ३२ ॥
तत्सारमखिलं नृणां धनं निचयवर्धनम् । मनसा चिन्तितं सर्वं यथा शुक्रस्य लक्ष्मण ॥ ३३ ॥

---

२७ ] ति० टी०—तदेवाह—प्रतिलोमेत्यादि । कनकबिन्दुभिः सहिता रोमराजय इत्यन्वयः ॥ २७ ॥

रा० टी०—रूपश्रेष्ठत्वमाह—प्रतीति । प्रतिलोमाः तिर्यग्गामिन्यः अनुलोमाः ऋजुगामिन्यः रुचिराः कनकबिन्दुभिश्चित्राः रोमराजयः मृगमाश्रित्य शोभन्ते ॥ २७ ॥

गो० टी०—प्रतिलोमेति । प्रतिलोमाः निर्यग्भूताः अनुलोमाः अनुकूलाः रोमराजयश्च मृगमाश्रित्य दृश्यन्ते चित्राः आश्चर्यभूताः कनकबिन्दवः कनकवर्णबिन्दवश्च मृगमाश्रित्य शोभन्ते ॥ २६ ॥

२८ ] ति० टी०—शतह्रदा विद्युत् ॥ २८ ॥

रा० टी०—पश्येति । दीप्तां दीप्तिविशिष्टामत एव अग्निशिखोपमां मेघात् शतहृदां विद्युतमिव जृम्भमाणस्यास्य मृगस्य मुखान्निस्सरन्तीं जिह्वां पश्य ॥ २८ ॥

गो० टी०—पश्येति । शतहृदां तडितम् ॥ २७ ॥

२९-३० ] ति० टी०—'मसारगल्वर्कमुखः शङ्खमुक्तानिभोदरः' इति पाठे मसार इन्द्रनीलस्तस्य गल्वर्कश्चषकस्तदाकारास्यसंपुट इत्यर्थ इति तीर्थः । अनिरूप्य इदमित्थमिति निरूपयितुमशक्यः । पाठान्तरे यस्येत्यादि ॥ २९ ॥ ३० ॥

रा० टी०—मसारेति । मसारगल्लर्कमुखः मसारः इन्द्रनीलः तस्य गल्लर्कः पानपात्रं तद्वन्मुखं यस्य शङ्खमुक्तानिभः शङ्खमुक्ताभ्यां सदृशमुदरं यस्य सः अनिरूप्यः कथमिदं रूपं प्राप्तमिति निरूपयितुमशक्यः असौ मृगः नाम प्रसिद्धं कस्य मनो न लोभयेत् ॥ २९ ॥

गो० टी०—मसारेति । मसारः इन्द्रनीलः गल्लर्कः[1] चषकः । 'गल्वर्कश्चानुतर्षश्च तर्षकश्चषकः स्मृतः' इति हलायुधः । इन्द्रनीलनिर्मितचषकाकारमुखसंपुट इत्यर्थः । अभिरूपः[2] सुन्दरः ॥ २८ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—कस्येति । जाम्बूनदमयप्रभं सुवर्णमयी प्रभा यस्य नानारत्नमयं दिव्यं क्रीडायोग्यम् इदं रूपं दृष्ट्वा कस्य मनो विस्मयं न व्रजेत् व्रजेदेवेत्यर्थः, एतेनैतत्प्राप्त्यनुकूलव्यापारः कर्तव्य इति सूचितम् ॥ ३० ॥

गो० टी०—कस्येति । रूपं मृगं जाम्बूनदमयेति स्वार्थे मयट् । नानारत्नमयं नानाबिन्दुप्रचुरम्[3] ॥ २९ ॥

३१ ] ति० टी०—मांसहेतोरपि विहारार्थं च घ्नन्ति, किं पुनरेवंविधत्वग्लाभार्थमिति भावः ॥ ३१ ॥

रा० टी०—ननु मायामये किमर्थमेवं विचार इत्यत आह—मांसेति । मांसहेतोः राजभोग्यवस्तुप्राप्त्यर्थं च धन्विनो राजानः मृगयायां महावने मृगान् घ्नन्ति एतेनैतत्प्रयत्ने द्वयोर्लाभो भवितेति ध्वनितम् ॥ ३१ ॥

गो० टी०—मांसेति । मांसहेतोरपि विनोदार्थं च राजानो मृगान् घ्नन्ति किं पुनरेवंविधविचित्रवस्तुलाभहेतोरिति भावः ॥ ३० ॥

३२ ] ति० टी०—महावने राजभिरिति शेषः । व्यवसायेन मृगवधोद्यमेन । धनानि विचीयन्ते संगृह्यन्ते । ननु वने कुतो धनं तत्राह—धातव इति । मणिरत्नं सुवर्णं च येषु तादृशा धातवः । वज्रादिमणिसुवर्णादियुक्तास्ताम्रादिधातव इति यावत् ॥ ३२ ॥

रा० टी०—ननु महावने राजभोग्यवस्त्वभावात्कथं तदर्थं मृगहननमित्यत आह—धनानीति । महावने यतः मणिरत्नसुवर्णिनः अनेकविधमणिरत्नसुवर्णयुक्ताः विविधा धातवः सन्ति इति शेषः, अतः व्यवसायेन मृगादिनिवर्तनेन धनानि विचीयन्ते राजभिरिति शेषः, एतेन धनसंचयोऽवश्यं कर्तव्य इति सूचितम् ॥ ३२ ॥

गो० टी०—एतन्मृगरूपं महद्धनम् एतच वन एव संभवति तस्मादिदं व्यवसायेन स्वीकर्तव्यमित्यभिप्रायेणाह—धनानीति । मणिरत्नं मणिश्रेष्ठं सुवर्णं च मणिरत्नसुवर्णे ते येषु स्त इति मणिरत्नसुवर्णिनः मणयः सुवर्णानि च धातुषु भवन्तीति प्रसिद्धिः । तथाभूता विविधा धातवश्च धनानि करिमस्तकमुक्ताप्रभृतीनि महावने व्यवसायेन मृगयोद्योगेन राजभिः विचीयन्ते संगृह्यन्ते । यद्वा धनानि व्यवसायेन मृगयोद्योगेन महावने विचीयन्ते । ननु कुतो वने धनसंग्रहप्रसक्तिरित्यत्राह—धातव इति । यस्मादुक्तरूपा विविधा धातवः सन्ति तस्मादित्यर्थः ॥ ३१ ॥

३३ ] ति० टी०—निचयवर्धनं कोशवर्धनं तद्वन्यं धनं नृणां सारमतिप्रशस्तं भवति । शुक्रं ब्रह्म "स पर्यगाच्छुक-

---

१ गल्लर्कैति गो. रा. पाठः । २ अभिरूप इति गो. पाठः । ३ मयं प्रभो इति गो. पाठः ।

अर्थी येनार्थकृत्येन संव्रजत्यविचारयन् । तमर्थमर्थशास्त्रज्ञाः प्राहुरर्थ्याः सुलक्ष्मण ॥ ३४ ॥
एतस्य मृगरत्नस्य परार्ध्ये काञ्चनत्वचि । उपवेक्ष्यति वैदेही मया सह सुमध्यमा ॥ ३५ ॥
न कादली न प्रियकी न प्रवेणी न चाविकी । भवेदेतस्य सदृशी स्पर्शेऽनेनेति मे मतिः ॥ ३६ ॥
एष चैव मृगः श्रीमान्यश्च दिव्यो नभश्चरः । उभावेतौ मृगौ दिव्यौ तारामृगमहीमृगौ ॥ ३७ ॥

---

मकायमत्रणम् " इति श्रुतेः । एवं च शुक्रस्य ब्रह्मलोकं प्राप्तस्य तद्रूपमापन्नस्य मनसा चिन्तितं सर्वं संकल्पमात्रसिद्धं सर्वं भोग्यवस्तु यथा सर्वस्मात्सारतरं तद्वत् ॥ ३३ ॥

रा० टी०—तत्र हेतुमाह—तदिति । निचयवर्धनं कोशवृद्धिकारकं धनं नृणां सारं बलं तत्तस्माद्धनाद्धेतोः मनसा चिन्तितं सर्वं शुक्रस्य दैत्याचार्यस्येव त्यक्तप्राकृतबन्धस्य पुरुषस्येव वा भवतीति शेषः, । शुक्रशब्दस्य मुक्तपरत्वम् " सपर्यगाच्छुक्रमकायमत्रणम् " इत्यादिश्रुतिषु प्रसिद्धम् ॥ ३३ ॥

गो० टी०—तत्सारमिति । तेषां धनानां सारं श्रेष्ठभूतम् अखिलं धनं नृणां निचयवर्धनं कोशवर्धनं भवेत् किमिव शुक्रस्य मनसा चिन्तितं संकल्पितं वस्तुजातं तथैवाविर्भूय निचयवर्धनं यथा तद्वदित्यर्थः । यद्वा नृणां मनसा चिन्तितं वृथामनोरथकल्पितं सर्वं धनं यथा शुक्रस्य कोशं पूरयति तथेत्यर्थः । तदुक्तमुद्योगपर्वणि—'मनुष्येभ्यः समादत्ते शुक्रश्चिन्तार्जितं धनम्' इति । यद्वा नृणां राजादिधनिनां कोशवर्धनं तत् वन्यं धनं सारं भवति जानपदधनादपि वन्यं धनं सारम् अतिप्रशस्तं भवति अपूर्वत्वात् अतो निवृत्तवनवासैरस्माभिर्वनादपूर्वधनतया पुरीं नेतुमयं ग्रहीतव्य इति भावः ॥ ३२ ॥

३४ ] ति० टी०—ननु तथापि विचार्य कर्तव्यं तत्राह—अर्थीति । अर्थ्यर्थापेक्षः पुमान्येनार्थकृत्येनार्थनिमित्तेन कर्तव्येन कर्मणा तत्सौन्दर्यादाक्षिप्तहृदयोऽविचारयन्नेव व्रजति तत्संपादनार्थं तमेवार्थ्या अर्थसंपादनचतुरा अर्थशास्त्रज्ञा अर्थमर्थपदवाच्यमाहुः ॥ ३४ ॥

रा० टी०—ननु कोऽयमिति निश्चित्य गन्तव्यमित्यत आह—अर्थीति । येनार्थकृत्येन अर्थसाधककर्मणा अविचारयन् अल्पविचारं कुर्वन् अर्थी जनः संव्रजति तमर्थशास्त्रज्ञाः नीतिनिपुणाः अत एव अर्थ्याः अर्थसाधनचतुराः अर्थमर्थसाधकं प्राहुः ॥ ३४ ॥

गो० टी०—अस्त्विदम् अथापि विचार्य कार्यमिति चेत्तत्राह—अर्थीति । अर्थी असन्निहितार्थापेक्षी "अर्थाच्चासन्निहिते" इति इनिप्रत्ययः । सः येन अर्थकृत्येन अर्थकार्येण हेतुना अविचारयन् संव्रजति सम्यग्गच्छति यद्वस्तुसौन्दर्यजातोपकारलोभेन पुरुषस्तत्साधने व्यग्रः प्रवर्तते तमेवार्थं प्राहुः । अर्थशास्त्रज्ञाः नीतिशास्त्रज्ञाः अर्थ्या अर्थ्यादनपेताश्च । 'अर्थ्योभिज्ञार्थशालिनोः' इत्यजयः । "धर्मपथ्यर्थन्यायादनपेते" इति यत्प्रत्ययः ।

यस्य गुणप्रीतः पुरुषः अभिनिविशते स एवार्थ इति नीतिशास्त्रज्ञा अर्थवन्तश्चाहुः । अयं च तथाविध इति भावः ॥ ३३ ॥

३५ ] ति० टी०—अतोऽविचारितैवात्र प्रवृत्तिरित्याह—एतस्येति । अत्र विचारो न कर्तव्यः एतन्मूलेन महतोऽर्थस्य सिद्धिरिति गूढतात्पर्यम् ॥ ३५ ॥

रा० टी०—एतस्येति । एतस्य मृगरत्नस्य मृगश्रेष्ठस्य परार्धे अत्युत्तमे काञ्चनत्वचि सत्यां वैदेही उपवेक्ष्यति उपवेष्टुमिच्छति ॥ ३५ ॥

गो० टी०—एवं प्रयत्नसंपाद्यं वस्त्वयमेव मृग इत्यभिप्रायेणाह—एतस्येति । मृगरत्नस्य मृगश्रेष्ठस्य परार्ध्ये श्लाघ्ये काञ्चनत्वचि काञ्चनसदृशत्वचि पुल्लिङ्गत्वमार्षम् ॥ ३४ ॥

३६ ] ति० टी०—अस्य परार्ध्यत्वमेव दर्शयति—नेति । कदल्या इयं त्वक्कादली । मृदुचक्रकर्बुरनीलाग्ररोमा मृगविशेषः कदली । प्रियकी मृदूच्चमसृणघनरोमयुक्तो मृगः प्रियकस्तस्येयं प्रियकी । प्रवेणी अजविशेषसंबन्धिनी । आविकी अवित्वक् । प्रत्येकं नञुक्तिः सर्वथा सादृश्याभावबोधनाय । अनेनैतदीयत्वचा ॥ ३६ ॥

रा० टी०—तत्र हेतुमाह—नेति । स्पर्शने स्पर्शे एतस्य मृगत्वचः सदृशी कादली मृगविशेषत्वक् न प्रियकी च न प्रवेणी च न प्रियक्यादयोऽपि मृगविशेषत्वक्पराः । तथा च वैजयन्ती—" कदली तु बिले शेते मृगी रूक्षोच्चकर्बुरैः । नीलाग्रैर्लोमभिर्युक्ता सा विंशत्यङ्गुलायता । प्रियकी रोमभिर्युक्ता मृदूच्चमसृणैर्घनैः " इति एतस्येति सामान्ये नपुंसकम् एतच्छब्देन मृगस्यैव परामर्शो कादल्यादिशब्दैर्मृगीविशेषाणामेव ग्रहणे च एतच्छब्दस्य पुल्लिङ्गत्वमिति दिक् ॥ ३६ ॥

गो० टी०—परार्ध्यत्वं विवृणोति—नेति । कदल्येव कादलीमृगविशेषः । तल्लक्षणमुक्तं वैजयन्त्याम्—'कदली तु बिले शेते मृदुसूक्ष्मोच्चकर्बुरैः । नीलाग्रैर्लोमभिर्युक्ता सा विंशत्यङ्गुलायता । प्रियकी लोमभिर्युक्ता मृदुभ्श्च मसृणैर्घनैः' इति । प्रवेणी आस्तरणविशेषः मृगविशेषो वा अविरेव अविकः " अवेः कः " इति स्वार्थे कप्रत्ययः । तस्येयमाविकी तल्लोमनिर्मिता शाटीत्यर्थः । स्पर्शनेन मार्दवेन ॥ ३५ ॥

३७ ] ति० टी०—यश्च नभश्चरो मृगो मृगशिरोनक्षत्ररूपः । तदेवाह—तारामृगेति ॥ ३७ ॥

रा० टी०—एष इति । श्रीमानेषः मृगः यश्च नभश्चरो दिव्यः उभौ एतौ तारामृगमहीमृगौ दिव्यौ क्रीडायोग्यौ एतेन तयोर्द्वयोरेव परस्परमुपमानोपमेयभावः सूचितः ॥ ३७ ॥

---

१ चेति गो. त्विति रा. पाठः । २ स्पर्शने नेति गो. रा. पाठः ।

यदि वायं तथा यन्मा भवेद्वदसि लक्ष्मण । मायैषा राक्षसस्येति कर्तव्योऽस्य वधो मया ॥ ३८ ॥
एतेन हि नृशंसेन मारीचेनाकृतात्मना । वने विचरता पूर्वं हिंसिता मुनिपुङ्गवाः ॥ ३९ ॥
उत्थाय बहवो येन[1] मृगयायां जनाधिपाः । निहताः परमेष्वासास्तस्माद्वध्यस्त्वयं मृगः ॥ ४० ॥
पुरस्तादिह वातापिः परिभूय तपस्विनः । उदरस्थो द्विजान्हन्ति स्वगर्भोऽश्वतरीमिव ॥ ४१ ॥
स कदाचिच्चिराल्लोके[2] आससाद महामुनिम् । अगस्त्यं तेजसा युक्तं भक्ष्य[3]स्तस्य बभूव ह ॥ ४२ ॥
समुत्थाने च तद्रूपं कर्तुकामं समीक्ष्य तम् । उत्स्मयित्वा तु भगवान्वातापिमिदमब्रवीत् ॥ ४३ ॥
त्वयाविगण्य वातापे परिभूताश्च[4] तेजसा । जीवलोके द्विजश्रेष्ठास्तस्मादसि जरां गतः ॥ ४४ ॥
तद्रक्षो[5] न भवेदेव वातापिरिव लक्ष्मण । मद्विधं योऽतिमन्येत धर्मनित्यं जितेन्द्रियम् ॥ ४५ ॥

गो० टी०–एष इति । दिव्यः श्लाघ्यः नभश्चरो मृगः मृगशीर्षः दिव्यौ शोभमानौ ॥ ३६ ॥

३८–३९ ] ति० टी०–अथ लक्ष्मणमतमङ्गीकृत्यापि प्रवृत्तिमाह–यदि वेति । राक्षसमायैषा न मृग इति यथा मां वदसि । यदि वा तथैवैष भवेत्तथाप्यस्य वधो मया कर्तव्य एव राक्षसवधस्य प्रतिज्ञातत्वात् ॥ ३८ ॥ ३९ ॥

रा० टी०–नन्वयं कपटमृगो न वास्तव इत्यत आह–यदीति । एषा राक्षसस्य माया इति मां यत्त्वं वदसि अतः यदि अयं तथा राक्षसो भवेत् तर्हि अस्य वधो मया कर्तव्यः ॥ ३८ ॥

गो० टी०–एवं सीतामतमङ्गीकृत्य प्रवृत्तिरुक्ता । अथ लक्ष्मणमतमङ्गीकृत्याह–यदि वेति । मायैषा राक्षसस्येति यन्मां वदसि तथायं यदि वा भवेत् एवमप्यस्य वधो मया कार्यः ॥ ३७ ॥

रा० टी०–तत्र हेतुमाह–एतेनेति । यतः एतेन मारीचेन पूर्वं मुनिपुङ्गवा हिंसिताः अनेन मृगयायां परमेष्वासाः बहवो जनाधिपाश्च निहतास्तस्मादयं मृगो वध्यः । श्लोकद्वयमेकान्वयि ॥ ३९ ॥ ४० ॥

गो० टी०–हनने हेतुत्वेन तदीयदौरात्म्यमाविष्करोति–एतेन हीति । नृशंसेन घातुकेन अकृतात्मना दुष्टभावेन ॥३८॥

४० ] ति० टी०–उत्थाय प्रादुर्भूयोत्प्लुत्य वा ॥ ४० ॥

गो० टी०–उत्थायेति । उत्थाय प्रादुर्भूय ॥ ३९ ॥

४१–४२ ] ति० टी०–पुरस्तात्पूर्वमिह दण्डकारण्ये । 'स्वगर्भोऽश्वतरीमिव' इति । अश्वतरी स्वगर्भेण म्रियत इति प्रसिद्धिः । अश्वतरी गर्दभादश्वायामुत्पन्नेति तीर्थः । अश्वतरी कर्कटीति परे । वृश्चिक इति कतकः । अत्राद्यव्याख्यैव ज्यायसी । तस्या गर्भस्योदरपाटनं विना न निःसरणमिति सर्वजनप्रसिद्धेः ॥ ४१ ॥ ४२ ॥

रा० टी०–मायाविनोस्याऽवश्यं विघातो भवितेति बोधयन् इतिहासमाह–पुरस्तादिति । पुरस्तात्पूर्वम् इह अस्मिन् वने वातापिः तपस्विनो द्विजान् परिभूय अनादृत्य उदरस्थः पूर्ववर्णितकपटेनोदरनिवासी सन् तपस्विनो द्विजान् हन्ति अहन् तत्र दृष्टान्तः स्वगर्भः अश्वतरीं गर्दभादश्वायामुत्पन्नामिव प्रसिद्धश्चाश्वतरीणां गर्भस्य मातृदरविदारणपूर्वकोत्पादः ॥ ४१ ॥

गो० टी०–पूर्वोक्तमपि वातापिवृत्तान्तं मारीचस्य मायाव्यापारे दृष्टान्तत्वेनाह–पुरस्तादिति । पुरस्तात् पूर्वस्मिन्काले इह दण्डकारण्ये अश्वतरो नाम गर्दभादश्वायामुत्पन्न इति वृत्तिकारः 'गोखरोऽश्वतरो मतः' इति हलायुधः । तत्स्वरूपमुक्तं शालिहोत्रीये–'खररूक्षस्वरास्तीक्ष्णाः खरशीलाः खराङ्घ्रयः' इति । तामश्वतरीं स्वगर्भो यथा हन्ति तथायमपि गर्भस्थो द्विजान् हन्ति । अश्वतरी वृश्चिकेत्यप्याहुः ॥ ४० ॥

रा० टी०–स इति । स वातापिः महामुनिमगस्त्यमाससाद प्राप तस्य मुनेः स राक्षसः भक्ष्यो बभूव ॥ ४२ ॥

गो० टी०–स इति । भक्षः आहारः ॥ ४१ ॥

४३ ] ति० टी०–समुत्थाने श्राद्धान्ते । तद्रूपं राक्षसं रूपम् । उत्स्मयित्वेषद्धसित्वा ॥ ४३ ॥

रा० टी०–समुत्थान इति । समुत्थाने श्राद्धावसाने तद्रूपं राक्षसरूपं कर्तुकामं राक्षसरूपत्वेनोदरं विदार्य निस्सरणकाममित्यर्थः समीक्ष्य ज्ञात्वा उत्स्मयित्वा उत्स्मित्य भगवानगस्त्यो वातापिमिदमब्रवीत् ॥ ४३ ॥

गो० टी०–समुत्थान इति । समुत्थाने श्राद्धान्ते तद्रूपं रक्षोरूपम् उत्स्मयित्वा ईषत्स्मित्वा ल्यब्भाव आर्षः ॥ ४२ ॥

४४ ] ति० टी०–अविगण्याविचार्य पापम् । तस्माद्द्विजपरिभवजपापेन । जरां जीर्णताम् ॥ ४४ ॥

रा० टी०–तद्वचनाकारमाह–त्वयेति । हे वातापे अविगण्य अविगणय्य अनादृत्य द्विजश्रेष्ठाः परिभूताः विनाशिता इत्यर्थः, तस्माद्धेतोः जरां जीर्णतां गतः प्राप्तोऽसि ॥ ४४ ॥

गो० टी०–त्वयेति । आविगण्य अविचार्य पापमिति शेषः । जीवलोके भूलोके जरां जीर्णताम् इति वातापिमब्रवीदिति पूर्वेणान्वयः ॥ ४३ ॥

४५ ] ति० टी०–यो मारीचो मद्विधमतिमन्येतातिक्रामेत्तद्रक्षोऽपि मारीचाख्यं वातापिरिव न भवेदेव न जीवेदेव ॥४५॥

रा० टी०–तदिति । हे लक्ष्मण मद्विधं मत्सदृशं योऽ-

१ ऽनेनेति रा. पाठः । २ लोभादिति गो. पाठः । ३ भक्ष इति गो. पाठः । ४ स्चेति गो. पाठः । ५ तदेतन्न भवेद्रक्ष इति गो. पाठः ।

भवेद्धतोऽयं वातापिरगस्त्येनेव [1]मां गतः । इह त्वं भव संनद्धो यन्त्रितो रक्ष मैथिलीम् ॥ ४६ ॥
अस्यामायत्तमस्माकं यत्कृत्यं रघुनन्दन । अहमेनं वधिष्यामि ग्रहीष्याम्य[2]थवा मृगम् ॥ ४७ ॥
यावद्गच्छामि सौमित्रे मृगमानयितुं द्रुतम् । पश्य लक्ष्मण [3]वैदेह्या मृगत्वचि [4]गतां स्पृहाम् ॥ ४८ ॥
त्वचा प्रधानया ह्येष मृगोऽद्य न भविष्यति । अप्रमत्तेन ते भाव्यमाश्रमस्थेन सीतया ॥ ४९ ॥
यावत्पृषतमेकेन सायकेन निहन्म्यहम् । हत्वैतच्चर्म [5]आदाय शीघ्रमेष्यामि लक्ष्मण ॥ ५० ॥
प्रदक्षिणेनातिबलेन पक्षिणा जटायुषा बुद्धिमता च लक्ष्मण ।
भवाप्रमत्तः [6]प्रतिगृह्य मैथिलीं प्रतिक्षणं सर्वत एव शङ्कितः ॥ ॥ ५१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

---

तिमन्येत अतिक्रमेत् सः तद्रक्षो वातापिरिव न भवेत् म्रियेतेत्यर्थः ॥ ४९ ॥

गो० टी०—तदिति । रक्षःशब्दाभिप्रायेण नपुंसकत्वम् । अतिमन्येत अतिक्रामेत् । भवेदिति । मां गत इति । अगस्त्यो यथा अजरूपं वातापिं लोकहितार्थं नाशितवान् तथाहमपि मृगरूपमेनं हनिष्यामीत्यर्थः ॥ ४४ ॥

४६ ] ति० टी०—उक्तमेवार्थं पुनराह दार्ढ्याय—भवेदिति । मा मां गतः प्राप्तो मारीचोऽगस्त्येन वातापिरिव मया हतो भवेत् भविष्यतीत्यर्थः । संनद्धो धनुःकवचादियुक्तः । यन्त्रितो यत्नवान्व्यापारान्तररहीनः ॥ ४६ ॥

रा० टी०—भवेदिति । यतोऽगस्त्येन वातापिरिव मां गतः अयं राक्षसो हतो भवेत् अतः इह त्वं सन्नद्धो भव यन्त्रितो नियोजितस्त्वं मैथिलीं रक्ष च ॥ ४६ ॥

गो० टी०—इहेति । सन्नद्धः धनुःकवचादिसन्नाहयुक्तः यन्त्रितः व्याक्षेपान्तररहितः । अस्यामिति । अस्माकं यत्कृत्यमावश्यकं तत् सर्वमस्यामायत्तम् एतद्रक्षणप्रधानमित्यर्थः । एतन्मूलतया रावणवधादिकं कर्तव्यम् । इयं हि पूर्वं वेदवतीभावे तथा संकल्पितवतीत्यपि सूचयति ॥ ४९ ॥

४७ ] ति० टी०—अस्माकं यत्कृत्यमावश्यकं कर्तव्यं तदस्यामेतद्रक्षणविषय आयत्तं स्थितम् । तन्मुख्यकृत्ये त्वं सावधानस्तिष्ठ । स्वकर्तव्यमाह—अहमिति । अत्र पूर्वश्लोकचतुर्थचरणश्लेषेणायन्त्रितो यन्त्रणया हीनोऽदतियत्नरहितः सीतां रक्ष । अस्माकं कृत्यमवतारग्रहणप्रयोजनं तदस्यामायत्तमनयैव साधनीयमित्यपि सूचितम् ॥ ४७ ॥

रा० टी०—अस्यामिति । अस्माकं यत् कृत्यं तत् अस्यां मैथिल्यामायत्तम् एतदधीनमित्यर्थः, अतः एनं मृगं ग्रहीष्यामि वधिष्यामि वा ॥ ४७ ॥

गो० टी०—अहमिति । यावद्गच्छामि गमिष्यामि "यावत्पुरानिपातयोः—" इति भविष्यदर्थे लट् ॥ ४६ ॥

४८ ] ति० टी०—यावद्गच्छामि गमिष्यामीत्यर्थः । आनयितुमानेतुम् । तत्र हेतुः—पश्येति ॥ ४८ ॥

रा० टी०—यावदिति । मृगमानयितुम् आनेतुं यावद्गच्छामि तावत् मृगत्वचि गतस्पृहां वैदेहीं पश्य रक्षेत्यर्थः ॥ ४८ ॥

गो० टी०—पश्येति । गतस्पृहां प्राप्तस्पृहां प्रधानया प्रधानप्रयोजनभूतया न भविष्यति मरिष्यतीत्यर्थः । अत्र सीताप्रार्थितमेव प्रधानप्रयोजनम् अन्यदानुषङ्गिकमित्यर्थः ॥ ४७ ॥

४९ ] ति० टी०—प्रधानया सर्वोत्तमया न भविष्यति न जीविष्यति । अनेन जीवतो ग्रहणमशक्यमिति दर्शितम् । ते त्वया सीतया सहेति शेषः । अनया प्रेरिते कर्तव्ये चेत्यप्यर्थः ॥ ४९

रा० टी०—त्वचेति । प्रधानया मायामय्या त्वचोपलक्षित एष मृगोऽद्य न भविष्यति विनङ्क्ष्यतीत्यर्थः, अतो यावत्पृषतं हन्मि तावत् सीतया सीतारक्षणहेतुना अप्रमत्तेन त्वया भाव्यम् । सार्धश्लोक एकान्वयी ॥ ४९ ॥

गो० टी०—अप्रमत्तेनेति । सीतया हेतुभूतया आश्रमस्थेन ते त्वया अप्रमत्तेन भाव्यम् आश्रमस्थोऽप्रमत्तः सन् सीतारक्षणं कुर्वित्यर्थः । पृषतं मृगम् ॥ ४८ ॥ ४९ ॥

५० ] ति० टी०—यावदिति । तावदप्रमत्तेन भाव्यमित्यन्वयः ॥ ६० ॥

रा० टी०—हत्वेति । हत्वा मृगं निहत्य चर्म तद्विषयकस्पृहामादाय छित्वा निवर्त्येत्यर्थः । अवखण्डनार्थकदो रूपम् शीघ्रमेष्यामि ॥ ६० ॥

५१ ] ति० टी०—प्रदक्षिणेन समर्थेन । सर्वतः सर्वदिग्वर्तिरक्षोसुरेभ्यः ॥ ६१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

रा० टी०—प्रदक्षिणेनेति । प्रदक्षिणेन सानुकूलेन जटायुषा सह मैथिलीं परिगृह्य प्रतिक्षणं शङ्कितः सन् अप्रमत्तो भव ॥ ६१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

गो० टी०—प्रदक्षिणेनेति । प्रदक्षिणेन अत्यन्तसमर्थेन

---

१ मामिति गो. रा. पाठः । २ अपि वेति गो. पाठः । ३ वैदेहीमिति गो. पाठः । ४ गतस्पृहामिति गो. रा. पाठः । ५ चादायेति गो. पाठः । ६ परिगृह्येति गो. पाठः ।

## चतुश्चत्वारिंशः सर्गः ।

मृगमनुधावन्धनुष्पाणी रामो मृगेण मायागत्या वञ्चितत्वात्प्राप्तकोपस्तं जघान । म्रियमाणो मारीचो मायारूपं परित्यज्य प्राप्तनिजरूपः हा सीते हा लक्ष्मणेत्युच्चैश्चुक्रोश । तदवधारयन्रामः सीतालक्ष्मणयोर्दुरवस्थासंभावनया प्राप्तविषादः स्वाश्रममभिन्यवर्तत ।

तथा तु तं समुद्दिश्य[1] भ्रातरं रघुनन्दनः । दधारासिं महातेजा जाम्बूनदमयत्सरुम् ॥ १ ॥
ततस्त्रिविनतं[3] चापमादायात्मविभूषणम् । आवध्य[2] च कलापौ द्वौ जगामोदग्रविक्रमः ॥ २ ॥
तं वन्यराजो राजेन्द्रमापतन्तं निरीक्ष्य वै । बभूवान्तर्हितस्त्रासात्पुनः संदर्शनेऽभवत् ॥ ३ ॥
बद्धासिर्धनुरादाय प्रदुद्राव यतो मृगः । तं स्म पश्यति रूपेण द्योतयन्तमिवाग्रतः[5] ॥ ४ ॥
अवेक्ष्यावेक्ष्य धावन्तं धनुष्पाणिर्महावने । अतिवृत्तमिवोत्पातात्[7] लोभयानं कदाचन ॥ ५ ॥
शङ्कितं तु समुद्भ्रान्तमुत्पतन्तमिवाम्बरम्[8] । दृश्यमानमदृश्यं च वनोद्देशेषु केषुचित् ॥ ६ ॥

जटायुषेति सहार्थे तृतीया "वृद्धो यूना–" इति ज्ञापकात् । मैथिलीं परिगृह्य स्ववशीकृत्य सर्वतः शङ्कित एव प्रतिक्षणमतिशङ्क्येवाप्रमत्तो भवेत्यन्वयः ॥ ५० ॥

अत्र पञ्चाशच्छ्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

१ ] ति० टी०–त्सरुः खड्गमुष्टिः ॥ १ ॥

रा० टी०–लक्ष्मणाज्ञापनानन्तरकालिकं रामवृत्तान्तमाह–तथेत्यादिभिः । तथा उक्तप्रकारेण भ्रातरं लक्ष्मणं समादिश्य आज्ञाप्य रघुनन्दनो रामः जाम्बूनदमयः त्सरुः मुष्टिर्यस्मिंस्तमसिं खड्गं दधार ॥ १ ॥

गो० टी०–अजानन्निव यो मायामृगं कार्यान्तरैकदृक् ।
अनुसृत्य जघानाशु तं लीलामानुषं भजे ॥

अथ मारीचवधः–तथा त्वित्यादिना । त्सरुः खड्गमुष्टिः । 'त्सरुः खड्गादिमुष्टिः स्यात्' इत्यमरः ॥ १ ॥

२ ] ति० टी०–मध्ये स्थलत्रये विनतं त्रिविनतम् । आत्मविभूषणम् चापस्य वीरालंकारत्वात् । आत्मविभूषणमित्यनेनागस्त्यदत्तं वैष्णवमिति सूचितम् । कलापौ तूणीरौ ॥ २ ॥

रा० टी०–तत इति । ततः खड्गधारणानन्तरं त्रिविनतं त्रिषु स्थलेषु विनतम् अवनतं किंच त्रयो ब्रह्मविष्णुमहेश्वराः विनताः नम्रीभूताः कृतप्रणामा इत्यर्थः यस्मै तम् आत्मविभूषणं चापमादाय द्वौ कलापौ तूणीरे आवध्य उदग्रविक्रमः महापराक्रमवान् रामो जगाम 'कलापो भूषणे बर्हे तूणीरे संहतेऽपि च' इत्यमरः ॥ २ ॥

गो० टी०–तत इति । त्र्यवनतं त्रिषु स्थलेष्ववनतं शार्ङ्गमित्यर्थः । आत्मविभूषणम् आत्मालंकारं कलापौ द्वौ द्वौ तूणीरौ 'कलापो भूषणे बर्हे तूणीरे संहतेऽपि च' इत्यमरः ॥ २ ॥

३ ] टी० ति०–वन्यराजो वन्यानां मृगाणां राजा विचित्रमृगत्वात् । पुनः संदर्शने दृष्टिविषये ॥ ३ ॥

रा० टी०–तमिति । आपतन्तं राजेन्द्रं राजराजं तं रामं वन्यराजः वन्येषु मृगेषु राजते शोभते स मारीचः निरीक्ष्य त्रासात् रामभयात् अन्तर्हितो बभूव पुनः त्रासात् रावणभयात् संदर्शने अभवत् ॥ ३ ॥

गो० टी०–तमिति । वञ्चयानः वञ्चयमानः अनित्यो मुमागमः । संदर्शने दृष्टिविषये अभवत् स्थितः । बद्धेति । यतः यस्मिन् प्रदेशे मृगो वर्तते तत्र प्रदुद्राव ॥ ३ ॥

४ ] ति० टी०–रूपेण स्वरूपेणाग्रतो द्योतयन्तं द्योतमानमिव स्थितम् ॥ ४ ॥

रा० टी०–बद्धेति । बद्धासिर्गृहीतखड्गो रामः धनुरादाय यतः यत्र मृगस्तं देशं प्रदुद्राव अत एव रूपेण स्वस्वरूपकान्त्या अग्रतो द्योतयन्तमिव तं मृगं पश्यति स्म ॥ ४ ॥

गो० टी०–तमित्यादि । श्लोकत्रयमेकं वाक्यम् । रूपेण कान्त्या अग्रे द्योतमानमिव स्थितम् इषोः पातात् अतिवृत्तम् अतिक्रान्तं शङ्कितमिवेत्यन्वयः । धनुष्पाणिं दृष्ट्वा शङ्कितमिवेत्यनेन धनुष्पाणिदर्शनादन्यमृगाणामिवास्य शोको न भवतीतीवशब्दः प्रयुज्यते, यद्वा रामाद्भयं शङ्कमानं सत् उत्पतन्तमिव स्थितं वस्तुतस्तत्राप्यदर्शनादिति भावः । लोभयानं हस्तप्राप्तमिव दृश्यमानमित्यर्थः । दृश्यमानामिति केषुचिद्दृश्यमानम् केषुचिददृश्यम् अत एव छिन्नाभ्रैः संवीतं व्याप्तं चन्द्रमण्डलमिव स्थितं शारदमिति मेघशकलसंभावनार्थमुक्तम् ॥ ४ ॥ ६ ॥

५ ] ति० टी०–अतिवृत्तमतिक्रान्तम् । कदाचन लोभयानं हस्तप्राप्तमिव दृश्यमानम् ॥ ५ ॥

रा० टी०–अवेक्ष्येति । इषोः बाणस्य पातात् पातशङ्कातः अतिवृत्तं भीतमित्यर्थः, अत एव धावन्तं कदाचन रावणवचनस्मरणकाले लोभयानं हस्तग्रहणयोग्यतया दृश्यमानं मृगम् अवेक्ष्यावेक्ष्यास्तीति शेषः ॥ ५ ॥

६ ] ति० टी०–शङ्कितम् इषुपातादिति शेषः । वनोद्देशेषु क्वचिद्दृश्यमानं क्वचिददृश्यमानम् ॥ ६ ॥

रा० टी०–शङ्कितमिति । शङ्कितं रामबाणपातसंभावन-

१ समादिश्येति गो. पाठः । २ बबन्धेति गो. पाठः । ३ ततस्त्र्यवनतमिति गो. पाठः । ४ वञ्चयान इति गो. पाठः । ५ द्योतमानमिति गो. पाठः । ६ पाणिमिति गो. पाठः । ७ इषोः पातादिति गो. रा. पाठः । ८ अम्बरे इति गो. पाठः ।

छिन्नाभ्रैरिव संवीतं शारदं चन्द्रमण्डलम् । मुहूर्तादेव ददृशे मुहुर्दूरात्प्रकाशते ॥ ७ ॥
[1]दर्शनादर्शनेनैव सोऽपाकर्षत राघवम् । स[2] दूरमाश्रमस्यास्य मारीचो मृगतां गतः ॥ ८ ॥
आसीत्क्रुद्धस्तु काकुत्स्थो विवशस्तेन मोहितः । अथावतस्थे सुश्रान्त[3]श्छायामाश्रित्य शाद्वले ॥ ९ ॥
स तमुन्मादयामास मृगरूपो निशाचरः । मृगैः परिवृतोऽथान्यै[4]रदूरात्प्रत्यदृश्यत ॥ १० ॥
ग्रहीतुकामं दृष्ट्वा[5] तं पुनरेवाभ्यधावत । तत्क्षणादेव संत्रासात्पुनरन्तर्हितोऽभवत् ॥ ११ ॥
पुनरेव ततो दूराद्वृक्षखण्डा[6]द्विनिःसृतः । दृष्ट्वा रामो महातेजास्तं हन्तुं कृतनिश्चयः ॥ १२ ॥
भूयस्तु शरमुद्धृत्य कुपितस्तत्र राघवः । सूर्यरश्मिप्रतीकाशं ज्वलन्तम[7]रिमर्दनम् ॥ १३ ॥
संधाय सु[8]दृढं चापे विकृष्य बलवद्बली । तमेव मृगमुद्दिश्य ज्वलन्तमिव पन्नगम् ॥ १४ ॥
मुमोच ज्वलितं दीप्तमस्त्रं ब्रह्मविनिर्मितम् । स[9] भृशं मृगरूपस्य विनिर्भिद्य शरोत्तमः ॥ १५ ॥
मारीचस्यैव हृदयं बिभेदाशनिसंनिभः । तालमात्रमथोत्प्लुत्य न्यपतत्स भृ[10]शातुरः ॥ १६ ॥
[11]व्यनदद्भैरवं नादं धरण्यामल्पजीवितः । म्रियमाणस्तु मारीचो[12] [13]जहौ तां कृत्रिमां तनुम् ॥ १७ ॥

या प्राप्तशङ्कम् अत एव समुद्भ्रान्तं भीतम् अत एव अम्बरमाकाशमुत्पतन्तमुल्लङ्घयन्तमिव केषुचित् वनोद्देशेषु दृश्यमानं केषुचिददृश्यं च अत एव छिन्नाभ्रैः अभ्रखण्डैः संवीतमाच्छन्नं चन्द्रमण्डलमिव मुहूर्तादेव निकटे मुहुर्ददृशे मुहूर्ताद्दूरात्प्रकाशते॥६॥७॥

७ ] ति० टी०—छिन्नाभ्रसंवीतचन्द्रसादृश्योपपादकमुत्तरार्धम् ॥ ७ ॥

गो० टी०—मुहूर्तादिति । समीपे मुहूर्तात् मुहूर्तं ददृशे दूरात् दूरं मुहुः प्रकाशते अतः एवम् उक्तरीत्या दर्शनादर्शनात् दर्शनादर्शनाभ्यां सुदूरमपाकर्षत आकृष्टवान् ॥ ७ ॥ ८ ॥

८ ] ति० टी०—दर्शनादर्शनेनेति द्वन्द्वैकवद्भावः । स मृगतां गतो मारीचः अस्याश्रमस्य दूरं गत इत्यर्थः ॥ ८ ॥

रा० टी०—दर्शनेति । मृगतां मृगत्वं गतः प्राप्तः स मारीचः दर्शनादर्शनेनैव अस्य रामसंबन्धिनः आश्रमस्य सुदूरं दूरत्वविशिष्टं यथा भवति तथा राघवं राममपाकर्षत ॥ ८ ॥

९ ] ति० टी०—तेन दर्शनादर्शनेन विलोभ्य मोहयता मारीचेन मोहितो वञ्चितो विवशस्त्वग्लोभपरवश इव सुतरां छायामाश्रित्यावतस्थे ॥ ९ ॥

रा० टी०—आसीदिति । अविवशः क्रोधादिवशभिन्नः तेन मोहितः शब्दोच्चारणमात्रेणैव हितकारी काकुत्स्थो रामः तेन क्रुद्धः क्रुद्धत्वेन प्रतीयमान आसीत् । अथ अतः सुश्रान्तः दूरदेशमागमनेन सुश्रान्तत्वेन प्रतीयमानो रामः शाद्वले घासविशिष्टदेशे छायाम् आश्रित्य अवतस्थे ॥ ९ ॥

गो० टी०—आसीदिति । विवशः कुतूहलपरवशः मोहितः वञ्चितः ॥ ९ ॥

१०–१२ ] ति० टी०—उन्मादयामास बहुदूरधावनेन चित्तविभ्रमं चकार ॥ १०–१२ ॥

रा० टी०—स इति । अन्यैः मृगैः परिवृतः मृगरूपः स निशाचरः अदूरात् प्रत्यदृश्यत अत एव तं राममुन्मादयामास भ्रान्त्यनुकूलव्यापारं चकार ॥ १० ॥

रा० टी०—ग्रहीतुमिति । ग्रहीतुकामं तं रामं दृष्ट्वा अभ्यधावत संत्रासात् ग्रहणभयात् क्षणादेव पुनरन्तर्हितोऽभवत् ॥ ११ ॥

गो० टी०—स इति । उन्मादयामासेति उन्मादश्चित्तविभ्रमः बहुदूराकर्षणेन चित्तमोहं चकारेत्यर्थः ॥ १० ॥ ११ ॥

रा० टी०—पुनरिति । ततः तस्मात् स्थानात् दूरात् दूरे विद्यमानात् वृक्षखण्डात्पुनर्विनिःसृतं मृगं दृष्ट्वा हन्तुं कृतनिश्चयो राघवो रामः सूर्यरश्मिप्रतीकाशं ज्वलन्तं पन्नगमिव ज्वलन्तं ब्रह्मविनिर्मितं ब्रह्मणा सृष्टमस्त्रं शरमुद्धृत्य दृढे चापे संधाय विकृष्य च ज्वलितं तमेव मृगमुद्दिश्य मुमोच, अत एव शरोत्तमः दीप्तं मृगरूपस्य मारीचस्य शरीरं विनिर्भिद्य हृदयं बिभेद । सार्धश्लोकचतुष्टयमेकान्वयि ॥ १२–१६ ॥

गो० टी०—पुनरेवेति । भूयः अत्यर्थं कुपितोऽभूत् ॥ १२ ॥

१३–१४ ] ति० टी०—भूयः कुपित इत्यन्वयः ॥ १३ ॥ १४ ॥

गो० टी०—सूर्येत्यादिश्लोकद्वयमेकं वाक्यम् ॥ १३ ॥ १४ ॥

१५ ] ति० टी०—ब्रह्मविनिर्मितमस्त्रं ब्रह्मास्त्रं ब्रह्मदत्तबाणं च । मृगरूपसदृशरूपस्य मायाकृतरूपे यक्षवत्प्रविश्य स्थितस्य ॥ १५ ॥

गो० टी०—शरीरमिति । प्रथमं मृगरूपस्य शरीरं विनिर्भिद्य ततः मारीचस्य हृदयं तदन्तर्वर्तिस्वशरीरं बिभेद ॥ १५ ॥

१६–१७ ] ति० टी०—मारीचस्यैव हृदयम्, न तु तत्कृतमायामृगाकारमात्रस्य । तालमात्रमुत्प्लुत्य । शरवेगकृतवेधादिति शेषः ॥ १६ ॥ १७ ॥

रा० टी०—तालेति । अथ बाणकर्तृकभेदानन्तरं तालमात्रमुत्प्लुत्य न्यपतत् ॥ १६ ॥

१ दर्शनादर्शनादेवमिति गो. पाठः । २ सुदूरमिति गो. पाठः । ३ संभ्रान्त इति गो. पाठः । ४ वन्यैरिति गो. पाठः । ५ दृष्ट्वैनमिति गो. पाठः । ६ षण्डाद्विनिःसृतमिति गो. पाठः । ७ अरिमर्दन इति गो. पाठः । ८ सुदृढे इति गो. स दृढे इति रा. पाठः । ९ श्वसन्तमिति गो. पाठः । १० शरीरमिति गो. पाठः । ११ शरातुर इति गो. पाठः । १२ विनदन्निति गो. पाठः । १३ एतदादिचरणद्वयं गो. नास्ति ।

स्मृत्वा तद्वचनं रक्षो दध्यौ केन तु लक्ष्मणम् । इह प्रस्थापयेत्सीता तां शून्ये रावणो हरेत् ॥ १८ ॥
स प्राप्तकालमाज्ञाय चकार च ततः [1]स्वनम् । सदृशं राघवस्यै[2]व हा सीते लक्ष्मणेति च ॥ १९ ॥
तेन मर्मणि [3]निर्विद्धं शरेणानुपमेन [4]हि । मृगरूपं तु तत्त्यक्त्वा राक्षसं रूपमा[5]स्थितः ॥ २० ॥
चक्रे स सुमहा[6]कायो मारीचो जीवितं त्यजन् । [ [7]ततो विचित्रकेयूरः सर्वाभरणभूषितः ।
हेममाली महादंष्ट्रो राक्षसोऽभूच्छराहतः ॥ ] तं दृष्ट्वा पतितं भूमौ राक्षसं [8]भीमदर्शनम् ॥ २१ ॥
रामो रुधिरसिक्ताङ्गं [9]चेष्टमानं महीतले । जगाम मनसा सीतां लक्ष्मणस्य वचः स्मरन् ॥ २२ ॥
मारीचस्य तु[10] मायैषा [11]पूर्वोक्ता लक्ष्मणेन तु । तत्तथा ह्यभवच्चाद्य मारीचोऽयं मया हतः ॥ २३ ॥
हा सीते लक्ष्मणेत्येवमाक्रुश्य तु[12] महास्वनम् । ममार राक्षसः सोऽयं श्रुत्वा सीता कथं भवेत् ॥ २४ ॥
लक्ष्मणश्च महाबाहुः कामवस्थां गमिष्यति । इति संचिन्त्य धर्मात्मा रामो हृष्टतनूरुहः ॥ २५ ॥
तत्र रामं भयं तीव्रमाविवेश विषादजम् । राक्षसं मृगरूपं तं हत्वा श्रुत्वा च तत्स्वनम् ॥ २६ ॥

---

गो० टी०–तालमात्रमिति । तालमात्रं तालप्रमाणम् । "प्रमाणे द्वयसच्" इत्यादिना प्रमाणे मात्रच् ॥ १६ ॥

रा० टी०–व्यनददिति । अल्पजीवितः अत एव म्रियमाणो मारीचः भैरवं नादं धरण्यां व्यनदत् कृत्रिमां तनुं जहौ च ॥ १७ ॥

गो० टी०–म्रियमाण इति । सीता केनोपायेन लक्ष्मणमिह प्रस्थापयेत् केनोपायेन रावणस्तां हरेदिति दध्यौ चिन्तयामास ॥ १७ ॥

१८ ] ति० टी०–तद्वचनं रावणवचनम् । दध्यौ ध्यानं कृतवान् । केन मत्कृतेनोपायेन सीता लक्ष्मणं प्रस्थापयेत्तां च शून्ये रावणो हरेदिति दध्यौ ॥ १८ ॥

रा० टी०–स्मृत्वेति । रक्षो मारीचः तत् रावणोक्तं वचनं स्मृत्वा केन कीदृशानुकृतशब्देन सीता लक्ष्मणमिह प्रस्थापयेत् तां सीतां शून्ये रावणो हरेत् इति दध्यौ चिन्तनपूर्वकनिश्चयं चकार ॥ १८ ॥

१९ ] ति०टी०–प्राप्तकालमाज्ञाय रावणोक्तमुपायमेव युक्तं मत्वा ॥ १९ ॥

रा० टी०–स इति । स मारीचः प्राप्तकालमाज्ञाय ज्ञात्वा हा सीते हा लक्ष्मणेति च राघवस्य सदृशमेव स्वनं चकार ॥ १९ ॥

गो० टी०–स इति । प्राप्तकालं कालप्राप्तं कालोचितमर्थम् आज्ञाय निश्चित्य ॥ १८–२२ ॥

२० ] ति० टी०–मर्मणि प्राणस्थाने । रक्षस इदं राक्षसरूपमास्थितः । पूर्वोक्तं शब्दं चक्र इत्यन्वयः ॥ २० ॥

रा० टी०–तेनेति । अनुपमेन शरेण तेन रामेण मर्मणि निर्विद्धमत एव मृगरूपं त्यक्त्वा राक्षसं रूपमास्थितो मारीचः जीवितं त्यजन् सन् सुमहाकायं चक्रे । सार्धश्लोक एकान्वयी २०

२१–२२ ] ति० टी०–सुमहाकायो महाशरीरम् ॥ २१ ॥ २२ ॥

रा० टी०–तमिति । भूमौ पतितं रुधिरसिक्ताङ्गं महीतले चेष्टमानं तं राक्षसं दृष्ट्वा लक्ष्मणस्य वचः स्मरन् सन् रामो मनसा सीतां जगाम । सार्धश्लोक एकान्वयी ॥ २१ ॥ २२ ॥

२३ ] ति०टी०–लक्ष्मणवच एवाह–मारीचस्य त्विति २३ ॥

रा० टी०–लक्ष्मणवच एवाह–मारीचस्येति । एषा मारीचस्य माया या लक्ष्मणेन पूर्वोक्ता तत्तथैव अभवत् अत एव मया मारीचो हतः तदिति सामान्ये नपुंसकम् ॥ २३ ॥

गो० टी०–मारीचस्यैवेति । मायैषेत्यत्र इतिकरणं बोध्यम् ॥ २३ ॥

२४ ] ति० टी०–सीता कथं भवेत् । किमधैर्यं नाटयित्वा लक्ष्मणं प्रेषयेदुत धीरा भवेदित्यर्थः ॥ २४ ॥

२५ ] ति० टी०–कामवस्थाम् अधैर्यादिति शेषः । हृष्टतनूरुहस्त्रासादिव रोमाञ्चिततनुः । वस्तुत एतन्मूलेन सर्वकार्यनिष्पत्तिरिति हर्षाद्रोमाञ्चिततनुः ॥ २५ ॥

रा० टी०–हेति । हा सीते इत्यादिमहास्वनमाक्रुश्य सोऽयं राक्षसो ममार । श्रुत्वा मारीचोक्तमिति शेषः, सीता महाबाहुर्लक्ष्मणश्च कथं भवेत् तिष्ठेत् कामवस्थां च गमिष्यति इति संचिन्त्य धर्मात्मा रामः हृष्टतनूरुहः स्नेहात्पुलकितगात्रोऽभवदिति शेषः । श्लोकद्वयमेकान्वयि ॥ २४ ॥ २५ ॥

गो० टी०–हा सीत इत्यादि । हृष्टतनूरुहः भयात्पुलकितः अभूदिति शेषः ॥ २४ ॥ २५ ॥

२६ ] ति० टी०–तत्र नटवद्भगवान्मनुष्यरूपत्वाद्भयशोकादिमत्त्वं नाटयतीति कविरपि सर्वलोकवेद्यं तथैवाह–तत्र रामं भयमिति । तात्त्विकमर्थं तु हृष्टतनूरुह इति हृष्टपदेन प्रागेव ध्वनितवान् ॥ २६ ॥

रा० टी०–तत्रेति । मृगरूपं राक्षसं हत्वा तत्स्वनं च श्रुत्वा विद्यमानं रामं विषादजं सीतावियोगजनितं तीव्रं भयमाविवेश ॥ २६ ॥

गो० टी०–तत्रेति । विषादजं विषादोत्थं विषादो भविष्यतीत्युत्पन्नम् ॥ २६ ॥

---

१ स्वरमिति गो॰ पाठः । २ एवेति गो. पाठः । ३ निर्विद्ध इति गो. पाठः । ४ चेति गो. पाठः । ५ आत्मन इति गो. पाठः । ६ कायमिति रा. पाठः । ७ एतदाद्यर्धद्वयमधिकम् गो. पाठे । ८ घोरदर्शनमिति गो. पाठः । ९ वेष्टमानमिति गो. पाठः । १० एवेति गो. पाठः । ११ पूर्वोक्तमिति गो. पाठः । १२ चेति गो. पाठः ।

निहत्य पृषतं चान्यं मांसमादाय राघवः । त्वरमाणो जनस्थानं ससाराभिमुखं तदा ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

## पञ्चचत्वारिंशः सर्गः ।

रामस्वरमनुकुर्वतो मारीचस्य हा सीते लक्ष्मणेत्येवमाक्रोशं श्रुत्वा वञ्चिता सीता रामविपदमाशङ्कमाना तद्रक्षणाय लक्ष्मणं प्रेषयति । नायं राघवाक्रोशो राक्षसमायेयं मा बिभीहीति वदन्तं लक्ष्मणं सीता दुःश्रवं श्रावयति तेनाविद्धो लक्ष्मणः सीतां प्रणम्य शब्दमनुलक्षीकृत्य प्रतस्थे ।

आर्तस्वरं तु तं भर्तुर्विज्ञाय सदृशं वने । उवाच लक्ष्मणं सीता गच्छ जानीहि राघवम् ॥ १ ॥
नहि मे जीवितं स्थाने हृदयं वावतिष्ठते । क्रोशतः परमार्तस्य श्रुतः शब्दो मया भृशम् ॥ २ ॥
आक्रन्दमानं तु वने भ्रातरं त्रातुमर्हसि । तं क्षिप्रमभिधाव त्वं भ्रातरं शरणैषिणम् ॥ ३ ॥
रक्षसां वशमापन्नं सिंहानामिव गोवृषम् । न जगाम तथोक्तस्तु भ्रातुराज्ञाय शासनम् ॥ ४ ॥

गो० टी०-राक्षसमित्यादि । हत्वा मरणानुकूलव्यापारं कृत्वा ततस्तदुक्तं स्वरं श्रुत्वा त्वरमाणो रामः जनस्थानं जनस्थानस्थस्वाश्रममुद्दिश्याभिमुखः सन् ससार ययौ ॥ २७ ॥
अत्र सार्धसप्तविंशतिश्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

२७ ] ति० टी०-पृषतं मृगम् । जनस्थानमभिमुखं जनस्थानवर्तिनिजाश्रमाभिमुखम् ॥ २७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

रा० टी०-निहत्येति । अन्यं लोकविलक्षणं मृगं मारीचं हत्वा मांसं तापसोपभोग्यफलादिकमादाय त्वरमाणः सन् अभिमुखं जनस्थानं ससार जगाम ॥ २७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

१ ] ति० टी०-अथ सीता रामविषयशोकनाटनेन लक्ष्मणमुद्वासयति—आर्तेति । भर्तुः स्वरेण सदृशं स्वरम् भर्तुः स्वर इत्येव ज्ञात्वेत्यर्थः ॥ १ ॥

रा० टी०-मारीचवधानन्तरकालिकं रामवृत्तान्तमुक्त्वा सीतावृत्तान्तमाह-आर्तेत्यादिभिः । भर्तुर्भर्तृस्वरस्य सदृशं तमार्तस्वरं विज्ञाय त्वं गच्छ राघवं जानीहि क्वास्तीति बुध्यस्व इति सीता लक्ष्मणमुवाच । भर्तुः सदृशमित्युक्त्या नेदं रामवचः इति सीतया ज्ञातमिति सूचितम्, जानीहीत्युक्त्या केन कथमेवं शब्दः कृत इति तद्विषयिणी जिज्ञासा सूचिता ॥ १ ॥

गो० टी०-अस्थाने भयशङ्किन्या जानक्यापि सुहृज्जनम् ।
धिक्कृत्य चिन्तितं रामं नित्यापूर्वमहं भजे ॥

आर्तस्वरं त्वित्यादि । भर्तुः भर्तुः स्वरस्य ॥ १ ॥

२-३ ] ति० टी०-क्रोशतो रामस्य ॥ २ ॥ ३ ॥

रा० टी०-सीतावचनान्तराण्याह-न हीति । क्रोशतः मां त्वां च आह्वयतः परमार्तस्य कस्यचिच्छब्दो मया भृशं श्रुतः अतः मे जीवितं प्राणाः हृदयं मनश्च स्थाने स्वस्वदेशे नैवावतिष्ठते एतेन सीतायाः दयालुतातिशयः सूचितः ॥ २ ॥

रा० टी०-आक्रन्दमानमिति । शरणैषिणं स्वरक्षाकामं सिंहानां गोवृषमिव रक्षसां वशमापन्नम् अत एव आक्रन्दमानं तं जनं भ्रातरं च क्षिप्रं त्वं त्रातुमर्हसि अतः भ्रातरम् अभिधाव भ्रातरमभिधावेत्युक्त्या तदनुमत्यैव आक्रन्दमानजनस्य रक्षा कर्तृकानुसं[illegible] 'चितम् रक्षसां वशमापन्नमित्यनेन रावणप्रेरणयैव [illegible]त इति सूचितम् तेन तस्यात्रागमने स्वातन्त्र्याभावो [illegible]ततः, रामं त्रातुमर्हसीत्युक्त्या दूरगमनेन तद्विषयः संशय उत्पन्न इति व्यञ्जितं तेन तत्र स्नेहातिशयो ध्वनितः सार्धश्लोक एकान्वयी ॥ ३ ॥

गो० टी०-न हीति । हृदयं मनः जीवितं प्राणः वाशब्दः समुच्चये स्थाने स्वस्थाने मोहो जायत इति भावः । शरणैषिणं रक्षकार्थिनं गोवृषमिति सामान्यविशेषयोः प्रयोगः करिकलभवत् । इति सीता लक्ष्मणमुवाचेति संबन्धः ॥ २ ॥ ३ ॥

४ ] ति० टी०-आज्ञाय शासनम् । 'अप्रमत्तेन ते भाव्यमाश्रमस्थेन सीतया' इत्युक्तमनुचिन्त्येत्यर्थः ॥ ४ ॥

रा० टी०-नेति । भ्रातुः शासनमाज्ञाय तथोक्तो लक्ष्मणस्तु न जगाम ॥ ४ ॥

गो० टी०-न जगामेति । शासनम् अप्रमत्तेन ते भाव्यमित्याद्युक्तम् ॥ ४ ॥

१ मुख इति गो. पाठः । २ अवातिष्ठंतीति गो. पाठः ।

तमुवाच ततस्तत्र क्षुभिता जनकात्मजा । सौमित्रे मित्ररूपेण भ्रातुस्त्वमसि शत्रुवत् ॥ ५ ॥
यस्त्वमस्यामवस्थायां भ्रातरं नाभिपद्यसे । इच्छसि त्वं विनश्यन्तं रामं लक्ष्मण मत्कृते ॥ ६ ॥
लोभात्तु मत्कृते नूनं नानुगच्छसि राघवम् । व्यसनं ते प्रियं मन्ये स्नेहो भ्रातरि नास्ति ते ॥ ७ ॥
तेन तिष्ठसि विस्रब्धं तमपश्यन्महाद्युतिम् । किं हि संशयमापन्ने तस्मिन्निह मया भवेत् ॥ ८ ॥
कर्तव्यमिह तिष्ठन्त्या यत्प्रधानस्त्वमागतः । एवं ब्रुवाणां वैदेहीं बाष्पशोकसमन्विताम् ॥ ९ ॥
अब्रवील्लक्ष्मणस्त्रस्तां सीतां मृगवधूमिव । पन्नगासुरगन्धर्वदेवदानवराक्षसैः ॥ १० ॥
अशक्यस्तव वैदेहि भर्ता जेतुं न संशयः । देवि देवमनुष्येषु गन्धर्वेषु पतत्रिषु ॥ ११ ॥
राक्षसेषु पिशाचेषु किंनरेषु मृगेषु च । दानवेषु च घोरेषु न स विद्येत शोभने ॥ १२ ॥

---

५] ति० टी०—क्षुभिता क्षुभितेव । शत्रुवच्छत्रुयोग्यवृत्तः ॥ ५ ॥

रा० टी०—तमिति । ततः लक्ष्मणगमनाभावाद्धेतोः क्षुभिता जनकात्मजा तं लक्ष्मणमुवाच लक्ष्मणप्रेषणहेतुकतद्व्यङ्ग्योत्पादकवचनमुच्चारयामास । अर्धं पृथक् । तद्वचनाकारमाह—हे सौमित्रे ! यत् यस्मात् हेतोः अस्यां सहायरहितायाम् अवस्थायां भ्रातरं त्वं नाभिपत्स्यसे अतः मित्ररूपेण भ्रातुः शत्रुवदसि । अर्धद्वयमेकान्वयि । यद्वा इदमप्यर्धं पृथक्—तथाहि भ्रातुः मित्ररूपेण हेतुना त्वमपि शत्रुवद्रामशत्रुत्वापन्नराक्षसशत्रुतुल्योऽसि शत्रुभिन्नेऽपि शत्रुत्वबुद्धेर्लोके प्रसिद्धत्वादिति तात्पर्यम्, एतेन यदि रामसमीपे त्वं न गमिष्यसि तर्हि एकाकिनं त्वामवलोक्य तच्छत्रव इहाप्यापतिष्यन्तीति व्यञ्जितं तेन एकत्रैव द्वाभ्यां स्थातव्यमिति ध्वनितम् ॥ ५ ॥

गो० टी०—सौमित्र इति । मित्ररूपेणोपलक्षितः रूपेण मित्रसदृशः क्रियया शत्रुतुल्योऽसीत्यर्थः । शात्रवक्रियां दर्शयति—यस्त्वमिति ॥ ५ ॥

६–७ ] ति० टी०—तदेवाह—यस्त्वमिति । नाभिपद्यसे न प्राप्तो भवसि । मत्कृते मत्परिग्रहार्थम् ॥ ६ ॥ ७ ॥

रा० टी०—यदिति । यत् यस्मात् हेतोः विनश्यन्तं नः त्वम् अस्यां सहायरहितायामवस्थायां भ्रातरं रामं नाभिपत्स्यसे तस्मात् हेतोः हे लक्ष्मण ! मत्कृते मद्रक्षार्थम् अन्त स्वविनाशमिच्छसीत्यनुमीयते इति शेषः, एतेन अस्मिन् समये रामसमीपगमनमन्तरा ते महत्यपकीर्तिर्भवितेति व्यञ्जितम् ॥ ६ ॥

रा० टी०—लोभादिति । मत्कृते मद्रक्षार्थं यो लोभः मयि गते इमां को रक्षिष्यतीति वैचित्यं तस्मात् हेतोः राघवं नानुगच्छसि चेत् तर्हि ते अप्रियं व्यसनमपवादरूपदुःखं, भ्रातरि ते स्नेहो नास्तीति चाहं मन्ये ॥ ७ ॥

गो० टी०—इच्छसीति । इच्छायां हेतुमाह—मत्कृत इति मत्परिग्रहार्थमित्यर्थः । दार्ढ्यांय पुनराह—लोभादिति । लोभो मल्लाभेच्छा ॥ ६ ॥ ७ ॥

८–९ ] ति० टी०—विस्रब्धं विश्वस्तं यथा तथा । 'विश्रब्धः' इति पाठान्तरम् । त्वद्रक्षणं विहाय कथं गच्छामीत्यत्राह—किं हीति । यो रामः प्रधानं यस्य स यत्प्रधानस्त्वमिहागतस्तस्मिन्रामे संशयमापन्ने सति मया तिष्ठन्त्या त्वद्रक्षणेन जीवन्त्या किं कर्तव्यं भवेत् तदभावे मरणमेव श्रेयः, तच्चेन केनापि भवतु रक्षसा वान्येन जन्तुना वा स्वतो वह्निप्रवेशादिना वेति भावः । अत्रायं ध्वनिः—राक्षससंहारप्रधानकार्यकरणायागतस्य तव त्वद्भ्रातुर्वा तस्मिन्कार्ये इह मदवस्थित्या संशयमापन्ने इह जीवन्त्या मया किं कार्यं भवेत् । सर्वत्रोत्पत्तिस्थितिसंहारेषु तव भ्रातुरहमेव सहकारिणी प्रकृतश्च संहारोऽत्र मत्स्थित्या न निवर्तत इति ॥ ८ ॥ ९ ॥

रा० टी०—ननु त्वद्रक्षणार्थं स्थितवति मयि भ्रातृस्नेहाभावविषया बुद्धिः कथमित्यत आह—तेनेति । येन मद्रक्षणीयात्वेन हेतुना महाद्युतिं राममपश्यन् विस्रब्धं यथा भवति तथा त्वं तिष्ठसि तेन रक्षणीयात्वेनोपलक्षितया इह तिष्ठन्त्या मया यत्प्रधानः यो राम एव प्रधानो यस्य स त्वमागतः तस्मिन् रामे संशयमापन्ने सति किं कर्तव्यं भवेत् न किमपीत्यर्थः । सार्धश्लोक एकान्वयी ॥ ८ ॥

रा० टी०—एवमिति । मृगवधूमिव त्रस्तामत एव बाष्पशोकसमन्वितामेवं ब्रुवाणां वैदेहीं लक्ष्मणोऽब्रवीत् । अर्धद्वयमेकान्वयी ॥ ९ ॥

गो० टी०—त्वद्रक्षणं विहाय कथं गमिष्यामीत्यत्राह—किं हीति । यो रामः प्रधानं यस्य सः यत्प्रधानः त्वमिहागतः तस्मिन् रामे संशयं प्राणसंशयमापन्ने सति इहाश्रमपदे तिष्ठन्त्या मया किं कार्यं न किमपीत्यर्थः ॥ ८–१२ ॥

१०–११ ] ति० टी०—एवं बोधिततत्त्वोऽपि मानुष्यनाट्येन लोकव्यवहारानुसाराल्लक्ष्मणोऽवददित्याह—अब्रवीदिति ॥ १० ॥ ११ ॥

१२ ] ति० टी०—न स विद्येत नश्येदेवेत्यर्थः ॥ १२ ॥

रा० टी०—तद्वचनाकारमाह—पन्नगेति । हे वैदेहि ! तव भर्ता पन्नगादिभिर्जेतुमशक्यः न संशयः अत्र संदेहो न ॥ १० ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—देवीति । हे देवि ! वासवोपमं रामं समरे यः प्रतियुध्येत सः देवादिषु न विद्येत

---

१ कुपितेति गो. पाठः । २ यदिति रा. पाठः । ३ पत्स्यसे इति गो. रा. पाठः । ४ लोभान्ममेति गो पाठः । ५ विस्रब्ध इति गो. पाठः । ६ परिप्लुतामिति गो. पाठः । ७ मानुषेति गो. पाठः ।

यो रामं प्रतियुध्येत समरे वासवोपमम् । अवध्यः समरे रामो नैवं त्वं वक्तुमर्हसि ॥ १३ ॥
न त्वामस्मिन्वने हातुमुत्सहे राघवं विना । अनिवार्यं बलं तस्य बलैर्बलवतामपि ॥ १४ ॥
त्रिभिर्लोकैः समुदितैः सेश्वरैः सामरैरपि । हृदयं निर्वृतं तेऽस्तु संतापस्त्यज्यतां तव ॥ १५ ॥
आगमिष्यति ते भर्ता शीघ्रं हत्वा मृगोत्तमम् । न स तस्य स्वरो व्यक्तं न कश्चिदपि दैवतः॥ १६ ॥
गन्धर्वनगरप्रख्या माया तस्य च रक्षसः । न्यासभूतासि वैदेहि न्यस्ता मयि महात्मना॥ १७ ॥
रामेण त्वं वरारोहे न त्वां त्यक्तुमिहोत्सहे । कृतवैराश्च कल्याणि वयमेतैर्निशाचरैः ॥ १८ ॥
खरस्य निधने देवि जनस्थानवधं प्रति । राक्षसा विविधा वाचो व्याहरन्ति महावने ॥ १९ ॥

---

अतः रामः समरे अवध्यः अतः एवं वक्तुं त्वं नार्हसि । अर्धपञ्चकमेकान्वयि ॥ ११-१३ ॥

१३ ] ति० टी०—न स विघेतेत्युक्तम्, तत्र स कस्तत्राह—यो राममिति ॥ १३ ॥

गो० टी०—अवध्य इति । एवम् उक्तप्रकारं परुषभाषणं राघवं विना स्थितां त्वामित्यन्वयः ॥ १३ ॥

१४ ] ति० टी०—बलवतामिन्द्रादीनामपि बलैस्तस्य बलमनिवार्यमधृष्यम् ॥ १४ ॥

रा० टी०—ननु तस्यातिबलवत्वेऽपि तत्साहाय्यार्थं त्वया गन्तव्यमित्यत आह—नेति । राघवं विना अस्मिन् वने हातुं त्यक्तुं त्वां नोत्सहे । अर्धं पृथक् । ननु तत्साहाय्यसिद्धिः कथं भविष्यतीत्यत आह—अनिवार्यमिति । बलवतां सैन्यसंयुक्तानां बलैः सैन्यैः समुदितैः एकीभूय कृतोद्योगैः सामरैः अमरसहितैः सेश्वरैर्ब्रह्मादित्रितयसहितैः त्रिभिर्लोकैश्च तस्य रामस्य बलम् अनिवार्यम् अतस्ते हृदयं निर्वृतं सानन्दमस्तु अतस्तव त्वया संतापस्त्यज्यताम् ॥ १४ ॥ १५ ॥

गो० टी०—अनिवार्यमिति । समुदितैः सन्नाहवद्भिः सेश्वरैः सेन्द्रैः ॥ १४ ॥

१५ ] ति० टी०—तव त्वया ॥ १५ ॥

गो० टी०—हृदयमिति । निर्वृतं निर्दुःखम् ॥ १५ ॥

१६ ] ति० टी०—स स्वरो व्यक्तं स्पष्टं तस्य रामस्य न भवति । दैवतः अशरीरदेवतासंबन्धी कश्चित्स्वर इत्यपि नेत्यर्थः । तदापि शङ्का युक्ता न त्वेवमपीत्यर्थः ॥ १६ ॥

रा० टी०—आगमिष्यतीति । ते भर्ता शीघ्रमागमिष्यति तस्योच्चारयितुः स्वरः सः शरणार्थी न कश्चित् दैवतः रामं विजिगीषुरपि न व्यक्तं स्पष्टमेतदस्माच्च ॥ १६ ॥

गो० टी०—न चेति । तस्य रामस्य नायं स्वरः अपि तु केनचिदन्येन मायया विचित्रशक्त्या कृतः । वस्तुतस्तु मारीचस्यैवेयं मायेत्याह—गन्धर्वेति । तस्य रक्षसः मृगीभूतस्य रक्षसः सा स्वरः मायापेक्षया स्त्रीत्वम् । गन्धर्वनगरप्रख्या गन्धर्वनगरतुल्या माया । यद्वा सा मृगरूपं गन्धर्वनगरं नाम मेघादावारोपितं प्रासादवनादिकं तत्कदाचिदृश्यते तद्वथा व्यामोहजनकं तथा चित्रवस्तुरूपापरव्यामोहजनिका काचिच्छक्तिर्माया सा तस्य रक्षसः मारीचस्यास्ति यया मुह्यसीत्यर्थः । 'गन्धर्वनगरं प्रोक्तमिन्द्रजालं मनीषिभिः' इत्यप्याहुः ॥ १६ ॥

१७-१८ ] ति० टी०—किं तर्हि गन्धर्वनगरप्रख्या तद्वन्मिथ्या तस्य रक्षसो मायैव वञ्चनार्थं तत्कृतोऽयं स्वर इत्यर्थः। त्वं न्यासरूपतया मयि निक्षिप्तासि, अतस्त्वां त्यक्तुं नोत्सहे इत्युत्तरेणान्वयः ॥ १७ ॥ १८ ॥

रा० टी०—ननु किमेतदित्यत आह—गन्धर्वेति । तस्य मृगाकृतेः रक्षसः गन्धर्वनगरप्रख्या मिथ्यात्वेन गन्धर्वनगरसदृशी माया एतेन मद्गमने न प्रयोजनमिति ध्वनितम्। अर्धं पृथक् । मम गमनयोग्यतापि नास्तीत्याह—न्यासेति । यतस्त्वं महात्मना रामेण मयि न्यस्ता मत्समीपे मद्रक्षात्वेन संस्थापिताऽतस्त्वं न्यासभूताऽसि अवश्यं रक्षणीयाऽसीत्यर्थः, अतः इह अस्मिन् समये त्वां त्यक्तुमहं नोत्सहे ॥ १७ ॥

गो० टी०—न्यासेति । न्यासभूताऽसि निक्षेपरूपाऽसि केन निक्षिप्तेत्यत आह—रामेण मयि न्यस्तेति ॥ १७ ॥

रा० टी०—ननु न्यासभूतात्वेऽपि भयाभावात् त्वद्गमने का क्षतिरित्यत आह—कृतेति । हे कल्याणि ! खरस्य निधने रामकर्तृकवधे सति एतैर्निशाचरैः जनस्थानवधं जनस्थानस्थोर्वरितराक्षसध्वंसं प्रति वयं कृतवैराः किंच जनस्थानवधं प्रति जनस्थानध्वंससमये खरस्य निधने सति निशाचरैः वयं कृतवैराः अत एव महावने हिंसाविहाराः राक्षसाः विविधा वाचो व्याहरन्ति अतश्चिन्तयितुं त्वत्यक्तमदवलोकनेन रामे चिन्तामुत्पादयितुं नार्हति । अर्धचतुष्टयमेकान्वयि ॥ १८ ॥ १९ ॥

गो० टी०—कृतवैरा इति । खरस्य स्वामिनो निधनात् जनस्थाने वधो यः तं प्रति वयमेतैर्निशाचरैः कृतवैराः एते अस्मासु वैरमाचरितवन्त इत्यर्थः ॥ १८ ॥

१९ ] ति० टी०—खरस्य निधने रामेण कृते सति जनस्थानवधं जनस्थानवर्तिस्वपरिकररक्षोवधं प्रतिलक्ष्य कृतवैरा इत्यन्वयः । व्याहरन्त्यस्मद्व्यामोहनार्थम्, अतस्त्वां त्यक्तुं नोत्सहे ॥ १९ ॥

---

१ समुद्युक्तैरिति गो. रा. पाठः । २ अयमिति गो. पाठः । ३ चेति गो. पाठः । ४ मायया केनचित्कृत इति गो. पाठः ।५ सा तस्येति गो. पाठः । ६ वैदेहीति गो. पाठः । ७ निधनाद्देवीति गो. पाठः । ८ विसृजन्तीति गो. पाठः ।

हिंसाविहारा वैदेहि न चिन्तयितुमर्हसि । लक्ष्मणेनैवमुक्ता तु क्रुद्धा संरक्तलोचना ॥ २० ॥
अब्रवीत्परुषं वाक्यं लक्ष्मणं सत्यवादिनम् । अनार्यकरुणारम्भ नृशंस कुलपांसन ॥ २१ ॥
अहं तव प्रियं मन्ये रामस्य व्यसनं महत् । रामस्य व्यसनं दृष्ट्वा तेनैतानि प्रभाषसे ॥ २२ ॥
नैवं चित्रं सपत्नेषु पापं लक्ष्मण यद्भवेत् । त्वद्विधेषु नृशंसेषु नित्यं प्रच्छन्नचारिषु ॥ २३ ॥
सुदुष्टस्त्वं वने राममेकमेकोऽनुगच्छसि । मम हेतोः प्रतिच्छन्नः प्रयुक्तो भरतेन वा ॥ २४ ॥
तन्न सिध्यति सौमित्रे तवापि भरतस्य वा । कथमिन्दीवरश्यामं रामं पद्मनिभेक्षणम् ॥ २५ ॥
उपसंश्रित्य भर्तारं कामयेयं पृथग्जनम् । समक्षं तव सौमित्रे प्राणांस्त्यक्ष्याम्यसंशयम् ॥ २६ ॥
रामं विना क्षणमपि नैव जीवामि भूतले । इत्युक्तः परुषं वाक्यं सीतया रोमहर्षणम् ॥ २७ ॥
अब्रवील्लक्ष्मणः सीतां प्राञ्जलिः स जितेन्द्रियः । उत्तरं नोत्सहे वक्तुं दैवतं भवती मम ॥ २८ ॥

गो० टी०—किं तत इत्यत्राह—राक्षसा इति । वाचो विसृजन्ति अस्मन्मोहनार्थमिति शेषः ॥ १९ ॥ २० ॥

२० ] ति० टी०—हिंसैव साधुजनपीडैव विहारो येषां ते तथा । इदं पूर्वान्वयि । अतस्त्वं रामस्य क्लेशं न चिन्तयितुमर्हसि ॥ २० ॥

रा० टी०—लक्ष्मणेनेति । एवं गमनाभावबोधकवाक्येन उक्ता अत एव क्रुद्धा स्वीकृतकोपा अत एव संरक्तलोचना सीता सत्यवादिनं लक्ष्मणं परुषं लक्ष्मणप्रेषणार्थं रूक्षं वाक्यमब्रवीत् ॥ २० ॥

२१ ] ति० टी०—अनार्यकरुणारम्भ, अनार्यया कुत्सितया करुणया रामव्यसनेऽपि मद्विषयारम्भो मद्रक्षणारम्भो यस्य तत्संबोधनम् ॥ २१ ॥

२२] ति० टी०—ते रामव्यसनप्रियत्वेन । अत्र रामव्यसनं रामस्य प्रतिज्ञातार्थस्य सर्वरक्षोवधरूपस्य हानिस्तत्प्रियत्वेनेति एवं तात्पर्यम् । अत एषा मद्विषया करुणानार्या कुत्सिता । प्रधानकार्यविरोधित्वादिति बोध्यम् ॥ २२ ॥

रा० टी०—तद्वचनाकारमाह—अनार्येति । अनार्यकरुणारम्भ ! अनार्येषु क्षुद्रराक्षसेषु करुणाया आरम्भो यस्य तत्सदृशः तत्संबोधनम् अत एव नृशंसकुलपां राक्षससमूहपालकानां स नो रचयितेव तत्संबोधनम् । स न रामस्य महत् व्यसनं तव प्रियं त्वत्प्रीतिविषयीभूतं मन्ये तेन हेतुना रामस्य व्यसनं सहायाभावप्रयुक्तदुःखाभासं दृष्ट्वा ज्ञात्वा एतानि गमनाभावबोधकवचनानि प्रभाषसे आचारकिपा सदृशलाभः ॥ २१ ॥ २२ ॥

गो० टी०—अनार्येति । अनार्य दुःशील अकरुणारम्भ दयाप्रसक्तिरहित । तत्र युक्तिमाह—रामस्येति । तेन अनार्यत्वादिकारणेन रामस्य व्यसनं दृष्ट्वा एतानि पूर्वोक्तवचनानि प्रभाषसे ॥ २१ ॥ २२ ॥

२३ ] ति० टी०—अथ पुनर्नैवदाह—नैवेत्यादि । सपत्नेषु ज्ञातित्वात् ॥ २३ ॥

रा० टी०—नन्वतिप्रतापवतो रामस्य कथं व्यसनसंभावनेत्यत आह—नेति । त्वद्विधेषु अस्मद्वारणाभिन्नविविधधारणावत्सु अत एव नृशंसेषु क्रूरेषु अत एव नित्यं प्रच्छन्नचारिषु अदृश्येयाचरणविशिष्टेषु सपत्नेषु यत् पापं पापकर्म भवेत् तत् नैव चित्रम् एतेन राक्षसानां विश्वासो न कार्य इति ध्वनितम् । त्वच्छब्दोऽन्यपर्यायः ॥ २३ ॥

गो० टी०—नैतदिति । प्रच्छन्नचारिषु त्वद्विधेषु सपत्नेषु पापं भवेदिति यत् एतन्न चित्रं नृशंसत्वादिकमत्र हेतुत्वेनोपात्तम् ॥ २३ ॥

२४ ] ति० टी०—सुदुष्टः सुतरां दुष्टहृदयः ॥ २४ ॥

रा० टी०—सुदुष्ट इति । सुदुष्टः शोभनाः दुष्टाः यस्मात् स दुष्टध्वंसक इत्यर्थः । अत एव एकं राममेक एवानुगच्छसि अत एव हेतोः रामगमनकारणीभूतस्य मृगस्य भरतेन शोभानिरीक्षणरतिमता प्रयुक्तः अत्र संस्थापितस्त्वं यदि प्रतिच्छन्नः राक्षसभिया निलीनः न गच्छसीत्यर्थः, तर्हि हे सौमित्रे ! मम तव च भरतस्य मृगशोभानिरीक्षणरतस्य रामस्य च तत् इहागमनप्रयोजनं न सिध्यति रामस्य प्रयोजनं मुनिरिपुध्वंसः आवयोः प्रयोजनं तत्सेवा तयोः सिद्धिर्न स्यादित्यर्थः । एतेन रामादर्शनासहिष्णुत्वं सीतायाः व्यञ्जितम् एको वा यद्यर्थे, अपरो हेतौ । सार्धश्लोक एकान्वयी ॥ २४ ॥

गो० टी०—सुदुष्ट इति । प्रयुक्तः प्रेषितः ॥ २४ ॥

२५ ] ति० टी०—तन्न सिध्यति मत्परिग्रहरूपम् ॥ २५ ॥

२६–२८ ] ति० टी०—उपसंश्रित्योपयुज्य ॥ २६–२८ ॥

रा० टी०—नतु रक्षकरहितां त्वां विहाय गन्तुमशक्यतया मत्कर्तृकगमनस्यावश्यकतया च युगपत् द्वयोर्विरोधेन त्वामयोध्यां शीघ्रं प्रापय्य रामसन्निधावहं गमिष्यामीत्यत आह—कथमिति । इन्दीवरश्यामम् इन्दीवरश्यामतासदृशश्यामताविशिष्टं पद्मनिभेक्षणं पद्मनिभे ईक्षणे यस्य तं जनं साक्षात् ब्रह्मादिद्वारा च सर्वेषां जनयितारं भर्तारं रामम् उपसंश्रित्य

१ सेति गो. पाठः । २ अनार्याकरुणारम्भेति गो. पाठः । ३ एतदिति गो. पाठः । ४ तव वेति गो. पाठः । ५ पद्मपत्रनिभेक्षणमिति गो. पाठः । ६ त्यक्ष्ये न संशय इति गो. पाठः । ७ नहीति गो. पाठः । ८ विजितेन्द्रिय इति गो. पाठः ।

वाक्यमप्रतिरूपं तु न चित्रं स्त्रीषु मैथिलि । स्वभावस्त्वेष नारीणामे[1]षु लोकेषु दृश्यते ॥ २९ ॥
विमुक्तधर्माश्चपलास्[2]तीक्ष्णा भेदकराः स्त्रियः । न सहे हीदृशं वाक्यं वैदेहि जनकात्मजे ॥ ३० ॥
श्रोत्रयोरुभयोर्म[3]ध्ये तप्तनाराचसंनिभम् । उपशृण्वन्तु मे सर्वे सा[4]क्षिणो हि वनेचराः ॥ ३१ ॥
न्यायवादी यथा वा[5]क्यमुक्तोऽहं परुषं त्वया । धिक्त्वामद्य [6]विनश्यन्तीं यन्मामेवं विशङ्कसे॥ ३२ ॥
स्त्री[7]त्वाद्दुष्टस्वभावेन गुरुवाक्ये व्यवस्थितम् । [8]गच्छामि यत्र काकुत्स्थः स्वस्ति तेऽस्तु वरानने ३३ ॥

---

वनं सहागत्य पृथक् तं विना कां सुखस्वरूपामप्ययोध्यां कथमयेयं रामं विहाय गन्तुं न समर्थेत्यर्थः, अतः हे सौमित्रे ! तव समक्षं प्राणांस्त्यक्ष्यामि असंशयम् अत्र संशयो न । तत्र हेतुः–रामं विना भूतले क्वचिदपि स्थले क्षणमपि नैव जीवामि । अर्धचतुष्टयमेकान्वयि ॥ २५ ॥ २६ ॥

गो० टी०–तन्न सिध्यतीति । पृथग्जनं क्षुद्रपुरुषम् ॥ २५ ॥ २६ ॥

रा० टी०–इतीति । रोमहर्षणं परुषं वाक्यं सीतया इत्यनेन प्रकारेण उक्तः प्राञ्जलिर्जितेन्द्रियः सः लक्ष्मणः अब्रवीत् । तद्वचनाकारमाह–यतो भवती मम दैवतं देवता अतः उत्तरं भवद्वाक्यसदृशरूक्षवाक्यं वक्तुं नोत्सहे ॥ २७ ॥ २८ ॥

गो० टी०–इत्युक्तः पुरुषं वाक्यमिति । "अप्रधाने दुहादीनाम्" इति कर्मण्यप्रधाने द्वितीया । सीतापारुष्येण प्रतिपारुष्यादिराहित्यं सूचयति–विजितेन्द्रिय इति ॥ २७ ॥

गो० टी०–उत्तरमिति । अप्रतिरूपम् अत्यन्तानुचितं विमुक्तधर्माः परित्यक्तविनयादिधर्माः चपलाः चञ्चलचित्ताः तीक्ष्णाः क्रूरहृदयाः भेदकराः परस्परस्नेहकार्यविच्छेदकराः ॥ २८–३० ॥

२९ ] ति० टी०–अप्रतिरूपमत्यन्तानुचितम् ॥ २९ ॥

३० ] ति० टी०–तीक्ष्णाः क्रूराः भेदकराः । 'क्रूरो हेतुः' इति टः । सुतभ्रातृपित्रादेरिति शेषः ॥ ३० ॥

रा० टी०–वाक्यमिति । हे मैथिलि! एषु प्राकृतेषु लोकेषु विद्यमानानां नारीणामेषः रूक्षवदनवान् स्वभावो दृश्यते अत एव स्त्रियः प्राकृतनार्यः विमुक्तधर्माः विमुक्तः त्यक्तो धर्मः पारतन्त्र्यं याभिस्ताः अत एव चपलाः अत एव तीक्ष्ण उग्रो यो भेदः तस्य कराः संपादिका भवन्तीति शेषः, अत एव स्त्रीषु प्राकृतनारीषु अप्रतिरूपम् असदृशं वाक्यं चित्रं न, एतेन प्राकृतविलक्षणायां भवत्यां भ्रातरि प्रीतिस्ते नास्तीत्यादिवाक्यमयुक्तमिति व्यञ्जितम् । अत एव हे वैदेहि ! हे जनकात्मजे ! उभयोः श्रोत्रयोः तप्तनाराचसंनिभम् ईदृशं भवदुक्तसदृशं वाक्यम् अन्योच्चारितवचनं न सहे भवत्या उक्तं तु सर्वं सहे इति तात्पर्यम् अत एव उत्तरं नोत्सहे वक्तुं दैवतं भवती ममेत्यनेन न विरोधः । सार्धश्लोकद्वयमेकान्वयि ॥ २९ ॥ ३० ॥

३१ ] ति० टी०–वनेचराः देवा इति शेषः ॥ ३१ ॥

रा० टी०–उपेति । न्यायवादी त्वद्रक्षायां रामेण नियुक्तः त्वां विहाय न गमिष्यामीत्याद्युचितवक्ताहं यथा येन प्रकारेण परुषं भ्रातरि तव स्नेहो नास्तीत्यादिरूक्षं त्वयोक्तः तथा साक्षिणः सन्तः सर्वे वनेचराः वनदेवाः उपशृण्वन्तु, एतेन रामसंनिधौ मदुक्तित्वदुक्त्योरुत्तमाधमत्वनिर्णयो भवितेति ध्वनितम् । एतेन लक्ष्मणस्य रामवचनविस्मृतिरिति ध्वनितम् ॥ ३१ ॥

गो० टी०–उपश्रृण्वन्त्विति । मे साक्षीभूताः वनेचरा न्यायवादी अहं त्वया अन्यायं परुषं यथा उक्तः उपश्रृण्वन्तु ॥ ३१ ॥

३२ ] ति० टी०–यत्परुषमुक्तस्तदुपशृण्वन्त्विति योजना यद्यस्मान्मामेवं वागगोचरदुर्भाववन्तं विशङ्कसे तत एव दोषादद्य विनश्यन्तीमासन्नविनाशां विपरीतमतिं त्वा त्वां धिगित्यर्थः । अत्र नशेर्नाशेच्छार्थः तेन राक्षसकुलस्य नाशेच्छावतीं त्वां धिक् । यतो यदर्थं मामेवं विशङ्कसे वदसि इति गूढम् । यद्वा विनश्यन्तीं शक्तितया प्रतिक्षणं परिणामरूपेण विनश्यन्तीं त्वां धिक् । यन्मां त्वदस्पृष्टं त्वदाक्रमणायोग्यमेवं विशङ्कसे । त्वदाक्रान्तेषु किलैवं संभावनेति ॥ ३२ ॥

रा० टी०–ननु प्रकृतलोकोक्तिवदाशङ्कामात्रमूलिकेयं ममोक्तिर्न तात्विकीति रामसमीपनिर्णयानर्हेत्यत आह–धिगिति । यत् यतः प्राकृतव्युक्तिहेतोः यत् प्राकृतव्युक्तिमाश्रित्येत्यर्थः मामेवं विशङ्कसे तां विनश्यन्तीं प्रतिक्षणं विध्वंसं प्राप्नुवतीं त्वां प्राकृतविलक्षणभिन्नां नारीं धिक् तदनुसारेण भवतीभिर्न वर्तितव्यमित्यर्थः ॥ ३२ ॥

गो० टी०–धिक्त्वामिति । उभसर्वतसोरित्यादिना धिग्योगे द्वितीया ॥ ३२–३५ ॥

३३ ] ति० टी०–पुनर्वैषानुसारेणाह—स्त्रीत्वादिति । स्त्रीत्वाद्दुष्टस्वभावेन क्रौर्येण युता त्वं गुरुवाक्ये ज्येष्ठनियोगे स्थितं मामेवं ब्रूषे इति शेषः । अतो यत्र काकुत्स्थस्तत्र गच्छामि गमिष्ये ते स्वस्त्यस्तु । सर्वत इति शेषः ॥ ३३ ॥

रा० टी०–स्त्रीत्वादिति । गुरुवाक्यं रामनियोगे व्यवस्थितम् अत एव दुष्टस्वभावेन व्यवस्थितं मां स्त्रीत्वात् प्राकृतस्त्रीत्वमनुसृत्य यदुक्तं तदनुचितमिति शेषः । अर्धं पृथक् । विविधोक्त्या प्रार्थिताया अपि गमननिवृत्तिबोधकवाक्यानुक्त्या-

---

१ एवमिति गो. पाठः । २ तीक्ष्णभेदकरा इति रा. पाठः । ३ मेऽद्येति गो. पाठः । ४ साक्षिभूता इति गो. पाठः । ५ न्यायमिति गो. पाठः । ६ प्रणश्य त्वमिति गो. पाठः । ७ स्त्रीत्वं दुष्टमिति गो. पाठः । ८ गमिष्य इति गो. पाठः ।

रक्षन्तु त्वां विशालाक्षि समग्रा वनदेवताः । निमित्तानि हि घोराणि यानि प्रादुर्भवन्ति मे ॥
अपि त्वां सह रामेण पश्येयं पुनरागतः ॥ ३४ ॥
लक्ष्मणेनैवमुक्ता तु रुदती[1] जनकात्मजा । प्रत्युवाच ततो वाक्यं तीव्रबाष्पपरिप्लुता[2] ॥ ३५ ॥
गोदावरीं प्रवेक्ष्यामि हीना[3] रामेण लक्ष्मण । आबन्धिष्येऽथवा त्यक्ष्ये विषमे देहमात्मनः ॥ ३६ ॥
पिबामि वा[4] विषं तीक्ष्णं प्रवेक्ष्यामि हुताशनम् । न त्वहं राघवादन्यं कदापि[5] पुरुषं स्पृशे ॥ ३७ ॥
इति लक्ष्मणमाश्रुत्य[6] सीता शोकसमन्विता[7] । पाणिभ्यां रुदती दुःखादुदरं प्रजघान ह ॥ ३८ ॥

---

गमनाभिप्रायमालक्ष्याह-गच्छामीति । यत्र काकुत्स्थो रामस्तत्र गच्छामि ते स्वस्त्यस्तु ॥ ३३ ॥

३४] ति० टी०-यानि घोराणि निमित्तानि मे प्रादुर्भवन्ति तस्त्वत्पीडां शङ्कमानोऽहं रामेण सह पुनरागतस्त्वां पश्येयम्। एतदपि संभवेदित्यर्थः ॥ ३४ ॥

रा० टी०-रक्षन्त्विति । घोराणि अनीक्षितसाधकत्वेन क्रूराणि यानि निमित्तानि दुःशकुनानि मे प्रादुर्भवन्ति तेभ्यः समग्रा वनदेवताः त्वां रक्षन्तु अत एव रामेण सहागतोऽहं त्वां पुनः पश्येयम् । सार्धश्लोक एकान्वयी ॥ ३४ ॥

३५ ] ति० टी०-किमनेन सामान्यपुरुषप्रसङ्गः शङ्क्य इति मन्यमाना स्वदार्ढ्यं प्रकाशयति—लक्ष्मणेनेति ॥ ३५ ॥

रा० टी०-लक्ष्मणेनेति । रुदन्ती रामदर्शनाभावहेतुकरोदनं कुर्वती अत एव तीव्रबाष्पपरिप्लुता लक्ष्मणेनैवमुक्ता जनकात्मजा वाक्यं प्रत्युवाच ॥ ३५ ॥

३६ ] ति० टी०-आबन्धिष्ये । रज्ज्वा कण्ठमिति शेषः । विषमे भृग्वादिविषमे स्थित्वा । ततः प्रपातेनेति शेषः ॥ ३६ ॥

रा० टी०-तद्वचनाकारमाह-गोदावरीमिति । हे लक्ष्मण! रामेण हीनाहं गोदावरीं प्रवेक्ष्यामि तद्द्वारा साकेतं गमिष्यामीत्यर्थः, आत्मनो देहमाबन्धिष्ये अथवा विषमे त्यक्ष्ये ॥ ३६ ॥

गो० टी०-गोदावरीमित्यादि । आबन्धिष्ये उद्बन्धनं करिष्यामि विषमे भृग्वादिविषमस्थले पातेनेति शेषः । स्पृशे स्पृशामि ॥ ३६ ॥ ३७ ॥

३७ ] ति० टी०-सर्वथा कर्तव्यमर्थमाह—प्रवेक्ष्यामि हुताशनम् । अत एवात्र वाशब्दानुक्तिः । अनेन साक्षाद्रावणगृहं न गमिष्यामि, किं त्वहं स्वरूपेणाग्नौ स्थित्वा माययैव तद्धस्तं गमिष्यामीति ध्वनितम् । तदुक्तं कूर्मपुराणे—'रामस्य सुभगां भार्यां रावणो राक्षसेश्वरः । सीतां विशालनयनां चकमे कालनोदितः ॥ गृहीत्वा मायया वेषं चरन्तीं विजने वने । समाहर्तुं मनश्चक्रे तापसः किल कामिनीम् ॥ विज्ञाय सा च तद्भावं स्मृत्वा दाशरथिं पतिम् । 'तद्भावं लङ्कायामेव हृदि कृतम् तापसो भूत्वा हरिष्यामीति भावमित्यर्थः। 'जगाम शरणं वह्निमावसथ्यं शुचिस्मिता ॥ प्रपद्ये पावकं देवं साक्षिणं विश्वतोमुखम् । आत्मानं दीप्तवपुषं सर्वभूतहृदि स्थितम् ॥' इत्याद्यष्टश्लोकानुक्त्वा 'इति वह्न्यष्टकं जप्त्वा रामपत्नी यशस्विनी । ध्यायन्ती मनसा तस्थौ राममुन्मीलितेक्षणा । अथावसथ्याद्भगवान्हव्यवाहो महेश्वरः । आविरासीत्सुदीप्तात्मा तेजसा निर्दहन्निव ॥ सृष्ट्वा मायामयीं सीतां स रावणवधेच्छया । सीतामादाय रामेष्टां पावकोऽन्तरधीयत ॥ कृत्वा तु रावणवधं रामो लक्ष्मणसंयुतः । समादायाभवत्सीतां शङ्काकुलितमानसः ॥ सा प्रत्ययाय भूतानां सीता मायामयी पुनः । विवेश पावकं दीप्तं ददाह ज्वलनोऽपि ताम् ॥ दग्ध्वा मायामयीं सीतां भगवानुग्रदीधितिः । रामायादर्शयत्सीतां पावकोऽसौ सुरप्रियः ॥ एतत्पतिव्रतानां वै माहात्म्यं कथितं मया । स्त्रीणां सर्वाधिशमनं प्रायश्चित्तमिदं स्मृतम् ॥' इत्युत्तरखण्डे चतुस्त्रिंशेऽध्याये अनेन स्त्रीणां जातिभ्रंशकरापदि अग्निप्रवेशो न दोषाय सर्वप्रायश्चित्तं चेति ध्वनितम् । कदाप्यन्यं पुरुषं न स्पृशे इत्यन्वयः । अत्र पत्यसांनिध्य इति शेषः । तेन विराधस्पर्शेऽपि न हानिः तदा पतिसंनिधानात् । किं च साक्षाद्भगवतीस्पर्शे रावणो विराधवत्तत्क्षणादेव म्रियेत, एवं च सर्वराक्षसवधो न स्यादिति मायासीतारचना । किं चास्य कार्यं हनुमत्पुच्छाग्निना लङ्कादाहः । अन्यथा रावणवशेन लोकपालाग्निना कथं तन्नगरदाहः स्यात् । एतच्छक्तिप्रवेशे न तु तत्कार्यसामर्थ्यं तस्येति मन्तव्यम् । किंचैवं प्रतिज्ञाय रावणस्पर्शे जगन्मातुः प्रतिज्ञाभङ्गः स्यात् ॥ ३७ ॥

रा० टी०-पिबामीति । हुताशनं वह्निमपुरुषपुरुषाभासं न स्पृशे एतेन देहपीडादिसत्त्वे रामदर्शनाभावजनितदुःखस्याल्पत्वं स्यादिति हेतुर्व्यक्तः ॥ ३७ ॥

३८ ] ति० टी०-आश्रुत्य लक्ष्मणं प्रति प्रतिज्ञाय दुःखात्सकलकरणतापादिव । उदरं प्रजघानेत्यनेन सर्वरक्षोमरणं विना न मे उदरपूर्तिरिति सूचितम् । अन्यथा शोके वक्ष-आधातस्यैव स्त्रीषु प्रसिद्धया संगतिः स्यात् ॥ ३८ ॥

रा० टी०-इतीति । शोकसमन्विता सीता उदरं प्रजघान ॥ ३८ ॥

गो० टी०-इतीति । आक्रुश्य विनिन्द्य ॥ ३८ ॥

---

१ रुदन्तीति रा. पाठः । २ तीव्रमिति गो. पाठः । ३ विनेति गो. पाठः । ४ अहमिति गो. पाठः । ५ पदापीति गो. पाठः । ६ आक्रुश्येति गो. पाठः । ७ दुःखेति गो. पाठः । ८ अत्र नुमः संभवो नास्तीति भाति ।

तमार्तरूपां विमना रुदन्तीं सौमित्रिरालोक्य विशालनेत्राम् ।
आश्वासयामास न चैव भर्तुस्तं भ्रातरं किंचिदुवाच सीता ॥ ३९ ॥
ततस्तु सीतामभिवाद्य लक्ष्मणः कृताञ्जलिः किंचिदभिप्रणम्य ।
अवेक्षमाणो बहुशः स मैथिलीं जगाम रामस्य समीपमात्मवान् ॥ ४० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

## षट्चत्वारिंशः सर्गः ।

लक्ष्मणगमनेन लब्धावकाशो धृतकाषायवासा रावणः सीतान्तिकं प्राप । सौन्दर्यं प्रशस्य वनागमनकारणं पृच्छन्तमेनमतिथिं मन्वाना सा पाद्यादिभिरभ्यर्चयति ।

तया परुषमुक्तस्तु कुपितो राघवानुजः । स विकाङ्क्षन्भृशं रामं प्रतस्थे न चिरादिव ॥ १ ॥
तदासाद्य दशग्रीवः क्षिप्रमन्तरमास्थितः । अभिचक्राम वैदेहीं परिव्राजकरूपधृक् ॥ २ ॥

---

३९ ] ति० टी०—विमनाः सौमित्रिस्तां रुदन्तीमार्तस्येव कृतरूपामालोक्य लोकानुसारत आश्वासयामास । सा च तं न किंचिदुवाच । आश्वासनव्याजेन गमनविलम्बं करोतीति कोपेनेति शेषः ॥ ३९ ॥

रा० टी०—तामिति । रुदन्तीं तां सीतां लक्ष्मणः आश्वासयामास सीता तु भर्तुर्भ्रातरं लक्ष्मणं किंचिन्नैवोवाच ॥ ३९ ॥

गो० टी०—तामिति । भर्तुर्भ्रातरं न किञ्चिदुवाचेति आश्वासनव्याजेन गमनविलम्बं करोतीति कोपेनेति शेषः॥३९॥

४० ] ति० टी०—अभिवाद्य मनसेति शेषः । किंचिदभिप्रणम्येति कायिकः स उक्तः । अत्र किंचिदित्यनेन कोपः सूचितः । यद्यपि कोपेऽपि यथोचितव्यवहारत्यागो लक्ष्मणस्यानुचितस्तथापि प्रतिज्ञोत्तरं तथैव स्वच्छायां संदर्श्य तस्या अग्निप्रवेशोद्यमेन छायाबुद्ध्या किंचित्प्राञ्जलित्वं किंचिदेव नमनमित्यनेन सूचितम् । कथमेनां रामेण विना त्यक्ष्यामीति बहुशोऽवेक्षमाणोऽग्निं प्रविष्टा न वेति च वीक्षमाणः ॥ ४० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

रा० टी०—तत इति । ततः आश्वासनानन्तरम् अभिवाद्य अभिवादनोचितशब्दमुच्चार्य अभिप्रणम्य प्रणामाद्याङ्गानि संनमय्य बहुशो बहुवारं मैथिलीं किंचिदवेक्ष्यमाणः कृताञ्जलिरात्मवान् लक्ष्मणः रामस्य समीपमाजगाम ॥ ४० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

गो० टी०—ततस्त्विति । किंचिदिति कोपमिश्रत्वात् किंचित्प्रणामः । बहुशोऽन्वीक्षमाण इति कथमेनामेकाकिनीं त्यक्त्वा गमिष्यामीत्यनुशयेन बहुशोऽन्वीक्षणम् । आत्मवान् धैर्यवान् ॥ ४० ॥

अस्मिन् सर्गे सार्धचत्वारिंशच्छ्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

१ ] ति० टी०—न चिरादिव । शीघ्रमेवेत्यर्थः । विकाङ्क्षन्विशेषेण काङ्क्षमाणस्तत्सविधगमनमिच्छन्नित्यर्थः । काङ्क्षिः शङ्कायामपि । तेन रामं विरुद्धं शङ्कमानः शीघ्रमितोऽनपसरणे कार्यनाशाद्रामोऽपि विरुद्धः स्यादिति शङ्कमानः शीघ्रं जगामेति व्यङ्ग्यम् । अत एव व्यवहितपूर्वसर्गान्ते मारीचस्य तथाशब्दोत्तरं सीताविषयां महतीं चिन्तामुक्त्वा ततः पुनरपि मांसार्थमितरमृगवधप्रवृत्तिरुक्ता सा विलम्बायैव ॥ १ ॥

रा० टी०—लक्ष्मणवृत्तान्तमाह—तयेत्यादिभिः । तया सीतया परुषमुक्तः अत एव कुपितः राघवानुजः स लक्ष्मणः रामं रामदर्शनं भृशमत्यन्तं विकाङ्क्षन् इच्छन्सन् न चिरादिव शीघ्रमेव प्रतस्थे ॥ १ ॥

गो० टी०—अथ सीतायाः लक्ष्मणविषयपरुषभाषणफलं दर्शयत्येकादशभिः सर्गैः । रावणप्रलोभनमाह षट्चत्वारिंशे—तया परुषमित्यादि । विकाङ्क्षन् अनिच्छन्नेव राममुद्दिश्य प्रतस्थे न चिरादिव अविलम्बितमेव इवशब्दो वाक्यालङ्कार इति वा, यद्वा न चिरादिव सीतात्यागासहिष्णुतया पादौ पश्चादाकर्षतः रामप्राप्तित्वरा तु पुरतः कर्षतीतीवशब्दस्य भावः॥ १ ॥

२ ] ति० टी०—तदा लक्ष्मणस्यापगमेऽन्तरं रामलक्ष्मणयोरपसरणेनावकाशमासाद्य प्राप्य ॥ २ ॥

रा० टी०—तदेति । तदा लक्ष्मणगमनानन्तरकाले अन्तरं स्वगमनयोग्यावकाशमासाद्य प्राप्य आस्थितः सीतापहरण-

---

१ चेति रा. पाठः । २ अन्वीक्षेति गो. पाठः । ३ चेति गो. पाठः । ४ धृदिति गो. पाठः ।

श्लक्ष्णकाषायसंवीतः शिखी छत्री उपानही । वामे चांसेऽवसज्याथ शुभे यष्टिकमण्डलू ॥ ३ ॥
परिव्राजकरूपेण वैदेहीमन्ववर्तत । तामाससादातिबलो भ्रातृभ्यां रहितां वने ॥ ४ ॥
रहितां सूर्यचन्द्राभ्यां संध्यामिव महत्तमः । तामपश्यत्ततो बालां राजपुत्रीं यशस्विनीम् ॥ ५ ॥
रोहिणीं शशिना हीनां ग्रहवद्भृशदारुणः । तमुग्रं पापकर्माणं जनस्थानगता द्रुमाः ॥ ६ ॥
संदृश्य न प्रकम्पन्ते न प्रवाति च मारुतः । शीघ्रस्रोताश्च तं दृष्ट्वा वीक्षन्तं रक्तलोचनम् ॥ ७ ॥
स्तिमितं गन्तुमारेभे भयाद्गोदावरी नदी । रामस्य त्वन्तरं प्रेप्सुर्दशग्रीवस्तदन्तरे ॥ ८ ॥
उपतस्थे च वैदेहीं भिक्षुरूपेण रावणः । अभव्यो भव्यरूपेण भर्तारमनुशोचतीम् ॥ ९ ॥

विषयक आग्रहवान् अत एव परिव्राजकरूपधृक् दशग्रीवो रावणः वैदेहीमभिचक्राम ॥ २ ॥

गो० टी०—तदिति । आस्थितः अवकाशं प्रतीक्षमाणः स्थितो दशग्रीवः तदेव अन्तरम् अवकाशम् आसाद्य वैदेहीम् अभिचक्राम आभिमुख्येनाजगाम परिव्राजको भिक्षुः तस्य रूपं लिङ्गं धारयतीति परिव्राजकरूपधृत् ॥ २ ॥

३-५ ] ति० टी०—शिखी उपानहीति व्रीह्यादित्वादिनिः । अनेन त्रिदण्डिसंन्यासिविशेषः सूचितः। तदुक्तं भारते—'रावणस्तु यतिर्भूत्वा मुण्डः कुण्डी त्रिदण्डधृक्' इति । तत्र मुण्ड इत्यनेन जटित्वव्यावृत्तिः । कुण्डं कमण्डलुः । यष्टिस्त्रिदण्डात्मिका । भ्रातृभ्यां परस्परभ्रातृभ्यां रामलक्ष्मणाभ्याम्॥३-५॥

रा० टी०—परिव्राजकचिह्नानि वर्णयन्नाह—श्लक्ष्णेति । श्लक्ष्णकाषायसंवीतः श्लक्ष्णः स्वच्छः काषायः कषायरक्तः पटः तेन संवीतः आच्छादितो रावणः शिखादिमान् स्थलद्वयेऽपि व्रीह्यादित्वादिनिः छत्रीत्यत्र संहिताया अविवक्षया यणभावः शुभे स्वच्छे यष्टिकमण्डलू वामेंऽसे अवसज्य संधार्य परिव्राजकरूपेण त्रिदण्डिसंन्यासरूपेण वैदेहीम् अन्ववर्तत तदपहरणविषयकविचारमकरोत् अत्र यष्टिशब्देन त्रिदण्डग्रहणं तस्यैव शिख्युचितत्वात् । सार्धश्लोक एकान्वयी ॥ ३ ॥

गो० टी०—परिव्राजकलिङ्गान्याह—श्लक्ष्णेति । शिखी अदन्तत्वाभावेऽपि व्रीह्यादित्वादिनिः । छत्रीत्यत्र वाक्यसंधेरनित्यत्वेन यणभावः । उपानहीत्यत्र इनिरार्षः यष्टिः त्रिदण्डं शिखीत्यनेन साहचर्यात् अत्र धर्मप्रधानजनककुलनन्दिन्याः सीताया विश्वासाय धृतत्वादित्थमेव यतिलिङ्गमिति दर्शितम् । तथाहाङ्गिराः—'यतेर्लिङ्गं प्रवक्ष्यामि येनासौ लक्ष्यते यतिः । ब्रह्मसूत्रं त्रिदण्डं च वस्त्रं जन्तुनिवारणम् ॥ शिक्यं पात्रं बृसी चैव कौपीनं कटिवेष्टनम् । तस्यैतद्ध्रियते लिङ्गं स यतिर्नेतरो यतिः' इति परिव्राजकरूपेणेत्यनेन ब्रह्मसूत्रादिकमुक्तं समुपागमदिति प्रतिपाद्यार्थभेदात् पुनः पुनः क्रियापदप्रयोगः ॥ ३ ॥

रा० टी०—तामिति । अतिबलो रावणः भ्रातृभ्यां रामलक्ष्मणाभ्यां रहितां तां सीतां चन्द्रसूर्याभ्यां रहितां संध्यां महत्तम इव आससाद तदपहरणविषयकनिश्चयं चकार ॥ ४ ॥

गो० टी०—तामिति । भ्रातृभ्यां रामलक्ष्मणाभ्यां महत्तम इत्यभूतोपमा सन्ध्यायां महतस्तमसोऽसंभवात् ॥ ४ ॥

रा० टी०—तामिति । ततः वैदेहीसमीपगमनानन्तरं बालां राजपुत्रीं जनकराजतनयां यशस्विनीं सीतां भृशदारुणो रावणः शशिना हीनां रोहिणीं ग्रहवत् केतुवत् अपश्यत् ॥ ५ ॥

गो० टी०—तामिति । ग्रहः अङ्गारकः शनैश्चरो वा स रोहिणीमिव भृशदारुणो रावणस्तामपश्यत् यथा रोहिण्याः क्रूरग्रहवीक्षणं लोकानर्थकरं तथा रावणस्य सीतावीक्षणमिति भावः ॥ ५ ॥

६ ] ति० टी०—ग्रहवत्केतुवत् तं संदृश्येत्यन्वयः ॥ ६ ॥

रा० टी०—तमिति । उग्रं क्रूरं तत्र हेतुः पापकर्माणं क्रूरकर्मणां कारकं तं रावणं संदृश्य जनस्थानगताः द्रुमाः न प्रकम्पन्ते तद्भिया न चलन्तीत्यर्थः, मारुतश्च न प्रवाति ॥ ६ ॥

गो० टी०—दारुणत्वं प्रकटयति—तमुग्रमिति ॥ ६ ॥

७ ] ति० टी०—शीघ्रस्रोता शीघ्रप्रवाहाऽपि नदी तं वीक्षन्तं वीक्षमाणं दृष्ट्वा तद्भयात्स्तिमितं मन्दं गन्तुमारेभे इत्यन्वयः॥७॥

रा० टी०—शीघ्रेति । शीघ्रस्रोताः झटिति प्रवाहविशिष्टा गोदावरीनदी वीक्षन्तं स्वामवलोकयन्तं तं रावणं दृष्ट्वा तद्भयात् स्तिमितं मन्दं यथा स्यात्तथा गन्तुमारेभे ॥ ७ ॥

गो० टी०—शीघ्रस्रोता इति । शीघ्रस्रोताः शीघ्रप्रवाहाः वीक्षन्तं वीक्षमाणं स्तिमितमिति क्रियाविशेषणम् ॥ ७ ॥

८ ] ति० टी०—अन्तरमपकारयोग्यं छिद्रम् । तदन्तरे उभयरहितदेशकाले ॥ ८ ॥

रा० टी०—रामस्येति । रामस्य अन्तरं विच्छेदं प्रेप्सुः अन्वेषणशीलः दशग्रीवो रावणः तदन्तरे रामविच्छेदकाले भिक्षुरूपेण वैदेहीम् उपतस्थे तदाश्रमसमीपं जगाम ॥ ८ ॥

गो० टी०—रामस्येति । रामस्यान्तरप्रेप्सुः विश्लेषान्वेषी तदन्तरे तस्मिन्नवकाशे प्रथमं सीतामुद्दिश्य गमनम् । अथाश्रमसमीपगमनं, ततः सीतादर्शनं, ततः सन्निकर्षगमनमिति क्रमः ॥ ८ ॥

९ ] ति० टी०—उपतस्थे । अतिसमीपं प्रापेत्यर्थः । अनुशोचतीं तामिव ॥ ९ ॥

१ समुपागमदिति गो. पाठः। २ रामपत्नीमिति गो. पाठः। ३ उग्रतेजःकर्माणमिति गो. पाठः। ४ रुद्दा इति गो. पाठः। ५ समीक्ष्येति गो. पाठः। ६ त्वन्तरप्रेप्सुरिति गो. रा. पाठः।

अभ्यवर्तत वैदेहीं चित्रामिव शनैश्चरः । सहसा भव्यरूपेण तृणैः कूप इवावृतः ॥ १० ॥
अतिष्ठत्प्रेक्ष्य वैदेहीं रामपत्नीं यशस्विनीम् । [1]तिष्ठन्संप्रेक्ष्य च तदा पत्नीं रामस्य रावणः॥ ११ ॥
शुभां रुचिरदन्तोष्ठीं पूर्णचन्द्रनिभाननाम् । आसीनां पर्णशालायां बाष्पशोकाभिपीडिताम्॥१२॥
स तां पद्मपलाशाक्षीं पीतकौशेयवासिनीम् । अभ्यगच्छत वैदेहीं हृष्टचेता निशाचरः ॥ १३ ॥
दृष्ट्वा कामशराविद्धो ब्रह्मघोषमुदीरयन् । अब्रवीत्प्रश्रितं वाक्यं रहिते राक्षसाधिपः ॥ १४ ॥
तामुत्तमां त्रिलोकानां पद्महीनामिव श्रियम् । विभ्राजमानां वपुषा रावणः प्रशशंस ह ॥ १५ ॥
[6]रौप्यकाञ्चनवर्णाभे पीतकौशेयवासिनि । कमलानां शुभां मालां पद्मिनीव च बिभ्रती॥ १६॥
ह्रीः श्रीः कीर्तिः शुभा लक्ष्मीरप्सरा वा शुभानने । भूतिर्वा त्वं वरारोहे रतिर्वा स्वैरचारिणी ॥ १७ ॥
समाः शिखरिणः स्निग्धाः पाण्डुरा दशनास्तव । विशाले विमले नेत्रे रक्तान्ते कृष्णतारके ॥ १८ ॥

रा० टी०—अभव्य इति । अभव्यः नित्यममङ्गलरूपः रावणः भर्तारमनुशोचतीमनुशोचन्तीं वैदेहीं भव्यरूपेण शनैश्चरः चित्रामिव अभ्यवर्तत तत्समीपं प्राप ॥ ९ ॥

गो० टी०—अथाभिमुखगमनमाह—अभव्य इति । अभव्यः दुर्जनः भव्यरूपेण सुजनरूपेण अनुशोचतीमिति आगमशासनस्यानित्यत्वान्नुमभावः ॥ ९ ॥

१०–११ ] ति० टी०—चित्रां चित्राख्यनक्षत्रम् । भव्यरूपेण परमशान्तयतिरूपेण ॥ १० ॥ ११ ॥

रा० टी०—सहसेति । तृणैः आवृतः आच्छन्नः कूप इव भव्यरूपेणोपलक्षितो रावणः रामपत्नीं वैदेहीं प्रेक्ष्य अतिष्ठत् तत्संनिधावुपाविशत् ॥ १० ॥ ११ ॥

गो० टी०—स इति । पापः अन्तः पापात्मा भव्यरूपेण बाह्याकारेणोपलक्षितः ॥ १० ॥

१२–१३ ] ति० टी०—बाष्पैः शोकेन चाभिपीडिताम् । स्वयमग्नौ प्रविश्य मां रक्षसे दत्तवतीति शोकबाष्पौ । रामव्यसनशङ्कयेत्यापाततोऽर्थः॥ १२ ॥ १३ ॥

रा० टी०—शुभामिति । शुभां सकलमङ्गलहेतुं रुचिरदन्तोष्ठीं स्वच्छदन्तोष्ठसहितां पर्णशालायामासीनां बाष्पशोकाभिपीडितां बाष्पहेतुभूतशोकयुक्तां पद्मपलाशाक्षीं पद्मपत्रनेत्रां पीतकौशेयवासिनीं वैदेहीं हृष्टचेताः निशाचरो रावणः अभ्यगच्छत कथमेवं लोकविलक्षणं रूपमनया लब्धमित्येविचारयत् ॥ १२ ॥ १३ ॥

गो० टी०—शुभामित्यादि । बाष्पशोकाभिपीडितां रामार्तस्वरश्रवणेन बाह्याभ्यन्तरास्रास्युवतीं पीतकौशेयं वस्ते इति पीतकौशेयवासिनीं णिन्यन्तात् ङीप् । अभ्यगच्छत पूर्वस्मादपि सन्निकर्षं प्राप्तः ॥ ११ ॥ १२ ॥

गो० टी०—स इति । ब्रह्मघोषमुपनिषदमावर्तयेदित्युक्तपरिव्राजकोचितवेदघोषं प्रश्रितं विनयान्वितं रहिते विजनप्रदेशे ॥ १३ ॥

१४–१५ ] ति० टी०—ब्रह्मघोषं ब्राह्मणत्वप्रत्यभिज्ञानाय वेदघोषमुदीरयन्कुर्वन् ॥ १४ ॥ १५ ॥

रा० टी०—दृष्ट्वेति । कामशराविद्धः नानेच्छारूपबाणव्याप्तः राक्षसाधिपो रावणः रहिते रामलक्ष्मणाभ्यां शून्ये समये दृष्ट्वा वैदेहीमिति शेषः, ब्रह्मघोषं वेदशब्दमुदीरयन् पठन् प्रश्रितं वाक्यमब्रवीत् प्रशंसितुमैच्छत् अत एव वक्ष्यमाणेन न पौनरुक्त्यम् ॥ १४ ॥

रा० टी०—तामिति । त्रिलोकानां मध्ये उत्तमां सर्वश्रेष्ठां वपुषा पद्महीनां श्रियमिव विभ्राजमानां तां सीतां रावणः प्रशशंस ॥ १५ ॥

गो० टी०—तामिति । लोके उत्तमां श्रियमित्यन्वयः । प्रश्रितं वाक्यमब्रवीदित्यस्यैव विवरणं प्रशशंसेति ॥ १४ ॥

१६ ] ति० टी०—रौप्यकाञ्चनमुत्तमकाञ्चनम् ॥ १६ ॥

रा० टी०—तत्प्रशंसाकारमाह—रौप्येत्यादिभिः । रौप्यकाञ्चनवर्णस्य अत्युत्तमसुवर्णवर्णस्याभा इव आभा यस्यास्तत्संबोधनम् पीतकौशेयं वस्ते तच्छीला तत्संबोधनम्, मालां बिभ्रति संबोधनम् ॥ १६ ॥

गो० टी०—का त्वमिति । काञ्चनवर्णाभे काञ्चनतुल्यवर्णे कमलानां मालां बिभ्रतीव पद्मिनीव स्थिता पद्मतुल्यमुखनयनपाणिपादविशिष्टत्वादिति भावः ॥ १९ ॥

१७] ति० टी०—ह्रीर्गौरी, श्रीरैश्वर्यप्रधाना भगवच्छक्तिः, लक्ष्मीः सौभाग्यप्रधाना, भूतिरणिमादिसिद्धिः, रतिः कामपत्नी । स्वैरचारिणीत्वं वन आगमनात् ॥ १७ ॥

रा० टी०—ह्रीरिति । स्वैरचारिणी त्वं ह्रीरसि श्रीर्वासि श्रीः शोभासंपत्तिः लक्ष्मीरैश्वर्यसंपत्तिरिति न पौनरुक्त्यम्॥१७॥

गो० टी०—ह्रीरिति । ह्रीः विष्णुपत्नी भूमिः "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" इति श्रुतेः । श्रीः कमला लक्ष्मीः कान्त्यधिष्ठानदेवता रतिः मन्मथस्त्री स्वैरचारिणी स्वतन्त्रा ॥ १६ ॥

१८ ] ति० टी०—प्रशशंसेत्यस्य प्रपञ्चः—समा इत्यादि ।

१ स पाप इति गो. पाठः । २ अर्धमेतत् गो. रा. नास्ति । ३ दुष्टेति गो. पाठः । ४ स मन्मथेति गो. पाठः । ५ श्रियं लोके इति गो. पाठः । ६ का त्वमिति गो. पाठः । ७ ह्रीति गो. पाठः । ८ बिभ्रति इति ह्रस्वः रा. पाठे । ९ व्यचारयदिति युक्तं भाति ।

विशालं जघनं पीनमूरू करिकरोपमौ । एतावुपचितौ वृत्तौ संहतौ संप्रगल्भितौ ॥ १९ ॥
पीनोन्नतमुखौ कान्तौ [२]स्निग्धतालफलोपमौ । मणिप्रवेकाभरणौ रुचिरौ [३]तौ पयोधरौ ॥ २० ॥
चारुस्मिते चारुदति चारुनेत्रे विलासिनि । मनो हरसि मे [४]रामे नदीकूलमिवाम्भसा ॥ २१ ॥
करान्तमितमध्यासि सुकेशे संहतस्तनि । नैव देवी न गन्धर्वी न यक्षी न च किंनरी ॥ २२ ॥
नैवंरूपा मया नारी दृष्टपूर्वा महीतले । रूपमग्र्यं च लोकेषु सौकुमार्यं वयश्च ते ॥ २३ ॥
इह वासश्च कान्तारे चित्तमु[५]न्माथयन्ति मे । सा प्रतिक्राम भद्रं ते न त्वं वस्तुमिहार्हसि ॥ २४ ॥
राक्षसानामयं वासो घोराणां कामरूपिणाम् । प्रासादाग्राणि रम्याणि नगरोपवनानि च ॥ २५ ॥

---

समा इति समसंस्थानाः । शिखरिणः कुन्दकुड्मलवत्प्रशस्ताग्राः ॥ १८ ॥

रा० टी०—समा इति । समाः निम्नोन्नतरहिताः शिखरिणः कुन्दकुड्मलसदृशशोभनाग्रवतस्तव दशनाः दन्ताः सन्ति रक्तान्ते अरुणप्रान्तभागे कृष्णतारके कृष्णतारकाविशिष्टे नेत्रे स्त इति शेषः ॥ १८ ॥

गो० टी०—समा इति । समाः वैषम्यरहिताः शिखराणि अग्राणि प्रशस्तानि सन्तीति शिखरिणः प्रशंसायामिनिः । कुन्दकुड्मलवत् प्रशस्ताग्रा इत्यर्थः । स्निग्धाः मसृणाः रक्तान्ते रक्तरेखायुक्तान्ते जघनं कटिपुरोभागः । 'पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः' इत्यमरः ॥ १७ ॥ १८ ॥

१९ ] ति० टी०—संप्रगल्भितावालिङ्गनादौ संजातप्रागल्भ्यौ । 'संप्रवल्गितौ' इति पाठे आलिङ्गनोद्यतावित्यर्थः ॥ १९ ॥

रा० टी०—विशालमिति । जघनं विशालं पीनं च उपचितौ उन्नतौ वृत्तौ वर्तुलौ संहतौ परस्परं सुश्लिष्टौ संप्रगल्भितौ किंचित्कम्पयन्ताविव ॥ १९ ॥

गो० टी०—एताविति । उपचितौ उन्नतौ वृत्तौ वर्तुलौ संहतौ अन्योन्यसंश्लिष्टौ सम्यक् प्रकृष्टं वल्गितं चलनं ययोस्तौ संप्रवल्गितौ गुरुत्वौन्नत्याभ्यां किंचिचलन्ताविव स्थितावित्यर्थः । पीनोन्नतमुखौ क्वचित् स्तनयोः पीनत्वेऽप्यग्रे औन्नत्यं पीनत्वं च न स्तः तथा न भवत इमौ किंतु पीनम् उन्नतं च मुखं ययोस्तौ कान्तौ काम्यमानौ मणिप्रवेकाभरणौ मणिप्रवेकाः मणिश्रेष्ठाः । 'प्रवेकानुत्तमोत्तमौ' इत्यमरः । ते मालात्मकाः आभरणं ययोस्तौ रुचिरौ शोभमानौ सूक्ष्मतरकौशेयोत्तरीयचलनवशेन हठादृष्टः प्रकारो दुरात्मना वर्ण्यते ॥ १९ ॥

२० ] ति० टी०— मणिप्रवेको मणिश्रेष्ठः ॥ २० ॥

रा० टी०—पीने उन्नते मुखे ययोः ॥ २० ॥

२१ ] ति० टी०—नदी कर्त्री । कूलं स्वकूलम् ॥ २१ ॥

रा० टी०—चार्विति । चारु स्मितं यस्याः तत्संबोधनम् नदी अम्भसा कूलमिव शोभनावयवैर्मे मनो हरसि ॥ २१ ॥

गो० टी०—चारुस्मित इति । चारवो दन्ता यस्याः सा चारुदती आर्षो दन्तस्य दत्रादेशः छन्दोवद्भावेन "छन्दसि च" इति सूत्रेण समासान्तो दन्तस्य दत्रादेशो वा "उगितश्च" इति ङीप् । समा इत्यादिना पूर्वोक्तस्य सामान्योक्तिरियं चारुस्मितत्वनिर्वाहाय विलासोऽम्भस्थानीयम् अतो न न्यूनोपमा २० २२ ] ति० टी०—करान्तेनाङ्गुष्ठप्रदेशिनीचक्रप्रमाणेन मितं मध्यं यस्यास्तथाभूते ॥ २२ ॥

रा० टी०—करान्तेति । करान्तेन अङ्गुष्ठप्रदेशिनीचक्रमानेन मितं परमितं मध्यं यस्याः साऽसि एवं रूपं यस्याः सा नारी देव्यादिर्मया दृष्टपूर्वा न ॥ २२ ॥

गो० टी०—करान्तेति । करान्तेन करतलाङ्गुष्ठप्रदेशिनीचक्रमानेन मितं परिच्छिन्नं मध्यं यस्याः सा संहतस्तनीति पूर्वं संहतावित्युक्तकल्पेऽपि पुनरुक्तिर्दुर्लभलक्षणत्वविस्मयेन ॥ २१ ॥

२३–२५ ] ति० टी०—रूपं सुकुमारता वयः कान्तारवास इति चत्वारि चित्तमुन्माथयन्ति विकृतं कुर्वन्ति । प्रतिक्राम निर्गच्छ । रामचन्द्राधिष्ठितस्थाने राक्षसपराक्रमासंभवादेवं वचनम् ॥ २३–२५ ॥

रा० टी०—रूपमिति । अग्र्यम् अत्युत्तमं ते रूपादिकम् इह राक्षससेविते कान्तारे वने वासश्च मे चित्तमुन्मादयन्ति परस्परं विरुद्धधर्मयोरत्युत्तमरूपादिराक्षससेवितवनवासयोः कथमेकत्र समावेश इत्यत्र हेतोरज्ञानेन मे चित्तं भ्रमतीत्यर्थः ॥ २३ ॥

गो० टी०—नैवेति । एवंरूपा देवी देवस्त्री देवलोके न दृष्टा एवमुत्तरत्रापि योज्यं नारी मनुष्यस्त्री ॥ २२ ॥

गो० टी०—रूपमिति । लोकेष्वग्र्यं श्रेष्ठं रूपं लावण्यं रूपादीनि कान्तारवासश्च उन्मादयन्ति परस्परविरुद्धत्वात् किमत्र तवागमनमिति निर्णयबुद्धिं न जनयन्तीत्यर्थः ॥ २३ ॥

रा० टी०—सेति । यतः घोराणां राक्षसानामयं वनाधिकरणको वासः त्वया तु रम्याणि प्रासादाग्राणि संपन्नानि फलपुष्पादिसमन्वितानि नगरोपवनानि च वरं माल्यादि च आचरितुमुपभोक्तुं युक्तानि अतः सा अत्युत्तमरूपादिविशिष्टा त्वं प्रतिक्राम इतो गच्छ इह वस्तुं त्वं नार्हसि । सार्धश्लोकद्वयमेकान्वयि ॥ २४–२६ ॥

गो० टी०—सेति । प्रतिक्राम प्रतिनिवर्तस्व निलयमिति शेषः । वस्तुं स्थातुम् ॥ २४ ॥

---

१ वल्गिताविति गो. पाठः । २ स्निग्धाविति गो. पाठः । ३ ते इति गो. पाठः । ४ कान्ते इति गो. पाठः । ५ उन्मादयन्तीति गो. पाठः । ६ वन्त इति युक्तं भाति ।

संपन्नानि सुगन्धीनि युक्तान्याचरितुं त्वया । वरं माल्यं वरं गन्धं वरं वस्त्रं च शोभने ॥ २६ ॥
भर्तारं च वरं मन्ये त्वद्युक्तमसितेक्षणे । का त्वं भवसि रुद्राणां मरुतां वा शुचिस्मिते ॥ २७ ॥
वसूनां वा वरारोहे देवता प्रतिभासि मे । नेह गच्छन्ति गन्धर्वा न देवा न च किंनराः ॥ २८ ॥
राक्षसानामयं वासः कथं तु त्वमिहागता । इह शाखामृगाः सिंहा द्वीपिव्याघ्रमृगा वृकाः ॥ २९ ॥
ऋक्षास्तरक्षवः कङ्काः कथं तेभ्यो न बिभ्यसे । मदान्वितानां घोराणां कुञ्जराणां तरस्विनाम् ॥ ३० ॥
कथमेका महारण्ये न बिभेषि वरानने । कासि कस्य कुतश्च त्वं किंनिमित्तं च दण्डकान् ॥ ३१ ॥
एका चरसि कल्याणि घोरान्राक्षससेवितान् । इति प्रशस्ता वैदेही रावणेन महात्मना ॥ ३२ ॥
द्विजातिवेषेण हि तं दृष्ट्वा रावणमागतम् । सर्वैरतिथिसत्कारैः पूजयामास मैथिली ॥ ३३ ॥
उपानीयासनं पूर्वं पाद्येनाभिनिमन्त्र्य च । अब्रवीत्सिद्धमित्येव तदा तं सौम्यदर्शनम् ॥ ३४ ॥

---

गो० टी०—प्रासादाग्राणीति । संपन्नानि समृद्धानि आचरितुं संचरितुम् ॥ २६ ॥

२६-२८] ति० टी०—आचरितुमुपभोक्तुम् । त्वद्युक्तं त्वत्संयुक्तमाल्यादि वरम् अन्यत्तु विफलमिति भावः ॥ २६-२८ ॥

गो० टी०—वरमिति । वरं श्रेष्ठं माल्यादि त्वद्युक्तं तव योग्यं मन्ये नतु यादृशतादृशम् एवमुत्तरत्रापि । यद्वा माल्यादिकं त्वद्युक्तं त्वत्संबद्धं सत् वरं प्रशस्तं भवतीति मन्ये ॥ २६ ॥

रा० टी०—भर्तारमिति । त्वद्युक्तं त्वत्संबन्धवन्तं भर्तारमहं वरं श्रेष्ठं मन्ये अतस्त्वं का भवसि तद्वदेत्यर्थः । नतु त्वमेव बुद्धया जानीहीत्यत आह—रुद्राणां मरुतां वा वसूनां वा देवता त्वं मे प्रतिभासि ॥ २७ ॥

गो० टी०—का त्वमिति । त्वं मे देवता देवस्त्रीति प्रतिभासि तत्र का त्वं किं रुद्राणां संबन्धिनी उत मरुताम् आहोस्विद्वसूनां संबन्धिनी । वाकारः समुच्चयार्थः तेन किमादित्यानामित्यपि सिध्यति ॥ २७ ॥

रा० टी०—नेति । यतो राक्षसानामयमेतद्वनाधिकरणको वासः अतः गन्धर्वादय इह न गच्छन्ति त्वं कथमिहागता॥२८॥

गो० टी०—तत्रापि संशयनिवृत्तिमाह—नेहेति ॥ २८ ॥

२९ ] ति० टी०—द्वीपिव्याघ्रौ सबिन्दुनिर्बिन्दू ॥ २९ ॥

रा० टी०—अत्र निवासे भीत्यन्तरमप्यस्तीत्याह—इहेति । इह शाखामृगादयः सन्ति तेभ्यः कथं न बिभ्यसे बिभेषि तत्र शाखामृगा वानरादयः द्वीपिव्याघ्रयोरिहावान्तरजातिपरत्वान्न पौनरुक्त्यम् तरक्षवो मृगादनाः महाव्याघ्राः ॥ २९ ॥

गो० टी०—भयहेत्वन्तरमाह—इहेति । शाखामृगाः वानराः द्वीपं चर्म तद्योगात् द्वीपिनो बालव्याघ्राः व्याजिघ्रन्तीति व्याघ्रा द्वीप्यपेक्षया किंचिन्महान्तोऽमी तरक्षवो मृगादनाः महाव्याघ्रा न बिभ्यसि न बिभेषि कङ्काः मांसादाः भयंकराकृतयः पक्षिविशेषाः ॥ २९ ॥

३०-३१ ] ति० टी०—तरक्षुर्मृगादनः । बिभ्यसे बिभेषि ॥ ३० ॥ ३१ ॥

रा० टी०—मदान्वितानामिति । महारण्ये मदान्वितानामत एव घोराणां तरस्विनामतिवेगवतां कुञ्जराणाम् एका त्वं कथं न बिभेषि संबन्धसामान्यविवक्षया षष्ठी ॥ ३० ॥

गो० टी०—मदेति । पञ्चम्यर्थे षष्ठी । तरस्विनां बलवताम् ॥ ३० ॥

रा० टी०—काऽसीति । का किंनामासि कस्य संबन्धिन्यसि कुतो देशात् किंनिमित्तं च घोरान् राक्षससेवितान् दण्डकान् एका त्वं चरसि ॥ ३१ ॥

गो० टी०—कासीति । कासि किंनामधेयासि कस्य संबन्धिनी कुतः कस्माद्देशादागतासि ॥ ३१ ॥

३२ ] ति० टी०—प्रशस्ता कृतप्रशंसा ॥ ३२ ॥

३३ ] ति० टी०—द्विजातिवेषेण तमागतं रावणं दृष्ट्वा द्विजातिवेषोऽयं रावण इति ज्ञात्वापि । अतिथिसत्कारैरतिथियोग्यसत्कारैः ॥ ३३ ॥

रा० टी०—इतीति । महात्मना अतिप्रयत्नशीलेन रावणेन प्रशस्ता कृतप्रशंसा वैदेही विदेहकुले प्रादुर्भूता मैथिली मिथिलोद्भवा सीता द्विजातिवेषेणागतं तं रावणं दृष्ट्वा सर्वैः अतिथिसत्कारैः पूजयामास । सार्धश्लोक एकान्वयी॥३२॥३३॥

गो० टी०—इतीति । द्विजातिवेषेण संन्यासिवेषेण हि तं सहितं सत्क्रियते एभिरिति सत्काराः पूजाद्रव्याणि तैः ॥३२॥

३४ ] ति० टी०—पाद्येनाभिनिमन्त्र्य सत्कृत्य । तदा पाद्यदानोत्तरकाले सौम्यदर्शनं तं सिद्धं पक्वमन्नमित्यब्रवीत्॥३४॥

रा० टी०—सत्कारप्रकारमाह—उपेति । तदा रावणप्रश्नोत्तरकाले एव पूर्वमासनमुपानीय दत्वा पाद्येन अभिनिमन्त्र्य सत्कृत्य च सौम्यदर्शनं तं रावणं सिद्धं पाकनिष्पन्नं भक्ष्यमिति शेषः, इत्यब्रवीत् ॥ ३४ ॥

गो० टी०—उक्तं विवृणोति—उपनीयेति । पाद्येन पादोदकेन अभिनिमन्त्र्य सत्कृत्य तदा पाद्यप्रदानानन्तरं सिद्धमित्येवाब्रवीत् पक्वान्नं सिद्धमित्यब्रवीत् ॥ ३३ ॥

---

१ वरानने इति गो. पाठः । २ न्विति गो. पाठः । ३ तथेति गो. पाठः । ४ बिभ्यसीति गो. पाठः । ५ चिदिति गो. पाठः । ६ दुरात्मनेति गो. पाठः । ७ उपनीयेति गो. पाठः ।

द्विजातिवेषेण समीक्ष्य मैथिली समागतं पात्रकुसुम्भधारिणम् ।
अशक्यमुद्द्वेष्टुमुपायदर्शनान्न्यमन्त्रयद्ब्राह्मणवत्तथागतम् ॥ ॥ ३५ ॥
इयं बृसी ब्राह्मण काममास्यतामिदं च पाद्यं प्रतिगृह्यतामिति ।
इदं च सिद्धं वनजातमुत्तमं त्वदर्थमव्यग्रमिहोपभुज्यताम् ॥ ॥ ३६ ॥
निमन्त्र्यमाणः प्रतिपूर्णभाषिणीं नरेन्द्रपत्नीं प्रसमीक्ष्य मैथिलीम् ।
प्रसह्य तस्या हरणे दृढं मनः समर्पयामास वधाय रावणः ॥ ॥ ३७ ॥
ततः सुवेषं मृगयागतं पतिं प्रतीक्षमाणा सहलक्ष्मणं तदा ।
[६]निरीक्षमाणा हरितं ददर्श तन्महद्वनं नैव तु रामलक्ष्मणौ ॥ ॥ ३८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे षट्चत्वारिंशः सर्गः ॥४६॥

---

३५ ] ति० टी०–पात्रं कमण्डलुः कुसुम्भं तद्रक्तवस्त्रम् तदुभयधारिणम् । उपायानां ब्राह्मणत्वप्रतिपत्त्यै रावणेन कृतानां काषायवस्त्रब्रह्मघोषदण्डादीनां दर्शनात् । उद्वेष्टुमुपेक्षितुमशक्यमिति विचार्येति शेषः । तथागतं ब्राह्मणवेषेणागतं रावणं ब्राह्मणवदेव न्यमन्त्रयत् । पाठान्तरं त्वत्राशक्तकल्पितम् । अयमेव रक्षःसंहारोपाय इति दर्शनादित्यपि गूढमत्र ॥ ३५ ॥

रा० टी०–ननु संन्यासिविलक्षणवचनोच्चारणात् संन्यासित्वाभावनिश्चयात् कथमेवं सत्कारः कृत इत्यत आह—द्विजातीति । द्विजातिवेषेण उपवीतधारित्वादिना समागतं पात्रकुसुम्भधारिणमत एव उद्वेष्टुमनादर्तुमशक्यं रावणम् उपायदर्शनात् मदुद्देश्यकोपकार एतद्विनाशहेतुरित्युपायज्ञानात् येन प्रकारेण आगतं प्राप्तं सामग्रीजातं तथा तेन प्रकारेण न्यमन्त्रयत् ॥ ३५ ॥

गो० टी०–उक्तमर्थं सर्गान्तश्लोकाभ्यां विवृणोति–द्विजातीत्यादि । द्विजातिवेषेण समागतं प्राप्तम् अलाबुप्रभृतिष्वेकं कुसुम्भं महारजताख्यरञ्जकद्रव्यविशेषरक्तं वस्त्रम् । तेन रक्तमिति प्राप्तस्याणो लोप आर्षः यद्वा कुसुम्भः कमण्डलुः 'स्यान्महारजते क्लीबं कुसुम्भं करके पुमान्' इत्यमरः । तदुभयधारिणम् अपाये अपहरणे अनर्थकरणे वा दर्शनं बुद्धिर्यस्य तम् । अत एव उद्वेष्टुं भोजयितुमशक्यं तं समीक्ष्य मैथिली ब्राह्मणवत् ब्राह्मणेन सदृशं यथा भवति तथा न्यमन्त्रयत् ब्राह्मणातिथिवन्निमन्त्रितवतीत्यर्थः । यद्वा ब्राह्मणवत् ब्राह्मणाद्देम् "तदर्हम्" इति वतिः । यद्वा मैथिली जनककुलजाततया तद्व्यवहारपरिपाटीविज्ञातकपटवेषाऽपि संन्यासिवेषधारणमात्रेण उद्वेष्टुं द्वेषं कर्तुम् अशक्यं तं न्यमन्त्रयत् । 'काषायदण्डमात्रेण यतिः पूज्यो न संशयः' इति वचनादिति भावः ॥ ३४ ॥

३६ ] ति० टी०–निमन्त्रणप्रकारः—इयं बृसीत्यादि । वनजातं वन्यपदार्थजातं त्वदर्थमेव सिद्धं कृतं तदिहोपभुज्यताम् ॥ ३६ ॥

रा० टी०–तत्प्रकारमाह–इयमिति । हे ब्राह्मण ! इयं वृषी ऋषियोग्यासनं कामं यथेच्छमास्यताम् इदं पाद्यं च प्रतिगृह्यताम् उत्तममिदं वनजातं वनोद्भवं फलादि सिद्धं पाकादिना संपन्नम् अतोऽव्यग्रमिहोपभुज्यताम् ॥ ३६ ॥

गो० टी०–सत्कारप्रकारमाह–इयमिति । इयं बृसी मुनीनामासनम् आस्यतां त्वदर्थं सिद्धं पक्वम् इदं वनजातं कन्दमूलफलादिकम् इह स्थले अव्यग्रमुपभुज्यताम् इतिकरणस्य उत्तरश्लोकेऽन्वयः ॥ ३६ ॥

३७ ] ति० टी०–एवं निमन्त्र्यमाणो रावण आत्मवधाय स्वनाशाय तस्याः प्रसह्य हरणे मनो दृढं निश्चितं समर्पयामास सम्यग्वधाय कृतवानित्यर्थः ॥ ३७ ॥

रा० टी०–निमन्त्र्यमाण इति । निमन्त्र्यमाणो रावणः प्रतिपूर्णभाषिणीम् अतिथियोग्यकृत्स्नवचनोच्चारणकर्त्रीं नरेन्द्रपत्नीं मैथिलीं प्रसमीक्ष्य आत्मवधाय स्वविध्वंसाय प्रसह्य हठात् तस्याः मैथिल्याः हरणे मनः दृढं यथा भवति तथा समर्पयामास ॥ ३७ ॥

गो० टी०–निमन्त्र्यमाण इति । इति प्रतिपूर्वभाषिणीं सर्वं संपन्नमित्यतिथये वक्तव्यं वचनं भाषमाणां धृतं धीरं यथा तथा मनोविशेषणं वा तस्या हरणे मनः समार्पयत् निहितवान् ॥ ३६ ॥

३८ ] ति० टी०–सुवेषं शोभनाकारम् । मृगयागतं मृगयां प्रति गतम् । हरितं श्यामम् ॥ ३८

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे षट्चत्वारिंशः सर्गः ॥ ४६ ॥

रा० टी०–तत इति । ततः रावणाभिप्रायज्ञानानन्तरं सुवेषं नित्यं मनोहरवेषेण विशिष्टं मृगयागतं पतिं प्रतीक्षमाणा तदागमनमिच्छन्ती अत एव निरीक्षमाणा इतस्ततो-

---

१ दर्शनमिति गो. पाठः । २ तदाङ्गनेति गो. पाठः । ३ बृषीति रा. पाठः । ४ धृतमिति गो. पाठः । ५ समर्पयत्स्वात्मेति गो. पाठः । ६ विवीक्षमाणेति गो. पाठः ।

## सप्तचत्वारिंशः सर्गः ।

काषायाम्बरावृतेः शापाद्भीता सीता स्वेतिवृत्तं निवेदयन्ती तं प्रति तदभिजनादि पप्रच्छ । लब्धावकाशो रावणः स्वरावणत्वं प्रकटय्य स्ववैभवनिवेदनेन विलोभयन् स्वकलत्रं भवितुं तां प्रार्थयते । रामगुणान्प्रशंसन्ती सीता तदेकनिष्ठत्वं विनिवेद्य तयोर्गुणतारतम्यं प्रकटयन्ती तं बहुधा जगर्हे ।

रावणेन तु वैदेही तदा पृष्टा [1]जिहीर्षुणा । परिव्राजकरूपेण[2] शशंसात्मानमात्मना[3] ॥ १ ॥
ब्राह्मणश्चातिथिश्चैष[4] अनुक्तो हि शपेत माम् । इति ध्यात्वा मुहूर्तं तु सीता वचनमब्रवीत् ॥ २ ॥
दुहिता जनकस्याहं मैथिलस्य महात्मनः । सीता नाम्नास्मि भद्रं ते रामस्य[5] महिषी प्रिया ॥ ३ ॥
उषित्वा द्वादश समा इक्ष्वाकूणां निवेशने । भुञ्जाना मानुषान्भोगान्सर्वकामसमृद्धिनी ॥ ४ ॥
तत्र[6] त्रयोदशे वर्षे राजाऽमन्त्रयत प्रभुः । अभिषेचयितुं रामं समेतो राजमन्त्रिभिः ॥ ५ ॥

---

स्वलोकयन्ती सीता हरितवनमेव ददर्श रामलक्ष्मणौ तु नैव ददर्श ॥ ३८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे षट्चत्वारिंशः सर्गः ॥ ४६ ॥

गो० टी०-तत इति । सुवेषं शोभनाकारं मृगयागतं गतं मृगयार्थं पतिं प्रतीक्षमाणा प्रतिपालयन्ती हरितम् यत्र गतौ तौ तां दिशं विवीक्षमाणा विविधं पश्यन्ती महद्वनमेव ददर्श रामलक्ष्मणौ तु न ददर्श ॥ ३७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने षट्चत्वारिंशः सर्गः ॥४६॥

१ ] ति० टी०-रावणेन त्विति । आत्मानं जिहीर्षुणा परिव्राजकरूपेण रावणेन पृष्टा वैदेही आत्मना स्वयमेवात्मानं शशंस ॥ १ ॥

रा० टी०-सीतोत्तरं वर्णयितुमाह-रावणेनेति । आत्मानं परिव्राजकरूपेण जिहीर्षुणा रावणेन पृष्टा वैदेही आत्मना स्वयमेवात्मानं शशंस ॥ १ ॥

गो० टी०-अथ मैथिली आर्जवेन स्वस्वरूपमुक्त्वा रावणानार्जवदर्शनेन स्वपातिव्रत्यानुरूपं तमुपालभत--रावणेन त्वित्यादि । जिहीर्षता हर्तुमिच्छता तेन कापट्येन पृष्टापि यतिचिह्नं पुरस्कृत्य स्वयाथात्म्यमुक्तवतीति भावः ॥ १ ॥

२-३ ] ति० टी०-ननु पूजामात्रं कर्तव्यं किं प्रतिवचनेनेत्याह-ब्राह्मणश्चेति । एष अनुक्त इत्यार्षोऽसंधिः । अनुक्तोऽनुक्तप्रतिवचनः ॥ २ ॥ ३ ॥

रा० टी०-तत्र हेतुं वदन्नाह-ब्राह्मण इति । एष रावणः ब्राह्मणो ब्राह्मणवेषोऽतिथिश्चातो मयानुक्तश्चेत् मां शपेतेति मुहूर्तं ध्यात्वा सीता अब्रवीत् ॥ २ ॥

गो० टी०-यतिवेषं प्रत्यात्मवंशं सा किमर्थमुक्तवतीत्याह-ब्राह्मणश्चेति ॥ २ ॥

रा० टी०-तद्वचनाकारमाह-दुहितेत्यादिभिः । महात्मनो जनकस्य दुहिता कन्या रामस्य प्रिया महिषी नाम्ना सीताहमस्मि ॥ ३ ॥

गो० टी०-काऽसीत्यस्योत्तरमाह-दुहितेति । कस्येत्यस्योत्तरमाह-रामेति ॥ ३ ॥

४ ] ति० टी०-सर्वकामसमृद्धिनी । व्रीह्यादित्वादिनिः॥४॥

रा० टी०-उषित्वेति । इक्ष्वाकूणां निवेशने गृहे द्वादश समाः वर्षाणि उषित्वा मानुषान् प्राकृतविलक्षणमनुष्यसंबन्धिनो भोगान् भुञ्जानाहं सर्वकामसमृद्धिनी आसमिति शेषः, निष्ठान्तात् "अत इनिठनौ" इतीन् व्रीह्यादित्वादिनिरिति भट्टोक्तिस्तु चिन्त्या ॥ ४ ॥

गो० टी०-कुतश्चिदित्यादेरुत्तरमाह-उषित्वेत्यादिना । विवाहानन्तरम् इक्ष्वाकूणां निवेशने अयोध्यायां द्वादशसमाः द्वादशवत्सरानुषित्वा तत्र सर्वकामसमृद्धिनी काम्यन्त इति कामाः भोगोपकरणस्रक्चन्दनादीनि तेषां समृद्धं समृद्धिः भावे निष्ठा तद्वती सती मानुषान् भोगान् रतिक्रीडाः अग्राम्यत्वाय मानुषानित्युक्तं वस्तुतः स्वयं दिव्यभोगपरतया मानुषानित्यवशभुक्तवती, यद्वा मानुषान् मनुष्यत्वेनावतीर्णरामकृतान् भोगान् अमानुषानिति वा छेदः मनुष्यदुर्लभान् दिव्यान् भोगानित्यर्थः । भुञ्जाना अभवमिति शेषः सर्वकामसमृद्धिनि इति सप्तम्यन्तपाठे सर्वकामसमृद्धिनि इक्ष्वाकूणाम् इक्ष्वाकुवंश्यस्य रामस्य पूजायां बहुवचनं व्रीडया भर्तृनामाग्रहणं निवेशने गृहे द्वादश समाः द्वादश वत्सरान् अत्यन्तसंयोगे द्वितीया । अमानुषान् भोगान् भुञ्जाना अनुभवन्ती सती उषित्वा उषितवत्यस्मि व्यत्ययेन क्त्वाप्रत्ययः ॥ ४ ॥

५ ] ति० टी०-राजमन्त्रिभी राज्ञो राज्यनिर्वाहकैर्मन्त्रिभिरित्यर्थः ॥ ५ ॥

रा० टी०-तत्रेति । तत्र राघवनिवेशने राजमन्त्रिभिः म-

---

१ जिहीर्षतेति गो. पाठः । २ लिङ्गेनेति गो. पाठः । ३ अङ्गनेति गो. पाठः । ४ चायमिति गो. पाठः । ५ रामभार्या द्विजोत्तमेति गो. पाठः । ६ तत इति गो. पाठः ।

तस्मिन्संभ्रियमाणे तु राघवस्याभिषेचने । कैकेयी नाम भर्तारं ममार्या याचते वरम् ॥ ६ ॥
परिगृह्य तु कैकेयी श्वशुरं सुकृतेन मे । मम प्रव्राजनं भर्तुर्भरतस्याभिषेचनम् ॥ ७ ॥
द्वावयाचत भर्तारं सत्यसंधं नृपोत्तमम् । नाद्य भोक्ष्ये न च स्वप्स्ये न पास्ये न कदाचन ॥ ८ ॥
एष मे जीवितस्यान्तो रामो यद्यभिषिच्यते । इति ब्रुवाणां कैकेयीं श्वशुरो मे स पार्थिवः ॥ ९ ॥
अयाचतार्थैरन्वर्थैर्न च याच्ञां चकार सा । मम भर्ता महातेजा वयसा पञ्चविंशकः ॥ १० ॥

न्त्रिराजैः मन्त्रिश्रेष्ठैरित्यर्थः, समेतो राजा राममभिषेचयितुं त्रयोदशे वर्षे अमन्त्रयत ॥ ६ ॥

गो० टी०-तत इति । राजा दशरथः अमन्त्रयत् अकथयत् राजमन्त्रिभिः मन्त्रिराजैः मन्त्रिश्रेष्ठैरिति यावत् । राजदन्तादित्वात्परनिपातः ॥ ६ ॥

६ ] ति० टी०-संभ्रियमाणे । संपाद्यमानसंभारे इत्यर्थः । भर्तारं दशरथम् ममार्या मम पूज्या श्वश्रूः । 'अनार्या' इति क्वचित्पाठः ॥ ६ ॥

रा० टी०-तस्मिन्निति । तस्मिन् राघवस्याऽभिषेचने संभ्रियमाणे सति कैकेयी नाम ममार्या पूजनीया श्वश्रूरित्यर्थः, वरं याचते अयाचत ॥ ६ ॥

गो० टी०-तस्मिन्निति । तस्मिन् रामाभिषेचने संभ्रियमाणे आरभ्यमाणे सति आर्या पूज्या मम श्वश्रूरित्यर्थः । सा प्रसिद्धा कैकेयी वरं याचते अयाचत ॥ ६ ॥

७-९ ] ति० टी०-मे श्वशुरं सुकृतेन परिगृह्य वररूपेण सुकृतेन वशीकृत्य । यद्वा धर्मेण शापयित्वेत्यर्थः । मम भर्तुः प्रव्राजनं भरतस्याभिषेचनमिति द्वौ वरावयाचत ॥ ७-९ ॥

रा० टी०-तद्वचनाकारमाह-परीति । सुकृतेन अतिशोभनकर्मणा उपलक्षितं सत्यसंधं भर्तारं मे श्वशुरं परिगृह्य स्ववशीकृत्य कैकेयी मम भर्तुः प्रव्राजनं भरतस्याऽभिषेचनं राज्यपालनं द्वौ वरौ अयाचत । सार्द्धश्लोक एकान्वयी ॥ ७ ॥

गो० टी०-कं वरं कमयाचतेत्यत्राह-प्रतिगृह्येति । सार्द्धश्लोक एकान्वयः । कैकेयी मे श्वशुरं स्वस्य भर्तारं सत्यसन्धं सत्यप्रतिज्ञं नृपोत्तमं दशरथं सुकृतेन प्रतिगृह्य धर्मेण शापयित्वा, यद्वा सुकृतेनोपकारेण प्रतिगृह्य वशीकृत्य स्वकृतप्राणप्रदानोपकारस्मारणेन राजानं वशीकृत्येत्यर्थः । मम भर्तुः प्रव्राजनं भरतस्याभिषेचनमित्येवंरूपौ द्वौ वरावयाचत ॥ ७ ॥

रा० टी०-याचनप्रकारमाह-नेति । यत् यदि रामोऽभिषिच्यते तदा न भोक्ष्ये अत एव अद्य अस्मिन् काले एष रामाभिषेकः मे जीवितस्यान्तः इति ब्रुवाणां कैकेयीं मानदः अतिसत्कारप्रदः मे श्वशुरः स दशरथः अन्वर्थैः सप्रयोजनकैः अर्थैः सुवर्णरत्नालङ्कारादिभिः अयाचत भरतराज्यप्रतिनिधित्वेन रत्नादीन् गृहाणेत्यकथयदित्यर्थः सा कैकेयी तु याच्ञां राजोक्तिं न चकार स्वीचक्रे स्वप्स्ये यास्ये इत्यत्र संज्ञापूर्वकविधेरनित्यत्वादात्मनेपदम् । अर्धचतुष्टयमेकान्वयि ॥ ८ ॥ ९ ॥

गो० टी०-नाद्येति । पास्य इत्यात्मनेपदमार्षम् एषः अभिषेकः ॥ ८ ॥

गो० टी०-इतीति । मानदः बहुमानप्रदः अन्वर्थैः अर्थानुगतैः सप्रयोजनैरिति यावत् । उपभोगक्षमैरित्यर्थः, अर्थैः सुवर्णरत्नादिभिः कैकेयीमयाचत वरद्वयप्रतिनिधित्वेनैतानर्थान् प्रतिगृहाणेति प्रार्थयामासेत्यर्थः । सा तां याच्ञां न चकार नाङ्गीचकार ॥ ९ ॥

१० ] ति० टी०-अन्वर्थैरनुगतार्थैः सप्रयोजनैरुपभोगक्षमैरर्थैरयाचत । सर्वाण्युत्तमवस्तूनि तुभ्यं दास्यामि रामाभिषेचने विघ्नं मा कुर्विति याच्यमाना न याच्ञां चकार नाङ्गीकृतवती । वयसा पञ्चविंशकः । वननिर्गमनकाल इति शेषः नन्विदमयुक्तम् । 'ऊनषोडशवर्षोऽयम्' इति विश्वामित्रं प्रति दशरथोक्तेः । 'उषित्वा द्वादश समाः' इत्यत्रोक्तेश्चेति चेन्न । अल्पान्तरत्वात् । अतितरुणावस्थायामपि राज्यं त्यक्तवानित्यर्थे तात्पर्येणास्थया तथोक्तेः । यद्वातिक्रान्तपञ्चविंशक इत्यर्थः । मम भर्ता वयसा महातेजाः । अतितरुण इत्यर्थः । पञ्चविंशकः सांख्यसिद्धं पञ्चविंशं तत्त्वं चैतन्यं सोऽयमेव । एतच्चैतन्येनैव जगद्व्याप्तं न ततोऽधिकं किंचिदस्तीति सूचयितुं तथोक्तिरिति तत्त्वम् ॥ १० ॥

रा० टी०-ममेति । सत्यवान् मृषासंसर्गशून्यः सर्वभूतहिते रतः राम इति लोके प्रथितः महातेजा मम भर्ता वयसा पञ्चविंशकः पञ्चविंशेन युक्ताः काः त्रयो यस्य स अष्टाविंशतिवार्षिक इत्यर्थः अयोध्यातो निर्गमनसमये इति शेषः अत एव ऊनषोडशवर्षो मे रामो राजीवलोचन इति विश्वामित्रं प्रति दशरथोक्त्या उषित्वा द्वादश समा इक्ष्वाकूणां निवेशने इति रावणं प्रति सीतोक्त्या च सिद्धस्य वनप्रवेशनसमये अष्टाविंशतिवार्षिकत्वस्य नापलापः निरूपितं चैतत् विस्तरतः ऊनषोडशवर्षो मे इत्यत्र व्याख्याने मम जन्मनि प्रादुर्भावे सति तु अष्टादशवर्षाणि गण्यते गण्यन्ते अयोध्यातो निर्गमनसमये अष्टादश वर्षाणि मे व्यतीतानीत्यर्थः । श्लोकद्वयमेकान्वयि ॥ १० ॥ ११ ॥

गो० टी०-वस्तुतो मम भर्ता प्रव्राजनायोग्यः बालत्वाद्गुणवत्त्वाच्चेत्याह-मम भर्तेति । पञ्चोत्तरा विंशतिः पञ्चविंशतिः वयसा पञ्चविंशतिवर्षाण्यर्हतीति पञ्चविंशकः "विंशतित्रिंशद्भ्यां ड्वुन्संज्ञायाम्" इत्यार्हीयो ड्वुन् प्रत्ययः । संख्यापूर्व-

१ आर्या सेति गो. पाठः । २ कथंचनेति गो. पाठः । ३ यदीति गो. पाठः । ४ मानद इति गो. पाठः ।

अष्टादश हि वर्षाणि मम जन्मनि गण्यते । रामेति प्रथितो लोके [1]सत्यवाञ्शीलवाञ्शुचिः ॥ ११ ॥
विशालाक्षो महाबाहुः सर्वभूतहिते रतः । कामार्तश्च[2] महाराजः पिता दशरथः स्वयम् ॥ १२ ॥
कैकेय्याः प्रियकामार्थं तं रामं नाभ्यषेचयत् । अभिषेकाय तु पितुः समीपं राममागतम् ॥ १३ ॥
कैकेयी मम भर्तारमित्युवाच द्रुतं[3] वचः । तव पित्रा समाज्ञप्तं ममेदं शृणु राघव ॥ १४ ॥
भरताय प्रदातव्यमिदं राज्यमकण्टकम् । त्वया तु[4] खलु वस्तव्यं नव वर्षाणि पञ्च च ॥ १५ ॥
वने प्रव्रज काकुत्स्थ पितरं मोचयानृतात् । तथेत्युवाच[5] तां रामः कैकेयीमकुतोभयः ॥ १६ ॥
चकार तद्वचः श्रुत्वा[6] भर्ता मम दृढव्रतः । दद्यान्न प्रतिगृह्णीयात्सत्यं ब्रूयान्न चानृतम् ॥ १७ ॥
एतद्ब्राह्मण रामस्य व्रतं[7] ध्रुवमनुत्तमम् । तस्य भ्राता तु वैमात्रो[8] लक्ष्मणो नाम वीर्यवान् ॥ १८ ॥
रामस्य पुरुषव्याघ्रः सहायः समरेऽरिहा । स भ्राता लक्ष्मणो नाम ब्रह्मचारी[9] दृढव्रतः ॥ १९ ॥
अन्वगच्छद्धनुष्पाणिः प्रव्रजन्तं मया सह । जटी तापसरूपेण मया सह सहानुजः ॥ २० ॥

---

पदानां तदन्तग्रहणमलुकीति तदन्तविधिः पञ्चविंशतिवर्ष इत्यर्थः । वयः परिमाणं वननिर्गमनकालिकं मम जन्मनि सति वर्षाण्यष्टादशेति गण्यते । रामस्य जन्मारभ्य द्वादशे वर्षे विश्वामित्रागमनं, तदनन्तरं वैदेह्या सह नगरे द्वादशवर्षाणि वासं कृतवान् । ततः परं त्रयोदशे वर्षे यौवराज्याभिषेकारम्भः, ततश्च वनप्रवेशसमये रामः पञ्चविंशतिवर्षार्हः, ततो मुनीनामाश्रमेषु दश वत्सराः पञ्चवट्यां त्रयः वनवासस्य चतुर्दशे वर्षे सीताहरणम्, सीतायाश्च भूगर्भादाविर्भावानन्तरं मिथिलायां षट् संवत्सराः, ततो विवाहानन्तरमयोध्यायां द्वादश इत्येवमष्टादश वर्षा गता वनवासारम्भ इत्युक्तं विस्तरेणायमर्थं ऊनषोडशवर्षो मे इत्यत्र प्रत्यपादि । इदानीं तु रामः अष्टत्रिंशद्वर्षः मम त्वेकत्रिंशद्वर्षा गताः इदानीं तु द्वात्रिंशो वर्षो वर्तते । अस्मिन् श्लोके मम भर्तेत्यत्र भकारो गायत्र्याः नवमाक्षरं अष्टसहस्रश्लोका गताः ॥ १० ॥

११ ] ति० टी०–तथा मम जन्मतो वनप्रवेशसमयेऽतीतानीत्यर्थः गण्यत इत्यार्षमेकत्वम् । मम पञ्चतन्मात्रपञ्चमहाभूतपञ्चेन्द्रियाहंकारबुद्धिमनोरूपाण्यष्टादश वर्षाणि पर्वाणि जन्मनि कार्ये गण्यन्त इति तन्मूलीभूता प्रकृतिरहमिति सूचितम् ॥ ११ ॥

गो० टी०–एवं वनवासायोग्यं वय इत्युक्त्वा गुणवत्तया प्रव्राजनानर्हत्वमाह–रामेतीति । गुणवान् सौशील्यवान् ॥ ११ ॥

१२–१५ ] ति० टी०–कामार्तः कैकेयीकामार्तः ॥ १२–१५ ॥

रा० टी०–कामार्त इति । कामार्तः कामेन किंचिद्विषयकेच्छया आर्तो युक्तः महाराजो दशरथः कैकेय्याः प्रियकामार्थं प्रियः प्रीतिविषयीभूतः अत एव कामः इच्छाविषयीभूतो योऽर्थः तमुद्दिश्य रामं नाभ्यषेचयत् ॥ १२ ॥

गो० टी०–एवंभूतस्य प्रव्राजनं दशरथदोषकृतमित्याह–कामार्त इति । नाभ्यषेचयत् कैकेयीसंमतिं विनेति शेषः । तत्र हेतुः–प्रियकामार्थमिति । प्रियकरणकामाय प्रतिज्ञातकैकेयीप्रियकरणनिर्वाहायेत्यर्थः । तव प्रियं करिष्यामीति प्रथमप्रतिज्ञाकरणे हेतुः–कामार्त इति । कामार्ततया प्रथमं तव यत् प्रियं तत्कारिष्यामीति प्रतिज्ञाय पश्चाद्रामप्रव्राजने तया वृत्ते प्रतिज्ञाभङ्गं कर्तुमक्षमो नाभ्यषेचयदित्यर्थः ॥ १२ ॥

रा० टी०–अभिषेकायेति । पितुः समीपमागतं मम भर्तारं कैकेयी द्रुतमितीदमुवाच ॥ १३ ॥

गो० टी०–अभिषेकायेति । सामान्यत आह्वाने नाभिषेकाय भवितुमर्हति मदाह्वानमित्यागतमित्यर्थः । धृतं धैर्यमुक्तमिति क्रियाविशेषणम् ॥ १३ ॥

रा० टी०–तद्वचनाकारमाह–तवेति । हे राघव ! तव पित्रा ममाग्रे इदं समाज्ञप्तं शृणु ॥ १४ ॥

रा० टी०–तत्समाज्ञापनमेवाह–भरतायेति । इदं राज्यं भरताय प्रदातव्यं त्वया तु वने वस्तव्यम् अतः हे काकुत्स्थ ! त्वं प्रव्रज अनृतात् पितरं मोचय ॥ १५ ॥

गो० टी०–तवेत्यादिश्लोकद्वयमेकान्वयम् । त्वद्विषये पित्रा समाज्ञप्तं समाज्ञापनं मम मत्तः शृणु इदं राज्यं भरताय प्रदातव्यं तदर्थं त्वया नव पञ्च च वर्षाणि चतुर्दशवर्षाणीत्यर्थः, वने वस्तव्यं तदर्थं प्रव्रज अनृतात् प्रतिज्ञाभङ्गरूपात् ॥ १४ ॥ १५ ॥

१६–१७ ] ति० टी०–अनृतान्मोचय । तद्दत्तवरानुपालनेनेति शेषः ॥ १६ ॥ १७ ॥

रा० टी०–तथेति । दृढव्रतः अकुतोभयः मम भर्ता रामः तद्वचः श्रुत्वा तथेत्युवाच चकार च ॥ १६ ॥

गो० टी०–तथेतीति । अकुतोभयः राज्यत्यागवनवासाभ्यां भयरहितः ॥ १६ ॥

रा० टी०–ननु समर्थो रामः किमर्थमेवं चकार इत्यतो रामगुणानाह–दद्यादिति । हे ब्राह्मण ! दद्यात् प्रतिगृह्णीयात् न सत्यं ब्रूयात् वदेत् अनृतं न ब्रूयात् एतत् अनुत्तमं सर्वोत्कृष्टं व्रतं रामस्य रामे धृतं संस्थापितम् ॥ १७ ॥

गो० टी०–दृढव्रत इत्युक्तमुपपादयति–दद्यादिति । ध्रुवं निश्चलम् अनुत्तमम् अवश्यपरिपालनीयम् ॥ १७ ॥

१८–२० ] ति० टी०–वैमात्रः । शुभ्रादिषु विमातृशब्द॰

---

१ गुणवान् सत्यवानिति गो. पाठः । २ तु महातेजा इति गो. पाठः । ३ धृतमिति गो. पाठः । ४ हीति गो. पाठः । ५ उक्त्वा चेति गो. पाठः । ६ तस्या इति गो. पाठः । ७ ध्रुवं व्रतमिति गो. पाठः । ८ द्वैमात्र इति गो. पाठः । ९ धर्मचारीति गो. पाठः ।

प्रविष्टो दण्डकारण्यं धर्मनित्यो दृढव्रतः । ते वयं प्रच्युता राज्यात्कैकेय्यास्तु कृते त्रयः ॥ २१ ॥
विचराम द्विजश्रेष्ठ वनं गम्भीरमोजसा । समाश्वस मुहूर्तं तु शक्यं वस्तुमिह त्वया ॥ २२ ॥
आगमिष्यति मे भर्ता वन्यमादाय पुष्कलम् । रुरून्गोधान्वराहांश्च हत्वाऽऽदायाँमिषं बहु ॥ २३ ॥
स त्वं नाम च गोत्रं च कुलमाचक्ष्व तत्त्वतः । एकश्च दण्डकारण्ये किमर्थं चरसि द्विज ॥ २४ ॥
एवं ब्रुवत्यां सीतायां रामपत्न्यां महाबलः । प्रत्युवाचोत्तरं तीव्रं रावणो राक्षसाधिपः ॥ २५ ॥
येन वित्रासिता लोकाः सदेवासुरमानुषाः । अहं स रावणो नाम सीते रक्षोगणेश्वरः ॥ २६ ॥
त्वां तु काञ्चनवर्णाभां दृष्ट्वा कौशेयवासिनीम् । रतिं स्वकेषु दारेषु नाधिगच्छाम्यनिन्दिते ॥ २७ ॥
बह्वीनामुत्तमस्त्रीणामाहृतानामितस्ततः । सर्वासामेव भद्रं ते ममाग्रमहिषी भव ॥ २८ ॥
लङ्का नाम समुद्रस्य मध्ये मम महापुरी । सागरेण परिक्षिप्ता निविष्टा गिरिमूर्धनि ॥ २९ ॥

पाठेऽप्यार्षोऽण् । असहोदरो भ्रातेत्यर्थः । विभिन्नाया मातुरपत्यं वैमात्रः ॥ १८–२० ॥

रा० टी०–तस्येति । लक्ष्मणो नाम तस्य वैमात्रः विमातुः तज्जनकपितृपाणिगृहीतीभिन्नपितृपाणिगृहीत्या अयमत एव भ्राता रामस्य सहायः ॥ १८ ॥

गो० टी०–तस्येति । द्वयोर्मात्रोरपत्यं पुमान् द्वैमात्रः अण् प्रत्ययः । "मातुरुत्संख्ये–" इत्युदादेशाभाव आर्षः । गुर्वक्षरं च छान्दसम् । अरिहेति छन्दोवद्भावात् "बहुलं छन्दसि" इति सूत्रेण ब्रह्मादिभिन्नेऽप्युपपदे क्विप्, यद्वा अन्येभ्योऽपि दृश्यते दृशिग्रहणस्य विध्यन्तरोपसंग्रहार्थत्वाद्वा क्विप् ॥ १८ ॥

रा० टी०–स इति । दृढव्रतो लक्ष्मणो नाम स भ्राता धनुष्पाणिः सन् प्रव्रजन्तं रामं मया सह अन्वगच्छत् ॥ १९ ॥

गो० टी०–स इति । मया सह अन्वगच्छदित्यन्वयः ॥ १९ ॥

रा० टी०–जटीति । धर्मनित्यो दृढव्रतः सहानुजो लक्ष्मणसहितो रामः तापसरूपेण मया सह दण्डकारण्यं प्रविष्टः ॥ २० ॥

गो० टी०–जटीति । तापसरूपस्यानेकरूपत्वाज्जटीति विशेषयति ॥ २० ॥

२१ ] ति० टी०–कैकेय्याः कृते तन्निमित्तम् ॥ २१ ॥

रा० टी०–ते इति । हे द्विजश्रेष्ठ ! कैकेय्याः कृते कैकेयीप्रयत्ने सति राज्यात्प्रच्युताः कोशलायाः आगताः ते त्रयो वयं गम्भीरं वनमोजसा स्ववीर्येण विचराम विचरामः यतस्त्वया इह वस्तुं शक्यमतः मुहूर्तं समाश्वस तिष्ठ ॥ २१ ॥ २२ ॥

गो० टी०–ते वयमिति । कृते प्रयोजनाय क्रियते संपाद्यत इति कृत् संपदादित्वात् क्विप् । गम्भीरं दुष्प्रवेशम् ओजसा बलेन 'ओजो दीप्तौ बले' इत्यमरः ॥ २१ ॥

२२ ] ति० टी०–यदि वस्तुं शक्यं तर्हि मुहूर्तं समाश्वस । विश्रमं कुर्वित्यर्थः ॥ २२ ॥

गो० टी०–समाश्वसेति । समाश्वस समाश्वसिहि विश्रान्तिं कुर्वित्यर्थः, वस्तुं स्थातुं शक्यं पवित्रदेशत्वादिति भावः । पुष्कलं समग्रम् ॥ २२ ॥

२३ ] ति० टी०–हत्वा आदायेतिच्छेदः । आदनमादस्तदर्थमित्यर्थः ॥ २३ ॥

रा० टी०–तत्प्रयोजनमाह—आगमिष्यतीति । रुरुप्रभृतीन् हत्वा संताड्य पुष्कलं संपूर्णं बह्वधिकम् आमिषं भोग्यवस्त्वादाय गृहीत्वा आगमिष्यति एतेन तदागमनसमये ते महान् सत्कारो भवितेति ध्वनितम् ॥ २३ ॥

२४–२६ ] ति० टी०–गोत्रमार्षम् । कुलं प्रसिद्धवंश्यकृतम् । यद्वा गोत्रं पितृकुलम् । कुलं मातुः ॥ २४–२६ ॥

रा० टी०–स इति । सः प्रसिद्धाचरणस्त्वन्नामादि तत्त्वतः आचक्ष्व कथय । प्रश्नान्तरमाह—दण्डकारण्ये एकस्त्वं किमर्थं चरसि ॥ २४ ॥

गो० टी०–स त्वमिति । स त्वम् एवं समाश्वस्तस्त्वं कुलं गृहम् 'कुलमन्वयसंघातगृहपर्याश्रमेष्वपि' इति निघण्टुः । ननु संन्यासिनं प्रति कुलगोत्रप्रश्नोऽनुपपन्नः एकाकितयारण्ये संचारश्च यतेर्धर्म एव अतोऽसङ्गत इव प्रतिभातीति चेत् । उच्यते । पूर्वाश्रमनामगोत्रप्रश्नोऽयम् । भिक्षार्थं ग्रामं प्रविशेदिति श्रुत्या भिक्षोर्ग्रामसमीपारण्ये वस्तव्यं ननु ग्रामप्रसङ्गरहितेऽरण्य इति कथं भवान् भिक्षाप्रदजनरहितश्चरसीति प्रश्न उपपद्यते ॥ २३ ॥

रा० टी०–एवमिति । सीतायामेवं ब्रुवन्त्यां सत्यां रावणः तीव्रमुत्तरं प्रत्युवाच ॥ २६ ॥

गो० टी०–एवमिति । आत्मवैभवप्रकटनावसरप्रतीक्षकतया तीव्रं झटितीत्युक्तम् ॥ २४ ॥

रा० टी०–येनेति । येन लोकाः वित्रासिताः सः रक्षोगणेश्वरः रावणो नामाहम् ॥ २६ ॥

गो० टी०–येनेति । लोकाः जनाः ॥ २६ ॥

२७–२९ ] ति० टी०–दृष्ट्वा पूर्वं श्रुत्वा । अथ दृष्ट्वा चेत्यर्थः ॥ २७–२९ ॥

१ जितेन्द्रिय इति गो. पाठः । २ अर्धमेतत् गो. नास्ति । ३ आमिषान्बहूनिति गो. पाठः । ४ चाचक्ष्वेति गो. पाठः । ५ ब्रुवन्त्यामिति रा. पाठः । ६ पन्नगा इति गो. पाठः । ७ त्विति गो. पाठः । ८ नगेति गो. पाठः । ९ पुर्याश्रमेति भाति ।

तत्र सीते मया सार्धं वनेषु [1]विचरिष्यसि । न चास्य [2]वनवासस्य स्पृहयिष्यसि भामिनि ॥ ३० ॥
पञ्च दास्यः सहस्राणि सर्वाभरणभूषिताः । सीते परिचरिष्यन्ति भार्या भवसि मे यदि ॥ ३१ ॥

रा० टी०–त्वामिति । काञ्चनवर्णाभां सुवर्णवर्णभासदृशाभाविशिष्टां कौशेयवासिनीं त्वां दृष्ट्वा स्वकेषु दारेषु तदुपलक्षितपुत्रमित्रादिषु रतिं प्रीतिं नाधिगच्छामि त्वामेव निरन्तरं स्मरामीत्यर्थः, एतेन तद्रूपस्य सर्वलौकिकसुखविस्मारकत्वं सूचितम् ॥ २७ ॥

गो० टी०–त्वामिति । काञ्चनवर्णाभां स्वर्णवर्णतुल्यकान्तिम् ॥ २६ ॥

रा० टी०–बह्वीनामिति । इतस्ततः मम आहृतानां बह्वीनां सर्वासामुत्तमस्त्रीणाम् अग्रा उत्कृष्टा महिषी पूज्या भव ॥२८॥

गो० टी०–बह्वीनामिति । उत्तमस्त्रीणामिति निर्धारणे षष्ठी ॥ २७ ॥

रा० टी०–लङ्केति । सागरेण समुद्रेण परिक्षिप्ता परितः आवृता गिरिमूर्धनि निविष्टा संस्थापिता समुद्रस्य मध्ये लङ्का नाम या महापुरी तत्र तस्यां पुर्यां वनेषु तदारामेषु मया अर्धं संवृद्धं सेवितमित्यर्थः, यथा भवति तथा विचरिष्यसि अत एव सा मत्सेविता त्वमस्य वनवासस्य न स्पृहयिष्यसि वाञ्छिष्यसि । श्लोकद्वयमेकान्वयि ॥ २९ ॥ ३० ॥

गो० टी०–लङ्केति । समुद्रमध्ये वर्तमाने नगमूर्धनि गिरिशृङ्गप्रदेशे निविष्टा कृतनिवेशा सागरेण सगरनिर्मितेन समुद्रेण परिक्षिप्ता परिवृता पुरी मम अस्तीति शेषः ॥ २८ ॥

३० ] ति० टी०–वनेषूपवनेषु ॥ ३० ॥

गो० टी०–तत्रेति । वनेषु उद्यानेषु । अरण्यवासस्येति चतुर्थ्यर्थे षष्ठी ॥ २९ ॥

३१ ] ति० टी०–पञ्चेत्यादि । रक्षोयोनौ तमोगुणप्रधानायां जातत्वादुद्रिक्ततमसा भगवन्मायया ज्ञानाच्छादनादेवमुक्तिः । सर्वथा तत्त्वज्ञो रावणः कथमेवं वदेदिति तु श्रद्धाजाड्यमेव । तत्त्वज्ञचिह्नानुपलम्भात् । सीतारामौ सर्वेश्वरावित्येतन्मात्रज्ञानं रावणस्यास्त्येवेत्यपि श्रद्धाजाड्यमेव । विष्णुपुराणादिविरोधात् । तथा चोक्तं विष्णुपुराणे—'मैत्रेय उवाच—हिरण्यकशिपुत्वे च रावणत्वे च विष्णुना । अवाप निहतो भोगानप्राप्यानमरैरपि ॥ न लयं तत्र तेनैव निहतः स कथं पुनः । संप्राप्तः शिशुपालत्वे सायुज्यं शाश्वते हरौ ॥ एतदिच्छाम्यहं श्रोतुं सर्वधर्मभृतां वर । कौतूहलपरेणैतत्पृष्टो मे वक्तुमर्हसि ॥ पराशर उवाच—दैत्येश्वरस्य तु वधायाखिललोकोत्पत्तिस्थितिविनाशकारिणापूर्वं तनुं गृह्णता नृसिंहरूपमाविष्कृतम् । तत्र हिरण्यकशिपोर्विष्णुरयमित्येवं न मनस्यभूत् । निरतिशयपुण्यजातसंभूतमेतत्सत्त्वमिति रजउद्रेकप्रेरितैकाग्रमतिस्तद्भावनायोगात्ततोऽवाप्तवधहेतुकीं निरतिशयामेवाखिलत्रैलोक्याधिक्यधारिणीं दशाननत्वे भोगसंपदमवाप । नातस्तस्मिन्ननादिनिधने परब्रह्मभूते भगवत्यनालम्बनीकृते मनसस्तत्र लयम् । दशाननत्वेऽप्यनङ्गपराधीनतया जानकीसमासक्तचेतसो दाशरथिरूपधारिणस्तद्रूपदर्शनमेवासीत् । नायमच्युत इत्यासक्तिर्विपद्यतोऽन्तःकरणस्य मानुषबुद्धिरेव केवलमभूत् । विपद्यत इति विपद्यतोऽपीत्यर्थः । तस्मिन्नपि समये विष्णुत्वबुद्धिर्नासीदिति भावः पुनरच्युतविनिपातनमात्रफलमखिलभूमण्डलश्लाघ्यचेदिराजकुलजन्माव्याहतं चैश्वर्यं शिशुपालत्वे चावाप । तत्र त्वखिलान्येव भगवन्नामकारणान्यभवन् । नामानि गोविन्दादीनि कारणानि गवां रक्षणादिनीत्यर्थः । ततश्च तत्कारणकृतानां तेषामशेषाणामेवाच्युतनाम्नामनवरतमनेकजन्मसंवर्धितविद्वेषानुबन्धिचित्तो निनिन्दन्संतर्जनादिषूच्चारणमकरोत् । तच्च रूपमुत्फुल्लपद्मदलामलाक्षमत्युज्ज्वलपीतवस्त्रधार्यमलकिरीटकेयूरकटकोपशोभितमुदारपीवरचतुर्बाहुशङ्खचक्रगदावरमतिप्रौढवैरानुभवादटनभोजनस्नानासनशयनादिष्ववस्थान्तरेषु नैवापययावस्यात्मचेतसः । ततस्तमेवाक्रोशेषूच्चारयंस्तमेव हृदये धारयन्नात्मवधाय भगवदस्त्रचक्रांशुमालोज्ज्वलमक्षय्यतेजःस्वरूपं परमब्रह्मस्वरूपमपगतरागद्वेषादिदोषं भगवन्तमद्राक्षीत् । तावच्च भगवच्चक्रेणाशु व्यापादितः । तेन तत्स्मरणदग्धाखिलाघसंचयो भगवतैवान्तमुपनीतस्तस्मिन्नेव लयमुपययौ । एतत्तवाभिहितम् । भगवानिह कीर्तितः संस्मृतश्च द्वेषानुबन्धेनाप्यखिलसुरासुरादिदुर्लभं फलं प्रयच्छति किमुत सम्यग्भक्तिमन्तमिति । लोकदृष्ट्या तु सीतासादृश्यात्सीताबुद्ध्या हरणाच्चाततायित्वसंपत्त्या तद्वधे भगवतः प्रवृत्तिः । एवं चेदृशोक्तीनां यद्वातद्वाप्रकारेणान्यथा योजनप्रयासस्तीर्थादीनां विफल एव । विष्णुपुराणोक्तरीत्यैव भागवत उक्तम्—'एते चांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम्' इति । एते इत्यनेन पूर्वोक्ता अवतारा ऋष्यादयश्च परामृश्यन्ते पुंसः परमेश्वरस्य । तत्रावतारा अंशा ऋष्यादयः कलाः । यद्यपि कृष्णोऽप्यंश एव । तत्रैव दशमे 'तत्रांशेनावतीर्णस्य विष्णोर्वीर्याणि शंस नः' इत्याद्युक्तेः । 'उज्जहारात्मनः केशौ सितकृष्णौ महामुने इति विष्णुपुराणाद्युक्तेः । द्वितीये भागवतेऽप्येवमेव । भारतेऽप्येवमेव । एतेन तत्रांशेनावतीर्णस्येत्यादिदशमस्थश्लोकव्याख्यानमपास्तम् । तथापि तत्तत्कारणकृतनाम्नां तत्र लाभाद्बहुशो ज्ञानकार्यनाटनाच्च शङ्खचक्रादीनां प्रत्यक्षतो दर्शनाच्च स्वयं भगवानित्युक्तिः । नैतावता रामाद्यवताराणां ततो न्यूनत्वमिति भ्रमः कार्यः । श्रीधरोऽपि मत्स्याद्यवताराणां सर्वज्ञत्वसर्वशक्तिमत्त्वेऽपि यावदुपयोगमेव ज्ञानशक्त्याविष्कारः । अज्ञानाविष्कारश्च बहुशः । कृष्णे त्वन्त्योऽल्पः । यथाभिमन्युमरणे नाहं तत्र संनिहित आसमतस्तस्य मरण-

[1] विहरिष्यसीति गो॰ पाठः । [2] अरण्येति गो. पाठः ।

रावणेनैवमुक्ता तु कुपिता जनकात्मजा । प्रत्युवाचानवद्याङ्गी तमनादृत्य राक्षसम् ॥ ३२ ॥
महागिरिमिवाकम्प्यं महेन्द्रसदृशं पतिम् । महोदधिमिवाक्षोभ्यमहं राममनुव्रता ॥ ३३ ॥
सर्वलक्षणसंपन्नं न्यग्रोधपरिमण्डलम् । सत्यसंधं महाभागमहं राममनुव्रता ॥ ३४ ॥
महाबाहुं महोरस्कं सिंहविक्रान्तगामिनम् । नृसिंहं सिंहसंकाशमहं राममनुव्रता ॥ ३५ ॥
पूर्णचन्द्राननं रामं राजवत्सं जितेन्द्रियम् । पृथुकीर्तिं महाबाहुमहं राममनुव्रता ॥ ३६ ॥
त्वं पुनर्जम्बुकः सिंहीं मामिहेच्छसि दुर्लभाम् । नाहं शक्या त्वया स्प्रष्टुमादित्यस्य प्रभा यथा॥ ३७ ॥

---

मिति । यथा द्रौपद्याः सभायां नयनकाले नाहं द्वारकायां संनिहितः किंतु सौभवधार्थं गतोऽतो भवतामयं क्लेश इति । सौभवधे च मायिकं मृतवसुदेवशरीरं दृष्ट्वा मोह इत्याद्यज्ञाननाट्यमल्पम् । रामावतारेऽपि ज्ञानाविष्कारस्तत्र तत्र दर्शितो दर्शयिष्यते च । अवताराश्चेमे विराज एवांशाः । भागवते प्रथमे तृतीयेऽध्याये--'जगृहे पौरुषं रूपं भगवान्महदादिभिः । संभूतं षोडशकलमादौ लोकसिसृक्षया ॥' इत्यादिना वैराजं रूपमुक्त्वा 'एतन्नानावताराणां निधानं बीजमव्ययम् । यस्यांशांशेन सृज्यन्ते देवतिर्यङ्नरादयः ॥' इत्युक्तेः । एतदुक्तं वैराजं निधानं कार्यावसाने प्रवेशस्थानम् । बीजमुद्गमकारणम् अव्ययं स्वयं चिरस्थायि । न केवलमवताराणामेव बीजं किं तु सर्वेषामित्याह--यस्येति । यद्यपि विराट् जीव एव तथापि तदन्तर्यामिणस्तथोपासनायैवमुक्तम् । सितकृष्णकेशोद्धारेण च तेषां मूर्धन्यत्वेन मुख्यत्वात्तद्वन्मुख्ययोः प्रधानयोर्मदंशयोस्तत्त्वज्ञयोस्तद्वर्णयोर्वैकुण्ठस्थभूतलस्थयोर्विष्णुशेषयोरवतार इति सूचितम् । अत एवान्ते कृष्णं प्रति देवदूतेन त्वां विना स्वर्गो न शोभतेऽतस्त्वमागच्छेति निवेदितमिति स्पष्टं पुराणेषु । अत्र रामं प्रत्यपि तथैवोक्तम् । अंशत्वं चैषामौपाधिकम् । मायायाः सांशत्वादित्यलम् ॥ ३१ ॥

रा० टी०-पञ्चेति । यदि त्वं भवसि लङ्कायां तिष्ठसि तर्हि हे सीते ! सर्वाभरणभूषिताः पञ्च सहस्राणि मे मम भार्यास्ते दास्यः सत्यः परिचारिष्यन्ति ॥ ३१ ॥

गो० टी०-पञ्चेति । पञ्चसहस्राणि दास्यस्त्वां परिचरिष्यन्ति ॥ ३० ॥

३२ ] ति० टी०-रावणेति । कुपिता कुपितेव ॥ ३२ ॥

रा० टी०-रावणेनेति । एवं रामवियोगसूचनप्रकारेण रावणेनोक्ता अनवद्याङ्गी जनकात्मजा तं राक्षसं रावणमनादृत्य प्रत्युवाच ॥ ३२ ॥

गो० टी०-रावणेनेति । तुशब्देन पूर्वोक्तोपचारवचनविलक्षणवचना ॥ ३१ ॥

३३ ] ति० टी०-पर्वतसमुद्रोपमाभ्यां धैर्यगाम्भीर्ये दर्शिते ॥ ३३ ॥

रा० टी०-तत्प्रतिवचनाकारमाह-महेत्यादिभिः । महागिरिं सुमेरुमिवाकम्प्यमचलस्थितिं महेन्द्रः सदृशो यस्य महोदधिं समुद्रमिवाक्षोभ्यं रामं पतिमहमनुव्रता ॥ ३३ ॥

गो० टी०-महागिरिमिति । महेन्द्रसदृशं पतिं पतित्वे स्वामित्वे महेन्द्रतुल्यमित्यर्थः । अनुव्रता अनुकूलं व्रतं यस्याः सा राममुद्दिश्यानुव्रता ॥ ३२ ॥

३४ ] ति० टी०-न्यग्रोधपरिमण्डलं तत्सदृशपरिणाहं तद्वत्सर्वाश्रयं च राममुद्दिश्यानुसरणमेव व्रतं यस्याः सा ॥ ३४ ॥

रा० टी०-सर्वेति । सर्वलक्षणसंपन्नं सर्वसल्लक्षणैर्युक्तं न्यग्रोधपरिमण्डलं न्यग्रोधस्य महावटस्येव परिमण्डलं यस्य स्वाश्रितसंतापध्वंसकमित्यर्थः, सत्यसंधं सत्या संधा प्रतिज्ञा यस्य तं महाभागं राममहमनुव्रता ॥ ३४ ॥

गो० टी०-सर्वेति । न्यग्रोधपरिमण्डलं वटवृक्षमिव महापरिणाहं यद्वा न्यग्रोधवत् बहुशाखबन्धुस्तोमं तद्वत् सर्वसमाश्रयणीयमिति वा, यद्वा 'कूपोदकं वटच्छाया युवतीनां स्तनद्वयम् । शीतकाले भवत्युष्णमुष्णकाले च शीतलम्' इत्युक्तरीत्या सर्वकालेऽपि सर्वजनानुकूलमित्यर्थः ॥ ३३ ॥

३५ ] ति० टी०-सिंहस्य विक्रान्तं पदक्षेपस्तद्वत्पदनिक्षेपेण सगर्वगमनशीलम् । सिंहसंकाशं पराक्रमे इति भावः । नृसिंहमित्यस्य हिरण्यकशिपुहन्तृत्वं व्यङ्ग्यम् ॥ ३५ ॥

रा० टी०-महेति । सिंहविक्रान्तगामिनं सिंहस्य विक्रान्तं गमनमिव गच्छति तच्छीलं नृसिंहं पुरुषश्रेष्ठं सिंहसंकाशं सिंहमिव दुराधर्षं राममहमनुव्रता ॥ ३५ ॥

गो० टी०-महाबाहुमिति । सिंहवद्विक्रान्तं पराक्रमयुक्तं सगर्वमिति यावत् । तथा गच्छतीति सिंहविक्रान्तगामिनं सिंहसंकाशं पराक्रमे सिंहतुल्यं नृसिंहं पुरुषश्रेष्ठम् ॥ ३४ ॥

३६ ] ति० टी०-राजा चासौ वत्सः 'श्रेष्ठराजस्तम्' यद्वा दशरथपुत्रम् ॥ ३६ ॥

रा० टी०-पूर्णेति । राजवत्सं राजश्रेष्ठं राजपुत्रं वा पृथुकीर्तिं महाकीर्तिमन्तं राममहमनुव्रता बहुवारमनुव्रतत्वोक्त्या रामवियोगस्यात्यन्तायोग्यत्वं व्यञ्जितम् ॥ ३६ ॥

गो० टी०-पूर्णेति । राजवत्सं राजकुमारम् ॥ ३५ ॥

३७ ] ति० टी०-यथादित्यप्रभादित्यात्पृथक्कृत्य केनापि स्प्रष्टुमशक्या, तथाहं शक्तिशक्तिमतोरवियोगादिति गूढम् ॥ ३७ ॥

रा० टी०-इदानीं त्वं ममानयनार्हो नासीति बोधय-

---

१ महात्मानमिति गो. पाठः । २ मामिच्छसि सुदुर्लभामिति गो. पाठः ।

पादपान्काञ्चनान्नूनं बहून्पश्यसि मन्दभाक् । राघवस्य प्रियां भार्यां यस्त्वमिच्छसि [1]राक्षस ॥ ३८ ॥
क्षुधितस्य च सिंहस्य मृगशत्रोस्तरस्विनः । आशीविषस्य वदनाद्दंष्ट्रामादातुमिच्छसि ॥ ३९ ॥
मन्दरं पर्वतश्रेष्ठं पाणिना हर्तुमिच्छसि । कालकूटं विषं पीत्वा स्वस्तिमान्गन्तुमिच्छसि ॥ ४० ॥
अक्षि सूच्या प्रमृजसि जिह्वया [2]लेढि च क्षुरम् । राघवस्य प्रियां भार्यामधि[3]गन्तुं त्वमिच्छसि ॥ ४१ ॥
अवसज्ज्य शिलां कण्ठे समुद्रं तर्तुमिच्छसि । [4]सूर्याचन्द्रमसौ चोभौ पाणिभ्यां हर्तुमिच्छसि ॥ ४२ ॥
यो रामस्य प्रियां भार्यां प्रधर्षयितुमिच्छसि । अग्निं प्रज्वलितं दृष्ट्वा वस्त्रेणाहर्तुमिच्छसि ॥ ४३ ॥
[5]कल्याणवृत्तां यो भार्यां रामस्याहर्तुमिच्छसि । अयोमुखानां शूलानां [6]मध्ये चरितुमिच्छसि ॥
रामस्य सदृशीं भार्यां योऽधिगन्तुं त्वमिच्छसि ॥ ४४ ॥

यदन्तरं सिंहसृगालयोर्वने यदन्तरं [7]स्यन्दनिकासमुद्रयोः ।
सुराग्र्यसौवीरकयोर्यदन्तरं तदन्तरं [8]दाशरथेस्तवैव च ॥ ॥ ४५ ॥

न्त्याह—त्वमिति । जम्बुकः शृगालस्त्वं दुर्लभां सिंहीं मामिच्छसि अत आदित्यस्य प्रभेव त्वया स्प्रष्टुं रामात्पृथक्कृत्य नेतुं नाहं शक्या एतेन स्वस्या रामतेजोरूपवह्निना आवृतात्वं सूचितमत एव लक्ष्मणप्रेषणसमये अग्निं वा प्रवेक्ष्यामि अन्यं पुरुषं न स्प्रक्ष्यामीति तत्कृतप्रतिज्ञाया न हानिः ॥ ३७ ॥

गो० टी०—एवं स्वभर्तुरतिशयमुक्त्वा तस्य हीनत्वमाह—त्वमित्यादिना । त्वं तु जम्बुकः गोमायुः निगीर्याध्यवसानं तथा सिंहीमित्यत्रापि । आदित्यस्य प्रभेव रामस्याविनाभूताहं त्वया स्प्रष्टुं न शक्येत्यर्थः ॥ ३६ ॥

३८ ] ति० टी०—काञ्चनवृक्षदर्शनं मुमूर्षुलक्षणम् । मन्दं क्षीणमायुरादि भजति स मन्दभाक् ॥ ३८ ॥

रा० टी०—ममानयने त्वद्ध्वंसोऽवश्यं भवितेति बोधयन्नाह—पादपानिति । यस्त्वं राघवस्य प्रियां भार्यामिच्छसि नेतुमिति शेषः, स मन्दभाक् मध्यमसेवकस्त्वं पादपान्वृक्षान्काञ्चनान्स्वर्णमयान् पश्यसि नूनं निश्चितमेतत् पादपानां काञ्चनमयत्वेन दर्शनं विनाशसूचकमिति पुराणादौ प्रसिद्धम् ॥ ३८ ॥

गो० टी०—पादपानिति । आसन्नमरणाः वृक्षान् स्वर्णमयान् पश्यन्तीति प्रसिद्धिः । मन्दभाक् मन्दभाग्यः यद्वा मन्दं क्षीणम् आयुरादिकम् भजतीति मन्दभाक् मदभिलाषयुक्तस्त्वं सद्यो मरिष्यसीति भावः ॥ ३७ ॥

३९-४० ] ति० टी०—क्षुधितस्य सिंहस्य सर्पस्य वदनाद्दंष्ट्राग्रहणेच्छासदृशी मदिच्छा । एषु सर्वत्र निदर्शनालंकारः ॥ ३९ ॥ ४० ॥

रा० टी०—क्षुधितस्येति । यस्त्वं राघवस्य भार्यामधिगन्तुं नेतुमिच्छसि स त्वं तरस्विनः अतिवेगवतः क्षुधितस्य मृगशत्रोः सिंहस्य आशीविषस्य अतिविषवत्कृष्णसर्पविशेषस्य च दंष्ट्रामादातुमिच्छसि अत्र रामस्य सिंहसर्पैक्यारोपात् दंष्ट्रायां च सीतयैक्यारोपात् निदर्शनालङ्कारः एवमुत्तरत्रापि यथासंभवमूह्यम् । पर्वतश्रेष्ठं मन्दरं पाणिना हर्तुमिच्छसि कालकूटं विषं पीत्वा स्वस्तिमान् कल्याणवान् सन् गन्तुमिच्छसि सूच्या अक्षि स्वनयनं प्रमृजसि जिह्वया क्षुरं क्षुरधारां लेढि । श्लोकत्रयमेकान्वयि ॥ ३९–४१ ॥

गो० टी०—क्षुधितस्येति । सर्वात्मना आदानस्याशक्यत्वज्ञापनाय विशेषणानि । आशीविषस्य सर्पस्य चकारो द्रष्टव्यः क्षुधितस्य तरस्विन इति चाशीविषस्यापि विशेषणम् । अत्र सदृशयोर्वाक्यार्थयोरैक्यारोपान्निदर्शनालंकारः ॥ ३८ ॥

गो० टी०—मन्दरमिति । अत्रापि राघवस्य भार्यां यस्त्वमिच्छसीत्यनुषज्यते । स्वस्तिमान् सुखित इत्यर्थः ॥ ३९ ॥

४१-४४ ] ति० टी०—लेढि लेक्षि ॥ ४१ ॥ ४४ ॥

गो० टी०—अक्षीति । स्वाक्षि प्रमजसि प्रकर्षेण मार्जनं करोषि लेक्षि लेहनं करोषि लिह आस्वादन इत्यस्माल्लुग्विकरणस्थाद्धातोर्लटि मध्यमपुरुषैकवचनम् । क्षुरं तीक्ष्णधारं शस्त्रम् अधिगन्तुं प्राप्तुम् ॥ ४० ॥

रा० टी०—अवेति । यस्त्वं रामस्य प्रियां भार्यां प्रधर्षयितुं प्रागल्भ्यान्नेतुमिच्छसि स त्वं कण्ठे शिलामवसज्य बद्ध्वा समुद्रं तर्तुमिच्छसि उभौ सूर्याचन्द्रमसौ पाणिभ्यां हर्तुमिच्छसि । सार्धश्लोक एकान्वयी ॥ ४२ ॥

गो० टी०—अवसज्येति । सार्धश्लोक एकान्वयः । अवसज्य बद्ध्वा ॥ ४२ ॥

रा० टी०—अग्निमिति । रामस्य भार्यामधिगतुं नेतुं यस्त्वमिच्छसि स त्वं प्रज्वलितमग्निं दृष्ट्वा वस्त्रेणाहर्तुमिच्छसि अयोमुखानां लोहमयतीक्ष्णाग्रभागानां शूलानां मध्ये चरितुं गन्तुमिच्छसि ॥ ४३-४४ ॥

गो० टी०—अ[illegible]मिति । कल्याणवृत्तां शुभाचाराम् ॥ ४३ ॥

गो० टी०—अयोमुखानामिति । अयोमुखानाम् अयोमयाग्राणां शूलानामग्रे शूलाग्रपङ्क्तिषु संचरितुमिच्छसीत्यर्थः ४४

४५ ] ति० टी०—स्यन्दनिका क्षुद्रनदी । सुराग्र्यममृतम् । सौवरिकमारनालं काञ्जिकम् ॥ ४६ ॥

१ रावणेति गो. पाठः । २ लेक्षीति गो. पाठः । ३ योऽधीति गो. पाठः । ४ सूर्यचन्द्रमसाविति रा. पाठः । ५ अर्धमेतत् रा. नास्ति । ६ अग्र इति गो. पाठः । ७ स्यन्दिनिकेति गो. पाठः । ८ वै तव राघवस्य चेति गो. पाठः ।

यदन्तरं काञ्चनसीसलोहयोर्यदन्तरं चन्दनवारिपङ्कयोः ।
यदन्तरं हस्तिबिडालयोर्वने तदन्तरं दाशरथेस्तवैव च ॥ ॥ ४६ ॥
यदन्तरं वायसवैनतेययोर्यदन्तरं मद्गुमयूरयोरपि ।
यदन्तरं [1]हंसकगृध्रयोर्वने तदन्तरं दाशरथेस्तवैव च ॥ ॥ ४७ ॥
तस्मिन्सहस्राक्षसमप्रभावे रामे स्थिते कार्मुकबाणपाणौ ।
हृतापि तेऽहं न जरां गमिष्ये [2]आज्यं यथा मक्षिकयावगीर्णम् ॥ ॥ ४८ ॥
इतीव तद्वाक्यमदुष्टभावा [3]सुदुष्टमुक्त्वा रजनीचरं तम् ।
गात्र[4]प्रकम्पाद्व्यथिता बभूव वातोद्धता सा कदलीव तन्वी ॥ ॥ ४९ ॥
तां वेपमानामुपलक्ष्य सीतां स रावणो मृत्युसमप्रभावः ।
कुलं बलं नाम च कर्म [5]चात्मनः समाचचक्षे भयकारणार्थम् ॥ ॥ ५० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

---

रा० टी०—ननु ममापि रामसदृशत्वात् कथं मद्विनाशं ब्रूषे इत्यत आह—यदित्यादिभिः । सिंहशृगालयोर्यदन्तरं तत्तन्निरूपितोत्तमाधमत्वयोरन्तरालमित्यर्थः, स्पन्दनिका क्षुद्रनदी सुरा अग्र्या पूर्वमुत्पन्ना यस्मात् अमृतमित्यर्थः, सौवीरमारनालं काञ्जिकमित्यर्थः ॥ ४५ ॥

गो० टी०—उक्तं रामोत्कृष्टत्वं रावणनिकृष्टत्वं च सदृष्टान्तमाह—यदन्तरमित्यादिना । सिंहसृगालयोः 'सृगालो वञ्चकः क्रोष्टा' इत्यमरः। यत् अन्तरं भेदः तारतम्यमिति यावत् 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये । छिद्रात्मीयविनाबाहिरवसरमध्येऽन्तरात्मनि च, इत्यमरः। वने जले विषये 'जीवनं भुवनं वनम्' इत्यमरः । स्यन्दिनिका स्यन्दितुम् प्रस्रवितुं शीलमस्या अस्तीति स्यन्दिनिका । ताच्छील्ये णिनिः अल्पार्थे कप्रत्ययः "केऽणः" इति ह्रस्वः क्षुद्रनदी स्यन्दिनिका सुराग्र्यं श्रेष्ठमद्यं सौवीरकं काञ्जिकम् । 'आरनालकसौवीरकुल्माषाभिषुतानि च । अवन्तीसोमधान्याम्लकुञ्जलानि च काञ्जिकम्' इत्यमरः॥ ४५ ॥

४६ ] ति० टी०—काञ्चनसीसरूपलोहयोरित्यर्थः । हस्ती गजः । बिडालो मार्जारः ॥ ४६ ॥

रा० टी०—यदिति । काञ्चनं सुवर्णं शीस एव लोहः लोहशब्दस्य धातुसामान्यपरत्वात्सामान्यविशेषयोरभेदः ॥४६॥

गो० टी०—यदिति । काञ्चनसीसलोहयोरित्यत्र लोहशब्दः प्रत्येकमभिसंबध्यते काञ्चनस्यापि नवलोहेषु परिगणनात् । चन्दनवारि चन्दनपङ्कः बिडालो मार्जारः ॥ ४६ ॥

४७ ] ति० टी०—मद्गुर्जलकाकः ॥ ४७ ॥

रा० टी०—यदिति । वायसः काकः, वैनतेयो गरुडः, मद्गुर्जलकाकः ॥ ४७ ॥

रा० टी०—यदिति । हंसको राजहंसः । अयं पृथक्तस्मिन्निति । तस्मिन्महान्तरालवति सहस्राक्षसमप्रभावे कार्मुकबाणपाणौ रामे स्थिते सति ते हृताप्यहं मक्षिकयाऽवगीर्णं भक्षितमाज्यमिव जरां जीर्णत्वं न गमिष्ये शीघ्रमेव रामो मामानेतेत्यर्थः ॥ ४८ ॥

गो० टी०—यदन्तरमिति । मद्गुः जलवायसः, सारसो हंसविशेषः ॥ ४७ ॥

४८ ] ति० टी०—जरां जीर्णावस्थां सुखोदर्काम् । मक्षिकयाऽवगीर्णं भुक्तभाज्यं यथा तां नाशयति तद्वत् ॥ ४८ ॥

गो० टी०—तस्मिन्निति । तस्मिन् रामे स्थिते सति जरां जीर्णतां मक्षिकया अवगीर्णं ग्रस्तं वज्रम् हीररत्नं मक्षिकया तण्डुलखण्डभ्रान्त्या ग्रस्तं हीररत्नमित्यर्थः । यथा न जीर्णं भवति, यद्वा मक्षिकया सहावगीर्णं भुक्तं वज्रम् आज्यम् "वज्रो वा आज्यम्" इति श्रुतेः यथा न जीर्णं भवतीत्यर्थः, तथा अहं त्वया हृतापि ते जीर्णतां न गमिष्ये न गमिष्यामि प्रत्युत तवैव मरणं प्रापयिष्यामीत्यर्थः ॥ ४८ ॥

४९ ] ति० टी०—इतीवेत्येवम् । सुदुष्टमत्यन्तदुःखजनकं तत्पूर्वोक्तं वाक्यम् । वातोद्धता महावातप्रकम्प्यमाना ॥ ४९ ॥

रा० टी०—इतीवेति । इतीव एवंरूपं वाक्यं सुदुष्टं रजनीचरं तं रावणमुक्त्वा अदुष्टभावा सा सीता गात्रप्रकम्पाद्धेतोः वातोद्धता कदली इव व्यथिता बभूव कदल्युपमया तस्य न वास्तवं दुःखमिति ध्वनितम् ॥ ४९ ॥

गो० टी०—इतीति । इतीव उक्तप्रकारसदृशं तद्वाक्यं सुधृष्टं यथा तथा उक्त्वा सा सीता वातोद्धता वाताहता कदलीव गात्रप्रकम्पव्यथिता शरीरकम्पेन पीडिता बभूव ॥ ४९ ॥

५० ] ति० टी०—भयकारणार्थं भयोत्पादनार्थम् ॥ ५० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

रा० टी०—तामिति । मृत्युसमप्रभावः स रावणः वेप-

---

१ सारसेति गो. पाठः । २ वज्रमिति गो. पाठः । ३ धृष्टमिति पाठः । ४ प्रकम्पव्यथितेति गो. पाठः । ५ च स्वमिति गो. पाठः ।

## अष्टचत्वारिंशः सर्गः ।

सीतया निन्दितो रावणः पुनः स्वकुलसंपत्प्रशंसापूर्वकं रामे दोषमारोप्य स्वाङ्गीकारं प्रार्थयते । प्राप्तक्रोधा सीता तं विनिन्द्य एवं बुद्धिस्ते विनाशहेतुरतश्चेत्पीतामृतोऽपि समूलं विनङ्क्ष्यसीत्याक्रोशति ।

एवं ब्रुवत्यां सीतायां संरब्धः परुषं वचः । ललाटे भ्रुकुटिं कृत्वा रावणः प्रत्युवाच ह ॥ १ ॥
भ्राता वैश्रवणस्याहं सापत्नो वरवर्णिनि । रावणो नाम भद्रं ते दशग्रीवः प्रतापवान् ॥ २ ॥
यस्य देवाः सगन्धर्वाः पिशाचपतगोरगाः । विद्रवन्ति सदा भीता मृत्योरिव सदा प्रजाः ॥ ३ ॥
येन वैश्रवणो भ्राता वैमात्रः कारणान्तरे । द्वन्द्वमासादितः क्रोधाद्रणे विक्रम्य निर्जितः ॥ ४ ॥
मद्भयार्तः परित्यज्य स्वमधिष्ठानमृद्धिमत् । कैलासं पर्वतश्रेष्ठमध्यास्ते नरवाहनः ॥ ५ ॥
यस्य तत्पुष्पकं नाम विमानं कामगं शुभम् । वीर्यादावर्जितं भद्रे येन यामि विहायसम् ॥ ६ ॥
मम संजातरोषस्य मुखं दृष्ट्वैव मैथिलि । विद्रवन्ति परित्रस्ताः सुराः शक्रपुरोगमाः ॥ ७ ॥

मानां तां सीतामुपलभ्य भयकारणार्थं सीतायां स्वापादानकभीत्युत्पत्त्यर्थम् आत्मनः कुलादि समाचचक्षे ॥ ६० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

गो० टी०—तामिति । वेपमानां कम्पमानाम् उपलक्ष्य तत्कम्पेन तद्भयमुपलक्ष्य भूयो भयजननेन एषा स्ववशीकर्तुं शक्येति मत्वा भयकारणार्थं भयोत्पादनार्थं स्वं स्वकीयं कुलादिकमाचचक्षे कर्म पौरुषम् ॥ ६० ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने सप्तचत्वारिंशः सर्गः ॥४७॥

---

१ ] ति० टी०—एवमिति । परुषम् क्रोधावेशेन वर्णानां चर्वणेनैवोच्चारणाच्छ्रुतिकटूक्षरमित्यर्थः । संरब्धः क्रुद्धः ॥ १ ॥

रा० टी०—सीतावचनश्रवणानन्तरकालिकं रावणोक्तिमुपक्रमते—एवमिति । सीतायामेवं ब्रुवन्त्यां सत्यां संरब्धः संक्रुद्धः रावणः भ्रुकुटीं ललाटे कृत्वा प्रत्युवाच 'संरम्भः संभ्रमः कोपः' इति विश्वः ॥ १ ॥

गो० टी०—एवं ब्रुवन्तीं सीतां रावणो भर्त्सयति—एवमित्यादिना । संरब्धः कुपितः संभ्रमाविष्टो वा ॥ १ ॥

२–३ ] ति० टी०—सापत्नः शिवाद्यण् । 'सापत्ने' इति पाठे मातृसपत्नीपुत्रत्वे प्रसिद्ध इत्यर्थः । भ्रातेत्यत्र च 'साक्षात्' इति तदा पाठः । एतेन कुलप्राशस्त्यमुक्तम् ॥ २ ॥ ३ ॥

रा० टी०—तत्प्रतिवचनाकारमाह—भ्रातेति । वरवर्णिनि हे उत्तमवर्णविशिष्टे ! यस्य भयात् मृत्योर्भीताः प्रजा इव देवादयो विद्रवन्ति येन च कारणान्तरे कस्मिंश्चित्कारणे सति द्वन्द्वं द्वन्द्वयुद्धम् आसादितः प्रापितः वैमात्रः विमातृपुत्रः वैश्रवणो भ्राता रणे क्रोधाद्विक्रम्य विक्रमं प्रकटय्य निर्जितः स वैश्रवणस्य कुबेरस्य सापत्न्यः मातृसपत्नीपुत्रः प्रतापवान् दशग्रीवः रावणो नाम भ्राताहमस्मीति शेषः, सापत्न्यशब्दः सपत्नीशब्दप्रकृतिकशिवाद्यणन्तप्रकृतिकस्वार्थष्यञन्तः 'द्वैमात्रः' इति पाठे द्वितीयाया मातुरपत्यमित्यर्थः । मातुरुदित्युत्वाभाव आर्ष इति भट्टाः । श्लोकत्रयमेकान्वयि ॥ २–४ ॥

गो० टी०—भ्रातेति । वैश्रवणस्य सपत्न्या मातुरपत्यं पुमान् सापत्नः सापत्न एव सापत्न्यः स्वार्थे ष्यञ् ॥ २ ॥

गो० टी०—यस्येति । यस्य संबन्धिनो भयात् देवादयः मृत्योर्भीताः प्रजा इव विद्रवन्ति ॥ ३ ॥

४ ] ति० टी०—वैमात्रः प्राग्वत् । 'द्वैमात्रः' इति पाठे द्वितीया माता द्विमाता । तदपत्यमित्यर्थे 'मातुरुत्' इत्युत्वाभाव आर्षः । अस्य द्विशब्दस्य द्विपूरणार्थत्वेऽपि संख्यार्थत्वाभावान्नोत्वमित्यन्ये । कारणान्तरे निमित्तविशेषे । द्वन्द्वं द्वन्द्वयुद्धम् आसादितः प्रापितः ॥ ४ ॥

गो० टी०—येनेति । द्वयोर्मात्रोरपत्यं द्वैमात्रः सपत्नीमातृपुत्र इत्यर्थः । कारणान्तरे कस्मिंश्चित् कारणावकाशे द्वन्द्वं युद्धम् 'द्वन्द्वं कलहयुग्मयोः' इत्यमरः ॥ ४ ॥

५ ] ति० टी०—स्वमधिष्ठानं स्वां पुरीं लङ्काम् । कैलासाश्रयणं प्रबलाश्रयणबुद्ध्या ॥ ५ ॥

रा० टी०—मदिति । येन विहायसमाकाशं यामि तत् यस्य तत्संबन्धि पुष्पकं वीर्यात् स्वपराक्रमात् आवर्जितं गृहीतं सः मद्भयार्तो नरवाहनः कुबेरः ऋद्धिमत् सकलसंपत्तिविशिष्टं स्वं स्वकीयमधिष्ठानं लङ्कामित्यर्थः, परित्यज्य पर्वतश्रेष्ठं कैलासमध्यास्ते । श्लोकद्वयमेकान्वयि ॥ ५ ॥ ६ ॥

गो० टी०—मदिति । स्वमधिष्ठानं स्वां पुरीं कैलासमध्यास्ते प्रबलावष्टम्भार्थमिति भावः । "अधिशीङ्स्थासां कर्म" इत्यधिकरणस्य कर्मसंज्ञा । नरवाहनः कुबेरः ॥ ५ ॥

६–७ ] ति० टी०—येन पुष्पकेण । वीर्यादावर्जितमाच्छिद्य गृहीतम् । मयेति शेषः ॥ ६ ॥ ७ ॥

गो० टी०—यस्येति । तत् प्रसिद्धं कामेन गच्छतीति

---

१ ब्रुवन्त्यामिति गो. रा. पाठः । २ सापत्न्य इति गो. रा. पाठः । ३ भयादिति गो. पाठः । ४ राजा द्वैमात्र इति गो. वैमात्र इति रा. पाठः । ५ मदिति गो. पाठः । ६ एवाजितमिति गो. पाठः ।

यत्र तिष्ठाम्यहं तत्र मारुतो वाति शङ्कितः । तीव्रांशुः शिशिरांशुश्च भयात्संपद्यते [1]दिवि ॥ ८ ॥
निष्कम्पपत्रास्तरवो नद्यश्च स्तिमितोदकाः । भवन्ति यत्र तत्राहं तिष्ठामि [3]च चरामि च ॥ ९ ॥
मम पारे समुद्रस्य लङ्का नाम पुरी शुभा । संपूर्णा राक्षसैर्घोरैर्यथेन्द्रस्यामरावती ॥ १० ॥
प्राकारेण परिक्षिप्ता पाण्डुरेण विराजिता । हेमकक्ष्या पुरी रम्या वैदूर्यमयतोरणा ॥ ११ ॥
हस्त्यश्वरथसंबाधा तूर्यनादविनादिता । सर्वकामफलैर्वृक्षैः संकुलोद्यानभूषिता ॥ १२ ॥
तत्र त्वं वस हे सीते राजपुत्रि मया सह । न स्मरिष्यसि नारीणां मानुषीणां मनस्विनि ॥ १३ ॥
भुञ्जाना मानुषान्भोगान्दिव्यांश्च वरवर्णिनि । न स्मरिष्यसि रामस्य मानुषस्य गतायुषः ॥ १४ ॥

---

कामगम् अविष्ठातृकामानुरूपं गच्छतीत्यर्थः, येन पुष्पकेण विहायसम् आकाशम् एतादृशविशेषणविशिष्टो यो रावणो नाम रावण इति प्रसिद्धः सोऽहमिति पूर्वेणान्वयः ॥ ६ ॥

रा० टी०–ममेति । हे मैथिलि ! संजातरोषस्य मम मुखं दृष्ट्वैव परित्रस्ताः शक्रपुरोगमाः सुराः विद्रवन्ति ॥ ७ ॥

गो० टी०–ममेति । विद्रवन्ति विद्रवेयुः ॥ ७ ॥

८ ] ति० टी०–तीव्रांशुरपि मम भयाच्छिशिरांशुः संपद्यते ॥ ८ ॥

रा० टी०–यत्रेति । यत्राहं तिष्ठामि तत्र मारुतः शङ्कितः सन् वाति तीव्रांशुः भयात् भीतेः शिशिरांशुः शीतकिरणः संपद्यते भवति ॥ ८ ॥

गो० टी०–यत्रेति । यत्र देशे तीव्रांशुश्च तीक्ष्णांशुरपि रविः मद्भयात् शिशिरांशुः शीतलांशुः संपद्यते ॥ ८ ॥

९ ] ति० टी०–यत्र चरामि येन मार्गेण गच्छामीति यावत् । यत्र च तिष्ठामि तत्र भवन्तीत्यन्वयः ॥ ९ ॥

रा० टी०–निष्कम्पेति । यत्राहं तिष्ठामि चरामि वा तत्र तरवो वृक्षाः निष्कम्पपत्राः नद्यश्च स्तिमितोदका भवन्ति । एकश्चो वार्थे ॥ ९ ॥

गो० टी०–निष्कम्पेति । पत्राण्यपि न चलन्तीत्यर्थः ॥९॥

१० ] ति० टी०–समुद्रस्य पारे मम लङ्का नाम पुरीत्यन्वयः ॥ १० ॥

रा० टी०–ममेति । घोरैः राक्षसैः संपूर्णा समुद्रस्य पारे इन्द्रस्यामरावतीव शुभा लङ्का नाम मम पुरी अस्तीति शेषः ॥ १० ॥

गो० टी०–ममेति । पारे पारसदृशे त्रिकूटे समुद्रस्य मध्य इति पूर्वमुक्तत्वात् यथेन्द्रस्यामरावती तथा मम लङ्का पुरी असाधारणेत्यर्थः, अस्तीति शेषः ॥ १० ॥

११-१२ ] ति० टी०–प्राकारस्य पाण्डुरत्वं सुधालेपाद्राजतत्वाद्वा । हेम्नः कक्ष्या अवच्छदा यस्यां सा । तोरणं पुरद्वारम् ॥ ११ ॥ १२ ॥

रा० टी०–पुरीमेव वर्णयन्नाह–प्राकारेणेति । पाण्डुरेण राजतत्वात् पाण्डुरवर्णविशिष्टेन प्राकारेण परिक्षिप्ता अत एव विराजिता विशेषेण शोभिता हेमकक्ष्या स्वर्णमयहर्म्यादिप्रकोष्ठविशिष्टा वैदूर्यमयानि तोरणानि बहिर्द्वाराणि यस्यां सा 'कक्ष्या बृहतिकायां स्यात्काञ्च्यां मध्येभबन्धने । हर्म्यादीनां प्रकोष्ठे च कार्श्ये हेतौ प्रयोजने' इति मेदिनी 'तोरणोऽस्त्री बहिर्द्वारं' इत्यमरः । हस्त्यश्वरथसंबाधा हस्त्यादिभिः पूर्णा सर्वकालफलैः सर्वेषु कालेषु फलन्ति तैः वृक्षैः संकुलानि व्याप्तान्येवोद्यानानि तैर्भूषिता मया सर्वलक्ष्म्या सह सहिता या पुरी लङ्का तत्र वसती वसन्ती त्वं मानुषीणां नारीणां न स्मरिष्यसि "अधीगर्थ–" इति षष्ठी । आगमशास्त्रस्यानित्यत्वात् नुमभावः । श्लोकत्रयमेकान्वयि ॥ ११-१३ ॥

गो० टी०–लङ्कां वर्णयति–प्राकारेणेति । रजतमयत्वात् पाण्डुरेण हेममय्यः कक्ष्याः हर्म्याङ्गणादयो यस्याः सा । 'कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने' इत्यमरः । तोरणो बहिर्द्वारं संबाधा संकुला तूर्यनादेन वाद्यशब्देन विनादिता । सर्वः कालो येषां तानि सर्वकालानि सर्वकालसंभवानीत्यर्थः, तादृशानि फलानि येषां तैः सर्वकालफलैः संकुलोद्यानैः व्याप्तोद्यानैः शोभिता एतादृशी सा पुरी रम्येत्यन्वयः॥११॥१२॥

१३ ] ति० टी०–मानुषीणां नारीणां न स्मरिष्यसि । शेषे षष्ठी । मन्नगरे दिव्यनारीसमागमादिति भावः । युगपन्मानुषदिव्यभोगस्तत्रान्यत्र तूभयं युगपद्दुर्लभमिति भावः ॥ १३ ॥

गो० टी०–तत्रेति । वसती वसन्ती अनित्यमागमशासनमिति नुमभावः । नारीणामिति "अधीगर्थ–" इति षष्ठी । मनस्विनी तत्समासक्तेत्यर्थः ॥ १३ ॥

१४ ] ति० टी०–गतायुष एकादशसहस्रसंख्यया मितायुषः । खरादिवधजक्रोधेन मया वधाद्वा तत्त्वम् ॥ १४ ॥

रा० टी०–भुञ्जानेति । हे वरवर्णिनि ! मानुषान् दिव्यांश्च भोगान् भुञ्जाना त्वं गतायुषः त्वद्वियोगदुःखेन नितान्यत्रप्रीतेः मानुषस्य रामस्य त्वं न स्मरिष्यसि षष्ठी पूर्ववत् ॥ १४ ॥

गो० टी०–भुञ्जानेति । मानुषान् मनुष्यलोकसंभवान् दिव्यान् स्वर्गसंभवान् गतायुषः गतप्रायायुषः अल्पायुष

---

१ रविरिति गो० पाठः । २ यत्रेति गो० पाठः । ३ वीति गो० पाठः । ४ शोभितेति गो० पाठः । ५ वसतीति गो० रा० पाठः ।

स्थापयित्वा प्रियं पुत्रं राज्ये दशरथो नृपः । मन्दवीर्यस्ततो ज्येष्ठः सुतः प्रस्थापितो वनम् ॥ १५ ॥
तेन किं भ्रष्टराज्येन रामेण गतचेतसा । करिष्यसि विशालाक्षि तापसेन तपस्विना ॥ १६ ॥
रक्ष राक्षसभर्तारं कामय स्वयमागतम् । न मन्मथशराविष्टं प्रत्याख्यातुं त्वमर्हसि ॥ १७ ॥
प्रत्याख्याय हि मां भीरु पश्चात्तापं गमिष्यसि । चरणेनाभिहत्येव पुरूरवसमुर्वशी ॥ १८ ॥
अङ्गुल्या न समो रामो मम युद्धे स मानुषः । तव भाग्येन संप्राप्तं भजस्व वरवर्णिनि ॥ १९ ॥
एवमुक्ता तु वैदेही क्रुद्धा संरक्तलोचना । अब्रवीत्परुषं वाक्यं रहिते राक्षसाधिपम् ॥ २० ॥
कथं वैश्रवणं देवं सर्वदेवनमस्कृतम् । भ्रातरं व्यपदिश्य त्वमशुभं कर्तुमिच्छसि ॥ २१ ॥

इत्यर्थः । अनेन भुञ्जाना मानुषान् भोगानिति पूर्वं सीतोक्तस्य परिहार उक्तः ॥ १४ ॥

१५ ] ति० टी०–यो रामो मन्दवीर्य इति ज्ञात्वा ज्येष्ठोऽपि राज्ये प्रियं भरतं स्थापयित्वा वनं प्रस्थापितः ॥ १५ ॥

१६ ] ति० टी०–तेन गतचेतसा किं करिष्यसीत्यन्वयः। भ्रष्टराज्यत्वाच्चेतोहीनत्वम् । तापसेन तपस्विना तापसश्रेष्ठतपस्विना । यद्वा तापसेन शोच्यत्वेन । तपस्विनाऽशूरेण ॥ १६ ॥

रा० टी०–रामप्रीतिमपाकुर्वन्नाह–स्थापयित्वेति । प्रियं पुत्रं भरतं राज्ये स्थापयित्वा ततः राज्यप्रयोजनाभावाद्धेतोः मन्दवीर्यः अल्पवीर्यत्वेन राज्यानर्ह इत्यर्थः, ज्येष्ठः सुतो यो रामः वनं प्रस्थापितः तेन भ्रष्टराज्येन अत एव गतचेतसा तापसेन तपोनिरतेन तपस्विना नित्यं विचारपरेण रामेण किं करिष्यसि । श्लोकद्वयमेकान्वयि ॥ १५ ॥ १६ ॥

गो० टी०–अथ रामस्य स्वापेक्षया उक्तमतिशयं प्रतिवक्ति–स्थापयित्वेत्यादिना । श्लोकद्वयमेकान्वयम् । प्रियं पुत्रं भरतं राज्ये स्थापयित्वा ततो राज्यात् प्रव्राजितः । ज्येष्ठत्वेऽपि प्रव्राजनान्मन्दवीर्यत्वं सिद्धमित्याह–तेनेति । तेन मन्दवीर्येण गतचेतसा कर्तव्याकर्तव्यमूढमनसा तापसेन 'भग्ना कृषेर्भागवता भवन्ति' इति न्यायेन। अशूरेण तपस्विना शोच्येन ' तपस्वी तापसः शोच्यः ' इति विश्वः । अनेन इतः परं राज्यं साधयिष्यतीत्याशा न कर्तव्येत्युक्तम् ॥ १५ ॥ १६ ॥

१७ ] ति० टी०–'रक्ष रक्षणे' रक्ष पालय ॥ १७ ॥

रा० टी०–रक्षेति । राक्षसभर्तारं मां रक्ष पालय मन्मथशराविष्टं रिपुमदध्वंसकशरैः आविष्टं पूर्णं पराजेतुमशक्यमित्यर्थः, कामात् स्वेच्छया स्वयमिहागतं मां प्रत्याख्यातुं त्वं नार्हसि 'सर्वराक्षस' इति तीर्थपाठः ॥ १७ ॥

गो० टी०–सर्वेति । सर्वराक्षसभर्तारं त्वया प्रार्थनीयमित्यर्थः । स्वयं कामात् अर्थितया इहागतं प्रत्याख्यातुं निराकर्तुं स्वयमागमने हेतुर्मन्मथेति॥ १७ ॥

१८ ] ति० टी०–उर्वशी पुरूरवसं चरणेनाभिहत्य यथा पश्चात्तापं गतेति पुराणेषु प्रसिद्धम् । तथा पश्चात्तापं गमिष्यसि ॥ १८ ॥

रा० टी०–प्रतीति । हे भीरु ! मां प्रत्याख्याय मत्प्रार्थितमनादृत्येत्यर्थः, त्वं पश्चात्तापं गमिष्यसि ॥ १८ ॥

गो० टी०–प्रत्याख्यानफलमाह–प्रत्याख्यायेति । भीरु इत्यनेन रामात् भीतिः प्रत्याख्यानमूलमिति मम मन इति ठयज्यते। परितापं पश्चात्तापम् । पुरूरवसं राजानं चरणेनाभिहत्य उर्वशीव। ऊरून् महतो वशीकरोतीत्युर्वशी वश कान्तौ पृषोदरादित्वादुकारलोपः । गौरादित्वात् ङीष् । एवं ह्रस्वादिस्तालव्यान्तश्च। तथाच माघयमकम् 'दधत्युरोजद्वयमुर्वशीतलं भुवो गतेव स्वयमुर्वशी तलम् ' इति । नारायणस्य ऊरौ वसतीति व्युत्पत्तावपि पृषोदरादित्वाद्वर्णलोपादिना ह्रस्वादिस्तालव्यान्त एव च युक्तः । उर्वशी किल स्वयमेव प्रार्थयन्तं पुरूरवसं प्रथमं निरस्य पश्चात्तापेन पुनस्तमागतेति पौराणिकी कथा ॥ १८॥

१९–२० ] ति० टी०–अङ्गुल्या न समोऽङ्गुलीबलेनापि तुल्यो न । अनेन मया नीतां पुना राम आनयिष्यतीति न शङ्क्यमिति भावः । संप्राप्तम् मामिति शेषः ॥ १९ ॥ २० ॥

रा० टी०–ननु मदपहरणे रामस्त्वां हनिष्यतीत्यत आह–अङ्गुल्येति । सः प्रसिद्धो मानुषो रामः युद्धे ममाङ्गुल्या न समः अतः तव भाग्येन त्वत्सेवार्थं संप्राप्तं मां भज स्वसेवकोचितप्रीतिं कुरु भाग्यशब्दस्तु सेवार्थकभजधातुप्रकृतिकघञन्तप्रकृतिकस्वार्थष्यञन्तः ॥ १९ ॥

गो० टी०–अङ्गुल्येति । अङ्गुल्या अङ्गुलिबलेन न समः न समबलः । संप्राप्तं मामिति शेषः ॥ १९ ॥

रा० टी०–एवमिति । एवमुक्ता रावणेन कथिता अत एव क्रुद्धा अत एव संरक्तलोचना रहिते सज्जनशून्यदेशे विद्यमाना वैदेही राक्षसाधिपं परुषं वाक्यमब्रवीत् ॥ २० ॥

गो० टी०–एवमिति । संरक्तेति कोपातिशयो द्योत्यते । रहिते निर्जने वने रागं विविक्ता इति वर्धयन्तीरिति रागजननौचित्येऽपि परुषमब्रवीत् । हन्त सीतायाः पातिव्रत्यमेतदिति ऋषिर्विस्मयते ॥ २० ॥

२१ ] ति० टी०–रहिते रामरहिते आश्रमे स्थितेति शेषः । ईदृशवंश्यस्येदृशं कृत्यमनुचितमिति मिथ्यैवान्यवंशं स्ववंशत्वेन कथयसीति व्यङ्ग्यम् ॥ २१ ॥

१ राज्ञा दशरथेन य इति गो. रा. पाठः । २ ह्ययमिति गो. पाठः । ३ सर्वेति गो. पाठः । ४ कामात्स्वयमिहागतमिति गो. रा. पाठः । ५ परितापमिति गो. पाठः । ६ सर्वभूतेति गो. पाठः ।

अवश्यं विनशिष्यन्ति सर्वे रावण राक्षसाः । येषां त्वं कर्कशो राजा दुर्बुद्धिरजितेन्द्रियः ॥ २२ ॥
अपहृत्य शचीं भार्यां शक्यमिन्द्रस्य जीवितुम् । [1]नहि रामस्य भार्यां मामानीय स्वस्तिमान्भवेत् ॥ २३ ॥
जीवेच्चिरं वज्रधरस्य [2]पश्चाच्छचीं प्रधृष्याप्रतिरूपरूपाम् ।
न मादृशीं राक्षस [3]धर्षयित्वा पीतामृतस्यापि तवास्ति मोक्षः ॥ ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डेऽष्टचत्वारिंशः सर्गः ॥ ४८ ॥

## एकोनपञ्चाशः सर्गः ।

भिक्षुवेषपरित्यागपूर्वं धृतनिजरूपो रावणः सान्त्वोक्त्या सीतां परिगृह्य रथे निवेशयँल्लङ्कां प्रतस्थे । गिरिनगनदीप्रभृतीन्स्वहरणवृत्तं रामाय निवेदयितुमाक्रन्द्य प्रार्थयन्माना सीताऽध्वनि प्राप्तं जटायुषमुच्चैराक्रुश्य स्ववृत्तं रामाय निवेदयितुं प्रार्थयते ।

सीताया वचनं श्रुत्वा दशग्रीवः प्रतापवान् । हस्ते हस्तं [4]समाहन्य चकार सुमहद्वपुः ॥ १ ॥

रा० टी०–तद्वचनाकारमाह–कथमित्यादिभिः । सर्वदेवनमस्कृतं देवं वैश्रवणं कुबेरं भ्रातरं स्वनिरूपितभ्रातृत्वविशिष्टं व्यपदिश्य उक्त्वा अशुभमपहरणरूपामङ्गलकारकं कर्म कथं कर्तुमिच्छसि ॥ २१ ॥

गो० टी०–कथमिति । पुण्यात्मनः कुबेरस्य भ्राता सन् कथं पापकर्मणि प्रवर्तस इत्यर्थः ॥ २१ ॥

२२-२३ ] ति० टी०–एवंभूतस्य राज्ञः प्रजानां सर्वथा नाशः । मम नयने सर्वजीवितच्छेद एवेति भावः ॥ २२॥२३॥

रा० टी०–अमङ्गलमेवाह–अवश्यमिति । हे रावण! कर्कशः परुषवाक् दुर्बुद्धिः दुष्टचित्तः अजितेन्द्रियस्त्वं येषां राक्षसानां राजा ते सर्वे राक्षसाः अवश्यं विनशिष्यन्ति विनङ्क्ष्यन्ति ॥ २२ ॥

गो० टी०–अवश्यमिति । कर्कशः क्रूरः ॥ २२ ॥

रा० टी०–दुर्बुद्धिज्ञापकं लिङ्गमाह–अपहृत्येति । इन्द्रस्य शचीं भार्यामपहृत्य जीवितुं शक्यं मामानीय तु स्वस्तिमान्न भवेत् ॥ २३ ॥

गो० टी०–अपहृत्येति । अपनीय स्थितस्य तवेति शेषः ॥ २३ ॥

२४ ] ति० टी०–अप्रतिरूपरूपामनुपमसौन्दर्याम् । मोक्षः मृत्योरिति शेषः । अतिमलिनान्तःकरणत्वान्मोक्षो ज्ञानैकप्राप्यस्तव नास्त्येवेति भावः ॥ २४ ॥

२५ ] ति० टी०–अत्र सर्गे रावणोक्तौ—'सप्तसप्तकवेत्ताहमष्टाष्टकविभूषितः । पञ्चपञ्चकतत्त्वज्ञो रावणोऽहं भजस्व माम् ।' इति श्लोकः क्वचित्पठ्यते । तमेवं व्याचक्षते—सप्तसप्तकं षडङ्गसहितवेदोपवेदसहितचतुर्दशविद्यारूपं तद्वेत्ता । अष्टाष्टकविभूषितश्चतुःषष्टिकलाभूषितः । पञ्चपञ्चकतत्त्वज्ञः पञ्चविंशतितत्त्वज्ञः पञ्चविंशतितत्त्वस्वरूपवेत्ता । नित्यानित्यवस्तुविवेकवानिति यावत् इति । स कतकाव्याख्यातत्वात्प्रक्षिप्त इति ज्ञायते । आद्यपादेऽर्थासंगतिरपि । परपादपर्यालोचनया तृतीयपादोक्तज्ञानवत ईदृशे कर्मणि प्रवृत्तिरप्यनुचितेति भाति ॥२६॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डेऽष्टचत्वारिंशः सर्गः ॥ ४८ ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–जीवेदिति । अप्रतिरूपरूपाम् अनुपमरूपविशिष्टां शचीं पश्चात् इन्द्रशून्यकाले प्रधृष्य अपहृत्येत्यर्थः, चिरं जीवेत् मादृशीं धर्षयित्वा पीतामृतस्यापि तव मोक्षः कल्याणं नास्ति ॥ २४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डेऽष्टचत्वारिंशः सर्गः ॥ ४८ ॥

गो० टी०–क्रोधातिशयेनोक्तमेव पुनराह–जीवेदिति । अप्रतिरूपम् अनुपमं रूपं यस्यास्तां मादृशीम् । अश्लीलत्वपरिहाराय न मामित्यनुक्तिः । मोक्षः मरणादिति शेषः । अमृतमपि न त्वद्रक्षणसमर्थमित्यर्थः ॥ २४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्यानेऽष्टचत्वारिंशः सर्गः ॥४८॥

१ ] ति० टी०–हस्ते हस्तं समाहन्य समाहत्येत्यर्थः, विनिष्पीड्येति यावत् । महिषादयस्त्रियैव हतास्तथा कदाचिदेषा हरणसमये क्रौर्यं कुर्यादिति शङ्कया क्रूरस्वीयमहद्रूपाङ्गीकारः । यद्वा कपटेनापि शान्तस्वभावयतिवेषधारणात्तद्वेषस्वाभाव्येन हरणे स्वस्य प्रतिबद्धतां दृष्ट्वा स्वरूपग्रहणम् । मम रावणस्याप्ययं वेषः क्रौर्यप्रतिबन्धक इत्यतश्च हस्ते हस्ताघात इत्यतश्च बोध्यम् ॥ १ ॥

रा० टी०–सीतावचनश्रवणानन्तरकालिकं रावणस्य दुर्वृत्तमाह–सीताया इत्यादिभिः । दशग्रीवो रावणः सीताया वचनं श्रुत्वा हस्ते हस्तं समाहत्य संयोज्य कोपचिह्नमेतत् वपुः स्वशरीरं सुमहत् अतिप्रवृद्धं चकार ॥ १ ॥

१ नच······मपनीयास्ति जीवितमिति गो. न त्विति रा. पाठः । २ हस्तादिति गो. पाठः । ३ दूषयित्वेति गो. पाठः । ४ हत्येति गो. रा. पाठः ।

स मैथिलीं पुनर्वाक्यं बभाषे [1]वाक्यकोविदः । नोन्मत्तया श्रुतौ मन्ये मम वीर्यपराक्रमौ ॥ २ ॥
उद्वहेयं भुजाभ्यां तु मेदिनीमम्बरे स्थितः । [2]आपिबेयं समुद्रं च मृत्युं हन्यां रणे स्थितः ॥ ३ ॥
अर्कं [3]तुद्यां शरैस्तीक्ष्णैर्विभिन्द्यां हि महीतलम् । [4]कामरूपेण उन्मत्ते पश्य मां कामरूपिणम् ॥ ४ ॥
एवमुक्तवतस्तस्य [5]रावणस्य शिखिप्रभे । क्रुद्धस्य हरिपर्यन्ते रक्ते नेत्रे बभूवतुः ॥ ५ ॥
सद्यः सौम्य परित्यज्य [6]तीक्ष्णरूपं स रावणः । [7]स्वं रूपं कालरूपाभं भेजे वैश्रवणानुजः ॥ ६ ॥
संरक्तनयनः श्रीमांस्तप्तकाञ्चनभूषणः । क्रोधेन महताविष्टो नीलजीमूतसंनिभः ॥ ७ ॥
दशास्यो [9]विंशतिभुजो बभूव क्षणदाचरः । स परिव्राजकच्छद्म महाकायो विहाय तत् ॥ ८ ॥
[10]प्रतिपेदे स्वकं रूपं रावणो राक्षसाधिपः । [11][संरक्तनयनः क्रोधाज्जीमूतनिचयप्रभः।]॥
रक्ताम्बरधरस्तस्थौ स्त्रीरत्नं प्रेक्ष्य मैथिलीम् ॥ ॥ ९ ॥

गो० टी०—यश्चिन्तनीयः सततमापत्सु परमासु च ।
नान्योऽस्ति चिन्तनीयस्तं सीतापतिमुपास्महे ॥

सीताया इत्यादि । हस्ते हस्तं समाहत्य संयोज्य । अयं च कोपाकृतिविशेषः ॥ १ ॥

२ ] ति० टी०—न श्रुतौ अग्रे वक्ष्यमाणाविति शेषः ॥२॥

रा० टी०—स इति । वाक्यकोविदो रावणः मैथिलीं पुनर्बभाषे । तद्वचनाकारमाह—उन्मत्तया त्वया मम वीर्यपराक्रमौ न श्रुतौ इत्यहं मन्ये ॥ २ ॥

गो० टी०—स इत्यादि । श्लोकत्रयमेकान्वयम् । ततः रूपकरणानन्तरम् उन्मत्तया त्वयेति शेषः । वीर्यपराक्रमौ पूर्वोक्ताविति शेषः । उद्वहेयम् उद्धरेयं विभिन्द्यां विदारयेयम् । महद्वपुरित्युक्तं दर्शयति—कामेति ॥ २–४ ॥

३ ] ति० टी०—तानेवाह—उद्वहेयमित्यादि । आपिबेयमिति ॥ ३ ॥

रा० टी०—उदिति । अम्बरे आकाशे स्थितोऽहं भुजाभ्यां मेदिनीं पृथ्वीमुद्वहेयं समुद्रं च पिबेयम् अ इत्यव्ययम् तदत्र त्वर्थे एवं च रणे स्थितोऽहं तु मृत्युं हन्याम् ॥ ३ ॥

४ ] ति० टी०—कामेन चित्तजेन रूपेण च उन्मत्ते इत्यर्थः ॥ ४ ॥

रा० टी०—अर्कमिति । तीक्ष्णैः शरैरर्कं सूर्यं तुद्यां महीतलं विभिन्द्याम् । ननु यत्किंचिन्महीतलदेशस्य विभेदः सर्वशक्यः सर्वमहीतलभेदस्तु एकदेशवृत्तित्वेन तवाप्यशक्य इति सर्वसाधारणत्वं त्वयीत्येतत्कथनमनर्थकमित्यत आह—कामरूपेण स्वेच्छाचारेण उपलक्षिते अत एव हे उन्मत्ते ! कामरूपिणं स्वेच्छारूपधारिणं मां पश्य एतेन पृथिवीपरिमितरूपस्यापि धारणसामर्थ्यं मय्यस्तीति सूचितम् ॥ ४ ॥

५ ] ति० टी०—हरिपर्यन्ते श्यामप्रान्ते ॥ ५ ॥

रा० टी०—एवमिति । एवमुक्तवतस्तस्य रावणस्य हरिपर्यन्ते श्यामप्रान्तदेशे रक्ते अरुणवर्णविशिष्टे नेत्रे शिखिप्रभे मयूरपुच्छसदृशे सदसद्दर्शनरहिते[12] इत्यर्थः बभूवतुः ॥ ५ ॥

गो० टी०—अथ सीतापहारोपयोगिरूपान्तरपरिग्रहमाह—एवमित्यादिना । सूर्यकल्पे शिखिप्रभे इति तेजस्यौष्ण्ये चोपमाद्वयम् । हरिपर्यन्ते पिङ्गलवर्णपर्यन्ते 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु' इत्यमरः ॥ ५ ॥

६–७ ] ति० टी०— सौम्यं भिक्षुरूपं तीक्ष्णरूपं प्रशस्ततीक्ष्णं रूपं मृत्युतुल्यरूपं भेजे ॥ ६ ॥ ७ ॥

रा० टी०—सद्य इति । वैश्रवणानुजः स रावणः सौम्यं भिक्षुरूपं सद्यः परित्यज्य कालरूपाभं स्वरूपं भेजे प्राप ॥ ६ ॥

गो० टी०—सद्य इति । स्वं स्वासाधारणं कालरूपाभं मृत्युशरीराभं वैश्रवणानुज इत्यनेन जन्मकारणे तुल्येऽपि हन्तान्यतरस्य क्रौर्यमित्युच्यते ॥ ६ ॥

गो० टी०—संरक्तेति । सार्धश्लोक एकान्वयः । श्रीमान् विचित्रशक्तिसंपन्नः क्षणदाचरः संरक्तनयनत्वादिविशिष्टो बभूव७

८–९ ] ति० टी०—परिव्राजकच्छद्म कपटपरिव्राजकरूपम् ॥ ८ ॥ ९ ॥

रा० टी०—तद्रूपं वर्णयँस्तदेवाह—संरक्तेति । संरक्तनयनः संरक्ते नयने यस्य सः नीलजीमूतसंनिभः नीलजीमूतो मेघः तत्सदृशः दशास्यः दशमुखविशिष्टः विंशतिर्भुजाः यस्य सः क्षणदाचरः राक्षसः स रावणः तत् गृहीतं परिव्राजकछद्म विहाय महाकायो बभूव । श्लोकद्वयमेकान्वयि ॥ ७ ॥ ८ ॥

रा० टी०—प्रतीति । रक्ताम्बरधरो रावणः स्वकं रूपं प्रतिपद्य स्त्रीरत्नं सर्वनारीश्रेष्ठं मैथिलीं प्रेक्ष्य तस्थौ ॥ ९ ॥

गो० टी०—उक्तानुवादपूर्वकं क्रौर्यान्तरमाह द्वाभ्याम्—स इत्यादि । परिव्राजकच्छद्म परिव्राजकरूपं परिव्राजकरूपेण परिष्टतं मां प्रेक्ष्य तस्थौ(?)किमेवंरूपं दृष्ट्वाऽपि मां भजिष्यतीति[13] प्रत्याशयेति भावः ॥ ८ ॥ ९ ॥

१ च ततो भृशमिति गो. पाठः । २ अपिबेयमिति रा. पाठः । ३ रुन्ध्यामिति गो. पाठः । ४ कामरूपिणमुन्मत्ते पश्य मां कामदं पतिमिति गो. पाठः । ५ सूर्यकल्पे इति गो. पाठः । ६ भिक्षुरूपमिति गो. रा. पाठः । ७ स्वरूपमिति रा. पाठः । ८ कुण्डल इति गो. पाठः । ९ कार्मुकी वाणीति गो. पाठः । १० प्रतिपद्येति गो. पाठः । ११ अर्धमेतदधिकं गो. पाठे । १२ रहिते इति युक्तं भाति । १३ भक्ष्यतीति युक्तं भाति ।

स तामसितकेशान्तां भास्करस्य प्रभामिव । वसनाभरणोपेतां मैथिलीं रावणोऽब्रवीत् ॥ १० ॥
त्रिषु लोकेषु विख्यातं यदि भर्तारमिच्छसि । मामाश्रय वरारोहे तवाहं सदृशः पतिः ॥ ११ ॥
मां भजस्व चिराय त्वमहं श्लाघ्यः पतिस्तव । नैव चाहं क्वचिद्भद्रे करिष्ये तव विप्रियम् ॥ १२ ॥
त्यज्यतां मानुषो भावो मयि भावः प्रणीयताम् । राज्याच्च्युतमसिद्धार्थं रामं परिमितायुषम् ॥ १३ ॥
कैर्गुणैरनुरक्तासि मूढे पण्डितमानिनि । यः [१]स्त्रियो वचनाद्राज्यं विहाय ससुहृज्जनम् ॥ १४ ॥
अस्मिन्व्यालानुचरिते वने वसति दुर्मतिः । इत्युक्त्वा मैथिलीं वाक्यं प्रियार्हां प्रियवादिनीम् ॥१५॥
अभिगम्य सुदुष्टात्मा राक्षसः काममोहितः । जग्राह रावणः सीतां बुधः खे रोहिणीमिव ॥ १६ ॥
वामेन सीतां पद्माक्षीं मूर्धजेषु करेण सः । ऊर्वोस्तु दक्षिणेनैव परिजग्राह पाणिना ॥ १७ ॥
तं दृष्ट्वा [४]गिरिशृङ्गाभं तीक्ष्णदंष्ट्रं महाभुजम् । प्राद्रवन्[३]मृत्युसंकाशं भयार्ता वनदेवताः ॥ १८ ॥
स च मायामयो दिव्यः खरयुक्तः खरस्वनः । प्रत्यदृश्यत हेमाङ्गो रावणस्य महारथः ॥ १९ ॥

---

१०-१२ ] ति० टी०—भास्करस्य प्रभामिव तस्या अपि पर्यन्ते श्यामरूपतायाश्छान्दोग्य उक्तिः ॥ १०-१२ ॥

रा० टी०—स इति । असितकेशामतिकृष्णकेशविशिष्टामित्यर्थः, भास्करस्य प्रभामिव तां मैथिलीं स रावणोऽब्रवीत् १०

गो० टी०—स इति । असितकेशान्तां नीलकेशाग्रां केशाग्रे पैङ्गलं दुर्लक्षणम् । भास्करस्य प्रभामित्यनेन दुष्प्रसहत्वमुच्यते वसनेत्यादिना दुस्त्यजत्वमुच्यते ॥ १० ॥

रा० टी०—तद्वचनाकारमाह—त्रिष्विति । त्रिषु लोकेषु सर्वभुवनेषु विख्यातं भर्तारं रामं यदि इच्छसि द्रष्टुमिति शेषः तर्हि मामाश्रय मया सह गच्छेत्यर्थः, एतेन मदुक्ताकरणे त्वां हनिष्यामीति सूचितम् । ननु रामभार्याहमन्येन राक्षसेन सार्कं कथं गमिष्यामीत्यत आह—सदृशः स्वसमानस्य राक्षसगणस्य पतिरहं तवैव सेवक इति शेषः, एतेन सीतादर्शनवशादहमपि साकेतस्थ इति क्षणिकज्ञानं जातमिति सूचितम् ॥ ११ ॥

गो० टी०—त्रिष्विति । वरारोहे वरजघने ॥ ११ ॥

रा० टी०—मामिति । श्लाघ्यः सर्वप्रशंसनीयः पतिः राक्षसाधिपोऽहं यतस्तवैव सेवकः अतो मां चिराय बहुकालं भजस्व सेवयस्व अत एव हे भद्रे! क्वचित् कदाचिदपि तव विप्रियम् अनीप्सितं न करिष्ये ॥ १२ ॥

गो० टी०—पुनस्त्यागशङ्कां मा कार्षीरित्याह—मामिति । क्वचित् क्वापीत्यर्थः ॥ १२ ॥

१३-१४ ] ति० टी०—मानुषो भावो मनुष्यरामविषयको भावः स्नेहबन्धः ॥ १३ ॥ १४ ॥

रा० टी०—ननु रामवियुक्ताहं कथमन्यत्र स्थास्यामीत्यत आह—त्यज्यतामिति । मानुषः मनुष्यरामसंबन्धी भावः नित्यमहं सेविकेति स्वभावः त्यज्यतां मयि भावः मन्निरूपितस्वसेव्यत्वरूपस्वभावः प्रणीयतां प्राप्यताम्, स्वतन्त्रा भवेत्यर्थः, अर्धं पृथक् । रामविषयकप्रीतिनिरासार्थमाह—राज्याच्च्युतमिहागतमत एव असिद्धार्थं न सिद्धः अर्थः राज्याभिषेको यस्य तं रामं कैर्गुणैरनुरक्तासि एतेन तवानुरागो न कार्य इति सूचितम् ॥१३॥

रा० टी०—य इति । यः स्त्रियो वचनात् ससुहृज्जनं राज्यं विहाय व्यालानुचरिते सर्पादिभिः सेवितेऽस्मिन्वने वसति स दुर्मतिस्त्यज्यतामिति शेषः ॥ १४ ॥

गो० टी०—त्यज्यतामिति । सार्धश्लोकद्वयमेकान्वयम् । मानुषः मनष्यरामविषयः भावः स्नेहबन्धः । य इति । व्याला हिंस्राः तमिति पूर्वेणान्वयः ॥ १३—१६ ॥

१५] ति० टी०—प्रियवादिनीम् रावणादन्यत्रेति शेषः॥१६॥

रा० टी०—इतीति । प्रियार्हां प्रियवचनयोग्यां प्रियवादिनीं मैथिलीम् इत्यप्रियं वचः उक्त्वा दुष्टात्मा काममोहितः कामेन अपहरणविषयकौतुकेच्छया मोहितः कर्तव्यविषयकविवेकरहितः रावणः अभिगम्य समीपं प्राप्य खे आकाशे रोहिणीं बुध इव जग्राह । अनेनोपमालङ्कारेण रावणस्य सीतायां मातृबुद्धिः जातेति सूचितम् ॥ १५ ॥ १६ ॥

गो० टी०—इतीत्यादि । सार्धश्लोक एकान्वयः । प्रियार्हत्वे हेतुः—प्रियवादिनीमिति । अत्र मुहूर्तं तिष्ठ भूयः सत्कारिष्यामीति प्रियभाषिणीं मैथिलीम् इत्युक्त्वा एवं परुषमुक्त्वा तत्र हेतुः—सुदुष्टात्मेति । बुधः खे रोहिणीमिवेत्यभूतोपमा । बुधः स्वपितृपत्नीत्वेन मातरं खे आकाशे सुखेन संचरन्तीं रोहिणीं यदि गृह्णीयात् तत्तुल्यमिदं पापमित्यर्थः ॥ १६ ॥

१६ ] ति० टी०—काममोहितो जग्राहेत्यत्यन्तानौचित्ये दृष्टान्तः । बुधः खे रोहिणीमिव । खे आकाशे शून्ये च । रौहिणेयो बुधो रोहिणीं स्वमातरं यदि कामाद्गृह्णीयात्तदा तत्सदृशमिदं घोरं यद्यथोक्तौ च कल्पनमित्यतिशयोक्तिरत्र व्यङ्ग्या । सीतया सद्यो मरणपर्यवसायिशापादानं तु समूलनाशनस्य वेदवत्यंशेन प्रतिज्ञातस्य निर्वाहाय ऋषीणां देवानामग्रे रामप्रतिज्ञातस्य च निर्वाहाय ॥ १६ ॥

१७-१९ ] ति० टी०—वामेनेति । अननुरक्ततया शापदानभिया । स्ववामाङ्गासनत्वनिवारणायैवं ग्रहणमित्याहुः ॥ १७-१९ ॥

---

१ प्रिय इति गो. पाठः । २ स्त्रिया इति गो. पाठः । ३ मृत्युसंकाशमिति गो. पाठः । ४ गिरीति गो. पाठः ।

ततस्तां परुषैर्वाक्यैरभितर्ज्य महास्वनः । अङ्केनादाय वैदेहीं रथमारोहयत्तदा ॥ २० ॥
सा गृहीतातिचुक्रोश रावणेन यशस्विनी । रामेति सीता दुःखार्ता रामं दूरं गतं वने ॥ २१ ॥
तामकामां स कामार्तः पन्नगेन्द्रवधूमिव । विचेष्टमानामादाय उत्पपाताथ रावणः ॥ २२ ॥
ततः सा राक्षसेन्द्रेण ह्रियमाणा विहायसा । भृशं चुक्रोश मत्तेव भ्रान्तचित्ता यथातुरा ॥ २३ ॥
हा लक्ष्मण महाबाहो गुरुचित्तप्रसादक । ह्रियमाणां न जानीषे रक्षसा कामरूपिणा ॥ २४ ॥
जीवितं सुखमर्थं च धर्महेतोः परित्यजन् । ह्रियमाणामधर्मेण मां राघव न पश्यसि ॥ २५ ॥
ननु नामाविनीतानां विनेतासि परंतप । कथमेवंविधं पापं न त्वं शाधि हि रावणम् ॥ २६ ॥

---

रा० टी०-वामेनेति । स रावणः वामेन करेण मूर्धजेषु कबरीपतितदेशेषु गलपश्चाद्भागे इत्यर्थः, मूर्धजशब्दोऽर्शआद्यजन्तः दक्षिणेन पाणिना तु ऊर्वोः सीतां जग्राह तेन तदानीं वियोगसंभावनया मूर्च्छा जातेति ध्वनितम् ॥ १७ ॥

गो० टी०-वामेनेति । शापकृतदोषो भविष्यतीति मूर्धजेष्वपि ग्रहणम् ॥ १७ ॥

रा० टी०-तमिति । गिरिशृङ्गाभं गिरिशृङ्गसदृशं मृत्युसंकाशं मृत्युवत्प्रतीयमानं तं सीतामपहरन्तं रावणं दृष्ट्वा भयार्ता वनदेवताः प्राद्रवन् ॥ १८ ॥

गो० टी०-तमिति। गृह्णन्तमित्यर्थः ॥ १८ ॥

रा० टी०-स इति । खरयुक्तः गर्दभैः संनद्धः अत एव खरस्वनः गर्दभस्वनविशिष्टः किं च अत्युग्रस्वनविशिष्टः मायामयः अत एव दिव्यः आकाशस्थः रावणस्य महारथः प्रत्यदृश्यत ॥ १९ ॥

गो० टी०-स चेति। सः पूर्वं गुप्तः मायामयः अन्तर्धानार्हतया आश्चर्यमयः खरयुक्तः अश्वतरयुक्तः हेमाङ्गः स्वर्णमयचक्रः चक्रं हि रथाङ्गमित्युच्यते ॥ १९ ॥

२० ] ति० टी०-परुषैरितः परं रामप्रत्याशा त्याज्येत्येवमादिभिः । अङ्केन हस्तान्तरैरित्यर्थः ॥ २० ॥

रा० टी०-तत इति । महास्वनः रावणः ततो ग्रहणानन्तरं परुषैर्वाक्यैर्वैदेहीमभितर्ज्य आदाय च अङ्केन शीघ्रगत्योपलक्षितं रथमारोपयत् ॥ २० ॥

गो० टी०-तत इति। अङ्केन ऊरुभागेन ॥ २० ॥

२१ ] ति० टी०-अतिचुक्रोशेत्यादि तच्छायाया अपि मनुष्यभावनाव्यम् ॥ २१ ॥

रा० टी०-सेति । रावणेन गृहीता अत एव अतिदुःखार्ता रामवियोगजनितदुःखाक्रान्ता यशस्विनी सीता दूरगतं रामं रामेति चुक्रोश ॥ २१ ॥

गो० टी०-सेति । वने दूरगतं राममुद्दिश्य रामेति विचुक्रोश। क्रुश आह्वाने रोदने च ॥ २१ ॥

२२ ] ति० टी०-अकामां विरागिणीम् । विचेष्टमानां तत आत्मानं मोचयितुम् ॥ २२ ॥

रा० टी०-तामिति । अकामां रामरहितगमनविषयकेच्छारहितामत एव विचेष्टमानां तां सीतां कामार्तः सीतानयनविषयकोत्कटेच्छावान् रावणः पन्नगेन्द्रवधूमिवादाय उत्पपात२२

गो० टी०-तामिति । अकामां विरागिणीं विचेष्टमानां रथोपरिस्थले लुठन्तीम् आदाय पुनरङ्केनादाय उत्पपात रथेन सहित इति शेषः ॥ २२ ॥

२३-२५ ] ति० टी०-मत्तेवातिदुःखवशादुन्मत्तेव तथा भ्रान्तचित्तातुरा शोकातुरा यथा क्रोशति तथा चुक्रोश । अत्रेवयथाभ्यां सर्वचेष्टानां नाट्यत्वं सूचितम् ॥ २३-२५ ॥

रा० टी०-तत इति । ततः रामरहितत्वात् हेतोः राक्षसेन्द्रेण विहायसा ह्रियमाणा अत एव मत्ता प्राप्तदैन्या अत एव यथा यथावदातुरा शोकसंकुला सा सीता भ्रान्तचित्ता इव भृशं चुक्रोश ॥ २३ ॥

गो० टी०-तत इति। आतुरा सा मत्तेव मदयुक्तेव भ्रान्तचित्ता यथा भ्रान्तचित्तेव च चुक्रोश ॥ २३ ॥

रा० टी०-क्रोशाकारमाह-हेति । गुरुचित्तप्रसादक रामचित्तप्रसादनतत्पर हे लक्ष्मण ! रक्षसा ह्रियमाणां मां न जानीषे ॥ २४ ॥

गो० टी०-हेति । अमर्षिणा खरवधकृतामर्षवता॥२४॥

रा० टी०-जीवितमिति । हे राघव ! धर्महेतोः जीवितादिकं परित्यजँस्त्वमधर्मेण ह्रियमाणां मां न पश्यसि किं न जानासि ॥ २५ ॥

गो० टी०-जीवितमिति । धर्महेतोः आश्रितसंरक्षणरूपधर्महेतोः जीवितं सुखमर्थांश्च परित्यजन् जीवितादिपरित्यागशीलः ॥ २५ ॥

२६ ] ति० टी०-ननु नामेति प्रसिद्धौ । विनेता शिक्षकः । न शाधि प्राप्तकालं शासनं न करोषि । हिर्वाक्यालंकारे । शोकातुरत्वाद्वाऽधिकपदं न दोषाय ॥ २६ ॥

रा० टी०-नन्विति । हे परंतप ! अविनीतानाम् उत्पथगामिनां विनेता सुमार्गप्रापकस्त्वमसि अतः एवंविधं पापं पापिनं रावणं कथं न शाधि ॥ २६ ॥

गो० टी०-नन्विति । ननु नामेति प्रसिद्धौ । अविनी-

---

१ भर्त्सयन्स इति गो. पाठः । २ आरोपयदिति गो. रा. पाठः । ३ विचुक्रोशेति गो. पाठः । ४ दूरगतमिति गो. रा. पाठः । ५ माममर्षिणेति गो. पाठः । ६ अर्थांश्चेति गो. पाठः । ७ शास्सीति गो. पाठः ।

ननु सद्योऽविनीतस्य दृश्यते कर्मणः फलम् । कालोऽप्यङ्गीभवत्यत्र सस्यानामिव पक्तये ॥ २७ ॥
त्वं[1] कर्म कृतवानेतत्कालोपहतचेतनः । जीवितान्तकरं घोरं रामाद्व्यसनमाप्नुहि ॥ २८ ॥
हन्तेदानीं सकामा तु कैकेयी बान्धवैः सह । ह्रियेयं धर्मकामस्य धर्मपत्नी यशस्विनः ॥ २९ ॥
आमन्त्रये जनस्थानं[2] कर्णिकारांश्च[3] पुष्पितान् । क्षिप्रं रामाय शंसध्वं[4] सीतां हरति रावणः ॥ ३० ॥
[ माल्यवन्तं[5] शिखरिणं वन्दे प्रस्रवणं गिरिम् । क्षिप्रं रामाय शंसध्वं सीतां हरति रावणः ॥ ]
हंससारससंघुष्टां[6] वन्दे गोदावरीं नदीम् । क्षिप्रं रामाय शंसध्वं[4] सीतां हरति रावणः ॥ ३१ ॥
दैवतानि[7] च यान्यस्मिन्वने विविधपादपे । नमस्करोम्यहं तेभ्यो भर्तुः शंसत मां हृताम् ॥ ३२ ॥
यानि कानिचिदप्यत्र सत्त्वानि विविधानि[8] च । सर्वाणि शरणं यामि मृगपक्षिगणानि वै ॥ ३३ ॥
ह्रियमाणां प्रियां भर्तुः प्राणेभ्योऽपि गरीयसीम् । विवशा ते[9] हृता सीता रावणेनेति शंसत ॥ ३४ ॥
विदित्वा तु[10] महाबाहुरमुत्रापि महाबलः । आनेष्यति पराक्रम्य वैवस्वतहृतामपि ॥ ३५ ॥

---

तानां दुर्जनानां विनेता शिक्षकः पापं पापिष्ठं कथं न शास्सि न शिक्षयसि ॥ २६ ॥

२७ ] ति० टी०-स्वयमेव तत्र हेतुमुन्नयति-नन्विति । अविनीतस्य पुरुषस्याविनयरूपकर्मणः फलं सद्यो न दृश्यते । यतस्तत्र कालोऽप्यङ्गीभवति सहकारिकारणं भवति । पक्तिः पाकः ॥ २७ ॥

रा० टी०-नेति । अविनीतस्य पुरुषस्य कर्मणः फलं सद्यो न दृश्यते अतः अत्र सद्यः फलाभावाय सस्यानां पक्तये पाकायेव कालोऽप्यङ्गीभवति कारणाङ्गत्वं प्राप्नोति ॥ २७ ॥

गो० टी०-आशासने स्वयमेव हेतुमुन्नयति-नन्विति । अविनीतस्य दुर्जनस्य कर्मणः पापस्य सद्यः फलं न दृश्यते । कुतः अत्र फलदर्शने कालोप्यङ्गीभवति सहकारिकारणं भवति । अभूततद्भावे च्विः पक्तये पाकाय ॥ २७ ॥

२८ ] ति० टी०-अधुना स्वेष्टं शापमाह-त्वमिति । व्यसनं पुत्रपौत्रादिनाशरूपम् ॥ २८ ॥

रा० टी०-रावणमुद्दिश्याह-त्वमिति । कालोपहृचेतनस्त्वं यतः एतदपहरणरूपं कर्म कृतवान् अतः जीवितान्तकरं जीवनध्वंसकं घोरं व्यसनं दुःखं रामात् प्राप्नुहि ॥ २८ ॥

गो० टी०-स इति । सः त्वमित्यर्थः । व्यसनं भ्रंशम् 'व्यसनं विपदि भ्रंशे' इत्यमरः ॥ २८ ॥

२९ ] ति० टी०-सकामा तु जातेति शेषः । यत इत्यादिः ॥ २९ ॥

रा० टी०-हन्तेति । यतो यशस्विनो रामस्य धर्मपत्नी अहं ह्रियेयमतः कैकेयी केकयीदासी मन्थरा बान्धवैः सह सकामा अस्मद्दुःखश्रवणेन संप्राप्तमनोरथा भवत्विति शेषः २९

गो० टी०-वने राक्षसादिभिर्हता भवेदिति मां कैकेयी वनं प्रेषितवतीति वैदेह्या हृदये सर्वदा स्थितं तदिदानीं सुप्रमत्तकुपितानां भावज्ञानं दृष्टमिति न्यायेनोद्घाटयति-हन्तेति । अत्र हेतुमाह-ह्रिये यदिति ॥ २९ ॥

३०-३३]ति०टी०-हरतीति शंसध्वमिति संबन्धः ३०-३३

रा० टी०-आमन्त्रये इति । जनस्थाने विद्यमानान् पुष्पितान् कर्णिकारान् अहमामन्त्रये प्रार्थयामि । तत्स्वरूपमाह-सीतां रावणो हरति इति क्षिप्रं रामाय शंसध्वं कथयत ३०

रा० टी०-माल्यवन्तमिति । शिखरिणं प्रशस्तशिखरविशिष्टं माल्यवन्तं प्रशस्तपुष्पविशिष्टं प्रश्रवणं गिरिं वन्दे । तत्प्रयोजनमाह-क्षिप्रं रामाय शंसध्वम् । अत्र वन्द्यमानयोरुद्भूतावयवत्वविवक्षया बहुवचनम् एवमुत्तरत्रापि ॥ ३१ ॥

गो० टी०-अथ चित्तविभ्रमातिरेकादचेतनानपि रामायाख्यातेत्यभ्यर्थयते-आमन्त्रय इत्यादिभिः सप्तश्लोकैः । आमन्त्रये संबोधयामि जनस्थाने स्थितानिति शेषः, कर्णिकारान् परिव्याधाख्यान् पुष्पवृक्षान् । रावणः सीतां हरतीति यत् एतच्छंसध्वं कथयत । एवमुत्तरत्रापि योज्यम् ॥ ३० ॥

गो० टी०-माल्यवन्तमिति । माल्यवन्तं पुष्पवन्तं शिखरिणं प्रशस्तशिखरं प्रस्रवणं प्रस्रवणाख्यम् ॥ ३१ ॥

रा० टी०-हंसेति । हंससारससंघुष्टां हंसादिभिः सेवितां गोदावरीं वन्दे ॥ ३२ ॥

गो० टी०-हंसेति । संघुष्टाः हंसाः सारसाश्च यस्यां सा । हंससारससंघुष्टा कर्तरि क्तः । 'हंसकारण्डवाकीर्णाम्' इति शुद्धः पाठः ॥ ३२ ॥

रा० टी०-दैवतानीति । विविधपादपे अनेकविधवृक्षविशिष्टे अस्मिन् वने यानि दैवतानि तेभ्यो नमस्करोमि । तत्प्रयोजनमाह-हृतां मां भर्तुः अग्रे इति शेषः शंसत कथयत॥३३॥

गो० टी०-दैवतानीति । तेभ्यो युष्मभ्यमिति शेषः॥३३॥

३४ ] ति० टी०-ते सीतेत्यन्वयः ॥ ३४ ॥

३५ ] ति० टी०-अमुत्रापि परलोकेऽपि गतां वैवस्वत-

---

१ स इति गो. पाठः । २ जनस्थाने इति गो. रा. पाठः । ३ स्विति गो. पाठः । ४ शंस त्वमिति गो. पाठः । ५ श्लोकोऽयमधिकः गो. रा. पाठे । ६ कारण्डवाकीर्णामिति गो. पाठः । ७ निवसन्त्युतेति गो. पाठः । ८ गणानपीति गो. पाठः । ९ अपेति गो. पाठः । १० मामिति गो. पाठः ।

सा तदा करुणावाचो विलपन्ती सुदुःखिता । वनस्पतिगतं गृध्रं ददर्शायतलोचना ॥ ३६ ॥
सा तमुद्वीक्ष्य सुश्रोणी रावणस्य वशंगता । समाक्रन्दद्भयपरा दुःखोपहितया गिरा ॥ ३७ ॥
जटायो पश्य मामार्य ह्रियमाणामनाथवत् । अनेन राक्षसेन्द्रेण करुणं पापकर्मणा ॥ ३८ ॥
नैष वारयितुं शक्यस्त्वया क्रूरो निशाचरः । सत्त्ववाञ्जितकाशी च सायुधश्चैव दुर्मतिः ॥ ३९ ॥
रामाय तु यथातत्त्वं जटायो हरणं मम । लक्ष्मणाय च तत्सर्वमाख्यातव्यमशेषतः ॥ ४० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्ड एकोनपञ्चाशः सर्गः ॥ ४९ ॥

## पञ्चाशः सर्गः ।

सीताक्रन्दश्रवणेन स्वापादुद्बुद्धो जटायुः सीतां हरन्तं रावणं दृष्ट्वा स्वनाम संश्राव्य जानकीं मोचयितुं प्रार्थयते । अथापि तेन तथा नानुष्ठिते योद्धुं संनद्धो बभूव ।

तं शब्दमवसुप्तस्तु जटायुरथ शुश्रुवे । निरैक्षद्रावणं क्षिप्रं वैदेहीं च ददर्श सः ॥ १ ॥
ततः पर्वतशृङ्गाभस्तीक्ष्णतुण्डः खगोत्तमः । वनस्पतिगतः श्रीमान्व्याजहार शुभां गिरम् ॥ २ ॥

---

हृतामपि मां विदित्वा पराक्रम्य पराक्रमं कृत्वा नेष्यत्येव, अतो यूयं शंसतेत्यन्वयः ॥ ३६ ॥

रा० टी०–यानीति । अत्र अस्मिन् वने यानि सर्वाणि सत्त्वानि तानि सर्वाणि मृगपक्षिगणश्च यामि स्वप्रयोजनबोधिकात्वेन प्राप्नोमि । तदेवाह–भर्तुः प्राणेभ्योऽपि गरीयसीं प्रियां भार्यां मां जानीतेति शेषः, अत एव रावणेन ते सीता हृता इति शरणं सर्वरक्षकं रामं शंसत । श्लोकद्वयं संमिलितान्वयि ॥३४॥३६॥

गो० टी०–यानीत्यादि । श्लोकद्वयमेकान्वयम् । सत्त्वानि जन्तवः । उतेति संबोधने समुच्चये वा । ह्रियमाणामिति । ह्रियमाणां प्राणेभ्योऽपि गरीयसीं प्रियां मां सीता रावणेन हृतेति भर्तुः शंसत रावणान्न भेतव्यं तत्त्वं कथयतेति भावः॥ ३४ ॥ ३६ ॥

रा० टी०–कथनप्रयोजनमाह-विदित्वेति। अमुत्र लोकान्तरे गतामिति शेषः, वैवस्वतहृतामपि मां विदित्वैव आनेष्यति३६॥

गो० टी०–कथने किं प्रयोजनं तत्राह—विदित्वेति । भवदुक्तप्रकारेण मां विदित्वा अमुत्र स्वर्गलोके गतामपि वैवस्वतहृतामपि मां पराक्रम्यानेष्यति तस्मादवश्यं शंसतेति भावः ३६

३६–३८ ] ति० टी०–गृध्रं जटायुषम् ॥ ३६–३८ ॥

रा०टी०–सेति। तदा तस्मिन्काले करुणाःवाचो विलपन्ती सुदुःखिता सा सीता वनस्पतिगतं वृक्षे स्थितं गृध्रं ददर्श॥३७॥

गो० टी०–सेति । करुणाः दीनाः । तात्कालिकहर्ष सूचयति–आयतलोचनेति ॥ ३७ ॥

रा० टी०–सेति । रावणस्य वशं गता अत एव भयपरा सा सीता तं जटायुषं समुद्वीक्ष्य दुःखोपहतया गिरा समाक्रन्दत् आह्वयत् ॥ ३८ ॥

गो० टी०–सा तमिति । समाक्रन्दत् 'क्रदि आह्वाने रोदने च' । दुःखोपहतया दुःखगद्गदया ॥ ३८ ॥

रा० टी०–तदाकारमाह–जटायो इति । हे जटायो ! पापकर्मणा अनेन राक्षसेन्द्रेण अकरुणं यथा भवति तथा अनाथवत् ह्रियमाणां मां पश्य ॥ ३९ ॥

गो० टी०–जटायो इति । आर्येति श्वशुरवत्संबोधनम् । करुणं यथा तथा ह्रियमाणाम् ॥ ३९ ॥

३९–४० ] ति० टी०–'तुभ्यम्' इति पाठे त्वयेत्यर्थे आर्षं तत् । न शक्य इत्यत्र हेतुः–सत्त्ववानित्यादि ॥ ३९ ॥ ४० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे एकोनपञ्चाशः सर्गः ॥ ४९ ॥

रा० टी०–नेति । सत्त्ववान् अतिबली जितकाशी जितेन बहुकर्मकजयेन काशते प्रकाशते तच्छीलः सायुधः अनेकविधायुधविशिष्टः दुर्मतिः कूटयोद्धा अत एव क्रूरः एष निशाचरः त्वया वारयितुं न शक्यः एतेन एतन्निवारणे त्वया न यतितव्यमिति सूचितं तेन सीतायाः दयालुत्वं व्यक्तम् ॥ ४० ॥

गो० टी०–नेति । अशक्यत्वे हेतुः सत्त्ववानित्यादिकम् । जितकाशी जयावहः दुर्मतिः कूटयोधी ॥ ४० ॥

रा० टी०–ननु मोचनप्रयत्नाभावे किमर्थं ममाह्वानमित्यत आह–रामायेति । हे जटायो ! रामाय लक्ष्मणाय च यथातत्त्वं याथार्थ्यमनतिक्रम्य सर्वं सावयवमपहरणम् अशेषतः आख्यातव्यं वक्तव्यम् ॥ ४१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे एकोनपञ्चाशत्तमः सर्गः ॥ ४९ ॥

गो० टी०–तर्हि मया किं कर्तव्यं तत्राह–रामाय त्विति । तत् अस्य दुर्जयत्वादेव हेतोः ॥ ४१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने एकोनपञ्चाशः सर्गः ॥ ४९ ॥

१–२ ] ति० टी०–तं शब्दं जटायो पश्य मामिति शब्दम्।

---

१ उपहतयेति गो. रा. पाठः । २ तवेति गो. पाठः । ३ कूटेति गो. रा. पाठः ।

दशग्रीव स्थितो धर्मे पुराणे सत्यसंश्रवः[1] । भ्रातस्त्वं निन्दितं कर्म कर्तुं नार्हसि सांप्रतम् ॥ ३ ॥
जटायुर्नाम नाम्नाहं गृध्रराजो महाबलः । राजा सर्वस्य लोकस्य महेन्द्रवरुणोपमः ॥ ४ ॥
लोकानां च हिते युक्तो रामो दशरथात्मजः । तस्यैषा लोकनाथस्य धर्मपत्नी यशस्विनी ॥ ५ ॥
सीता नाम वरारोहा यां त्वं हर्तुमिहेच्छसि । कथं राजा स्थितो धर्मे परदारान्परामृशेत् ॥ ६ ॥
रक्षणीया विशेषेण राजदारा महाबल । निवर्तय गतिं[3] नीचां परदाराभिमर्शनात् ॥ ७ ॥
न तत्समाचरेद्धीरो यत्परोऽस्य विगर्हयेत् । यथात्मनस्तथान्येषां दारा रक्ष्या विमर्शनात्[4] ॥ ८ ॥

---

अवसुप्तो भोजनोत्तरं दिवैव गाढसुप्तोऽपि शुश्रुवे । ततस्तेन शब्देन प्रबुद्धो रावणं निरैक्षत ॥ १ ॥ २ ॥

रा० टी०—सीताह्वानानन्तरकालिकं जटायुवृत्तान्तमाह—तमित्यादिभिः । अथ सीतोच्चारणानन्तरकाले अवसुप्तः केनचिन्निमित्तेन दिवैव गाढनिद्रो जटायुस्तं सीतोच्चारितशब्दं शुश्रुवे अत एव रावणं क्षिप्रं निरैक्षत् वैदेहीं च ददर्श ॥ १ ॥

गो० टी०—अथ स्वामिविषये दासेन यावच्छक्ति शेषवृत्तिरवश्यं कर्तव्येत्यमुमर्थं लोके प्रवर्तयितुं जटायुवृत्तान्तमुपक्षिपति सर्गद्वयेन । अत्र प्रथमं जटायुः सान्त्वनभर्त्सनाभ्यां रावणमनुकूलयितुमिच्छति—तं शब्दमित्यादि । अवसुप्तः ईषत्सुप्तो जटायुः अथ सीतावचनानन्तरं तं शब्दं शुश्रुवे । आत्मनेपदमार्षम् । ततः प्रथमं महाशरीरतया रावणं नीरीक्ष्य सः वैदेहीं ददर्श ॥ १ ॥

रा० टी०—तत इति । ततः सीतादिदर्शनानन्तरं पर्वतकूटाभः पर्वतखण्डवत्प्रतीयमानः वनस्पतिगतः वृक्षमारूढः खगोत्तमो जटायुः शुभां गिरं व्याजहार ॥ २ ॥

गो० टी०—तत इति । तीक्ष्णतुण्डः तीक्ष्णमुखः 'वक्त्रास्ये वदनं तुण्डम्' इत्यमरः । श्रीमान् कैङ्कर्यश्रीसमृद्धः शुभां रावणस्य शोभनावहाम् ॥ २ ॥

३ ] ति० टी०—दशग्रीवेति संबुद्धिः । अहं सत्यसंश्रवः सत्यप्रतिज्ञः, सीतारक्षणेऽहं सहाय इत्युक्तत्वादिति भावः । नाम्ना जटायुरिति प्रसिद्धेः, अतो मत्समक्षमीदृशं कर्म कर्तुं नार्हसि । भ्रातरिति सामप्रयोगः, यद्येवं न त्यक्ष्यासि तदा सत्यप्रतिज्ञत्वान्मया सह युद्धं भावीति दण्डप्रयोगश्च व्यङ्ग्यः ॥ ३ ॥

रा० टी०—तद्व्याहरणमेवाह—दशग्रीवेति । हे दशग्रीव ! हे भ्रातः ! यतः पुराणे सनातने धर्मे स्थितः अत एव सत्यसंश्रवः सत्यप्रतिज्ञो महाबलो गृध्रराजः नाम्ना जटायुर्नाम प्रसिद्धोऽहमस्मि अतः सांप्रतमिदानीं निन्दितं कर्म कर्तुं त्वं नार्हसि इदानीं नार्हसीत्यनेन सार्वकालिकीं तवाधर्मप्रवृत्तिमहं न निवारयामीति ध्वनितम् । सार्धश्लोक एकान्वयी ॥ ३ ॥

गो० टी०—दशग्रीवेति । पुराणे सनातने धर्मे दास्यवृत्ताविल्यर्थः, स्थितः तदेकपरायणः । सत्यम् "सत्यं ज्ञानमनन्तं ब्रह्म" इत्युक्तः परमात्मा संश्रयः आलम्बनं यस्य सः भगवदेकोपायनिष्ठ इत्यर्थः । नाम्ना जटायुर्नाम जटायुरिति प्रसिद्धः । तथा च मयि दासे स्थिते तव सीतापहरणं न युक्तमिति भावः ॥ ३ ॥

४ ] ति० टी०—राजेति । सर्वस्य लोकस्य राजत्वेन तवापि राजेति ध्वनितम् ॥ ४ ॥

रा० टी०—राजेति । सर्वस्य लोकस्य भुवनस्य राजा अत एव महेन्द्रवरुणौ उपमे उपमेयौ यस्य सः अत एव लोकानां सर्वभुवनानां हिते युक्तो निरतः यो दशरथात्मजो रामः तस्य लोकनाथस्य रामस्य यां त्वं हर्तुमिच्छसि सा एषा सीता नाम धर्मपत्नी अतो राजा राक्षसराजो अत एव धर्मे स्थितो भवान् परदारान् कथं परामृशेत् स्पृशेत् । सार्धश्लोकद्वयमेकान्वयि भवानित्यध्याहृतम् ॥ ४—६ ॥

गो० टी०—स्वस्वरूपमुक्त्वा स्वामिस्वरूपमाह—राजेति । महेन्द्रवरुणोपमत्वमेकदेशसाम्यात् । सर्वलोकस्य राजा स्वामी भवतोऽपि स्वामीत्यर्थः ॥ ४ ॥

५] ति० टी०—धर्मपत्नीत्यनेनैतद्धरणे महापापं सूचितम् ५

गो० टी०—तथा च राजदारापहारो न युक्त इत्याह—तस्येति । सहधर्मचारिणीति धर्मपत्नीशब्दार्थः ॥ ५ ॥

६] ति० टी०—कथं राजेति शेषः । धर्मे प्रजापालनरूपे ॥ ६ ॥

गो० टी०—मा भूत्तव रामे स्वामित्वबुद्धिः मनुष्यमात्रबुद्धिं राजबुद्धिं वा कृत्वा सीतां परिहरेत्याह—कथमिति । राजा भवानिति शेषः ॥ ६ ॥

७ ] ति० टी०—राजदारा इति तद्धरणस्य गुरुतल्पसमत्वादिति भावः ॥ ७ ॥

रा० टी०—रक्षणीयेति । हे महाबल ! राजदारा विशेषेण रक्षणीयाः अतः नीचां मतिं स्वनिश्चयं परदाराभिमर्शनात् निवर्तय ॥ ७ ॥

गो० टी०—राजत्वबुद्धिस्तव रामे मा भूत् तथापि परदाराभिमर्शनं न कार्यमित्याह—निवर्तयेति । परदाराभिमर्शनान्मतिं निवर्तय तद्विषयमतिं न कुर्वित्यर्थः । नीचत्वमेवाह—नेति । धीरः धीमान् तत्कर्म न समाचरेत् अस्य धीरस्य यत् कर्म परो विगर्हयेत् निन्देत् । यथेत्यर्धमेकं वाक्यम् । विपश्चिता विवेकिना ॥ ७ ॥

८ ] ति० टी०—अस्य पुरुषस्य परः स्वेतरः प्राणी यत्कर्म विगर्हयेत्, न तत्समाचरेत्स्वदारवत्परदाराश्च विमर्शनात्परस्पर्शाद्रक्ष्याः ॥ ८ ॥

---

१ संश्रय इति गो. पाठः । २ अर्धमेतत् गो. नास्ति । ३ मतिमिति गो. रा. पाठः । ४ विपश्चितेति गो. पाठः ।

अर्थं वा यदि वा कामं शिष्टाः शास्त्रेष्वनागतम् । व्यवस्यन्त्यनुराजानं धर्मं पौलस्त्यनन्दन ॥ ९ ॥
राजा धर्मश्च कामश्च द्रव्याणां चोत्तमो निधिः । धर्मः शुभं वा पापं वा राजमूलं प्रवर्तते ॥ १० ॥
पापस्वभावश्चपलः कथं त्वं रक्षसां वर । ऐश्वर्यमभिसंप्राप्तो विमानमिव दुष्कृती ॥ ११ ॥
कामस्वभावो यः सोऽसौ न शक्यस्तं प्रमार्जितुम् । नहि दुष्टात्मनामार्यमावसत्यालये चिरम् ॥ १२ ॥
विषये वा पुरे वा ते यदा रामो महाबलः । नापराध्यति धर्मात्मा कथं तस्यापराध्यसि ॥ १३ ॥
यदि शूर्पणखाहेतोर्जनस्थानगतः खरः । अतिवृत्तो हतः पूर्वं रामेणाक्लिष्टकर्मणा ॥ १४ ॥

---

रा० टी०–नेति । अस्य जनस्य यत्कर्म पर उत्कृष्टो जनो विगर्हयेत् निन्द्येत् तत् न समाचरेत् अत एव आत्मनो दारा इव अन्येषामपि दाराः विमर्शनात् परस्पर्शात् रक्ष्याः ॥ ८ ॥

९ ] ति० टी०–शास्त्रेष्वनागतं शास्त्रेष्वनवगतं परमसूक्ष्मत्वाच्छास्त्रतोऽनवगतमप्यर्थं वा राजानमनुसृत्य व्यवस्यन्ति । शास्त्रेऽस्फुटमपि राज्ञ आचरणं दृष्ट्वा प्रजा आचरन्ति तस्माद्राज्ञोऽधर्मप्रवृत्तिरनुचितेति तात्पर्यम् । 'न व्यवस्यन्ति राजानः' इति पाठे शास्त्रेष्वनागतं तत्राप्रतिपादितं धर्मं राजानो न व्यवस्यन्ति नेच्छन्तीत्यर्थः । तस्माच्छास्त्रानुसारियमेँ एव मतिं कुर्यादित्याशयः ॥ ९ ॥

रा० टी०–अर्थमिति । हे पौलस्त्यनन्दन ! शास्त्रेषु शास्त्रतः अनागतमनिश्चितमर्थं वा कामं वा धर्मं वाऽनुराजानं राजानमनुश्रित्य व्यवस्यन्ति निश्चिन्वन्ति आचरन्ति इत्यर्थः॥९॥

गो० टी०–अर्थमिति । शिष्टाः सन्तः राजानः शास्त्रेष्वनागतमनुपदिष्टं धर्ममर्थं वा यदि वाऽकामं कामं वा न व्यवस्यन्ति नेच्छन्तीत्यर्थः । लोके यथा तथा वा भवतु राज्ञस्तत्र सुतरां नेदमुचितमिति भावः ॥ ८ ॥

१० ] ति० टी०–तथा राजा द्रव्याणामुत्तमवस्तूनामुत्तमो निधिः । 'तथा धर्मश्च कामश्च' इति पाठे प्रजानामिति राजेति च शेषः । द्रव्याणामिति प्राग्वदेव । यतो धनादिकं राजमूलम् अतो राजा प्रजानां धर्मादिरूप इत्यर्थः । शुभं कामम् ॥ १० ॥

रा० टी०–राजेति । यतः धर्मो वा शुभं वा पापं वा राजमूलं सत् प्रवर्तते अतः धर्मादिः राजैव ॥ १० ॥

गो० टी०–न केवलं स्वार्थं लोकानुग्रहार्थं चेदं परिहर्तव्यमित्याह–राजेति । अत्र धर्मादिशब्दाः धर्मादिप्रवर्तकपराः । द्रव्याणामर्थानामुत्तमो निधिराश्रयः । यस्मादेवं तस्मात् धर्मः धर्मादिः राजमूलं यथा तथा प्रवर्तते । शुभं शुभाचारः पापं वा राजमूलं प्रवर्तते राजानुसारेण लोकाः धर्माधर्मादिषु प्रवर्तन्ते अतो राज्ञा पापं विहाय धर्मादिकमेव कर्तव्यमित्यर्थः॥९॥

११ ] ति० टी०–एवंभूतराजधर्महीने त्वयि कथमैश्वर्यागम इत्याह–पापेति । दुष्कृती स्वायोग्यं देवयानमिव ॥ ११ ॥

रा० टी०–पापेति । हे रक्षसांवर ! पापस्वभावः पापाचरणशीलः अत एव चपलस्त्वं दुष्कृती निषिद्धकर्मा विमानमिव ऐश्वर्यं कथं संप्राप्तः ॥ ११ ॥

गो० टी०–परदाराभिमर्शनमैश्वर्याद्भ्रंशकं चेत्याह–पापस्वभाव इति । पापं स्वभावः सहजधर्मो यस्य स पापस्वभावः अत एव चपलः विषयप्रवणः त्वं दुष्कृतिः विमानं देवार्हं विमानमिव ऐश्वर्यमभि ऐश्वर्यं प्रति कथं संप्राप्तः योग्यः । एवं विषयचपलश्चेदैश्वर्याद्भ्रष्टो भविष्यसीति भावः ॥ १० ॥

१२ ] ति० टी०–नन्वैश्वर्येण पुण्यमपि मय्यनुमीयतां तत्राह–कामेति । यः पुमान्कामस्वभावो भवति सोऽसौ तं स्वभावं प्रमार्जितुं न शक्यः । तन्मार्जनं हि "धर्मेण पापमपनुदति" इति श्रुतेर्धर्मेण स्यान्न च स तस्मिन्नस्तीत्याह–नहीति। यस्माद्दुष्टात्मनामालये आर्यं पूज्यं पुण्यं चिरं चिरकालेनापि नावसति ॥ १२ ॥

रा० टी०–कामेति । यः पुरुषः कामस्वभावः स्वेच्छाचरणशीलः सोऽसौ पुरुषः तं स्वेच्छाचरणरूपस्वभावं प्रमार्जितुं दूरीकर्तुं न शक्यः । नन्वेतादृशस्वभावे का हानिरित्यत आह–दुष्टात्मनां दुष्टस्वभावानामालये गृहे आर्यं श्रेष्ठत्वं ऐश्वर्यमिति यावत् चिरं न आवसति, यद्वा आर्य हे राक्षसश्रेष्ठ ! दुष्टानामालये मा लक्ष्मीर्नैव वसति ॥ १२ ॥

गो० टी०–एवं बहुसान्त्वनेऽपि सीताविसर्जनाकरणात् भवादृशे उपदेशो निरर्थक इत्याह–काममिति । यो यस्य स्वभावः औत्पत्तिकः स धर्मः कामम् अत्यन्तं परिमार्जितुं न शक्यः उपदेशेन निवर्तयितुं न शक्य इत्यर्थः । तथाहि आर्यं सदुपदेशः दुष्टात्मनाम् आलये हृदये चिरं नावसति न तिष्ठति ॥ ११ ॥

१३ ] ति० टी०–यदा रामः यस्माद्राम इत्यर्थः ॥ १३ ॥

रा० टी०–विषय इति । ते तव विषये देशे पुरे वा महाबली रामः यदा नापराध्यति तदा तस्य रामस्य त्वं कथमपराध्यसि ॥ १३ ॥

गो० टी०–शत्रुभार्यापहरणं मम स्वभाव इत्याशङ्क्य शात्रवप्रसक्तिरत्र नास्तीत्याह–विषये वेति । विषये राज्ये यदा नापराध्यति तदा तस्य कथमपराध्यसि ॥ १२ ॥

१४ ] ति० टी०–अनपराधोऽसिद्धः खरादिवधादित्याशङ्क्याह–यदीति । अनपराधे हेतुः–पूर्वमतिवृत्तोऽतिक्रान्तोचितवृत्तः ॥ १४ ॥

---

१ न राजान इति गो. पाठः । २ दुष्कृतिरिति गो. पाठः । ३ काममिति गो. पाठः । ४ परिमार्जितुमिति गो. पाठः ।

अत्र ब्रूहि यथातत्त्वं को रामस्य व्यतिक्रमः । यस्य त्वं लोकनाथस्य हृत्वा भार्यां गमिष्यसि ॥ १५ ॥
क्षिप्रं विसृज वैदेहीं मा त्वा घोरेण चक्षुषा । दहेद्दहनभूतेन वृत्रमिन्द्राशनिर्यथा ॥ १६ ॥
सर्पमाशीविषं बद्ध्वा वस्त्रान्ते नावबुध्यसे । ग्रीवायां प्रतिमुक्तं च कालपाशं न पश्यसि ॥ १७ ॥
स भारः सौम्य भर्तव्यो यो नरं नावसादयेत् । तदन्नमपि भोक्तव्यं जीर्यते यदनामयम् ॥ १८ ॥
यत्कृत्वा न भवेद्धर्मो न कीर्तिर्न यशो ध्रुवम् । शरीरस्य भवेत्खेदः कस्तत्कर्म समाचरेत् ॥ १९ ॥
षष्टिर्वर्षसहस्राणि जातस्य मम रावण । पितृपैतामहं राज्यं यथावदनुतिष्ठतः ॥ २० ॥
वृद्धोऽहं त्वं युवा धन्वी सरथः कवची शरी । न चाप्यादाय कुशली वैदेहीं मे गमिष्यसि ॥ २१ ॥
न शक्तस्त्वं बलाद्धर्तुं वैदेहीं मम पश्यतः । हेतुभिर्न्यायसंयुक्तैर्ध्रुवां वेदश्रुतीमिव ॥ २२ ॥

---

१५ ] ति० टी०—गमिष्यसीत्यत्र काकुः न जीवन् गमिष्यसीत्यर्थः ॥ १५ ॥

रा० टी०—ननु खरादयो अनेनैव निहता इति कथं नापराद्धमित्यत आह—यदीति । शूर्पणखाहेतोः दुर्वृत्तशूर्पणखासाहाय्यार्थं पूर्वं जनस्थानगतः अतिवृत्तः खरः यस्य लोकनाथस्य भार्यां हृत्वा त्वं गमिष्यसि तेन रामेण यदि हतः तर्हि रामस्य व्यतिक्रमः कः अत्र अस्मिन्विषये यथातत्त्वं त्वं ब्रूहि । श्लोकद्वयमेकान्वयि ॥ १४ ॥ १५ ॥

गो० टी०—खरवध एव ममापराध इत्याशङ्कयाह द्वाभ्याम्—यदित्यादि । वृत्तं मर्यादामतिक्रान्तोऽतिवृत्तः । अत्र हननविषये । यस्येति तस्येति पूर्वशेषः ॥ १३ ॥ १४ ॥

१६-१७] ति० टी०—त्वा त्वां घोरेण चक्षुषा मा दहेत् । राम इति शेषः । इन्द्राशनिरिन्द्रप्रयुक्तं वज्रम् ॥ १६ ॥ १७ ॥

रा० टी०—क्षिप्रमिति । वैदेहीं क्षिप्रं विसृज त्यज यतो दहनभूतेन वह्नित्वं प्राप्तेन घोरेण चक्षुषा इन्द्राशनिर्वृत्रमिव मा दहेत् राम इति शेषः ॥ १६ ॥

गो० टी०—प्रकृतमुपसंहरति—क्षिप्रमिति । अत्र राम इत्यध्याहार्यम् चक्षुषेत्यनेन दर्शनमात्रेण वधो लक्ष्यते । अशनिः वज्रम् ॥ १६ ॥

रा० टी०—विसर्गाभावेऽवश्यं तेऽनिष्टं भवितेति बोधयन्नाह—सर्पमिति । आशीविषं सर्पं वस्त्रान्ते बद्ध्वा त्वं नावबुध्यसे ग्रीवायां प्रतिमुक्तं प्रतिबन्धितं कालपाशं न पश्यसि ॥ १७ ॥

गो० टी०—सीताग्रहणमवश्यं मृत्युकरमित्याह—सर्पमित्यादि । आशीविषम् आशीविषाख्यं प्रतिमुक्तम् आमुक्तम् । यथा वस्त्रबद्धः सर्पोऽवश्यं नाशयति तद्वत् इयं सीता गृहीता त्वां नाशयिष्यतीति भावः । व्याजस्तुतिरलंकारः ॥ १६ ॥

१८ ] ति० टी०—भारो भारवद्द्रव्यम् । अनामयं रोगानुत्पादकम् ॥ १८ ॥

रा० टी०—स इति । यः भारः नरं वहन्तं नावसादयेत् स भर्तव्यः यत् अनामयं रोगासंपादकं सत् जीर्यते तदेव भोक्तव्यम् ॥ १८ ॥

गो० टी०—स भार इति । भारः भारद्रव्यं नावसादयेत् न पीडयेत् अनामयं व्याध्यनुत्पादकम् । अत्रापि पूर्ववद्व्याजस्तुतिः ॥ १७ ॥

१९ ] ति० टी०—यत्कर्म कृत्वा धर्मः कीर्तिः पारलौकिकी पुण्यातिशयजा बलावैश्वर्यातिशयजं यशस्तत्र भवेन्नोत्पद्येत् पूर्वार्जितं च धर्मादि न भवेन्नश्येत् । किं च येन शरीरस्य खेदस्तत्कर्म कस्त्वद्भिन्नः समाचरेत् न कोऽपीत्यर्थः ॥ १९ ॥

रा० टी०—यदिति । यत्कर्म कृत्वा धर्मादिर्न भवेत् शरीरस्य खेदो दुःखं च भवेत् तत्कर्म कः समाचरेत् न कोऽपीत्यर्थः ॥ १९ ॥

गो० टी०—यदिति । यत्कार्यं कृत्वा स्थितस्य न धर्मो भवेत् कीर्तिः ऐश्वर्यादिजनिता प्रथा वा न भवेत् यशः भोगित्वकृतप्रथा वा न भवेत् प्रत्युत शरीर दुःखमेव भवेत् तत्कर्म कः समाचरेत् मूढ एवाचरेत् तथाविधकर्मकरणाद्भवान्मूढ एवेति भावः ॥ १८ ॥

२० ] ति० टी०—षष्टिवर्षसहस्राणि गतानीत्यर्थः । राज्यम् पक्षिराज्यमित्यर्थः । पितृपैतामहं पितृपितामहेभ्य आगतमित्यर्थः ॥ २० ॥

२१ ] ति० टी०—मे वैदेहीं दशरथमित्रत्वान्मम स्नुषां वैदेहीमादाय न कुशली गमिष्यसीत्यर्थः ॥ २१ ॥

रा० टी०—एवमपहरणनिवृत्तिबोधकानेकवाक्योक्तावपि तन्निवृत्तिमनुपलभ्याह—षष्टिरिति । हे रावण ! पितृपैतामहं पितृपितामहेभ्य आगतं राज्यं पक्षिराजत्वं यथावदनुतिष्ठतः पालयतो मम जातस्य जन्मनः षष्टिर्वर्षसहस्राणि यतो व्यतीतानीति शेषः अतो वृद्धोऽहं तथापि युवत्वादिविशिष्टस्त्वं मे मम समक्षतः वैदेहीमादाय कुशली न गमिष्यसि । श्लोकद्वयमेकान्वयि ॥ २० ॥ २१ ॥

गो० टी०—मयि वृद्धत्वेनावमतिं मा कृथा इत्याशयेनाह द्वाभ्याम्—षष्टिरित्यादि । षष्टिर्वर्षसहस्राणि गतानीति शेषः । जातस्येत्यनेन वयसा जीर्णत्वमुच्यते । राज्यं यथावत् अनुतिष्ठतः पालयत इत्यनेन कर्मणा जीर्णत्वमुक्तम् । अहं धनुराद्युपकरणरहितः ॥ १९ ॥ २० ॥

२२ ] ति० टी०—मम पश्यतः मां पश्यन्तमनादृत्येत्यर्थः ।

---

१ युवेति गो. पाठः । २ षष्टिर्वर्षेति गो. रा. पाठः । ३ सशरः…रथीति गो. पाठः । ४ तथाप्यादाय वैदेहीं कुशली नेति गो. पाठः ।

युध्यस्व यदि शूरोऽसि मुहूर्तं तिष्ठ रावण । शयिष्यसे हतो भूमौ यथा पूर्वं खरस्तथा ॥ २३ ॥
असकृत्संयुगे येन निहता दैत्यदानवाः । न चिराच्चीरवासास्त्वां रामो युधि वधिष्यति॥२४ ॥
किं नु शक्यं मया कर्तुं गतौ दूरं नृपात्मजौ । क्षिप्रं त्वं नश्यसे नीच तयोर्भीतो न संशयः ॥ २५ ॥
नहि मे जीवमानस्य नयिष्यसि शुभामिमाम् । सीतां कमलपत्राक्षीं रामस्य महिषीं प्रियाम् ॥ २६ ॥
अवश्यं तु मया कार्यं प्रियं तस्य महात्मनः । जीवितेनापि रामस्य तथा दशरथस्य च ॥ २७ ॥
तिष्ठ तिष्ठ दशग्रीव मुहूर्तं पश्य रावण । वृन्तादिव फलं त्वां तु पातयेयं रथोत्तमात् ॥
युद्धातिथ्यं प्रदास्यामि यथाप्राणं निशाचर ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे पञ्चाशः सर्गः ॥ ५० ॥

---

न्यायसंयुक्तैर्वैशेषिकाद्युक्ततर्काभासयुक्तैर्हेतुभिर्हेत्वाभासैर्ध्रुवां सनातनीं धर्मब्रह्मपरां वेदश्रुतिम् । छान्दसो दीर्घः । तच्छास्त्राध्येता यथा पूर्वापरमीमांसान्यायविदोऽग्रे हर्तुमन्यथा कर्तुं न शक्नोति तद्वदित्यर्थः ॥ २२ ॥

रा० टी०–नेति । मम पश्यतः बलाद्वैदेहीं हर्तुं त्वं न शक्तः न समर्थः । तत्र दृष्टान्तः न्यायसंयुक्तैः न्याय्यत्वेन प्रतीयमानैः हेतुभिः नास्तिकाद्युक्तिभिरीश्वरो नास्त्यदृश्यत्वादित्याद्यनुमानघटकहेत्वाभासैः ध्रुवां क्षित्यङ्कुरादिकं सकर्तृकं कार्यत्वात् इत्याद्यनुमानेन "यतो वा इमानि भूतानि जायन्ते" इत्यादिशब्देन च 'दृश्यते त्वग्र्यया बुद्ध्या' इत्याद्युक्त्या प्रत्यक्षेण च 'कप्यासं पुण्डरीकमिव' इत्याद्युक्त्योपमानेन च सिद्धां वेदश्रुतीं वेदानां सामादीनां श्रुतयस्तात्पर्यवृत्त्या यस्यां परदेवतायां तामिव दीर्घ आर्षः ॥ २२ ॥

गो० टी०–एतदेव दृष्टान्तमुखेन द्रढयति–न शक्त इति । मम पश्यतः मयि पश्यति सति सीतां बलाद्धर्तुं न शक्तः न समर्थः । कथमिव न्यायसंसिद्धैः न्यायशास्त्रसंसिद्धैः हेतुभिः अनुमानैः ध्रुवां निश्चलाम् अविचाल्यप्रामाण्यामिति यावत् वेदश्रुतीमिव वेदश्रुतिमिव दीर्घ आर्षः । वेदयतीति वेदः स्वतःप्रमाणभूतां श्रुतिमित्यर्थः । यथा वेदविदग्रेसरे पश्यति सति हेतुकैः न्यायसिद्धैर्हेतुभिः श्रुतिः अन्यथा अन्यपरा नेतुं न शक्यते तद्वदिति भावः । अन्यपरार्थवादादिव्याख्यत्यर्थो वेदशब्दः । यथा तामन्यथा कुर्वन् स्वयमेव विनश्यति न वेदश्रुतेः कापि हानिः एवं सीतामपहरंस्त्वमेव नशिष्यसि न तु सीतायाः कापि हानिरित्याकूतम् । यथा वेदविदग्रेसरो वेदश्रुतिमन्यथा नीयमानामवलोकयन् तदसहमानो यावच्छक्ति निवर्तयति तथाऽहमपि त्वया बलान्नीयमानामपि सीतां यावच्छक्ति निवर्तयिष्यामीत्यर्थः ॥ २१ ॥

२३ ] ति० टी०–मुहूर्तं रामागमनपर्यन्तम् ॥ २३ ॥

रा० टी०–युध्यस्वेति । हे रावण ! यदि शूरोऽसि तर्हि तिष्ठ युध्यस्व यथापूर्वं खरः हतः सन् भूमौ अशयिष्ट तथा त्वं शयिष्यसे ॥ २३ ॥

गो० टी०–युध्यस्वेति । यदि शूरोऽसि मुहूर्तं तिष्ठ मा पलायस्व मया युध्यस्व । युद्धे मया हतस्त्वं पूर्वं रामेण हतः खर इव भूमौ शयिष्यसे । यद्वा यदि शूरोऽसि तदा मया युध्यस्व । अथवा रामागमनपर्यन्तं मुहूर्तं तिष्ठ तेन हतः शयिष्यस इति । यद्वा यदि शूरोऽसि मुहूर्तं तिष्ठ स्थित्वा तेन युध्यस्व ॥ २२ ॥

२४] ति० टी०–संयुगे रामेणेति शेषः । न वधिष्यति अपि तु वधिष्यतीत्यर्थः । अनेन रामस्येश्वरत्वं व्यङ्ग्यम् ॥ २४ ॥

रा० टी०–ननु मत्तस्त्वं न प्रबल इत्यत आह–असकृदिति । येन त्वया असकृत् बहुवारं देवदानवाः निहताः तं त्वां रामो वधिष्यति ॥ २४ ॥

गो० टी०–न केवलं स्वापराधप्रतीकारः किंतु देवानां दानवानां च सामान्यमधिदैवतमित्युक्तस्य रामस्य स्वकीयापराधप्रतीकारोऽपि भविष्यतीत्याह–असकृदिति ॥ २३ ॥

२५] ति०टी०–नश्यसे पलायसि । न संशयः इत्यन्वयः॥२५॥

रा० टी०–ननु तमाह्वयस्वेत्यत आह–किमिति । तौ नृपात्मजौ दूरं गतौ अतः किं कर्तुं मया शक्यः परंतु तयोः रामलक्ष्मणयोर्भीतस्त्वं क्षिप्रं नश्यसे संशयः अत्र संदेहो न॥२५॥

गो० टी०–एवमुक्तेऽपि पुनः पलायमानं प्रत्याह–किं न्विति । किं नु शक्यं किंवा शक्यं नश्यसे अदर्शनं प्राप्नोषि तयोः ताभ्याम् ॥ २४ ॥

२६-२७ ] ति० टी०–जीवमानस्य जीवतः । नयिष्यसि नेष्यसि ॥ २६ ॥ २७ ॥

रा० टी०–नन्विदानीं तु सीतां नेष्यामीत्यत आह–नहीति । जीवमानस्य जीवतो मम पश्यतः रामस्य महिषीं न नयिष्यसि नेष्यसि ॥ २६ ॥

गो० टी०–तथापि त्वां नाहं गमयामीत्याह–नहीति । जीवमानस्य जीवतः मयि जीवतीत्यर्थः ॥ २५ ॥

रा० टी०–अवश्यमिति । महात्मनो रामस्य दशरथस्य च जीवितेनापि मया प्रियमवश्यं कार्यम् ॥ २७ ॥

गो० टी०–त्वया किं कर्तुं शक्यमित्यत्राह–अवश्यमिति । जीवितेनापि जीवितव्ययेनापि ॥ २६ ॥

२८ ] ति० टी०–यथाप्राणम् यथाबलमित्यर्थः ॥ २८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे पञ्चाशः सर्गः ॥ ५० ॥

---

१ एतदाद्यर्धद्वयं व्यत्यस्तं गो. पाठे । २ यावदिति गो. पाठः । ३ पलायसे इति युक्तं भाति ।

## एकपञ्चाशः सर्गः ।

जटायुषा युध्यमनोरावणस्तेन रथस्य भञ्जनाद्भूमौ पपाताथ च जटायुपरिश्रान्तेर्लब्धावकाशः सीतामादाय पलायत । तमनुधावन् जटायुर्नखैस्तत्पृष्ठं निर्लिख्य तुण्डेन भुजमण्डलमखण्डयत्तेन निवृत्तः पङ्क्तिमुखः सीतां विमुच्य जटायुषा युध्यमानः खड्गेन तत्पक्षति पदयुगं च चिच्छेदाथ भूशायिनं मन्दजीवितं तं सीता परिदेवयते ।

[ ईत्युक्तस्य यथान्यायं रावणस्य जटायुषा । क्रुद्धस्याग्निनिभाः सर्वा रेजुर्विंशतिदृष्टयः ॥ ]
ईत्युक्तः क्रोधताम्राक्षस्तप्तकाञ्चनकुण्डलः । राक्षसेन्द्रोऽभिदुद्राव पतगेन्द्रममर्षणः ॥ १ ॥
स संप्रहारस्तुमुलस्तयोस्तस्मिन्महामृधे बभूव वातोद्धुतयोर्मेघयोर्गगने यथा ॥ २ ॥
तद्बभूवाद्भुतं युद्धं गृध्रराक्षसयोस्तदा । सपक्षयोर्माल्यवतोर्महापर्वतयोरिव ॥ ३ ॥
ततो नालीकनाराचैस्तीक्ष्णाग्रैश्च विकर्णिभिः । अभ्यवर्षन्महाघोरैर्गृध्रराजं महाबलम् ॥ ४ ॥
स तानि शरजालानि गृध्रः पत्ररथेश्वरः । जटायुः प्रतिजग्राह रावणास्त्राणि संयुगे ॥ ५ ॥
तस्य तीक्ष्णनखाभ्यां तु चरणाभ्यां महाबलः । चकार बहुधा गात्रे व्रणान्पतगसत्तमः ॥ ६ ॥
अथ क्रोधाद्दशग्रीवो जग्राह दश मार्गणान् । मृत्युदण्डनिभान्घोराञ्शत्रोर्निधनकाङ्क्षया ॥ ७ ॥

---

रा० टी०—तिष्ठेति । हे दशग्रीव ! मुहूर्तं तिष्ठ पश्य मम बलमिति शेषः, वृन्तात् प्रसववन्धनात् फलमिव त्वां पातयेयमत एव यथाप्राणं बलमनतिक्रम्य युद्धातिथ्यं प्रदास्यामि । सार्धश्लोक एकान्वयी ॥ २८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे पञ्चाशः सर्गः ॥ ५० ॥

गो० टी०—तिष्ठ तिष्ठेति । यथाप्राणं यथाबलम् ॥ २७ ॥

गो० टी०—वृन्तादित्यर्धमेकान्वयम् 'वृन्तं प्रसवबन्धनम्' इत्यमरः ॥ २८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने पञ्चाशः सर्गः ॥ ५० ॥

---

गो० टी०—अथ स्वामिकार्याय प्राणत्यागमकरोज्जटायुरित्याह—इतीत्यादि ॥ १ ॥

१ ] ति० टी०—इतीति ॥ १ ॥

रा० टी०—जटायुवचनश्रवणानन्तरकालिकं रावणवृत्तान्तमाह—इतीत्यादिभिः । इति अनेन प्रकारेण उक्तो जटायुना कथितः अत एव क्रोधताम्राक्षः राक्षसेन्द्रो रावणः पतगेन्द्रं जटायुषमभिदुद्राव ॥ १ ॥

गो० टी०—संरक्तनयन इति । अमर्षणः असहनः ॥ २ ॥

२ ] ति० टी०—वातोद्धुतयोर्वातप्रवर्तितयोः ॥ २ ॥

रा० टी०—स इति । तयोः जटायुरावणयोः तस्मिन् महामृधे तुमुलः संप्रहारो बभूव । तत्र दृष्टान्तः—गगने वातोद्धतयोः वातप्रचलितयोः मेघयोर्यथा ॥ २ ॥

गो० टी०—स इति । सः युध्यस्वेति पूर्वं प्रवर्तितः संप्रहारः युद्धं वा । ताभ्यां प्रतिकूलवायुभ्याम् उद्धतयोः प्रेरितयोः मेघपक्षे संप्रहारः संघट्टनमात्रम् ॥ ३ ॥

३-४ ] ति० टी०—माल्यवतोः द्वौ माल्यवन्तौ एको दण्डकारण्ये, अपरो मेरुपार्श्वे । सपक्षयोः पक्षसहितयोः । यद्वा यथोक्ता कल्पनेयम्, यदि द्वौ माल्यवन्तौ सपक्षौ युध्येयातां तदा तत्सदृशमिदमिति तेनानुपमत्वं फलति ॥ ३ ॥ ४ ॥

रा० टी०—तदिति । सपक्षयोः पक्षसहितयोः माल्यवतोः पुष्पसहितयोः महापर्वतयोरिव गृध्रराक्षसयोः अद्भुतं तत् युद्धं बभूव ॥ ३ ॥

गो० टी०—तदिति ।सपक्षयोः पक्षसहितयोः माल्यवतोः । माल्यवन्नामानौ द्वौ पर्वतौ एको दण्डकारण्ये पूर्वमुक्तः माल्यवन्तं शिखरिणमिति, अन्यः किष्किन्धासमीपे वक्ष्यति वर्षावर्णने ॥ ४ ॥

रा० टी०—तत इति । ततः द्वन्द्वयुद्धप्रवृत्त्यनन्तरं नालीकादिभिः बाणविशेषैः महाबलं गृध्रराजमभ्यवर्षत् रावण इति शेषः ॥ ४ ॥

गो० टी०—तत इति । नालीकैः नालमात्रशरैः नाराचैः आयसशरैः विकर्णिभिः अङ्कुशाग्रशरैः ॥ ५ ॥

५ ] ति० टी०—प्रतिजग्राह सेहे । रावणास्त्राणि रावणक्षिप्तानीति शरजालविशेषणम् । अस्यतेरौणादिकस्त्रन् । 'रावणास्तानि' इति पाठस्तु सुगम एव ॥ ६ ॥

रा० टी०—स इति । पत्ररथेश्वरः पक्ष्यधीशः गृध्रः स जटायुः तानि रावणास्त्राणि रावणप्रक्षिप्तानि शरजालानि प्रतिजग्राह ॥ ६ ॥

गो० टी०—स इति । पत्ररथेश्वरः पक्षीश्वरः प्रतिजग्राह सेहे । रावणास्त्राणि रावणप्रयुक्तास्त्राणि ॥ ६ ॥

६-७ ] ति० टी०—तस्य रावणस्य गात्रे इत्यन्वयः ॥ ६ ॥ ७ ॥

---

१ श्लोकोऽयमधिकः गो. पाठे । २ संरक्तनयनः कोपात्तप्तेति गो. पाठः । ३ वन इति गो. पाठः । ४ वातोद्धतयोरिति गो. रा. पाठः । ५ महाबल इति गो. पाठः । ६ शत्रुमर्दनेति गो. पाठः ।

स तैर्बाणैर्महावीर्यः पूर्णमुक्तैरजिह्मगैः । बिभेद निशितैस्तीक्ष्णैर्गृध्रं घोरैः शिलीमुखैः ॥ ८ ॥
स राक्षसरथे पश्यञ्जानकीं बाष्पलोचनाम् । अचिन्तयित्वा बाणांस्तान्राक्षसं समभिद्रवत् ॥ ९ ॥
ततोऽस्य सशरं चापं मुक्तामणिविभूषितम् । चरणाभ्यां महातेजा बभञ्ज पतगोत्तमः ॥ १० ॥
ततोऽन्यद्धनुरादाय रावणः क्रोधमूर्छितः । ववर्ष शरवर्षाणि शतशोऽथ सहस्रशः ॥ ११ ॥
शैरैरावारितस्तस्य संयुगे पतगेश्वरः । कुलायमभिसंप्राप्तः पक्षिवच्च बभौ तदा ॥ १२ ॥
स तानि शरजालानि पक्षाभ्यां तु विधूय ह । चरणाभ्यां महातेजा बभञ्जास्य महद्धनुः ॥ १३ ॥
तच्चाग्निसदृशं दीप्तं रावणस्य शरावरम् । पक्षाभ्यां च महातेजा व्यधुनोत्पतगेश्वरः ॥ १४ ॥
काञ्चनोरश्छदान्दिव्यान्पिशाचवदनान्खरान् । तांश्चास्य जवसंपन्नाञ्जघान समरे बली ॥ १५ ॥
अथ त्रिवेणुसंपन्नं कामगं पावकार्चिषम् । मणिसोपानचित्राङ्गं बभञ्ज च महारथम् ॥ १६ ॥

रा० टी०—तस्येति । तस्य रावणस्य गात्रे तीक्ष्णनखाभ्यां तीक्ष्णनखैर्विशिष्टाभ्यां चरणाभ्यां महाबलो जटायुः बहुधा अनेकप्रकारं व्रणान् चकार ॥ ६ ॥

गो० टी०—तस्येति । तस्य रावणस्य गात्रे ॥ ७ ॥

रा० टी०—अथेति । अथ व्रणकरणानन्तरं दशग्रीवो रावणः शत्रोर्निधनकाङ्क्षया शत्रुविध्वंसविषयकेच्छया मृत्युदण्डनिभान् यमदण्डसदृशान् दश मार्गणान् बाणान् जग्राह ॥७॥

गो० टी०—अथेति । मार्गणान् बाणान् ॥ ८ ॥

८-११]ति० टी०—पूर्णमुक्तैराकर्णपूर्णाकृष्टधनुर्मुक्तैः८-११

रा० टी०—स इति । महावीर्यः स रावणः पूर्णमुक्तैः पूर्णेन आकर्णमाकृष्टेन मुक्तैः त्यक्तैः अजिह्मगैः ऋजुगमनशीलैर्निशितैः शाणसंस्कृतैः अत एव तीक्ष्णैः घोरैः असह्यैः शिलीमुखैर्बाणैः गृध्रं बिभेद ॥ ८ ॥

गो० टी०—स तैरिति । पूर्णम् आकर्णाकृष्टं यथा तथा मुक्तैः अजिह्मगैः ऋजुगामिभिः निशितैः शाणोल्लीढैः । अत एव तीक्ष्णैः घोरैः भयङ्करैः शिलीमुखैः शिली शल्यं मुखे येषां तैः बाणैः गृध्रं बिभेद ॥ ९ ॥

रा० टी०—स इति । स जटायुः बाष्पलोचनां जानकीं पश्यन्सन् बाणानचिन्तयित्वा अविगणय्य राक्षसं रावणं समभिद्रवत् ॥ ९ ॥

गो० टी०—स इति । समभिद्रवत् समभ्यद्रवत् ॥ १० ॥

रा० टी०—तत इति । मुक्तामणिविभूषितं सशरं शरसहितं चापं पतगोत्तमो जटायुः चरणाभ्यां बभञ्ज ॥ १० ॥

गो० टी०—तत इति । सशरं संहितशरम् ॥ ११ ॥

रा० टी०—तत इति । क्रोधमूर्छितरावणः अन्यद्धनुः आदाय शतशः सहस्रशश्च शरवर्षाणि ववर्ष ॥ ११ ॥

गो० टी०—तत इति । क्रोधमूर्छितः क्रोधेन व्याप्तः॥१२॥

१२-१३ ] ति० टी०—आवारितः आ समन्ताद्व्याप्तः । कुलायं वासस्थानं संप्राप्तो यः पक्षी तद्वद्बभौ ॥ १२ ॥ १३ ॥

रा० टी०—शरैरिति । तस्य रावणस्य शरैरावारितः प्राप्ततः पतगेश्वरो जटायुः कुलायं स्ववासस्थानमभिसंप्राप्तो यः पक्षिवद्बभौ ॥ १२ ॥

गो० टी०—शरैरिति । आवारितः आसमन्ताद्व्याप्तः कुलायं नीडं प्राप्तः पक्षीव बभौ ॥ १३ ॥

रा० टी०—स इति । जटायुः तानि रावणप्रक्षिप्तानि शरजालानि पक्षाभ्यां विधूय बहिष्कृत्य चरणाभ्याम्. अस्य रावणस्य महद्धनुर्बभञ्ज ॥ १३ ॥

गो० टी०—स इति । तानि च पक्षाभ्यां विधूय चरणाभ्यां धनुर्बभञ्ज चेत्यन्वयः ॥ १४ ॥

१४-१५ ] ति० टी०—तत्प्रसिद्धं शरावरं कवचं व्यधुनोत्पातयामास । 'शरासनम्' इति पाठे शरप्रक्षेपकारणम् । तच्च द्वितीयं धनुश्च बभञ्जेत्यन्वयः । व्यधुनोत्कम्पयति स्म रावणमिति शेषः ॥ १४ ॥ १५ ॥

रा० टी०—तदिति । पतगेश्वरः जटायुः शरावरं कवचं पक्षाभ्यां व्यधुनोत् बभञ्जेत्यर्थः ॥ १४ ॥

गो० टी०—तच्चेति । शरावरं कवचं पक्षाभ्यां पक्षवातेन व्याधुनोत् प्रच्यावयत् ॥ १५ ॥

रा० टी०—काञ्चनेति । काञ्चनोरश्छदान् स्वर्णमयकवचविशिष्टान् दिव्यान् आकाशगामिनः जवसंपन्नान् अतिवेगवतः अस्य रावणस्य तान् रथसंनद्धान् खरान् बली जटायुः जघान 'उरश्छदः कङ्कटको जगरः कवचोऽस्त्रियाम्' इत्यमरः ॥ १५ ॥

गो० टी०—काञ्चनेति । काञ्चनोरश्छदान् स्वर्णमयकवचयुक्तान् । 'उरश्छदः कङ्कटको जागरः कवचोऽस्त्रियाम्' इत्यमरः । बली जटायुः ॥ १६ ॥

१६ ] ति० टी०—त्रिवेणुर्युगंधरः ॥ १६ ॥

रा० टी०—अथेति । त्रिवेणुसंपन्नं युगन्धरसंयुक्तं पावकार्चिषं पावकतेजःसदृशतेजोविशिष्टं मणिभिः हेमभिश्च विचित्राण्यङ्गानि यस्य तं महारथं बभञ्ज ॥ १६ ॥

गो० टी०—वरमिति । त्रिवेणुः युगन्धरः कामं यथेच्छं गच्छतीति कामगम् ॥ १७ ॥

१ रावणेति रा० पाठः । २ पतगेश्वर इति गो० पाठः । ३ सुपसंप्राप्तः पक्षीव प्रबभाविति गो० पाठः । ४ वर्षाणीति गो० पाठः । ५ चेति गो० पाठः । ६ स महावीर्यो व्याधुनोदिति गो० पाठः । ७ वरमिति गो० पाठः । ८ हेमविचित्रेति गो० रा० पाठः ।

पूर्णचन्द्रप्रतीकाशं छत्रं च व्यजनैः सह । पातयामास वेगेन ग्राहिभी राक्षसैः सह ॥ १७ ॥
सारथेश्चास्य वेगेन तुण्डेन च महच्छिरः । पुनर्व्यपहरच्छ्रीमान्पक्षिराजो महाबलः ॥ १८ ॥
स भग्नधन्वा विरथो हताश्वो हतसारथिः । अङ्केनादाय वैदेहीं पपात भुवि रावणः ॥ १९ ॥
दृष्ट्वा निपतितं भूमौ रावणं भग्नवाहनम् । साधुसाध्विति भूतानि गृध्रराजमपूजयन् ॥ २० ॥
परिश्रान्तं तु तं दृष्ट्वा जरया पक्षियूथपम् । उत्पपात पुनर्हृष्टो मैथिलीं गृह्य रावणः ॥ २१ ॥
तं प्रहृष्टं निधायाङ्के रावणं जनकात्मजाम् । गच्छन्तं खड्गशेषं च प्रनष्टहतसाधनम् ॥ २२ ॥
गृध्रराजः समुत्पत्य रावणं समभिद्रवत् । समावार्य महातेजा जटायुरिदमब्रवीत् ॥ २३ ॥
वज्रसंस्पर्शबाणस्य भार्यां रामस्य रावण । अल्पबुद्धे हरस्येनां वधाय खलु रक्षसाम् ॥ २४ ॥
समित्रबन्धुः सामात्यः सबलः सपरिच्छदः । विषपानं पिबस्येतत्पिपासित इवोदकम् ॥ २५ ॥
अनुबन्धमजानन्तः कर्मणामविचक्षणाः । शीघ्रमेव विनश्यन्ति यथा त्वं विनशिष्यसि ॥ २६ ॥
बद्धस्त्वं कालपाशेन क्व गतस्तस्य मोक्षसे । वधाय बडिशं गृह्य सामिषं जलजो यथा ॥ २७ ॥

---

१७-१८] ति० टी०–ग्राहिभिश्छत्रादिधारकैः ॥ १७ ॥ १८ ॥

रा० टी०–पूर्णेति । पूर्णचन्द्रप्रतीकाशं पूर्णचन्द्रसदृशं व्यजनैः सह ग्राहिभी राक्षसैश्च सह छत्रं पातयामास ॥ १७ ॥

गो० टी०–पूर्णेति । ग्राहिभिः छत्रचामरादिग्राहकैः । "नन्दिग्रहि–" इत्यादिना णिनिः ॥ १८ ॥

रा० टी०–सारथेरिति । पक्षिराजो जटायुः अस्य रावणस्य सारथेर्महच्छिरः तुण्डेन व्यपाहरत् अच्छिनत् ॥ १८ ॥

गो० टी०–सारथेरिति । व्यपाहरत् खण्डितवान् । पुनरित्यनेन छत्रादिखण्डनं तुण्डेनेति सूच्यते ॥ १९ ॥

१९-२१ ] ति० टी०–अङ्केन कटिभागेन ॥ १९-२१ ॥

रा० टी०–स इति । भग्नं धनुर्यस्य स विरथो रथरहितः स रावणः वैदेहीमादाय भुवि पपात ॥ १९ ॥

गो० टी०–स इति । भग्नधन्वा । "धनुषश्च" इत्यनङ् ॥ २० ॥

रा० टी०–दृष्ट्वेति । भग्नवाहनं रावणं भूमौ निपतितं दृष्ट्वा भूतानि जन्तवः साधु साधु इति गृध्रराजं जटायुषम् अपूजयन् मनसा प्राशंसन् ॥ २० ॥

गो० टी०–दृष्ट्वेति । अपूजयन् मनसेति शेषः ॥ २१ ॥

रा० टी०–परीति । जरया हेतुभूतया परिश्रान्तं पक्षियूथपं दृष्ट्वा हृष्टो रावणः मैथिलीं गृह्य गृहीत्वा उत्पपात ॥ २१ ॥

गो० टी०–परीति । गृह्य गृहीत्वा ॥ २२ ॥

२२ ] ति० टी०–प्रनष्टानि स्वत एव नष्टानि हतानि गृध्रेण नाशितानि साधनानि युद्धसाधनानि यस्य तम् ॥ २२ ॥

२३ ] ति० टी०–समावार्य संनिरुध्य ॥ २३ ॥

रा० टी०–तमिति । जनकात्मजामङ्के गमनस्थले निधाय गच्छन्तम् अत एव प्रहृष्टं तं रावणं गृध्रराजः समुत्पत्य उड्डीय समभिद्रुत्य तत्संमुखं प्राप्य समावार्य परिवृत्य जटायुरिदमब्रवीत् । श्लोकद्वयमेकान्वयि ॥ २२ ॥ २३ ॥

गो० टी०–तमित्यादिसार्धश्लोक एकान्वयः । समुत्पत्य ऊर्ध्वं गत्वा समभिद्रुत्य अभिमुखं गत्वा समावार्य सम्यगवरुध्य ॥ २३ ॥

२४] ति० टी०–वज्रतुल्यः स्पर्शो येषां तादृशा बाणा यस्य २४

रा० टी०–तद्वचनाकारमाह–वज्रेति । वज्रसंस्पर्शतुल्यस्पर्शविशिष्टो बाणो यस्य तस्य रामस्य एनां भार्यां रक्षसां वधाय हरसि ॥ २४ ॥

गो० टी०–वज्रेति । वज्रसंस्पर्शाः वज्रसमस्पर्शाः बाणाः यस्य ॥ २४ ॥

२५ ] ति० टी०–सबलः सचतुरङ्गबलः । परिच्छदः दासीदासादि निर्देशमात्र तत्सहितो न शिष्यसीति तात्पर्यम् ॥ २५ ॥

रा० टी०–सेति । मित्रादिसहितस्त्वं पिपासित उदकमिव एतदपहरणं विषपानं यथा भवति तथा पिबसि ॥ २५ ॥

गो० टी०–समित्रेति । पीयत इति पानं पानकरसादि विषयुक्तं पानमिति मध्यमपदलोपिसमासः । यद्वा विषस्य पानं विषपानम् एतत्सीताहरणरूपं विषपानं पिबसि करोषि । ओदनपाकं पचतीतिवत् प्रकृतेः प्रत्ययोपस्थानमात्रं प्रयोजनम् ॥ २५ ॥

२६ ] ति० टी०–अनुबन्धं फलम् ॥ २६ ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–अनुबन्धमिति । कर्मणां स्वकृतविषपानादीनामनुबन्धं फलमजानन्तोऽपि जना यथा शीघ्रमेव विनश्यन्ति तथा त्वं विनशिष्यसि विनङ्क्ष्यसि ॥ २६ ॥

गो० टी०–अनुबन्धमिति । अनुबध्यत इत्यनुबन्धः फलम् । अविचक्षणाः असमर्थाः कर्मणाम् आत्मना क्रियमाणानां फलमजानन्तः शीघ्रं विनश्यन्ति । तत्रोदाहरणं भवानित्याह–यथेति ॥ २६ ॥

२७] ति० टी०–तस्य ततः । कालपाशान्मोक्ष्यसे इत्यर्थः । बडिशं मत्स्यवेधनम् । जलजो मत्स्यः ॥ २७ ॥

---

१ पुनेति गो. पाठः । २ व्यपाहरदिति गो. व्यपहरदिति रा. पाठः । ३ गच्छन्तमिति गो. पाठः । ४ अर्धमेतत् गो. नास्ति । ५ प्रणष्टेति रा. पाठः । ६ समभिद्रुत्य रावणमिति गो. पाठः । ७ मोच्यस इति गो. पाठः ।

न हि जातु दुराधर्षौ काकुत्स्थौ तव रावण । धर्षणं चाश्रमस्यास्य क्षमिष्येते तु राघवौ ॥ २८ ॥
यथा त्वया कृतं कर्म भीरुणा लोकगर्हितम् । तस्कराचरितो मार्गो नैष वीरनिषेवितः ॥ २९ ॥
युध्यस्व यदि शूरोऽसि मुहूर्तं तिष्ठ रावण । शयिष्यसे हतो भूमौ यथा भ्राता खरस्तथा ॥ ३० ॥
परेतकाले पुरुषो यत्कर्म प्रतिपद्यते । विनाशायात्मनोऽधर्म्यं प्रतिपन्नोऽसि कर्म तत् ॥ ३१ ॥
पापानुबन्धो वै यस्य कर्मणः को नु तत्पुमान् । कुर्वीत लोकाधिपतिः स्वयंभूर्भगवानपि ॥ ३२ ॥
एवमुक्त्वा शुभं वाक्यं जटायुस्तस्य रक्षसः । निपपात भृशं पृष्ठे दशग्रीवस्य वीर्यवान् ॥ ३३ ॥
तं गृहीत्वा नखैस्तीक्ष्णैर्विददार समन्ततः । अधिरूढो गजारोहो यथा स्याद्दुष्टवारणम् ॥ ३४ ॥

---

रा० टी०—बद्ध इति । कालपाशेन बद्धस्त्वं क्व गतः सन् तस्य तस्मात्कालपाशात् मोक्ष्यसे न क्वापीत्यर्थः । तत्र दृष्टान्तः सामिषं मांससहितं बडिशं मत्स्यभेदनं जलजो मत्स्यो यथा ॥ २७ ॥

गो० टी०—बद्धेति । कालपाशेन बद्धस्त्वं क्व देशे गतः सन् तस्य तस्मात्कालपाशान्मोक्ष्यसे सहानुवर्तमानाद्बन्धात्कथं ते मुक्तिर्भविष्यतीत्यर्थः । सामिषं मांससहितं बडिशं मत्स्यबन्धनम् 'बडिशं मत्स्यबन्धनम्' इत्यमरः । आमिषलोभेन गृह्य गृहीत्वा जलजो मत्स्यो यथा देशान्तरं गतोऽपि न जीवति बडिशामोक्षणात् तद्वत् ॥ २७ ॥

२८ ] ति० टी०—अस्याश्रमस्य तव धर्षणं त्वत्कृतमभिभवं नहि क्षमिष्येते ॥ २८ ॥

रा० टी०—नहीति । हे रावण ! दुराधर्षौ धर्षयितुमशक्यौ काकुत्स्थौ रामलक्ष्मणौ अस्याश्रमस्य तव धर्षणं त्वत्कर्तृकपराभवं न क्षमिष्येते ॥ २८ ॥

गो० टी०—नहीति । आश्रमकर्मकं त्वत्कर्तृकं धर्षणं परिभवम् । आश्रमशब्देन आश्रमस्था सीतोच्यते मञ्चाः क्रोशन्तीतिवत् ॥ २८ ॥

२९-३० ] ति० टी०—यथा यादृशं त्वया कृतं कर्म तत्तस्कराचरितो मार्गो न वीरसेवितः ॥ २९ ॥ ३० ॥

रा० टी०—यथेति । भीरुणा त्वया लोकगर्हितं कर्म यथा येन प्रकारेण कृतं तथा तेन प्रकारेण मार्गः कर्म तस्कराचरितः चौरैः सेवितः अत एव एष मार्गः वीरनिषेवितो नैव भवति ॥ २९ ॥

गो० टी०—यथेति । लोकगर्हितं कर्म भीरुणा त्वया यथा कृतं तथा तस्कराचरितो मार्गः तस्करकृत्यतुल्यं त्वत्कृत्यमित्यर्थः, तस्मादेष मार्गः वीरनिषेवितो न भवतीत्यर्थः ॥ २९ ॥

रा० टी०—युध्यस्वेति । यदि शूरोऽसि तर्हि युध्यस्व मया हतो भ्राता खर इव भूमौ शयिष्यसे ॥ ३० ॥

गो०टी०—युध्यस्वेति । पूर्वसर्गान्ते व्याख्यातोऽयम् ॥३०॥

३१ ] ति० टी०—परेतकाले मृत्युकाले अधर्म्यं तज्जनकम् प्रतिपन्नोऽसि प्राप्तोऽसि ॥ ३१ ॥

रा० टी०—परेतेति । परेतकाले स्वविनाशसमये पुरुषो जनः यदधर्म्यं कर्म आत्मनो विनाशाय प्रतिपद्यते तत्कर्म त्वं प्रतिपन्नः प्राप्तोऽसि ॥ ३१ ॥

गो० टी०—परेतेति । परेतकाले मृत्युकाल इत्यर्थः, यत्कर्म यादृशं कर्म पुरुषः आत्मविनाशाय प्रतिपद्यते प्राप्नोति अधर्म्यम् अधर्मादनपेतं तत्कर्म सीताहरणरूपं प्रतिपन्नोऽसि एतादृशकर्मकरणादवश्यमविलम्बितं मृत्युं प्राप्नोषीत्यर्थः ॥३१॥

३२ ] ति० टी०—यस्य कर्मणः कर्तुः पापानुबन्धः पापफलसंबन्धः आवश्यकः शास्त्रदृष्टः को नु पुमान्वै निश्चयेन तत्कर्म कुर्वीत । लोकाधिपतिरपीन्द्रादिरपि समर्थोऽपि पापफलं कर्म न कुर्यात् । स्वयंभूर्भगवानपि पापपुण्यतत्फलतदधिकारिस्रष्टापि कर्तुमकर्तुमन्यथा कर्तुं शक्तोऽपि नेदृशं कर्म कुर्यात्तादृशमैश्वर्यमत्तेन त्वया क्रियमाणं कर्माचिरादेव फलदं भविष्यतीति तात्पर्यम् ॥ ३२ ॥

रा० टी०—ननु समर्थानामस्माकं पापकर्मफलं नैव भविष्यतीत्यत आह—पापेति । पाप हे पापिन् ! यस्य कर्मणः योऽनुबन्धः शास्त्रदृष्टफलं तत् तमनुबन्धं लोकाधिपतिः सर्वलोकपालकः विष्णुर्वा स्वयंभूर्ब्रह्मा वा भगवान् महेशो वा कः पुमान् अन्यथा कुर्वीत न कोऽपीत्यर्थः । एतेनेदं पापकर्म त्वया नैव कार्यमिति सूचितम् ॥ ३२ ॥

गो० टी०—पापेति । यस्य कर्मणः पापानुबन्धः पापफलसंबन्धो भवति तत्कर्म लोकाधिपतित्वादिविशिष्टोऽपि को नु कुर्वीत ॥ ३२ ॥

३३ ] ति० टी०—पृष्ठे पश्चाद्भागे ॥ ३३ ॥

रा० टी०—एवमिति । एवं वाक्यमुक्त्वा तस्य प्रसिद्धस्य दशग्रीवस्य पृष्ठे वीर्यवान् जटायुः भृशं निपपात ॥ ३३ ॥

गो० टी०—एवमिति । पृष्ठ इत्यनेन जटायुषमनादृत्य रावणस्य पलायमानत्वं गम्यते ॥ ३३ ॥

३४ ] ति० टी०—दुष्टवारणमधिरूढो गजारोहो हस्तिपको गजविषये यथा स्याद्यादृशव्यापारो भवेद्गजक्षतकरणव्यापारो भवेत्तथा । 'विरराद' इति पाठेऽपि क्षतानि चकारेत्येवार्थः ॥३४

रा० टी०—तमिति । दुष्टवारणमधिरूढः गजारोहो हस्तिपको यथा येन प्रकारेण स्यात् विदृणीयात् तथा तं रावणं गृहीत्वा समन्ततो नखैर्विददार ॥ ३४ ॥

---

१ कर्म को नु तदिति गो. पाठः ।

विर्ददार नखैरस्य तुण्डं पृष्ठे समर्पयन् । केशांश्चोत्पाटयामास नखपक्षमुखायुधः ॥ ३५ ॥
स तदा गृध्रराजेन क्लिश्यमानो मुहुर्मुहुः । अमर्षस्फुरितोष्ठः सन्प्राकम्पत च राक्षसः ॥ ३६ ॥
संपरिष्वज्य वैदेहीं वामेनाङ्केन रावणः । तलेनाभिजघानार्तो जटायुं क्रोधमूर्छितः ॥ ३७ ॥
जटायुस्तमतिक्रम्य तुण्डेनास्य खगाधिपः । वामबाहून्दश तदा व्यपाहरदरिंदमः ॥ ३८ ॥
संछिन्नबाहोः सद्यो वै बाहवः सहसाऽभवन् । विषज्वालावलीमुक्ता वल्मीकादिव पन्नगाः ॥ ३९ ॥
ततः क्रोधाद्दशग्रीवः सीतामुत्सृज्य वीर्यवान् । मुष्टिभ्यां चरणाभ्यां च गृध्रराजमपोथयत् ॥ ४० ॥
ततो मुहूर्तं संग्रामो बभूवातुलवीर्ययोः । राक्षसानां च मुख्यस्य पक्षिणां प्रवरस्य च ॥ ४१ ॥
तस्य व्यायच्छमानस्य रामस्यार्थे स रावणः । पक्षौ पादौ च पार्श्वौ च खड्गमुद्धृत्य सोऽच्छिनत् ॥४२॥
स च्छिन्नपक्षः सहसा रक्षसा रौद्रकर्मणा । निपपात महागृध्रो धरण्यामल्पजीवितः ॥ ४३ ॥
तं दृष्ट्वा पतितं भूमौ क्षतजार्द्रं जटायुषम् । अभ्यधावत वैदेही स्वबन्धुमिव दुःखिता ॥ ४४ ॥

---

गो० टी०—तमिति । तं गृहीत्वा बलान्निवर्त्याधिरूढः सन् जटायुः गजारोहो यन्ता दुष्टवारणं पलायितम् अङ्कुशैर्निरुध्य यथा विदारयति तथा नखैः विरराद । स्यादिति संभावनायाम् ॥ ३४ ॥

३५-३६ ] ति० टी०—अस्य विददार एनं विददारेत्यर्थः । तादृशक्रियाणां बाहुल्यात्पुनरुक्तिः ॥ ३५ ॥ ३६ ॥

रा० टी०—विददारेति । नखपक्षमुखायुधो जटायुः अस्य रावणस्य पृष्ठे पश्चाद्भागे तुण्डं समर्पयन् संस्थापयन् दशन् सन्नित्यर्थः केशान् उत्पाटयामास ॥ ३५ ॥

गो० टी०—विररादेति । नखपक्षमुखायुधो गृध्रः अस्य रावणस्य पृष्ठे नखैः सह तुण्डं समर्पयन् व्यापारयन् सन् विरराद व्यदारयदित्यर्थः । केशांश्चोत्पाटयामास ॥ ३५ ॥

रा० टी०—स इति । गृध्रराजेन मुहुर्मुहुः क्लिश्यमानः अत एव अमर्षस्फुरितोष्ठः अमर्षेण अक्षमया स्फुरितौ प्रकम्पौ ओष्ठौ यस्य स सन् राक्षसो रावणः प्राकम्पत ॥ ३६ ॥

गो० टी०—स इति । अमर्षेण क्रोधेन स्फुरितोष्ठः चलितोष्ठः प्राकम्पत प्रहारार्थं प्रदक्षिणं प्राचलदित्यर्थः ॥ ३६ ॥

३७ ] ति० टी०—वैदेहीं संपरिष्वज्य । पतनेन पलायनभिया ॥ ३७ ॥

रा० टी०—सामिति । आर्तः पीडितः अत एव क्रोधमूर्छितो वामेन कौटिल्यविशिष्टेन अङ्केन गत्योपलक्षितो रावणः वैदेहीं परिष्वज्य पलायनभिया गृहीत्वा तलेन जटायुमभिजघान॥३७॥

गो० टी०—स इति । अङ्केन ऊरुभागेन जटायुं, जटायुरित्युकारान्तोऽप्यस्ति ॥ ३७ ॥

३८ ] ति० टी०—तं तलप्रहारमतिक्रम्य सोढ्वा व्यपाहरयुगपद्दशापि तुण्डेन धृत्वा त्रोटितवान् ॥ ३८ ॥

रा० टी०—जटायुरिति । खगाधिपो जटायुः तमभिघातमतिक्रम्य अस्य रावणस्य दश वामबाहून् व्यपाहरत्॥३८॥

गो० टी०—जटायुरिति । अभिक्रम्य अभितो गत्वा अवसरं प्रतीक्ष्येत्यर्थः । अस्य वामबाहून् यैः सीता परिष्वक्ता तानित्यर्थः, व्यपाहरत् अच्छिनत् ॥ ३८ ॥

३९-४१ ] ति० टी०—संछिन्नबाहोः कर्तितबाहोरपि तस्य बाहवः पुनः सहसा समभवन् । वल्मीकात्पन्नगा इव ॥ ३९-४१ ॥

रा० टी०—संछिन्नेति । सद्यः संछिन्नबाहोः बाहवः सहसा अभवन् तत्र दृष्टान्तः विषज्वालावलीयुक्ताः पन्नगाः वल्मीकादिव ॥ ३९ ॥

गो० टी०—संछिन्नबाहोरिति । संछिन्नबाहोः रावणादिति शेषः । सद्यैवेत्यार्षे सलोपे वृद्धिः । अभवन् प्रादुरभवन् । विषज्वालेत्युपमानविशेषणाद्बाहूनां सायुधत्वं गम्यते ॥ ३९ ॥

रा० टी०—तत इति । दशग्रीवः क्रोधात् सीतां समुत्सृज्य मुष्टिभ्यां चरणाभ्यां च गृध्रराजमपोथयत् ॥ ४० ॥

गो० टी०—तत इति । अपोथयदताडयत् ॥ ४० ॥

रा० टी०—तत इति । अतुलवीर्ययोः राक्षसानां मुख्यस्य पक्षिणां प्रवरस्य च मुहूर्तं संग्रामो बभूव ॥ ४१ ॥

गो० टी०—तत इति । संग्रामो युद्धम् ॥ ४१ ॥

४२ ] ति० टी०—व्यायच्छमानस्य व्यायामं पराक्रमं कुर्वाणस्य ॥ ४२ ॥

रा० टी०—तस्येति । रामस्यार्थे व्यायच्छमानस्य पराक्रमं कुर्वतः तस्य जटायोः पक्षादीन् स रावणः खड्गमुद्धृत्य अच्छिनत् ॥ ४२ ॥

गो० टी०—तस्येति । व्यायच्छमानस्य व्यायामं कुर्वतः "आङो यमहनः" इत्यात्मनेपदम् । 'शरीरायासजनकं कर्म व्यायाम उच्यते' इति वाग्भटः । युद्धं कुर्वत इत्यर्थः । पार्श्वौ पक्षमूले ॥ ४२ ॥

४३-४४ ] ति० टी०—अल्पजीवितो घटीमात्रावस्थानोचितप्राणः ॥ ४३ ॥ ४४ ॥

---

१ विररादेति गो. पाठः । २ तथेति गो. पाठः । ३ स रावण इति गो. पाठः । ४ स परीति गो. पाठः । ५ आश्विति गो. पाठः । ६ अभीति गो. पाठः । ७ सद्यैवेति गो. पाठः । ८ रावण इति गो. पाठः । ९ हत इति गो. पाठः ।

तं नीलजीमूतनिकाशकल्पं सुपाण्डुरोरस्कमुदारवीर्यम् ।
ददर्श लङ्काधिपतिः पृथिव्यां जटायुषं शान्तमिवाग्निदावम् ॥ ४५ ॥
ततस्तु तं पत्त्ररथं महीतले निपातितं रावणवेगमर्दितम् ।
पुनश्च संगृह्य शशिप्रभानना रुरोद सीता जनकात्मजा तदा ॥ ४६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्येऽरण्यकाण्डे एकपञ्चाशः सर्गः ॥ ५१ ॥

---

## द्विपञ्चाशः सर्गः ।

रामलक्ष्मणयोः स्वहरणवृत्तनिवेदनावधि प्राणधारणवरेण योजयन्ती वैदेही यावत् स्वकरेण तदङ्गं परामृशति तावद्रावण एत्य तामपहृत्य ययौ । रावणं विनिन्द्य मृगपक्षिणः परिदेवयन्ते । रावणगतिवेगात्सीताधृतहारनूपुराद्याभरणानि धरणौ प्रापतन् ।

[ [३]तमल्पजीवितं गृध्रं स्फुरन्तं राक्षसाधिपः । ददर्श भूमौ पतितं समीपे राघवाश्रमात् ॥ ]
सा तु ताराधिपमुखी रावणेन [४]निरीक्ष्य तम् । गृध्रराजं विनिहतं विललाप सुदुःखिता ॥ १ ॥
[ [३]आलिङ्ग्य गृध्रं निहतं रावणेन बलीयसा । विललाप सुदुःखार्ता सीता शशिनिभानना ॥ ]
निमित्तं [५]लक्षणं स्वप्नं शकुनिस्वरदर्शनम् । अवश्यं सुखदुःखेषु नराणां [६]परिदृश्यते ॥ २ ॥

---

रा० टी०—स इति । रौद्रकर्मणा रक्षसा रावणेन छिन्नपक्षः अत एव अल्पजीवितः महागृध्रः धरण्यां निपपात ॥ ४३ ॥

गो० टी०—स इति । अल्पजीवितः द्वित्रिक्षणावस्थानोचितप्राण इत्यर्थः ॥ ४३ ॥

रा० टी०—तमिति । क्षतजार्द्रं रुधिरक्लिन्नं जटायुषं भूमौ पातितं दृष्ट्वा दुःखिता वैदेही स्वबन्धुमिव अभ्यधावत् ॥ ४४ ॥

गो० टी०—तमिति । क्षतजं शोणितम् ॥ ४४ ॥

४५] ति० टी०—अग्निदावं दावाग्निं परनिपात आर्षः ॥४५॥

रा० टी०—तमिति । नीलजीमूतनिकाशकल्पं नीलमेघसदृशत्वेन कल्पनावन्तं पाण्डुरोरस्कं जटायुषं शान्तम् अग्निदावं दावाग्निमिव लङ्काधिपतिः पृथिव्यां ददर्श ॥ ४५ ॥

गो० टी०—तमिति । नीलजीमूतनिकाशकल्पं नीलमेघप्रकाशतुल्यम् अग्निदावं दावाग्निम् ॥ ४५ ॥

४६ ] ति० टी०—संगृह्य बाहुभ्यामालिङ्ग्य ॥ ४६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे एकपञ्चाशः सर्गः ॥ ५१ ॥

रा० टी०—तत इति । रावणवेगमर्दितं महीतले निपातितं पत्त्ररथं पत्त्रं पक्ष एव रथो यस्य तं जटायुषं सीता संगृह्य संस्पृश्य रुरोद ॥ ४६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे एकपञ्चाशः सर्गः ॥ ५१ ॥

गो० टी०—तत इति । परिष्वज्य बाहुभ्यामिति शेषः ॥४६॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने एकपञ्चाशः सर्गः ॥ ५१ ॥

गो० टी०—जटायुर्युद्धकाले विसृष्टायाः सीतायाः पुनरपि रावणेन हरणप्रकारमाह—तमित्यादि । राघवाश्रमादित्यवधित्वात्पञ्चमी ॥ १ ॥

१ ] ति० टी०—सा त्विति ॥ १ ॥

रा०टी०—जटायुनिपातानन्तरकालिकं सीतावृत्तान्तरमाह—सेत्यादिभिः । ताराधिपमुखी चन्द्रवदना सा सीता रावणेन निहितं गृध्रराजं तं जटायुषं निरीक्ष्य सुदुःखिता सती विललाप ॥ १ ॥

गो० टी०—सा त्विति । रावणेन विनिहतं समीक्ष्येत्यन्वयः ॥ २ ॥

गो० टी०—विशेषान्तरं वक्तुं पुनरनुवदति—आलिङ्ग्येति । कराभ्यां संस्पृश्येत्यर्थः ॥ ३ ॥

२ ] ति० टी०—नराणां सुखदुःखेषु निमित्तं सूचनं वामदक्षिणाङ्गस्पन्दनादिरूपं लक्षणं चिह्नम् । तथा जलादर्शादावात्मनोऽशिरसो दर्शनं च लक्षणम् । स्वप्नम् 'स्वप्ने यः पुरुषं कृष्णं कृष्णदन्तं प्रपश्यति । स एनं हन्ति' इत्यादि स्वप्नाध्यायोपदिष्टम् । तथा शकुनीनां वामदक्षिणगमनविशेषदर्शनम् । तथा तेषां स्वराणां दर्शनमनुभवः । एतत्सर्वं यथायोगं परिदृश्यते सर्वेण । 'लक्षणज्ञानम्' इति पाठेऽङ्गस्फुरणादिज्ञानमित्यर्थः । शकुनिग्रहणं मृगाद्युपलक्षणम् ॥ २ ॥

रा० टी०—विलापाकारमाह—निमित्तमित्यादिभिः । नराणां सुखदुःखेषु प्राप्स्यमाणेष्विति शेषः निमित्तं सुखदुःखसूचकदक्षिणवामनेत्रस्फुरणादिलक्षणम् आदर्शादौ स्वशिरसोऽदर्शनं स्वप्नम् कृष्णदन्तादिविशिष्टकृष्णपुरुषदर्शनादि शकुनि-

---

१ स्त्विति गो. पाठः । २ परिष्वज्येति गो. पाठः । ३ श्लोकोऽयमधिकः गो. पाठे । ४ समीक्ष्येति गो. पाठः । ५ लक्षणज्ञानमिति गो. पाठः । ६ प्रतीति गो. पाठः ।

न[1] नूनं राम जानासि महद्व्यसनमात्मनः । धावन्ति नूनं काकुत्स्थ[2] मदर्थं मृगपक्षिणः ॥ ३ ॥
अयं हि कृपया राम मां त्रातुमिह संगतः । शेते विनिहतो भूमौ ममाभाग्याद्विहंगमः[3] ॥ ४ ॥
त्राहि मामद्य काकुत्स्थ लक्ष्मणेति वराङ्गना । सुसंत्रस्ता समाक्रन्दच्छृण्वतां तु यथान्तिके ॥ ५ ॥
तां क्लिष्टमाल्याभरणां विलपन्तीमनाथवत् । अभ्यधावत वैदेहीं रावणो राक्षसाधिपः ॥ ६ ॥
तां लतामिव वेष्टन्तीमालिङ्गन्तीं महाद्रुमान् । मुञ्चमुञ्चेति बहुशः[4] प्राप तां राक्षसाधिपः ॥ ७ ॥
क्रोशन्तीं रामरामेति रामेण रहितां वने । जीवितान्ताय केशेषु जग्राहान्तकसंनिभः ॥ ८ ॥
प्रधर्षितायां वैदेह्यां[5] बभूव सचराचरम् । जगत्सर्वममर्यादं तमसाऽन्धेन संवृतम् ॥ ९ ॥

---

दर्शनं पक्ष्यादीनां वामदक्षिणमार्गेण गमनविशेषानुभवः स्वरदर्शनं तेषां शब्दानुभवः परिदृश्यते भवति एतेन निमित्तादयोऽवश्यं भवद्भिर्दृष्टा भवेयुरिति सूचितम् ‘ लक्षणज्ञानम् ’ इति पाठान्तरम् ॥ २ ॥

गो० टी०–निमित्तमिति । लक्षणानि अक्षिस्पन्दनादीनि तेषां ज्ञानं शकुनीनां पिङ्गल्यादीनां स्वरस्य दर्शनं ज्ञानं नराणां सुखदुःखेषु निमित्तं ज्ञापकं प्रतिदृश्यते ॥ ४ ॥

३-४ ] ति० टी०–किं ततस्तत्राह–न नूनमिति । मदर्थं मदपहारसूचनप्रयोजनमुद्दिश्य मृगपक्षिणोऽशुभसूचनमार्गेण धावन्ति । त्वं तु तैः सूचितमपि स्वस्य महद्व्यसनं न जानासि नूनम् । जानीथाश्चेन्नोपेक्षेथा इति तात्पर्यमिति लोकाभिनयेन रामोपालम्भः ॥ ३ ॥ ४ ॥

रा० टी०–नेति । हे राम ! हे काकुत्स्थ ! मदर्थं मद्व्यसनसूचनार्थं मृगपक्षिणो धावन्ति अतोऽपि आत्मनः स्वस्य प्राप्तं महद्व्यसनं न जानासि निमित्तदर्शनादिना निश्चिनोषि नूनं किं कारणमत्र । एकं नूनमित्यतोऽपीत्यर्थे ‘ काकुत्स्थम् ’ इति भूषणपाठः ॥ ३ ॥

गो० टी०–ततः किमित्यत्राह–नूनमिति । हे राम ! आत्मनो महद्व्यसनं न जानासि किमिति काकुः, जानास्येव । यस्मान्मदर्थं मदपहरणसूचनप्रयोजनमुद्दिश्य मृगपक्षिणः काकुत्स्थं त्वामभिधावन्ति । नूनं संप्रति मद्व्यसनसूचकाः मृगपक्षिणः काकुत्स्थमभिधावन्ति । तेन निमित्तेन मद्व्यसनं जानास्येवेत्यर्थः ॥ ९ ॥

रा० टी०–नन्वु त्वद्रक्षणार्थं जटायुर्नियोजितः इति कथं त्वां व्यसनं प्राप्तमित्यत आह–अयमिति । मां त्रातुं पापाचारेण रावणेन सह सङ्गतः युद्धार्थं प्राप्तः अयं विहङ्गमः ममाभाग्यात् विनिहतः सन् भूमौ शेते ॥ ४ ॥

गो० टी०–व्यसनमेवाह–अयं हीति । अयं विहङ्गमः पापचारेण रावणेन विनिहतः शेते ॥ ६ ॥

५ ] ति० टी०–यथान्तिके निकटस्थितानां शृण्वतां श्रवणं भवेत्तथा समाक्रन्दत् न तूच्चैः शीघ्रं रामागमनं मा भूदिति तात्पर्येण ॥ ९ ॥

रा० टी०–त्राहीति । सुसंत्रस्ता वराङ्गना सीता अन्तिके समीपे देवादीनां शृण्वतां सतां हे काकुत्स्थ ! अद्य मां यथा यथावत् त्राहि इति समाक्रन्दत् ॥ ९ ॥

गो० टी०–त्राहीति । शृण्वतामान्तिके यथा शृण्वतां समीप इव दूरस्थितम् रामं लक्ष्मणं च रामेति लक्ष्मणेति च संबोध्य आक्रन्दत् ॥ ७ ॥

६ ] ति० टी०–क्लिष्टानि परिमृदितानि माल्याभरणानि यस्यास्ताम् ॥ ६ ॥

रा० टी०–तामिति । क्लिष्टानि विबाधितानि माल्याभरणानि यस्याः सा ताम् अत एव अनाथवत् विलपन्तीं वैदेहीं रावणोऽभ्यधावत ॥ ६ ॥

गो० टी०–तामिति । क्लिष्टमाल्याभरणां मृदितमाल्याभरणाम् क्षणं विश्रान्तः अभ्यधावत अभ्यधावत् ॥ ८ ॥

७ ] ति० टी०–वेष्टन्तीं लतामिव वृक्षानालिङ्गन्तीम् । मा मुञ्च मुञ्चेति बहुशो वृक्षान्वदन्तीमिति शेषः, मोचय मोचयेत्यर्थो वा । प्राप इतस्ततो धावन्तीं समीपगत आसीत् ॥ ७ ॥

रा० टी०–तामिति । महाद्रुमान् आलिङ्गन्तीम् अत एव लतामिव वेष्टन्तीं तां सीतां मुञ्चमुञ्चेति वदन्तीति शेषः राक्षसाधिपः प्राप सीतासमीपमगच्छत् ॥ ७ ॥

गो० टी०–तामित्यादि द्वावेकान्वयौ । लतामिव भूतले वेष्टन्तीं वेष्टमानाम् ॥ ९ ॥ १० ॥

८ ] ति० टी०–जीवितान्ताय अनेन परस्त्रीकेशस्पर्शो यस्यकस्यापि जीवितापहारीति बोधितम् ॥ ८ ॥

रा० टी०–क्रोशन्तीमिति । रामेण रहिताम् अत एव रामरामेति क्रोशन्तीं सीताम् अन्तकसन्निभो रावणः जीवितान्ताय स्वजीवनविध्वंसाय केशेषु जग्राह ॥ ८ ॥

९] ति० टी०–अमर्यादं त्यक्तस्वस्वप्रकृतिकम् जलमुष्णमग्निः शीत इत्येवमादि । अन्धेन तमसा बाह्येनाभ्यन्तरेण च ९

रा० टी०–प्रधर्षितायामिति । वैदेह्यां प्रधर्षितायाम् रावणेन पराभूतायामिव सचराचरं सर्वं जगत् अन्धेन गाढेन तमसा अन्धकारेण संवृतम् आच्छादितम् एतेन सूर्यचन्द्रमसोस्तारागणादीनां च तेजोरहितत्वं सूचितम् तेन सर्वेषां

---

१ नूनं राम नेति गो. पाठः । २ काकुत्स्थमिति गो. पाठः । ३ पापचारेण मां त्रातुमभीति गो. पापाचारेणेति रा. पाठः । ४ प्रवदन्निति गो. पाठः । ५ सीतायामिति गो. पाठः ।

न वाति मारुतस्तत्र निष्प्रभोऽभूद्दिवाकरः । दृष्ट्वा सीतां परामृष्टां देवो दिव्येन चक्षुषा ॥ १० ॥
कृतं कार्यमिति श्रीमान्व्याजहार पितामहः । प्रहृष्टा व्यथिताश्चासन्सर्वे ते परमर्षयः ॥ ११ ॥
दृष्ट्वा सीतां परामृष्टां दण्डकारण्यवासिनः । रावणस्य विनाशं च प्राप्तं बुद्ध्वा यदृच्छया ॥ १२ ॥
स तु तां राम रामेति रुदतीं लक्ष्मणेति च । जगामादाय चाकाशं रावणो राक्षसेश्वरः ॥ १३ ॥
तप्ताभरणवर्णाङ्गी पीतकौशेयवासिनी । रराज राजपुत्री तु विद्युत्सौदामनी यथा ॥ १४ ॥
उद्धूतेन च वस्त्रेण तस्याः पीतेन रावणः । अधिकं परिबभ्राज गिरिर्दीप्त इवाग्निना ॥ १५ ॥
तस्याः परमकल्याण्यास्ताम्राणि सुरभीणि च । पद्मपत्राणि वैदेह्या अभ्यकीर्यन्त रावणम् ॥ १६ ॥

---

शोकातिशयः सूचितः तेन रावणविध्वंसो न भविष्यतीति शोके हेतुर्व्यञ्जितः तेन रावणस्य बलातिशयो व्यक्तः अत एव अमर्यादम् अत्याश्चर्यदर्शनेन स्वस्वस्वभावरहितं बभूव प्रधर्षिताशब्दः आचारकिंचित्प्रकृतिककर्तृकिंचित्तः ॥ ९ ॥

गो० टी०–प्रधर्षितायामिति । अमर्यादं भिन्नसत्त्वप्रकृतिकम् अन्धेन गाढेन तमसा अज्ञानान्धकारेण तदा जगत्सर्वं संवृतं विमूढं चासीदित्यर्थः ॥ ११ ॥

१० ] ति० टी०–मर्यादात्यागमेवाह–न वातीति । देवो ब्रह्मापि ब्रह्मलोकस्थ एव दिव्येन चक्षुषा सीतां परामृष्टां रक्षसा केशेषु गृहीतां दृष्ट्वा ॥ १० ॥

रा० टी०–तदेव स्पष्टयन्नाह–नेति । तत्र तस्मिन्समये मारुतो वायुर्न वाति दिवाकरः सूर्यः निष्प्रभोऽभूत् । अर्धं पृथक्–दृष्ट्वेति । देवो देवदेवः पितामहो ब्रह्मा दिव्येन चक्षुषा सीतां परामृष्टां शत्रुपहृतां दृष्ट्वा कार्यं राक्षसध्वंसरूपदेवकृत्यं कृतं रामेण संपादितमिति व्याजहार कथयामास ॥ १० ॥

गो० टी०–न वातीत्यर्धमेकं वाक्यम् ॥ १२ ॥

११ ] ति० टी०–श्रीमान्निस्तुलसकलैश्वर्यवान्पितामहः कृतं यदर्थमवतीर्णा देवानां तत्कार्यं कृतं सिद्धमित्यब्रवीत् ॥ ११ ॥

रा० टी०–प्रहृष्टा इति । दण्डकारण्यवासिनः सर्वे ते परमर्षयः सीतां परामृष्टां शत्रुपहृतां दृष्ट्वा रावणस्य विनाशं बुद्ध्वा निश्चित्य प्रहृष्टाः अतिहर्षं प्राप्ताः व्यथिताः सीताक्लेशदर्शनेन प्राप्तदुःखाश्चासन् ॥ ११ ॥ १२ ॥

गो० टी०–प्रहृष्टा इति । रावणवधस्य सिद्धप्रायत्वेन हर्षः तादात्विकसीतादशावलोकनेन व्यथा । सीतां परामृष्टां दृष्ट्वा यदृच्छया दैवगत्या रावणस्य प्राप्तं सन्निहितं विनाशं च बुद्ध्वा व्यथिताः प्रहृष्टाश्चासन्नित्यन्वयः ॥ १४ ॥

१२-१३ ] ति० टी०–प्रहर्षव्यथयोर्हेतुमाह–दृष्ट्वेति । तत्कालं नातिदैन्याया हरणं दृष्ट्वा तन्मायामोहितत्वाद्व्यथिताः, यदृच्छया आयासं विनैव सपरिवारस्य रावणस्य नाशं प्राप्तं बुद्ध्वा हृष्टा इत्यर्थः । भागसंधिरत्र ॥ १२ ॥ १३ ॥

गो० टी०–दृष्ट्वेति । परामृष्टाम् अपहृतां दिव्येन चक्षुषा ज्ञानेन दृष्ट्वा ज्ञात्वा कार्यं बालकाण्डे विष्णुना प्रतिज्ञातं कृतमिति व्याजहार । प्रीत्यतिशयेन पुरुषान्तरासंविधानेऽप्युदाहरत् ॥ १३ ॥

रा० टी०–स इति । स रावणस्तु राम रामेति लक्ष्मणेति च रुदन्तीं तां सीताम् आदाय आकाशं जगाम ॥ १३ ॥

गो० टी०–स त्विति । तुशब्देन ऋष्यादिभ्यो व्यावृत्तिः १९

१४ ] ति० टी०–तप्ताभरणवर्णाङ्गी तप्तकाञ्चनाभरणसदृशवर्णयुक्ताङ्गी सौदामनी विद्युदिति । सुदाम्नो बहुरत्नादिमत्त्वात्तद्भवा विद्युदतिप्रकाशमाना भवति तद्वत्सीतेत्यर्थः ॥ १४ ॥

रा० टी०–तप्तेति । तप्ताभरणवर्णाङ्गी तप्तं प्रतप्तं यदाभरणम् जाम्बूनदभूषणं तस्य वर्णसदृशवर्णविशिष्टमङ्गं यस्याः सा पीतकौशेयवासिनी राजपुत्री सीता सौदामनी सुदामोपर्वतविशेषोद्भवा विद्युदिव रराज शुशुभे एतेन रावणे दुष्टभावाभावः सूचितः ॥ १४ ॥

गो० टी०–तप्तेति । तप्ताभरणं तप्तं काञ्चनाभरणं तत्तुल्यवर्णाङ्गी विद्युत् विशेषेण द्योतमाना सौदामिनी तडित् । अनेन तडिद्यथा मेघे क्षणं तिष्ठति तथा रावणे सीतेति सूचितम् ॥ १६ ॥

१५ ] ति० टी०–अग्निना दीप्तो गिरिरिवेत्यनेनासन्नभस्मता सूचिता । असङ्गाया अपि चिच्छक्तेस्तस्या रावणविनाशसांनिध्यद्योतनाय कवी रावणेन तस्या आसक्तिं वर्णयति ॥ १९ ॥

रा० टी०–उद्धूतेनेति । उद्धूतेन वातप्रचलितेन पीतेन तस्याः सीतायाः वस्त्रेण अग्निना दीप्तो गिरिरिव रावणोऽधिकं परिबभ्राज ॥ १९ ॥

गो० टी०–उद्धूतेनेति । अत्रापि सीताग्रहणेन रावणस्य संतापो भविष्यतीत्यलंकारेण वस्तुध्वनिः ॥ १७ ॥

१६ ] ति० टी०–पद्मपत्राणि रावणमभ्यकीर्यन्त । रावणाङ्के पतितान्यभूवन्नित्यर्थः ॥ १६ ॥

रा० टी०–तस्या इति । परमकल्याण्यास्तस्याः सीतायाः सुरभीणि शोभनगन्धविशिष्टानि ताम्राणि अरुणानि पद्मपत्राणि रावणमभ्यकीर्यन्त ॥ १६ ॥

गो० टी०–तस्या इति । रावणमभ्यकीर्यन्त रावणाङ्के पतितानीत्यर्थः । अत्र रावणैश्वर्यं क्षणाद्विशीर्णं भविष्यतीति वस्तुना वस्तुध्वनिः ॥ १८ ॥

---

१ दीनामिति गो. पाठः । २ रुदन्तीमिति गो. रा. पाठः । ३ सौदामिनीति गो. पाठः । ४ प्रतीति गो. पाठः । ५ सुदामपर्वतेति भाति ।

तस्याः कौशेयमुद्धूतमाकाशे कनकप्रभम् । बभौ चादित्यरागेण ताम्रमभ्रमिवातपे ॥ १७ ॥
तस्यास्तद्विमलं वक्रमाकाशे रावणाङ्कगम् । न रराज विना रामं विनालमिव पङ्कजम् ॥ १८ ॥
बभूव जलदं नीलं भित्त्वा चन्द्र इवोदितः । सुललाटं सुकेशान्तं पद्मगर्भाभमव्रणम् ॥ १९ ॥
शुक्लैः सुविमलैर्दन्तैः प्रभावद्भिरलंकृतम् । तस्याः सुनयनं वक्रमाकाशे रावणाङ्कगम् ॥ २० ॥
रुदितं व्यपमृष्टास्रं चन्द्रवत्प्रियदर्शनम् । सुनासं चारुताम्रोष्ठमाकाशे हाटकप्रभम् ॥ २१ ॥
राक्षसेन्द्रसमाधूतं तस्यास्तद्वदनं शुभम् । शुशुभे न विना रामं दिवा चन्द्र इवोदितः ॥ २२ ॥
सा हेमवर्णा नीलाङ्गं मैथिली राक्षसाधिपम् । शुशुभे काञ्चनी काञ्ची नीलं गजमिवाश्रिता ॥ २३ ॥
सा पद्मपीता हेमाभा रावणं जनकात्मजा । विद्युद्धनमिवाविश्य शुशुभे तप्तभूषणा ॥ २४ ॥

---

१७ ] ति० टी०—आतपे इत्यनेन ईषत्तप इत्यर्थकेन संध्याकालं लक्षयति । तत्र काले आदित्यरागेण तत्किरणेन युक्तमभ्रमिव तत्करयुतं वासो बभौ ॥ १७ ॥

रा०टी०—तस्या इति । आकाशे उद्धूतं कनकप्रभं तस्याः कौशेयम् आतपे ईषत्तपे संध्याकाले इत्यर्थः, आदित्यरागेण ताम्रमरुणमभ्रमिव बभौ ॥ १७ ॥

गो० टी०—तस्या इति । आतपे मध्याह्ने आदित्यरागेण ताम्रम् अरुणमभ्रमिव बभौ । अनेन रावणविनाशपिशुनोत्पातः सूचितः ॥ १९ ॥

१८ ] ति० टी०—बिनालमिव पङ्कजम् । शोकशुष्कत्वात् ॥ १८ ॥

रा० टी०—तस्या इति । रावणाङ्कगं विमलं तस्याः वक्रं रामं विना विनालं नालरहितं पङ्कजमिव न रराज ॥ १८ ॥

गो० टी०—तस्यास्तदिति । उपसर्गाच्चेति नासिकाशब्दान्ताद्बहुव्रीहेरच् समासान्तः नासिकाशब्दस्य नसादेशश्च । अत्र सीताया सुखविवर्णत्वोक्त्या खेदातिशय उच्यते ॥ २० ॥

१९ ] ति० टी०—नीलं जलदं भित्त्वा तन्मध्य उदितश्चन्द्र इव बभौ । तत्कान्तिधूसरो हि सततमुदेति । वक्रं विशिनष्टि—सुललाटमिति । पद्मगर्भवदाभा यस्य तत् ॥ १९ ॥

रा० टी०—बभूवेति । सुललाटं शोभनललाटविशिष्टं पद्मगर्भाभं पद्मगर्भसदृशम् अव्रणं विस्फोटकादिहेतुकव्रणरहितं शुक्लैः श्वेतैः सुविमलैः स्वच्छैः प्रभावद्भिः प्रभाविशिष्टैः दन्तैरलंकृतं सुनयनं शोभननेत्रविशिष्टं रावणाङ्कगं सुकेशान्तं शोभनकेशपर्यन्तं तस्याः वक्रं सुखं नीलं जलदं मेघं भित्त्वोदितः चन्द्र इव बभूव । श्लोकद्वयमेकान्वयि ॥ १९ ॥ २० ॥

गो० टी०—अथ त्वरितगमनमाह—बभूवेति । अत्र सुखमिति शेषः । जलदं भित्त्वा उदितः प्रकाशमानश्चन्द्र इव मेघरन्ध्रे भासमान इत्यर्थः । अत्र प्रतिचन्द्रदर्शनरूपोत्पातः सूच्यते । पद्मगर्भाभं विकसितपद्माभमित्यर्थः । अव्रणं निर्दोषम् ॥ २१ ॥

२० ] ति० टी०—रावणाङ्कगम् न बभाविति शेषः ॥२०॥

गो० टी०—शुक्लैरिति । न शुशुभ इति वक्ष्यमाणमनुषज्यते । रावणाङ्कगं सत्र शुशुभे अननुरूपत्वादिति भावः ॥२२॥

२१ ] ति० टी०—रुदितं रोदनवत् अर्शआयच् । अत एवापमृष्टास्रमपमार्जिताश्रुकम् ॥ २१ ॥

रा० टी०—रुदितमिति । रुदितं रोदनसूचकाकृतिविशिष्टं किं च रुदो रोदनं जातमस्येति तत् अत एव व्यपमृष्टास्रं प्रमृष्टाश्रु चन्द्रवत्प्रियदर्शनं सुनासं शोभननासाविशिष्टं चारु रमणीयं ताम्रोष्ठम् अरुणौष्ठविशिष्टं हाटकप्रभं सुवर्णप्रभासदृशप्रभाविशिष्टं राक्षसेन्द्रसमाधूतं राक्षसेन्द्रात् हेतुभूतात् प्राप्तकम्पं तस्याः सीतायास्तत् शुभं वदनं दिवा उदितः चन्द्र इव रामं विना न शुशुभे । श्लोकद्वयमेकान्वयि ॥ २१ ॥ २२ ॥

गो० टी०—रुदितमिति । रुदितं रोदनवत् अत एव व्यपमृष्टास्रम् अनिवृत्ताश्रुकम् हाटकप्रभं हिरण्यप्रभम् 'हिरण्यं हेम हाटकम्' इत्यमरः । पूर्वं मनोज्ञं सुखम् इदानीम् रुदितादिमत्त्वान्न शुशुभ इति भावः ॥ २३ ॥

२२ ] ति० टी०—दिवोदितचन्द्रवदपगतशोभम् ॥ २२ ॥

गो० टी०—राक्षसेनेति । राक्षसेन निमित्तेन समाधूतं भयकम्पितम् ॥ २४ ॥

२३ ] ति० टी०—शुशुभे शोभयति स्म । नीलं गजमाश्रिता काञ्चनी काञ्चीव ॥ २३ ॥

रा० टी०—सेति । हेमवर्णा मैथिली राक्षसाधिपमाश्रिता सा सीता काञ्चनी स्वर्णमयी नीलं गजमाश्रिता काञ्ची मेखलेव शुशुभे 'मणिं नीलमिव' इति भूषणपाठः ॥ २३ ॥

गो० टी०—सेति । राक्षसाधिपमाश्रिता सा सीता नीलं मणिमाश्रिता काञ्चनी काञ्चनमयी काञ्ची मेखलेव शुशुभे । रजतमेव नीलरत्नस्य परभागकरमिति प्रसिद्धिः । तेन काञ्चनस्य नीलमणिशोभातिरस्कारकत्वात् शुशुभ इति व्यतिरेकोक्त्या न शुशुभ इत्यर्थः, नेत्यनुषङ्गो वा ॥ २६ ॥

२४ ] ति० टी०—पद्मपीता पद्मकेसरवत्पीतदेहा । तप्तकाञ्चनभूषणा ॥ २४ ॥

रा० टी०—सेति । पद्मपीता पद्मकेशरवद्गौरदेहा अत एव हेमाभा प्रतप्तस्वर्णसदृशी तप्तभूषणा प्रतप्तचामीकरमयभूषणविशिष्टा जनकात्मजा सा सीता विद्युद्धनमिव रावणमाविश्य तदुपरि स्थित्वा शुशुभे 'पद्मगौरी' इति तीर्थपाठः ॥ २४ ॥

---

१ तत्सुनसमिति गो० पाठः । २ तद्विमलमिति गो० पाठः । ३ राक्षसेनेति गो० पाठः । ४ मणिमिति गो० पाठः । ५ गौरीति गो० पाठः ।

तस्या भूषणघोषेण वैदेह्या राक्षसेश्वरः। बभूव विमलो नीलः सघोष इव तोयदः ॥ २५ ॥
उत्तमाङ्गच्युता तस्याः पुष्पवृष्टिः समन्ततः। सीताया ह्रियमाणायाः पपात धरणीतले ॥ २६ ॥
सा तु रावणवेगेन पुष्पवृष्टिः समन्ततः। समाधूता दशग्रीवं पुनरेवाभ्यवर्तत ॥ २७ ॥
अभ्यवर्तत पुष्पाणां धारा वैश्रवणानुजम्। नक्षत्रमाला विमला मेरुं नगमिवोत्तमम् ॥ २८ ॥
चरणान्नूपुरं भ्रष्टं वैदेह्या रत्नभूषितम्। विद्युन्मण्डलसंकाशं पपात धरणीतले ॥ २९ ॥
तरुप्रवालरक्ता सा नीलाङ्गं राक्षसेश्वरम्। प्राशोभयत वैदेही गजं कक्ष्येव काञ्चनी ॥ ३० ॥
तां महोल्कामिवाकाशे दीप्यमानां स्वतेजसा। जहाराकाशमाविश्य सीतां वैश्रवणानुजः ॥ ३१ ॥

गो० टी०–सेति। पद्मगौरी पद्मवत्पीतवर्णा। अनेन सुकुमारवर्णतोक्ता हेमाभेत्यनेन स्थिरवर्णतोक्ता। तप्तभूषणा तपनीयभूषणा विद्युदिव सीता तस्मिन् क्षणं स्थितापि सौहृदं नाकाङ्क्षतेत्यर्थः ॥ २६ ॥

२५ ] ति० टी०–'अभूत्सचपलो नीलः' इति पाठे चपला विद्युत्तया सहितो घोषवान्मेघ इवाभूदित्यर्थः ॥ २६ ॥

रा० टी०–तस्या इति। वैदेह्याः तस्याः सीतायाः भूषणघोषेण राक्षसेश्वरो रावणः विमलः स्वच्छः नीलः नीलवर्णः सघोषो घोषसहितः तोयदो मेघ इव बभूव ॥ २५ ॥

गो० टी०–तस्या इति। सचपलः सविद्युत्। यथा सगर्जितो मेघ आशु निःसारो भविष्यति तथेति भावः ॥ २८ ॥

२६ ] ति० टी०–उत्तमाङ्गेति। मातः! त्वया संपादितोऽस्मन्मनोरथ इति हर्षाद्देवैः क्रियमाणा पुष्पवृष्टिस्तदुत्तमाङ्गाच्च्युता तत्काले भूमौ पपातेति कतकः। वस्तुतो रावणसंनिधौ देवानां तथा वीर्यासंभवात् उत्तमाङ्गे धृतपुष्पाणां तद्वेगेन ततश्चोत्तमाङ्गच्युतेत्युक्तम्। अत एवाग्रे भूमौ पुष्पयुतं मार्गं दृष्ट्वा रामो वक्ष्यति–'अभिजानामि पुष्पाणि तानीमानीह लक्ष्मण। अपिनद्धानि वैदेह्या मया दत्तानि कानने ॥' इति ॥ २६ ॥

रा० टी०–उत्तमाङ्गेति। ह्रियमाणायाः तस्याः वैदेह्याः उत्तमाङ्गच्युता शिरसो विभक्ता पुष्पवृष्टिः समन्ततो धरणीतले पपात ॥ २६ ॥

गो० टी०–उत्तमेति। उत्तमाङ्गाच्छिरसः ॥ २९ ॥

२७–२९ ] ति० टी०–रावणगमनवेगजनितवायुना समाधूतापि पुनर्दशग्रीवमेवाभ्यवर्तताभितोऽवर्तिष्ट अनवरतं जायमानत्वात् ॥ २७–२९ ॥

रा० टी०–सा त्विति। सा सीतोत्तमाङ्गच्युता पुष्पवृष्टिस्तु रावणवेगेन समन्ततः समाधूता सती पुनर्दशग्रीवं रावणमेव अभ्यवर्तत तद्देहसंलग्नाऽभवत् ॥ २७ ॥

गो० टी०–सा त्विति। सा पुष्पवृष्टिः रावणवेगेन रावणवेगजनितवातेन समाधूता पुनर्दशग्रीवमेव अभ्यवर्तत अभितः प्रावर्तिष्ट अनेन रावणस्य त्वरितगमनमुक्तम् ॥ ३० ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–अभ्यवर्ततेति। पुष्पाणां सीतोत्तमाङ्गच्युतसुमनसां धारा वैश्रवणानुजं रावणं विमला नक्षत्रमाला नगोत्तमं मेरुमिव अभ्यवर्तत ॥ २८ ॥

गो० टी०–उक्तां पुष्पवृष्टिं वर्णयति–अभ्यवर्ततेति। धारा पङ्क्तिः ॥ ३१ ॥

रा० टी०–चरणादिति। रत्नभूषितम् अनेकविधरत्नसंयुक्तम् अत एव विद्युन्मण्डलसंकाशं वैदेह्याश्चरणाद्भ्रष्टं स्रस्तं नूपुरं धरणीतले पपात। भ्रष्टमित्यनेन नूपुरस्य चैतन्यं ध्वनितं तेन कश्चिन्मां संगृह्य राघवाय दर्शयेत् अत एव राघत्रोऽपहरणदिशं विजानीयादिति हेतुः सूचितः ॥ २९ ॥

गो० टी०–चरणादिति। वामचरणादित्यर्थः। भ्रष्टं शिथिलं पपात ॥ ३२ ॥

३०] ति० टी०–तरुप्रवालरक्तवर्णा रक्तकिसलयवर्णेत्यर्थः। क्रोधातिशयादेवं वर्णोऽस्याः। कक्ष्या गजाच्छादिनी ॥ ३० ॥

रा० टी०–तर्विति। तरुप्रवालरक्ता तरुविशेषनवोद्भूतपल्लवारुण्यसदृशारुण्यविशिष्टा वैदेही सा सीता नीलाङ्गं राक्षसेश्वरं रावणं काञ्चनी स्वर्णमयी कक्ष्या गजाच्छादनी गजमिव प्राशोभयत ॥ ३० ॥

गो० टी०–तर्विति। तरुविशेषप्रवालवत् रक्ता पीतवर्णा। तेन रक्तं रागादित्यत्र रागशब्दो हि वर्णमात्रे प्रयुक्तः। कक्ष्येवेति। कक्ष्या इभबन्धनी। यथा कक्ष्या गजगता गजं यन्तुर्नियाम्यं करोति तथेयं रावणं प्राप्य रामनियाम्यमकरोदिति भावः ॥ २७ ॥

३१ ] ति० टी०–तां सीतामित्यन्वयः। अत्र प्रकरणे वारंवारं वैश्रवणानुजत्वोक्त्या ईदृशक्रियाया अत्यनौचित्यप्रदर्शनेन शीघ्रफलदत्वं सूचयति ॥ ३१ ॥

रा० टी०–तामिति। आकाशे महोल्कामिव स्वतेजसा दीप्यमानां सीतां वैश्रवणानुजो रावणः आकाशमाविश्य जहार ॥ ३१ ॥

गो० टी०–तामिति। उत्पातसूचिका तारा महोल्का ॥ ३३ ॥

१ राक्षसाधिप इति गो. पाठः। २ बभौ सचपल इति गो. पाठः। ३ अङ्गाच्च्युतेति गो. पाठः। ४ उन्नतामिति गो. पाठः। ५ मधुरस्वनमिति गो. पाठः। ६ श्लोकोऽयं तस्या भूषणेत्यस्मात्पूर्वं गो. पाठे।

तस्यास्तान्यग्निवर्णानि भूषणानि महीतले । सघोषाण्यवशीर्यन्त क्षीणास्तारा इवाम्बरात् ॥ ३२ ॥
तस्याः स्तनान्तराद्भ्रष्टो हारस्ताराधिपद्युतिः । वैदेह्या निपतन्भाति गङ्गेव गगनच्युता ॥ ३३ ॥
उत्पातवाताभिरता नानाद्विजगणायुताः । मा भैरिति विधूताग्रा व्याजह्रुरिव पादपाः ॥ ३४ ॥
नलिन्यो ध्वस्तकमलास्त्रस्तमीनजलेचराः । सखीमिव गतोत्साहां शोचन्तीव स्म मैथिलीम् ॥ ३५ ॥
समन्तादभिसंपत्य सिंहव्याघ्रमृगद्विजाः । अन्वधावंस्तदा रोषात्सीताच्छायानुगामिनः ॥ ३६ ॥
जलप्रपातास्रमुखाः शृङ्गैरुच्छ्रितबाहुभिः । सीतायां ह्रियमाणायां विक्रोशन्तीव पर्वताः ॥ ३७ ॥
ह्रियमाणां तु वैदेहीं दृष्ट्वा दीनो दिवाकरः । प्रविध्वस्तप्रभः श्रीमानासीत्पाण्डुरमण्डलः ॥ ३८ ॥
नास्ति धर्मः कुतः सत्यं नार्जवं नानृशंसता । यत्र रामस्य वैदेहीं सीतां हरति रावणः ॥ ३९ ॥

---

३२-३३ ] ति० टी०—क्षीणाः क्षीणपुण्याः, तारास्ताराः रूपावस्थिताः पुण्यकृत इत्यर्थः ॥ ३२ ॥ ३३ ॥

रा० टी०—तस्या इति । अग्निवर्णानि सघोषाणि घोषविशिष्टानि तस्याः सीताया तानि प्रसिद्धानि भूषणानि अम्बरात् क्षीणास्तारा इव अवकीर्यन्त ॥ ३२ ॥

गो०टी०—तस्या इति। भूषणानि उपात्तनूपुरादिभिन्नानि ३४

रा० टी०—तस्या इति । वैदेह्याः तस्याः सीतायाः स्तनान्तरात् भ्रष्टः स्खलितः ताराधिपद्युतिः चन्द्रद्युतिसदृशद्युतिमान् हारः भूमौ निपतन्सन् गगनच्युता गङ्गेव भाति अभात् ॥ ३३ ॥

गो० टी०—तस्या इति । भाति भाति स्म ॥ ३५ ॥

३४ ] ति० टी०—उत्पातवात उर्ध्ववातः । द्विजगणैः पक्षिगणैर्युक्ता व्याजह्रुरिव उत्प्रेक्षालंकारः ॥ ३४ ॥

रा० टी०—उत्पातेति । उत्पातवाताभिहता उत्पातवातैः प्रचलिताः अत एव धूताग्रा नानाद्विजगणायुताः अनेकविधपक्षिभिः सेविताः पादपास्त्वं मा भैषीरिति व्याजह्रुः सीतां प्रत्यूचुरिव ॥ ३४ ॥

गो० टी०—उत्पन्नेति । रावणवेगोत्पन्नेत्यर्थः । वातकम्पिताग्रत्वात् पक्षिगणरवत्त्वाच विधूताग्राः आश्वासनाय चलितशिरसः सन्तः मा भैरिति व्याजह्रुरिव ॥ ३६ ॥

३५ ] ति० टी०—त्रस्ता मीनप्रभृतिजलेचरा यासां ताः । सखीमिव मैथिलीं गतोत्साहाम् । 'गतोच्छ्वासाः' इति पाठे रावणत्रासाच्छुष्कजलतया गतप्राणा इत्यर्थः ॥ ३५ ॥

रा० टी०—नलिन्य इति । ध्वस्तानि कमलानि यासां ताः त्रस्ता भीताः मीनाः जलेचराः तदितरजलौकसश्च यासु ताः नलिन्यः गतोत्साहां मैथिलीं सखीमिव शोचन्ति स्मेव 'गतोच्छ्वासां' इति तीर्थपाठः, मूर्च्छितामिति तद्व्याख्या 'गतोच्छ्वासा' इतिपाठे रावणत्रासात् शुष्कजलतया गतप्राणा इत्यर्थः इति भट्टाः ॥ ३५ ॥

गो० टी०—नलिन्य इति । गतोच्छ्वासां गतप्राणां मूर्च्छितामिति यावत् । तादृशीं सखीमिव मैथिलीमुद्दिश्य अशोचन्त अशोचन् । ध्वस्तकमलाः कान्तिहीना इत्यर्थः । त्रस्ताः भीताः मीनाः मत्स्याः जलेचराः नक्रादयश्च यासु ताः । त्रस्तेत्यादिना आकुलनेत्रत्वादिकमुच्यते ॥ ३७ ॥

३६ ] ति० टी०—रोषाद्रावणविषयात् ॥ ३६ ॥

रा० टी०—समन्तादिति । तदा सीताया हरणसमये रोषात् रावणविषयककोपात् सिंहादयः अभिसंपत्य संप्राप्य सीताच्छायानुगामिनः सन्तः अन्वधावन् ॥ ३६ ॥

गो० टी०—समन्तादिति । तदा व्याघ्रादयः समन्तान्नानादेशात् अभिसंपत्य आगत्य रावणे रोषाच्छायानुसारिणः सन्तोऽन्वधावन् ॥ ३८ ॥

३७-३८ ] ति० टी०—जलप्रपातरूपाण्यस्राणि मुखे येषां ते ॥ ३७ ॥ ३८ ॥

रा० टी०—जलेति । सीतायां ह्रियमाणायां सत्यां जलप्रवाहास्रमुखाः जलप्रवाहोऽस्रमश्रु इव तद्युक्तं मुखं येषां ते पर्वताः शृङ्गैः शृङ्गरूपैः उच्छ्रितबाहुभिः विक्रोशन्तीव ॥ ३७ ॥

गो० टी०—जलेति । जलप्रपातरूपाण्यस्राणि मुखे येषां ते उच्छ्रितबाहवः उन्नतबाहवः विक्रोशन्तीव व्याक्रोशन्निव ॥ ३९ ॥

रा० टी०—ह्रियमाणामिति । वैदेहीं ह्रियमाणां दृष्ट्वा श्रीमान् दिवाकरः दीनः अत एव प्रविध्वस्तप्रभः अत एव पाण्डुरमण्डल आसीत् ॥ ३८ ॥

गो० टी०—ह्रियमाणां त्विति । श्रीमान् प्राप्तविषयशोक एव श्रीः ॥ ४० ॥

३९] ति० टी०—आर्जवमजैह्मयम् । अनृशंसता दया । यत्र यस्मादित्यर्थः ॥ ३९ ॥

रा० टी०—नन्वेवमधर्मो रावणेन कथं कृत इत्यत आह—नास्तीति । यत्र यस्मिन् राक्षसशरीरे स्थितो रावणः सीतां हरति तस्मिन् राक्षसशरीरे धर्मो नास्ति सत्यं कुतः आर्यवत्त्वमता नास्ति कुतोऽनृशंसता ॥ ३९ ॥

गो० टी०—नास्तीति सार्धश्लोक एकान्वयः । अनृशंसता दया यत्र यस्मात् गणशः संघशः पर्यदेवयन् व्यलपन् ॥ ४१ ॥

---

१ कीर्यन्तेति गो. रा. पाठः । २ गगनाच्च्युतेति गो. पाठः । ३ उत्पन्नेति गो. पाठः । ४ हता इति गो. रा. पाठः । ५ गतोच्छ्वासामन्वशोचन्तेति गो. पाठः । ६ सीतामिति गो. पाठः । ७ बाहव इति गो. पाठः । ८ सार्यामिति गो. पाठः ।

इति भूतानि सर्वाणि गणशः पर्यदेवयन् । वित्रस्तका दीनमुखा रुरुदुर्मृगपोतकाः ॥ ४० ॥
उद्वीक्ष्योद्वीक्ष्य नयनैर्भयादिव विलक्षणैः । सुप्रवेपितगात्राश्च बभूवुर्वनदेवताः ॥ ४१ ॥
विक्रोशन्तीं दृढं सीतां दृष्ट्वा दुःखं तथागताम् । तां तु लक्ष्मण रामेति क्रोशन्तीं मधुरस्वैराम् ॥ ४२ ॥
अवेक्षमाणां बहुशो वैदेहीं धरणीतलम् । स तामाकुलकेशां तां विप्रमृष्टविशेषकाम् ॥
जहारात्मविनाशाय दशग्रीवो मनस्विनीम् ॥ ४३ ॥
ततस्तु सा चारुदती शुचिस्मिता विनाकृता बन्धुजनेन मैथिली ।
अपश्यती राघवलक्ष्मणावुभौ विवर्णवक्त्रा भयभारपीडिता ॥ ४४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे द्विपञ्चाशः सर्गः ॥ ५२ ॥

## त्रिपञ्चाशः सर्गः ।

रावणेन नभोमार्गतो नीयमाना वैदेही मार्गमध्ये तं बहु विगर्हते ।

खमुत्पतन्तं तं दृष्ट्वा मैथिली जनकात्मजा । दुःखिता परमोद्विग्ना भये महति वर्तिनी ॥ १ ॥

---

४० ] ति० टी०–गणशः सङ्घशः । वित्रस्तकाः स्वार्थे कः मृगपोतका मृगबालकाः ॥ ४० ॥

रा० टी०–इतीति । इति उक्तप्रकारेण सर्वाणि भूतानि वनदेवतादयः पर्यदेवयन् अत एव वित्रस्ताः रावणान्याय्यकरणाद्भीता अत एव दीनमुखाः मृगपोतका मृगबालाः रुरुदुः॥४०॥

गो० टी०–वित्रस्तका इति । स्वार्थे कः मृगपोतकाः मृगशावाः आविलं कलुषम् ॥ ४२ ॥

४१ ] ति० टी०–विलक्षणैर्विगतलक्षणैः विगतशोभैरिति यावत् ॥ ४१ ॥

रा० टी०–उद्वीक्ष्येति । विक्रोशन्तीं राममाह्वयन्तीं तथा तेन प्रकारेण दुःखं गतां प्राप्तां वैदेहीं दृष्ट्वा अत एव नयनैः उद्वीक्ष्योद्वीक्ष्य भयादिव रावणभीतेरेव सुप्रवेपितगात्राः वनदेवता बभूवुः । सार्धश्लोक एकान्वयी ॥ ४१ ॥

गो० टी०–सुप्रवेपितेत्यादिश्लोकद्वयमेकान्वयम् । तथा वाचामगोचरं दुःखं धरणीतलं बहुशोऽवेक्षमाणां रामलक्ष्मणप्रत्याशयेति भावः ॥ ४३ ॥ ४४ ॥

४२ ] ति० टी०–विक्रोशन्तीमित्यर्धं पूर्वान्वयि ॥ ४२ ॥

४३ ] ति० टी०–धरणीतलमवेक्षमाणां रामलक्ष्मणागमनकाङ्क्षया वस्तुतस्तदनुगमनाकाङ्क्षयेति तत्त्वम् । विप्रमृष्टो विलुलितो विशेषकस्तिलको यस्यास्ताम् ॥ ४३ ॥

रा० टी०–तामिति । लक्ष्मण ! रामेति विक्रोशन्तीं मधुरस्वरां स्वाभाविकमधुरस्वरविशिष्टां धरणीतलं बहुशो वारंवारम् अवेक्षमाणाम् आकुलो व्याकुलः केशान्तो यस्यास्तां विप्रमृष्टविशेषकां विप्रमृष्टः विलुलितो विशेषकस्तिलको यस्यास्तां तामभूतस्वरूपां मनस्विनीं वैदेहीं तां सीताम् आत्मविनाशाय दशग्रीवो जहार। अर्धचतुष्टयमेकान्वयि॥४२॥४३॥

गो० टी०–स इति । विप्रमृष्टं विलुलितं विशेषकं तिलकं यस्यास्ताम् ‘ तमालपत्रतिलकचित्रकाणि विशेषकम् ’ इत्यमरः । मनस्विनीं दृढमनस्कां पतिव्रतामित्यर्थः ॥ ४५ ॥

४४] ति० टी०–भयभारपीडिता सेव विवर्णवक्त्रेत्यर्थः॥४४॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे द्विपञ्चाशः सर्गः॥ ५२ ॥

रा० टी०–तत इति। चारुदती शोभनदन्तविशिष्टा शुचिस्मिता मैथिली ततोऽपहरणात् हेतोः बन्धुजनेन रामलक्ष्मणाभ्यां विना रहिता कृता अत एव रामलक्ष्मणौ अपश्यती अपश्यन्ती सती भयभारपीडिता अत एव विवर्णवक्त्रा अभवदिति शेषः॥४४॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे द्विपञ्चाशत्तमः सर्गः ॥ ५२ ॥

गो० टी०–तत इति । शुचिस्मितेति भूतपूर्वाभिप्रायेण स्वाभाविकहसितत्वाद्वा। विवर्णवक्त्रा बभूवेति शेषः ॥ ४६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने द्विपञ्चाशः सर्गः ॥ ५२ ॥

१ ] ति० टी०–अथ सीतया क्रियमाणपारुष्य एव तां हरति स्मेत्याह–खमिति । वर्तिनीत्यत्रप्यपि णिनिरार्षः ॥ १ ॥

रा० टी०–सीतावृत्तान्तमाह–खमित्यादिभिः । खमाकाशमुत्पतन्तं भीमाक्षं राक्षसाधिपं तं रावणं दृष्ट्वा महति भये वर्तिनी अत एव दुःखिता प्राप्तखेदा अत एव परमोद्विग्ना अत्युद्विग्नचित्ता अत एव रोषरोदनताम्राक्षी रोषरोदनेन रावणविषयककोपहेतुकाश्रुविमोकेन ताम्रे अरुणे अक्षिणी यस्याः

---

१ आत्मपाताविलेक्षणा इति गो. पाठः । २ स्वरमिति गो. पाठः ।

रोषरोदनताम्राक्षी भीमाक्षं राक्षसाधिपम् । [1]रुदती करुणं सीता ह्रियमाणा [2]तमब्रवीत् ॥ २ ॥
न व्यपत्रपसे नीच कर्मणाऽनेन रावण । ज्ञात्वा विरहितां [3]यो मां चोरयित्वा पलायसे ॥ ३ ॥
त्वयैव नूनं दुष्टात्मन्भीरुणा हर्तुमिच्छता । ममापवाहितो भर्ता मृगरूपेण मायया ॥ ४ ॥
यो हि मामुद्यतस्त्रातुं सोऽप्ययं विनिपातितः । गृध्रराजः पुराणोऽसौ श्वशुरस्य सखा मम ॥ ५ ॥
परमं खलु ते वीर्यं दृश्यते राक्षसाधम । विश्राव्य नामधेयं हि युद्धे नास्मि जिता त्वया ॥ ६ ॥
ईदृशं गर्हितं कर्म कथं कृत्वा न लज्जसे । स्त्रियाश्[4]चाहरणं नीच रहिते [5]च परस्य च ॥ ७ ॥
कथयिष्यन्ति लोकेषु पुरुषाः कर्म कुत्सितम् । सुनृशंसमधर्मिष्ठं तव [6]शौटीर्यमानिनः ॥ ८ ॥
धिक्ते शौर्यं च सत्त्वं च [7]यत्त्वया कथितं तदा । कुलाक्रोशकरं लोके धिक्ते चारित्रमीदृशम् ॥ ९ ॥

---

सा ह्रियमाणा सीता करुणं रुदती सती तं रावणमब्रवीत् । श्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

गो० टी०–अथ सीता रावणस्य चौर्यवृत्त्यादिकं बहुशो निन्दति–खमित्यादिना । दुःखिता बभूवेति शेषः । परमोद्विग्ना कम्पिता । 'ओविजी भयचलनयोः' इत्यस्मान्निष्ठा । वर्तिनी वर्तमाना ॥ १ ॥

२ ] ति० टी०–रोषरोदनाभ्यां हेतुभ्यां ताम्राक्षी ॥ २ ॥

गो० टी०–रोषेति । रोषवद्रोदनमपि रक्तिमहेतुः ॥ २ ॥

३ ] ति० टी०–विरहिताम् रामलक्ष्मणाभ्यामिति शेषः । अनेन कर्मणा चौर्येण ॥ ३ ॥

रा० टी०–तद्वचनाकारमाह–नेत्यादिभिः । हे नीच ! विरहितां रामलक्ष्मणाभ्यां विहीनां मां चोरयित्वा यस्त्वं पलायसे स त्वम् अनेन अपहरणरूपेण कर्मणा न व्यपत्रपसे जिह्रेषि ॥ ३ ॥

गो० टी०–नेति । नीचेति संबोधनम् । न व्यपत्रपसे न लज्जसे । विरहितां रामलक्ष्मणाभ्यामिति शेषः ॥ ३ ॥

४ ] ति० टी०–अपवाहितोऽन्यत्र नायितः । मायया मृगरूपेण मारीचेनेति शेषः ॥ ४ ॥

रा० टी०–त्वयेति । हे दुष्टात्मन् ! भीरुणा त्वयैव मम भर्ता मृगरूपेण राक्षसविशेषेण अपवाहितः ॥ ४ ॥

गो० टी०–त्वयैवेति । हर्तुं मामिति शेषः । अपवाहितः अपनीतः । मृगरूपेण मायया मायारूपमृगेणेत्यर्थः ॥ ४ ॥

५ ] ति० टी०–पुराणो वृद्धः अत एवास्य निपातनम्, न तु त्वद्वीर्यहेतुकमिति भावः ॥ ५ ॥

रा० टी०–य इति । मम श्वशुरस्य पुराणो वृद्धः सखा यो मां त्रातुम् उद्यतो गृध्रराजः सोऽप्ययं विनिपातितः । एतेन स्वरक्षकाभावयुक्तः सीतायाः पश्चात्तापः सूचितः । पुराणो हत इत्यनेनाहं बलवानिति गर्वस्त्वया न कार्य इति ध्वनितम् ॥५॥

गो० टी०–य इति । पुराणो वृद्ध इति व्यङ्ग्योक्तिः अतिवृद्धं हत्वा शूरोऽहमिति मन्यस इति भावः ॥ ५ ॥

६ ] ति० टी०–परमं खल्विति व्यङ्ग्योक्तिः ॥ ६ ॥

रा० टी०–परममिति । हे राक्षसाधम ! नामधेयं विश्राव्य श्रावयित्वा युद्धे रामलक्ष्मणसंग्रामे त्वया न जिताऽस्मि अतस्ते वीर्यं पराक्रमः परमं दृश्यते, एतेन त्वं चोर एव न पराक्रमवान् इति सूचितम् ॥ ६ ॥

गो० टी०–परममिति । परममिति सोल्लुण्ठनं वचनम् अतिनीचमित्यर्थः । तत्र हेतुमाह–विश्राव्येति । हि यस्मात्स्वनामधेयं विश्राव्य अहं रावणोऽस्मीति स्वनाम प्रख्याप्य युद्धेनास्म्यहं जितेति व्यतिरेकोक्तिः । यद्वा ते परमम् अवीर्यं क्लीबत्वं हि यस्माद्युद्धे न जितास्मि ॥ ६ ॥

७ ] ति० टी०–स्त्रिया हरणमेव गर्हितम् राक्षसादिविवाहानां शास्त्रे गर्हितत्वात्तत्रापि परस्य विवाहितायास्तत्रापि रहिते पतिरहिते काले देशे चेत्यतिनिन्द्यं ते कर्मेति भावः ॥७॥

रा० टी०–ईदृशमिति । रहिते पत्यादिशून्यदेशे परस्य स्त्रियाः आहरणम् ईदृशम् इदं गर्हितं कर्म कृत्वा कथं न लज्जसे ॥ ७ ॥

गो० टी०–ईदृशमिति । रहिते स्वामिरहितप्रदेशे परस्य स्त्रियाः हरणरूपमीदृशं गर्हितं निन्दितं कर्म कृत्वा कथं न लज्जसे ॥ ७ ॥

८ ] ति० टी०–शौटीर्यमानिनः शूरमानिनः । तादृशस्येदृशी लोके निन्दा मरणादप्यधिकेति भावः ॥ ८ ॥

रा० टी०–कथयिष्यन्तीति । सुनृशंसम् अतिक्रूरम् अधर्मिष्ठम् अत्यधर्मं शौण्डीर्यमानिनः अहं शूर इति गर्ववतस्तव कर्म पुरुषाः कुत्सितं कथयिष्यन्ति अतः कुलाक्रोशकरं पुलस्त्यवंशनिन्दासंपादकम् ईदृशं ते चारित्रम् आचरितं धिक् अत एव तदा अपहरणात् पूर्वकाले त्वया कथितं यत् शौर्यं स्वशूरता सत्त्वं स्वबलं च तत् धिक् । श्लोकद्वयमेकान्वयि ॥८॥९॥

गो० टी०–कथयिष्यन्तीति । शौण्डीर्यमानिनः तव कर्म कुत्सितं सुनृशंसम् अधर्मिष्ठं च कथयिष्यन्तीत्यन्वयः ॥ ८ ॥

९ ] ति० टी०–सत्त्वं शारीरं बलम् । तदाऽपहरणपूर्वकाले । कुलाक्रोशः कुलनिन्दा । चारित्रमाचारः ॥ ९ ॥

गो० टी०–धिगिति । तदा हरणकाले यच्छौर्यं सत्त्वं

---

१ रुदन्तीति गो. पाठः । २ इदमिति गो. पाठः । ३ यदिति गो. पाठः । ४ च हरणमिति गो. पाठः । ५ त्विति गो. पाठः । ६ शौण्डीर्येति गो. रा. पाठः । ७ यत्त्वं कथितवानिति गो. पाठः ।

किं शक्यं कर्तुमेवं हि यज्जवेनैव धावसि । मुहूर्तमपि [1]तिष्ठ त्वं न जीवन्प्रतियास्यसि ॥ १० ॥
न हि [2]चक्षुःपथं प्राप्य तयोः पार्थिवपुत्रयोः । ससैन्योऽपि समर्थस्त्वं मुहूर्तमपि जीवितुम् ॥ ११ ॥
न त्वं तयोः शरस्पर्शं सोढुं शक्तः कथंचन । वने प्रज्वलितस्येव स्पर्शमग्नेर्विहङ्गमः ॥ १२ ॥
साधु कृत्वाऽऽत्मनः पथ्यं साधु मां मुञ्च रावण । मत्प्रधर्षणसंक्रुद्धो [3] भ्राता सह पतिर्मम ॥ १३ ॥
विधास्यति विनाशाय त्वं मां यदि न मुञ्चसि । येन त्वं व्यवसायेन बलान्मां [4]हर्तुमिच्छसि ॥ १४ ॥
व्यवसायस्तु ते नीच भविष्यति निरर्थकः । नह्यहं तमपश्यन्ती भर्तारं विबुधोपमम् ॥ १५ ॥
उत्सहे शत्रुवशगा प्राणान्धारयितुं चिरम् । न नूनं चात्मनः श्रेयः पथ्यं वा समवेक्षसे ॥ १६ ॥
मृत्युकाले यथा मर्त्यो विपरीतानि सेवते । मुमूर्षूणां तु सर्वेषां यत्पथ्यं तन्न रोचते ॥ १७ ॥
पश्यामी[5]हं हि कण्ठे त्वां कालपाशावपाशितम् । यथा चास्मिन्भयस्थाने न बिभेषि [6]निशाचर॥ १८ ॥

---

बलं च कथितवानसि तद्धिक् ' उद्वहेयं भुजाभ्यां तु मेदिनीमम्बरे स्थितः ' इत्यादि त्वदुक्तमनृतप्रलपनमित्यर्थः । कुलाक्रोशकरं कुलनिन्दाकरम् ॥ ९ ॥

१० ] ति० टी०–हि यत एवंरूपेण हृत्वा धावसि, अतः किं कर्तुं शक्यम् । मुहूर्तमपि तिष्ठ त्वं यदि शूर इति शेषः । अवस्थितौ किं स्यात्तदाह–नेति ॥ १० ॥

रा० टी०–नतु क्वाऽस्ति राम इत्यत आह–किमियत् यस्माद्धेतोः जवेन वेगेनैव त्वं धावसि अतः मया किं कर्तुं शक्यं दूरस्थं रामं कथं प्रदर्शयेयमित्यर्थः । नतु किं तद्दर्शनेनेत्यत आह–त्वं मुहूर्तमपि तिष्ठ मुहूर्तमात्रेणाऽऽगमिष्यतीत्यर्थः, ततः जीवँस्त्वं न प्रतियास्यसि ॥ १० ॥

गो० टी०–किमिति । यत् यदा एवं जवेनैव धावसि तदा रामेण त्वयि किं कर्तुं शक्यम् । तर्हि कदा शक्यमित्यत आह–मुहूर्तमिति । मुहूर्तमपि मुहूर्तमेव तिष्ठस्व तिष्ठ तदा जीवन् सन् न प्रतियास्यसि मृतो भविष्यसीत्यर्थः ॥ १० ॥

११–१२] ति०टी०–तदेवोपपादयति–नहीति॥११॥१२॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–नहीति । तयोः रामलक्ष्मणयोः चक्षुष्पथं प्राप्य ससैन्यस्त्वं मुहूर्तमपि जीवितुं न समर्थः ॥ ११ ॥

गो० टी०–उक्तमुपपादयति–न हीति ॥ ११ ॥

रा० टी०–नेति । तयोः रामलक्ष्मणयोः शरस्पर्शं सोढुं वने प्रज्वलितस्याग्नेः स्पर्शं विहङ्गम इव कथञ्चनापि न शक्तः समर्थोऽसीति शेषः ॥ १२ ॥

गो० टी०–दर्शनप्राप्तिमात्रेण कथं जीवितुमशक्यत्वं तत्राह–न त्वमिति । अथ कर्तव्यमुपदिशति–साध्विति । अर्धश्लोक एकान्वयः । आत्मनः पथ्यं हितं साधु कृत्वा विचार्य । कृतिर्हि नानार्थो धातुवृत्तिकृतोक्तः यथा उरसिकृत्वा मनसिकृत्वेति । मां साधु सम्यक् आर्जवपूर्वकं मुञ्च ॥ १२ ॥

१३ ] ति० टी०–साधु आत्मनः पथ्यं कृत्वा विचार्येत्यर्थः । ' साधु कुर्वात्मनः ' इति पाठान्तरम् । साधु मां मुञ्च शीघ्रं मां मुञ्च यावन्मे भर्ता नायातीत्यर्थः ॥ १३ ॥

रा० टी०–साध्विति । हे रावण ! यदि त्वं मां न मुञ्चसि तर्हि मत्प्रधर्षणसंक्रुद्धः मदपहरणहेतुकसंप्राप्तकोपो मम पतिः भ्रात्रा सह विनाशाय त्वद्विध्वंसाय विधास्यति उपायमिति शेषः । अतः आत्मनः पथ्यं हितं साधु कृत्वा संचिन्त्येत्यर्थः, साधु यथा स्यात्तथा मां मुञ्च । सार्धश्लोक एकान्वयी॥१३॥

गो० टी०–अमोचने बाधकमाह–यदीति । त्वं मां यदि न मुञ्चसि तदा मम पतिः मत्प्रधर्षणेन मत्परिभवेन रुष्टः सन् भ्रात्रा सह त्वद्विनाशाय यत्नं विधास्यति ॥ १३ ॥

१४ ] ति० टी०–विनाशाय विधास्यति यत्नमिति शेषः । येन व्यवसायेन स्त्रीभोगव्यवसायेन ॥ १४ ॥

रा० टी०–येनेति । येन रामो मद्दर्शं प्राप्स्यतीत्येतद्विषयकेन व्यवसायेन मां हर्तुं त्वमिच्छसि स ते व्यवसायः निरर्थकः निष्प्रयोजनो भविष्यति हि यतः भर्तारमपश्यन्ती शत्रुवशगाऽहं प्राणान् ते जीवनं चिरं धारयितुं नोत्सहे एतेन तूर्णमेव रामस्त्वां हनिष्यतीति सूचितम् । अर्धचतुष्टयमेकान्वयि ॥ १४ ॥ १५ ॥

गो० टी०–अहमपि सफलयत्नो भविष्यामीत्याशङ्क्याह–येनेति । व्यवसायेन भोगव्यवसायेनेत्यग्राम्योक्तिः ॥ १४ ॥

१५ ] ति० टी०–तन्नैरर्थक्यमेवाह–नहीति ॥ १५ ॥

गो० टी०–नैरर्थक्यमेवाह–न हीति । इदानीं कथं धारयसीत्यत्र परिहारः–चिरमिति ॥ १५ ॥

१६–१८ ] ति० टी०–श्रेयस्तत्कालसुखावहं पथ्यं वा परिणामसुखावहं वा न समवेक्षसे न विचारयसि । यथा मर्त्यो मृत्युकाले विपरीतानि सेवते तथा त्वमपीति भावः॥१६–१८॥

रा० टी०–नेति । आत्मनः श्रेयः कल्याणसाधकं पथ्यं परिणामतः सुखप्रदं मम वचः त्वं न समवेक्षसे शृणोषि एतेन परमात्मेच्छायाः प्राबल्यं सूचितम् । अर्धं पृथक् ॥ १६ ॥

गो० टी०–नेति । किंच त्वमात्मनः श्रेयः प्रियं पथ्यं हितं वा न समवेक्षसे न पर्यालोचयसि । किंतु मृत्युकाले मर्त्यो यथा विपरीतानि सेवते तथा त्वमपि विपरीतानि सेवस इत्यर्थः ॥ १६ ॥

---

१ तिष्ठस्वेति गो.पाठः । २ चक्षुष्पथमिति गो.रा.पाठः। ३ रुष्टो हीति गो.पाठः । ४ स इति गो.पाठः। ५ अद्येति गो.पाठः। ६ दशाननेति गो.पाठः

व्यक्तं हिरण्मयांस्त्वं हि संपश्यसि महीरुहान् । नदीं वैतरणीं घोरां रुधिरौघविवाहिनीम्[1] ॥ १९ ॥
खड्गपत्रवनं[2] चैव भीमं पश्यसि रावण । तप्तकाञ्चनपुष्पां च वैदूर्यप्रवरच्छदाम् ॥ २० ॥
द्रक्ष्यसे शाल्मलीं तीक्ष्णामायसैः कण्टकैश्चिताम् । न हि त्वमीदृशं कृत्वा तस्यालीकं महात्मनः ॥ २१ ॥
धारितुं[3] शक्ष्यसि चिरं विषं पीत्वेव निर्घृण[4] । बद्धस्त्वं कालपाशेन दुर्निवारेण रावण ॥ २२ ॥
क्व गतो लप्स्यसे शर्म मम भर्तुर्महात्मनः । निमेषान्तरमात्रेण विना भ्रातरमाहवे[5] ॥ २३ ॥
राक्षसा निहता येन सहस्राणि चतुर्दश । कथं स राघवो वीरः सर्वास्त्रकुशलो बली ॥ २४ ॥
न त्वां हन्याच्छरैस्तीक्ष्णैरिष्टभार्यापहारिणम् । एतच्चान्यच्च परुषं वैदेही रावणाङ्कगा ॥
भयशोकसमाविष्टा करुणं विललाप ह ॥ २५ ॥

रा० टी०–मृत्युकाल इति । मृत्युकाले मरणसमये संनिहिते सति सर्वेषां मुमूर्षूणां यत्पथ्यं तन्न रोचते अत एव मर्त्यो विपरीतानि यथा यथावत् सेवते एतेन तव मृत्युः समीपं प्राप्त इति ध्वनितम् ॥ १७ ॥

गो० टी०–मुमूर्षूणामिति । त्वां कण्ठे कालपाशावपाशितं कालपाशेन बद्धं पश्यामि ॥ १७ ॥

रा० टी०–पश्यामीति । कण्ठे कालपाशावपाशितं कालपाशबद्धं त्वामिह अस्मिन् समये पश्यामि अत एव भयस्थाने भीतिभवने अस्मिन् अपहरणे त्वं न बिभेषि ॥ १८ ॥

गो० टी०–यथेति । किंच येन प्रकारेण न बिभेषि तेन प्रकारेण महीरुहान् हिरण्मयान् संपश्यसीति मन्य इति योजना ॥ १८ ॥

१९–२०] ति० टी०–हिरण्मयवृक्षदर्शनं मृत्युचिह्नम् । वैतरण्यादियातनास्थानं पश्यसीति वर्तमानसामीप्ये लट् १९॥२०

रा० टी०–व्यक्तमिति । त्वं महीरुहान् हिरण्मयान् पश्यसि रुधिरौघविवाहिनीमत एव घोरां वैतरणीं च पश्यसि व्यक्तं तव मरणसूचकाचरणेन स्फुटम् अत एव खड्गपत्रवनं पश्यसि तप्तकाञ्चनपुष्पां तप्तचामीकरपुष्पविशिष्टां वैदूर्यप्रवराः परिच्छदाः पत्राणि यस्याः ताम् आयसैः लोहमयैः कण्टकैः चितां व्याप्ताम् अत एव तीक्ष्णां शाल्मलीं वृक्षविशेषं च द्रक्ष्यसे एतेन मृत्युस्ते समागत इति सूचितम् । सार्धश्लोकद्वयमेकान्वयि ॥ १९ ॥ २० ॥

गो० टी०–नदीमिति । रुधिरौघैः रक्तौघैः सह निवहति प्रवहतीति तथा । असिपत्रवनम् असिमयपत्रयुक्तवनमिति नरकविशेषस्य नाम । पश्यसीति वर्तमानसामीप्ये वर्तमाननिर्देशः ॥ १९ ॥

गो० टी०–पारदारिकस्यासाधारणनरकानुभवं दर्शयति–तप्तेति । तप्तानि सद्योऽग्निनिष्टप्तानि काञ्चनमयानि पुष्पाणि यस्यास्ताम् । स्वर्णस्य तप्तत्वेऽतीवौष्ण्यं भवति । वैदूर्यप्रवराः वैदूर्यमणिश्रेष्ठमयाः छदाः पर्णानि यस्यास्ताम् । अत्रापि तप्तेति विशेषणं बोध्यम् । शाल्मलीं पारदारिकालिङ्ग्यत्वेन यमलोकोत्पन्नां शाल्मलीवृक्षाकारस्थूणां द्रक्ष्यसे द्रक्ष्यसि आलिङ्गितुमिति शेषः ॥ २० ॥

२१ ] ति० टी०–शाल्मली यातनावृक्षः ॥ २१ ॥

रा० टी०–तत्र हेतुमाह–नहीति । महात्मनस्तस्य रामस्य ईदृशमलीकमपराधं कृत्वा विषं पीत्वेव धरितुं धर्तुं प्राणानिति शेषः, नैव शक्ष्यसि ॥ २१ ॥

गो० टी०–भवत्वेवं कालान्तरे सद्यो लब्धं हि सुखमित्यत्राह–न हीति । तस्य अलीकमप्रियं कृत्वा 'अलीकं त्वप्रियेऽनृते' इत्यमरः । धरितुं जीवितुम् ॥ २१ ॥

२२ ] ति० टी०–धारितुं धर्तुम् जीवितमिति शेषः ॥२२॥

रा० टी०–बद्ध इति । महात्मनो मम भर्तुरपराधं कृत्वेति शेषः क्व गतः सन् शर्म कल्याणं लप्स्यसे प्राप्स्यसि न क्वापीत्यर्थः अतः दुर्निवारेण कालपाशेन त्वं बद्धोऽसि ॥ २२ ॥

गो० टी०–त्वामादाय देशान्तरं गमिष्यामि तदा न मे रामभयं तत्राह–बद्ध इति । भर्तुरिति हेतौ पञ्चमी । तस्माद्धेतोः क्व गतः सन् शर्म लप्स्यसे न क्वचिदपीत्यर्थः ॥ २२ ॥

२३–२५ ] ति० टी०–मम भर्तुरपराधं कृत्वेति शेषः । भ्रातरं विना एकाकिनेति यावत् ॥ २३–२५ ॥

रा० टी०–तदेव द्रढयन्नाह–निमेषेति । भ्रातरं विना एकाकिनेत्यर्थः, येनाहवे संग्रामे चतुर्दश सहस्राणि राक्षसाः निमेषान्तरमात्रेण निहताः स वीरो राघवः इष्टभार्यापहारिणं त्वां तीक्ष्णैः शरैः कथं न हन्यात् हन्यादेवेत्यर्थः । अर्धचतुष्टयमेकान्वयि ॥ २३ ॥ २४ ॥

गो० टी०–कथं तस्य तादृशी शक्तिरित्यत्राह द्वाभ्याम्–निमेषेति । निमेषान्तरमात्रेण निमेषावकाशमात्रेण भ्रात्रा विना एकाकिनेत्यर्थः ॥ २३ ॥ २४ ॥

रा० टी०–एतदिति । रावणाङ्कगा रावणस्याङ्कगतिं सामर्थ्यमित्यर्थः, गच्छति जानाति सा वैदेही एतदन्यच्च परुषमुक्त्वा भयशोकसमाविष्टा सती करुणं विललाप ॥ २५ ॥

गो० टी०–एतदिति । एतच्चान्यच्च वचनं करुणं परुषं च यथा भवति तथा विललाप परिदेवनमकरोत् ॥ २५ ॥

---

१ निवाहिनीमिति गो. पाठः। २ असिपत्रेति गो. पाठः। ३ धर्तुमिति गो.रा.पाठः। ४ निर्घृणः इति गो.पाठः। ५ भ्रात्रा महावने इति गो.पाठः।

तदा भृशार्तां बहु चैव भाषिणीं विलापपूर्वं करुणं च भामिनीम् ।
जहार पापस्तरुणीं विवेष्टतीं नृपात्मजामागतगात्रवेपथुः ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे त्रिपञ्चाशः सर्गः ॥ ५३ ॥

## चतुष्पञ्चाशः सर्गः ।

रावणेन नीयमाना सीता ऋष्यमूकशिखरस्थसुग्रीवादिवानरमध्ये आभरणगर्भं निजकौशेयोत्तरीयं प्राक्षिपत् । रावणस्त्वरया लङ्कामेत्य निजान्तःपुरे सीतां संस्थाप्य रामवृत्तं जिज्ञासुर्निजभटाञ्जनस्थानं प्रति प्राहिणोत् ।

ह्रियमाणा तु वैदेही कंचिन्नाथमपश्यती । ददर्श गिरिशृङ्गस्थान्पञ्च वानरपुंगवान् ॥ १ ॥
तेषां मध्ये विशालाक्षी कौशेयं कनकप्रभम् । उत्तरीयं वरारोहा शुभान्याभरणानि च ॥ २ ॥
मुमोच यदि रामाय शंसेयुरिति भामिनी । वस्त्रमुत्सृज्य तन्मध्ये निक्षिप्तं सहभूषणम् ॥ ३ ॥
संभ्रमात्तु दशग्रीवस्तत्कर्म च न बुद्धवान् । पिङ्गाक्षास्तां विशालाक्षीं नेत्रैरनिमिषैरिव ॥ ४ ॥
विक्रोशन्तीं तदा सीतां ददृशुर्वानरोत्तमाः । स च पम्पामतिक्रम्य लङ्कामभिमुखः पुरीम् ॥ ५ ॥

---

२६ ] ति० टी०—आगतगात्रवेपथुः भारातिशयात् ॥२६॥
इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे त्रिपञ्चाशः सर्गः ॥ ५३ ॥

रा० टी०—तदेति । भृशार्तामतिदुःखिताम् अत एव विलापपूर्वं करुणं यथा भवति तथा बहुभाषिणीम् अत एव विचेष्टतीम् अनेकविधचेष्टावतीम् अत एव आगतरौद्रवेपथुं भामिनीं तरुणीं नृपात्मजां पापो रावणो जहार ॥ २६ ॥
इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे त्रिपञ्चाशत्तमः सर्गः ॥ ५३ ॥

गो० टी०—सीतोक्तं सर्वं पापिष्ठस्य तस्य समुद्रघोषतुल्यमासीदित्याह—तथेति । तथेति वाचामगोचरत्वोक्तिः । विलापपूर्वं करुणं च यथा तथा भाषिणीं करुणं यथा तथा विवेष्टन्तीं विवेष्टमानाम् । आगतगात्रवेपथुम् उत्पन्नशरीरकम्पाम् ॥ २६ ॥
इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने त्रिपञ्चाशः सर्गः ॥ ५३ ॥

---

१–२ ] ति० टी०—अपश्यत्यपश्यन्ती ॥ १ ॥ २ ॥

रा० टी०—सीतावृत्तान्तमेवाह—ह्रियमाणेत्यादिभिः । ह्रियमाणा रावणेनेति शेषः, कञ्चिन्नाथं रक्षकमपश्यती अपश्यन्ती वैदेही गिरिशृङ्गस्थान् पञ्च वानरपुङ्गवान् ददर्श ॥ १ ॥

गो० टी०—अथ सीताया अशोकवनिकायां स्थापनमाह—ह्रियमाणा त्वित्यादि । नाथं रक्षकम् ॥ १ ॥

रा० टी०—तेषामिति । विशालाक्षी सीता यदि कदाचित् रामाय शंसेयुः इति हेतोः कनकप्रभं स्वर्णप्रभासदृशप्रभाविशिष्टं कौशेयमुत्तरीयम् आभरणानि च तेषां वानरपुङ्गवानां मध्ये मुमोच । सार्धश्लोकएकान्वयी ॥ २ ॥

गो० टी०—तेषामित्यादिसार्धश्लोक एकान्वयः । उत्तरीयम् उत्तरीयभूतं कौशेयम् आभरणानि कौशेये बद्ध्वा मुमोचेत्यर्थः । किमर्थं मुमोचेत्यत्राह—यदि रामाय शंसेयुरिति । यदृच्छया दृष्टाय रामाय स्वस्य रावणापहरणं कथयेयुरिति प्रत्याशयेत्यर्थः । "आशंसावचने लिङ्" इति लिङ् ॥ २ ॥

३ ] ति० टी०—यदि रामाय शंसेयुरिति दैवगत्या दृष्टाय रामाय शंसेयुरिति प्रत्याशयेति शेषः । वस्तुतोऽयं यदिशब्दो 'वेदाः प्रमाणं यदि स्युः' इतिवत् । वस्त्रमुत्तरीयमुत्सृज्य तन्मध्ये वानरमध्ये सहभूषणं भूषणसहितं कर्णोत्पलादि च निक्षिप्तम् तयेति शेषः ॥ ३ ॥

रा० टी०—वस्त्रमिति । सहभूषणं वस्त्रमुत्सृज्य विद्यमानायाः सीतायाः संभ्रमात् तदुक्तिहेतुकोद्वेगात् हेतोः निःक्षिप्तं निःक्षेपणरूपं तत्कर्म दशग्रीवो न बुद्धवान् ॥ ३ ॥

गो० टी०—वस्त्रमिति । सहभूषणं भूषणान्तरितं वस्त्रम् । उत्सृज्य उन्मुच्य तत् मध्ये सीतया निक्षिप्तमिति यत् तत्कर्म संभ्रमात्सीतापहारजनितक्षोभात् न बुद्धवान् । यदि बुध्येत गृह्णीयादेवेति भावः ॥ ३ ॥

४–५ ] ति० टी०—तत्कर्म च तत्कर्म तु वस्त्रभूषणप्रक्षेपकर्म तु संभ्रमात्सभयहरणजनितचित्तक्षोभात्, अतिभारेण शिरसामधोमुखतया च ॥ ४ ॥ ५ ॥

रा० टी०—पिङ्गाक्षा इति । तदा वस्त्रादिप्रक्षेपणसमये विक्रोशन्तीं विशालाक्षीं सीतां पिङ्गाक्षाः वानरोत्तमाः अनिमिषैः निमिषरहितैरिव नेत्रैः ददृशुः ॥ ४ ॥

गो० टी०—पिङ्गाक्षा इति । पिङ्गाक्षाः वानराः न केवलं वानराः अपि तु वानरर्षभाः वानरश्रेष्ठाः अनिमिषैरिव निमेषरहितैरिव तथा विक्रोशन्तीं राम! रामेति विक्रोशन्तीमित्यर्थः ४

---

१ तथेति गो. पाठः । २ करुणमिति गो. पाठः । ३ विवेष्टतीमिति गो. पाठः । ४ गात्रवेपथुमिति गो. रौद्रवेपथुमिति रा. पाठः । ५ मैथिलीति गो. पाठः । ६ न स इति गो. पाठः । ७ पिङ्गाक्षास्तामिति गो. रा. पाठः । ८ वानरर्षभा इति गो. पाठः ।

जगाम [1]मैथिलीं गृह्य रुदतीं राक्षसेश्वरः । तां जहार सुसंहृष्टो रावणो मृत्युमात्मनः ॥ ६ ॥
उत्सङ्गेनैव भुजगीं तीक्ष्णदंष्ट्रां महाविषाम् । वनानि सरितः शैलान्सरांसि च विहायसा ॥ ७ ॥
स क्षिप्रं समतीयाय शरश्चापादिव च्युतः । तिमिनक्रनिकेतं तु वरुणालयमक्षयम् ॥ ८ ॥
सरितां शरणं गत्वा समतीयाय सागरम् । संभ्रमात्परिवृत्तोर्मी रुद्धमीनमहोरगः ॥ ९ ॥
वैदेह्यां ह्रियमाणायां बभूव वरुणालयः । अन्तरिक्षगता वाचः ससृजुश्चारणास्[4]तथा ॥ १० ॥
एतदन्तो दशग्रीव इति सिद्धास्[3]तदाऽब्रुवन् । स तु सीतां विचेष्टन्तीमङ्केनादाय रावणः ॥ ११ ॥
प्रविवेश पुरीं लङ्कां रूपिणीं मृत्युमात्मनः । सोऽभिगम्य पुरीं लङ्कां सुविभक्तमहापथाम् ॥ १२ ॥

---

रा० टी०–स इति । स रावणः रुदन्तीं रुदतीं मैथिलीं गृह्य गृहीत्वा पम्पामतिक्रम्य लङ्कां पुरीमभिमुखः सन् जगाम ॥ ६ ॥

गो० टी०–स चेति । पम्पां पम्पोपर्याकाशम् । लङ्कामभिमुख इत्यनेन एतावत्पर्यन्तं रामाश्रमदत्तदृष्टिर्गतः ततः स्वच्छन्दं गतवानिति गम्यते । अत एव सुसंहृष्ट इति वक्ष्यते ॥ ६ ॥

६ ] ति० टी०–सुसंहृष्टः मृत्योस्तत्त्वेनाज्ञानात् । केचित्तु लब्धं रामहस्तान्मृत्युद्वारमिति संहृष्टः । विना चोत्कटं पापं पुण्यक्षयाभावेन न मृत्युः संनिहितः स्यादिति तमोगुणावृतः सन्मातर्यपि विरुद्धशब्दव्यवहारं कृतवानिति वदन्ति । तेषामेतत्सर्गान्ते वक्ष्यमाणम् ‘ बभूव मोहान्मुदितः ’ इत्यसंगतं स्यात् । तथा ‘ आत्मानं बुद्धिवैक्लव्यात्कृतकृत्यममन्यत ’ इत्युत्तरसर्गादिस्थं चासंगतं स्यात् ॥ ६ ॥

रा० टी०–तामिति । तां सीतां सुसंहृष्टो रावणः तीक्ष्णदंष्ट्रां महाविषाम् आत्मनो मृत्युं भुजङ्गीमिव उत्सङ्गेन जहार ॥ ६ ॥

गो० टी०–तामिति । उत्सङ्गेनेत्यस्य उभयत्राप्यन्वयः । मृत्युं मृत्युहेतुभूताम् ॥ ६ ॥

७ ] ति० टी०–विहायसाऽऽकाशमार्गेण क्षिप्रं समतीयायेत्यन्वयः ॥ ७ ॥

रा० टी०–वनानीति । स रावणः चापात् च्युतः शर इव वनादीनि क्षिप्रं विहायसा समतीयाय ॥ ७ ॥

गो० टी०–वनानीति । विहायसा आकाशमार्गेण ॥ ७ ॥

८ ] ति० टी०–तिमिर्मत्स्यविशेषः ॥ ८ ॥

रा० टी०–तिमीति । तिमयो नक्रविशेषाः नक्राः मकरास्तेषां निकेतं निवासस्थानं वरुणालयं वरुणनिकेतम् अक्षयं यावदविकारं विनाशरहितं सरितां शरणम् आश्रयं सागरं गत्वा समतीयाय ॥ ८ ॥

गो० टी०–तिमीति । तिमयो मत्स्यविशेषाः नक्राः ग्राहाः तेषां निकेतं वासस्थानम् । वरुणस्य आलयं वासः शरणं प्राप्यं गत्वा प्राप्य क्रमेण सागरं समतीयाय ॥ ८ ॥

९–१० ] ति० टी०–संभ्रमाज्जगन्मात्रपहारदर्शनजक्षोभात्परिवृत्तोर्मिः स्वभावप्राप्तोर्मिप्रवृत्तिरहितः । रुद्धा रुद्धप्रचारा मीनादयो यस्मिन् ॥ ९ ॥ १० ॥

रा० टी०–संभ्रमादिति । वैदेह्यां ह्रियमाणायां सत्यां वरुणालयः संभ्रमात् सीतापहरणहेतुकभीतेः परिवृत्ताः निवृत्ताः ऊर्मयः स्वभावसिद्धतरङ्गाः यस्य अत एव रुद्धा मीनमहोरगा यस्य स बभूव द्वयोः कर्मधारयः ॥ ९ ॥

गो० टी०–संभ्रमादिति । संभ्रमात् रावणदर्शनक्षोभात् परिवृत्तोर्मिः । रुद्धमीनमहोरगः बहिःसंचाररहितमत्स्यसर्पः ९

रा० टी०–अन्तरिक्ष इति । अन्तरिक्षं गता चारणाः दशग्रीव एतदन्त एतदपहरणमेव अन्तो विध्वंसो यस्य स इति वाचं ससृजुः । सिद्धा अपि तथैव अब्रुवन् ॥ १० ॥

गो० टी०–अन्तरिक्षेति । अन्तरिक्षगताश्चारणाः दशग्रीवः एतदन्तः एतत्सीतापहरणावसान इति वाचः ससृजुः ऊचुरित्यर्थः । अन्तरिक्षगताः सिद्धाश्च एतदन्तो दशग्रीव इत्यब्रुवन् ॥ १० ॥

११ ] ति० टी०–एतदन्तः सीताहरणकर्मावसानः । सिद्धाः सिद्धाश्च ॥ ११ ॥

रा० टी०–स इति । अङ्केन शीघ्रगत्योपलक्षितः स रावणस्तु आत्मनो मृत्युरूपिणीं याथार्थ्यनिरूपिकां सीतामादाय लङ्कां प्रविवेश ॥ ११ ॥

गो० टी०–स त्विति । आत्मनः रूपिणीं रूपवतीं मृत्युमिति सीताविशेषणम् ॥ ११ ॥

१२ ] ति० टी०–रूपिणीमात्मनो मृत्युमित्यन्वयः॥१२॥

रा० टी०–स इति । स रावणः सुविभक्ताः महापथा राजमार्गा यस्यां संरुद्धाः राक्षसैराकीर्णाः कक्ष्या द्वारो यस्यास्तां, बहुलामतिविस्तृतां लङ्कां पुरीमभिगम्य स्वम् अन्तःपुरमविशत् ‘ संरुद्धकक्ष्याबहुलं ’ इति पाठे तादृशबहुलतरद्वारवदित्यन्तःपुरविशेषणमिति भट्टाः ॥ १२ ॥

गो० टी०–स इति । संरुद्धाः जनाकीर्णाः कक्ष्याः द्वारप्रकोष्ठाः ताभिः बहुलं निबिडम् ॥ १२ ॥

---

१ रुदतीं गृह्य वैदेहीमिति गो. पाठः । २ रुदन्तीमिति रा. पाठः । ३ तदेति गो. पाठः । ४ तथेति रा. पाठः ।

संरूढकक्ष्यां बहुलां स्वमन्तःपुरमाविशत् । तत्र तामसितापाङ्गीं शोकमोहसमन्विताम् ॥ १३ ॥
निदधे रावणः सीतां मयो मायामिवासुरीम् । अब्रवीच्च दशग्रीवः पिशाचीर्घोरदर्शनाः ॥ १४ ॥
यथा नैनां पुमान्स्त्री वा सीतां पश्यत्यसंमतः । मुक्तामणिसुवर्णानि वस्त्राण्याभरणानि च ॥ १५ ॥
यद्यदिच्छेत्तदेवास्या देयं मच्छन्दतो यथा । या च वक्ष्यति वैदेहीं वचनं किंचिदप्रियम् ॥ १६ ॥
अज्ञानाद्यदि वा ज्ञानान्न तस्या जीवितं प्रियम् । तथोक्त्वा राक्षसीस्तास्तु राक्षसेन्द्रः प्रतापवान् ॥ १७ ॥
निष्क्रम्यान्तःपुरात्तस्मात्किं कृत्यमिति चिन्तयन् । ददर्शाष्टौ महावीर्यान्राक्षसान्पिशिताशनान् ॥ १८ ॥
स तान्दृष्ट्वा महावीर्यो वरदानेन मोहितः । उवाच तानिदं वाक्यं प्रशस्य बलवीर्यतः ॥ १९ ॥
नानाप्रहरणाः क्षिप्रमितो गच्छत सत्वराः । जनस्थानं हतस्थानं भूतं पूर्वं खरालयम् ॥ २० ॥
तत्रास्यतां जनस्थाने शून्ये निहतराक्षसे । पौरुषं बलमाश्रित्य त्रासमुत्सृज्य दूरतः ॥ २१ ॥
बहुसैन्यं महावीर्यं जनस्थाने निवेशितम् । सदूषणखरं युद्धे [११]निहतं रामसायकैः ॥ २२ ॥

---

१३ ] ति० टी०—संरूढकक्ष्यां बहुजनाकीर्णद्वाराम् । बहुलां विपुलाम् । 'संरूढकक्ष्याबहुलम्' इति पाठे तादृशबहुतरद्वारवदित्यन्तःपुरविशेषणम् ॥ १३ ॥

रा० टी०—तत्रेति । तत्रान्तःपुरैकदेशे शोकमोहसमन्विताम् असितापाङ्गीं सीतां रावणः आसुरीं मायां मय इव निदधे ॥ १३ ॥

गो० टी०—तत्रेति । तत्र अन्तःपुरे शोकमोहपरायणां शोकमोहपरतन्त्रां निदधे स्थापितवान् । मयस्त्रिपुराधिपतिः मायां मायामयीम् आश्चर्यशक्तियुक्तामित्यर्थः । स्त्रियं स्वयंप्रभां बिले यथा निदधे तथेत्यर्थः ॥ १३ ॥

१४ ] ति० टी०—मायामिवासुरीमित्यनेन मायारूपैवैषा सीता या लङ्कामागतेति ध्वनितम् । मुख्यमाता त्वग्निं प्रविष्टेति पूर्वमेव ध्वनितम् अत एव रावणस्य वहनीयैषा जाता । मायात्वादेव रावणस्य तदज्ञानम् । पिशाचीः राक्षसीरित्यर्थ इति तीर्थः ॥ १४ ॥

रा० टी०—अब्रवीदिति । दशग्रीवः घोरदर्शनाः पिशाचीः अब्रवीत् । तद्वचनाकारमाह—यथा येन प्रकारेण असंमतः मदनाज्ञप्तः पुमान् स्त्री वा न पश्यति तथा रक्षतेति शेषः॥१४॥

गो० टी०—अब्रवीदिति । पिशाचीः पिशाच्याकाराः राक्षसीः यथेमां स्त्री वा पुमान्वा असंमतः अननुज्ञातः न पश्यति तथाऽब्रवीत् । एनामन्यो न पश्येदित्यब्रवीदित्यर्थः॥१४॥

१५ ] ति० टी०—असंमतोऽस्मदननुज्ञातः पुमांस्तथाभूता स्त्री वा न पश्यति तथा रक्षतेति शेषः ॥ १५ ॥

रा० टी०—मुक्तेति । मुक्तादीनि अन्यच्च यद्यदिच्छेत्तत् मच्छन्दतो मदाज्ञातः यथा यथावत् देयम् ॥ १५ ॥

गो० टी०—मुक्तेति । एषा यद्यदिच्छेत्तत्तद्देयं यथा मच्छन्दतः मदिच्छानुसारेण यथा मह्यं दीयते तद्वद्देयमित्यर्थः॥१५॥

१६–१८ ] ति० टी०—मच्छन्दतो मदाज्ञया यद्यद्वस्तु यदेच्छेत्तदेव यथाऽस्या इष्टं भवति तथैव तत्सर्वं देयम् । मच्छन्दत इत्यस्य मद्वशप्राप्तिसिद्ध्यर्थमित्यर्थ इति कतकः । अस्या अप्रियं च न वाच्यमित्याह—या चेति । तस्या जीवितं न प्रियं तां मारयामीत्यर्थः ॥ १६–१८ ॥

रा० टी०—या चेति । या काचित् किंचिदप्रियं वैदेहीं वक्ष्यति तस्याः प्रियं जीवितं जीवनं नङ्क्ष्यतीति शेषः ॥ १६ ॥

गो० टी०—या चेति । जीवितं न प्रियं मारयेयमित्यर्थः ॥ १६ ॥

रा० टी०—तथेति । ताः राक्षसीः तथोक्त्वा अन्तःपुरात् निष्क्रम्य प्रतापवान् राक्षसेन्द्रो रावणः किं कृत्यम् इदानीं मया किं कर्तव्यमिति चिन्तयत् अचिन्तयत् । ददर्शेति-पिशिताशनान् अष्टौ राक्षसान् ददर्श रावण इति शेषः॥१७॥१८॥

गो० टी०—तथेति । चिन्तयन् महावीर्यान् राक्षसान् ददर्श अपश्यत् ॥ १७ ॥ १८ ॥

१९ ] ति० टी०—वरदानेन पैतामहेन मोहितो रामशतादपि न मे भीरिति चिन्तयानः । मोहकृतैषा चिन्ता । तान्बलवीर्यतः प्रशस्येत्यन्वयः ॥ १९ ॥

रा० टी०—स इति । वरदानेन मोहितः स रावणः तान् प्रसिद्धान् एतान् अष्टौ राक्षसान् दृष्ट्वा बलवीर्यतः बलवीर्याभ्यां प्रशस्य इदमुवाच ॥ १९ ॥

गो० टी०—स इति । वरदानेन ब्रह्मवरदानेन । तानेतानित्यन्वयः॥ १९ ॥

२०–२२ ] ति० टी०—हतस्थानं रामेणेति शून्यं कृतमित्यर्थः । पूर्वं खरालयत्वं भूतं प्राप्तम् ॥ २०–२२ ॥

रा० टी०—तद्वचनाकारमाह—नानेति । नानाप्रहरणाः अनेकविधायुधविशिष्टाः सत्वराः वेगवन्तो यूयम् इतो मत्समीपात् क्षिप्रं शीघ्रं भूतपूर्वं खरालयं पौर्वकालिकं खरनिवा-

---

१ कक्ष्याबहुलमिति गो. पाठः । २ ऽपाङ्गामिति गो. पाठः । ३ परायणामिति गो. पाठः । ४ स्त्रियमिति गो. पाठः । ५ इमामिति गो. पाठः । ६ तदेवेति गो. पाठः । ७ एतानिति गो. रा. पाठः । ८ भूतपूर्वमिति गो. रा. पाठः । ९ उष्यतामिति गो. पाठः । १० बलं हि सुमहच्चन्मे इति गो. पाठः । ११ हतं रामेणेति गो. पाठः ।

ततः क्रोधो ममापूर्वो धैर्यस्योपरि [1]वर्धते । वैरं च सुमहज्जातं रामं प्रति सुदारुणम् ॥ २३ ॥
निर्यातयितुमिच्छामि तच्च वैरं [2]महारिपोः । नहि लप्स्याम्यहं निद्रामहत्वा संयुगे रिपुम् ॥ २४ ॥
तं [3]त्विदानीमहं हत्वा खरदूषणघातिनम् । रामं शर्मोपलप्स्यामि धनं लब्ध्वेव निर्धनः ॥ २५ ॥
जनस्थाने वसद्भिस्तु भवद्भी राममाश्रिता । प्रवृत्तिरुपनेतव्या किं करोतीति तत्त्वतः ॥ २६ ॥
अप्रमादाच्च गन्तव्यं सर्वैरेवं निशाचरैः । कर्तव्यश्च सदा यत्नो राघवस्य वधं प्रति ॥ २७ ॥
युष्माकं [4]तु बलं ज्ञातं बहुशो रणमूर्धनि । अतश्चास्मिञ्जनस्थाने मया यूयं नि[5]वेशिताः॥ २८ ॥
ततः प्रियं वाक्यमुपेत्य राक्षसा महार्थमष्टावभिवाद्य रावणम् ।
विहाय लङ्कां सहिताः प्रतस्थिरे यतो जनस्थानमलक्ष्यदर्शनाः ॥ २९ ॥

---

रस्थानमित्यर्थः, हतस्थानं हतो विध्वंसितः स्थानः राक्षसरूपस्थाता यस्मिंस्तत् जनस्थानं गच्छत ॥ २० ॥

गो० टी०–नानेति । 'आयुधं तु प्रहरणम्' इत्यमरः । हतस्थानं शून्यसन्निवेशं खरालयं भूतपूर्वं पूर्वं खरालयमित्यर्थः । "भूतपूर्वे चरट्" इति निर्देशात्समासः ॥ २० ॥

रा० टी०–गमनप्रयोजनमाह–तत्रेति । पौरुषं स्वतेजः बलं च आश्रित्य संस्मृत्य त्रासमुद्वेगं दूरतः उत्सृज्य त्यक्त्वा निहतराक्षसे अत एव शून्ये तत्र प्रसिद्धजनस्थाने आस्यताम् २१

गो० टी०–तत्रेति । पौरुषं बलं न केवलं नीतिबलमित्यर्थः ॥ २१ ॥

रा० टी०–ननु बलवन्तो राक्षसाः केन निहता इत्यत आह–बह्विति । महावीर्यं सदूषणखरं दूषणखरसहितं जनस्थाने निवेशितं बहु सैन्यं रामसायकैः निहतम् ॥ २२ ॥

गो० टी०–पौरुषबलाश्रयणे हेतुमाह–बलं हीति । यत् बलं सैन्यं निवेशितं तद्धतमित्यन्वयः ॥ २२ ॥

२३ ] ति० टी०–धैर्यस्योपरि क्रोधः धैर्योपमर्दकः क्रोध इत्यर्थः । ततः खरादिवधात्, न तु भीत्या नापि वृथा क्रोध इत्यर्थः ॥ २३ ॥

रा० टी०–तत इति । ततः खरादिविध्वंसाद्धेतोः अपूर्वः पूर्वमेवं न जातः इदानीमेवोत्पन्न इत्यर्थः, क्रोधः धैर्यस्योपरि यथा भवति तथा वर्धते धैर्यस्योपरीत्यनेन तत्क्रोधरोधस्याशक्यत्वं सूचितम् अत एव सुदारुणम् अनिवर्त्यमित्यर्थः, सुमहद्वैरं रामं प्रति जातम् ॥ २३ ॥

गो० टी०–तत्रेति । तत्र वधनिमित्तम् । अमर्षात् असहनात् ॥ २३ ॥

२४–२५ ] ति० टी०–निर्यातयितुं प्रत्युपकारेणापनेतुम् ॥ २४ ॥ २५ ॥

रा० टी०–निरिति । रिपोस्तद्वैरं निर्यातयितुं रिपुध्वंसेन दूरीकर्तुमिच्छामि । तदभावे दोषमाह–संयुगे रिपुमहत्वा निद्रां न लप्स्यामि ॥ २४ ॥

गो०टी०-निर्यातयितुमिति। निर्यातयितुम् अवसितुम् २४

रा० टी०–तमिति । खरदूषणघातिनं तं राममिदानीमहं हत्वा निर्धनो धनं लब्ध्वेव शर्म सुखमुपलप्स्यामि ॥ २५ ॥

गो० टी०–तं त्विति । शर्म सुखम् उपलप्स्यामि प्राप्स्यामि ॥ २५ ॥

२६–२८ ] ति० टी०–प्रवृत्तिर्वार्ता उपनेतव्या मम प्रापणीया ॥ २६–२८ ॥

रा० टी०–ननु तत्र गत्वाऽस्माभिः किं कर्तव्यमित्यत आह—जनस्थाने इति । जनस्थाने वसद्भिर्भवद्भिः रामः किं करोतीति राममाश्रिता प्रवृत्तिः तत्त्वत उपनेतव्या मत्समीपं प्रापणीया ॥ २६ ॥

गो० टी०–जनेति । प्रवृत्तिर्वार्ता । रामः किं करोतीति तत्त्वतो वार्ता मत्सकाशमुपनेतव्येत्यर्थः ॥ २६ ॥

रा० टी०–अप्रमादादिति । अप्रमादात् अनवधानताराहित्यादेव सर्वैर्निशाचरैर्गन्तव्यम् जनस्थानमिति शेषः, राघवस्य वधं प्रति यत्नश्च कर्तव्यः ॥ २७ ॥

गो० टी०–अप्रमादादिति । अवधानादित्यर्थः ॥ २७॥

रा० टी०–भवन्तः प्रेषयितुं योग्या इति बोधयन्नाह—युष्माकमिति । बहुशोऽनेकवारं युष्माकं बलं ज्ञातमत एवास्मिन् जनस्थाने यूयं मया निवेशिताः निवेशयितुं प्रेषिताः ॥ २८ ॥

गो० टी०–खरादिस्थाने अस्माभिः कथं स्थातुं शक्यं तत्राह–युष्माकं चेति ॥ २८ ॥

२९ ] ति० टी०–महार्थं महानर्थोऽभिधेयं यस्य तत् । यतो यद्दिशि जनस्थानं तद्दिशीत्यर्थः । अलक्ष्यदर्शना अन्तर्धानविषया ॥ २९ ॥

रा० टी०–तत इति । ततः रावणोक्त्यनन्तरं महार्थं प्रियं वाक्यं रावणवचनम् उपेत्य ज्ञात्वा यतः अतिप्रयत्नवन्त अष्टौ राक्षसाः रावणमभिवाद्य लङ्कां विहाय अलक्ष्यदर्शनाः सन्तः जनस्थानं प्रतस्थिरे ॥ २९ ॥

गो० टी०–तत इति । महानर्थोऽभिधेयो यस्य तं महार्थं प्रियं श्लाघारूपं वाक्यम् उपेत्य लब्ध्वा रावणतः स्तुतिं

---

१ वर्तत इति गो.पाठः। २अहं रिपोरिति गो.मया रिपोरिति रा.पाठः। ३अपीति गो.पाठः। ४च बलज्ञोऽहमिति गो.पाठः। ५नियोजिता इति गो.पाठः।

ततस्तु सीतामुपलभ्य रावणः सुसंप्रहृष्टः परिगृह्य मैथिलीम् ।
प्रसज्ज्य रामेण च वैरमुत्तमं बभूव मोहान्मुदितः स रावणः ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे चतुष्पञ्चाशः सर्गः ॥ ५४ ॥

## पञ्चपञ्चाशः सर्गः ।

रावणः सीतान्तिकं प्राप्तस्तां तत्तत्प्रदेशेषूद्यानभवनप्रासादाद्यैश्वर्यं प्रदर्श्य प्रलोभयंश्चाटून्युपन्यस्यति ।

संदिश्य राक्षसान्घोरान्रावणोऽष्टौ महाबलान् । आत्मानं बुद्धिवैक्लव्यात्कृतकृत्यममन्यत ॥ १ ॥
स चिन्तयानो वैदेहीं कामबाणैः प्रपीडितः । प्रविवेश गृहं रम्यं सीतां द्रष्टुमभित्वरन् ॥ २ ॥
स प्रविश्य तु तद्वेश्म रावणो राक्षसाधिपः । अपश्यद्राक्षसीमध्ये सीतां दुःखपरायणाम् ॥ ३ ॥
अश्रुपूर्णमुखीं दीनां शोकभारावपीडिताम् । वायुवेगैरिवाक्रान्तां मज्जन्तीं नावमर्णवे ॥ ४ ॥
मृगयूथपरिभ्रष्टां मृगीं श्वभिरिवावृताम् । अधोगतमुखीं सीतां तामभ्येत्य निशाचरः ॥ ५ ॥

---

प्राप्येत्यर्थः । यतो यत्र जनस्थानं तद्वनमुद्दिश्य प्रतस्थिरे । अलक्ष्यदर्शनाः वेगातिशयेन दुष्प्रेक्षस्वरूपाः ॥ २९ ॥

३० ] ति० टी०—उपलभ्य प्राप्य स्पृष्ट्वा च परिगृह्य स्वगृहे स्थापयित्वा परिग्रहत्वेन विभाव्य च प्रसज्ज्य संपाद्य मोहान्मुदितः खरहन्तुर्वधो मम सुकरः स्त्रीवियोगेनातिखिन्नस्येति हर्षितः ॥ ३० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे चतुष्पञ्चाशः सर्गः ॥ ५४ ॥

रा० टी०—तत इति । ततः राक्षसप्रेषणानन्तरं स प्रसिद्धो राक्षसो रावणः मैथिलीं सीतामुपलभ्य प्राप्य परिगृह्य राक्षसीभिर्ग्राहयित्वा तत्सेवायां राक्षसीर्नियुज्येत्यर्थः, मोहात्स्वस्वामिरामविषयकाज्ञानात् हेतोः रामेण उत्तमं महद्वैरं प्रसज्याश्रित्य मुदितो बभूव ॥ ३० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे चतुष्पञ्चाशः सर्गः ॥ ५४ ॥

गो० टी०—सर्गार्थं संगृह्य दर्शयति—ततस्त्विति । उपलभ्य दृष्ट्वा सुसंप्रहृष्टः कामविकारवान् परिगृह्य गृहीत्वा रामेण वैरं प्रसज्य प्राप्यापि मोहान्मुदितो बभूव ॥ ३० ॥

अत्र त्रिंशच्छ्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने चतुष्पञ्चाशः सर्गः ॥५४॥

१-३ ] ति० टी०—बुद्धिवैक्लव्याद्बुद्धिवैपरीत्यात् ॥१-३॥

रा० टी०—रावणवृत्तान्तमाह—संदिश्येत्यादिभिः । रावणः महाबलान् अष्टौ राक्षसान् संदिश्य बुद्धिवैक्लव्यात् बुद्धेर्नाशात् हेतोः आत्मानं कृतकृत्यम् अमन्यत ॥ १ ॥

गो० टी०—पूर्वं स्वप्रभावकथनमुखेन प्रलोभनं कृतवान् । अथ भोगोपकरणप्रदर्शनमुखेन रावणः सीतां प्रलोभयति पञ्चपञ्चाशे—संदिश्येत्यादि । बुद्धिवैक्लव्यात् बुद्धिदौर्बल्यात् अकृतबुद्धित्वादित्यर्थः ॥ १ ॥

रा० टी०—स इति । कामबाणैः नानामनोरथरूपशरैः प्रपीडितः वैदेहीं चिन्तयानः स रावणः सीतां द्रष्टुमभित्वरन् सन् रम्यं गृहं प्रविवेश ॥ २ ॥

गो० टी०—स इति । समर्पितः पीडित इत्यर्थः । अभित्वरन् अभित्वरमाणः ॥ २ ॥

रा० टी०—स इति । स प्रसिद्धो रावणः तत्सीताधिष्ठितं वेश्म प्रविश्य दुःखपरायणां रामवियोगजनितदुःखाक्रान्तां सीतां राक्षसीमध्ये अपश्यत् ॥ ३ ॥

गो० टी०—स प्रविश्येति । वेश्म अन्तःपुरम् ॥ ३ ॥

४ ] ति० टी०—शोको वायुस्थाने, अश्रु चार्णवजलस्थाने । अनेनाश्रुवेगातिशय उक्तः ॥ ४ ॥

५ ] ति० टी०—अधोगतमवनतं मुखं यस्याः ॥ ५ ॥

रा० टी०—सीतामेव विशेषयन्नाह—अश्र्विति । शोकभारावपीडिताम् अतिशोकाक्रान्तामित्यर्थः, अत एव अश्रुपूर्णमुखीम् अत एव वायुवेगैराक्रान्ताम् अर्णवे मज्जन्तीं नावमिव मृगयूथपरिभ्रष्टां श्वभिः कुक्कुरैः आवृतां मृगीमिव दीनाम् अधोगतमुखीं तां सीताम् अभ्येत्य तत्समीपं प्राप्य अतिष्ठदिति शेषः । श्लोकद्वयमेकान्वयि ॥ ४ ॥ ५ ॥

गो० टी०—अश्र्वित्यादिश्लोकत्रयमेकं वाक्यम् । अधोमुखमवनतं मुखं यस्यास्ताम् । 'स्यादवाङ्प्यधोमुखः' इत्यमरः । शोकभाराभिपीडितामभ्येत्य शोकपरां दर्शयामासेति क्रियाभेदादपुनरुक्तिः । अवशां दर्शनमनिच्छन्तीम् ॥ ४-६ ॥

---

१ राक्षस इति गो. पाठः । २ बाणसमर्पित इति गो. पाठः । ३ शोकेति गो. पाठः । ४ अभीति गो. पाठः । ५ मुखमुखीं सीतामभ्येत्य चेति गो. पाठः ।

तां तु शोकवशादीनामवशां राक्षसाधिपः । स बलाद्दर्शयामास गृहं देवगृहोपमम् ॥ ६ ॥
हर्म्यप्रासादसंबाधं स्त्रीसहस्रनिषेवितम् । नानापक्षिगणैर्जुष्टं नानारत्नसमन्वितम् ॥ ७ ॥
दान्तकैस्तापनीयैश्च स्फाटिकै राजतैस्तथा । वज्रवैडूर्यचित्रैश्च स्तम्भैर्दृष्टिमनोरमैः ॥ ८ ॥
दिव्यदुन्दुभिनिर्घोषं तप्तकाञ्चनभूषणम् । सोपानं काञ्चनं चित्रमारुरोह तया सह ॥ ९ ॥
दान्तका राजताश्चैव गवाक्षाः प्रियदर्शनाः । हेमजालावृताश्चासंस्तत्र प्रासादपङ्क्तयः ॥ १० ॥
सुधामणिविचित्राणि भूमिभागानि सर्वशः । दशग्रीवः स्वभवने प्रादर्शयत मैथिलीम् ॥ ११ ॥
दीर्घिकाः पुष्करिण्यश्च नानापुष्पसमावृताः । रावणो दर्शयामास सीतां शोकपरायणाम् ॥ १२ ॥
दर्शयित्वा तु [१०]वैदेहीं कृत्स्नं तद्भवनोत्तमम् । उवाच वाक्यं पापात्मा सीतां लोभितुमिच्छया १३ ॥
दश राक्षसकोट्यश्च द्वाविंशतिरथापराः । वर्जयित्वा जरान्वृद्धान्बालांश्च रजनीचरान् १४ ॥

६–७ ] ति० टी०–अनिच्छन्तीमपि तद्दर्शनं बलाद्दर्शयामासेत्यन्वयः ॥ ६ ॥ ७ ॥

रा० टी०–तामिति । शोकवशाम् अत एव दीनाम् अवशां गृहदर्शनमनिच्छन्तीं तां सीतां देवगृहोपमगृहं स रावणो बलाद्दर्शयामास ॥ ६ ॥

रा० टी०–तद्गृहमेव वर्णयन्नाह–हर्म्येति । हर्म्यप्रासादसंबाधं हर्म्यैः साधारणगृहैः प्रासादैः राजगृहैश्च संबाधं निबिडं दान्तकैः हस्तिदन्तनिर्मितैः तापनीयैः तपनीयं सुवर्णं तन्निर्मितैः वज्रवैदूर्यचित्रैः अत एव दृष्टिमनोरमैः स्तम्भैः संयुक्तमिति शेषः, दिव्यदुन्दुभिनिर्घोषं दिव्यदुन्दुभीनां निर्घोषः शब्दो यस्मिँस्तत् तप्तकाञ्चनतोरणं तप्तकाञ्चनमयानि तोरणानि यस्मिन् तद्गृहं दर्शयितुमिति शेषः, काञ्चनं स्वर्णमयं चित्रं तया सह आरुरोह । श्लोकत्रयमेकान्वयि ॥ ७–९ ॥

गो० टी०–गृहं वर्णयति द्वाभ्याम्–हर्म्येत्यादि । हर्म्यैः ह्रस्वविमानैः प्रासादैः उन्नतविमानैश्च संबाधं निबिडं काञ्चनैः स्वर्णमयैः तापनीयैः तप्तस्वर्णमयैः स्तम्भैरुपलक्षितम् ॥ ७ ॥ ८ ॥

८ ] ति० टी०–दान्तकैर्गजदन्तकृतैः । तपनीयं स्वर्णं स्तम्भैर्युतमिति शेषः ॥ ८ ॥

९ ] ति० टी०–तया सीतया ॥ ९ ॥

गो० टी०–दिव्येति । दिव्यदुन्दुभिनिर्ह्रादं निह्रादवत् अर्श आद्यच् । यद्वा दिव्यदुन्दुभेरिव निर्ह्रादः शब्दो यस्य तत् आरोहणकाले दुन्दुभिवत् ध्वनतीति भावः । तोरणो बहिर्द्वारं चित्रम् आश्चर्यभूतम् । 'आलेख्याश्चर्ययोश्चित्रम्' इत्यमरः । तया सहारुरोह तामादाय रुरोहेत्यर्थः ॥ ९ ॥

१० ] ति० टी०–हेममयजालकैरावृताः ॥ १० ॥

रा० टी०–दान्तका इति । तत्र तस्मिन् गृहे दान्तकाद्यो गवाक्षा आसन् हेमजालावृताः पक्ष्यागमननिवारणाय हेममयैर्जालैः संयुक्ताः अत एव प्रियदर्शनाः प्रासादपङ्क्तयश्चासन् तत्र स्वभवने सर्वशः भूमिभागानि भूमिभागाः सुधामणिविचित्राणि सुधाभिर्मणिभिश्च विचित्राण्यासन् तानि दशग्रीवः मैथिलीं प्रादर्शयत । श्लोकद्वयमेकान्वयि ॥ १० ॥ ११ ॥

गो० टी०–वक्ष्यमाणभूभागदर्शनसाधनान्याह–दान्तिका इति । दान्तिकाः दन्तविकृताः तत्र सोपानमार्गे गवाक्षा आसन् तदुपरि हेममयैः जालैः जालकैः आवृताः प्रासादपङ्क्तयश्चासन् ॥ १० ॥

११ ] ति० टी०–सुधया मणिभिश्च विचित्राणि भूमिभागानीत्यार्षं क्लीबत्वम् ॥ ११ ॥

गो० टी०–सुधेति । सुधावलेपनेन मणिभिश्च विचित्राणि भूमिभागानीति क्लीबत्वमार्षम् । प्रादर्शयत् प्रदर्शयामास । तैर्गवाक्षैरिति शेषः ॥ ११ ॥

१२ ] ति० टी०–दीर्घिका वाप्यः ॥ १२ ॥

रा० टी०–दीर्घिका इति । दीर्घिकाः वापीः नानापुष्पसमावृताः पुष्करिण्यः पुष्करं जलमस्ति यासु ताः सरस्य आर्षत्वाद्द्वितीयार्थे प्रथमा शोकपरायणां सीतां रावणो दर्शयामास ॥ १२ ॥

गो० टी०–दीर्घिका इति । दीर्घिकाः वाप्यः पुष्करं जलमेषामस्तीति पुष्करिण्यः । द्वितीयार्थे प्रथमा "पुष्करादिभ्यो देशे" इति इनिप्रत्ययः । शोकपरायणामित्यनेन तस्या असह्यत्वं द्योत्यते ॥ १२ ॥

१३ ] ति० टी०–लोभितुं सामनिग्रहाभ्यां प्रलोभयितुम् ॥ १३ ॥

रा० टी०–स इति । सीतां लोभितुं भवनविषयकलोभमुत्पादयितुं कृत्स्नं सकलं तत् प्रसिद्धं भवनोत्तमं दर्शयित्वा पापात्मा रामखेदोत्पादनरूपपापविषयकप्रयत्नवान् रावणः उवाच ॥ १३ ॥

गो० टी०–दर्शयित्वेति । लोभितुं लोभयितुम् अन्तर्भावितण्यर्थोऽयम् ॥ १३ ॥

१४ ] ति० टी०–दशेति । द्वात्रिंशत्कोटिसंख्याः ॥ १४ ॥

१ परामिति गो. वशामिति रा. पाठः । २ काञ्चनैरिति गो. पाठः । ३ अपीति गो. पाठः । ४ हरैरिति गो. पाठः । ५ निह्रादमिति गो. पाठः । ६ तोरणमिति गो. रा. पाठः । ७ दान्तिका इति गो. पाठः । ८ वृक्षसमन्विता इति गो. पाठः । ९ स दर्शयित्वेति रा. पाठः । १० वैदेह्या इति गो. पाठः । ११ एतदाद्यर्धद्वयं व्यत्यस्तं गो. रा. पाठे । १२ जरेति गो. पाठः । १३ आरुरोहेति भाति ।

तेषां प्रभुरहं सीते सर्वेषां भीमकर्मणाम् । सहस्रमेकमेकस्य मम कार्यपुरःसरम् ॥ १५ ॥
यदिदं राज्यतन्त्रं मे त्वयि सर्वं प्रतिष्ठितम् । जीवितं च विशालाक्षि त्वं मे प्राणैर्गरीयसी॥ १६ ॥
बह्वीनामुत्तमस्त्रीणां मम योऽसौ परिग्रहः । तासां त्वमीश्वरी सीते मम भार्या भव प्रिये ॥ १७ ॥
साधु किं तेऽन्यथाबुद्ध्या रोचयस्व वचो मम । भजस्व माभितप्तस्य प्रसादं कर्तुमर्हसि ॥ १८ ॥
परिक्षिप्ता समुद्रेण लङ्केयं शतयोजना । नेयं धर्षयितुं शक्या सेन्द्रैरपि सुरासुरैः ॥ १९ ॥
न देवेषु न यक्षेषु न गन्धर्वेषु नर्षिषु । अहं पश्यामि लोकेषु यो मे वीर्यसमो भवेत् ॥ २० ॥
राज्यभ्रष्टेन दीनेन तापसेन पदातिना । किं करिष्यसि रामेण मानुषेणाल्पतेजसा ॥ २१ ॥
भजस्व सीते मामेव भर्ताहं सदृशस्तव । यौवनं त्वध्रुवं भीरु रमस्वेह मया सह ॥ २२ ॥

रा० टी०—तद्वचनाकारमाह–दशेति । दश अपराः द्वाविंशतिश्च राक्षसकोट्यः सन्तीति शेषः, भीमकर्मणां तेषामहं प्रभुः । तेषामित्यनेन विशेषणीभूतस्य परामर्शः अथशब्दानुशासनम् केषां शब्दानामित्यादौ तथा दर्शनात् ॥ १४ ॥

रा० टी०—वर्जयित्वेति । वृद्धान् बालांश्च रजनीचरान् जनान् वर्जयित्वा विद्यमानम् एकस्य मम एकं सहस्रं कार्यपुरस्सरं परिचारकोऽस्तीति शेषः ॥ १५ ॥

गो० टी०—दशेति । दश द्वाविंशतिश्चेति द्वात्रिंशत्कोटयः तेषां द्वात्रिंशत्कोटिराक्षसानां गुणीभूतानामपि राक्षसानां तच्छब्देन परामर्शः ॥ १४ ॥

गो० टी०—अथ शब्दानुशासनं तेषां शब्दानामित्यत्राह–वर्जयित्वेति । बालवृद्धान् विना ममैकस्य पुरः सरतीति पुरःसरं परिचारकजातम् एकसहस्रमस्ति ॥ १५ ॥

१५ ] ति० टी०—तेषामप्येकस्यैकस्यैकमेकं सहस्रं मम कार्ये प्रयोजने साधकतया पुरःसरम् अस्तीति शेषः॥ १५ ॥

१६ ] ति० टी०—मे मम यदिदमुक्तरूपं राज्यतन्त्रं राजपरिकरस्तत्त्वयि प्रतिष्ठितं त्वदधीनमित्यर्थः ॥ १६ ॥

रा० टी०—यदिति । हे विशालाक्षि ! यतस्त्वं मे प्राणैः प्राणेभ्योऽपि गरीयसी असि अतः मे यदिदं राजतन्त्रं जीवितं च तत्सर्वं त्वयि प्रतिष्ठितं तुभ्यं समर्पितं त्वदधीनीकृतमित्यर्थः॥१६॥

गो० टी०—यदिदमिति । मम यदिदं राजतन्त्रं राजपरिकरः तत्सर्वं त्वयि प्रतिष्ठितं त्वदधीनं मम जीवितं च त्वदधीनं त्वयि प्रतिष्ठितं त्वं मे मम प्राणैः प्राणेभ्यः गरीयसी ॥ १६ ॥

१७ ] ति० टी०—बह्वीनामुत्तमस्त्रीणामन्तःपुरसंचारिणीनाम् । यो मम परिग्रहो भार्या नित्यपुंलिङ्गः परिग्रहशब्दो भार्यावाची । मम भार्या सती तासां त्वमीश्वरी स्वामिनी भव ॥ १७ ॥

रा० टी०—बह्वीनामिति । हे सीते ! भार्या अतिशोभावती त्वं बह्वीनां तासां प्रसिद्धानां ममोत्तमस्त्रीणां मम चेश्वरी पूज्या भव । एतेनात्रैव भवत्या स्थातव्यमिति व्यञ्जितं तेन रामचिन्तां त्यजेति ध्वनितम् ॥ १७ ॥

गो० टी०—बह्वीनामिति । अन्तःपुरचारिणां स्त्रीसहस्राणां मध्ये योऽसौ मम परिग्रहः या भार्या इत्यर्थः । 'परिग्रहः कलत्रे स्यात्' इति शाश्वतः । नियतपुंलिङ्गः । जात्यभिप्रायेणैकवचनम्। तासामित्यत्र स्त्रीणामित्यभिप्रायेण स्त्रीलिङ्गनिर्देशः । मम भार्या सती तासामीश्वरा स्वामिनी भव । "स्थेशभासपिसकसो वरच्" इति वरच् । ततष्टाप् ॥ १७ ॥

१८ ] ति० टी०—साधु हितं मम वचो रोचयस्वेत्यन्वयः । अन्यथाबुद्ध्या ते तव किं न किमपि फलमित्यर्थः । मा मां भजस्व । अभितप्तस्य कामाभितप्तस्य ॥ १८ ॥

रा० टी०—ननु रामं विनाऽहं न स्थास्यामीत्यत आह–साध्विति । साधु स्वहितं मम वचो रोचयस्व अन्यथा रामविषयिण्या बुद्ध्या ते किं न किमपीत्यर्थः, अत एव स्वमा मम नित्यमाता त्वं भज सेवां कारय अतितप्तस्य भ्रात्रादिवधेन पीडितस्य मम प्रसादं प्रसन्नतां कर्तुं त्वमर्हसि ॥ १८ ॥

गो० टी०—साध्विति । मम वचो रोचयस्व मदुक्तं स्वीकुरु इदं साधु समीचीनं ते अन्यथाबुद्ध्या किं रामविषया बुद्धिर्मा भूदित्यर्थः । तस्मात् मा मां भजस्व । अभितप्तस्य कामाभितप्तस्य मे प्रसादं कर्तुमर्हसि । अर्हसि किम् नार्हसीत्यपि ध्वनिः ॥ १८ ॥

१९–२२ ] ति० टी०—शतयोजना भूमेरिति शेषः । अशक्यधर्षणत्वे पूर्वार्धं हेतुः । एवं च रामस्यात्रागमनमसंभावितमिति भावः ॥ १९–२२ ॥

रा० टी०—ननु रामो मां बलान्नेष्यत्येवेत्यत आह–परीति । यतः शतयोजनेयं लङ्का समुद्रेण परिक्षिप्ता परिव्टता अतः सेन्द्रैः स्वस्वस्वामिसहितैः सुरासुरैः प्रधर्षयितुं न शक्या ॥ १९ ॥

गो० टी०—रामागमनप्रसक्तिरेव नास्तीत्याशयेनाह–परिक्षिप्तेति । 'शतं सहस्रमयुतं सर्वमानन्त्यवाचकम्' इति वचनात् सहस्रेण अनेकराक्षसैः परिक्षिप्ता परिव्टता इयं लङ्का शतयोजना शतयोजनपरिमिता तस्मान्नेयं धर्षयितुं शक्या ॥ १९ ॥

१ राजतन्त्रमिति गो. पाठः । २ बहूनां स्त्रीसहस्राणामिति गो. पाठः । ३ ईश्वरेति गो. पाठः । ४ सहस्रेणेति गो. पाठः । ५ पक्षिष्विति गो. पाठः । ६ गतायुषेति गो. पाठः । ७ ह्यध्रुवमिति गो. पाठः । ८ तेषामिति भाति । ९ एतत्पर्यन्तं पूर्वश्लोकटीकास्थमिति भाति । १० राज्येति भाति । ११ भूमेरिति युक्तं भाति ।

दर्शने मा कृथा बुद्धिं राघवस्य वरानने । कास्य शक्तिरिहागन्तुमपि सीते मनोरथैः ॥ २३ ॥
न शक्यो वायुराकाशे पाशैर्बद्धुं महाजवः । दीप्यमानस्य वाप्यग्नेर्ग्र[1]हीतुं विमलाः शिखाः ॥ २४ ॥
त्रयाणामपि लोकानां न तं पश्यामि शोभने । विक्रमेण नयेद्यस्त्वां मद्बाहुपरिपालिताम् ॥ २५ ॥
[2]लङ्कायाः सुमहद्राज्यमिदं त्वमनुपालय । त्वत्प्रेष्या मद्विधाश्चैव देवाश्चापि [3]चराचरम् ॥ २६ ॥
अभिषेक[4]जलक्लिन्ना तुष्टा च रमयस्व [5]च । दुष्कृतं यत्पुरा कर्म वनवासेन तद्गतम् ॥ २७ ॥

---

रा० टी०–लङ्कायाः धर्षणाशक्यत्वं संवर्ण्य स्वस्यापि धर्षणाशक्यत्वमाह–नेति । यो मे वीर्यसमो भवेत् तं देवादिष्वहं न पश्यामि ॥ २० ॥

गो० टी०–मा भूत्पुरस्य दुर्धर्षता मम पुनर्वीर्यं श्रृण्वित्याह–न देवेष्विति । मे वीर्ये यः समो भवेत् तं देवेषु न पश्यामि, यक्षेषु न पश्यामि, गन्धर्वेषु न पश्यामि, पक्षिषु च न पश्यामि ॥ २० ॥

रा० टी०–रामविषयकविरक्तिमुत्पादयन्नाह–राज्येति । राज्यभ्रष्टेन अत एव अल्पतेजसा रामेण किं करिष्यसि एतेन रामकर्तृकराज्यप्राप्त्यनन्तरं तत्संगमः कर्तव्य इति व्यञ्जितम् २१

गो० टी०–राज्येति । गतायुषा अल्पायुषेत्यर्थः ॥ २१ ॥

रा० टी०–भजस्वेति । हे सीते ! तव भर्ता रामः हमिदानीं सदृशः तव पालनयोग्यः अन अतः इह अस्मिन् समये मां लङ्कासंपत्तिमेव भजस्व तु अनन्तरं रामराज्यप्राप्तावित्यर्थः, मया माम् अयोध्यासंपत्तिम् अयति प्राप्नोति ते न रामेण सह रमस्व रंस्यसे इत्यर्थः । तत्र हेतुः–यौवनं तव ध्रुवं नित्यम् एतेनेदानीं रामसमीपगमनयोग्यता तव नास्तीति सूचितम् हमित्यव्ययम् अध्रुवमित्यत्रत्योकारः निषेधार्थकोऽव्ययपठितः स च सदृशान्वयी ॥ २२ ॥

गो० टी०–भजस्वेति । इह भवने ॥ २२ ॥

२३ ] ति० टी०–अस्य रामस्य ॥ २३ ॥

रा० टी०–दर्शन इति । इह अस्मिन्समये राघवस्य दर्शने बुद्धिं मा कृथाः । ननु स आगत्य मां नेष्यतीत्यत आह–अस्य रामस्य इहागन्तुं मनोरथैः मनोव्यापारैरपि का शक्तिः न शक्तिरित्यर्थः ॥ २३ ॥

गो० टी०–दर्शन इति । राघवस्य दर्शने बुद्धिं मा कृथाः तद्दर्शनं च दुर्लभमित्यर्थः । तदेव स्पष्टयति–काऽस्येति अत्र आगन्तुं मानसिकव्यापारोऽपि न शक्यः किं पुनः कायिक इत्यर्थः ॥ २३ ॥

२४–२५ ] ति० टी०–यथा वायुर्बद्धुमशक्यो यथा चाग्निशिखा ग्रहीतुमशक्यास्तथेहागन्तुमशक्यामित्यर्थः ॥ २४ ॥२५॥

रा० टी०–नेति । यथाऽऽकाशे महाजवो वायुः पाशैः रज्जुभिर्बद्धुं त्रयाणामपि लोकानां न शक्यः दीप्यमानस्य अग्नेः विमलाः शिखाश्च ग्रहीतुं न शक्याः बन्धकं ग्रहीतारं च न पश्यामीत्यर्थः, तथा मद्बाहुपरिपालितां विक्रमेण यस्त्वां नयेत् तं त्रयाणामपि लोकानां मध्ये न पश्यामि । श्लोकद्वयमेकान्वयि ॥ २४ ॥ २५ ॥

गो० टी०–अशक्यत्वे दृष्टान्तमाह–न शक्य इति । विमलां निर्धूमां शिखां ज्वालाम् ॥ २४ ॥

गो० टी०–त्रयाणामिति । लोकानामिति निर्धारणे षष्ठी ॥ २५ ॥

२६ ] ति० टी०–मद्विधास्त्वत्प्रेष्या भविष्यन्ति । मां चेदङ्गीकरिष्यसि तदा सेवकवत्त्वदाज्ञावशो भविष्यामि । तथाभूते मयि राक्षसा देवाश्च मद्वशास्त्वद्वशाः संपन्ना एव । किं विशेषेण सर्वं चराचरं त्वत्प्रेष्यं भवति तदेत्यर्थः ॥ २६ ॥

रा० टी०–लङ्कायामिति । लङ्कायां स्थिता त्वम् इदं मदीयं सुमहद्राज्यमनुपालय, एतेन त्वत्सेवकोऽहं भविष्यामीति सूचितम् । अत एव मद्विधाः ये राक्षसाः देवाश्च चराचरं सर्वं जगच्च त्वत्प्रेष्याः त्वद्भृत्याः भविष्यन्तीति शेषः ॥ २६ ॥

गो० टी०–लङ्कायामिति । त्वत्प्रेष्याः त्वत्परिचारकाः भविष्यन्तीति शेषः । अभिषेकेत्यर्धमेकं वाक्यम् । अभिषेकोदकेन पट्टमहिषीत्वेनाभिषेकोदकेन क्लिन्ना सिक्ता ॥ २६ ॥

२७ ] ति० टी०–अभिषेकः श्रमनिवृत्तिद्वारा भोगाय स्नानं तदुदकेन क्लिन्नार्द्रा श्रमापनयनात्तुष्टा च मां रमयस्व । यत्पूर्वं संचितं किंचिद्दुष्कृतमासीत्तद्वनवासेन तद्गतदुःखेन गतं क्षीणम् ॥ २७ ॥

रा० टी०–अभिषेकेति । अभिषेकजलक्लिन्ना अभिषेकजलैः स्नानोदकैः क्लिन्ना स्नाता तुष्टा लङ्का राज्यप्राप्त्या प्राप्तसंतोषा च त्वं मां लङ्कासंपत्तिं रमयस्व यथेच्छं पालयस्व इत्यर्थः, एतेनापहरणसमयादारभ्य तावत्कालपर्यन्तं स्नानं तया न कृतमिति सूचितम् । अर्धं पृथक्–दुष्कृतमिति । पुरा पौर्वकालिकं यत् दुष्कृतं ते कर्म तद्वनवासेन गतं यच्च ते सुकृतं कर्म तस्य फलम् इह इदानीम् आप्नुहि ॥ २७ ॥

गो० टी०–दुष्कृतमिति । पुरा पूर्वजन्मनि यद्दुष्कृतं कर्मास्ति तत् वनवासेन वनवासक्लेशेन दत्तफलत्वात् गतं नष्टम् ॥ २७ ॥

---

१ गृहीतुं विमलां शिखामिति गो. पाठः । २ लङ्कायामिति गो. रा. पाठः । ३ चराचरा इति गो. पाठः । ४ उदकक्लिन्नेति गो. पाठः । ५ मामिति गो. रा. पाठः ।

यच्च ते सुकृतं कर्म तस्येह फलमाप्नुहि । इह सर्वाणि माल्यानि दिव्यगन्धानि मैथिलि ॥२८॥
भूषणानि च मुख्यानि तानि सेव मया सह । पुष्पकं नाम सुश्रोणि भ्रातुर्वैश्रवणस्य मे ॥ २९ ॥
विमानं सूर्यसंकाशं तरसा निर्जितं रणे । विशालं रमणीयं च तद्विमानं मनोजवम् ॥ ३० ॥
तत्र सीते मया सार्धं विहरस्व यथासुखम् । वदनं पद्मसंकाशं विमलं चारुदर्शनम् ॥ ३१ ॥
शोकार्तं तु वरारोहे न भ्राजति वरानने । एवं वदति तस्मिन्सा वस्त्रान्तेन वराङ्गना ॥ ३२ ॥
पिधायेन्दुनिभं सीता मन्दमश्रूण्यवर्तयत् । ध्यायन्तीं तामिवास्वस्थां सीतां चिन्ताहतप्रभाम् ॥३३॥
उवाच वचनं वीरो रावणो रजनीचरः । अलं व्रीडेन वैदेहि धर्मलोपकृतेन ते ॥ ३४ ॥
आर्षोऽयं [10]देवि निष्पन्दो यस्त्वामभिभविष्यति । एतौ पादौ मया स्निग्धौ शिरोभिः परिपीडितौ ॥३५॥

२८-३२ ] ति० टी०-इह लङ्कायाम् । मदङ्गीकारादिति शेषः ॥ २८-३२ ॥

रा० टी०-इहेति । मया राज्यसंपत्त्या सह सर्वाणि अनेकविधानि यानि माल्यादीनि तानि सेव सेवस्व ॥ २८ ॥

गो० टी०-इहेति । भूषणानि च मुख्यानि सेवस्व धारयेत्यर्थः ॥ २८ ॥

रा० टी०-पुष्पकमिति । सूर्यसंकाशं पुष्पकं नाम मे भ्रातुः वैश्रवणस्य विमानं तरसा अतिबलेन मया निर्जितं तद्विमानं विशालं मनोजवं चास्तीति शेषः ॥ २९ ॥ ३० ॥

गो० टी०-पुष्पकमित्यादि । तरसा बलेन विशालं वेशनयोग्यम् । "वेः शालच्छङ्कटचौ" इत्यनेन शालच् प्रत्ययः । असंकोचन्यायाद्यावदुपवेष्टृसंभावनमुपदेशार्हमित्यर्थः ॥ २९ ॥३०॥

रा० टी०-तत्रेति । मया राज्यसंपत्त्या सार्धं विद्यमाने तत्र तस्मिन् विमाने यथासुखं विहरस्व । अर्धं पृथक्-वदनमिति । शोकार्तं ते वदनं न भ्राजति प्रकाशते एतेन शोकं त्यजेति व्यञ्जितम् ॥ ३१ ॥

गो० टी०-वदनमिति । न भ्राजति न भासते ॥ ३१ ॥

रा० टी०-एवमिति । तस्मिन् रावणे एवं वदति सति वस्त्रान्तेन इन्दुनिभं मुखं पिधाय विद्यमाना सीता अश्रूणि अवर्तयत् ॥ ३२ ॥

गो० टी०-एवमिति । वदतीति सतिसप्तमी । पिधाय आच्छाद्य ॥ ३२ ॥

३३ ] ति० टी०-शोकेनास्वस्थामिव चिन्तया हतप्रभामिव ध्यायन्तीमिव तामुवाचेत्यन्वयः ॥ ३३ ॥

रा० टी०-ध्यायन्तीमिति । ध्यायन्तीं राममिति शेषः, चिन्ताहतप्रभामिव चिन्ताकर्तृकहतप्रभासदृशीम् अस्वस्थां सीतां रावणो वचनमुवाच ॥ ३३ ॥

गो० टी०-ध्यायन्तीमिति । इवशब्दोऽवधारणे । यद्वा अस्वस्थामिव भूताविष्टामिवेत्यर्थः ॥ ३३ ॥

३४ ] ति० टी०-तूष्णीमवस्थानाद्व्रीडया तूष्णीं स्थितेति मन्यमान आह-अलमिति । धर्मलोपः स्वभर्तृत्यागपराङ्गीकाररूपस्तत्कृतेन व्रीडेन लज्जयाऽलम् मास्त्वित्यर्थः ॥ ३४ ॥

रा० टी०-तद्वचनाकारमाह-अलमिति । दे देवि! आर्षः ऋषिभिः प्रोक्तः निष्पन्दः अचलः योऽयं व्रीडः पत्यादिसंनिधाने लज्जा त्वामभिभविष्यति अभिभवति तेन धर्मलोपकृतेन मातृत्वरूपधर्मविध्वंसकेन व्रीडेन लज्जया अलं न कार्यं इत्यर्थः॥३४॥

गो० टी०-अलमिति । हे वैदेहि! धर्मलोपकृतेन व्रीडेनालं व्रीडा मा भूदित्यर्थः । कुत इत्यत्राह-आर्ष इति । यो दैवनिष्पन्दः दैवकृतसंबन्धः त्वामभिगमिष्यति अयं संबन्धः आर्षः ऋषिप्रोक्तः न त्वधर्म्य इत्यर्थः । अत्र नारदः 'परपूर्वाः स्त्रियस्त्वन्याः सप्त प्रोक्ताः स्वयंभुवा । पुनर्भूस्त्रिविधा तासां स्वैरिणी तु चतुर्विधा ॥ कन्या वा क्षतयोनिर्वा पाणिग्रहणदूषिता । पुनर्भूः प्रथमा प्रोक्ता पुनः संस्कारकर्मणा ॥ देशधर्मानपेक्ष्य स्त्री गुरुभिर्या प्रदीयते । उत्पन्नसाहसान्यस्मै सा द्वितीया प्रकीर्त्यते ॥ मृते भर्तरि तु प्राप्ता देवरादीनपास्य या । उपगच्छेत्परं कामात् सा तृतीया प्रकीर्तिता ॥ प्राप्ता देशाद्धनक्रीता क्षुत्पिपासातुरा च या । तवाहमित्युपगता सा चतुर्थी प्रकीर्तिता ' इति ॥ ३४ ॥

३५ ] ति० टी०-कुतस्तत्राह-आर्ष इति । हे देवि! त्वामभि त्वामुद्दिश्य मया क्रियमाणो निष्पन्दः स्नेहबन्धः प्रार्थनारूपो यश्चाग्रे भविष्यति सोऽयमार्षो ऋषिदृष्ट एव क्षत्रियाणामुचितत्वेन वेदोक्त एव । 'बलात्कारेण राक्षसः' इति वित्राहेषु स्मृत्या गणनात् । एवमुक्तिरपि तमोगुणप्राधान्येनैव कन्याया बलात्कारेण ग्रहणस्यैव राक्षसविवाहपदार्थत्वादिति बोध्यम् । पुनः प्रसादयति-एताविति ॥ ३५ ॥

रा० टी०-सीताविषये आत्मभावं बोधयन्नाह-एताविति । यतस्ते दासः अत एव वश्योऽहमस्मि अतः स्निग्धौ एतौ भवत्याः पादौ मया शिरोभिः परिपीडितौ अतः मे मदुपरि प्रसादं प्रसन्नतां कुरु ॥ ३५ ॥

गो० टी०-एताविति । तवेति शेषः ॥ ३५ ॥

१ यश्च ते सुकृतो धर्म इति गो. पाठः । २ सेवस्व चेति गो. पाठः । ३ मयेति गो. पाठः । ४ अनुत्तममिति गो. पाठः । ५ मुखमिति गो. पाठः । ६ दीनामिति गो. पाठः । ७ पाप इति गो. पाठः । ८ राक्षसेश्वर इति गो. पाठः । ९ चेति गो. पाठः । १० दैवनिष्पन्द इति गो. निष्यन्द इति रा. पाठः । ११ गमिष्यतीति गो. पाठः । १२ मद्धास्निग्धाविति गो. पाठः ।

प्रसादं कुरु मे क्षिप्रं वश्यो दासोऽहमस्मि ते । इमाः शून्यमया वाचः शुष्यमाणेन भाषिता ॥३६ ॥
न चापि रावणः कांचिन्मूर्ध्ना स्त्रीं प्रणमेत ह । एवमुक्त्वा दशग्रीवो मैथिलीं जनकात्मजाम् ॥
कृतान्तवशमापन्नो ममेयमिति मन्यते ॥ ३७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

## षट्पञ्चाशः सर्गः ।

रावणप्रलभोनैरविकृतमानसा सीताऽन्तरतस्तृणं कृत्वा तं बहुकृत्व उपालभ्य रामप्रभावं प्रस्तावयन्ती स त्वामवश्यं हन्तेत्युक्त्वा तूष्णीं बभूव । त्रयोदशमासावधि चेन्मां न भक्ष्यस्यवश्यं त्वां हनिष्यामीति इति सीतां विभीषमाणो रावणस्तामशोकवनिकां प्रापय्य तर्जनप्रलोभनाद्यैर्वशीकरणाय राक्षसी राज्ञापयत्तास्तामशोकवनं निन्युरप्रमादेन चारक्षन् ।

सा तथोक्ता तु वैदेही निर्भया शोककर्शिता । तृणमन्तरतः कृत्वा रावणं प्रत्यभाषत ॥ १ ॥
राजा दशरथो नाम धर्मसेतुरिवाचलः । सत्यसंधः परिज्ञातो यस्य पुत्रः स राघवः ॥ २ ॥
रामो नाम स धर्मात्मा त्रिषु लोकेषु विश्रुतः । दीर्घबाहुर्विशालाक्षो दैवतं स पतिर्मम ॥ ३ ॥

---

३६ ] ति० टी०–इमा दासोऽहमित्यन्ताः शुष्यमाणेन कामपीडितेन मया भाषिता उक्ता वाचः शून्या यथा न भवन्ति तथा कुर्विति शेषः ॥ ३६ ॥

रा० टी०–इमा इति । शुष्यमाणेन भ्रातृशोकपरिपीडितेन मया शून्याः मत्प्रार्थितानङ्गीकारेण फलरहिता इमा वाचो भाषिताः ॥ ३६ ॥

गो० टी०–इमा इति । शुष्यमाणेन अनङ्गेन तप्यमानेन मया इमाः शून्याः नीचाः वाचो भाषिताः । कुतः यस्माद्रावणः स्त्रीं न प्रणमेत न प्रणमेत् । अदृष्टपूर्वत्वात् स्वस्यापि नीचोक्तिर्विस्मयावहा जातेति भावः ॥३६॥

३७ ] ति० टी०–एवंविधं प्रसादनं न क्वाप्यभूदित्याह–न चापीति । मन्यतेऽमंस्त । अत्र रसाभासः ॥ ३७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

रा० टी०–सीतायां मे भातृत्वबुद्धिर्दृढेत्यत्र हेतुं वदन्नाह–नेति । काञ्चित् साधारणां मातृभिन्नामित्यर्थः, स्त्रीं रावणो न प्रणमेत ह प्रसिद्धमेतत् । अर्धं पृथक्–एवमिति । कृतान्तवशं रामविरोधसंपादनज्ञाप्यकालवशम् आपन्नः प्राप्तो दशग्रीवः मैथिलीमेवमुक्त्वा ममेयं वशेति शेषः इति मन्यते ॥ ३७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे पञ्चपञ्चाशत्तमः सर्गः ॥ ५५ ॥

गो० टी०–एवमिति । मन्यते अमन्यत ॥ ३७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

---

१ ] ति० टी०–निर्भया स्त्रियो[3] बलादुपभोगे मूर्धा ते विपतिष्यतीत्यप्सरसो रावणं प्रति शापं चित्ते विज्ञाय निर्भया । बलात्कारे योगवशाददृश्याऽस्पृश्या च भविष्यामीति धिया निर्भया वा । तृणमन्तरतः कृत्वा, साक्षात्पापात्मकपरपुरुषसंभाषणजदोषपरिहारायेति शेषः ॥ १ ॥

रा० टी०–रावणवचनश्रवणानन्तरकालिकं वैदेहीवृत्तान्तमाह–सेत्यादिभिः । तथा उक्ता रावणेन कथिता वैदेही अन्तरतः मध्ये तृणं कृत्वा रावणं प्रत्यभाषत, तृणं कृत्वेत्यनेन रामविरोधित्वात् रावणस्य साक्षात्प्रति भाषणानर्हत्वं ध्वनितम्॥१॥

गो० टी०–तथैतच्छ्रुत्वा परुषं भाषमाणायाः सीतायाः पुनरशोकवनिकानयनं षट्पञ्चाशे–सा तथेत्यादि । अन्तरतो मध्ये पतिव्रतायाः परपुरुषप्रत्यभिमुखतया भाषणायोगात् ॥ १ ॥

२–३ ] ति० टी०–धर्मसेतुरिवेत्यत्र धर्मेति पृथक्पदं लुप्तषष्ठीकम् । धर्मस्याचलः सेतुरिव मर्यादाप्रतिष्ठापकः । परिज्ञातः प्रसिद्धः ॥ २ ॥ ३ ॥

रा० टी०–तत्प्रतिभाषणाकारमाह–राजेत्यादिभिः। यस्य पुत्रो राघवः स रामः स अचलो धर्मसेतुरिव वेदमर्यादापालक इत्यर्थः, अत एव सत्यसंधः सत्यप्रतिज्ञः अत एव परिज्ञातः सर्वत्र प्रसिद्धः दशरथो नाम राजा साकेतेऽस्तीति शेषः, एतेन ततोऽपि त्वया भेतव्यमिति सूचितम् ॥ २ ॥

गो० टी०–राजेति । धर्मसेतुः धर्मस्य सेतुरिव मर्यादास्थापक इत्यर्थः । अचलः स्थिरः परिज्ञातः प्रसिद्धः कथमेतादृशकुलं प्राप्तातिचरेदिति भावः ॥ २॥

गो० टी०–राम इति । सः दशरथपुत्रः दैवतं सर्वलोकानामिति शेषः । य एवंभूतः स मे पतिरिति योजना । कथमेवंभूतभर्तृकातिचरेदिति भावः॥ ३ ॥

रा० टी०–राम इति । यो लक्ष्मणेन भ्रात्रा सह ते प्राणान् वधिष्यति स दैवतं सर्वेषां देवता इक्ष्वाकूणां कुले जातो रामः मम पतिः । श्लोकद्वयमेकान्वयि ॥ ३ ॥ ४ ॥

---

१ शून्या इति गो. पाठः । २ हीति गो. पाठः । ३ स्त्रिया इ॰ युक्तं यदि मूले पाठस्त्वेतादृश एवोपलभ्यते तदार्षत्वात्साधुरिति ज्ञेयम् ।

इक्ष्वाकूणां कुले जातः सिंहस्कन्धो महाद्युतिः । लक्ष्मणेन सह भ्रात्रा यस्ते प्राणान्वधिष्यति ॥ ४ ॥
प्रत्यक्षं यद्यहं तस्य त्वया [2]वै धर्षिता बलात् । शयिता त्वं हतः संख्ये जनस्थाने यथा खरः॥ ५ ॥
य एते राक्षसाः प्रोक्ता घोररूरा महाबलाः । राघवे निर्विषाः सर्वे सुपर्णे पन्नगा यथा ॥ ६ ॥
तस्य ज्याविप्रमुक्तास्ते शराः काञ्चनभूषणाः । शरीरं विधमिष्यन्ति गङ्गाकूलमिवोर्मयः ॥ ७ ॥
असुरैर्वा सुरैर्वा त्वं यद्यवध्योऽसि रावण । उत्पाद्य सुमहद्वैरं जीवंस्तस्य न मोक्ष्यसे ॥ ८ ॥
स ते जीवितशेषस्य राघवोऽन्तकरो बली । पशोर्यूपगतस्येव जीवितं तव दुर्लभम् ॥ ९ ॥
यदि पश्येत्स रामस्त्वां रोषदीप्तेन चक्षुषा । रक्षस्त्वमद्य निर्दग्धो [3]यथा रुद्रेण मन्मथः ॥ १० ॥
यश्चन्द्रं नभसो भूमौ पातयेन्नाशयेत वा । सागरं शोषयेद्वापि [4]स सीतां मोचयेदिह ॥ ११ ॥
गता[5]सुस्त्वं गतश्रीको गतसत्त्वो गतेन्द्रियः । लङ्का वैधव्यसंयुक्ता त्वत्कृतेन भविष्यति ॥ १२ ॥

---

४ ] ति० टी०–स कस्तत्राह–य इति ॥ ४ ॥

गो० टी०–इक्ष्वाकूणामिति । त्वद्वधार्थमेव भ्रात्रा सह इक्ष्वाकुकुलेऽवतीर्ण इति भावः । तथाच न मे त्वत्तो भयमिति भावः ॥ ४ ॥

५ ] ति० टी०–शयिता शयनकर्ता मृतोऽभूरिति शेषः, ईडार्षः ॥ ५ ॥

रा० टी०–तव पलायनादेव एतावत्कालं प्राणाः सन्तीति बोधयन्ती आह–प्रत्यक्षमिति । तस्य रामस्य प्रत्यक्षं बलात् यदि त्वयाऽहं प्रधर्षिता धृष्टतया हृता स्यामिति शेषः, तदा संख्ये संग्रामे खर इव जनस्थाने हतः सन् त्वं शयिता स्याः ॥ ५ ॥

गो० टी०–तर्हि कथमिदानीं स तूष्णीं स्थित इत्याशङ्क्याह–प्रत्यक्षमिति । प्रत्यक्षं यथा तथा यदि धर्षिता स्यां तदा त्वं हतः सन् युद्धे शयिता म्रियेथा इत्यर्थः ॥५॥

६–७ ] ति० टी०–प्रोक्तास्त्वया मत्पुर इति शेषः ॥६॥७॥

रा० टी०–य इति । घोररूपा य एते राक्षसाः प्रोक्ताः गमनाय प्रेरितास्ते सर्वे राघवे रामसंनिधौ सुपर्णे पन्नगा इव निर्विषा भविष्यन्तीति शेषः ॥ ६ ॥

गो० टी०–य इति । निर्विषाः निर्वीर्या इति राक्षसपक्षे ॥ ६ ॥

रा० टी०–तस्येति । तस्य रामस्य ज्याविप्रमुक्ताः काञ्चनभूषणास्ते शराः गङ्गाकूलमूर्मयः इव शरीरं राक्षसदेहान् विधमिष्यन्ति विध्मास्यन्ति विदारयिष्यन्ति ॥ ७ ॥

गो० टी०–तस्येति । विधमिष्यन्ति ध्मास्यन्ति निपातयिष्यन्तीत्यर्थः । गङ्गेत्यविभक्तिकनिर्देशः गङ्गाया ऊर्मय इत्यर्थः ॥ ७ ॥

८ ] ति० टी०–तस्य रामस्य वैरं क्रोधमुत्पाद्य तत्संनिधिं प्राप्तस्ततो जीवन्न मोक्ष्यसे तस्य मनुष्यत्वादिति भावः ॥ ८ ॥

रा० टी०–असुरैरिति । यद्यपि असुरैः सुरभिन्नैः सुरैश्च त्वमवध्योऽसि तथापि तस्य रामस्य सुमहत् वैरमुत्पाद्य जीवन् सन् न मोक्ष्यसे तच्छरेभ्य इति शेषः ॥ ८ ॥

गो० टी०–असुरैरिति । त्वं सुरासुरैर्यद्यप्यवध्यः तथापि तस्य रामस्य सुमहद्वैरं कोपमुत्पाद्य स्थितस्त्वं जीवन् सन् तच्छरपातान्न मोक्ष्यसे न मुक्तो भविष्यसीत्यर्थः ॥ ८ ॥

९ ] ति० टी०–तदेवाह–अन्तकरो नाशकरः ॥ ९ ॥

रा० टी०–स इति । ते जीवितशेषस्य उर्वरितजीवनस्य अन्तकरो विध्वंसको बली स रामोऽस्ति यूपगतस्य पशोरिव तव जीवितं दुर्लभम् ॥ ९ ॥

गो० टी०–स इति । स राघवः ते जीवितशेषस्य अन्तकरः नाशं कर्तुं समर्थः तस्मात् यूपगतस्य पशोरिव रामापराधिनस्तव जीवितं दुर्लभम् ॥ ९ ॥

१० ] ति० टी०–रक्ष इति रावणसंबोधनम् । निर्दग्धः भवेरिति शेषः ॥ १० ॥

रा० टी०–यदीति । स मद्भर्ता रामः यदि रोषदीप्तेन चक्षुषा त्वां पश्येत् तदा रुद्रेण मन्मथ इव त्वमद्यैव निर्दग्धो भवेः इति शेषः ॥ १० ॥

गो० टी०–यदीति । हे रक्षः ! सः रामः त्वां रोषदीप्तेन चक्षुषा यदि पश्येत् तदा त्वं निर्दग्धः सन् सद्यः पराभवं गच्छेः निर्दग्धशब्देनातीव पीडितत्वमुच्यते ॥ १० ॥

११ ] ति० टी०–यो रामः । पातयेदित्यादि शक्यार्थे लिङ् । यच्च तव शतयोजनसमुद्रमध्यमा लङ्काऽगम्येति बुद्धिः, सा वृथैवेत्याह–सागरं शोषयेद्वापि । वाशब्द एवार्थे स इह स्थितां सीतां मोचयेदेवेत्यर्थः ॥ ११ ॥

रा० टी०–य इति । यो रामः चन्द्रं तदुपलक्षितसकलोर्ध्ववासिनः भूमौ पातयेत् नाशयेत वा यदीच्छेदिति शेषः, सागरं तदुपलक्षितसकलभुवनानि च शोषयेत् नाशयेत् स रामः इह प्राप्तामिति शेषः सीतां मोचयेत् मोचयिष्यत्येवेत्यर्थः ॥ ११ ॥

गो० टी०–य इति । नभसः आकाशात् पातयेत् नाशयेत वा अदर्शनं प्रापयेद्वा सागरमपि शोषयेत् सः सीतां मोचयेदिति किमुत ॥ ११ ॥

१२ ] ति० टी०–त्वत्कृतेन त्वत्कृतापराधेन ॥ १२ ॥

---

१ हरिष्यतीति गो. पाठः । २ स्यामिति गो. पाठः । ३ गच्छेः सद्यः पराभवमिती गो. पाठः । ४ नेति गो. पाठः । ५ आयुरिति गो. पाठः ।
६ शीङः सेट्कत्वेऽपि आर्षत्वे प्रयोजनमन्वेषणीयम् ।

न ते पापमिदं कर्म सुखोदर्कं भविष्यति । याहं नीता विनाभावं पतिपार्श्वात्त्वया बलात् ॥ १३ ॥
स हि देवरसंयुक्तो मम भर्ता महाद्युतिः । निर्भयो वीर्यमाश्रित्य शून्ये वसति दण्डके ॥ १४ ॥
स ते वीर्यं बलं दर्पमुत्सेकं च तथाविधम् । व्यपनेष्यति गात्रेभ्यः शरवर्षेण संयुगे ॥ १५ ॥
यदा विनाशो भूतानां दृश्यते कालचोदितः । तदा कार्ये प्रमाद्यन्ति नराः कालवशं गताः ॥ १६ ॥
मां प्रधृष्य स ते कालः प्राप्तोऽयं राक्षसाधम । आत्मनो राक्षसानां च वधायान्तःपुरस्य च ॥ १७ ॥
न शक्या यज्ञमध्यस्था वेदिः स्रुग्भाण्डमण्डिता । द्विजातिमन्त्रसंपूता चण्डालेनावमर्दितुम् ॥ १८ ॥
तथाहं धर्मनित्यस्य धर्मपत्नी दृढव्रता । त्वया स्प्रष्टुं न शक्याहं राक्षसाधम पापिना ॥ १९ ॥

---

रा० टी०—गतासुरिति । त्वत्कृतेन त्वया संपादितेन अपहरणरूपकर्मणा गतासुत्वादिविशिष्टस्त्वमसीति शेषः, अत एव लङ्का वैधव्यसंयुक्ता त्वद्रूपधवरहिता भविष्यति ॥ १२ ॥

गो० टी०—गतायुरिति । त्वत्कृतेन परदाराभिमर्शनरूपपापेन त्वम् आयुरादिहीनो भविष्यसि, लङ्का च वैधव्यसंयुक्ता अनाथत्वसंयुक्ता भविष्यति ' आयुर्बलं यशो लक्ष्मीः परदाराभिमर्शनात् । सद्य एव विनश्यन्ति ' इति स्मृतेः ॥ १२ ॥

१३ ] ति० टी०—पतिपार्श्वाद्विनाभावं पतिपार्श्वेवियोगम् १३

रा० टी०—तेनेति । तेन रामस्यातिसामर्थ्यविशिष्टेन हेतुना इदमपहरणरूपं पापं कर्म दुःखोदर्कं दुःखवर्धकं भविष्यति 'न ते' इतिपाठे काकुर्बोध्या अत एव याऽहं पतिपार्श्वात् विनाभावं पतिसेवाराहित्यं बलात् हठात् नीता प्रापिता तां मां रामो नेष्यतीति शेषः ॥ १३ ॥

गो० टी०—न त इति । याऽहं वने पतिपार्श्वात् विना भावं वियोगं नीता तस्यां मयि ते इदं पापं कर्म सुखोदर्कं न भविष्यति किंतु दुःखोदर्कमेव भविष्यतीत्यर्थः ॥ १३ ॥

१४ ] ति० टी०—देवरसंयुक्तो लक्ष्मणसंयुतः स खरादिहन्ता । 'दैवतसंयुक्तः' इति पाठे दैवानुकूल्यवानित्यर्थः ॥ १४ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—स इति । देवरसंयुक्तो लक्ष्मणसहितः सः प्रसिद्धः निर्भयः यो मम भर्ता वीर्यम् अतिपराक्रममाश्रित्य संप्राप्य शून्ये मया रहिते दण्डके वसति सः रामः ते वीर्यं प्रभावं बलं पराक्रमं च दर्पं तयोर्मदं च तथाविधमुत्सेकम् अमर्यादाचरणं च शरवर्षेण गात्रेभ्यः स्थूलसूक्ष्मकारणशरीरेभ्योऽवयवेभ्यो वा व्यपनेष्यति दूरीकरिष्यति । 'दैवतसंयुक्तः' इति पाठे दैवानुकूल्यवानित्यर्थ इति भट्टाः । श्लोकद्वयमेकान्वयि ॥ १४ ॥ १५ ॥

गो० टी०—स हीति । दैवतसंयुक्तः दैवबलसंयुक्तः दीनस्तापसो रामो मां किं करिष्यतीति पूर्वं रावणेनोक्तस्य परिहारोऽयम् ॥ १४ ॥

१५ ] ति० टी०—वीर्यं पराक्रमः, बलं शारीरम्, दर्पो मदः, उत्सेकोऽमर्यादत्वम् ॥ १५ ॥

गो० टी०—स त इति । दर्पं मदम् उत्सेकम् उल्लङ्घ्य कार्यकारित्वम् गात्रेभ्य इत्युक्तिर्दर्पादीनां देहविशिष्टगुणत्वात् ॥ १५ ॥

१६ ] ति० टी०—कार्ये प्रमाद्यन्ति उचिते कार्ये वैपरीत्यं प्राप्नुवन्तीत्यर्थः ॥ १६ ॥

रा० टी०—तव विनाशोऽवश्यं भवितेति बोधयन्ती आह—यदेति । कालवशं गताः नराः जन्तवः यदा कार्ये कर्तव्ये प्रमाद्यन्ति विवेकरहिताः भवन्ति तदा कालचोदितः भूतानां जन्तूनां विनाशः दृश्यते ॥ १६ ॥

गो० टी०—लोकन्यायमाह—यदेति । कालचोदितो दैवकृतः विनाशो यदा दृश्यते सन्निहितो भवतीत्यर्थः । तदा कार्ये कृत्ये प्रमाद्यन्ति वैपरीत्यं प्राप्नुवन्ति ॥ १६ ॥

१७ ] ति० टी०—मां प्रधृष्य स्थितस्येति शेषः । स ते काल इति नाशकाल इत्यर्थः । स्वमरणेन वैधव्यमेवान्तःपुरवधः ॥ १७ ॥

रा० टी०—मामिति । हे राक्षसाधम ! मां प्रधृष्य स्थितस्य ते तव आत्मनः पुत्रादेः राक्षसानां च अन्तःपुरस्य च वधाय विध्वंसाय सः प्रसिद्धोऽयं कालः प्राप्तः अन्तःपुरविध्वंसस्तु तत्सधवात्वरूपविशेषणाभावप्रयुक्तः ॥ १७ ॥

गो० टी०—उक्तं लोकन्यायं प्रकृते योजयति—मामिति । मां प्रधृष्य स्थितस्य तव कालोऽप्ययमेव वर्तमान एव न तु चिरायेत्यर्थः, आत्मनो राक्षसानामन्तःपुरस्य च वधाय प्राप्तः ॥ १७ ॥

१८–१९ ] ति० टी०—यज्ञमध्यस्था यज्ञशालामध्यस्था स्रुगादियज्ञोपकरणमण्डिता वेदिश्चण्डालेनावमर्दितुं स्प्रष्टुं न शक्या तथा त्वयाऽहमिति योजना ॥ १८ ॥ १९ ॥

रा० टी०—ममानयनं त्वयाऽतीवानुचितं कृतमिति बोधयन्ती आह—नेति । स्रुग्भाण्डमण्डिता स्रुगादियागोपकरणैः शोभिता यज्ञमध्यस्था यागशालामध्यगता द्विजातिमन्त्रसंपूता ब्राह्मणोच्चारितमन्त्रैः संस्कृता वेदिः चण्डालेनावमर्दितुं संस्प्रष्टुं यथा न शक्या तथा धर्मनित्यस्य धर्मो धर्माचरणं नित्यं यस्य तस्य रामस्य दृढव्रता धर्मपत्नी अहं पापिना त्वया स्प्रष्टुं शक्या नास्मि । श्लोकद्वयमेकान्वयि ॥ १८ ॥ १९ ॥

गो० टी०—न शक्येत्यादि । श्लोकद्वयमेकान्वयम् ।

---

१ ते नेति रा. पाठः । २ वने इति गो. पाठः । ३ दैवतेति गो. पाठः । ४ तथेति गो. रा. पाठः । ५ अपनेष्यतीति गो. पाठः । ६ पूता चेति गो. पाठः । ७ पतिव्रतेति गो. पाठः । ८ शक्यास्मीति गो. रा. पाठः ।

क्रीडन्तीं राजहंसेन पद्मषण्डेषु [1]नित्यशः। हंसी सा तृणमध्यस्थं कथं द्रक्ष्येत मद्गुकम्॥ २० ॥
इदं शरीरं निःसंज्ञं बन्ध वा घातयस्व वा। नेदं शरीरं रक्ष्यं मे जीवितं वापि राक्षस ॥ २१ ॥
न तु शक्यमपक्रोशं पृथिव्यां दातुमात्मनः। एवमुक्त्वा तु वैदेही क्रोधात्सुपरुषं वचः॥ २२ ॥
रावणं जानकी तत्र पुनर्नोवाच किंचन। सीताया वचनं श्रुत्वा परुषं रोमहर्षणम्॥ २३ ॥
प्रत्युवाच ततः सीतां भयसंदर्शनं वचः। शृणु मैथिलि मद्वाक्यं मासान्द्वादश भामिनि २४ ॥
कालेनानेन नाभ्येषि यदि मां चारुहासिनि। ततस्त्वां प्रातराशार्थं सूदाश्छेत्स्यन्ति लेशशः २५ ॥

---

यज्ञो यज्ञपुरुषः तन्मध्यस्था गार्हपत्याहवनीयमध्यगता वेदिः ऐष्टिकी महावेदिः सुग्भाण्डमण्डिता सुगाद्युपकरणालंकृता द्विजातिमन्त्रैः उद्धननादिमन्त्रैः पूता शुद्धा यथा चण्डालेनावमर्दितुं पादेनाक्रमितुं न शक्या नार्हा तथाहं धर्मनित्यस्य नित्यधर्मस्य यज्ञस्थानीयस्य धर्मपत्नी पतिव्रता त्वया स्प्रष्टुं न शक्या ॥ १८ ॥ १९ ॥

२० ] ति० टी०—पद्मषण्डानि पद्मसमूहाः तृणमध्यस्थं जलनील्यादितृणमध्यस्थं द्रक्ष्येत पश्येत्। मद्गुकं जलवायसम् २०

रा० टी०—अनुचितत्वमेव रूपकालंकारेणाह—क्रीडन्तीति। पद्मखण्डेषु कमलवनेषु राजहंसेन सह नित्यशः क्रीडन्ती या हंसी राजहंसपत्नी सा तृणमध्यस्थं तृणेषु स्थितं मद्गुकं जलवायसं कथं द्रक्ष्येत पश्येत्। 'नित्यदा' इति भूषणपाठः आर्षो दाप्रत्यय इति तद्व्याख्या ॥ २० ॥

गो० टी०—क्रीडन्तीति। नित्यदा नित्यं नित्यशब्दस्य सर्वैकादिष्वपाठेप्यार्षो दाप्रत्ययः। सा प्रसिद्धा तृणषण्डस्थं जलजनडादितृणकदम्बमध्यस्थं मद्गुकं जलकाकम् ॥ २० ॥

२१ ] ति० टी०—एवं निर्भयोक्तौ लोकानुसारेण पतिव्रतोचितं हेतुमाह—इदमिति। निःसंज्ञं स्वतो जडम् ॥ २१ ॥

रा० टी०—ननु तव शरणमागतस्य मे रक्षा त्वयैव विधेयेत्यतो मद्विनाशो न भविष्यतीत्यत आह—इदमिति। निःसंज्ञं विवेकरहितम् इदं स्वकीयं शरीरं राक्षसदेहं बन्ध बधान घातयस्व वा। तत्र हेतुः—इदं तव शरीरं जीवितम् एतच्छरीरावच्छेदेन जीवनं च मे न रक्ष्यम् ॥ २१ ॥

गो० टी०—इदमिति। निःसंज्ञं निश्चेष्टं बन्ध बधान खादयस्व भक्षय। न त्वित्यर्धमेकं वाक्यम्। आत्मनः उपक्रोशमपवादं पृथिव्यां दातुं न शक्ष्यामि ॥ २१ ॥

२२-२३ ] ति० टी०—अपक्रोशं सीताऽसती जातेति निन्दाम्। सुपरुषं सुतरां परुषम्। अनेन प्रबन्धेन रजस्तमोयुतानामीश्वरालाभो दर्शितः ॥ २२ ॥ २३ ॥

रा० टी०—ननु शरणागतरक्षणस्य महात्मनामावश्यकत्वात्कथं तन्निषिध्यते इत्यत आह—नेति। आत्मनः स्वस्य अपक्रोशं रामविरोधिनं सीता रक्षतीति निन्दां पृथिव्यां दातुं प्रख्यापयितुं नैव शक्ष्यामि। अर्द्धं पृथक्—एवमिति। सुपरुषम् अतिरूक्षम् एवं वचः क्रोधात् रामविरोध्ययमिति रावणविषयककोपात् वैदेही जानकी उक्त्वा तत्र तस्मिन्समये पुनः किंचन नोवाच। अर्धद्वयमेकान्वयि ॥ २२ ॥

गो० टी०—एवमुक्त्वेति। तत्र तद्विषये क्रियाभेदात् पुनर्मैथिलीशब्दप्रयोगः ॥ २२ ॥

रा० टी०—सीताया इति। परुषं सीतायाः वचनं श्रुत्वा ततः राक्षसत्वात् हेतोः भयसंदर्शनं वचः सीतां प्रत्युवाच रावण इति शेषः ॥ २३ ॥

गो० टी०—सीताया इति। रोमहर्षणं क्रोधावहत्वाद्रोमाञ्चकरं भयसंदर्शनं भयोत्पादकम् ॥ २३ ॥

२४ ] ति० टी०—भयसंदर्शनं भयोत्पादकम्। द्वादश प्रतीक्षे इति शेषः। यत्तु पाद्मे—'दशमासात्परं सीते यदि मां न भजिष्यसि। तदा हन्मि' इत्युक्तम्, तत्तु पुनः सीतासविधगमनकालिकं वच इति न विरोधः ॥ २४ ॥

रा० टी०—तद्वचनाकारमाह—शृण्विति। हे मैथिलि! द्वादशमासान् त्वां संप्रार्थ्येति शेषः, अनेन द्वादशमासात्मकेन कालेन मां लङ्कासंपत्तिं यदि नाभ्येषि प्राप्नोषि शोकं त्यक्त्वा लङ्काराज्यं न पालयसीत्यर्थः, तदा ततः मत्प्रार्थनाया अस्वीकारात् हेतोः सूदाः पाककर्तारः त्वां लेशशः छेत्स्यन्ति, एतेन सूदानां स्वविषयकातिभक्तिमत्त्वं व्यञ्जितम्। सार्धश्लोक एकान्वयी ॥ २४ ॥ २५ ॥

गो० टी०—शृण्वित्यादि। सार्धश्लोक एकान्वयः। द्वादश मासानित्यत्यन्तसंयोगे द्वितीया। प्रतीक्ष इति शेषः। प्रातराशार्थं प्रातर्भक्षणार्थं सूदाः पाचकाः "सूदा औदनिका गुणाः" इत्यमरः। अत्र सीताहरणं चैत्रमास इत्यवगन्तव्यम्। संवत्सरान्ते रावणवधकरणात् त्रीन् तेन वर्षान् पञ्चवट्यां रामः स्थित इति गम्यते। हेमन्तवर्णनं तु रामतपोविशेषज्ञापनाय न शूर्पणखागमनज्ञापनाय ॥ २४ ॥ २५ ॥

२५ ] ति० टी०—नाभ्येषि स्वारस्येनेति शेषः ॥ २५ ॥

---

१ नित्यदेति गो. पाठः। २ षण्डस्थमिति गो. पाठः। ३ शक्ष्याम्युपेति गो. रा. पाठः। ४ मैथिलीति गो. पाठः।

इत्युक्त्वा परुषं वाक्यं रावणः शत्रुरावणः । राक्षसीश्च ततः क्रुद्ध इदं वचनमब्रवीत् ॥ २६ ॥
शीघ्रमेव हि राक्षस्यो [1]विरूपा घोरदर्शनाः । दर्पमस्यापनेष्यन्तु मांसशोणितभोजनाः ॥ २७ ॥
वचनादेव तास्तस्य सुघोरा [3]घोरदर्शनाः । कृतप्राञ्जलयो भूत्वा मैथिलीं पर्यवारयन् ॥ २८ ॥
स ताः प्रोवाच राजासौ रावणो घोरदर्शनाः । प्रचल्य चरणोत्कर्षैर्दारयन्निव मेदिनीम् ॥ २९ ॥
अशोकवनिकामध्ये मैथिली नीयतामिति । तत्रेयं रक्ष्यतां गूढं युष्माभिः परिवारिता ॥ ३० ॥
तत्रैनां तर्जनैर्घोरैः पुनः सान्त्वैश्च मैथिलीम् । आनयध्वं वशं सर्वा वन्यां गजवधूमिव ॥ ३१ ॥
इति प्रतिसमादिष्टा राक्षस्यो रावणेन ताः । अशोकवनिकां जग्मुर्मैथिलीं परिगृह्य तु ॥ ३२ ॥
सर्वकामफलैर्वृक्षैर्नानापुष्पफलैर्वृताम् । सर्वकालमदैश्चापि द्विजैः समुपसेविताम् ॥ ३३ ॥
सा तु शोकपरीताङ्गी मैथिली जनकात्मजा । राक्षसीवशमापन्ना व्याघ्रीणां हरिणी यथा ॥ ३४ ॥

२६] ति० टी०—शत्रून्रावयति क्रोशयति शत्रुरावणः॥२६॥

रा० टी०—इतीति । शत्रुरावणो रावण इति परुषं वाक्यमुक्त्वा ततः राक्षसत्वात् हेतोः क्रुद्धः सन् राक्षसीरिदमब्रवीत् ॥ २६ ॥

गो० टी०—इत्युक्त्वेति । शत्रून् रावयति क्रोशयतीति शत्रुरावणः ॥ २६ ॥

२७ ] ति० टी०—अपनेष्यन्त्वपनयन्तु ॥ २७ ॥

रा० टी०—तद्वचनाकारमाह—शीघ्रमिति । हे मांसशोणितभोजना राक्षस्यः! अस्याः सीताया दर्पं रामोऽतीव बलवानित्यादिगर्वम् अपनेष्यन्तु अपनयन्तु मत्प्रभाववर्णनेन दूरीकुर्वन्तु। नश्चने इत्यत्र नकारयोगविभागेन सपादसप्ताध्यायीं प्रति त्रिपादी क्वचिन्नासिद्धेतिकल्पनया यलोपस्यासिद्धत्वाभावेन दीर्घः,अस्येति सामान्ये नपुंसकं वा ॥ २७ ॥

गो० टी०—शीघ्रमिति । विनेष्यध्वं विनयध्वम् । व्यत्ययेन स्यादेशः ॥ २७ ॥

२८ ] ति० टी०—कृतप्राञ्जलयः रावणं प्रतीति शेषः २८॥

रा० टी०—वचनादिति । तस्य रावणस्य वचनाद्धेतोः घोरदर्शनास्ता राक्षस्यः कृतप्राञ्जलयो भूत्वा मैथिलीं पर्यवारयन् परितः बोधयितुम् अतिष्ठन् ॥ २८ ॥

गो० टी०—वचनादिति । कृतप्राञ्जलयः रावणवाक्याङ्गीकारे कृतप्रकृष्टाञ्जलयः ॥ २८ ॥

२९ ] ति० टी०—चरणोत्कर्षैः पदोत्क्षेपैर्मेदिनीं दारयन्निव प्रचल्य द्वित्राणि पदानि चलित्वा ॥ २९ ॥

रा० टी०—स इति । सोऽसौ रावणो राजा चरणोत्कर्षैः पादप्रक्षेपैर्मेदिनीं पृथ्वीं दारयन्निव प्रचल्य अशोकवनिकामध्ये मैथिली नीयतां तत्र गूढं यथा भवति तथा युष्माभिः परिवारिता इयं सीता रक्ष्यतां तत्र एनां मैथिलीं तर्जनादिभिः वन्यां गजवधूमिव विवशं स्वाधीनत्वमानयध्वमिति घोरदर्शना राक्षसीः प्रोवाच । श्लोकत्रयमेकान्वयि ॥ २९–३१ ॥

गो० टी०—स इति । चरणोत्कर्षैः चरणाघातैः मेदिनीं भुवं दारयन्निव भिन्दन्निव प्रचाल्य गत्वा उत्थाय वा ताः प्रोवाच ॥ २९ ॥

३०–३२ ] ति० टी०—नीयतामिति प्रोवाचेत्यन्वयः । परिवारिता क्षणमप्यवियुक्ता । रक्ष्यतामित्यर्थः ॥ ३०–३२ ॥

रा० टी०—इतीति । रावणेन इति प्रतिसमादिष्टा राक्षस्यः मैथिलीं प्रतिगृह्य नानापुष्पफलैः अनेकविधैः पुष्पैः फलैश्च युक्तैः सर्वकामफलैः सर्वान् कामान् फलन्ति तैर्वृक्षैः कल्पतरुभिः सर्वकालमदैः सर्वकालमदविशिष्टैः द्विजैः पक्षिभिश्च समुपसेविताम् अशोकवनिकां जग्मुः । श्लोकद्वयमेकान्वयि॥३२॥३३॥

गो० टी०—अशोकेति । युष्माभिः परिवारिता युष्माभिः रक्ष्यताम् ॥ ३० ॥

गो० टी०—तत्रेति । अत्यन्तभयेन प्राणवियोगो मा भूदिति पुनः सान्त्वैरित्युक्तम् ॥ ३१ ॥

गो० टी०—इतीति । प्रतिगृह्य आदाय ॥ ३२ ॥

३३–३४ ] ति० टी०—सर्वे कामाः फलन्ति येभ्यस्तादृशैर्वृक्षैः कल्पवृक्षैरित्यर्थः । सर्वकालमदैः सर्वकालं मदयुतैर्द्विजैः पक्षिभिः ॥ ३३–३४ ॥

गो० टी०—सर्वेति । सर्वस्मिन्नपि काले फलानि येषां ते सर्वकालफलाः तैः एवमुत्तरत्रापि जग्मुरिति पूर्वेणान्वयः ॥ ३३ ॥

रा० टी०—सेति । शोकपरीताङ्गी सा मैथिली व्याघ्राणां वशं हरिणीव राक्षसीवशमापन्ना प्राप्ता ॥ ३४ ॥

गो० टी०—सा त्विति । राक्षसीत्यविभक्तिकनिर्देशः । राक्षसीनामित्यर्थः ॥ ३४ ॥

१ विकृता इति गो. पाठः । २ विनेष्यध्वमिति गो. पाठः । ३ राक्षसीगणा इति गो. पाठः । ४ त्विति गो. पाठः । ५ दर्शन इति गो. पाठः । ६ प्रचाल्येति गो. पाठः । ७ इयमिति गो. पाठः । ८ तत्रैवान्तर्जनैरिति गो. पाठः । ९ प्रतीति गो. पाठः । १० व्याघ्राणामिति रा. पाठः ।

शोकेन महता त्रस्ता मैथिली जनकात्मजा । न शर्म लभते भीरुः पाशबद्धा मृगी यथा ॥ ३५ ॥
न विन्दते तत्र तु शर्म मैथिली विरूपनेत्राभिरतीव तर्जिता ।
पतिं स्मरन्ती दयितं च देवरं विचेतनाऽभूद्भयशोकपीडिता ॥ ३६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे षट्पञ्चाशः सर्गः ॥ ५६ ॥

---

२. इतः परं प्रक्षिप्तोऽयं सर्गो दृश्यते ।

ब्रह्मणाऽऽदिष्टो वासवः सह निद्रया लङ्कामेत्य तया राक्षसान्प्रमोहयन्सीतान्तिकं प्राप्य रामकुशलनिवेदनेनाश्वासयन्स्ववासवत्वप्रत्यायनार्थं चाम्लानकुसुमत्वादीन्यनन्यलिङ्गानि दर्शयित्वा क्षुत्तृड्ढरणं हविः प्रार्पयत्सा रामलक्ष्मणाभ्यां निवेदितं तत्पायसं पीत्वा क्षुधादिदुःखं जहौ ।

प्रवेशितायां सीतायां लङ्कां प्रति पितामहः । तदा प्रोवाच देवेन्द्रं परितुष्टं शतक्रतुम् ॥ १
त्रैलोक्यस्य हितार्थाय रक्षसामहिताय च । लङ्कां प्रवेशिता सीता रावणेन दुरात्मना ॥ २
पतिव्रता महाभागा नित्यं चैव सुखैधिता । अपश्यन्ती च भर्तारं पश्यन्ती राक्षसीजनम् ॥ ३
राक्षसीभिः परिवृता भर्तृदर्शनलालसा । निविष्टा हि पुरी लङ्का तीरे नदनदीपतेः ॥ ४
कथं ज्ञास्यति तां रामस्तत्रस्थां तामनिन्दिताम् । दुःखं संचिन्तयन्ती सा बहुशः परिदुर्लभा ॥ ५
प्राणयात्रामकुर्वाणा प्राणांस्त्यक्ष्यत्यसंशयम् । स भूयः संशयो जातः सीतायाः प्राणसंक्षये ॥ ६
स त्वं शीघ्रमितो गत्वा सीतां पश्य शुभाननाम् । प्रविश्य नगरीं लङ्कां प्रयच्छ हविरुत्तमम् ॥ ७
एवमुक्तोऽथ देवेन्द्रः पुरीं रावणपालिताम् । आगच्छन्निद्रया सार्धं भगवान्पाकशासनः ॥ ८
निद्रां चोवाच गच्छ त्वं राक्षसान्संप्रमोहय । सा तथोक्ता मघवता देवी परमहर्षिता ॥ ९
देवकार्यार्थसिद्ध्यर्थं प्रामोहयत राक्षसान् । एतस्मिन्नन्तरे देवः सहस्राक्षः शचीपतिः ॥ १०
आससाद वनस्थां तां वचनं चेदमब्रवीत् । देवराजोऽस्मि भद्रं ते इह चास्मि शुचिस्मिते ॥ ११

---

**३५-३६ ] ति० टी०**—शोकेन त्रस्ता सेव । इतरजनप्रतारणाय नटवल्लोकरीत्यनुसरणमनयोर्लोको यथा वास्तवममन्यत तथैव कविरपि वर्णयति तत्प्रतारणायैवेति मन्तव्यम् ॥ ३५ ॥ ३६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे षट्पञ्चाशः सर्गः ॥ ५६ ॥

**रा० टी०**—शोकेनेति । महता शोकेन ग्रस्ता भीरुर्जनकात्मजा पाशबद्धा मृगीव शर्म सुखं न लभते लेभे ॥ ३५ ॥

**गो० टी०**—शोकेनेति । लभते अलभत ॥ ३५ ॥

**रा० टी०**—तदेव भङ्ग्यन्तरेणाह—नेति । विरूपनेत्राभिर्विकृतानि रूपाणि नेत्राणि च यासां ताभिः राक्षसीभिः अतीव तर्जिता भयशोकपीडिता मैथिली दयितं पतिं देवरं च स्मरन्ती सती विचेतनाऽभूत् अत एव तत्र अशोकवाटिकायां शर्म सुखं न विन्दते अविन्दत ॥ ३६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे षट्पञ्चाशत्तमः सर्गः ॥ ५६ ॥

**गो० टी०**— न विन्दत इति । तत्र अशोकवनिकायां दयितं प्राणवल्लभम् । ननु सीता लक्ष्म्या अवतार इति सिद्धम् । वक्ष्यति हि 'सीता लक्ष्मीर्भवान् विष्णुः' इति विष्णुपुराणे चोक्तम् । 'राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि' इति । एवंभूतां सीतां समरसीमनि जनितमूर्च्छालक्षणं लक्ष्मणमप्युद्धर्तुमसमर्थो रावणः कथं बलात्करोति स्म । वक्ष्यति हि । 'हिमवान् मन्दरो मेरुस्त्रैलोक्यं वा सहामरैः । शक्यं भुजाभ्यामुद्धर्तुं न संख्ये भरतानुजः ॥ इति उच्यते । वेदवती रूपपूर्वजन्मनि देवी तथा संकल्पितवती उक्तम् ह्युत्तरकाण्डे । 'यस्मात्तु धर्षिता चाहं त्वया पापात्मना वने । तस्मात्तव वधार्थं वै उत्पत्स्येऽहं महीतले ' इति । देवकार्यनिर्वाहाय स्वयमेव स्वधर्षणमङ्गीचकार प्रजायां कूपपतितायां यथा माता स्वयं तदुपरि पतति वात्सल्यातिशयेन तथा रावणबन्दीकृतदेवस्त्रीरक्षणाय स्वयं तत्र स्वगमनमनुमतवती । वक्ष्यति सुन्दरकाण्डे 'नापहर्तुमहं शक्या तस्य रामस्य धीमतः । विधिस्तव वधार्थाय विहितो नात्र संशयः' इति तर्हि सीता प्रलापादिकं किमर्थं कृतवतीति चेत् शृणु । पतिविरहे पतिव्रतयैवं वर्तितव्यमिति लोकहितप्रवर्तनाय प्रलापादिकमकरोदिति ॥ ३६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने षट्पञ्चाशः सर्गः ॥ ५६ ॥

---

१ ग्रस्तेति गो. रा. पाठः । २ दैवतमिति गो. पाठः ।

## सप्तपञ्चाशः सर्गः ।

मारीचहनने तेन कृतस्वस्वरानुकरणेनान्यैश्च दुर्निमित्तैः सीताविपदमाशङ्क्य त्वरया प्रत्यागच्छन्रामो मध्येमार्गं प्राप्तं लक्ष्मणं दृष्ट्वा सीतां विजने विमुच्य किमत्रागतोऽसीत्युपालभ्य दुररिष्टदर्शनात्सीताया राक्षसैर्हरणमाशङ्कते ।

**राक्षसं मृगरूपेण चरन्तं कामरूपिणम् । निहत्य रामो मारीचं तूर्णं पथि न्यवर्तत ॥ १ ॥**
**तस्य संत्वरमाणस्य द्रष्टुकामस्य मैथिलीम् । क्रूरस्वनोऽथ गोमायुर्विननादास्य पृष्ठतः ॥ २ ॥**
**स तस्य स्वरमाज्ञाय दारुणं रोमहर्षणम् । शङ्कयामास गोमायोः स्वरेण परिशङ्कितः ॥ ३ ॥**

अहं त्वां कार्यसिद्ध्यर्थं राघवस्य महात्मनः । साहाय्यं कल्पयिष्यामि मा शुचो जनकात्मजे ॥ १२
मत्प्रसादात्समुद्रं स तरिष्यति बलैः सह । मयैवेह च राक्षस्यो मायया मोहिताः शुभे ॥ १३
तस्मादन्नमिदं सीते हविष्यान्नमहं स्वयम् । स त्वां संगृह्य वैदेहि आगतः सह निद्रया ॥ १४
एतदत्स्यसि मद्धस्तान्न त्वां बाधिष्यते शुभे । क्षुधा तृषा च रम्भोरु वर्षाणामयुतैरपि ॥ १५
एवमुक्ता तु देवेन्द्रमुवाच परिशङ्किता । कथं जानामि देवेन्द्रं त्वामिहस्थं शचीपतिम् ॥ १६
देवलिङ्गानि दृष्टानि रामलक्ष्मणसंनिधौ । तानि दर्शय देवेन्द्र यदि त्वं देवराट् स्वयम् ॥ १७
सीताया वचनं श्रुत्वा तथा चक्रे शचीपतिः । पृथिवीं नास्पृशत्पद्भ्यामनिमेषेक्षणानि च ॥ १८
अरजोऽम्बरधारी च नम्लानकुसुमस्तथा । तं ज्ञात्वा लक्षणैः सीता वासवं परिहर्षिता ॥ १९
उवाच वाक्यं रुदती भगवद्राघवं प्रति । सह भ्रात्रा महाबाहुर्दिष्ट्या मे श्रुतिमागतः ॥ २०
यथा मे श्वशुरो राजा यथा च मिथिलाधिपः । तथा त्वामद्य पश्यामि सनाथो मे पतिस्त्वया ॥ २१
तवाज्ञया च देवेन्द्र पयोभूतमिदं हविः । अशिष्यामि त्वया दत्तं रघूणां कुलवर्धनम् ॥ २२
इन्द्रहस्ताद्गृहीत्वा तत्पायसं सा शुचिस्मिता । न्यवेदयत भर्त्रे सा लक्ष्मणाय च मैथिली ॥ २३
यदि जीवति मे भर्ता सह भ्रात्रा महाबलः । इदमस्तु तयोर्भक्त्या तदाश्नात्पायसं स्वयम् ॥ २४
इतीव तत्प्राश्य हविर्वरानना जहौ क्षुधादुःखसमुद्भवं च तम् ।
इन्द्रात्प्रवृत्तिमुपलभ्य जानकी काकुत्स्थयोः प्रीतमना बभूव ॥ २५
स चापि शक्रस्त्रिदिवालयं तदा प्रीतो ययौ राघवकार्यसिद्धये ।
आमन्त्र्य सीतां स ततो महात्मा जगाम निद्रासहितः स्वमालयम् ॥ २६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे प्राक्षिप्तः सर्गः ।

---

१ ] ति० टी०—अथ कवी रामवृत्तान्तमाह—राक्षसमिति ॥ १ ॥

रा० टी०—सीताहरणप्रसङ्गं समाप्य मारीचवधोद्देश्यकगमनकर्तृरामवृत्तान्तमाह—राक्षसमित्यादिभिः । कामरूपिणम् अत एव मृगरूपेण चरन्तं मारीचं पथि निहत्य रामः तूर्णं निवर्तत न्यवर्तत ॥ १ ॥

गो० टी०—एवमियता ग्रन्थसंदर्भेण सीताहरणवृत्तान्तमुपवर्ण्य अथ रामस्य मृगानुसरणकथाशेषं दर्शयितुमारभते—राक्षसमित्यादि । निवर्तते न्यवर्तत ॥ १ ॥

२–३ ] ति० टी०—यदा पथि निवृत्तस्तदा तस्य मैथिलीं द्रष्टुकामस्य तां द्रष्टुं संत्वरमाणस्य तस्यैव स्थितस्य पृष्ठतो गोमायुः शिवा ननादेत्यन्वयः ॥ २ ॥ ३ ॥

रा० टी०—तस्येति । मैथिलीं द्रष्टुकामस्य अत एव संत्वरमाणस्य तस्य प्रसिद्धस्य अस्य रामस्य पृष्ठतः पश्चाद्देशे क्रूरस्वनो गोमायुः शृगालः विननाद ॥ २ ॥

गो० टी०—तस्येति । द्रष्टुकामस्य तदर्थं त्वरमाणस्येति संबन्धः । गोमायुः क्रोष्टा एकस्य गोमायोः पृष्ठतः क्रूरस्वरकरणं दुर्निमित्तमिति भावः ॥ २ ॥

रा० टी०—स इति । तस्य गोमायोः रोमहर्षणं स्वरं दारुणकर्मसूचकम् आज्ञाय निश्चित्य स्वरेण स्वशब्दानुकारकमारीचस्वनेन परिशङ्कितः स रामश्चिन्तयामास ॥ ३ ॥

गो० टी०—स तस्येति । भयंकरत्वेन रोमहर्षणमित्युच्यते । पूर्वमेव मारीचस्वरेण परिशङ्कितः सञ्जातशङ्कः स रामः तस्य गोमायोः स्वरम् आज्ञाय श्रुत्वा चिन्तयामास ॥ ३ ॥

---

१ निवर्तत इति गो. रा. पाठः । २ चिन्तयेति गो. रा. पाठः ।

अशुभं बत मन्येऽहं गोमायुर्वाश्यते यथा । स्वस्ति स्यादपि वैदेह्या राक्षसैर्भक्षणं विना ॥ ४ ॥
मारीचेन तु विज्ञाय स्वरमालक्ष्य मामकम् । विक्रुष्टं मृगरूपेण लक्ष्मणः शृणुयाद्यदि ॥ ५ ॥
स सौमित्रिः स्वरं श्रुत्वा तां च हित्वाथ मैथिलीम् । तयैव प्रहितः क्षिप्रं मत्सकाशमिहैष्यति ॥ ६ ॥
राक्षसैः सहितैर्नूनं सीताया ईप्सितो वधः । काञ्चनश्च मृगो भूत्वा व्यपनीयाश्रमात्तु माम् ॥ ७ ॥
दूरं नीत्वाऽथ मारीचो राक्षसोऽभूच्छराहतः । हा लक्ष्मण हतोऽस्मीति यद्वाक्यं व्याजहार ह ॥ ८ ॥
अपि स्वस्ति भवेद्द्वाभ्यां रहिताभ्यां मया वने । जनस्थाननिमित्तं हि कृतवैरोऽस्मि राक्षसैः ॥ ९ ॥
निमित्तानि च घोराणि दृश्यन्तेऽद्य बहूनि च । इत्येवं चिन्तयन्रामः श्रुत्वा गोमायुनिःस्वनम् ॥ १० ॥

---

४ ] ति० टी०—यथा भाव्यशुभं तथा वाशत इत्यर्थः । वैदेह्याः वैदेह्यै राक्षसैर्भक्षणं विना तत्कर्तृकभक्षणाभावरूपं स्वस्ति स्यादित्यर्थः । अपिः कामप्रवेदने ॥ ४ ॥

रा० टी०—चिन्ताकारमाह—अशुभमिति । यतः गोमायुर्वाशते शब्दायति अतः राक्षसैर्भक्षणं विना राक्षसकर्तृकभक्षणातिरिक्तम् अशुभं यथा यथावत् मन्ये वैदेह्या वैदेह्यै अपि स्वस्ति स्यात् एतदशुभानन्तरं शुभं भवेत् । संभावनार्थकोऽपिः ॥ ४ ॥

गो० टी०—चिन्तामेवाह—अशुभमित्यादिना । गोमायुः यथा येन प्रकारेण वाश्यते शब्दायते तेन प्रकारेणाशुभं मन्ये । अपिः संभावनायाम् ॥ ४ ॥

५–६ ] ति० टी०—मारीचेन मामकं स्वरं विज्ञाय मामकस्वरध्वनिं ज्ञात्वाऽऽलक्ष्य मदपकारोपायमवधार्य यन्मृगरूपेण तेनाकृष्टं हा सीते लक्ष्मणेति च, तद्यदि लक्ष्मणः शृणुयात्तदा तं स्वरं श्रुत्वा मदीयस्वरत्वेन ज्ञात्वा मैथिल्यैव प्रहितस्तां हित्वैष्यति ॥ ५ ॥ ६ ॥

रा० टी०—नतु लक्ष्मणस्य तत्र सत्त्वात् कथं सीताया अशुभशङ्केत्यत आह—मारीचेनेति । मृगरूपेण मारीचेन आलक्ष्य सीताया अशुभसंपादकं यत्नं चिन्तयित्वा विज्ञाय निश्चित्य च यदि मामकं मत्स्वरसदृशं स्वरं विक्रुष्टम् उच्चारितं तर्हि लक्ष्मणः शृणुयात् ॥ ५ ॥

रा० टी०—ननु किं श्रवणेनेत्यत आह—स इति । सौमित्रिः स लक्ष्मणः स्वरं मत्स्वरसदृशस्वनं श्रुत्वा तया मैथिल्या प्रहितः प्रेरितः अत एव तां रक्षणीयां मैथिलीं हित्वा क्षिप्रं शीघ्रम् इहास्मिन् समये मत्सकाशं मत्समीपमेष्यति ॥ ६ ॥

गो० टी०—मारीचेनेत्यादि । श्लोकद्वयमेकान्वयम् । मृगरूपेण मारीचेन मामकं मदीयं स्वरं विज्ञाय मामकं स्वरमालम्ब्य अनुसृत्य विक्रुष्टं हा सीते ! लक्ष्मणेत्याह्वानेनोद्घोषितं स्वरं लक्ष्मणः शृणुयाद्यदि तदा स सौमित्रिर्मामकं स्वरं श्रुत्वा तं स्वरं श्रुतवत्या तया सीतया च प्रेषितः सन् इह देशे मत्सकाशं मत्समीपम् एष्यति ॥ ५ ॥ ६ ॥

७–८ ] ति० टी०—सहितैरीप्सितः कर्तुमिष्टः । नूनं निश्चयेन । तत्रैवाऽनुकूलतर्कमाह—काञ्चन इत्यादि । यतः काञ्चनमृगो भूत्वा मां व्यपनीयाकृष्य दूरं नीत्वा राक्षसोऽभूत् । न तु चर्मप्रयोजनमृग एव स्थितः । इति वाक्यं व्याजहार च यत्तस्मात्तस्या वध ईप्सित इत्यन्वयः । काव्यलिङ्गालंकारः ॥ ७ ॥ ८ ॥

रा० टी०—ननु किं तदागमनेनेत्यत आह—राक्षसैरिति । सहितैः संघीभूतैः राक्षसैः सीताया वधः ईप्सितः नूनं निश्चितमेतत् अत एव राक्षसो मारीचः काञ्चनो मृगो भूत्वा आश्रमात् मां व्यपनीय प्रस्थाप्य दूरं नीत्वा शराहतः मद्बाणताडितोऽभूत् अथ अनन्तरं हा लक्ष्मण ! हा सीतेति यद्वाक्यं व्याजहार तेन वाक्येन मया रहिताभ्यां द्वाभ्यां सीतालक्ष्मणाभ्यां स्वस्ति भवेत् काक्वा नेत्यर्थः, हि यतः जनस्थाननिमित्तं जनस्थानस्थहतराक्षसार्थं राक्षसैः अशिष्टरक्षोगणैः कृतः वैरोऽहमस्मि अत एव अद्य बहूनि घोराणि उग्राणि निमित्तानि भविष्यदशुभसूचकघोरस्वनादीनि दृश्यन्ते अनुभूयन्ते । सार्धश्लोकत्रयमेकान्वयि ॥ ७–९ ॥

गो० टी०—राक्षसैरित्यादि । श्लोकद्वयमेकान्वयम् । यद्यस्मान्मारीचः काञ्चनः मृगो भूत्वा मामाश्रमाद्व्यपनीय दूरं नीत्वा मया हतः सन् राक्षसोऽभूत् लक्ष्मण ! हतोऽस्मीति वाक्यं व्याजहार च तस्मात्क्वचित्सहितैः राक्षसैः सीताया वध ईप्सितः नूनम् ॥ ७ ॥ ८ ॥

९ ] ति० टी०—अथ चिन्तां नाटयति—अपीति । स्वस्त्यभवने हेतुः—जनस्थानेति । जनस्थानं स्थानविशेषः । जनानां लोकानां राक्षसेभ्यो भयनिवृत्त्या इह स्थाननिमित्तं चेत्यर्थः ॥ ९ ॥

गो० टी०—अपीति । जनस्थाननिमित्तं जनस्थानवासनिमित्तेन । निमित्तकारणहेतूनां सर्वासामिष्टिः ॥ ९ ॥

१० ] ति० टी०—हेत्वन्तरमपि—निमित्तानीति ॥ १० ॥

रा० टी०—इतीति । एवं गोमायुनिःस्वनं श्रुत्वा इति स्वनं चिन्तयन् रामः त्वरितः त्वरया विशिष्टः निवर्तमानश्च सन् आश्रमं जगाम । अर्धद्वयमेकान्वयि ॥ १० ॥

गो० टी०—निमित्तानीत्यादि । श्लोकद्वयमेकान्वयम् । गोमायुनिःस्वनं श्रुत्वा मृगरूपेण रक्षसाऽऽत्मनः अपनय-

---

१ वाश्यत इति गो. पाठः । २ चेति गो. पाठः ।

निवर्तमानस्त्वरितो जगामाश्रममात्मवान् । आत्मनश्चापनयनं मृगरूपेण रक्षसा ॥ ११ ॥
आजगाम जनस्थानं राघवः परिशङ्कितः । तं दीनमानसं दीनमासेदुर्मृगपक्षिणः ॥ १२ ॥
सव्यं कृत्वा महात्मानं घोरांश्च ससृजुः स्वरान् । तानि दृष्ट्वा निमित्तानि महाघोराणि राघवः ॥ १३ ॥
[ न्यवर्तताथ त्वरितो जवेनाश्रममात्मनः । स तु सीतां वरारोहां लक्ष्मणं च महाबलम् ॥
आजगाम जनस्थानं चिन्तयन्नेव राघवः ॥]
ततो लक्ष्मणमायान्तं ददर्श विगतप्रभम् । ततो विदूरे रामेण समीयाय स लक्ष्मणः ॥ १४ ॥
विषण्णः संविषण्णेन दुःखितो दुःखभागिना । स जगर्हेऽथ तं भ्राता दृष्ट्वा लक्ष्मणमागतम् ॥ १५ ॥
विहाय सीतां विजने वने राक्षससेविते । गृहीत्वा च करं सव्यं लक्ष्मणं रघुनन्दनः ॥ १६ ॥
उवाच मधुरोदर्कमिदं परुषमार्तवत् । अहो लक्ष्मण गर्ह्यं ते कृतं यत्त्वं विहाय ताम् ॥ १७ ॥
सीतामिहागतः सौम्य कच्चित्स्वस्ति भवेदिति । न मेऽस्ति संशयो वीर सर्वथा जनकात्मजा ॥ १८ ॥

---

नात् आश्रमादपकर्षणाच्च परिशङ्कितः सन् जनस्थानमाजगाम ॥ १० ॥ ११ ॥

११ ] ति० टी०–मृगरूपेणात्मनोऽपनयनं दूरमाकर्षणं दृष्ट्वा परिशङ्कितो जनस्थानं खरादिवासभूतमाजगाम । अनेन ततोऽपि परतो मारीचव्यसनेन गत इति सूचितम् ॥ ११ ॥

रा० टी०–आत्मन इति । मृगरूपेण रक्षसा यस्मात् जनस्थानात् आत्मनोऽपनयनं दूरमपकर्षणं तज्जनस्थानं परिशङ्कितो राघवः आजगाम ॥ ११ ॥

१२ ] ति० टी०–दीनमानसम् । दीनमानसत्वं नाट्यति– दीनं शरीरेणापि म्लानम् । आसेदुर्विपरीतार्थसूचकत्वेन प्रापुः ॥ १२ ॥

रा० टी०–तमिति । दीनमानसम् अनुमितसीतादुःखेन खिन्नान्तःकरणम् अत एव दीनं कृशशरीरत्वेन प्रतीयमानं महात्मानं तं रामं सव्यं कृत्वा मृगपक्षिणः आसेदुः प्रापुः घोरान् स्वरांश्च ससृजुः चक्रुः ॥ १२ ॥

गो० टी०–तमिति । सव्यं कृत्वा अप्रदक्षिणं कृत्वा आसेदुः ॥ १२ ॥

१३ ] ति० टी०–तदेवाह—सव्यमप्रदक्षिणम् ॥ १३ ॥

रा० टी०–तानीति । राघवः तानि निमित्तानि दृष्ट्वा विगतप्रभमायान्तं ततः तं लक्ष्मणं ददर्श, द्वितीयान्तात्तसिः१३

गो० टी०–तानीति । त्वरितः मानसिकत्वरासहितः जवेन कायिकत्वरया ॥ १३ ॥

गो० टी०–स त्विति । सीतां लक्ष्मणं च चिन्तयन्नेवाजगाम । तत इत्यर्धमेकं वाक्यम् ॥ १४ ॥

१४ ] ति० टी०–अविदूरे समीपे समीयाय संगतोऽभूत् ॥ १४ ॥

रा० टी०–तत इति । ततो दर्शनानन्तरम् अविदूरे समीपे दुःखितः अत एव विषण्णः उदासीनचित्तः लक्ष्मणः सुविषण्णेन रामेण समीयाय संप्राप । अथ अनन्तरं भ्राता रामः विजने स्वजनरहिते वने सीतां विहायागतं लक्ष्मणं संजगर्हे । अर्धचतुष्टयमेकान्वयि ॥ १४ ॥ १६ ॥

गो० टी०–तत इति । ततो दर्शनानन्तरम् अविदूरे समीपे समीयाय संगतः । दुःखभागिनेत्यत्र संपृचादिसूत्रेण विनुण्प्रत्ययः ॥ १६ ॥

१५-१६ ] ति० टी०–समगुणकः सम्मिलित्वा स रामो लक्ष्मणस्य भ्राता सीतां विहायागतं लक्ष्मणं दृष्ट्वा लक्ष्मणं षष्ठ्यर्थे द्वितीया । लक्ष्मणस्य सव्यं करं गृहीत्वा जगर्हे ॥ १५ ॥ १६ ॥

रा० टी०–गर्हणप्रकारमाह–गृहीत्वेति । रघुनन्दनो रामः सव्यं वामं करं हस्तं गृहीत्वा मधुरोदर्कं माधुर्यवर्धकं परुषमिदं वचनमार्तवद्दुःखी इव लक्ष्मणमुवाच ॥ १६ ॥

गो० टी०–संजगर्ह इति । विजने स्वजनरहिते ॥ १६ ॥

गो० टी०–गृहीत्वेति । सव्यं करं गृहीत्वा लक्ष्मणमुवाच कथं परुषमथ मधुरोदर्कं मधुरोत्तरम्, आर्तिमत् आर्तियुक्तम्, सर्वमिदं क्रियाविशेषणम् । अहो इत्यादि परुषं, लक्ष्मणेत्यादिमधुरम् ॥ १७ ॥

१७ ] ति० टी०–गर्हणामाह—उवाचेति । मधुरोदर्कं शब्दतो माधुर्योत्तरम्, अर्थतः परुषमिदं वक्ष्यमाणमार्तवदार्तोऽहमुवाच । यद्वा मधुरोदर्कं तात्पर्यतो मधुरमापाततः परुषम् । ते कृतं त्वया कृतम् ॥ १७ ॥

रा० टी०–तद्वचनाकारमाह–अहो इति । हे लक्ष्मण ! तां रक्षणीयां सीतां विहाय त्वमिहागतः तत्ते कृतं गर्ह्यं श्रोतृभिर्निन्द्यम् । तत्र हेतुः–हे सौम्य ! इह त्वया रहितसमये स्वस्ति सीताकल्याणं कच्चिद्भवेदित्यर्थः ॥ १७ ॥

गो० टी०–अहो इति । ते त्वया इत्युवाचेत्यन्वयः ॥१८॥

१८ ] ति० टी०–कच्चित्स्वस्ति भवेत् कल्याणं संभाव्यत इत्यर्थः ॥ १८ ॥

---

१ अर्धमेतत् गो. नास्ति । २ नयनादिति गो. पाठः । ३ मनस इति गो. पाठः । ४ अर्धत्रयमेतदधिकम् गो. पाठे । ५ स्विति गो. रा. पाठः । ६ समिति गो. रा. पाठः । ७ ज्येष्ठ इति गो. पाठः । ८ आर्तिमदिति गो. पाठः । ९ यस्त्वमिति गो. पाठः । १० इहेति गो. पाठः ।

विनष्टा भक्षिता वापि राक्षसैर्वनचारिभिः । अशुभान्येव भूयिष्ठं यथा प्रादुर्भवन्ति मे ॥ १९ ॥
अपि लक्ष्मण सीतायाः सामग्र्यं प्राप्नुयामहे । जीवन्त्याः पुरुषव्याघ्र सुताया जनकस्य वै ॥ २० ॥
यथा वै मृगसंघाश्च गोमायुश्चैव भैरवम् । वाशन्ते शकुनाश्चापि प्रदीप्तामभितो दिशम् ॥
अपि स्वस्ति भवेत्तस्या राजपुत्र्या महाबल ॥ ॥ २१ ॥

इदं हि रक्षो मृगसंनिकाशं प्रलोभ्य मां दूरमनुप्रयातम् ।
हतं कथंचिन्महता श्रमेण स राक्षसोऽभून्म्रियमाण एव ॥ ॥ २२ ॥
मनश्च मे दीनमिहाप्रहृष्टं चक्षुश्च सव्यं कुरुते विकारम् ।
असंशयं लक्ष्मण नास्ति सीता हृता मृता वा पथि वर्तते वा ॥ ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे सप्तपञ्चाशः सर्गः ॥ ५७ ॥

---

रा० टी०–नेति । राक्षसैर्जनकात्मजा विनष्टा अदर्शनं प्रापिता अपहृतेत्यर्थः, भक्षिता वा संशयः अन्यतरत्र संदेहो न । तत्र हेतुः–हे वीर ! भूयिष्ठमधिकं यथा भवति तथा मे मदर्थमशुभानि प्रादुर्भवन्ति ॥ १८ ॥ १९ ॥

गो० टी०–नेति । केनापि हेतुना विनष्टा वा ॥ १९ ॥

१९ ] ति० टी०–विनष्टाऽपहृता । यथा प्रादुर्भवन्ति । विनष्टेत्यादि निश्चितम् ॥ १९ ॥

गो० टी०–राक्षसैर्भक्षिता वा । उक्तार्थे हेतुमाह–अशुभानीत्यर्धेन । भूयिष्ठं बहुलं यथा तथा ॥ २० ॥

२० ] ति० टी०–अथापि । वा प्रश्ने । सामग्र्यं क्षेममनपहरणरूपम् ॥ २० ॥

रा० टी०–अपीति । हे पुरुषव्याघ्र ! जीवन्त्याः जनकस्य सुतायाः सीतायाः सामग्र्यम् अविच्छिन्नावयवत्वं प्राप्नुयामहे अपि । अपिः संभावनार्थकः ॥ २० ॥

गो० टी०–अपीति । अपिः प्रश्ने । सामग्र्यम् अक्षतत्वं क्षेममिति यावत् । हे लक्ष्मणेति संबन्धः । सामग्र्यप्राप्तिसंशये कारणमाह–यथेति । प्रदीप्तां दिशं सूर्याधिष्ठिता तत्पार्श्वद्वयदिशौ च प्रदीप्ता तामभिमुखं वाशयन्ते नदन्ति । तेन वायसादिपक्षिणां श्वगालादीनां कृष्णसारादिमृगाणां च सूर्याधिष्ठितदिशि कूजनं दुःखसूचकमित्युक्तम् । चिन्तातिशयेन पुनरप्याह–अपि स्वस्तीति । अर्धमेकान्वयम् ॥ २१ ॥ २२ ॥

२१ ] ति० टी०–वाशन्ते नदन्ति । प्रदीप्ता सूर्याधिष्ठिता ॥ २१ ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–यथेति । मृगसंघाः गोमायुश्च शकुनाः पक्षिणश्च काकादय इत्यर्थः, प्रदीप्तां सूर्याक्रान्तत्वेन प्रकाशितां दिशं सूर्याभिमुखमित्यर्थः, अभितः चतुर्दिक्षु भैरवं वाशन्ते अतः तस्याः सीतायाः स्वस्त्यपि भवेत् ॥ २१ ॥

२२ ] ति० टी०–मृगसंनिकाशं मृगवत्प्रतिभासमानम् । म्रियमाण एव न ततः पूर्वमित्यर्थः ॥ २२ ॥

रा० टी०–इदमिति । मृगसन्निकाशं मृगाकृति कथंचित् मां प्रलोभ्य दूरमनुप्रयातम् अत एव महता श्रमेण उपलक्षितम् इदं रक्षः हतं म्रियमाणः स राक्षस एव अभूत् सर्वनाम्नामुद्देश्यविधेयान्यतरलिङ्गतेति न लिङ्गविरोधः ॥ २२ ॥

गो० टी०–लक्ष्मणाय दर्शयति–इदमिति । मृगसन्निकाशं पूर्वं मृगवद्भातम् । इदं रक्षः महता श्रमेण उपलक्षितं मां प्रलोभ्य कथंचिद्धतम् । कथंचिदित्यनेन चिरं लक्ष्यवधाप्राप्तिर्द्योत्यते । मृगत्वं कुतो गतमित्यत्राह–स इति । सः म्रियमाणः सन् राक्षस एवाभूदित्यर्थः ॥ २३ ॥

२३ ] ति० टी०–सव्यं वामम् । वास्तवमर्थमाह–पथि वर्तते वा ह्रियमाणा वर्तते वेत्यर्थः । इदं वस्तुतत्त्वमुक्तम् ॥ २३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे सप्तपञ्चाशः सर्गः ॥ ५७ ॥

रा० टी०–सीतापहरणे कारणान्तरमाह–मन इति । हे लक्ष्मण ! इह अस्मिन्समये मे सव्यं वामचक्षुः विकारं स्फुरणं कुरुते अत एव मे मनो दीनम् अत एव अप्रहृष्टं प्रहर्षाभाववत् अत एव सीता नास्ति अभावप्रतियोगिनी । ननु नित्यायाः कथमभावप्रतियोगिनीत्वमित्यत आह–अमृता नित्यापि सीता असंशयं यथा भवति तथा हृता सती पथ्येव वर्तते । एको वाशब्दोऽप्यर्थे द्वितीय एवार्थे ॥ २३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावरण्यकाण्डे सप्तपञ्चाशत्तमः सर्गः ॥ ५७ ॥

गो० टी०–निमित्तान्तरेणापि सीताहानिमनुमिनोति–मनश्चेति । इह सीतावियोगविषये अप्रहृष्टं विकारं स्फुरणं नास्तीति । आश्रम इति शेषः ॥ २४

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने सप्तपञ्चाशः सर्गः ॥ ५७ ॥

---

१ वहे इति गो. पाठः । २ वाश्यन्त इति गो. पाठः । ३ प्रयान्तमिति गो. पाठः ।

## अष्टपञ्चाशः सर्गः ।

अनुशोचन्रामः सीतागुणाननुवर्ण्य तस्या वियोगे स्वजीवितस्य दुर्वहत्वं प्रकटयति । मारीचाक्रोशमाकर्ण्य मदापच्छङ्कया वैदेह्यायं प्रेषितः स्यादतः स्ववधप्रतिचिकीर्षुभिर्निट्चरैर्हताऽपि स्याद्वैदेहीत्याशङ्कते ।

**स दृष्ट्वा लक्ष्मणं दीनं शून्यं दशरथात्मजः । पर्यपृच्छत धर्मात्मा वैदेहीमागतं विना ॥ १ ॥**
**प्रस्थितं दण्डकारण्यं या मामनुजगाम ह । क्व सा लक्ष्मण वैदेही यां हित्वा त्वमिहागतः ॥ २ ॥**
**राज्यभ्रष्टस्य दीनस्य दण्डकान्परिधावतः । क्व सा दुःखसहाया मे वैदेही तनुमध्यमा ॥ ३ ॥**
**यां विना नोत्सहे वीर मुहूर्तमपि जीवितुम् । क्व सा प्राणसहाया मे [2]सीता सुरसुतोपमा ॥ ४ ॥**
**पतित्वममराणां [3]हि पृथिव्याश्चापि लक्ष्मण । विना तां तपनीयाभां नेच्छेयं जनकात्मजाम् ॥ ५ ॥**
**कच्चिज्जीवति वैदेही प्राणैः प्रियतरा मम । कच्चित्प्रव्राजनं [4]वीर न मे मिथ्या भविष्यति ॥ ६ ॥**
**सीतानिमित्तं सौमित्रे मृते मयि गते त्वयि । कच्चित्सकामा कैकेयी सुखिता सा भविष्यति ॥ ७ ॥**

---

१-३ ] ति० टी०-पुनस्तदेव विस्तरेणाह-स इति । शून्यं संतोषादिहीनचित्तम् । वैदेहीं विना गतं तां त्यक्त्वा गतम् ॥ १-३ ॥

रा० टी०-लक्ष्मणसमीपे रामसंभावनामुक्त्वा रामकर्तृकं प्रश्नमाह-स इत्यादिभिः । स रामः वैदेहीं विना आगतम् अत एव दीनमत एव शून्यं चित्तप्रसादरहितं लक्ष्मणं दृष्ट्वा पर्यपृच्छत ॥ १ ॥

गो० टी०-अथ सीताप्राप्तिसंदेहकृतशोकप्रलापोऽष्टपञ्चाशे—स दृष्ट्वेत्यादि । शून्ये वने वैदेहीं विना आगतं वैदेहीं विसृज्यागतं लक्ष्मणं पर्यपृच्छत पर्यपृच्छत् ॥ १ ॥

रा० टी०-तत्प्रश्नाकारमाह-प्रस्थितमित्यादिभिः । दण्डकारण्यं प्रस्थितं मां या अनुजगाम यां च हित्वा त्वमिहागतः सा वैदेही क्वास्ति ॥ २ ॥

गो० टी०-प्रश्नस्वरूपमाह-प्रस्थितमित्यादिना । दण्डकारण्यं प्रति प्रस्थितम् ॥ २ ॥

रा० टी०-तदेव भङ्ग्यन्तरेणाह-राज्येति । राज्यभ्रष्टस्य मे दुःखसहाया दुःखे सहायः साहाय्यं यस्याः सा सा प्रिया वैदेही क्व ॥ ३ ॥

गो० टी०-राज्येति । दुःखसहाया समानदुःखेत्यर्थः ॥ ३ ॥

४ ] ति० टी०-प्राणसहाया । तां विनाऽसहायाः प्राणाः कथं स्थास्यन्तीति भावः ॥ ४ ॥

रा० टी०-यामिति । हे वीर ! यां विना मुहूर्तमपि जीवितुं नोत्सहे सा सुरसुतोपमा इन्द्रकन्यासादृश्यप्रतियोगिनी सीता क्व ॥ ४ ॥

गो० टी०-यामिति । सुरसुता सुरस्त्री ॥ ४ ॥

५ ] ति० टी०-अमराणां पतित्वमिन्द्रत्वम् ॥ ५ ॥

रा० टी०-पतित्वमिति । तपनीयाभां प्रतप्तसुवर्णनिभां पृथिव्याः प्रादुर्भूतां तां सीतां विना अमराणां न मरः कदाचिन्मरणं येषां ते ब्रह्मविष्णुमहेश्वराः तेषां पतित्वं नेच्छेयम् इच्छामि 'तपनीयं शातकुम्भम्' इत्यमरः ॥ ५ ॥

गो० टी०-पतित्वमिति । तपनीयं स्वर्णम् इच्छेयम् इच्छामि ॥ ५ ॥

६ ] ति० टी०-मे प्रव्राजनं चतुर्दश समा वनप्रव्राजनव्रतधारणं तु सीताजीवने मम जीवनान्न मिथ्या भविष्यति । तदभावे मध्ये एव मम मरणे तद्धानिरिति भावः ॥ ६ ॥

रा० टी०-कच्चिदिति । मम प्राणैः प्रियतरा वैदेही कच्चिज्जीवति मे प्रव्राजनं प्रव्राजनसंबन्धि व्रतं नगरप्रवेशाभावादि मिथ्या असत्यं कच्चिन्न भविष्यति एतेन यदि नगरमध्ये एव सीतापहृत्य संस्थापिता तर्हि तदानयनं नगरप्रवेशमन्तरा कथं संभवेदिति रामविचारः सूचितः तेन अपहृतापि नगराद्बहिः संस्थापिता चेच्छोभनमिति तदभिप्रायो व्यञ्जितः ॥ ६ ॥

गो० टी०-कच्चिदिति । प्राणैः प्राणेभ्यः प्रव्राजनं चतुर्दशवर्षवनवासः मिथ्या असत्यं न भविष्यतीति कच्चित् । चतुर्दशवर्षसमाप्तावेव सीतावियोगजं जीववियोगं किं प्राप्स्यामीत्यर्थः ॥ ६ ॥

७ ] ति० टी०-सीतानिमित्तं तद्विनाशनिमित्तम् । मयि मृते त्वयि चैकाकिन्ययोध्यां गते इत्यर्थः । सकामा पूर्णमनोरथा ॥ ७ ॥

रा० टी०-सीतेति । हे सौमित्रे ! सीतानिमित्तं मयि त्वयि च मृते राक्षसमृतत्वे गते प्रापिते सति सकामा राक्षसवधविषयकेच्छावती कैकेयी सुखिता कच्चिद्भविष्यति ॥ ७ ॥

गो० टी०-सीतेति । सीतानिमित्तं सीताविनाशनिमित्तं त्वयि गते अयोध्यामिति शेषः । सकामेत्यनेन रामस्य हृदये कैकेयी स्वविनाशार्थमेव वनं प्रेषितवतीति सदा वर्तते तदिदानीं 'सुप्तप्रमत्तकुपितानां भावज्ञानं दृष्टम्' इति न्यायेन व्यक्तीकृतम् ॥ ७ ॥

---

१ शून्ये इति गो० पाठः । २ वैदेही तनुमध्यमेति रा० पाठः । ३ वेति गो० पाठः । ४ सौम्येति गो० पाठः ।

सपुत्रराज्यां सिद्धार्थां मृतपुत्रा तपस्विनी । उपस्थास्यति कौसल्या कच्चित्सौम्येन कैकयीम्॥ ८ ॥
यदि जीवति वैदेही गमिष्याम्याश्रमं पुनः । संवृत्ता यदि वृत्ता सा प्राणांस्त्यक्ष्यामि लक्ष्मण॥ ९ ॥
यदि मामाश्रमगतं वैदेही नाभिभाषते । पुरः प्रहसिता सीता विनशिष्यामि लक्ष्मण ॥ १० ॥
ब्रूहि लक्ष्मण वैदेही यदि जीवति वा न वा । त्वयि प्रमत्ते रक्षोभिर्भक्षिता वा तपस्विनी ॥ ११ ॥
सुकुमारी च बाला च नित्यं चादुःखभागिनी । मद्वियोगेन वैदेही व्यक्तं शोचति दुर्मनाः ॥ १२ ॥
सर्वथा रक्षसा तेन जिह्मेन सुदुरात्मना । वदता लक्ष्मणेत्युच्चैस्तवापि जनितं भयम् ॥ १३ ॥
श्रुतश्च मन्ये वैदेह्या स स्वरः सदृशो मम । त्रस्तया प्रेषितस्त्वं च द्रष्टुं मां शीघ्रमागतः ॥ १४ ॥
सर्वथा तु कृतं कष्टं सीतामुत्सृजता वने । प्रतिकर्तुं नृशंसानां रक्षसां दत्तमन्तरम् ॥ १५ ॥
दुःखिताः खरघातेन राक्षसाः पिशितशनाः । तैः सीता निहता घोरैर्भविष्यति न संशयः ॥ १६ ॥

---

८ ] ति० टी०–सौम्येन विनयेन ॥ ८ ॥

रा० टी०–सेति । सपुत्रराज्यां मद्विषयकातिप्रीतिपुत्रशोभासहितां सिद्धार्थां सिद्धोऽर्थो राक्षसवधरूपं प्रयोजनं यस्याः तां केकयीं मृतः राक्षसघातकः पुत्रो यस्याः सा कौसल्या कच्चिदुपस्थास्यति प्रशंसिष्यति ॥ ८ ॥

गो० टी०–सपुत्रेति । तपस्विनी शोच्या ॥ ८ ॥

९ ] ति० टी०–संवृत्ता सद्वृत्ता यदि वृत्ता मृतेत्यर्थः ॥ ९ ॥

रा० टी०–यदीति । सुवृत्ता वैदेही यदि जीवति मया लोकान् पालयिष्यति यथापूर्वं तत्रैव स्थिता भविष्यतीत्यर्थः, तदा आश्रमं गमिष्यामि यदि च वृत्तासा वृत्तः प्रवृत्तः आसः केनचिन्निमित्तेन अपुनरागमनाय गमनं यस्याः सा तदा प्राणान् पालनं त्यक्ष्यामि अहमपि तत्रैव गमिष्यामीत्यर्थः ॥ ९ ॥

गो० टी०–यदीति । वृत्ता परेता सुवृत्ता स्वाचारा ॥९॥

१० ] ति० टी०–प्रहसिता प्रहसितमुखी ॥ १० ॥

रा० टी०–यदीति । आश्रमगतं मां प्रहसिता वैदेही यदि पुनर्नाभिभाषते अभिभाषिष्यते राक्षसकृतपीडाजनितमूर्च्छादिना यदि किंचिन्न वक्ष्यतीत्यर्थः, तर्हि विनशिष्यामि राक्षसान् विनाशयिष्यामि ॥ १० ॥

गो० टी०–यदि मामिति । प्रहसिता प्रहसितमुखी ॥ १० ॥

११-१२ ] ति० टी०–प्रमत्तेऽनुचितकारिणि ॥११॥१२॥

रा० टी०–ब्रूहीति । हे लक्ष्मण ! त्वयि प्रमत्ते सति रक्षोभिर्भक्षिता सती वैदेही न जीवति वा जीवति वा इति त्वं ब्रूहि एको वाशब्द इत्यर्थकः ॥ ११ ॥

गो० टी०–ब्रूहीति । यदि जीवति तदा ब्रूहि वद वैदेही जीवति वा न वा । न वेत्यस्य विवरणं त्वयीति । प्रमत्ते अनवहिते ॥ ११ ॥

रा० टी०–सुकुमारीति । नित्यमदुःखदर्शिनी दुःखं पश्यति तच्छीला नित्यं तद्भिन्ना वैदेही मद्वियोगेन दुर्मनाः सती शोचति व्यक्तं स्फुटमेतत् ॥ १२ ॥

गो० टी०–सुकुमारीति । दुःखं पश्यतीति दुःखदर्शिनी सा न भवतीत्यदुःखदर्शिनी शोचति अशोचत् । वनवास इति शेषः । दुर्मनाः चिन्ताकुलेति यावत् ॥ १२ ॥

१३ ] ति० टी०–तवापि ज्ञातमद्बलवीर्यादिमतोऽपि॥१३॥

रा० टी०–लक्ष्मणागमने स्वकृतनिश्चयमाह–सर्वथेति । जिह्मेन कपटेन सुदुरात्मना दुर्ज्ञेयप्रयत्नवता अत एव लक्ष्मणेत्युच्चैर्वदता तेन मारीचेन तवापि भयं मत्कर्मकराक्षसबाधाहेतुकभीतिर्जनितमुत्पादितम् ॥ १३ ॥

गो० टी०–सर्वथेति । जिह्मेन कपटेन तवापि अतिशूरस्यापि ॥ १३ ॥

१४ ] ति० टी०–मम सदृशो मम स्वरेण सदृशः । यस्मात्त्वमत्रागतस्तस्मात्स स्वरस्तया श्रुत इति शङ्के ॥ १४ ॥

रा० टी०–श्रुत इति । मम सदृशः मत्स्वरसमानः सः मारीचोच्चारितः स्वरः वैदेह्या श्रुतः अत एव त्रस्तया वैदेह्या प्रेषितस्त्वं मां द्रष्टुं शीघ्रमागतः इत्यहं मन्ये ॥ १४ ॥

गो० टी०–श्रुतस्त्विति । मम स्वरेण यस्मादागतः तस्मात् सः स्वरो वैदेह्या श्रुतः त्रस्तया तया त्वं प्रेषितश्चेति शङ्क इति योजना ॥ १४ ॥

१५-१६ ] ति० टी०–प्रतिकर्तुं मत्कृतापकारस्य प्रत्युपकारं कर्तुम् । तदपेक्षाणां रक्षसामन्तरमवकाशो दत्तः ॥ १५ ॥ १६ ॥

रा० टी०–सर्वथेति । वने सीतामुत्सृजता त्यजता त्वया सर्वथा कष्टं दुःखं कृतं संपादितम् । दुःखाकारमाह–नृशंसानां क्रूराणां रक्षसां प्रतिकर्तुं स्वजनवधप्रतिक्रियां संपादयितुमन्तरमवकाशो दत्तम् ॥ १५ ॥

गो० टी०–सर्वथेति । कष्टमेवाह–प्रतीति । प्रतिकर्तुं मत्कृतापकारस्य प्रत्यपकारं कर्तुम् अन्तरम् अवकाशो दत्तः ॥ १५ ॥

रा० टी०–नन्ववकाशदानेन किमित्यत आह–दुःखिता इति । खरघातेन ये राक्षसाः दुःखितास्तैः राक्षसैः सीता निहता दुर्वचनादिना ताडिता भविष्यति संशयः अत्र संदेहो न ॥ १६ ॥

---

१ सौम्य न केकयीमिति गो. केकयीमिति रा. पाठः । २ सुवृत्तेति गो. रा. पाठः । ३ दर्शिनीति गो. रा. पाठः । ४ तु शङ्क इति गो. पाठः ।

अहोऽस्मि व्यसने मग्नः सर्वथा रिपुनाशन । किं त्विदानीं करिष्यामि शङ्के प्राप्तव्यमीदृशम् ॥ १७ ॥
इति सीतां वरारोहां चिन्तयन्नेव राघवः । आजगाम जनस्थानं त्वरया सहलक्ष्मणः ॥ १८ ॥
विगर्हमाणोऽनुजमार्तरूपं क्षुधाश्रमेणैव पिपासया च ।
विनिःश्वसञ्शुष्कमुखो विषण्णः प्रतिश्रयं प्राप्य समीक्ष्य शून्यम् ॥ १९ ॥
स्वमाश्रमं सं प्रविगाह्य वीरो विहारदेशाननुसृत्य कांश्चित् ।
एतत्तदित्येव निवासभूमौ प्रहृष्टरोमा व्यथितो बभूव ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डेऽष्टपञ्चाशः सर्गः ॥ ५८ ॥

## एकोनषष्टितमः सर्गः ।

एकाकिनीं सीतां निर्जने विमुच्य किमिति संप्राप्तोऽसीति रामो लक्ष्मणं पृच्छति । स तु जातोक्तिप्रत्युक्तिमनूद्य मारीचाक्रोशश्रवणाद्विषीदन्तीं परुषानिर्वाच्यवादिनीं तां समाधातुमक्षमोऽहं निर्गत इत्युत्तरयति । धिक्कष्टमनुचितस्ते निर्गमः सौवर्णोऽसौ मायिक इति मारीचहतिवृत्तं प्रास्तौषीत् ।

अथाश्रमादुपावृत्तमन्तरा रघुनन्दनः । परिपप्रच्छ सौमित्रिं रामो दुःखार्दितं वचः ॥ १ ॥

गो० टी०–प्रतीकारमेवाह–दुःखिता इति । पिशिताशनत्वं निहनने हेतुः ॥ १६ ॥

१७ ] ति० टी०–किं त्विदानीं करिष्यामीति शङ्के । ईदृशं दुःखं प्राप्तव्यमवश्यमनुभवितव्यमिति शङ्के इति धैर्यावलम्बनम् । उत्प्रेक्षा ॥ १७ ॥

रा० टी०–अहो इति । ईदृशं प्राप्तव्यं व्यसनमहं शङ्के संभावयामि अत इदानीमहं किं करिष्यामि न किंचित्कर्तव्यं प्रतिभातीत्यर्थः । अतः व्यसने दुःखेऽहं सर्वथा मग्नोऽस्मि अहो सर्वेषां स्वजनानां दुःखमिदम् । ओदिति प्रकृतिभावाभावस्त्वार्षत्वात् ॥ १७ ॥

गो० टी०–अहोऽस्मिन्निति संधिरार्षः । ईदृशं व्यसनमज्जनं प्राप्तव्यमिति शङ्के ॥ १७ ॥

१८ ] ति० टी०–जनस्थानं तद्वर्तिस्वाश्रमम् ॥ १८ ॥

रा० टी०–इतीति । इत्यनेन प्रकारेण सीतां चिन्तयन्नेव राघवः जनस्थानमाजगाम ॥ १८ ॥

गो० टी०–इतीति । वरारोहामिति चिन्ताहेतुसौन्दर्यातिशयोक्तिः ॥ १८ ॥

१९ ] ति० टी०–विगर्हमाण इत्यादि वक्ष्यमाणसर्गार्थसंग्रहः । श्रमेण बहुदूरधावनजेन । 'श्रमाच्चैव' इति प्रायः पाठः । प्रतिश्रयमाश्रमसमीपदेशं शून्यं सीतया ॥ १९ ॥

२० ] ति० टी०–प्रतिश्रयं प्रेक्ष्यानन्तरं स्वाश्रमं प्रविगाह्य तमपि शून्यं वीक्ष्य ततः सीतायाः कांश्चिद्विहारदेशाननुसृत्य तेषु तां विचित्य तानपि शून्यान्निरीक्ष्य एतत्क्रीडाविशेषस्थानं तत्रत्यक्रीडाविशेषं च स्मृत्वा हृष्टरोमा शोकेन व्यथितश्च बभूव ॥ २० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डेऽष्टपञ्चाशः सर्गः ॥ ५८ ॥

रा० टी०–विगर्हमाण इति । आर्तरूपं सीतोक्त्या रामोक्त्या च प्राप्तातिदुःखवत्तया दुःखस्वरूपम् अनुजं लक्ष्मणं विगर्हमाणः क्षुदादिना शुष्कमुखः तत्त्वेन प्रतीयमानः विनिःश्वसन् रामः प्रतिश्रयम् आश्रमसमीपदेशं प्राप्य शून्यं सीतारहितं समीक्ष्य अत एव स्वमाश्रमं प्रविगाह्य अन्वीक्ष्य तत्रापि सीतामदृष्ट्वेत्यर्थः, कांश्चित्स्वैकज्ञातान् विहारदेशान् सीताविहारस्थलानि अनुसृत्य तानपि शून्यान् समीक्ष्य तत् सीताविहारस्थलम् एतदेवेत्युक्त्वेति शेषः, निवासभूमौ स्वनिवासस्थले प्रहृष्टरोमा उद्गतरोमावलिः सन् व्यथितो बभूव । श्लोकद्वयमेकान्वयि ॥ १९ ॥ २० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डेऽष्टपञ्चाशः सर्गः ॥ ५८ ॥

गो० टी०–विगर्हमाण इत्यादि । श्लोकद्वयमेकान्वयम् । वक्ष्यमाणानेकसर्गार्थसंग्रहरूपम् । श्रमात् बहुदूरधावनात् प्रतिश्रयं स्वाश्रमप्रदेशं शून्यं सीतारहितं प्रतिश्रयमित्यनुषज्यते । अनन्तरं स्वाश्रमं संप्रविगाह्य प्रविश्य तमपि शून्यं समीक्ष्येति शेषः । तदनु सीतायाः कांश्चिद्विहारदेशाननुसृत्य विचित्य तानपि शून्यान् समीक्ष्य तत्रत्यनिवासभूमौ क्रीडास्थाने तदेतदिति तादृशमेतादृशमिति विहारविशेषं स्मृत्वा प्रहृष्टरोमा सन् शोकेन व्यथितो बभूव ॥ १९ ॥ २० ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्यानेऽष्टपञ्चाशः सर्गः ॥५८॥

१ ] ति० टी०–अथ विस्तरेण मार्गमध्यकृतां कथामाह—अथेति । उपावृत्तं सीतावचनात्स्वसमीपं प्राप्तम् । अन्तरा मध्येमार्गम् ॥ १ ॥

१ ऽस्मिन्निति गो० पाठः । २ शत्रुसूदनेति गो० पाठः । ३ न्विति गो० पाठः । ४ श्रमादिति गो० पाठः । ५ विवर्णं इति गो० पाठः । ६ समिति गो० पाठः । ७ दुःखार्दितं पुनरिति गो० पाठः ।

तमुवाच किमर्थं त्वमागतोऽपास्य मैथिलीम् । यदा सा तव विश्वासाद्वने विरहिता मया ॥ २ ॥
दृष्ट्वैवाभ्यागतं त्वां मे मैथिलीं त्यज्य लक्ष्मण । शङ्कमानं महत्पापं यत्सत्यं व्यथितं मनः ॥ ३ ॥
स्फुरते नयनं सव्यं बाहुश्च हृदयं च मे । दृष्ट्वा लक्ष्मण दूरे त्वां सीताविरहितं पथि ॥ ४ ॥
एवमुक्तस्तु सौमित्रिर्लक्ष्मणः शुभलक्षणः । भूयो दुःखसमाविष्टो दुःखितं राममब्रवीत् ॥ ५ ॥
न स्वयं कामकारेण तां त्यक्त्वाऽहमिहागतः । प्रचोदितस्तयैवोग्रैस्त्वत्सकाशमिहागतः ॥ ६ ॥
आर्येणेव परिक्रुष्टं लक्ष्मणेति सुविस्वरम् । परित्राहीति यद्वाक्यं मैथिल्यास्तच्छ्रुतिं गतम् ॥ ७ ॥
सा तमार्तस्वरं श्रुत्वा तव स्नेहेन मैथिली । गच्छ गच्छेति मामाशु रुदती भयविक्लवा ॥ ८ ॥

---

रा० टी०—एवमुक्त्वाऽपि लक्ष्मणोच्चारितप्रत्युत्तरमलभमानस्य रामस्य पुनः प्रश्नमाह—अथेत्यादिभिः । अथ प्रत्युत्तरप्रदानाभावानन्तरम् आश्रमात् अध्वप्रचलनजनितषड्खेदात् उपावृत्तं निवृत्तं सौमित्रिं दुःखार्दितो रामः अन्तरा आश्रममध्ये पुनः पप्रच्छ ॥ १ ॥

गो० टी०—एवं संग्रहेणोक्तमर्थं पुनर्विस्तरेण वक्तुमुपक्रमते—अथेत्यादि । अन्तरा मध्येमार्गम् । दुःखार्दितमिति क्रियाविशेषणम् मारीचवधस्थानात् स्वाश्रमं गच्छन् मध्ये पप्रच्छेत्यर्थः ॥ १ ॥

२ ] ति० टी०—यदा यस्मात्तव विश्वासात्सा वने मया स्वेन विरहिता कृता, अतस्तामपास्य किमर्थं त्वमागतः ॥ २ ॥

रा० टी०—तत्प्रश्नाकारमाह—तमिति । आसा अतिप्रकाशविशिष्टा यत् या मैथिली तव विश्वासात् वने मया विरहिता तां मैथिलीमपास्य त्यक्त्वा किमर्थं त्वमागतः इति तं लक्ष्मणमुवाच ॥ २ ॥

गो० टी०—तमिति । तं सौमित्रिमुवाच । तत्र प्रश्नप्रकारमाह—किमर्थमिति । यदा तु त्वया रक्षितायाः का हानिरिति विश्वासात् मया विरहिता कृता तदा तामपास्य विहाय किमर्थमागतः ॥ २ ॥

३ ] ति० टी०—महत्पापं सीताहरणादिरूपं शङ्कमानं यन्मे मनो व्यथितमासीन्मारीचवधकाले मच्छब्दसदृशशब्दस्य तेन करणात्तन्मैथिलीं त्यज्याभ्यागतं त्वां दृष्ट्वैव सत्यमिति जाने । एकलत्वेन सर्वस्य संभावयितुं शक्यत्वादिति भावः ॥ ३ ॥

रा० टी०—वचनान्तरमाह—दृष्ट्वेति । यत् महत्पापं राक्षसकर्तृकापहरणादि शङ्कमानं मे मनो व्यथितं तत् मैथिलीं त्यज्य त्यक्त्वा अभ्यागतमिह प्राप्तं त्वां दृष्ट्वैव सत्यं प्रतीयत इति शेषः ॥ ३ ॥

गो० टी०—उवाचेत्युक्तार्थमाह—दृष्ट्वेति । त्वां दृष्ट्वा पापं सीतानिष्टरूपं शङ्कमानं मे मम मनः व्यथितमिति यत् तत्सत्यम् ॥ ३ ॥

४ ] ति० टी०—यस्य सत्यत्वसंभावनायां शरीरनिमित्तानि तत्कालानुभूयमानान्याह—स्फुरते इति । स्फुरति सव्यं वामम् । बाहुरपि वाम एव । हृदयं च वामभाग एव ॥ ४ ॥

रा० टी०—सत्यत्वे कारणान्तरमाह—स्फुरत इति । हे लक्ष्मण ! सीताविरहितं त्वां दूरे दृष्ट्वा विद्यमानस्य मे सव्यं वामं नयनं हृदयं बाहुश्च स्फुरते ॥ ४ ॥

गो० टी०—एतच्च कथं निश्चीयत इत्यत्राह—स्फुरत इति । बाहुः सव्य इत्यनुषज्यते । हृदयं वक्षोमध्यम् ॥ ४ ॥

५ ] ति० टी०—पूर्वं सीतावचनाद्दुःखितोऽकृत्यं कृतमिति रामवचनाद्भूयो दुःखितः ॥ ५ ॥

रा० टी०—एवमिति । एवमनेन प्रकारेण भूय उक्तः दुःखसमाविष्टः लक्ष्मणः दुःखितं राममब्रवीत् ॥ ५ ॥

गो० टी०—एवमिति । भूयो दुःखेन बहुतरदुःखेन समाविष्टः पूर्वं सीतावचनदुःखाक्रान्तः संप्रति रामेण त्वया अकृत्यं कृतमित्युच्यमानत्वात् भूयो दुःखसमाविष्टत्वम् ॥ ५ ॥

६ ] ति० टी०—कामकारेण स्वेच्छया प्रचोदितः । उग्रैर्दुःश्रवैः वचोभिरिति शेषः ॥ ६ ॥

रा० टी०—तद्वचनाकारमाह—नेति । कामचारेण स्वेच्छयेत्यर्थः, तां सीतां त्यक्त्वा स्वयमहमिह नागतः किंतु तया सीतयैव प्रचोदितः प्रेरितोऽहं त्वत्सकाशमागतः ॥ ६ ॥

गो० टी०—न स्वयमिति । कामकारेण स्वेच्छाकरणेन स्वयमित्यस्य विवरणमिदम् । उग्रैः वचोभिरित्यर्थसिद्धम् ॥ ६ ॥

७-८ ] ति० टी०—लक्ष्मणेति सुतरां विस्वरं परित्राहीति च आर्येणैव त्वयैव यत्परिकुष्टं तन्मैथिल्याः श्रुतिं गतम् ॥ ७ ॥ ८ ॥

रा० टी०—ननु तयैव किमर्थं प्रेरित इत्यत आह—आर्येणेति । हे लक्ष्मण ! मां परित्राहि इत्यार्येण भवता पराकुष्टमिव पराकुष्टमुच्चारितं सुविस्वरमतिस्वरसहितं यत् वाक्यं तत् मैथिल्याः श्रुतिं श्रवणपथं गतम् ॥ ७ ॥

गो० टी०—आर्येणेति । हा सीते ! लक्ष्मणेति परित्राहीति च यद्वाक्यम् आर्येणेव भवतेव केनचित्पराकुष्टम् आह्वानपुरःसरं घोषितं तत् मैथिल्याः श्रुतिं गतम् ॥ ७ ॥

---

१ ह्यहं कामचारेणेति रा. पाठः । २ वाहमिति रा. पाठः । ३ पराऽऽक्रुष्टं हा सीते लक्ष्मणेति चेति गो. पराक्रुष्टमिति रा. पाठः । ४ आह रुदन्ती भयविह्वलेति गो. आह रुदन्तीति रा. पाठः । ५ आदिनेति युक्तं भाति ।

प्रचोद्यमानेन मया गच्छेति बहुशस्तया । प्रत्युक्ता मैथिली वाक्यमिदं तत्प्रत्ययान्वितम् ॥ ९ ॥
न तत्पश्याम्यहं रक्षो यदस्य भयमावहेत् । निर्वृता भव नास्त्येतत्केनाप्येतदुदाहृतम् ॥ १० ॥
विगर्हितं च नीचं च कथमार्योऽभिधास्यति । त्राहीति वचनं सीते यस्त्रायेत्रिदशानपि ॥ ११ ॥
किंनिमित्तं तु केनापि भ्रातुरालम्ब्य मे स्वरम् । [3]विस्वरं व्याहृतं वाक्यं लक्ष्मण त्राहि मामिति॥ १२ ॥
राक्षसेनेरितं वाक्यं [4]त्रासात्त्राहीति शोभने । न भवत्या व्यथा कार्या कुनारीजनसेविता ॥ १३ ॥
अलं [5]विक्लवतां गन्तुं स्वस्था भव निरुत्सुका । न चास्ति त्रिषु लोकेषु पुमान्यो राघवं रणे ॥ १४ ॥
जातो वा जायमानो वा संयुगे यः पराजयेत् । अजेयो राघवो युद्धे देवैः शक्रपुरोगमैः ॥ १५ ॥
एवमुक्ता तु वैदेही परिमोहितचेतना । उवाचाश्रूणि मुञ्चन्ती दारुणं मामिदं वचः ॥ १६ ॥

रा० टी०–स्रेति । आर्तस्वरं श्रुत्वा भयविक्लवा तव स्नेहेन रुदन्ती रुदती सा मैथिली गच्छ गच्छेति मामाह ॥८॥

गो० टी०–सा तमिति । तव स्नेहेन त्वयि स्नेहेन ॥८॥

९ ] ति० टी०–तत्प्रत्ययान्वितं यस्या अपि प्रत्ययेन विश्वसनीयत्वेनान्वितं तत्त्वेन योग्यमिदं वक्ष्यमाणं वाक्यं प्रत्युक्ता प्रतिवचनत्वेनोक्ता ॥ ९ ॥

रा० टी०–प्रचोद्यमानेनेति । तया सीतया गच्छेति बहुशः प्रचोद्यमानेन मया तत्प्रत्ययान्वितं रामस्य न क्वचिद्भीतिरिति सीताविश्वासकारकमिदं वाक्यं मैथिली प्रत्युक्ता ॥९॥

गो० टी०–प्रचोद्यमानेनेति । त्वत्प्रत्ययान्वितं त्वयि प्रत्ययः दुराधर्षत्वदैन्यराहित्यविषयो विश्वासः तेनान्वितम् इदं वक्ष्यमाणलक्षणं वाक्यं मैथिली प्रत्युक्ता ॥ ९ ॥

१० ] ति० टी०–किं तत्तत्राह—नेति । एतत्कातरवचनं नास्य रामस्य । केनापि रक्षसाऽन्येन वोदाहृतम् ॥ १० ॥

रा० टी०–तद्वाक्याकारमाह–नेति । यत् अस्य रामस्य भयमावहेत्तद्रक्षोऽहं न पश्यामि अत एतदुदाहृतं रामस्य नास्ति किंतु केन अन्येनेत्यर्थः, उदाहृतमुच्चारितम् अतो निर्वृता त्यक्तभया भव ॥ १० ॥

गो० टी०–न तदिति । निर्वृता सुखिता भव नास्त्येतत् रामवाक्यत्वेन यच्छङ्कितम् एतत् रामवाक्यं न भवति ॥१०॥

११ ] ति० टी०–तद्वचनत्वाभावे हेतुः–विगर्हितमिति । क्षत्रियस्य निन्दितम्, अत एव नीचं कुत्सितम् । यो देवानपि त्रायेदेवत्राणेऽपि यः समर्थः स कथमीदृग्वाक्यं ब्रूयात् ॥ ११ ॥

रा० टी०–तत्र हेत्वन्तरमप्युक्तमित्याह–विगर्हितमिति । यस्त्रिदशान्देवानपि त्रायेत् स आर्यः सर्वश्रेष्ठः रामः विगर्हितं निन्दितं त्राहीति वचनं कथमभिधास्यति ॥ ११ ॥

गो० टी०–रामवचनत्वेऽनुपपत्तिमाह–विगर्हितमिति । विगर्हितं दैन्यावहत्वात् महाकुलप्रसूतस्य निन्दितं नीचम् आपत्काले क्लीसमाह्वानस्य क्षुद्रकृतत्वात् कुत्सितं वचनं कथमभिधास्यति यस्त्रिदशानपि त्रायेत् कथं सः सीते त्राहीति वचनमभिधास्यति ॥ ११ ॥

१२–१३ ] ति० टी०–किंनिमित्तं कुत्सितं किंचिन्निमित्तमाश्रित्य केनापि रक्षसेरितम् ॥ १२ ॥ १३ ॥

रा० टी०–किमिति । किंनिमित्तं किंचित्कारणमुद्दिश्य केनाऽपि राक्षसविशेषेण मे भ्रातुः स्वरमवलम्ब्य लक्ष्मण ! मां त्राहीति विस्वरं वाक्यं व्याहृतं कथितम् ॥ १२ ॥

रा० टी०–राक्षसेनेति । हे शोभने ! त्रासान्मां प्रत्युद्गमप्रापणार्थं राक्षसेन त्राहीति वाक्यमीरितमतः कुनारीजनसेविता प्राकृतनारीजनैराश्रिता व्यथा भवत्या न कार्या ॥ १३ ॥

गो० टी०–किमिति । किं निमित्तं किमपि प्रयोजनमुद्दिश्य केनापि दुर्जनेन राक्षसेन मे भ्रातुः स्वरं स्वरसदृशं स्वरम् आलम्ब्य अवलम्ब्य त्राहि त्राहीति वाक्यम् ईरितम् उक्तम् । शोभने इति सीतासंबोधनम् ॥ १२ ॥

गो० टी०–विस्वरमिति । स्वरप्रकारविशेषशोधनेऽपि नायं रामस्वर इत्यर्थः ॥ १३ ॥

१४ ] ति० टी०–विक्लवतां गन्तुमलं वैक्लव्यमालम्ब्यालं मास्त्वित्यर्थः । पुमान्विद्यमान इति शेषः । यः पराजयेदित्यपकर्षः ॥ १४ ॥

रा० टी०–अलमिति । जातो जायमानो वा यः पुमान् राघवं पराजयेत्स त्रिषु लोकेषु नास्ति अतो राघवो देवैरप्यजेयः अतो विक्लवतां विह्वलतां गन्तुं प्राप्तुमलम्, विक्लवतां न प्राप्नुहीत्यर्थः, अतः स्वस्था सती निरुत्सुका मत्प्रेषणप्रयत्नरहिता भव 'विक्लवो विह्वलस्तथा' इति हलायुधः । श्लोकद्वयमेकान्वयि ॥ १४ ॥ १५ ॥

गो० टी०–अलमित्यादि । सार्धश्लोक एकान्वयः । वैक्लव्यं विक्लवत्वम् । 'विक्लवो विह्वलस्तथा' इति हलायुधः । निरुत्सुका मत्प्रस्थापनोद्योगरहिता भव नास्ति न विद्यते ॥१४॥

गो० टी०–नेत्यर्धमेकं वाक्यम् । पूर्वमेकैकेनाजय्यत्वमुक्तं संप्रति मिलितैरिति विशेषः ॥ १५ ॥

१५–१६ ] ति० टी०–जायमान इत्यनेन जनिष्यमाण इत्यर्थकेन भाविनोऽपि वारणम् । अतः संयुगे इत्यस्य न पौनरुक्त्यम् ॥ १५ ॥ १६ ॥

१ त्वदिति गो. पाठः । २ एवमिति गो. पाठः । ३ एतदाद्यर्धद्वयं व्यत्यस्तं गो. पाठः । ४ त्राहि त्राहीति गो. पाठः । ५ वैक्लव्यमालम्ब्येति गो. पाठः । ६ स इति गो. पाठः । ७ वै इति गो. पाठः । ८ न जय्य इति गो. पाठः ।

भावो मयि तवा[1]त्यर्थंपाप एव निवेशितः । विनष्टे भ्रातरि प्राप्तुं न च त्वं माम[2]वाप्स्यसे ॥ १७ ॥
संकेताद्भरतेन त्वं रामं समनुगच्छसि । क्रोशन्तं हि यथात्यर्थं नैनमभ्यवपद्यसे ॥ १८ ॥
रिपुः प्रच्छन्नचारी त्वं मदर्थमनुगच्छसि । राघवस्या[3]न्तरं प्रेप्सुस्तथैनं नाभिपद्यसे ॥ १९ ॥
एवमुक्तस्तु[4] वैदेह्या संरब्धो रक्तलोचनः । क्रोधात्प्रस्फुरमाणोष्ठ आश्रमादभिनिर्गतः ॥ २० ॥
एवं ब्रुवाणं सौमित्रिं रामः संतापमोहितः । अब्रवीद्दुष्कृतं सौम्य तां विना त्व[5]मिहागतः॥ २१ ॥
जानन्नपि समर्थं मां रक्षसाम[6]पवारणे । अनेन क्रोधवाक्येन मैथिल्या [7]निर्गतो भवान्॥ २२ ॥
न हि ते परितुष्यामि त्यक्त्वा [8]यदसि मैथिलीम्। क्रुद्धायाः परुषं श्रुत्वा स्त्रिया [9]यत्त्वमिहागतः ॥ २३ ॥

---

रा० टी०—एवमिति । एवमुक्ता परिमोहितचेतना भवद्विषयकातिस्नेहेन व्याकुलचित्ता वैदेही अश्रूणि मुञ्चन्ती सती दारुणं वच उवाच ॥ १६ ॥

गो० टी०—एवमिति । परिमोहितचेतना कलुषितबुद्धिः ॥ १६ ॥

१७ ] ति० टी०—भावो मयीत्यादि व्याख्यातप्रायम् । विनष्टे भ्रातरि मां प्राप्तुमत्यर्थंपापरूप एव भावस्तव हृदि मद्विषये निवेशितो दैवेनेति शेषः । न च मामवाप्स्यसे तन्नाशे ममापि नाशात् ॥ १७ ॥

रा० टी०—तदाकारमाह—भाव इत्यादिभिः । भ्रातरि रामे विनष्टे अमर्षाददृश्यत्वं प्राप्ते सति मां त्वं नावाप्स्यसेऽहमप्यदृश्या भविष्यामीति तात्पर्यम्, मयि अत्यर्थं निवेशितस्तव भावः परप्रेम पापस्तद्धेतुरेव भविष्यतीति शेषः, विपत्तौ स्वामिनाहूतोऽप्ययं न गत इति महान् पाप्ययमिति लोका वदिष्यन्तीति तात्पर्यम् ॥ १७ ॥

गो० टी०—भाव इति । भ्रातरि विनष्टे सति मां प्राप्तुं पापः कुत्सितः भावः मयि तव त्वया निवेशित एव च मां नावाप्स्यसि ॥ १७ ॥

१८–२० ] ति० टी०—संकेतात् पापरूपं संकेतं कृत्वेत्यर्थः । नाभिपद्यसे नाभ्यवपद्यसे । क्रोशन्तं क्रोशतस्तस्य त्राणाय न गच्छसि ॥ १८–२० ॥

रा० टी०—संकेतादिति । संकेतात् संकेतं प्राप्य अत्यर्थं क्रोशन्तं रामं त्वं यथा यथावत् न समनुगच्छसि तर्हि भरते भरतसमीपेऽपि त्वं नाभ्यवपद्यसे स्थास्यसि भरतो निस्सारयिष्यतीति तात्पर्यम् ॥ १८ ॥

गो० टी०—संकेतादिति । भरतेन कृतात्संकेतात् कुतश्चिदवकाशे राममवश्यं हनिष्यामीत्येवंरूपात् रामं समनुगच्छसि न तु रामभक्त्या । अत्र हेतुमाह—क्रोशन्तमिति । क्रोशन्तमेनं यथा नाभ्यवपद्यसे न प्राप्नोषि तेन प्रकारेण संकेतादनुगच्छसीत्यन्वयः ॥ १८ ॥

रा० टी०—रिपुरिति । राघवस्यान्तरमभिप्रायं प्रेप्सुस्त्वं यदि मदर्थं मद्रक्षणार्थम् एनं राघवं नाभिपद्यसे तर्हि प्रच्छन्नचारी रिपुस्त्वम् अनुगच्छसि भविष्यसि । किंच प्रच्छन्नचारित्वं यद्रिपुत्वं तदनुगच्छसि प्राप्स्यसि भावप्रधानो निर्देशः समुदायस्य कर्मत्वेनान्वयान्न द्वितीया "वर्तमानसामीप्ये—" इति भविष्यति लट् ॥ १९ ॥

गो० टी०—रिपुरिति—अन्तरप्रेप्सुः रन्ध्रान्वेषी येन प्रकारेण एवमनुगच्छसि तथा नाभिपद्यसे इत्यन्वयः ॥ १९ ॥

रा० टी०—एवमिति । वैदेह्या एवमुक्तः अत एव संरब्धः जातकोपः अत एव संरक्तलोचनः अत एव प्रस्फुरमाणोष्ठोऽहं क्रोधात् हेतोः आश्रमात् अभिनिर्गतः ॥ २० ॥

गो० टी०—एवमिति । क्रोधादिति काकाक्षिन्यायेनोभयत्रान्वेति ॥ २० ॥

२१ ] ति० टी०—दुष्कृतमकृत्यं कृतमिति शेषः ॥ २१ ॥

रा० टी०—एवमिति । संतापमोहितो रामः एवं ब्रुवाणं सौमित्रिमब्रवीत् । तद्वचनाकारमाह—तां सीतां विना यत्त्वमिहागतः तत् दुष्कृतं न कर्तव्यमित्यर्थः ॥ २१ ॥

गो० टी०—एवमिति तां विना त्वमागत इति यत् तद्दुष्कृतम् अकृत्यम् ॥ २१ ॥

२२ ] ति० टी०—त्वद्रक्षार्थमिति चेत्तत्राह—जानन्नपीति । अनेन मैथिल्याः क्रोधवाक्येन किं भवानाश्रमान्निर्गतः ॥ २२ ॥

रा० टी०—जानन्निति । मां रक्षसामपवारणे समर्थं जानन्नपि यो भवान् मैथिल्या अनेन क्रोधवाक्येन निर्गतः तस्मै ते न परितुष्यामि यत् यस्मात् हेतोः मैथिलीं त्यक्त्वा त्वमसि एतेन त्वत्प्रेषणे सीताया आग्रहमवलोक्य तया सहैव त्वयाऽऽगन्तव्यमिति सूचितम् । सार्धश्लोक एकान्वयी ॥ २२॥

गो० टी०—उक्तं विवृणोति—जानन्नपीति ॥ २२ ॥

२३ ] ति० टी०—यन्मैथिलीं त्यक्त्वा इहागतोऽसि तेन ते न परितुष्यामि । यच्च क्रुद्धायाः स्त्रियाः परुषं श्रुत्वा त्वमिहागतोऽसि तेन ते न तुष्यामि । क्रुद्धस्त्रीणां वाक्ये मर्यादालेशस्याप्यभावादिति भावः ॥ २३ ॥

रा० टी०—क्रुद्धाया इति । क्रुद्धायाः स्त्रियाः परुषं वाक्यं श्रुत्वा अत एव क्रोधस्य वशम् आगम्य प्राप्य मम शासनं

---

१ अत्यर्थंमिति गो. पाठः । २ अवाप्स्यसी गो. पाठः । ३ अन्तरप्रेप्सुरिति गो. पाठः । ४ हीति गो. पाठः । ५ यत्त्वमागत इति गो. पाठः । ६ विनिवारणे इति गो. पाठः । ७ निःसृत इति गो. पाठः । ८ यद्यासीति गो. पाठः । ९चेति गो. पाठः ।

सर्वथा त्वपनीतं ते सीतया यत्प्रचोदितः । क्रोधस्य वशमागम्य नाकरोः शासनं मम ॥ २४ ॥
असौ हि राक्षसः शेते शरेणाभिहतो मया । मृगरूपेण येनाहमाश्रमादपवाहितः ॥ २५ ॥
विकृष्य चापं परिधाय सायकं सलीलबाणेन च ताडितो मया ।
मार्गीं तनुं त्यज्य च विक्लवस्वरो बभूव केयूरधरः स राक्षसः ॥ २६ ॥
शराहतेनैव तदार्तया गिरा स्वरं ममालम्ब्य सुदूरसुश्रवम् ।
उदाहृतं तद्वचनं सुदारुणं त्वमागतो येन विहाय मैथिलीम् ॥ ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे एकोनषष्टितमः सर्गः ॥ ५९॥

## षष्टितमः सर्गः ।

अनेकदुर्निमित्तदर्शनात्सीताविपदमाशङ्कमानो रामस्तूर्णं लक्ष्मणेन सममुटजं प्राविशत्तथा नानाविहारस्थलेष्वन्विष्यन्नपि तामलभमानस्तद्वार्तां तरुमृगादीन् प्रति पप्रच्छ । अथ क्वचन तद्वधलिङ्गादर्शनाद्राक्षसैर्भक्षणादीन्युत्प्रेक्षमाणो बहुशो विलप्य पुनस्तामन्विष्यन्वने परिभ्रमति ।

भृशमाव्रजमानस्य तस्याधो वामलोचनम् । प्रास्फुरच्चास्खलद्रामो वेपथुश्चास्य जायते ॥ १ ॥

त्वं नाकरोः अत एव सीतया प्रतिचोदितः सन् इहागतः यत् तत् त्वया सर्वथा अपनीतं नीतिविरुद्धं कृतमित्यर्थः ॥२३॥२४॥

गो० टी०-अनेनेत्युक्तं विशदयति--नहीति । स्त्रिया इत्यविवेकसंभवानासूचनं स्त्रीष्वपि विशेषज्ञापनाय क्रुद्धाया इति । यस्त्वं क्रुद्धायाः स्त्रियाः परुषं श्रुत्वा इहागतः तस्य ते मैथिलीं त्यक्त्वा यासीति यत्तत्कर्म न परितुष्यामि ॥ २३ ॥

२४ ] ति० टी०-अपनीतम् अपनयोऽनीतिरिति यावत्, कृतेति शेषः । यत्तया प्रचोदितः सन्क्रोधवशं प्राप्य मम शासनं नाकरोः ॥ २४ ॥

गो० टी०-सर्वथेति । नाकरोः शासनं ममेति यत्तत्सर्वथा ते अपनीतम् अपनयः क्रुद्धया स्त्रिया यत्किंचित्परुषमुक्तं चेत्तत्सोढव्यम् । कथंचिदसहने बहिरागत्यान्तर्हितो भूत्वा तत्परिपालनं कर्तव्यं केवलमागमनं तवापनीतिरेवेति भावः ॥ २४॥

२५ ] ति० टी०-अधुना स्ववृत्तान्तमाह-असाविति । बुद्धिस्थित्यैवं निर्देशः। अपवाहितो दूरमाकृष्टः ॥ २५ ॥

रा० टी०-स्वसदृशस्वरोच्चारणकर्तारं बोधयन् स्ववृत्तान्तमाह-असाविति । येन मृगरूपेण आश्रमादहमपवाहितः सोऽसौ राक्षसः शरेणाभिहतः सन् शेते ॥ २५ ॥

गो० टी०-अपनीतिमेवोपपादयितुं स्वरान्यथाभावं दर्शयति-असावित्यादिश्लोकत्रयेण ॥ २५ ॥

२६ ] ति० टी०-परिधाय संधाय । सलीलबाणेन नातिविकृष्य मुक्तेन । मार्गीं मृगसंबन्धिनीम् ॥ २६ ॥

रा० टी०-विकृष्येति । चापं विकृष्य सायकं बाणं परिधाय संधाय सलीलबाणेन लीलापूर्वकप्रक्षिप्तशरेण मया ताडितः स मृगरूपः मार्गीं मृगसंबन्धिनीं तनुं त्यज्य त्यक्त्वा केयूरधरः अङ्गदविशिष्टो राक्षसो बभूव 'केयूरमङ्गदं तुल्ये' इत्यमरः ॥ २६ ॥

गो० टी०-विकृष्येति । परिधाय संधाय सलीलबाणेन लीलार्थबाणेन मार्गीं मृगसंबन्धिनीं त्यज्य त्यक्त्वा सविक्लवस्वरः सदीनस्वरः केयूरधरः अङ्गदधरः । आसीदित्यनेन दुरातीतत्वं गम्यते ॥ २६ ॥

२७ ] ति० टी०-स दूरेऽपि संश्रवः संश्रवणं यस्य तं स्वरं मम मत्स्वरसदृशमालम्ब्य तद्वचनमुपाहृतमुक्तम् ॥ २७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे एकोनषष्टितमः सर्गः ॥५९॥

रा० टी०-शरेति । शराहतेन राक्षसेन मम स्वरम् आलम्ब्य अनुकृत्य सुदूरसुश्रवं सुदूरे अतिदूरेऽपि सुश्रवः स्पष्टश्रवणं यस्य तत् सुदारुणं वचनं वाक्यम् आर्तया गिरा उदाहृतम्, येन वचनेन मैथिलीं विहाय त्वमिहागतः ॥ २७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे एकोनषष्टितमः सर्गः ॥ ५९ ॥

गो० टी०-शरेति । तदेति छेदः । सुदूरे संश्रवः श्रवणं यस्य तं मम स्वरं मत्स्वरसदृशं स्वरम् आलम्ब्य आश्रित्य आर्तया गिरा दीनया वाचा शराहतेन तेनैव तदा तस्मिन् काले सुदारुणं तद्वचनमुदाहृतम् । येन वचनेन श्रुतेन मैथिलीं विहाय आगतोऽसि ॥ २७ ॥

अस्मिन् सर्गे सप्तविंशतिश्लोकाः ।

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने एकोनषष्टितमः सर्गः ॥ ५९ ॥

१ ] ति० टी०-आव्रजमानस्याश्रममागच्छतः । अधः प्रास्फुरत्स्वयमस्खलद्वेपथुः कम्पश्चास्याजायत ॥ १ ॥

१ आपन्न इति गो. पाठः । २ स इति गो. पाठः । ३ संश्रवमिति गो. पाठः । ४ उदाहृतमिति गो. पाठः । ५ अप्यजायतेति गो. पाठः ।

उपालक्ष्य निमित्तानि सोऽशुभानि[1] मुहुर्मुहुः । अपि क्षेमं तु सीताया इति वै व्याजहार ह[2] ॥ २ ॥
त्वरमाणो जगामाथ सीतादर्शनलालसः । शून्यमावसथं दृष्ट्वा बभूवोद्विग्नमानसः ॥ ३ ॥
उद्भ्रमन्निव वेगेन विक्षिपन्रघुनन्दनः । तत्र तत्रोटजस्थानमभिवीक्ष्य समन्ततः ॥ ४ ॥
ददर्श पर्णशालां च सीतया रहितां तदा । श्रिया विरहितां ध्वस्तां हेमन्ते पद्मिनीमिव ॥ ५ ॥
रुदन्तमिव वृक्षैश्च ग्लान[3]पुष्पमृगद्विजम् । श्रिया विहीनं विध्वस्तं संत्यक्तं[4] वनदैवतैः ॥ ६ ॥
विप्रकीर्णाजिनकुशं विप्र[5]विद्धबृसीकटम् । दृष्ट्वा शून्यो[6]टजस्थानं विललाप पुनः पुनः ॥ ७ ॥
हृता मृता वा नष्टा वा भक्षिता वा भविष्यति । निलीनाप्यथवा भीरुरथवा वनमाश्रिता ॥ ८ ॥

---

रा० टी०–लक्ष्मणं प्रति रामोक्तिं संवर्ण्य रामवृत्तान्तमाह–भृशमित्यादिभिः । भृशम् अत्यन्तम् आव्रजमानस्य आश्रममागच्छतः तस्य रामस्य अधोवामलोचनं वामलोचनाधोभागः प्रास्फुरत् रामोऽस्खलच्च अत एव अस्य रामस्य वेपथुः कम्पः जायते अजायत ‘ अधो वामदृशः स्फुर्तौ बह्वनिष्टं भजेत्पुमान् ’ इति ‘ प्रयाणकाले स्खलनं करोतीष्टस्य भञ्जनम् ’ इति च प्रसिद्धम् । यद्यपि सीतावियोगस्य संभोगशृङ्गारपोषकत्वेनानिष्टस्याभावात् दुर्निमित्तानुभवो न संभवति तथाऽपि तात्कालिकवियोगजनितदुःखाभासस्यावश्यंभावित्वात् दुर्निमित्तदर्शनं संभवत्येवेति दिक् ॥ १ ॥

गो० टी०–एवमियता प्रबन्धेन संभोगशृङ्गारो वर्णितः । अथ विप्रलम्भशृङ्गारमासुवेलारोहणाद्वर्णयितुमारभते । तदङ्गत्वेन रसान्तराणि दर्शितानि । ‘ संयुक्तयोस्तु संभोगो विप्रलम्भो वियुक्तयोः ’ इति लक्षणात् । तत्र ‘अभिलाषमनःसङ्गौ संकल्पो गुणसंस्तुतिः । प्रद्वेषः तापाभिमतत्यागावुन्मादो मूर्च्छना च मृतिः’ इत्युक्तविप्रलम्भावस्थास्वष्टमीं दशामाह सर्गत्रयेण–भृशमित्यादि । आव्रजमानस्य आगच्छतः अधोवामलोचनं वामनेत्रस्थाधःपक्ष्म प्रास्फुरत् । ‘ अधो वामदृशः स्फूर्तौ बह्वनिष्टो भवेत् पुमान् ’ इति लक्षणात् । स्वयमस्खलत् प्रयाणकाले स्खलनं करोतीष्टस्य भञ्जनमिति प्रसिद्धिः । वेपथुः कम्पः ॥१॥

२-३ ] ति० टी०–अपि क्षेममिति तु व्याजहारेत्यन्वयः ॥ २ ॥ ३ ॥

रा० टी०–उपेति । स रामः मुहुर्मुहुः अशुभानि निमित्तान्युपालक्ष्य सीताया अपि क्षेममस्तीति शेषः, इति वाचो व्याजहार ॥ २ ॥

गो० टी०–उपालक्ष्येति । अशुभानि अशुभसूचकानि॥२॥

रा० टी०–त्वरमाण इति । सीतादर्शनलालसः अत एव त्वरमाणो रामः जगाम आश्रमं प्राप । अथ अनन्तरम् आवसथम् आश्रमं शून्यं दृष्ट्वा उद्विग्नमानसो बभूव ॥ ३ ॥

गो० टी०–त्वरमाण इति । लालसः साभिलाषः आवसथं गृहम् । ‘ स्थानावसथवास्तु च ’ इत्यमरः ॥ ३ ॥

४-५ ] ति० टी०–उद्भ्रमन्नितस्ततो व्रजन् । विक्षिपन्हस्तादीन्क्षिपंस्तत्र तत्र सीता भविष्यतीत्याशयाऽभिवीक्ष्य ॥४॥५॥

रा० टी०–उद्भ्रमन्निति । उद्भ्रमन् सीतान्वेषणार्थमितस्ततो गच्छन् वेगेन सीतादर्शनाभावजनितोद्वेगेन विक्षिपन् पाण्यादिप्रक्षेपं कुर्वन् सन् तत्र तत्र सीतास्थितिसंदिग्धे देश उटजस्थानं पर्णशालां समन्ततोऽभिवीक्ष्य सीतया रहिताम् अत एव हेमन्ते ध्वस्तां पद्मिनीमिव श्रिया शोभया विरहितां पर्णशालां ददर्श बुबुधे, दृशिर्ज्ञानसामान्ये । श्लोकद्वयमेकान्वयि ॥ ४॥ ५॥

गो० टी०–उद्भ्रमन्निति । श्लोकद्वयमेकान्वयम् । वेगेन उद्भ्रमन्निव उत्पतन्निव विक्षिपन् हस्तादीनवयवानितस्ततः क्षिपन् ॥ ४ ॥ ५ ॥

६-७ ] ति० टी०–रुदन्तमित्यादेराश्रमो विशेष्यः । वर्णनीयमयीभावेन कवेरपि संनिहितवैपरीत्यम् ॥ ६ ॥ ७ ॥

रा० टी०–रुदन्तमिति । वनदैवतैः संत्यक्तं सीतानुगमनकर्तृत्वेन वनदैवतरहितमित्यर्थः, अत एव म्लानाः पुष्पमृगद्विजा यस्मिँस्तम् अत एव रुदन्तमिव अत एव श्रिया शोभया विहीनम् अत एव विध्वस्तमिव विप्रकीर्णा इतस्ततः प्रक्षिप्ताः अजिनकुशा यस्मिन् तं विप्रवृद्धबृसीकटं विप्रवृद्धाः बहुसंख्याकाः बृसीकटाः मुन्यासनानि यस्मिन् तं, शून्योटजस्थानं शून्यं सीतारहितम् उटजस्थानं पर्णशाला यस्मिंस्तं, वृक्षैरुपलक्षितमाश्रमं पुनः पुनर्दृष्ट्वा विललाप विप्रकीर्णाजिनकुशमित्यनेन भूकम्पादिर्जात इति ध्वनितम् । श्लोकद्वयमेकान्वयि॥६॥७॥

गो० टी०–रुदन्तमिति । श्लोकद्वयमेकान्वयम् । वृक्षैः रुदन्तमिव स्थितं हीनस्वरभृङ्गवत्त्वादिति भावः । पुष्पाणि सीतया पूर्वमपाचितानि द्विजाः पक्षिणः म्लानाः पुष्पमृगद्विजा यस्मिन् तत् तथोक्तम् । श्रिया कान्त्या विहीनं विध्वस्तं विशीर्णं रावणसंन्यासिने दत्तत्वेन विप्रकीर्णाः अयथास्थानस्थिता अजिनकुशाः यस्मिन् तत्तथा ग्रहणकाले सीताया अवलम्बितत्वेन विप्राविद्धबृसीकटं विपर्यस्तमुन्यासनास्तरणं शून्यं सीतारहितं विललाप पर्यदेवयत् ॥ ६ ॥ ७ ॥

८-९ ] ति० टी०–नष्टाऽदर्शनं गता स्वयोगशक्त्या पुनरलभ्यदर्शना जातेति तात्पर्यम् ॥ ८ ॥ ९ ॥

---

१ न्विति गो. पाठः । २ चेति गो. पाठः । ३ म्लानेति गो. रा. पाठः । ४ संत्यक्तवनदेवतमिति गो. पाठः । ५ विप्रवृद्धेति रा. पाठः । ६ शून्यं निजस्थानमिति गो. पाठः ।

गता विचेतुं पुष्पाणि फलान्यपि च वा पुनः । अथवा पद्मिनीं याता जलार्थं वा नदीं गता ॥ ९ ॥
यत्नान्मृगयमाणस्तु नाससाद वने प्रियाम् । शोकरक्तेक्षणः श्रीमानुन्मत्त इव लक्ष्यते ॥ १० ॥
वृक्षाद्वृक्षं प्रधावन्स [2]गिरींश्चापि नदीनदम् । बभ्राम विलपन्रामः शोकपङ्कार्णवप्लुतः ॥ ११ ॥
अस्ति कच्चित्त्वया दृष्टा सा कदम्बप्रिया प्रिया । कदम्ब यदि जानीषे शंस सीतां शुभाननाम् ॥ १२ ॥
स्निग्धपल्लवसंकाशां पीतकौशेयवासिनीम् । शंसस्व यदि सा दृष्टा बिल्व बिल्वोपमस्तनी ॥ १३ ॥
अथवार्जुन शंस त्वं प्रियां तामर्जुनप्रियाम् । जनकस्य सुता तन्वी यदि जीवति वा न वा ॥ १४ ॥

रा० टी०—तद्विलापाकारमाह—हृतेति । यतः अमृता मरणधर्मरहिता अतः अनष्टा ध्वंसाप्रतियोगिनी भविष्यति अत एव अभक्षिता भक्षितापि न भविष्यति अतः हृता वा भीरुरपि वनमाश्रिता सती निलीना मत्प्रीतिपरीक्षार्थं गुप्ता वा पुष्पादीनि विचेतुं गता वा जलार्थं पद्मिनीं सरसीं याता वा नदीं गता वा । श्लोकद्वयमेकान्वयि ॥ ८ ॥ ९ ॥

गो० टी०—विलापमाह द्वाभ्याम्—हृतेत्यादि । हृता अपहृता नष्टा यादृच्छिकमदर्शनं गता निलीना विनोदाय व्यवहिता अथवा निर्जनतया भीरुः सती गूढं वनमागता पद्मिनीं याता स्नानार्थमिति शेषः।नदीं गतेत्यनन्तरमितिकरणं द्रष्टव्यम्॥८॥९॥

१० ] ति० टी०—नदीं गतेत्यादि संतर्क्य तत्र तत्र यत्नान्मृगयमाणोऽपि नाससाद । उन्मत्त इवेत्ययमिवशब्दो मृगयमाणः प्रधावन्बभ्रामेत्यादौ सर्वत्र संबन्ध्यः । एतत्सर्वं लोकव्यवहारनटनं भगवतश्चित्स्वरूपस्य लोके सर्वतो भार्या प्रियतमेति बोधयितुम् । अत एव मातापितृवियोगो नैतावच्छोककारणम् । तदुक्तं भागवते—'स मनुजोऽजभवार्चिताङ्घ्रिरलङ्घ्यवीर्यः' इत्यादिना विशिष्टं राममुपक्रम्य 'रक्षोधमेन वृकवद्विपिनेऽसमक्षं वैदेहराजदुहितर्यपयापितायाम् । भ्रात्रा वने कृपणवत्प्रियया वियुक्तः स्त्रीसङ्गिनां गतिमिति प्रथयंश्चचार ॥' इति । 'नेदं यशो रघुपतेः सुरयाच्ञयात्तलीलातनोरधिकसाम्यविमुक्तधाम्नः । रक्षोवधो जलधिबन्धनमस्त्रपूगैर्यत्तस्य शत्रुहनने कपयः सहायाः ॥' इति च । यथा सुग्रीवाद्याश्रयणवदिदमपि लीलैवेति न तत्तस्य स्तुतिरिति तदर्थः । लीलाप्रयोजनं च तच्छ्रवणेन लोकोद्धारः । एतन्नवमे एकादशाध्यायस्थे पद्ये । तथा पञ्चमेऽपि—'मर्त्यावतारस्त्विह मर्त्यशिक्षणं रक्षोवधायैव न केवलं विभोः । कुतोऽन्यथा स्याद्रमतः स्व आत्मन्सीताकृतानि व्यसनानीश्वरस्य ॥' इति ॥ १० ॥

रा० टी०—यत्नादिति । शोकरक्तेक्षणः संभोगशृङ्गारपोषकसीतावियोगजनितशोकहेतुकारुणनयनविशिष्टः श्रीमान् स्वाभाविकसर्वसंपत्तिविशिष्टो रामः यत्नात् प्रियां सीतां मृगयमाण अन्वीक्षन्नपि [9]नाससाद प्राप अत एव उन्मत्त इव लक्ष्यते ॥ १० ॥

गो० टी०—यत्नादिति । शोकाद्धेतोः उन्मत्त इव लक्ष्यते । अलक्ष्यतेत्यर्थः ॥ १० ॥

११ ] ति० टी०—नदीनदं नदीसंबन्धिनदम् । जातावेकवचनम् । 'नारा' इति लोकप्रसिद्धम् । नदाः पश्चिमप्रवाहा इति कतकः । पश्चिमप्रवाहाया अपि नर्मदाया नदत्वव्यवहाराभावाच्चिन्त्यं तत् ॥ ११ ॥

रा० टी०—उन्मत्तसादृश्यमेवाविष्कुर्वन्नाह—वृक्षादित्यादिभिः । शोकपङ्कार्णवप्लुतः शोकः पङ्कार्णव इव तत्र प्लुतो मग्नो रामः विलपन् वृक्षादीन् प्रधावंश्च सन् बभ्राम । नदीनदमिति समाहारद्वन्द्वः 'नदान्नदीं' इति भूषणपाठः ॥ ११ ॥

गो० टी०—वृक्षादिति । नदात् पश्चिमप्रवाहात् शोकपङ्कार्णवाप्लुतो बभूव ॥ ११ ॥

१२ ] ति० टी०—उन्मत्त इवेत्युक्तं विवृणोति—अस्ति कच्चिदिति प्रश्ने । कदम्बप्रियत्वात्सर्वथा त्वया दृष्टेत्यर्थः । यदीति । 'वेदा यदि प्रमाणम्' इतिवत् ॥ १२ ॥

रा० टी०—अस्तीति । हे कदम्ब ! कदम्बप्रिया प्रिया सीता कच्चित्त्वया दृष्टाऽस्ति, यदि जानीषे तर्हि शुभाननां सीतां शंस कथय । कच्चिदिति प्रश्ने ॥ १२ ॥

गो० टी०—अथ शोकमोहातिरेकेणाचेतनेषु चेतनबुद्ध्या तान् प्रतिभाषते—अपीत्यादिना । कदम्बानि कदम्बपुष्पाणि प्रियाणि यस्याः सा कदम्बप्रिया प्रिया मत्कान्ता । अपिः प्रश्ने । एवं प्रश्नेऽपि प्रतिवचनादानमनादरकृतमिति मत्वाह—कदम्बेति । शुभाननामिति चिह्नकीर्तनम् । कदम्बप्रियेत्यनेन दर्शनसंभावनोच्यते ॥ १२ ॥

१३ ] ति० टी०—स्निग्धपल्लवसंकाशां तद्वत्कोमलाङ्गीम् ॥ १३ ॥

रा० टी०—स्निग्धेति । हे बिल्व ! यदि सा सीता दृष्टा तर्हि स्निग्धपल्लवसंकाशां कोमलपल्लवसदृशकोमलाङ्गीं सीतां त्वं शंस ॥ १३ ॥

गो० टी०—स्निग्धेति । स्निग्धपल्लवसंकाशेत्यनेन कोमलाङ्गीत्वमुक्तम्, बिल्वोपमस्तनीत्यनेन पद्मिनीजातिरुक्ता । तदुक्तं रतिरहस्ये पद्मिनीलक्षणे—'स्तनयुगमपि यस्याः श्रीफलश्रीविडम्बि' इति ॥ १३ ॥

१४ ] ति० टी०—अर्जुनः करवीरः । 'करवीरः करालश्च करवीरी तथार्जुनः' इति निघण्टुः ॥ १४ ॥

१ शोकादिति गो. पाठः । २ गिरेश्चाद्रिं नदान्नदीमिति गो. पाठः । ३ बभूवेति गो. पाठः । ४ आप्लुत इति गो. पाठः । ५ संकाशां……वासिनीमिति गो. पाठः । ६ त्वमिति रा. पाठः । ७ वेति गो. पाठः । ८ भीरुरिति गो. पाठः । ९ अन्वीक्षमाण इति युक्तं भाति ।

ककुभः ककुभोरुं तां व्यक्तं जानाति मैथिलीम्। लतापल्लवपुष्पाढ्यो भाति ह्येष वनस्पतिः ॥ १५ ॥
भ्रमरैरुपगीतश्च यथा द्रुमवरो ह्यसि। एष व्यक्तं विजानाति तिलकस्तिलकप्रियाम् ॥ १६ ॥
अशोक शोकापनुद शोकोपहतचेतनम्। त्वन्नामानं कुरु क्षिप्रं प्रियासंदर्शनेन माम् ॥ १७ ॥
यदि ताल त्वया दृष्टा पक्वतालोपमस्तनी। कथयस्व वरारोहां कारुण्यं यदि ते मयि ॥ १८ ॥
यदि दृष्टा त्वया जम्बो जाम्बूनदसमप्रभा। प्रियां यदि विजानासि निःशङ्कं कथयस्व मे॥ १९ ॥
अहो त्वं कर्णिकाराद्य पुष्पितः शोभसे भृशम्। कर्णिकारप्रियां साध्वीं शंस दृष्टा यदि प्रिया ॥ २० ॥
चूतनीपमहासालान्पनसान्कुरवांस्तथा। दाडिमानपि तान्गत्वा दृष्ट्वा रामो महायशाः ॥ २१ ॥

---

रा० टी०–अथवेति। हे अर्जुन ! अथवा गर्वादिना विल्वादिकर्तृकप्रत्युत्तराभावे जनकस्य सुता सीता यदि जीवति प्राणान् पोषयति तर्हि प्रियां शंस न वा उपवासादिना क्वचित्तिष्ठतीत्यर्थः, तर्हि शंस। किंच जीवति मया सह लोकान् पालयिष्यति पुनर्मां मेलिष्यतीत्यर्थः। तर्हि शंस न वा तन्मेलनमेव पालनहेतुरिति तात्पर्यम्। तर्हि अर्जुनप्रियां प्रियां सीतां त्वं शंस ॥ १४ ॥

गो० टी०–अथवेति। बिल्वेनानुक्तौ अयं मत्सरान्न कथयतीत्यर्जुनवृक्षं पृच्छति। यदि ज्ञातं यदीत्यर्थः॥ १४ ॥

१५ ] ति० टी०–ककुभो मरुबकः ककुभस्य बहिस्त्वचोऽपि श्लक्ष्णत्वात्तद्वच्छ्लक्ष्णोरूम्। तस्य ज्ञातृत्वोपपादकम्–लतेत्यादि। तत्संबन्धं विना कथमियती संपदस्येति भावः॥ १५ ॥

रा० टी०–ककुभ इति। एषः ककुभः अर्जुनविशेषः वनस्पतिः वृक्षः यतः लताद्यान्यो भाति अतः ककुभोरूम् अर्जुनविशेषवृक्षशाखासदृशश्लक्ष्णोरुविशिष्टां मैथिलीं व्यक्तं स्फुटं जानाति ॥ १५ ॥

गो० टी०–प्रतिवचनादानेनायं न जानातीति मत्वा वृक्षान्तरं तत् ज्ञानं संभावयति--ककुभ इति। ककुभोऽर्जुनविशेषः। स च स्त्रीणामूरुतुल्यो भवति अत एवमुच्यते ककुभोरूमिति। केचित्करभोरूमिति वदन्ति। तत्प्रकृतशैलीविरुद्धम्। कदम्ब कदम्बप्रिया बिल्व बिल्वोपमस्तनीत्येवं ह्युच्यते। ज्ञाने हेतुमाह--यथेति। अनेन परिचयसंभावनोक्ता। जानाति कथं न कथमपीत्यर्थसिद्धम्। एवमुत्तरत्रापि श्लोके द्रष्टव्यम् ॥ १५ ॥

१६ ] ति० टी०–उप समीपे गीतः क्रियमाणझङ्कार इत्यर्थः। तथा द्रुमवरो ह्यसीति स्तौति। तत उत्तरमलब्ध्वाऽन्यं प्रत्याह—एष इति। तत्प्रियत्वात्तज्ज्ञेयत्वसंभावना ॥ १६ ॥

रा० टी०–भ्रमरैरिति। यतो भ्रमरैरुपगीतः अत एव द्रुमवरोऽसि अत एव एष तिलको भवान् तिलकप्रियां सीतां व्यक्तं स्फुटं विजानाति ॥ १६ ॥

गो० टी०–भ्रमरैरिति। उप समीपे गीतः कृतवेदघोष इति ध्वन्यते। यथा येन प्रकारेण एवंभूतो द्रुमवरोऽयं तेन प्रकारेण मन्ये एष जानाति तिलकः ॥ १६ ॥

१७–१८ ] ति० टी०–त्वन्नामानम् अशोकं कुर्वित्यर्थः। शोकापनुदत्वादेतत्करणयोग्यता ॥ १७ ॥ १८ ॥

रा० टी०–अशोकेति। शोकापनुद शोकनिवर्तक हे अशोक ! प्रियासंदर्शनेन त्वन्नामानमशोकं मां क्षिप्रं कुरु ॥ १७ ॥

गो० टी०–अशोकेति। स्ववचनकरणाय स्तौति–शोकापनुदेति। पचाद्यच् गुणाभाव आर्षः। त्वन्नामानं कुरु अशोकं कुरु संदर्शनेन ज्ञापनेन शोकनिवृत्त्यर्थम् प्रियां संदर्शयेत्यर्थः॥ १७ ॥

रा० टी०–यदीति। हे ताल ! तालोपमस्तनी सीता यदि त्वया दृष्टा यदि च मयि कारुण्यं तर्हि वरारोहां सीतां कथयस्व तद्वृत्तान्तं वद ॥ १८ ॥

गो० टी०–यदि तालेति। पक्वतालेति संबन्धोक्तिः॥१८॥

१९–२० ] ति० टी०–निःशङ्कम् मरणादिकथनेऽपि शङ्का न कार्येति भावः॥ १९ ॥ २० ॥

रा० टी०–यदीति। हे जम्बो ! जाम्बूनदसमप्रभा प्रिया यदि त्वया दृष्टा यदि च प्रियां विजानासि तर्हि निःशङ्कं सीताशङ्काराहित्यं यथा भवति तथा कथयस्व ॥ १९ ॥

गो० टी०–यदीति। जम्बु "अम्बार्थनद्योर्ह्रस्वः" इति ह्रस्वत्वम्, "एङ्ह्रस्वात्संबुद्धेः" इति सुलोपः। स्निग्धताकारेण जम्बूफलौपम्यं विजानीषे चिह्नत इति शेषः॥ १९ ॥

रा० टी०–अहो इति। हे कर्णिकार ! त्वं सुपुष्पैर्भृशमहो आश्चर्यमय शोभसे अतः प्रिया सीता यदि दृष्टा तर्हि कर्णिकार ! प्रियां साध्वीं सीतां शंस ॥ २० ॥

गो० टी०–अहो इति। सुपुष्पैरिति धार्मिकत्वोक्तिः॥२०॥

२१ ] ति० टी०–रामः पप्रच्छेति शेषः॥ २१ ॥

रा० टी०–चूतेति। महायशाः आरामः सर्वाभिरामदाता रामः चूतादीन् गत्वा दृष्ट्वा च पृच्छन् सन् उन्मत्त इव लक्ष्यते। इवेन विप्रलम्भदशायाः उन्मादात् वैलक्षण्यं सूचितम्। श्लोकद्वयमेकान्वयि ॥ २१ ॥ २२ ॥

---

१ यथेति गो. पाठः। २ ह्ययमिति गो. पाठः। ३ हृतेति रा. पाठः। ४ चेतसमिति गो. पाठः। ५ तालफलेति गो. पाठः। ६ सीता जम्बु जम्बुफलोपमामिति गो. पाठः। ७ विजानीषे इति गो. पाठः। ८ सुपुष्पैरिति गो. रा. पाठः। ९ प्रिया साध्वीति गो. पाठः। १० कुरवान्धवानिति गो. पाठः। ११ असनानिति गो. पाठः।

बकुलानथ पुंनागांश्चन्दनान्केतकांस्तथा । पृच्छन्रामो वने भ्रान्त उन्मत्त इव लक्ष्यते ॥ २२ ॥
अथवा मृगशावाक्षीं मृग जानासि मैथिलीम् । मृगविप्रेक्षणी कान्ता मृगीभिः सहिता भवेत् ॥ २३ ॥
गज सा गजनासोरूर्यदि दृष्टा त्वया भवेत् । तां मन्ये विदितां तुभ्यमाख्याहि वरवारण ॥ २४ ॥
शार्दूल यदि सा दृष्टा प्रिया चन्द्रनिभानना । मैथिली मम विस्रब्धः कथयस्व न ते भयम् ॥ २५ ॥
किं धावसि प्रिये नूनं दृष्टासि कमलेक्षणे । वृक्षैराच्छाद्य चात्मानं किं मां न प्रतिभाषसे ॥ २६ ॥
तिष्ठ तिष्ठ वरारोहे न तेऽस्ति करुणा मयि । नात्यर्थं हास्यशीलासि किमर्थं मामुपेक्षसे ॥ २७ ॥
पीतकौशेयकेनासि सूचिता वरवर्णिनि । धावन्त्यपि मया दृष्टा तिष्ठ यद्यस्ति सौहृदम् ॥ २८ ॥
नैव सा नूनमथवा हिंसिता चारुहासिनी । कृच्छ्रं प्राप्तं हि मां नूनं यथोपेक्षितुमर्हति ॥ २९ ॥

गो० टी०—चूतेति । श्लोकद्वयमेकान्वयम् । क्रियाभेदाद्रामपदद्वयम् । नीपः कदम्बः कुरवान् कुरबकान् रामः चूतादीन् गत्वा दृष्ट्वा पृच्छन् । आधावनेन सर्वत्र भ्रान्तः कृतभ्रमणः रामः उन्मत्तः चित्तविभ्रमवानिव लक्ष्यते अलक्ष्यत ॥२१॥२२॥

२२ ] ति० टी०—उन्मत्त इव मानुषव्यवहारनटनवशात् । वस्तुतो नोन्मत इत्यर्थः । उन्मादस्यापि विरहे औचित्याद्दशावस्थासु गणितत्वाच्च ॥ २२ ॥

२३ ] ति० टी०—मृगीभिः सहिता भवेदित्यादौ संभावनायां लिङ् । संभावनाबीजं मृगविप्रेक्षणीत्वम् ॥ २३ ॥

रा० टी०—वृक्षान् पृष्ट्वा तत उत्तरमलब्ध्वा च मृगादीन् पृच्छति—अथवेत्यादिभिः । अथवा वृक्षकर्तृकोत्तराभावेऽपि हे मृग ! कान्ता सीता यतो मृगविप्रेक्षणी मृगनेत्रा अतः मृगीभिः सहिता भवेत् अतः मृगशावाक्षीं मृगबालनयनीं सीतां त्वं जानासि, जानासि चेद्वदेत्यर्थः ॥ २३ ॥

गो० टी०—इति वृक्षान् पृष्ट्वा मृगान् पृच्छति—अथेति । वृक्षा मा कथयन्तु त्वं तु कथयेत्याशयेनाथवाशब्दप्रयोगः । मृगशावस्य मृगबालस्याक्षिणी वाक्षिणी यस्यास्ताम् । मृगस्य सीताज्ञाने योग्यतामाह—मृगेति । मृगवद्विविधं प्रेक्षत इति मृगविप्रेक्षणी सहिता । भवेदिति संभावनायां लिङ् ॥ २३ ॥

२४ ] ति० टी०—गजस्य वेत्तृत्वसंभावनाबीजं गजनासोरुत्वम् । यद्वोच्चत्वाद्दूरदर्शित्वम् ॥ २४ ॥

रा० टी०—गजेति । हे वरवारण ! गजनासोरू गजस्य वारणस्य नासावदुरू यस्याः सा सीता यदि त्वया दृष्टा भवेत् तर्हि तां सीतां तुभ्यं तव विदितां त्वत्कर्तृकाकारविशेषज्ञानविषयीभूतामहं मन्ये अत आख्याहि कथय ॥ २४ ॥

गो० टी०—गजेति । गजनासोरूः करिकरोरूः वरवारण वारणश्रेष्ठ हे गज ! तां सीतां तुभ्यं तव विदितां मन्ये शङ्के । गजनासोरूः सा त्वया यदि दृष्टा भवेत्तदाख्याहि ॥ २४ ॥

२५ ] ति० टी०—न ते भयम् त्वया भक्षिता चेदपि तथा कथनेऽपि तव मत्तो न भयमित्यर्थः ॥ २५ ॥

रा० टी०—शार्दूलेति ! हे शार्दूल चन्द्रनिभाननाह सा सीता यदि त्वया दृष्टा तर्हि मम विस्रब्धः विश्वस्तस्त्वं कथयस्व भयं सीताभीतिस्ते न ॥ २५ ॥

गो० टी०—शार्दूलेति । अत्र तुल्यगतित्वरूपः संबन्धो बोध्यः । न ते भयं शूरस्य तव भयं नास्ति । एतेन पूर्वोक्ताः सर्वे भीत्या न प्रत्युचुरिति रामस्याशयः ॥ २५ ॥

२६ ] ति० टी०—अतिविरहवशात्सर्वतस्तद्भ्रमावस्थां नाटयति—किमिति ॥ २६ ॥

रा० टी०—शार्दूलादप्युत्तरमलब्ध्वा अनुरागातिशयात् दृश्यमानामिव सीतां प्रत्याह—किमिति । हे प्रिये ! त्वं दृष्टा मयाऽवलोकिताऽसि अतः वृक्षैरात्मानमाच्छाद्य किं किमर्थं धावसि मां किं न प्रतिभाषसे ॥ २६ ॥

गो० टी०—पुनरवस्थाविशेषं दर्शयति—किं धावसीति । प्रिये किमर्थं धावसि धावन्ती दृष्टासि नूनम् । अथादर्शनादाह—वृक्षैरिति । इदं च पूर्वापेक्षयाऽतिरिक्तं दर्शनान्तरम् ॥२६॥२७॥

२७ ] ति० टी०—नात्यर्थं हास्यशीलासि नात्यन्तं परिहासशीलासि । किमर्थमिति । इतः परमदर्शने मृतिर्मे प्रसक्तेति भावः ॥ २७ ॥

रा० टी०—तिष्ठेति । त्वं तिष्ठ तिष्ठ मयि ते करुणा नास्ति काकाऽस्त्येवेत्यर्थः । ननु हास्यार्थमेवं क्रियत इत्यत आह—अत्यर्थम् अत्यन्तं हास्यशीला हास्यस्वभावा त्वं नासि अतो मां किं किमर्थमुपेक्षसे ॥ २७ ॥

२८ ] ति० टी०—पीतवस्त्रेण सूचितासि धावन्ती दृष्टासि च तस्मात्तिष्ठ ॥ २८ ॥

रा० टी०—पीतेति । पीतकौशेयकेन सूचिता उपलक्षिता धावन्त्यपि त्वं मया दृष्टा अतः यदि सौहृदमस्ति तर्हि तिष्ठ ॥ २८ ॥

गो० टी०—पीतेति । अन्तर्हितापि पीतकौशेयेन सूचिताऽसि । इदमपि प्रत्ययान्तरम् । पुनरपि प्रत्ययान्तरमाह—धावन्त्यपीति ॥ २८ ॥

२९ ] ति० टी०—पुनर्बोधावस्था नूनं सा नैव या दृष्टा । र्ति सा केत्यत्राह—अथवा हिंसिता रक्षोभिः । तत्र हेतुः—यथा

१ मल्लिका माधवीश्चैव चम्पकान्केतकीरिति गो. पाठः । २ विस्रब्धमिति गो. पाठः । ३ दूरमिति गो. पाठः । ४ नेति गो. पाठः । ५ यथोपेक्षितुमिति गो. रा. पाठः । ६ अर्हसीति रा. पाठः । ७ नयनामिति युक्तं भाति ।

व्यक्तं सा भक्षिता बाला राक्षसैः पिशिताशनैः । विभज्याङ्गानि सर्वाणि मया विरहिता प्रिया ॥ ३० ॥
नूनं तच्छुभदन्तोष्ठं सुनासं शुभकुण्डलम् । पूर्णचन्द्रनिभं ग्रस्तं मुखं निष्प्रभतां गतम् ॥ ३१ ॥
सा हि चन्दनवर्णाभा ग्रीवा ग्रैवेयकोचिता । कोमला विलपन्त्यास्तु कान्ताया भक्षिता शुभा ॥ ३२ ॥
नूनं विक्षिप्यमाणौ तौ बाहू पल्लवकोमलौ । भक्षितौ वेपमानाग्रौ सहस्ताभरणाङ्गदौ ॥ ३३ ॥
मया विरहिता बाला रक्षसां भक्षणाय वै । सार्थेनेव परित्यक्ता भक्षिता बहुबान्धवा ॥ ३४ ॥
हा लक्ष्मण महाबाहो पश्यसे त्वं प्रियां कचित् । हा प्रिये क्व गता भद्रे हा सीतेति पुनः पुनः ॥ ३५ ॥
इत्येवं विलपन्रामः परिधावन्वनाद्वनम् । क्वचिदुद्भ्रमते वेगात्कचिद्विभ्रमते बलात् ॥ ३६ ॥

---

एवंप्रकारेण कृच्छ्रं नूनं मां प्राप्तं सापेक्षितुमर्हति । नापेक्षते तस्मान्नैव सेत्यर्थः । 'उपेक्षितुम्' इति पाठे काकुः ॥ २९ ॥

रा० टी०–नेति । सा मरणधर्मरहिता त्वं नैव हिंसितासि अतः कृच्छ्रं त्वद्वियोगजनितदुःखं प्राप्तं मां यथा यथावत् उपेक्षितुमनादर्तुमर्हसि काका नेत्यर्थः । नञोऽत्राप्यन्वयो वा ॥ २९ ॥

गो० टी०–अथ सर्वात्मना दर्शनाभावात् प्रकारान्तरमुत्प्रेक्षते–नैवेति । अथवा सात्र नैव विद्यते किंतु हिंसिता । अत्र हेतुमाह–कृच्छ्रमिति । कृच्छ्रं दुःखं प्राप्तं मां यथा येन प्रकारेण उपेक्षितुं नार्हति नूनं तेन प्रकारेण हिंसितैव नूनम् ॥ २९ ॥

३० ] ति० टी०–उक्तमेव स्पष्टयति–व्यक्तमिति ॥ ३० ॥

रा० टी०–व्यक्तमिति । आविरहिता आविभिः स्वजनरूपरक्षकैः रहिता शून्या सा त्वं राक्षसैर्यदि भक्षिता तर्हि अङ्गानि राक्षसावयवान् विभज्य भङ्क्त्वा मय मां प्राप्नुहि ॥ ३० ॥

गो० टी०–एतदेव द्रढयति–व्यक्तमिति ॥ ३० ॥

३१ ] ति० टी०–निष्प्रभतां गतम् रक्षोभिर्ग्रासादिति शेषः ॥ ३१ ॥

रा० टी०–भक्षणमेव प्रकल्प्याह–नूनमिति । शुभदन्तादिविशिष्टं पूर्णचन्द्रनिभं मुखं सीतावदनं यदि ग्रस्तं राक्षसैर्भक्षितं तर्हि निष्प्रभतां गतं भविष्यतीति शेषः । नूनमिति यदीत्यर्थे ॥ ३१ ॥

गो० टी०–वक्ष्यमाणदशामनुसंधाय प्रलपति–नूनमिति । पूर्णचन्द्रमिव ग्रस्तं राहुग्रस्तं पूर्णचन्द्रमिव स्थितमित्यर्थः । एवंभूतं मुखं निष्प्रभतां गतं नूनमित्यन्वयश्च ॥ ३१ ॥

३२ ] ति० टी०–सर्वत्रोत्प्रेक्षा । ग्रैवेयं ग्रीवाभूषणम् ॥ ३२ ॥

रा० टी०–सेति । चम्पकवर्णाभा चम्पकवर्णसदृशवर्णविशिष्टा ग्रैवेयकोचिता अलङ्कारयोग्या विलपन्त्याः कान्ताया ग्रीवा भक्षिता एतेन तस्या अपि निष्प्रभात्वं भविष्यतीति सूचितम् ॥ ३२ ॥

गो० टी०–सा हीति । ग्रैवेयकं कण्ठभूषणम् । या उक्तविशेषणा ग्रीवा सा भक्षिता भवेदित्यन्वयः ॥ ३२ ॥

३३ ] ति० टी०–विक्षिप्यमाणावितस्ततः क्षिप्यमाणौ ॥ ३३ ॥

रा० टी०–नूनमिति । सहस्ताभरणाङ्गदौ हस्ताभरणेरङ्गदेन च विशिष्टौ बाहू भक्षितौ पूर्ववदेव सूचनम् ॥ ३३ ॥

गो० टी०–नूनमिति । हस्ताभरणं कटकम् ॥ ३३ ॥

३४ ] ति० टी०–रक्षसां भक्षणाय सा बाला मया स्वविरहिता कृता । बहुबान्धवापि या सार्थेन परित्यक्ता हीना स्त्री सेव भक्षिता रक्षोभिरिति शेषः ॥ ३४ ॥

रा० टी०–मयेति । बहुबान्धवाऽपि सा सीता रक्षसां भक्षणाय इव मया विरहिता कृता अत एव सार्थेन पान्थसमूहेन परित्यक्ता स्त्री इव भक्षिता ॥ ३४ ॥

गो० टी०–मयेति । भक्षणाय विरहिताऽऽसीदिति पूर्वार्धेऽन्वयः । सार्थेन पथिकसमुदायेन ॥ ३४ ॥

३५ ] ति० टी०–पश्यसे पश्यसि हा सीते इकारलोप आर्षः ॥ ३५ ॥

रा० टी०–हेति । हा लक्ष्मण! त्वं प्रियां क्वचित्पश्यसे पश्यसि इति पुनः पुनरुवाचेति शेषः ॥ ३५ ॥

गो० टी०–लक्ष्मणमामन्त्र्य पृच्छति–हा लक्ष्मणेति । पश्यसि पश्यसि किं हा सीते! इति वक्तव्ये हा सीतेति संधिरार्षः । इतिकरणस्य सर्गारम्भस्थेन विललापेत्यनेनान्वयः ॥ ३५ ॥

३६ ] ति० टी०–परिधावन्नुद्भ्रमते उत्पतति विभ्रमते वात्यावत् ॥ ३६ ॥

रा० टी०–इतीति । इत्येवंप्रकारेण विलपन् वनाद्वनं परिधावंश्च रामः क्वचिदुद्भ्रमते उत्पतति क्वचिद्बलाद्विभ्रमते वात्येव भ्रमणं प्राप्नोतीत्यर्थः ॥ ३६ ॥

गो० टी०–इत्येवमिति सार्धश्लोक एकान्वयः । प्रथमार्धं पूर्वानुवादरूपं क्वचिदविद्यानसादृश्याभावेऽपि वेगात् शोकवेगादेव उद्भ्रमते सीताप्रतीतिरूपं भ्रमं प्राप्नोति । क्वचिल्लतादौ बलात् सादृश्यबलात् विभ्रमते तत्प्रतीतिभ्रमं लभते । मत्त इवाभाति मत्तवत्परिभ्रमतीत्यर्थः ॥ ३६ ॥

---

१ चावितीति गो. पाठः । २ चम्पकेति गो. रा. पाठः । ३ शोभितेति गो. पाठः । ४ पश्यसीति गो. पाठः । ५ वेगादिति गो. रा. पाठः ।

क्वचिन्मत्त इवाभाति कान्तान्वेषणतत्परः । स वनानि नदीः शैलान्गिरिप्रस्रवणानि च ॥
काननानि च वेगेन भ्रमत्यपरिसंस्थितः ॥ ॥ ३७ ॥

तदा स गत्वा विपुलं महद्वनं परीत्य सर्वं त्वथ मैथिलीं प्रति ।
अनिष्ठिताशः स चकार मार्गणे पुनः प्रियायाः परमं परिश्रमम् ॥ ३८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे षष्टितमः सर्गः ॥ ६० ॥

## एकषष्टितमः सर्गः ।

एवं बहुशोऽन्विष्याप्यनासादितसीतमतो बहुशो विलपन्तं रामं सान्त्वयित्वा लक्ष्मणः पुनरन्वेषणे प्रवर्तयति । भूयोऽपि रामः सीतां गिरिदर्यादिष्वन्विष्याप्यनासाद्योच्चैराक्रोशति ।

दृष्ट्वाऽऽश्रमपदं शून्यं रामो दशरथात्मजः । रहितां पर्णशालां च [1]प्रविद्धान्यासनानि च ॥ १ ॥
अदृष्ट्वा तत्र वैदेहीं संनिरीक्ष्य च सर्वशः । उवाच रामः प्राक्रुश्य [2]प्रगृह्य रुचिरौ भुजौ ॥ २ ॥
क्व नु लक्ष्मण वैदेही कं वा देशमितो गता । केनाहृता वा सौमित्रे भक्षिता केन वा प्रिया ॥ ३ ॥
वृक्षेणावार्य यदि मां सीते हसितुमिच्छसि । अलं ते हसितेनाद्य मां भजस्व सुदुःखितम् ॥ ४ ॥

---

३७ ] ति० टी०—अपरिसंस्थितः क्वचिदपि स्थितिमलभमानो भ्रमति ॥ ३७ ॥

रा० टी०—क्वचिदिति । कान्तान्वेषणतत्परः अत एव अपरिसंस्थितः क्वचिदपि स्थितिमप्राप्तो रामः वनादीनि भ्रमति अत एव मत्त इवाभाति । सार्धश्लोक एकान्वयी ॥ ३७ ॥

गो० टी०—स इति । सुगम्यानि वनानि दुर्गमाणि काननानि गिरेरुद्भूतानि प्रस्रवणानि गिरिप्रस्रवणानि 'उत्सः प्रस्रवणं वारि' इत्यमरः । अपरिसंस्थितः अप्रतिष्ठितः ॥ ३७ ॥

३८ ] ति० टी०—अनिष्ठिताशोऽनिवृत्ताशः । मार्गणेऽन्वेषणे । पुनः परमं परिश्रमं चकार । 'अर्धो वा एष आत्मनः' इति श्रुतेस्तस्याः प्रियात्वम् । एतत्सर्वं लोकव्यवहारनटनमित्युक्तमेव, न त्वेतावता भगवति तमोरजसोः संभावनेति दिक् ॥ ३८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे षष्टितमः सर्गः ॥ ६० ॥

रा० टी०—तदेति । विपुलं वनं गत्वा मैथिलीं प्रति मैथिल्यर्थं परीत्य अन्विष्य अनिष्ठिताशः न निष्ठिता निवृत्ता आशा यस्य स रामः प्रियायाः मार्गणे अन्वेषणे परिश्रमं पुनश्चकार ॥ ३८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे षष्टितमः सर्गः ॥ ६० ॥

गो० टी०—तथेति । स रामः तथा क्वचिदुद्भ्रमत इत्यादिरीत्या विपुलं विशालं महत् निरन्तरं वनं गत्वा सर्वं वनस्य सर्वप्रदेशं परीत्य पुनः पुनश्चरित्वा अथ मैथिलीं प्रति मैथिलीलाभं प्रति अनिष्ठिताशः अनिष्पन्नाशः सन् पुनरपि प्रियाया मार्गणे परमं परिश्रमं चकार ॥ ३८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने षष्टितमः सर्गः ॥ ६० ॥

१ ] ति० टी०—प्रविद्धानीतस्ततः प्रक्षिप्तानि ॥ १ ॥

रा० टी०—रामवृत्तान्तमेवाह—दृष्ट्वेत्यादिभिः । दशरथात्मजो रामः [4]आश्रमपदं शून्यं सीतया रहितम् दृष्ट्वा पर्णशालामासनानि च विध्वस्तानि रावणेनेतस्ततः प्रक्षिप्तानि दृष्ट्वा अत्युद्विग्नोऽभवदिति शेषः ॥ १ ॥

गो० टी०—अथ रामस्य नवमीमवस्थां दर्शयत्येकषष्टितमे—दृष्ट्वेत्यादि । श्लोकद्वयमेकान्वयम् । शून्यं सीतारहितम् । रहितां सीतयेति शेषः । विध्वस्तानि रावणाक्रान्तत्वादिति भावः । सर्वशः सर्वत्र तत्र वनप्रदेशे वैदेहीं संनिरीक्ष्य विचित्य तत्रादृष्ट्वा पुनरपि रामग्रहणं क्रियाभेदात् प्राक्रुश्य सीतामुच्चैराहूय उवाच । भुजग्रहणं शोककृतविकारविशेषः । प्रगृह्य उत्क्षिप्य ॥ १ ॥ २ ॥

२ ] ति० टी०—प्राक्रुश्य हा इति शब्दं कृत्वा बाहू प्रगृह्योत्क्षिप्य ॥ २ ॥

रा० टी०—अदृष्ट्वेति । तत्र पर्णशालादौ सर्वशः संनिरीक्ष्य वैदेहीमदृष्ट्वा शुभौ भुजौ परिगृह्य प्राक्रुश्य आहूय राम उवाच ॥ २ ॥

३ ] ति० टी०—तदेव वचनम्—क्वेति ॥ ३ ॥

रा० टी०—तद्वचनप्रकारमाह—क्वेति । हे लक्ष्मण ! कं कंचिद्देशमितो गता वैदेही क्व अस्तीति शेषः, केन आहृता वा भक्षिता वा ॥ ३ ॥

गो० टी०—क्वेति । क्व नु अत्र वने कुत्र प्रदेशे वर्तते कं वा देशान्तरं गता ॥ ३ ॥

४ ] ति० टी०—वृक्षेणेत्यादि पुनः प्रलापः । आवार्याच्छाद्य ॥ ४ ॥

रा० टी०—पुनः सीतां प्रत्याह—वृक्षेणेति । हे सीते !

---

१ तथेति गो. पाठः । २ विध्वस्तानीति गो. रा. पाठः । ३ परिगृह्य शुभाविति रा. पाठः । ४ आश्रमेति भाति ।

यैः परिक्रीडसे सीते विश्वस्तैर्मृगपोतकैः । एते हीनास्त्वया सौम्ये ध्यायन्त्यस्राविलेक्षणाः ५ ॥
सीतया रहितोऽहं वै नहि जीवामि लक्ष्मण । वृतं शोकेन महता सीताहरणजेन माम् ॥ ६ ॥
परलोके महाराजो नूनं द्रक्ष्यति मे पिता । कथं प्रतिज्ञां संश्रुत्य मया त्वमभियोजितः ॥ ७ ॥
अपूरयित्वा तं कालं मत्सकाशमिहागतः । कामवृत्तमनार्यं वा मृषावादिनमेव च ॥ ८ ॥
धिक्त्वामिति परे लोके व्यक्तं वक्ष्यति मे पिता । विवशं शोकसंतप्तं दीनं भग्नमनोरथम् ॥ ९ ॥
मामिहोत्सृज्य करुणं कीर्तिर्नरमिवानृजुम् । क्व गच्छसि वरारोहे मा मोत्सृज सुमध्यमे ॥ १० ॥
त्वया विरहितश्चाहं त्यक्ष्ये जीवितमात्मनः । इतीव विलपन्रामः सीतादर्शनलालसः ॥ ११ ॥
न ददर्श सुदुःखार्तो राघवो जनकात्मजाम् । अनासादयमानं तं सीतां शोकपरायणम् ॥ १२ ॥
पङ्कमासाद्य विपुलं सीदन्तमिव कुञ्जरम् । लक्ष्मणो राममत्यर्थमुवाच हितकाम्यया ॥ १३ ॥

वृक्षेणावार्य स्वात्मानमाच्छाद्य यदि मां हसितुमिच्छसि तर्हि ते हसितेनालम् अद्य सुदुःखितं मां भजस्व ॥ ४ ॥

गो० टी०–वृक्षेणेति । आच्छाद्य स्वमिति शेषः । हसितुम् अन्तर्हितां मां ज्ञातुमसमर्थोऽसीत्येवं परिहसितुम् अद्य शोककाले ॥ ४ ॥

५–६ ] ति० टी०–विश्वस्तैश्चिरकालसहवासेन विश्वासं प्राप्तैः । ध्यायन्ति त्वामिति शेषः ॥ ५ ॥ ६ ॥

रा० टी०–यैरिति । विश्वस्तैः चिरकालसमीपस्थत्वेन प्राप्तविश्वासैः यैः मृगपोतैर्मृगबालैः परिक्रीडसे पर्यक्रीडथास्ते एते अस्राविलेक्षणा अश्रुव्याप्तनेत्राः ध्यायन्ति त्वामिति शेषः ॥ ५ ॥

गो० टी०–यैरिति । क्रीडसे क्रीडसि विश्वस्तैः चिरोपलालनेन विश्वासं प्राप्तैः मृगपोतकैः बालमृगैः 'पोतः पाकोऽर्भको डिम्भः' इत्यमरः । ध्यायन्ति त्वामिति शेषः । किमपि ध्यायन्तीति वा । सीतयेति । इदमर्धमेकं वाक्यम् ॥ ५ ॥

रा० टी०–सीतयेति । हे लक्ष्मण! सीतया रहितोऽहं नैव जीवामि इहलोके प्रजाः पालयिष्यामि साकेतं गमिष्यामीत्यर्थः, अत एव सीताहरणजेन शोकेन मृतं लोकान्तरगमनकर्तृत्वेन मृतसदृशं परलोके साकेते विद्यमानं मां मे पिता द्रक्ष्यति नूनं निश्चितमेतत् । 'वृतं शोकेन' इतिपाठेऽर्थः स्पष्ट एव । सार्धश्लोक एकान्वयी ॥ ६ ॥

गो० टी०–मृतमिति । परलोके स्वर्गे ॥ ६ ॥

७–८ ] ति० टी०–मरणेऽपि परलोके मम धिक्कार एव प्राप्नोतीत्याह–कथमिति । संश्रुत्य प्रतिज्ञाय । अभियोजितो नियुक्तः ॥ ७ ॥ ८ ॥

रा० टी०–ननु किं तद्दर्शनेनेत्यत आह–कथमिति । मया अभियोजितः प्रेरितस्त्वं प्रतिज्ञां संश्रुत्य चतुर्दशवर्षं वने निवत्स्यामीति संश्राव्य तं कालमपूरयित्वा इह अस्मिन्समये एव कथमागत इति कामवृत्तं स्वेच्छाचारिणम् अत एव अनार्यमार्यमार्गावर्तिनम् अत एव मृषावादिनं त्वां धिगिति च मे पिता मां वक्ष्यति । अर्धचतुष्टयमेकान्वयि एवमुत्तरत्रापि ॥ ७ ॥ ८ ॥

गो० टी०–कथमिति । श्लोकद्वयमेकान्वयम् । प्रतिज्ञां चतुर्दशवर्षवनवासप्रतिज्ञां संश्रुत्य अङ्गीकृत्य मया अभियोजितः नियुक्तस्त्वं तं कालमपूरयित्वा कथमागतः कामवृत्तं यथेष्टाचारम् अनार्यं दुर्जनं मां धिक् त्वामिति वक्ष्यति । अहमुपालम्भयोग्य एव कामवृत्तत्वादिति भावः ॥ ७ ॥ ८ ॥

९ ] ति० टी०–पुनः सीतामुद्दिश्य प्रलपति––विवशमिति ॥ ९ ॥

रा० टी०–विवशमिति । शोकसंतप्तं करुणं दयनीयं मां कीर्तिः अनृजुं कुटिलं नरमिव उत्सृज्य क्व गच्छसि मां मा उत्सृज । तत्र हेतुः त्वया विरहितोऽहम् आत्मनो जीवितं पालनं त्यक्ष्ये ॥ ९ ॥ १० ॥

गो० टी०–विवशमित्यादि श्लोकद्वयम् । विवशम् अस्वाधीनम् त्वत्परतन्त्रमित्यर्थः । करुणं यथा भवति तथा उत्सृज्य त्यागकालेऽपि तव दयाऽस्त्येवेति भावः । अनृजुं कपटाचारं मां नोत्सृज सुमध्यमे इदं मदुत्सर्जनं त्वल्लक्षणस्यानवुरूपामिति भावः । उत्सर्जने को दोष इत्यत्राह–त्वयेति ॥ ९ ॥ १० ॥

१०–११ ] ति० टी०–अनृजुं छलशीलं मामुत्सृज्य क्व गच्छसि । दृष्टेवाह–मां मा उत्सृज त्यज ॥ १० ॥ ११ ॥

रा० टी०–इतीवेति । इतीव अत्यन्तं विलपन् सुदुःखार्तो रामः जनकात्मजां न ददर्श ॥ ११ ॥

गो० टी०–इतीवेति । एवंप्रकारेणेत्यर्थः लालसः साभिलाषः ॥ ११ ॥

१२–१३ ] ति० टी०–सीतामनासादयमानमप्राप्नुवानं रामं लक्ष्मण उवाचेत्यन्वयः ॥ १२ ॥ १३ ॥

रा० टी०–अनासादयमानमिति सीतामनासादयमानम् अप्राप्नुवन्तम् अत एव शोकपरायणम् अत एव विपुलं पङ्कमासाद्य कुञ्जरमिव सीदन्तं रामम् अत्यर्थम् अत्यन्तं हितकाम्यया लक्ष्मण उवाच ॥ १२ ॥ १३ ॥

१ सहेति गो. पाठः । २ आस्रेति गो. पाठः । ३ मामिति रा. पाठः । ४ नोत्सृजेति गो. पाठः । ५ मोक्ष्य इति गो. पाठः । ६ दशरथात्मजमिति गो. पाठः । ७ सुइत्यधिकं नात्रापेक्षितमिति भाति ।

मा विषादं महाबुद्धे कुरु यत्नं मया सह । इदं [1]गिरिवरं वीर बहुकन्दरशोभितम् ॥ १४ ॥
प्रियकाननसंचारा वनोन्मत्ता च मैथिली । सा वनं वा प्रविष्टा स्यान्नलिनीं वा सुपुष्पिताम् १५
सरितं वापि संप्राप्ता मीनवञ्जुलसेविताम् । [[3]स्नातुकामा निलीना स्याद्धासकामा वने क्वचित् ।।]
[4]वित्रासयितुकामा वा लीना स्यात्कानने क्वचित् ॥ १६ ॥
जिज्ञासमाना [5]वैदेही त्वां मां च पुरुषर्षभ । तस्या ह्यन्वेषणे श्रीमन्क्षिप्रमेव [6]यतावहे ॥ १७ ॥
वनं सर्वं विचिनुवो यत्र सा जनकात्मजा । मन्यसे यदि काकुत्स्थ मा स्म शोके मनः कृथाः १८ ॥
एवमुक्तः स सौहार्दाल्लक्ष्मणेन समाहितः । सह सौमित्रिणा रामो विचेतुमुपचक्रमे ॥ १९ ॥
तौ वनानि गिरींश्चैव सरितश्च सरांसि च । निखिलेन [7]विचिन्वन्तौ सीतां दशरथात्मजौ ॥ २० ॥
तस्य शैलस्य सानूनि [8]शिलाश्च शिखराणि च । निखिलेन [7]विचिन्वन्तौ नैव तामभिजग्मतुः ॥ २१ ॥
विचित्य सर्वतः शैलं रामो लक्ष्मणमब्रवीत् । नेह पश्यामि सौमित्रे वैदेहीं पर्वते शुभाम् ॥ २२ ॥

---

गो० टी०–अनासाद्यमानमित्यादिसार्धश्लोक एकान्वयः। अप्राप्तवन्तमित्यर्थः । अत्यर्थं हितकाम्ययेत्यन्वयः ॥ १२॥१३॥

१४ ] ति० टी०–विषादं मा कुर्विति शेषः । कुरु यत्नम् अन्वेषण इति शेषः ॥ १४ ॥

रा० टी०–तद्वचनाकारमाह–मेति । हे महाबुद्धे ! विषादं मा कुरु । मया सह यत्नं तदन्वेषणप्रयत्नं कुरु । प्रयत्नमेवाह–बहुकन्दरशोभितम् इदं गिरिवनमस्तीति शेषः । मैथिली च प्रियकाननसंचारा प्रियः काननसंचारो वनसंचरणं यस्याः सा अत एव वनोन्मत्ता वनदर्शनहेतुकातिहर्षविशिष्टा सा सीता वनं सुपुष्पितां नलिनीं वा प्रविष्टा स्यात् । श्लोकद्वयमेकान्वयि ॥ १४ ॥ १५ ॥

गो० टी०–मा विषादमित्यादि । विषादं मा कुरु अन्वेषणे यत्नं कुर्वित्युभयत्रान्वयः । अन्वेषणयोग्यतामाह–इदं हीति । बहुकन्दरैः कन्दरतुल्यलतागृहैः शोभितम् ॥१४॥

१५ ] ति० टी०–प्रियः काननसंचारो यस्याः सा । वनोन्मत्ता वनस्य पुष्पितत्वदर्शनादुन्मत्ता हर्षवती ॥ १५ ॥

गो० टी०–प्रियेति । प्रियः काननसंचारो यस्याः सा वनोन्मत्ता च वनं जलम् 'जीवनं भुवनं वनम्' इत्यमरः वनेन वनदर्शनेन उन्मादवती अतिप्रियसलिलेत्यर्थः । यथाक्रमं तत्कार्यमाह–सेति ॥ १५ ॥

१६ ] ति० टी०–वञ्जुलो वेतसः । संभावनायां लिङ् । सर्वत्र वित्रासयितुकामा अस्मान् ॥ १६ ॥

रा० टी०–सरितमिति । मीनवञ्जुलसेवितां सरितं स्नातुकामा सीता संप्राप्ता असकामा अन्यत्र वासविषयकेच्छाभाववत्यपि वैदेही मां त्वां च जिज्ञासमाना आवयोरन्वेषणसामर्थ्यज्ञानेच्छावती सती वने क्वचिदवलीना निलीना स्याद्वा । तत्र वञ्जुलो वेतसः । सार्धश्लोक एकान्वयी ॥ १६ ॥

गो० टी०–सरितमिति । वञ्जुलो वेतसः सरितं स्नातुकामा संप्राप्ता स्यात् हासकामा परिहासकामा क्वचिद्वने निलीना स्याद्वा ॥ १६ ॥

गो० टी०–वित्रासयितुकामेति । पूर्वं हासार्थं गूढेति शङ्का अत्र वित्रासनार्थमिति भिदा । मां त्वां च जिज्ञासमान । आवयोरन्वेषणादिसामर्थ्यं जिज्ञासमानेत्यर्थः । तस्या इत्यर्धं पृथक् । श्रीमन् भार्यावियोगलक्षणं ते नास्तीति भावः ॥१७॥

१७ ] ति० टी०–जिज्ञासमानाऽऽवयोरन्वेषणसामर्थ्यम् । यतावहे यत्नं कुर्वः ॥ १७ ॥

रा० टी०–तस्या इति । हे श्रीमन् ! तस्याः सीतायाः अन्वेषणे यतावहे । अतः हे काकुत्स्थ ! यदि मन्यसे तर्हि यत्र जनकात्मजा संभाव्यते इति शेषः, तत्सर्वं वनं विचिनुवः अतः शोके मनो मा स्म कृथाः ॥ १७ ॥ १८ ॥

१८ ] ति० टी०–यत्र सा अस्तीति शेषः ॥ १८ ॥

गो० टी०–वनमिति । यदि मन्यसे यदीच्छसि तदा विचिनुवः त्वं शोके मनो मा कृथाः ॥ १८ ॥

१९–२२ ] ति० टी०–विचेतुमन्वेष्टुम् ॥ १९–२२ ॥

रा० टी०–एवमिति । लक्ष्मणेनैवमुक्तः अत एव समाहितो रामः विचेतुम् अन्वेषितुम् उपचक्रमे ॥ १९ ॥

गो० टी०–एवमिति । लक्ष्मणेनैवमुक्तः अत एव समाहितः कृतचित्तसमाधानः विचेतुम् अन्वेष्टुम् ॥ १९ ॥

रा० टी०–ताविति । वनादीनि निखिलेन कृत्स्नशः सीतां विचिन्वन्तौ दशरथात्मजौ आस्तामिति शेषः ॥ २० ॥

गो० टी०–ताविति । वनानि स्वल्पानि महान्ति च पुष्पापचयव्यग्रात्र सन्निहिता भवेदिति, गिरीन् विचित्रधातुसंग्रहसक्तात्र भवेदिति, सरितः हंसकारण्डवादिललितपुलिनतया तदवलोकनकुतुकिनी भवेदिति, सरांसि च फुल्लकमलषण्डमण्डिततया तद्विहारपरात्र भवेदिति, निखिलेन भावप्रधानो निर्देशः । कार्त्स्न्येन विचिन्वानौ सीता न लब्धेति त्यक्तव्यापारौ न

---

१ बाहो इति गो. पाठः । २ च हि वनं शूरेति गो. पाठः । ३ अर्धमेतदधिकं गो. रा. पाठे । ४ अर्धमेतत् रा. नास्ति । ५ वैदेहीमिति गो. पाठः । ६ यतावहै इति गो. पाठः । ७ विचिन्वानाविति गो. पाठः । ८ गुहाश्चेति गो. पाठः ।

ततो दुःखाभिसंतप्तो लक्ष्मणो वाक्यमब्रवीत् । विचरन्दण्डकारण्यं भ्रातरं दीप्ततेजसम् ॥ २३ ॥
प्राप्स्यसे[1] त्वं महाप्राज्ञ मैथिलीं जनकात्मजाम् । यथा विष्णुर्महाबाहुर्बलिं बद्ध्वा महीमिमाम् ॥ २४ ॥
एवमुक्तस्तु वीरेण[2] लक्ष्मणेन स राघवः । उवाच दीनया वाचा दुःखाभिहतचेतनः ॥ २५ ॥
वनं सुविचितं सर्वं पद्मिन्यः फुल्लपङ्कजाः । गिरिश्चायं महाप्राज्ञ बहुकन्दरनिर्झरः ॥
नहि पश्यामि वैदेहीं प्राणेभ्योऽपि गरीयसीम् ॥ ॥ २६ ॥
एवं स विलपन्रामः सीताहरणकर्शितः । दीनः शोकसमाविष्टो मुहूर्तं विह्वलोऽभवत् ॥ २७ ॥
स[3] विह्वलितसर्वाङ्गो गतबुद्धिर्विचेतनः । विषसादातुरो दीनो निःश्वस्याशीतमायतम् ॥ २८ ॥
बहुशः[4] स तु निःश्वस्य रामो राजीवलोचनः । हा प्रियेति विचुक्रोश बहुशो बाष्पगद्गदः ॥ २९ ॥
तं सान्त्वयामास ततो लक्ष्मणः प्रियबान्धवम्[5] । बहुप्रकारं शोकार्तः प्रश्रितः प्रश्रिताञ्जलिः[6] ॥ ३० ॥
अनादृत्य तु तद्वाक्यं लक्ष्मणोष्ठपुटच्युतम्[7] । अपश्यंस्तां प्रियां सीतां प्राक्रोशत्स पुनः पुनः ॥ ३१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे एकषष्टितमः सर्गः ॥ ६१ ॥

---

भवतः तौ दशरथात्मजौ न दृष्टेति तूष्णीं तिष्ठन्तौ भवतः मृदुप्रकृतिकत्वात् नैव तामभिजग्मतुरिति वक्ष्यमाणमत्राप्यनुषज्यते २०

रा० टी०–तस्येति । तस्य तत्रत्यस्य शैलस्य सानूनि शिलाप्रदेशान् गुहाश्च शिखराणि च निखिलेन कृत्स्नशः विचिन्वन्तौ तौ रामलक्ष्मणौ तां सीतां नैव अभिजग्मतुः ॥२१॥

गो० टी०–तस्येति । तस्य शैलस्य प्रस्रवणगिरेः सानूनि प्रस्थान् शिखराणि श्रृङ्गाणि ॥ २१ ॥

रा० टी०–विचित्येति । शैलं सर्वतो विचित्य अन्वेष्य इह पर्वते वैदेहीं न पश्यामीति रामो लक्ष्मणमब्रवीत् ॥ २२ ॥

गो० टी०–विचित्येति । शैलं सर्वतः सर्वत्र शैले "उभसर्वतसोः–" इति द्वितीया । अन्ते इतिकरणम् ॥ २२ ॥

२३ ] ति० टी०–'नेह पश्यामि वैदेहीम्' इत्युक्तेऽपि पुनर्विलापपरिहाराय लक्ष्मणोऽवददित्याह—**तत** इति । दण्डकारण्यं विचरंस्त्वं सीतां प्राप्स्यसि ॥ २३ ॥

रा० टी०–तत इति । ततः रामवचनश्रवणानन्तरं दुःखाभिसंतप्तो दण्डकारण्यं विचरन् लक्ष्मणः दीप्ततेजसं भ्रातरमब्रवीत् ॥ २३ ॥

गो० टी०–तत इति । दीप्ततेजसमिति वक्ष्यमाणसीतालाभहेतुलक्षणोक्तिः ॥ २३ ॥

२४–२५ ] ति० टी०–तत्र दृष्टान्तः—यथा विष्णुरिति ॥ २४ ॥ २५ ॥

रा० टी०–तद्वचनाकारमाह–प्राप्स्यसे इति । हे महाप्राज्ञ ! बलिं बद्ध्वा विष्णुर्महीमिव मैथिलीं त्वं प्राप्स्यसे ॥२४॥

गो० टी०–प्राप्स्यसीति । सीताहर्तारं बद्ध्वेति शेषः२४॥

रा० टी०–एवमिति । लक्ष्मणेन एवमुक्तो दुःखाभिहतचेतनो राघवः दीनया वाचा उवाच ॥ २५ ॥

गो० टी०–एवमिति । दुःखाभिहतचेतनः दुखोपहतहृदय इत्यर्थः ॥ २५ ॥

२६ ] ति० टी०–अस्तु लक्ष्मणैवं कृतं करणेन किमित्याह रामः–वनमिति ॥ २६ ॥

रा० टी०–तद्वचनाकारमाह–वनमिति । वनादि सुविचितं प्राणेभ्योऽपि गरीयसीं वैदेहीं तु न पश्यामि । सार्धश्लोक एकान्वयी ॥ २६ ॥

गो० टी०–वनमिति । पद्मिन्य इत्यादौ सुविचिता सुविचित इति विभक्तिविपरिणामः कार्यः ॥ २६ ॥

गो० टी०–न हीत्यर्धमेकं वाक्यम् ॥ २७ ॥

२७ ] ति० टी०–विह्वलः परवशः ॥ २७ ॥

रा० टी०–एवमिति । सीताहरणकर्शितो रामः एवं विलपन् सन् मुहूर्तं विह्वलोऽभवत् । अर्धद्वयमेकान्वयि ॥२७॥

गो० टी०–एवमिति । विह्वलः परवशः ॥ २८ ॥

२८ ] ति० टी०–गतबुद्धिर्ज्ञानशून्य इव । विचेतनश्चेष्टारहित इव । अशीतमुष्णम् । आयतं दीर्घम् ॥ २८ ॥

रा० टी०–स इति । विह्वलितसर्वाङ्गः सीतात्यन्वेषणफलाप्राप्त्या विह्वलितानि सर्वाङ्गानि यस्य सः अत एव गतबुद्धिः कर्तव्यविषयकनिश्चयरहितः आतुरो दुःखासहिष्णुः रामः आयतं दीर्घम् अशीतमुष्णं निःश्वस्य विषसाद ॥ २८ ॥

गो० टी०–संतप्त इति । अवसन्नाङ्गः कृशाङ्ग, गतबुद्धिः निःसंज्ञः विचेतनः निश्चेष्टः अशीतम् उष्णम् आयतं दीर्घमिति निश्वासक्रियाविशेषणम् ॥ २९ ॥

२९ ] ति० टी०–हा प्रिये ! इतीति इकारलोप आर्षः ॥२९॥

रा० टी०–बहुश इति । बाष्पगद्गदः स रामः बहुशो निःश्वस्य हा प्रिये ! इति बहुशो विचुक्रोश ॥ २९ ॥

गो०टी०–बहुलमिति । विचुक्रोश उच्चैः स्वरेणाहूतवान् ३०

३०–३१ ] ति० टी०–प्राश्रितो विनयोपेतः । प्रश्रिताञ्जलिर्बद्धाञ्जलिः ॥ ३० ॥ ३१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्ड एकषष्टितमः सर्गः ॥ ६१ ॥

---

१ प्राप्स्यसीति गो. पाठः । २ सौहार्दादिति गो. पाठः । ३ संतप्तो ह्यवसंनाङ्ग इति गो. पाठः । ४ बहुलमिति गो. पाठः । ५ बान्धव इति गो. रा. पाठः । ६ धर्मज्ञः प्राश्रितमिति गो. पाठः । ७ पुटाच्च्युतमिति गो. पाठः ।

## द्विषष्टितमः सर्गः ।

वैदेह्यदर्शनेन विक्लवो रामो लक्ष्मणं संबोध्य बहुशो विलपति ।

सीतामपश्यन्धर्मात्मा शोकोपहतचेतनः । विललाप महाबाहू रामः कमललोचनः ॥ १ ॥
पश्यन्निव च तां सीतामपश्यन्मन्मथार्दितः । उवाच राघवो वाक्यं विलापाश्रयदुर्वचम् ॥ २ ॥
त्वमशोकस्य शाखाभिः पुष्पप्रियतरा प्रिये । आवृणोषि शरीरं ते मम शोकविवर्धनी ॥ ३ ॥
कदलीकाण्डसदृशौ कदल्या संवृतावुभौ । ऊरू पश्यामि ते देवि नासि शक्ता निगूहितुम् ॥ ४ ॥
कर्णिकारवनं भद्रे हसन्ती देवि सेवसे । अलं ते परिहासेन मम बाधावहेन वै ॥ ५ ॥
[ परिहासेन किं सीते परिश्रान्तस्य मे प्रिये । अयं स परिहासोऽपि साधु देवि न रोचते ॥ ]
विशेषेणाश्रमस्थाने हासोऽयं न प्रशस्यते । अवगच्छामि ते शीलं परिहासप्रियं प्रिये ॥ ६ ॥

---

रा० टी०—तमिति । प्रियबान्धवः शोकार्तः प्रश्रितो नम्रः प्रश्रिताञ्जलिः प्रणयसूचकबद्धयुगलकरो लक्ष्मणः तं रामं बहुप्रकारं सान्त्वयामास ॥ ३० ॥

गो० टी०—तमिति । प्रश्रितं सविनयमिति क्रियाविशेषणम् । प्रश्रिताञ्जलिः बद्धाञ्जलिः ॥ ३१ ॥

रा० टी०—अनादृत्येति । लक्ष्मणोष्ठपुटच्युतं तदोष्ठद्वारान्निःसृतं तत् हितं लक्ष्मणवाक्यम् अनादृत्य प्रियामपश्यन् रामः पुनः पुनः प्राक्रोशत् ॥ ३१ ॥

इतिश्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे एकषष्टितमः सर्गः ॥ ६१ ॥

गो० टी०—अनादृत्येति । लक्ष्मणोष्ठपुटाच्च्युतं लक्ष्मणोक्तमित्यर्थः । पुनः प्राक्रोशत् उद्घोषेणाहूतवान् ॥ ३२ ॥

अस्मिन् सर्गे द्वात्रिंशच्छ्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने एकषष्टितमः सर्गः ॥६१॥

---

१ ] ति० टी०—एवं प्रियावियोगो दुःसह इति बोधयन्पुनः शोचति—सीतामिति । शोकोपहतचेतनः शोकेन सीतावियोगजेनोपहतज्ञान इव ॥ १ ॥

रा० टी०—रामविलापमेवाह यावत्सर्गम्—सीतामित्यादिभिः । सीतामपश्यन् अत एव शोकोपहतचेतनो रामः विललाप ॥ १ ॥

गो० टी०—अथ रामस्य ‘ दृङ्मनःसङ्गसंकल्पा जागरः कृशताऽरतिः । ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दश ’ इत्युक्तावस्थास्वरतिं नाम षष्ठीमवस्थां प्रदर्शयति द्विषष्टितमे—सीतामित्यादि । धर्मात्मा कामोपहतचेतन इत्याभ्यां धर्माविरुद्धकामस्यानिन्द्यत्वमुक्तम् । महाबाहुरित्यूर्ध्वबाहुत्वमुच्यते कमललोचन इत्यनेन समधुपद्मसाम्यादश्रुकालुष्यमुच्यते कामेन सीताविप्रलम्भजनितव्यामोहेन उपहता अप्रकृतिस्था चेतना चैतन्यं यस्य स तथा ॥ १ ॥

२ ] ति० टी०—अपश्यन्नपि भ्रमावस्थत्वात्पश्यन्निव विलापाश्रयत्वेन दुर्वचं गद्गदकण्ठत्वात् ॥ २ ॥

रा० टी०—पश्यन्निति । तां सीतां मन्मथार्दितः स्वप्रेर्यशिवद्वारा मन्मथार्दको राघवः सीतामपश्यन्नपि पश्यन्निव विलापाश्रयेण विलापाश्रयणेन हेतुना दुर्वचं वक्तुमशक्यं वाक्यमुवाच ॥ २ ॥

गो० टी०—पश्यन्निवेति । पुरोवर्तित्वाभावेन सीतामपश्यन्नपि मदनार्दितो मदनपरवशः तां पश्यन्निव संबोध्योवाच । तद्वाक्यं विलापाश्रयत्वेन दुर्वचम् गद्गदकण्ठत्वादिति भावः । यद्वा विलापसंबन्धादस्माभिर्वक्तुमशक्यम् अनुवदितुमशक्यमित्यर्थः ॥ २ ॥

३ ] ति० टी०—ते स्वस्य सीतायाः ॥ ३ ॥

रा० टी०—तद्वचनाकारमाह—त्वमित्यादिभिः । हे प्रिये ! पुष्पप्रियतया हेतुना मम शोकविवर्धनी त्वम् अशोकस्य शाखाभिः ते स्वस्य शरीरम् आवृणोषि ॥ ३ ॥

गो० टी०—पश्यन्निवेत्युक्तमुपपादयति सार्धैः—त्वमित्यादि पञ्चभिः । त्वम् अशोकस्य शाखाभिः पुष्पिततया स्वर्णसदृशीभिः स्वयं पुष्पप्रियतमा स्वशरीरं मम शोकविवर्धनी सती आवृणोषि किं तेनावरणेन मया दृष्टत्वादिति भावः ॥ ३ ॥

४ ] ति० टी०—‘ कदलीस्कन्ध—’ इति पाठेऽपि स्कन्धः काण्डम् । निगूहितुं शक्ता नासि आत्मानमिति शेषः ॥ ४ ॥

रा० टी०—कदलीति । कदलीकाण्डसदृशौ अत एव कदल्या संवृतौ उभौ ते तव ऊरू अहं पश्यामि अतः गूहितुम् आच्छादितुं त्वं न शक्तासि ॥ ४ ॥

गो० टी०—कदलीति । कदलीकाण्डसदृशौ कदलीदण्डतुल्यत्वेन कदल्या संवृतावपि ते ऊरू पश्यामि तेन तौ निगूहितुम् आछादितुं न शक्तासि दृष्टस्याच्छादनासंभवादिति भावः ॥ ४ ॥

५–६ ] ति० टी०—ततो वनान्तरं गच्छतीति भ्रमन्नाह—कर्णिकारेति ॥ ५ ॥ ६ ॥

---

१ कामेति गो. पाठः । २ तयेति गो. पाठः । ३ अधिकोऽयं श्लोकः गो. पाठे ।

आगच्छ त्वं विशालाक्षि शून्योऽयमुटजस्तव । सुव्यक्तं राक्षसैः सीता भक्षिता वा हृतापि वा ॥ ७ ॥
नहि सा विलपन्तं मामुपसंप्रैति लक्ष्मण । एतानि मृगयूथानि साश्रुनेत्राणि लक्ष्मण ॥ ८ ॥
शंसन्तीव हि [1]मे देवीं भक्षितां रजनीचरैः । हा ममार्ये क्व याताऽसि हा साध्वि वरवर्णिनि ॥ ९ ॥
हा सकामाद्य [2]कैकेयी देवि मेऽद्य भविष्यति । सीतया सह निर्यातो विना सीतामुपागतः ॥ १० ॥
कथं नाम प्रवेक्ष्यामि शून्यमन्तःपुरं [3]मम । निर्वीर्य इति लोको मां निर्दयश्चेति वक्ष्यति ॥ ११ ॥
कातरत्वं प्रकाशं हि सीतापनयनेन मे । निवृत्तवनवासश्च जनकं मिथिलाधिपम् ॥ १२ ॥
कुशलं परिपृच्छन्तं कथं शक्ष्ये निरीक्षितुम् । विदेहराजो नूनं मां दृष्ट्वा विरहितं तया ॥ १३ ॥

---

रा० टी०—कर्णिकारेति । हे देवि ! हसन्ती त्वं कर्णिकारवनं सेवसे तत्रैव परिहासाय निगूढाऽसीत्यर्थः । मम बाधावहेन मद्विघातकेन ते परिहासेनालं न कर्तव्यमित्यर्थः ॥ ५ ॥

गो० टी०—कर्णिकारेति । हसन्ती हासार्थं कर्णिकारवनं सेवसे ॥ ५ ॥

गो० टी०—परिहासेनेति । हे सीते ! परिहासेन किं किं प्रयोजनम् हि यस्मात् परिश्रान्तस्य मे मह्यं सः पूर्वं प्रियः अयं परिहासः साधु सम्यक् न रोचते ॥ ६ ॥

रा० टी०—विशेषेणेति । हे प्रिये ! यद्यपि परिहासप्रियं ते शीलं स्वभावम् अवगच्छामि जानामि तथापि आश्रमस्थाने विशेषश्रमस्थित्यर्थं विशेषेणायं ते परिहासः न प्रशस्यते । यद्यपीत्यध्याहृतम् ॥ ६ ॥

गो० टी०—विशेषेणेति । शीलं स्वभावः परिहासेन प्रीणातीति परिहासप्रियम् । “ इगुपधज्ञाप्रीकिरः कः ” इति कः । आगच्छेत्यर्धमेकं वाक्यम् ॥ ७ ॥

७ ] ति० टी०—पुनर्भ्रमनिवृत्त्याह—सुव्यक्तमिति ॥ ७ ॥

रा० टी०—आगच्छेति । हे विशालाक्षि ! तवायमुटजः पर्णशाला शून्यः अतस्त्वमागच्छ । अर्धं पृथक् । लक्ष्मणं संबोध्याह—सुव्यक्तमिति । हे लक्ष्मण ! सा सीता विलपन्तं मां यतो न उपसंप्रैति आगच्छति अतः राक्षसैः अभक्षितापि सीता अपहृता एव व्यक्तं स्फुटमेतत् । एको वाशब्द एवार्थे । अर्धद्वयमेकान्वयि ॥ ७ ॥

गो० टी०—सुव्यक्तमिति । हिहेतौ । उपसंप्रैति उपेक्षत इत्यर्थः ॥ ८ ॥

८ ] ति० टी०—उपसंप्रैति । हासरसेनोपेक्षत इत्यर्थः ॥८॥

रा० टी०—एतानीति । हे लक्ष्मण ! रजनीचरैः भक्षितां मे देवीं साश्रुनेत्राणि एतानि मृगयूथानि शंसन्तीव ॥ ८ ॥

गो० टी०—एतानीति । शंसनप्रकारः साश्रुनेत्राणीति ॥९॥

९ ] ति० टी०—भक्षितां शंसन्तीव । तत्र बीजम्—साश्रुनेत्राणीति ॥ ९ ॥

रा० टी०—हेति । मम संबन्धिनि आर्ये ! त्वं क्व यातासि हा कष्टमेतत् मे देवी माता अद्य सकामा तदीप्सितराक्षसवधस्य सन्निहितत्वात् प्राप्तमनोरथा भविष्यति ॥ ९ ॥

गो० टी०—हेति । मम मदीये आर्ये पूज्ये लोकैरिति शेषः । सकामा स्वाभीष्टास्मन्मरणसिद्धेरिति भावः ॥ १० ॥

१०–११ ] ति० टी०—विना सीतामुपागत इति सकामा भविष्यति । त्वया भक्षितयेति शेषः ॥ १० ॥ ११ ॥

रा० टी०—सीतयेति । सीतया सह निर्यातः इहागतः विना सीतां सीतारहितत्वमुपागतः प्राप्तोऽहं शून्यं ममान्तःपुरं कथं प्रवेक्ष्यामि किंच सीतां विना ममान्तःपुरमुपागतः प्राप्तोऽहं कथं प्रवेक्ष्यामि ॥ १० ॥

गो० टी०—सीतयेति । सीतां विनाऽऽगतत्वाच्छून्यम् ॥ ११ ॥

रा० टी०—निर्वीर्य इति । सीतापनयनेन सीतायाः हरणेन लोकः मां निर्वीर्य इति निर्दयश्चेति वक्ष्यति, प्रकाशं स्फुटं मे कातरत्वं च वक्ष्यति ॥ ११ ॥

गो० टी०—निर्वीर्य इति । कातरत्वम् अधीरत्वम् जीवितधारणाशक्तेरिति भावः ॥ १२ ॥

१२ ] ति० टी०—कातरत्वमशूरत्वम् सीतापनयनेन सीतानाशेन ॥ १२ ॥

रा० टी०—निवृत्तेति । निवृत्तवनवासोऽहं कुशलं परिपृच्छन्तं जनकं निरीक्षितुं कथं शक्ष्ये ॥ १२ ॥

गो० टी०—निवृत्तेति । निवृत्तवनवासः समाप्तवनवासः । ‘समाप्तौ वृत्त इत्यदः’ इति शब्दार्णवे । निरीक्षितुं प्रतिवक्तुं सुतरामिति भावः ॥ १३ ॥

१३ ] ति० टी०—तया सीतया विरहितं हीनम् ॥ १३ ॥

रा० टी०—विदेहेति । विदेहराजो जनकः तया सीतया विरहितं मां दृष्ट्वा सुताविनाशसंतप्तः कन्यादर्शनाभावहेतुकतापं प्राप्तः सन्मोहस्य वैचित्यस्य वशमधीनत्वमेष्यति ॥ १३ ॥

गो० टी०—विदेहेति । तया सीतया ॥ १४ ॥

---

१ वैदेहीमिति गो. पाठः । २ त्वया देवी कैकेयी सेति गो. पाठः । ३ पुर इति गो. पाठः ।

सुताविनाशसंतप्तो मोहस्य वशमेष्यति । अथवा न गमिष्यामि पुरीं भरतपालिताम् ॥ १४ ॥
स्वर्गोऽपि हि तया हीनः शून्य एव मतो मम । तन्मामुत्सृज्य हि वने गच्छायोध्यापुरीं शुभाम् ॥ १५ ॥
न त्वहं तां विना सीतां जीवेयं हि कथंचन । गाढमाश्लिष्य भरतो वाच्यो मद्वचनात्त्वया ॥ १६ ॥
अनुज्ञातोऽसि रामेण पालयेति वसुंधराम् । अम्बा च मम कैकेयी सुमित्रा च त्वया विभो ॥ १७ ॥
कौसल्या च यथान्यायमभिवाद्या ममाज्ञया । रक्षणीया प्रयत्नेन भवता सूक्तचारिणा ॥ १८ ॥
सीतायाश्च विनाशोऽयं मम चामित्रसूदन । विस्तरेण जनन्या मे विनिवेद्यस्त्वया भवेत् ॥ १९ ॥
इति विलपति राघवे तु दीने वनमुपगम्य तया विना सुकेश्या ।
भयविकलमुखस्तु लक्ष्मणोऽपि व्यथितमना भृशमातुरो बभूव ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे द्विषष्टितमः सर्गः ॥ ६२ ॥

## त्रिषष्टितमः सर्गः ।

बहुशो विचित्यापि सीतामनुपलभमानं राक्षसैस्तस्या दुरवस्थापादनं संभाव्योन्मत्तवद्बहुशः शोचन्तं च रामं लक्ष्मणः समाश्वासयति ।

स राजपुत्रः प्रियया विहीनः शोकेन मोहेन च पीड्यमानः ।
विषादयन्भ्रातरमार्तरूपो भूयो विषादं प्रविवेश तीव्रम् ॥ १ ॥

१४-१९ ] ति० टी०-'तात एव कृतार्थः स तत्रैव वसतादिति' इत्यर्धमधिकं कतकपाठे । तातो दशरथ एव कृतार्थः वसतादिति लोट् व्यत्ययेन । यतस्तत्रैव स्वर्गे एव वसति न तु जीवन्ती कौसल्येत्यर्थः । पक्षान्तरमादत्ते-अथवेति ॥ १४-१९ ॥

रा० टी०-अथवेति । अथवा भरतपालितां पुरीम् अहं न गमिष्यामि, एतेनात्मितान्यपरिहासवचनभीरुत्वं सूचितम् । ननु स्वपुरत्यागः कथं भविष्यतीत्यत आह-स्वर्गः अप्रकटसाकेतोऽपि तया सीतया हीनश्चेत् शून्यः सर्वसंपत्तिरहितः मम मतः ॥ १४ ॥

गो० टी०-अथ वेति । भरतपालितां सुसमृद्धामपीत्यर्थः ॥ १५ ॥

रा० टी०-मामिति । हि उक्तहेतोः वने माम् उत्सृज्य अयोध्यां पुरीं गच्छ अहं तु सीतां विना कथंचन न जीवेयम् ॥ १५ ॥

गो० टी०-मामिति । कथंचन त्वत्कृताश्वासनेनापीत्यर्थः ॥ १६ ॥

रा० टी०-गाढमिति । रामेणानुज्ञातस्त्वं वसुंधरां पालय इति वचः गाढमाश्लिष्य मद्वचनाद्भरतस्त्वया वाच्यः ॥ १६ ॥

गो० टी०-गाढमिति । पालयेति वाच्य इत्यन्वयः ॥ १७ ॥

रा० टी०-अम्बेति । अम्बादिः ममाज्ञया त्वया अभिवाद्या प्रणमनीया प्रयत्नेन भवता रक्षणीया च ॥ १७ ॥ १८ ॥

गो० टी०-अम्बेति । प्रथमोक्तिः शोकजाग्रहात् ॥ १८ ॥

गो० टी०-रक्षणीयेत्यर्धम् । सा कौसल्या ॥ १९ ॥

रा० टी०-सीताया इति । सीतायाः मम च विनाशः परस्परमदर्शनं मे जनन्याः अग्रे त्वया विशेषेण निवेद्यः कथनीयो भवेत् ॥ १९ ॥

गो० टी०-सीतायाश्चेति । मम विनाशः भावीति शेषः २०

२० ] ति० टी०-भयविकलमुखो भयेन विवर्णमुखः ॥ २० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे द्विषष्टितमः सर्गः ॥ ६२ ॥

रा० टी०-इतीति । सुकेश्या शोभनकेशवत्या तया सीतया विना वनमुपगम्य प्राप्य इत्यनेन प्रकारेण राघवे विलपति सति भयविकलमुखः वियोगसूचकरामवचनश्रवणजनितभयहेतुकवैकल्यविशिष्टमुखविशिष्टः अत एव व्यथितमनाः लक्ष्मणोऽपि भृशमत्यन्तमातुरो बभूव ॥ २० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे द्विषष्टितमः सर्गः ॥ ६२ ॥

गो० टी०-इतीति । तया विना कृतं वनमुपगम्येत्यर्थः । सुकेश्येति विलापहेतुः भयेन विकलमुखः विवर्णमुखः आतुरः तप्तशरीरः ॥ २१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने द्विषष्टितमः सर्गः ॥ ६२ ॥

१ ] ति० टी०-शोक इष्टवियोगजो वृत्तिविशेषः, तज्जन्यं चित्तवैकल्यं मोहः ॥ १ ॥

१ स्नेहेनेति गो. पाठः । २ सीतयेति गो. पाठः । ३ मामिहोत्सृज्य हीति गो. रा. पाठः । ४ अयोध्यां पुरीमिति गो. रा. पाठः । ५ सौक्तिकारिणेति गो. पाठः । ६ कर्शनेति गो. पाठः । ७ स्विति गो. पाठः । ८ कामेन शोकेनेति गो. पाठः ।

स लक्ष्मणं शोकवशाभिपन्नं शोके निमग्नो विपुले तु रामः ।
उवाच वाक्यं व्यसनानुरूपमुष्णं विनिःश्वस्य रुदन्सशोकम् ॥ २ ॥
न मद्विधो दुष्कृतकर्मकारी मन्ये द्वितीयोऽस्ति वसुंधरायाम् ।
शोकानुशोको हि परम्पराया मामेति भिन्दन्हृदयं मनश्च ॥ ३ ॥
पूर्वं मया नूनमभीप्सितानि पापानि कर्माण्यसकृत्कृतानि ।
तत्रायमद्यापतितो विपाको दुःखेन दुःखं यदहं विशामि ॥ ४ ॥
राज्यप्रणाशः स्वजनैर्वियोगः पितुर्विनाशो जननीवियोगः ।
सर्वाणि मे लक्ष्मण शोकवेगमापूरयन्ति प्रविचिन्तितानि ॥ ५ ॥
सर्वं तु दुःखं मम लक्ष्मणेदं शान्तं शरीरे वनमेत्य क्लेशम् ।
सीतावियोगात्पुनरभ्युदीर्णं काष्ठैरिवाग्निः सहसोपदीप्तः ॥ ६ ॥

---

रा० टी०—रामविलापमेवाह—स इत्यादिभिः । प्रियया विहीनः अत एव शोकेन मोहेन शोकजनितकर्तव्यविषयकाविवेकेन पीड्यमानः अत एव आर्तरूपः राजपुत्रः स रामः भ्रातरं विषादयन् सन् भूयोऽधिकं तीव्रं विषादं प्रविवेश ॥१॥

गो० टी०—अथ तापाख्यां मदनावस्थां दर्शयति त्रिषष्टितमे—स राजपुत्र इत्यादि । कामेन प्रियास्मरणजन्येन शोकेन प्रियाविरहजन्येन भ्रातरं भूयो विषादयन् आर्तरूपः पीडितशरीरः स रामः तीव्रं विषादं प्रविवेश । स्वशोकलक्ष्मणशोकाभ्याम् अधिकतरं शोकं गत इत्यर्थः ॥ १ ॥

२ ] ति० टी०—शोकवशेनाभिपन्नं पीडितम् । 'विपुलेऽति रामः' इति पाठेऽतिशयिते शोके इत्यर्थः । व्यसनानुरूपं लोकस्य दुःखप्रसङ्गे उचितम् ॥ २ ॥

रा० टी०—विषादप्रवेशानन्तरकालिकं वृत्तमाह—स इति । विपुले शोके निमग्नः स रामः व्यसनानुरूपं दुःखितजनयोग्यं वाक्यम् उष्णं विनिःश्वस्य सशोकं रुदन् सन् शोकवशाभिपन्नं शोकवशेन खिन्नं लक्ष्मणमुवाच ॥ २ ॥

गो० टी०—स इति । विपुले शोके निमग्नः लक्ष्मणशोकदर्शनजशोकेन विपुले शोके सीताशोके निमग्नः व्यसनानुरूपं लोकवदुःखप्रसङ्गोचितम् उष्णं यथा तथा विनिःश्वस्य रुदन् सशोकं वाक्यमुवाच ॥ २ ॥

३ ] ति० टी०—शोकमनुप्रवृत्तः शोकः शोकानुशोकः सः परम्परायाः तृतीयार्थे षष्ठी । परम्परयाऽविच्छेदेन हि यतो मां हृदयं तदधिष्ठानमात्मानं मनश्च भिन्दन्नेति प्राप्नोति ॥ ३ ॥

रा० टी०—तद्वचनाकारमाह—नेत्यादिभिः । मद्विधः दुष्कृतकर्मकारी दुष्कृतम् अन्यैरनाचरितं कर्म करोति तच्छीलः द्वितीयः वसुंधरायां नास्ति इत्यहं मन्ये अत एव हृत्सुखापहारकोऽयं शोकानुशोकः शोकोत्तरं प्रवृत्तः शोकः परंपरायाः परंपरया मनो भिन्दन् सन्नेव मामेति ॥ ३ ॥

गो० टी०—द्वितीयो मद्विधो दुष्कृतकर्मकारी पापकर्मकारी वसुंधरायां नास्तीति मन्ये । शोकेनेति । न मद्विध इत्यादिनोक्तमनेनार्थेन स्पष्टीक्रियते । परम्परायाः परम्परारूपेणागतः शोकेन शोकः शोकाच्छोकः हृदयं मनश्च भिन्दन् मामेति । मनोऽधिष्ठानं हृदयम् ॥ ३ ॥

४ ] ति० टी०—उक्तमेव विस्तरेणाह—पूर्वमिति । अभीप्सितानि चिकीर्षाविषयत्वं प्राप्तानि । तत्र तेषां मध्ये केषांचिद्विपाकः फलपरिपाकोऽयमद्यापतितः प्राप्तः । दुःखेन दुःखम् दुःखपरम्परामित्यर्थः ॥ ४ ॥

रा० टी०—स्वदुष्कृतकर्मकारित्वमेव प्रकटयन्नाह—पूर्वमिति । असकृत् वारंवारं कृतानि राक्षसैराचरितानि पापानि कर्माणि पूर्वं स्वाप्राकट्यसमये तत्र साकेते विद्यमानेन मया यत् यस्मात् अभीप्सितानि मदिच्छाविषयीभूतानि तस्मात् अयं विपाकः इच्छामात्रजनितफलम् अद्यापतितः अत एव दुःखेन दुःखम् अहं विशामि एतेन यदि मदिच्छा न स्यात्तर्हि राक्षसानां ब्रह्मादिप्रेरितदुष्कृतकर्मप्रवृत्तिर्न स्यादिति सूचितं तेन सकलजनकर्तृत्वादीनां स्वायत्तत्वं ध्वनितम् । तथाच श्रुतिः—"कर्तृत्वं करणत्वं च स्वभावश्चेतना धृतिः । यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षया" इति ॥ ४ ॥

गो० टी०—एवं शोकपारम्पर्ये हेतुमुत्प्रेक्षते—पूर्वमिति । पूर्वं पूर्वजन्मनि अभीप्सितानि प्रार्थितानि तत्र तेषु पापेषु विपाकः कार्योन्मुख्यम् आपतितः प्राप्तः ॥ ४ ॥

५ ] ति० टी०—तामेवाह—राज्येति । एतानि प्रविचिन्तितानि शोकवेगमिदानींतनमापूरयन्ति ॥ ५ ॥

रा० टी०—विपाकस्वरूपं बोधयन्नाह—राज्येति । हे लक्ष्मण ! प्रविचिन्तितानि मे सर्वाणि राज्यप्रणाशादीनि मे शोकवेगम् आपूरयन्ति ॥ ५ ॥

गो० टी०—दुःखानि परिगणयति—राज्येति । राज्यप्रणाशो राज्यभ्रंशः, स्वजनैः बन्धुभिः । सर्वाणीति सामान्ये नपुंसकम् । शोकवेगं शोकराशिं प्रविचिन्तितानि स्मृतानि ॥ ५ ॥

६ ] ति० टी०—वनमेत्य प्राप्य शरीरे क्लेशमनुभूयापि

---

१ शोकेनेति गो. पाठः । २ शून्यमिति गो. पाठः । ३ प्रदीप्त इति गो. पाठः ।

सा नूनमार्या मम राक्षसेन ह्यभ्याहृता खं समुपेत्य भीरुः ।
अप्यस्वरं सुस्वरविप्रलापा भयेन विक्रन्दितवत्यभीक्ष्णम् ॥ ७ ॥
तौ लोहितस्य प्रियदर्शनस्य सदोचितावुत्तमचन्दनस्य ।
वृत्तौ स्तनौ शोणितपङ्कदिग्धौ नूनं प्रियाया मम नाभिपातः ॥ ८ ॥
तच्छ्लक्ष्णसुव्यक्तमृदुप्रलापं तस्या मुखं कुञ्चितकेशभारम् ।
रक्षोवशं नूनमुपागताया न भ्राजते राहुमुखे यथेन्दुः ॥ ९ ॥
तां हारपाशस्य सदोचितान्तां ग्रीवां प्रियाया मम सुव्रतायाः ।
रक्षांसि नूनं परिपीतवन्ति शून्ये हि भित्त्वा रुधिराशनानि ॥ १० ॥
मया विहीना विजने वने सा रक्षोभिराहृत्य विकृष्यमाणा ।
नूनं विनादं कुररीव दीना सा मुक्तवत्यायतकान्तनेत्रा ॥ ११ ॥

---

सीतासंनिधानात्सर्वं शान्तम् । अथ सीतावियोगात्पुनरुदीर्णं द्वाढं प्राप्तम् । प्रियावियोग एव दुःसह इति भावः ॥ ६ ॥

रा० टी०—सर्वमिति । सर्वं राज्यप्रणाशादिजनितम् इदं दुःखं शून्यं बहुजनरहितं वनमेत्य शरीरे अन्तःकरणे शान्तं सीतानिरन्तरसंबन्धजनितातिप्रमोदेन निवृत्तमित्यर्थः सीतावियोगात्तु काष्ठैः उपदीप्तो वह्निरिव सहसा पुनरभ्युदीर्णं समुत्थितम् ॥ ६ ॥

गो० टी०—सर्वमिति । शून्यं निर्जनं वनमेत्य स्थितस्य मम शरीरे शान्तं शरीरक्लेशेन विस्मृतमित्यर्थः । उदीर्णम् उद्रिक्तं प्रदीप्तोऽग्निः पुनः काष्ठैरिव ॥ ६ ॥

७ ] ति० टी०—सा राक्षसेन नूनमभ्याहृता । तदा खमाकाशं समुपेत्य प्राप्यास्वरं विस्वरं विकन्दितवत्यपि संभाव्यत एवमित्यन्वयः ॥ ७ ॥

रा० टी०—सीताविषये स्वकृतनिश्चयमाह—सेति । आर्या सर्वनारीश्रेष्ठा राक्षसेन खमाकाशमुपेत्य अभ्याहृता अत एव सुस्वरविप्रलापा सुस्वरः शोभनस्वरविशिष्टः विप्रलापो यस्याः सा भीरुः मम सीता अभीक्ष्णं भयेन मद्वियोगजनितभीत्या विकन्दितवती नूनं मया निश्चितमेतत् ॥ ७ ॥

गो० टी०—सेति । मम संबन्धिनी आर्या सा राक्षसेन केनचिद्बलाद्धृता सती खमाकाशमुपेत्य भीरुतया सस्वरविप्रलापा सती उच्चैर्ध्वनियुक्तविप्रलापा सती भयेन अपस्वरम् अपगतनिजस्वरं यथा तथा अभीक्ष्णमत्यर्थम् आक्रन्दितवती उद्धोषितवतीत्युत्प्रेक्षा ॥ ७ ॥

८-९ ] ति० टी—लोहितस्य चन्दनस्य हरिचन्दनस्य । 'लोहितं हरिचन्दनम्' इति कोशात् । शोणितपङ्कदिग्धौ भक्षणाय राक्षसैर्विशसनादिति भावः । मम नाभिपातः, एवमपि मम शरीरस्याभिपातो न जायत इत्यर्थः ॥ ८ ॥ ९ ॥

रा० टी०—ताविति । लोहितस्य कुङ्कुमादिना मनोहररागविशिष्टस्य अत एव प्रियदर्शनस्य उत्तमचन्दनस्य सदोचितौ नित्यं संलग्नौ अत एव शोणितपङ्कदिग्धौ शोणितपङ्कसंलिप्तसदृशौ वृत्तौ तौ प्रियायाः स्तनौ मम नाभिभातः मां न प्रकाशयेते महदनुचितमेतदिति तात्पर्यम् । 'नाभिपातः' इति पाठे वियोगदुःखान्न रक्षत इत्यर्थः । शोणितपङ्कदिग्धशब्दः आचारक्किबन्तप्रकृतिककर्तृक्किबन्तः ॥ ८ ॥

गो० टी०—ताविति । लोहितस्य लोहिताख्यस्य उत्तमचन्दनस्य 'रक्तं तु चन्दनं विद्याल्लोहितं हरिचन्दनम्' इति । यद्वा कुङ्कुमादिना रक्तस्य उत्तमचन्दनस्य सदा उचितौ योग्यौ वृत्तौ वर्तुलौ मम प्रियायाः स्तनौ शोणितपङ्कदिग्धौ राक्षसेन भक्षणाय विशसनादिति भावः । एवंभूतौ सन्तौ नाभिभातः न प्रकाशेते । वर्तमानसामीप्ये वर्तमानवत्प्रयोगः । 'मम नाभिपातः' इति पाठान्तरे एवमपि मम देहपातो न जायत इत्यर्थः ॥ ८ ॥

रा० टी०—तदिति । श्लक्ष्णः मनोहरः सुव्यक्तः संस्फुटः मृदुः ऋजुवर्णविशिष्टः प्रलापो यस्मात् तत् कुञ्चितानां केशानां भारो यस्मिंस्तत् रक्षोवशमुपागतायाः प्राप्तायाः तस्याः सीतायाः तन्मुखं राहुमुखे इन्दुरिव न भ्राजते ॥ ९ ॥

गो० टी०—तदिति । तत् पूर्वमनुभूतं श्लक्ष्णो मधुरः सुव्यक्तः अर्थव्यक्तियुक्तः मृदुः अपरुषः प्रलापो यस्य तत् ॥९॥

१०-११ ] ति० टी०—हारपाशो हाररूपा माला तस्या उचितान्तामुचितोऽन्तः प्रान्तभागो यस्यास्ताम् । तां कम्बुतुल्यां ग्रीवामित्यर्थः । 'परिपीतवन्ति' इति पाठे रुधिरमिति शेषः । भविष्यन्ति जातानीति वा । शून्ये विजने ॥ १० ॥ ११ ॥

रा० टी०—तामिति । हारपाशस्य हाररूपमालायाः सदोचितां तां सदोचितः अन्तःप्रान्तभागो यस्यास्तां सुव्रतायाः मम प्रियायाः तां सर्वविलक्षणां ग्रीवां रुधिराशनानि रक्षांसि भित्त्वा रुधिरं पिबन्ति नूनं काका नेत्यर्थः ॥ १० ॥

गो० टी०—तामिति । हारपाशस्य हारमालायाः सदोचि-

---

१ बलाद्धृतेति गो. स्वभ्याहृतेति रा. पाठः । २ अपस्वरं सस्वरमिति गो. अपस्वरमिति रा. पाठः । ३ अभिभात इति गो. रा. पाठः । ४ सदोचिताया इति गो. पाठः । ५ रुधिरं पिबन्तीति रा. पाठः । रुधिरं पिबन्तीत्येव पाठो तिलकपुस्तके भाति यतस्तट्टीकायां परिपीतवन्तीति पाठ इति पाठान्तरं प्रदर्श्यते । ६ विभिद्य शून्ये इति गो. पाठः । ७ येति गो. पाठः । ८ आहृत्येति गो. पाठः ।

अस्मिन्मया सार्धमुदारशीला शिलातले पूर्वमुपोपविष्टा ।
कान्तस्मिता लक्ष्मण जातहासा त्वामाह सीता बहुवाक्यजातम् ॥ १२ ॥
गोदावरीयं सरितां वरिष्ठा प्रिया प्रियाया मम नित्यकालम् ।
अप्यत्र गच्छेदिति चिन्तयामि नैकाकिनी याति हि सा कदाचित् ॥ १३ ॥
पद्मानना पद्मपलाशनेत्रा पद्मानि वाऽऽनेतुमभिप्रयाता ।
तदप्ययुक्तं नहि सा कदाचिन्मया विना गच्छति पङ्कजानि ॥ १४ ॥
कामं त्विदं पुष्पितवृक्षषण्डं नानाविधैः पक्षिगणैरुपेतम् ।
वनं प्रयाता नु तदप्ययुक्तमेकाकिनी साऽतिबिभेति भीरुः ॥ १५ ॥

तायाः सुव्रतायाः मदन्यं स्प्रष्टुमनिच्छन्त्याः मम प्रियायाः ग्रीवां शून्ये एकान्ते विभिद्य रुधिररूपाणि अशनानि पानानि परिपीतवन्ति नूनम् ॥ १० ॥

रा० टी०—मयेति । आयतकान्तनेत्रा आयते विस्तृते कान्ताय पत्यन्वेषणाय नेत्रे यस्याः सा मया विहीना अत एव रक्षोभिराहृत्य विकृष्यमाणा या सीता सा दीना सती कुररीव निनादं मुक्तवती कृतवती नूनं निश्चितमेतत् ॥ ११ ॥

गो० टी०—मयेति । या विजने वने मया विहीना सा कुररीव क्रौञ्चीव विनादं मुक्तवती । आयतकान्तनेत्रेत्यनेन तत्काले मदागमनमार्गव्यग्रतोक्ता ॥ ११ ॥

१२ ] ति० टी०—उपोपविष्टा समीपावस्थिता । निःशब्दं स्मितम् ईषत्सशब्दो हासः ॥ १२ ॥

रा० टी०—पूर्वं कस्यांचित् शिलायां स्थित्वा सीतया सह परिहासादिकं जातं तामवलोक्याह—अस्मिन्निति । कान्तमतिरमणीयं स्मितं यस्याः सा उदारशीला पूर्वमस्मिन् शिलातले मया सार्धमुपोपविष्टा, जातहासा जातो हासः परिहासो यया सा सीता बहुवाक्यजातं परिहासमात्रविषयकत्वहेतुककुटिलतवाक्यसमूहं त्वामाह ॥ १२ ॥

गो०टी०—अस्मिन्मया सार्धमुदारशीला शिलातले पूर्वमुपोपविष्टा। कान्तस्मिता लक्ष्मण जातहासा त्वामाह सीता बहुवाक्यजातम् ? ॥ पूर्वं गोदावर्यां सीतया सह सरसलीलाविहारो यस्मिन् कृतस्तस्मिन् प्रदेशे गत्वा तद्दर्शनेन जातपूर्वस्मरणो लक्ष्मणं प्रत्याह—अस्मिन् एवं शून्यतया स्थिते प्रदेशे हि मया पूर्वं निधिलब्धः मया सार्धं प्रणयधारायामहं पण्डितमानी तादृशोऽहमप्यप्रधानोऽभवं तदीयविदग्धव्यवहारेषु उदारशीला पूर्वं नगरवासे श्वश्र्वादिसंनिधानेन सङ्कुचितविहारा स्थिता सीतया सार्धमिति ह्युक्तम् सांप्रतं तु एकान्तस्थलतया सरसभोगेषु सर्वस्वदानं कृतवती शिलातले पूर्वमुपोपविष्टा गोदावरीसलिले चिरं सलिलविहारे प्रवृत्ते खिन्नो रामः प्रदेशान्तरे निस्तरणायोगात् केनचिच्छिलातलमार्गेण निर्गन्तुमालोकितवान् सीता तु 'प्रेक्षितज्ञास्तु कोसला' इति न्यायेन कान्तस्य प्रेक्षणातिशयमवगम्य तं पुनः क्लेशयितुं तच्छिलातलं पूर्वमधिरूढा उपोपविष्टा । तत्र यं यं कोणमवलम्ब्योत्थातुमिच्छति तत्तदाक्रम्य मुखे सलिलमभिषिञ्चन्ती स्थिता वीप्सयैवमवगम्यते कान्तस्मिता सहजमधुरहासवती जातहासा स्वविजयकृतहर्षेण संजातहासा त्वामाह इतःपूर्वं कुत्रापि पराजयाभावात् । अधुना श्रीतोऽभिनवपराजयाद्रामो लज्जानम्रवदनोऽभूत् तं विहाय भ्रातरं बहुधा प्रशंसन्तं लक्ष्मणं प्रत्युक्तवती बहुवाक्यजातं युवां संकल्पितं सर्वं निर्वर्तितवन्तौ हि युवामतिबलपराक्रमशालिनौ पुरुषधौरेयौ वयमबलाजनाः युवां मृगयायै शत्रुहत्यायै चाभियातारौ वयं गृहादनिर्गच्छन्त्यः युवयोः संकल्पितं सर्वं कर्तुं शक्यं युष्मदग्रजो जितवान् हि इत्येवं बहुमुखं वचनमवोचत् ॥ १२ ॥

१३ ] ति० टी०—मम प्रियाया नित्यकालं प्रियेत्यन्वयः । अत्र गोदावर्यामियं चिन्ता असंगतेत्याह—नैकाकिनीति ॥ १३॥

रा० टी०—गोदावरीति । सरितां वरिष्ठा इयं गोदावरी मम प्रियायाः नित्यकालं सर्वसमयं प्रिया अतः अत्र गच्छेदिति चिन्तयामि संभावयामि । संभावनाया असंभवे हेतुः—सा सीता एकाकिनी अस्मदादिसाहाय्यरहिता सती कदाचित् न याति एतेन क्वचिन्निलीना स्यादिति रामसंभावना ध्वनिता ॥ १३ ॥

गो० टी०—गोदावरीति । नित्यकालं सर्वकालम् । अत्र गोदावर्यां चिन्तयामि तन्न युक्तमिति शेषः ॥ १३ ॥

१४ ] ति० टी०—एवमग्रेऽपि गच्छति पङ्कजानि आनेतुमिति शेषः ॥ १४ ॥

रा० टी०—पद्मेति । पद्मानि एवानेतुमभिप्रयाता अपि इति यत् संभावनं तदप्ययुक्तम् । तत्र हेतुः—मया विना सा पङ्कजानि कदाचिन्न गच्छति ॥ १४ ॥

गो० टी०—पद्मेति । अभिप्रयाता गोदावरीमिति शेषः । पङ्कजानीत्यत्राप्यानेतुमित्यनुषज्यते ॥ १४ ॥

१५ ] ति० टी०—अतिबिभेत्यत्यन्तं भीता भवति॥१५॥

रा० टी०—काममिति । पुष्पिता वृक्षखण्डा यस्मिन् तत् इदं वनं प्रयाता । तत्प्रयातमप्ययुक्तम् एकाकिनी अतिबिभेति ॥ १५ ॥

१ खण्डमिति रा० पाठः ।

आदित्य भो लोककृताकृतज्ञ लोकस्य सत्यानृतकर्मसाक्षिन् ।
मम प्रिया सा क्व गता हृता वा शंसस्व मे शोकहतस्य सर्वम् ॥ १६ ॥
लोकेषु सर्वेषु न नास्ति किंचिद्यत्तेन नित्यं विदितं भवेत्तत् ।
शंसस्व वायो कुलपालिनीं तां मृता हृता वा पथि वर्तते वा ॥ १७ ॥
इतीव तं शोकविधेयदेहं रामं विसंज्ञं विलपन्तमेवं ।
उवाच सौमित्रिरदीनसत्त्वो न्याय्ये स्थितः कालयुतं च वाक्यम् ॥ १८ ॥
शोकं विसृज्याद्य धृतिं भजस्व सोत्साहता चास्तु विमार्गणेऽस्याः ।
उत्साहवन्तो हि नरा न लोके सीदन्ति कर्मस्वतिदुष्करेषु ॥ १९ ॥
इतीव सौमित्रिमुदग्रपौरुषं ब्रुवन्तमार्तो रघुवंशसत्तमः ।
न चिन्तयामास धृतिं विमुक्तवान्पुनश्च दुःखं महदप्युपागमत् ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

---

गो० टी०–काममिति । अतिविभेति अत्यन्तं बिभेति१६

१६ ] ति० टी०–लोककृताकृतज्ञेत्यादिना तादृशसूक्ष्मज्ञानवतस्तज्ज्ञानं सर्वथाऽस्तीति भावः ॥ १६ ॥

रा० टी०–सूर्यं संबोध्य पृच्छति–आदित्येति । लोककृताकृतज्ञ ! कृताकृतयोर्ज्ञातः ! अत एव सत्यानृतकर्मसाक्षिन् भो आदित्य मम प्रिया सीता क्व क्वचित् गता निलीनेत्यर्थः, हृता वा शोकहतस्य मे सर्वं शंसस्व शंस ॥ १६ ॥

गो० टी०–आदित्येति । भो ! इत्यादित्यस्य संबोधनम् । लोकस्य कृताकृते जानातीति तथा सत्यानृतयोः पुण्यपापयोः कर्मणोः साक्षिन् ! 'कर्मसाक्षी जगच्चक्षुः' इत्युक्तेः । मम प्रिया क्व गता अथवा हृता केनचिदपहृतेति शंसस्व शंस ॥ १६ ॥

१७ ] ति० टी०–यत्ते नित्यं विदितं न भवेत्तद्वस्तु सर्वेषु लोकेषु नैवास्ति । अतः सापि तव विदितैवेति तां शंसस्वेत्यन्वयः । कुलपालिनीमित्यनेन तस्या महत्त्वात्तज्ज्ञानं मम नेति वक्तुमशक्यमिति सूचितम् ॥ १७ ॥

रा० टी०–लोकेष्विति । हे वायो ! यत् ते तव नित्यं विदितं ज्ञातं न भवेत् तत् किंचित् सर्वेषु लोकेषु नास्ति सर्वं त्वया ज्ञातमित्यर्थः । अतः मृता लोकान्तरगमनकर्त्रीत्वेन मृतासदृशी वा हृता सती पथि वर्तते वा इति कुलपालनीं तां सीतां शंसस्व ॥ १७ ॥

गो० टी०–लोकेष्विति । ते नित्यं यन्न विदितं तत् सर्वेषु लोकेषु नास्ति तस्माच्छंसेति ॥ १७ ॥

१८–१९ ] ति० टी०–इतीवातीवशब्दौ पर्यायौ । शोकविधेयदेहं तमिव । कालयुतं कालोचितम् ॥ १८ ॥ १९ ॥

रा० टी०–इतीवेति । इतीव अतीव शोकविधेयदेहं शोकव्याप्तशरीरम् अत एव विसंज्ञं विशेषज्ञानरहितमत एव विलपन्तं रामम् अदीनसत्त्वः धैर्यावलम्बेन दीनसत्त्वाभाववान् अत एव न्याय्ये स्थितः सौमित्रिः कालयुतं समयोचितं वाक्यमुवाच ॥ १८ ॥

गो० टी०–इतीवेति । शोकविधेयः शोकपरवशः कालयुतं कालोचितम् । अदीनसत्त्वः अदीनधृतिः एवमुवाचेत्यन्वयः ॥ १८ ॥

रा० टी०–तद्वचनाकारमाह–शोकमिति । शोकं विसृज्य त्यक्त्वा धृतिं धैर्यं भजस्व अत एव अस्याः सीताया विमार्गणे सोत्साहता उत्साहवैशिष्ट्यं चास्तु हि यतः उत्साहवन्तो नराः अतिदुष्करेष्वपि कर्मसु न सीदन्ति ॥ १९ ॥

गो० टी०–शोकमिति । अस्याः सीतायाः विमार्गणे अन्वेषणे ॥ १९ ॥

२० ] ति० टी०–न चिन्तयामास लक्ष्मणोक्तं युक्तमिति न विचारयामास, किं तु धैर्यं त्यक्तवानेव । अत एव पुनर्दुःखं प्रापत् ॥ २० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

रा० टी०–इतीवेति । इतीव अत्यन्तं ब्रुवन्तम् उदग्रपौरुषम् आर्तं सौमित्रिं न चिन्तयामास एतदुक्तिः शोभनेति न स्वीचकारेत्यर्थः । अत एव धृतिं धैर्यं पुनर्विमुक्तवान् अत एव महत् दुःखं पुनरुपागमत् ॥ २० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

गो० टी०–इतीवेति । उदग्रपौरुषं श्रेष्ठपराक्रमम् इतीव ब्रुवन्तं सौमित्रिं न चिन्तयामास तद्वचनं नादृतवानित्यर्थः । धृतिं च मुक्तवान् ॥ २० ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने त्रिषष्टितमः ॥ ६३ ॥

---

१ वशस्य नित्यमिति गो. पाठः। २ च नेति गो. न चेति रा. पाठः । ३ एवमिति गो. पाठः । ४ विमुच्यार्येति गो. पाठः । ५ आर्त इति गो. पाठः । ६ वर्धन इति गो. पाठः। ७ अमीति गो. पाठः ।

## चतुःषष्टितमः सर्गः ।

रामः सीतायाः पद्मानयनार्थं गोदावरीं प्रति गमनं संभाव्य तत्र गतस्तां सीतावार्तां पप्रच्छ । सा तु जानत्यपि रावणभिया न किमपि उवाच । ततो मृगान् तद्वार्तां पृच्छँस्तच्चेष्टाभिर्नैर्ऋतदिशि तद्गमनं प्रतर्क्य लक्ष्मणेन सह तद्दिशमनु प्रतस्थे । मार्गपतितामखण्डपुष्पपङ्क्तिं विलोक्य तास्मिँस्तल्लीलानिचायं मन्वानः प्रचलन्मार्गे सीतारावणपदाङ्कजटायुर्भग्नकवचकार्मुकादीनि ददर्श । कैरपि सीताहृष्टवृत्तानिवेदने प्राप्तकोपः सकलभुवनभस्मीकरणाय धनुषि शरमाधत्त ।

**स दीनो दीनया वाचा लक्ष्मणं वाक्यमब्रवीत् । शीघ्रं लक्ष्मण जानीहि गत्वा गोदावरीं नदीम् ॥ १ ॥**
**अपि गोदावरीं सीता पद्मान्यानयितुं गता । एवमुक्तस्तु रामेण लक्ष्मणः पुनरेव हि ॥ २ ॥**
**नदीं गोदावरीं रम्यां जगाम लघुविक्रमः । तां लक्ष्मणस्तीर्थवतीं विचित्वा राममब्रवीत् ॥ ३ ॥**
**नैनां पश्यामि तीर्थेषु क्रोशतो न शृणोति मे । कं नु सा देशमापन्ना वैदेही क्लेशनाशिनी ॥ ४ ॥**
**नहि तं वेद्मि वै राम यत्र सा तनुमध्यमा । लक्ष्मणस्य वचः श्रुत्वा दीनः संतापमोहितः ॥ ५ ॥**
**रामः समभिचक्राम स्वयं गोदावरीं नदीम् । स तामुपस्थितो रामः क्व सीतेत्येवमब्रवीत् ॥ ६ ॥**
**भूतानि राक्षसेन्द्रेण वधार्हेण हृतामपि । न तां शशंसू रामाय तथा गोदावरी नदी ॥ ७ ॥**

१-२] ति० टी०-एवं शोककरणं चारद्वारा श्रवणेन रावणस्य मनुष्यत्वबुद्धिदार्ढ्यपूर्वकं स्ववध्यत्वसंपादनायेति बोध्यम् । तदुक्तं ब्रह्माण्डपुराणे—'श्रीपुंमलाद्यसङ्गात्मा देहो नास्य विजायते । किं तु निर्दोषचैतन्यं सुखनित्यां स्वकां तनुम् ॥ प्रकाशयति सैवेयं जनिर्विष्णोर्न चापरा । तथाप्यसुरमोहार्थं परेषां च क्वचित्क्वचित् ॥ दुःखाज्ञानश्रमादींश्च दर्शयेच्छुद्धसद्गुणः । क्व व्रणादि क्व चाज्ञानं स्वतन्त्राचिन्त्यसद्गुणे ॥ मोक्षाभावाय तेषां तु दर्शयत्तानजो हरिः । कृष्णो ह्यत्यक्तदेहोऽपि त्यक्तदेहस्य देहवत् ॥ लोकानां दर्शयामास स्वरूपसदृशाकृतिम् ॥' इति । एतेन रावणस्येश्वरत्वबुद्धिप्रतिबन्धेन मोक्षाभावोऽपि शोकफलमित्युक्तम् । एवं रावणद्वारा सीताहरणमपि तत्पुण्यातिशयनाशेन वध्यतासंपादनाय । तथा च केदारखण्डे उक्ताख्यायिका—महता तपसा लब्धबलो रावणस्तदधिकतपोबलं विना जेतुमशक्यो देवाश्च स्वयं तदधिकं तपः कर्तुमक्षमा, अतस्तेषां कार्यमत्यन्तानुचितसीतानुरागमोहाद्युत्पत्तिसंपादनेन रावणस्य तपोवीर्यभ्रंशं संपाद्य कर्तव्यमिति लक्ष्म्या सह विचार्य तदर्थं विष्णुः सीतया ब्रह्मविद्यया सहावतीर्ण इति ॥ १ ॥ २ ॥

रा० टी०-पूर्वसर्गान्ते दुःखं महदुपागमदित्युक्तं तदाकारं वर्णयितुमाह-स इति । दीनः स रामः दीनया वाचा लक्ष्मणमब्रवीत् । तद्वचनाकारमाह-हे लक्ष्मण ! गोदावरीं नदीं गत्वाऽन्विष्येत्यर्थः, जानीहि सीतामिति शेषः ॥ १ ॥

गो० टी०-अथ चिह्नविशेषैः सीताहरणनिश्चयश्चतुःषष्टितमे—स दीन इत्यादि । लोके कश्चिद्दीनोऽपि दीनां वाचं न व्याहरति । इदमर्धमेकं वाक्यम् ॥ १ ॥

रा० टी०-सीतायाः तत्र गमने हेतुं वदन्नाह-अपीति । पद्मानि आनयितुम् आनेतुं गोदावरीं सीता गता स्यात् इति शेषः, संभावनार्थकोऽपिः । अर्धं पृथक्-एवमिति । रामेण एवं पुनरुक्तः लघुविक्रमः अतिशीघ्रपादप्रक्षेपवान् लक्ष्मणः गोदावरीं नदीं जगाम । अर्धद्वयमेकान्वयि ॥ २ ॥

गो० टी०-एवमिति । लघुविक्रमः त्वरितपदविन्यासः ॥ २ ॥

३ ] ति० टी०-लघुविक्रमोऽविलम्बितपादन्यासः तीर्थवतीमवतारवतीं पुण्योदकवतीं च ॥ ३ ॥

रा० टी०-तामिति । तीर्थवतीं प्रशस्तावतरणमार्गविशिष्टां तां गोदावरीं विचित्वा विचित्य लक्ष्मणो राममब्रवीत् ॥ ३ ॥

गो० टी०-तामिति । तीर्थवतीम् अवतारवतीम् ॥ ३ ॥

४ ] ति० टी०-न शृणोति मे वाक्यमिति शेषः । क्लेशनाशिनी सति दर्शन इति भावः ॥ ४ ॥

रा० टी०-तद्वचनाकारमाह-नेति । एनां सीतां तीर्थेषु न पश्यामि क्रोशतोऽपि मे क्लेशनाशिनी वैदेही न शृणोति अतः कं नु कंचित् देशं देशान्तरम् आपन्ना प्राप्ता ॥ ४ ॥

गो० टी०-नेति । क्रोशतः आह्वयतः मे मत्तः न शृणोति सेति शेषः ॥ ४ ॥

गो० टी०-कं न्विति । वेद जानामि ॥ ५ ॥

५ ] ति० टी०-तं देशम् ॥ ५ ॥

रा० टी०-ननु कं देशं गता इत्यत आह-नेति । यत्र यस्मिन्देशे तनुमध्यमा सा सीता आस्ते इति शेषः, तं देशं नैव वेद्मि । अर्धं पृथक्-लक्ष्मणस्येति । लक्ष्मणस्य वचः श्रुत्वा गोदावरीं नदीं रामः स्वयं समभिचक्राम अत एव तां गोदावरीम् उपस्थितः स रामः सीता क्व इत्येवमब्रवीत् । अर्धत्रयमेकान्वयि ॥ ५ ॥ ६ ॥

गो० टी०-लक्ष्मणस्येति श्लोकः ॥ ६ ॥

६ ] ति० टी०-तां गोदावरीम् ॥ ६ ॥

गो० टी०-स तामित्यर्धमेकं वाक्यम् ॥ ७ ॥

७ ] ति० टी०-भूतान्युक्तरूपेण पृच्छ्यमानानि राक्षसे-

१ परवीरहेति गो. पाठः । २ अहं वेद्मि तं देशं ... जनकात्मजेति गो. पाठः । ३ इतीति गो. पाठः ।

ततः प्रचोदिता भूतैः शंस चास्मै प्रियामिति । न च सा ह्यवदत्सीतां पृष्टा रामेण शोचता ॥ ८ ॥
रावणस्य च तद्रूपं कर्माणि च दुरात्मनः । ध्यात्वा भयात्तु वैदेहीं सा नदी न शशंस हि ॥ ९ ॥
निराशस्तु तया नद्या सीताया दर्शने कृतः । उवाच रामः सौमित्रिं सीतादर्शनकर्शितः ॥ १० ॥
एषा गोदावरी सौम्य किंचिन्न प्रतिभाषते । किं तु लक्ष्मण वक्ष्यामि समेत्य जनकं वचः ॥ ११ ॥
मातरं चैव वैदेह्या विना तामहमप्रियम् । या मे राज्यविहीनस्य वने वन्येन जीवतः ॥ १२ ॥
सर्वं व्यपानयच्छोकं वैदेही क्व नु सा गता । ज्ञातिवर्गविहीनस्य वैदेहीमप्यपश्यतः ॥ १३ ॥
मन्ये दीर्घा भविष्यन्ति रात्रयो मम जाग्रतः । मन्दाकिनीं जनस्थानमिमं प्रस्रवणं गिरिम् ॥ १४ ॥
सर्वाण्यनुचरिष्यामि यदि सीता हि लभ्यते । एते महामृगा वीरा मामीक्षन्ते पुनः पुनः ॥ १५ ॥
वक्तुकामा इह हि मे इङ्गितान्युपलक्षये । तांस्तु दृष्ट्वा नरव्याघ्रो राघवः प्रत्युवाच ह ॥ १६ ॥

---

न्द्रेण हृतां ज्ञात्वापि रक्षोभयाद्रामाय न शशंसुः । तथा गोदावरी च न शशंसेत्यर्थः ॥ ७ ॥

रा० टी०–भूतानीति । वधार्हेणापि राक्षसेन्द्रेण रावणेन हृतां सीतां भूतानि अपि यतो रावणभीतेः हेतोः तां सीतां न शशंसुः तथा तत एव हेतोः गोदावरी नद्यपि न शशंस ॥ ७ ॥

गो० टी०–भूतानीति । भूतानि वन्यानि सत्त्वानि दृष्टान्तार्थमिदम् । यथा पूर्वं पृच्छ्यमानानि भूतानि न शशंसुः तथा गोदावरी च न शशंसेत्यर्थः ॥ ८ ॥

८ ] ति० टी०–तथाभूतैरस्मै सीतां शंसेति प्रचोदितापि गोदावरी पृष्टापि नावदत् ॥ ८ ॥

रा० टी०–तत इति । भूतैः पृथिव्यादिभिः अस्मै रामाय प्रियां शशंस इति प्रचोदिता रामेण पृष्टा च सा गोदावरी सीतां न अवदत् । 'अस्मत्' इति भूषणपाठः ॥ ८ ॥

गो० टी०–तत इति । स्वयं न शशंस भूतैः प्रचोदितापि न शशंसेत्यर्थः । अस्मत् अस्मदर्थे पञ्चमी ॥ ९ ॥

९ ] ति० टी०–तत्र हेतुः–रावणस्येति ॥ ९ ॥

रा० टी०–तदेव सहेतुकमाह–रावणस्येति । दुरात्मनो रावणस्य तत् अतिभयंकरं रूपं कर्म च ध्यात्वा संस्मृत्य भयात् सा गोदावरी वैदेहीं न शशंस ॥ ९ ॥

गो० टी०–अकथने हेतुमाह–रावणस्येति ॥ १० ॥

१० ] ति० टी०–नद्या सीतामशंसन्त्या रामः सीतादर्शने निराशः कृतः । इयं गोदावरी दिव्यदेवता न ब्रूते, अतस्तद्दर्शनं दुर्लभमिति निराशोऽभूत् ॥ १० ॥

रा० टी०–निराश इति । सीताया दर्शने तया गोदावर्या निराशः कृतः सीतादर्शनकर्शितः सीताया अदर्शनेन प्राप्तकृशत्वो रामः सौमित्रिमुवाच ॥ १० ॥

गो० टी०–निराश इति । निराशःकृत इत्यन्वयः ११–१२

११–१३ ] ति० टी०–तदेवाह–एषेति ॥ ११–१३ ॥

रा० टी०–एषेत्यादिभिः । हे सौम्य ! एषा गोदावरी किंचिन्न प्रतिभाषते सीतावृत्तान्तलेशमपि न कथयतीत्यर्थः । अतः जनकं मिथिलाधिपं वैदेह्या मातरं च समेत्य प्राप्य तां सीतां विनाऽहं किम् अप्रियं वक्ष्यामि । सार्धश्लोक एकान्वयी ॥ ११ ॥

रा० टी०–येति । राज्यविहीनस्य त्यक्तराज्यस्य अत एव वन्येन फलादिना वने जीवतो मे या वैदेही सर्वं शोकं व्यपनयत् सा क्व गता ॥ १२ ॥

गो० टी०–येति । वन्येन फलादिना ॥ १३ ॥

रा० टी०–ज्ञातीति । ज्ञातिपक्षविहीनस्य ज्ञातिभिः पक्षैः सहायैश्च विहीनस्य राजपुत्रीमपश्यतः अत एव जाग्रतः निद्रामलभमानस्य मम रात्रयः दीर्घा बृहत्यो भविष्यन्ति अतिदुःखेन व्यत्येष्यन्तीत्यर्थः, इत्यहं मन्ये ॥ १३ ॥

गो० टी०–ज्ञातीति । ज्ञातयश्च ते पक्षाः सहायाश्च तैर्विहीनस्य ॥ १४–१६ ॥

१४ ] ति० टी०–मन्दाकिनी काचिन्नदी । प्रस्रवणस्तदाख्यो गिरिः ॥ १४ ॥

रा० टी०–मन्दाकिनीमिति । यदि कदाचित् सीता दृश्यते तर्हि सर्वाणि मन्दाकिनीप्रभृतीनि अनुचरिष्यामि ॥ १४ ॥

१५ ] ति० टी०–सर्वाण्यनुचरिष्याम्यनुचरवत्सेविष्यामि ॥ १६ ॥

रा० टी०–एते इति । वीर हे लक्ष्मण ! मे मह्यं वक्तुकामा इवैते महामृगाः मां पुनः पुनः ईक्षन्ते । वक्तुकामत्वे गमकमाह–इङ्गितानि चेष्टितानि उपलक्षये जानामि ॥ १६ ॥

१६ ] ति० टी०–एषामिङ्गितानि तथोपलक्षये यथा वक्तुकामा इवेमे इत्यर्थः ॥ १६ ॥

रा० टी०–तानिति । नरव्याघ्रो राघवो रामः तान् वक्तुकामान् मृगान् दृष्ट्वा निरीक्षन् उत्तरदानोद्देश्यकमृगचेष्टां विचारयन् सन् बाष्पसंरुद्धया गिरा क्व सीतेति प्रत्युवाच ॥ १६ ॥

गो० टी०–तांस्त्विति । बाष्पसंरुद्धया दृशा निरीक्षन् निरीक्षमाणः सन् क्व सीतेत्युवाच ॥ १७ ॥

---

१ अस्मत्तामिति गो. पाठः । २ तु साऽभ्यवददिति गो. पाठः । ३ कर्माणीति गो. पाठः । ४ तामिति गो. पाठः । ५ न्विति गो. पाठः । ६ व्यपनयेदिति गो. व्यपनयदिति रा. पाठः । ७ पक्षेति गो. रा. पाठः । ८ राजपुत्रीमिति गो. रा. पाठः । ९ दृश्यत इति गो. पाठः । १० मृगा महावीर्या इति गो. पाठः । ११ वीरेति रा. पाठः । १२ मुहुर्मुहुरिति गो. पाठः । १३ इवेति गो. रा. पाठः ।

क्व सीतेति निरीक्षन्वै बाष्पसंरुद्धया [1]गिरा । एवमुक्ता नरेन्द्रेण ते मृगाः सहसोत्थिताः ॥ १७ ॥
दक्षिणाभिमुखाः सर्वे दर्शयन्तो [2]नभःस्थलम् । मैथिली ह्रियमाणा सा दिशं याम[3]भ्यपद्यत ॥ १८ ॥
तेन मार्गेण [4]गच्छन्तो निरीक्षन्ते नराधिपम् । येन मार्गं च भूमिं च निरीक्षन्ते स्म ते मृगाः ॥ १९ ॥
पुन[5]र्नदन्तो गच्छन्ति लक्ष्मणेनोपलक्षिताः । तेषां वचनसर्वस्वं लक्षयामास चेङ्गितम् ॥ २० ॥
उवाच लक्ष्मणो धीमाञ्ज्येष्ठं भ्रातरमार्त[6]वत् । क्व सीतेति त्वया पृष्टा यदिमे सहसोत्थिताः ॥ २१ ॥
दर्शयन्ति क्षितिं चैव दक्षिणां च दिशं मृगाः । साधु गच्छावहे देव दिशमेतां च नैर्ऋतीम् ॥ २२ ॥
यदि [7]तस्यागमः कश्चिदार्यो वा साऽथ लक्ष्यते । बाढमित्येव काकुत्स्थः प्रस्थितो दक्षिणां दिशम् ॥२३॥
लक्ष्मणानुगतः श्रीमान्वीक्षमाणो वसुंधराम् । एवं संभाषमाणौ तावन्योन्यं भ्रातरावुभौ ॥ २४ ॥

---

१७ ] ति० टी०—निरीक्षन्मृगचेष्टाज्ञानाय सूक्ष्मदृष्टिं कुर्वन् । एवमुक्ता एवं पृष्टाः ॥ १७ ॥

रा० टी०—एवमिति । नरेन्द्रेण रामेण एवमुक्ताः अत एव सहसोत्थिताः सर्वे ते मृगाः नभस्थलं दर्शयन्तः सन्तः दक्षिणाभिमुखाः बभूवुरिति शेषः । अनया चेष्टया आकाशमार्गेण दक्षिणादिशं वैदेही गतेति सूचितम् ॥ १७ ॥

गो० टी०—एवमिति । उक्तः पृष्टः नभःस्थलं दर्शयन्तः आकाशावलोकनेङ्गितेन सीतागमनमार्गं दर्शयन्त इत्यर्थः । उत्थिताः प्रस्थिताः आकाशमार्गेण दक्षिणां दिशं गता सीतेत्यसूचयन्निति भावः । अमुमेवार्थं स्पष्टयति—मैथिलीति । ह्रियमाणा सा मैथिली यां दिशमन्वपद्यत प्राप तेन मार्गेण तया दिशा धावन्तः सन्तः नराधिपं निरीक्षन्ते ॥ १८ ॥ १९ ॥

१८ ] ति० टी०—नभःस्थलं दर्शयन्तः उन्मुखतयाऽऽकाशविलोकनेङ्गितेनेत्यर्थः । ह्रियमाणा सीता यां दिशमभ्यपद्यत१८

रा० टी०—तदेव स्पष्टमाह—मैथिलीति । ह्रियमाणा मैथिली यां दिशमभ्यपद्यत तेन मार्गेण दक्षिणदिशेत्यर्थः, गच्छन्तो धावन्तो मृगाः नराधिपं रामं निरीक्षन्ते दिश एव मार्गशब्देन ग्रहणान्न यत्तदोर्भिन्नविषत्वम् ॥ १८ ॥

१९ ] ति० टी०—तेन मार्गेण दिङ्मार्गेण गच्छन्तो धावन्तो नराधिपं रामं निरीक्षन्ते । एवमिङ्गितं लक्ष्मणोऽपश्यदित्याह—येनेति । येन हेतुना मार्गमाकाशमार्गं पुनर्भूमौ गमनाय भूमिं च निरीक्षन्ते ॥ १९ ॥

रा० टी०—येनेति । येन हेतुना मार्गमाकाशरूपाध्वानं भूमिं च ते पृष्टाः मृगाः निरीक्षन्ते स्म नदन्तः पुनर्गच्छन्ति स्म तेन हेतुना लक्ष्मणेन ते मार्गप्रदर्शकाः मृगा उपलक्षिता ज्ञाताः तन्मार्गप्रदर्शनमवबुद्धमित्यर्थः १९ ॥

गो० टी०—येनेति । येन कारणेन मार्गम् आकाशमार्गं भूमिं दक्षिणां भूमिं च निरीक्षन्ते स्म पुनश्च मार्गं दक्षिणमार्गम् इच्छन्ति स्म, गन्तुमिति शेषः । तेन कारणेन मृगाः उपलक्षिताः गृहीतचेष्टार्था आसन् ॥ २० ॥

२० ] ति० टी०—पुनश्च मार्गं दर्शयितुमिच्छन्तो लक्ष्मणेनोपलक्षितास्तेषामिङ्गितं लक्ष्मणो लक्षयासेत्यर्थः । आकाशमार्गेण गत्वा दक्षिणदिशि दूरे स्थापिता सीता दक्षिणदिशि गच्छतेत्येवं तदिङ्गितं तेषां च वचनसर्वस्वभूतं स्वयं लक्षयामास ॥ २० ॥

रा० टी०—तेषामिति । वचनस्य उक्तस्य सर्वस्वः सर्वार्थो यस्मिन् तत्तेषामिङ्गितं लक्षयामास तात्पर्यं बुबुधे इत्यर्थः, अत एव ज्येष्ठं भ्रातरं लक्ष्मण आर्तवत् वच उवाच ॥ २० ॥

गो० टी०—उक्तमनुवदन्नाह—तेषामिति । वचनसर्वस्वं तत्स्वरूपमिङ्गितमित्यर्थः । लक्षयामास मृगचेष्टार्थं वचनोक्तमिव ज्ञातवानित्यर्थः उवाच चेत्यन्वयः । आर्तवत् आर्तमिति क्रियाविशेषणम् क्तवतुप्रत्ययः ॥ २१ ॥

२१–२२ ] ति० टी०—ततो ज्ञात्वा भ्रातरमप्युवाचेत्यर्थः । आर्तवदार्तार्हम् ॥ २१ ॥ २२ ॥

रा० टी०—तद्वचनाकारमाह—क्वेति । सीता क्व इति त्वया पृष्टा अत एव सहसोत्थिता इमे मृगाः क्षितिं नभोभूमिं दक्षिणां नैर्ऋतीं दिशं च यत् यतो दर्शयन्ति अतः एतां नैर्ऋतीं दिशं साधु गच्छावहे यदि तस्य सीतादर्शनस्य आगम उपायः सा सीतैव वा लक्ष्यते लक्ष्येत संभावनार्थको यदिः । अर्धचतुष्टयमेकान्वयि ॥ २१ ॥ २२ ॥

गो० टी०—क्वेत्यादि । श्लोकद्वयमेकान्वयम् । यथा येन प्रकारेण दर्शयन्ति तथा गच्छावहे इत्यन्वयः । आर्षमात्मनेपदम् । नैर्ऋतिं दक्षिणपश्चिमां राक्षसाधिष्ठितां तस्याश्च दक्षिणैकदेशत्वाद्दक्षिणां दिशामिति व्यपदेशः । आगमः सीतादर्शनोपायः ॥ २२ ॥ २३ ॥

२३–२४ ] ति० टी०—तस्यागमः तस्या आगम इत्यर्थः आर्षो दीर्घः ज्ञापकं वस्तु दृश्येतेत्यर्थः ॥ २३ ॥ २४ ॥

रा० टी०—बाढमिति । बाढमित्येवोक्त्वेति शेषः । लक्ष्मणानुगतः काकुत्स्थो रामः वसुन्धरां वीक्षमाणः सन् दक्षिणां दिशं प्रस्थितः ॥ २३ ॥

गो० टी०—बाढमिति । श्रीमान् सीताधिगमनहेतुदर्शनश्रीमान् ॥ ॥ २४ ॥

---

१ दृशेति गो. पाठः । २ नभस्थलमिति रा. पाठः । ३ अन्वपद्यतेति गो. पाठः । ४ धावन्त इति गो. पाठः । ५ च मार्गमिच्छन्तीति गो. पाठः । ६ स्यादिति गो. पाठः । ७ वतिप्रत्यय इति युक्तं भाति ।

वसुंधरायां [1]पतितपुष्पमार्गमपश्यताम् । [2]पुष्पवृष्टिं निपतितां दृष्ट्वा रामो महीतले ॥ २५ ॥
उवाच लक्ष्मणं वीरो दुःखितो दुःखितं वचः । अभिजानामि पुष्पाणि तानीमानीह लक्ष्मण ॥ २६ ॥
[3]अपिनद्धानि वैदेह्या मया दत्तानि कानने । मन्ये सूर्यश्च वायुश्च मेदिनी च यशस्विनी ॥ २७ ॥
अभिरक्षन्ति पुष्पाणि प्रकुर्वन्तो मम प्रियम् । एवमुक्त्वा महा[4]बाहुर्लक्ष्मणं पुरुषर्षभम् ॥ २८ ॥
उवाच रामो धर्मात्मा गिरिं प्रस्रवणाकुलम् । कच्चित्क्षितिभृतां नाथ दृष्टा सर्वाङ्गसुन्दरी ॥ २९ ॥
रामा रम्ये वनोद्देशे मया विरहिता त्वया । क्रुद्धोऽब्रवीद्गिरिं तत्र सिंहः क्षुद्रमृगं यथा ॥ ३० ॥
तां हेमवर्णां [5]हेमाङ्गीं सीतां दर्शय पर्वत । यावत्सानूनि सर्वाणि न ते विध्वंसयाम्यहम् ॥ ३१ ॥
एवमुक्तस्तु रामेण पर्वतो मैथिलीं प्रति । [6]दर्शयन्निव तां सीतां नादर्शयत राघवे ॥ ३२ ॥
ततो दाशरथी राम उवाच च शिलोच्चयम् । मम बाणाग्निनिर्दग्धो भस्मीभूतो भविष्यसि ॥ ३३ ॥
असेव्यः [7]सर्वतश्चैव निस्तृणद्रुमपल्लवः । इमां वा सरितं चाद्य शोषयिष्यामि लक्ष्मण ॥ ३४ ॥

---

रा० टी०–एवमिति । एवं पूर्वोक्तरीत्या अन्योन्यं संभाषमाणौ तावुभौ भ्रातरौ वसुन्धरायां पृथिव्यां पतितपुष्पमार्गं स्खलितपुष्परूपं पन्थानमपश्यताम् ॥ २४ ॥

गो० टी०–एवमिति । एवं साध्वित्युक्तरीत्या पुष्पमार्गं पुष्पयुक्तमार्गम् मध्यमपदलोपिसमासः ॥ २९ ॥

२५ ] ति० टी०–पतितपुष्पमार्गं पतितपुष्पयुतं मार्गम् ॥ २९ ॥

रा० टी०–पुष्पेति । महीतले निपतितां पुष्पवृष्टिं दृष्ट्वा दुःखितो वीरो रामः दुःखितं लक्ष्मणमुवाच ॥ २९ ॥

गो० टी०–तामिति । वीरः दर्शनोपायमात्रे ज्ञाते तां लब्धुं समर्थः ॥ २६ ॥

२६ ] ति० टी०–अभिजानामि प्रत्यभिजानामि ॥ २६ ॥

रा० टी०–तद्वचनाकारमाह–अभीति । हे लक्ष्मण ! कानने वने मया दत्तानि वृक्षेभ्य आहृत्य समर्पितानि अत एव वैदेह्या अपिनद्धानि धृतानि यानि तानीमानि पुष्पाणि अभिजानामि बुद्ध्या निश्चिनोमि ॥ २६ ॥

गो० टी०–अभिजानामीति । तानीमानि पुष्पाणि मया दत्तानि वैदेह्या केशपाशे पिनद्धानि बद्धानीत्यभिजानामि ॥२७॥

२७–२८ ] ति० टी०–अपिनद्धानि केशपाशे बद्धानि । अम्लानत्वेन रविरपनयनेन वायुर्धारणेन वसुंधरा मत्प्रियं सीताज्ञापनरूपं प्रकुर्वन्तो रक्षन्तीति मन्ये ॥ २७ ॥ २८ ॥

रा० टी०–नन्वेतावत्कालपर्यन्तं कथं तथैव स्थितानीत्यत आह–मन्ये इति । मम प्रियं प्रकुर्वन्तः सूर्यादयोऽभिरक्षन्तीति मन्ये निश्चिनोमि ॥ २७ ॥

गो० टी०–मन्य इति । अम्लानीकरणात् सूर्यः, अनुत्क्षेपणात् वायुः, धारणात् भूमिश्च रक्षन्तीति भावः ॥ २८ ॥

रा० टी०–एवमिति । महाबाहुः रामः लक्ष्मणमेवमुक्त्वा प्रस्रवणाकुलं तदभिधं गिरिमुवाच ॥ २८ ॥

गो० टी०–एवमिति । महाबाहुमित्यनेन बलवत्सहायत्वं, पुरुषर्षभ इत्यनेन स्वतः पराक्रमशालित्वमुक्तम् । तथापि धर्मात्मा सहसा गिरेरविनाशकरणात् ॥ २९ ॥

२९ ] ति० टी०–मया विरहिता कच्चिद्रम्ये वनोद्देशे सर्वाङ्गसुन्दरी दृष्टा ॥ २९ ॥

रा० टी०–तद्वचनाकारमाह–कच्चिदिति । क्षितिभृतां नाथ हे पर्वतश्रेष्ठ ! रम्ये रमणीये वनोद्देशे मया विरहिता सर्वाङ्गसुन्दरी रामा स्त्री त्वया काचित् दृष्टा कच्चिदिति प्रश्ने ॥ २९ ॥

गो० टी०–कच्चिदिति । रामा स्त्री ॥ ३० ॥

३० ] ति० टी०–क्रुद्धस्तदधिष्ठातृदेवतोद्देशेन क्रोधः॥३०॥

रा० टी०–तदुत्तरादानानन्तरकालिकं रामवचनमाह–क्रुद्ध इति । तत्र तदुत्तराप्रदानसमये क्रुद्धः क्रोधवत्त्वेन प्रतिभासमानो रामः क्षुद्रमृगं सिंह इव अब्रवीत् ॥ ३० ॥

गो० टी०–अदर्शनादाह–क्रूर इति । एकमर्धम् ॥ ३१ ॥

३१ ] ति० टी०–हेमाङ्गीमित्यनेन लावण्यमुक्तम् ॥३१॥

रा० टी०–तद्वचनाकारमाह–तामिति । सर्वाणि ते सानूनि शिलाः यावदहं न विध्वंसयामि तावदेव हे पर्वत ! हेमवर्णां सुवर्णवर्णसदृशवर्णविशिष्टाम् अत एव हेमाङ्गीं हेममयाङ्गीत्वेन प्रतीयमानां सीतां दर्शय ॥ ३१ ॥

गो० टी०–तामिति । हेमवर्णां हेमप्रतिमासदृशीं हेमाभां स्वर्णतुल्यकान्तिम् ॥ ३२ ॥

३२–३४ ति० टी०–दर्शयन्निव वक्ष्यमाणलिङ्गद्वारा नादर्शयत् वाग्राहित्येन साक्षादिति शेषः । राघवे तद्विषये ॥ ३२–३४ ॥

रा०टी०–एवमिति । मैथिलीं प्रति रामेण एवमुक्तः पर्वतः तां सीतां दर्शयन् जानन्नपि राघवे राघवसमीपे नादर्शयत अबोधयत् । एतेन ज्ञापनसमये रावणस्मृतिर्भवतीति ध्वनितं तेन रावणभीतेरतिप्राबल्यं व्यञ्जितम् ॥ ३२ ॥

---

१ पतितमिति गो. पाठः । २ तां पुष्पवृष्टिं पतितामिति गो. पाठः । ३ पिनद्धानीहेति गो. पाठः । ४ बाहुमिति गो. पाठः । ५ हेमाभामिति गो. पाठः । ६ दर्शयन्निव तत इति गो. पाठः । ७ संततमिति गो. पर्वत इति रा. पाठः ।

यदि नाख्याति मे सीतामद्यचन्द्रनिभाननाम् । एवं प्ररुषितो रामो दिधक्षन्निव चक्षुषा ॥ ३५ ॥
ददर्श भूमौ निष्क्रान्तं राक्षसस्य पदं महत् । त्रस्ताया रामकाङ्क्षिण्याः प्रधावन्त्या इतस्ततः ॥ ३६ ॥
राक्षसेनानुसृप्ताया वैदेह्याश्च पदानि तु । स समीक्ष्य परिक्रान्तं सीताया राक्षसस्य च ॥ ३७ ॥
भग्नं धनुश्च तूणी च विकीर्णं बहुधा रथम् । संभ्रान्तहृदयो रामः शशंस भ्रातरं प्रियम् ॥ ३८ ॥
पश्य लक्ष्मण वैदेह्याः कीर्णाः कनकबिन्दवः । भूषणानां हि सौमित्रे माल्यानि विविधानि च ॥ ३९ ॥
तप्तबिन्दुनिकाशैश्च चित्रैः क्षतजबिन्दुभिः । आवृतं पश्य सौमित्रे सर्वतो धरणीतलम् ॥ ४० ॥
मन्ये लक्ष्मण वैदेही राक्षसैः कामरूपिभिः । भित्त्वा भित्त्वा विभक्ता वा भक्षिता वा भविष्यति ॥ ४१ ॥
तस्या निमित्तं सीताया द्वयोर्विवदमानयोः । बभूव युद्धं सौमित्रे घोरं राक्षसयोरिह ॥ ४२ ॥
मुक्तामणिचितं चेदं रमणीयं विभूषितम् । धरण्यां पतितं सौम्य कस्य भग्नं महद्धनुः ॥ ४३ ॥

---

गो० टी०—एवमिति । शंसन्निव प्रतिध्वनिना कथयन्निव स्वपृष्टस्यैवानुवादेनानादरोक्तिं रामोऽमन्यतेति भावः । ततः अनादरोक्त्या राघवे विषये सीतां नादर्शयत । "णिचश्च" इत्यात्मनेपदम् ॥ ३३ ॥

रा० टी०—तत इति । शिलोच्चयं पर्वतं दाशरथिरुवाच । अर्थं पृथक् । तद्वचनाकारमाह—मम बाणाग्निनिर्दग्धः पर्वतस्त्वं भस्मीभूतो भविष्यसि अत एव निस्तृणद्रुमपल्लवः सन् असेव्यश्च भविष्यसि । अर्धद्वयमेकान्वयि ॥ ३३ ॥

गो० टी०—तत इति । दाशरथिरिति हेतुगर्भम् । शिलोच्चयं पर्वतम् । इदमर्धमेकम् ॥ ३४ ॥

गो० टी०—ममेति श्लोकः ॥ ३५ ॥

रा० टी०—पर्वतं प्रत्युक्त्वा लक्ष्मणं प्रत्याह—इमामिति । हे लक्ष्मण ! यदि सीतां नाख्याति तर्हि सरितमिमां गोदावरीं शोषयिष्यामि ॥ ३४ ॥

गो० टी०—इमामिति । इयमपि पृष्टा चेन्न वक्ष्यतीति मत्वेति भावः ॥ ३६ ॥

३५ ] ति०टी०—दिधक्षन्निव न तु वास्तवी दिधक्षेति भावः ॥ ३५ ॥

रा० टी०—एवमिति । एवं प्ररुषितः आश्रितप्ररोषो रामः चक्षुषा दिधक्षन् दग्धुमिच्छन् सन्निव भूमौ पर्वतगोदावरीसमीपदेशे निष्क्रान्तं राक्षसस्य जटायुनिपातितरावणस्य महत् पदं पदाकृतिरेखां त्रस्तायाः रामवियोगात् भीतायाः अत एव रामकाङ्क्षिण्याः अत एव इतस्ततः प्रधावन्त्या राक्षसेन अनुसृप्तायाः अनुगताया वैदेह्याः पदानि च ददर्श । अर्धचतुष्टयमेकान्वयि ॥ ३५ ॥ ३६ ॥

गो० टी०—एवमिति । निष्क्रान्तं प्रादुर्भूतम् । इतः पूर्वमदर्शनादेवमुक्तम् त्रस्तायाः रावणाद्भीतायाः रामकाङ्क्षिण्याः रामाश्रमं प्रयातुमुद्युक्तायाः अत एव राक्षसेनानुसृप्तायाः अनुगतायाः अत एवेतस्ततो धावन्त्याः ददर्शेत्यनुवर्तते ॥ ३७॥३८ ॥

३६ ] ति० टी०—निष्क्रान्तं प्रवृत्तविक्षेपम्, महदत्यायतविस्तृतम् ॥ ३६ ॥

३७–३८ ] ति० टी०—अनुसृप्ताया अनुगम्यमानायाः । जटायुयुद्धसमये सीताया रावणेन भूमौ विसृज्य पुनर्ग्रहणादेवमुक्तिः । परिक्रान्तं परिवृतम् । एतत्सर्वं समीक्ष्य भ्रातरं शशंसेत्यन्वयः ॥ ३७ ॥ ३८ ॥

रा० टी०—स इति । सीताया राक्षसस्य च परिक्रान्तमितस्ततो गमनं समीक्ष्य भग्नं धनुः भग्नौ तूणी च बहुधा विकीर्णम् अवयवशः प्रक्षिप्तं रथं च समीक्ष्य संभ्रान्तहृदयः उद्विग्नचित्तो रामः भ्रातरं शशंस ॥ ३७ ॥ ३८ ॥

गो० टी०—तं समीक्ष्येति सार्धश्लोक एकान्वयः । परिक्रान्तं परिक्रमं पदन्यासमिति यावत् ॥ ३९ ॥

३९ ] ति० टी०—कनकबिन्दवो भूषणावयवीभूतस्वर्णशकलानि । भूषणानामिति पूर्वान्वयि ॥ ३९ ॥

रा० टी०—शंसनप्रकारमाह—पश्येति । हे लक्ष्मण ! कीर्णाः भूमौ प्रक्षिप्ताः भूषणानामाभरणानां कनकबिन्दवः स्वर्णमयबिन्दुरूपावयवाः विविधानि माल्यानि पुष्पाणि च पश्य । वाक्यस्य कर्मत्वान्न द्वितीया ॥ ३९ ॥

गो० टी०—पश्येति । कनकबिन्दवः स्वर्णशकलानि ॥ ४० ॥

४० ] ति० टी०—तप्तबिन्दुनिकाशैस्तपनीयबिन्दुसदृशैः क्षतजबिन्दुभी रुधिरबिन्दुभिः ॥ ४० ॥

रा० टी०—तप्तेति । तप्तबिन्दुनिकाशैः प्रतप्तस्वर्णबिन्दुसदृशैः चित्रैः हस्वलघ्वादिभेदेनानेकविधैः क्षतजबिन्दुभिः रुधिरपृषतैः सर्वत आवृतं धरणीतलं पश्य । एतेन सीताङ्गजनितानीमानि किमिति संशयः सूचितः ॥ ४० ॥

गो० टी०—तप्तेति । तप्तं स्वर्णम् ॥ ४१ ॥

४१–४३ ] ति० टी०—मन्ये इति । सीताया वा इमे रुधिरबिन्दवः सीतानिमित्तं सुन्दोपसुन्दवद्युद्ध्यमानयो रक्षसोर्वेति विकल्पालंकारः श्लोकद्वयेनोक्तः ॥ ४१–४३ ॥

---

१ सीतामार्यामिति गो. पाठः । २ स रुषित इति गो. पाठः । ३ वृत्ताया इति गो. पाठः । ४ अथेति गो. पाठः । ५ शीर्णा इति गो. पाठः । ६ वैदेह्या इति गो. पाठः । ७ मयमिति गो. पाठः । ८ तपनीयेति गो. रा. पाठः ।

राक्षसानामिदं वत्स सुराणामथवापि वा । तरुणादित्यसंकाशं वैदूर्यगुलिकाचितम् ॥ ४४ ॥
विशीर्णं पतितं भूमौ कवचं कस्य काञ्चनम् । छत्रं शतशलाकं च दिव्यमाल्योपशोभितम् ॥ ४५ ॥
भग्नदण्डमिदं [१]सौम्य भूमौ कस्य निपातितम् । काञ्चनोरश्छदाश्चेमे पिशाचवदनाः खराः ॥ ४६ ॥
भीमरूपा महाकायाः कस्य वा निहता रणे । दीप्तपावकसंकाशो द्युतिमान्समरध्वजः ॥ ४७ ॥
अपविद्धश्च भग्नश्च कस्य साङ्ग्रामिको रथः । रथाक्षमात्रा विशिखास्तपनीयविभूषणाः ॥ ४८ ॥
कस्येमे [३]निहता बाणाः प्रकीर्णा घोरदर्शनाः । शरावरौ शरैः पूर्णौ विध्वस्तौ पश्य लक्ष्मण ॥ ४९ ॥

---

रा० टी०–वस्तुतस्तु रुधिराणि सीताङ्गजन्यानि न संभवन्तीति बोधयन्नाह–मन्य इति । हे लक्ष्मण ! कामरूपिभिः राक्षसैः भित्त्वा भित्त्वा विभक्ता सती भक्षिता अ नैव भविष्यति इति मन्ये । एको वा एवार्थे अपर इत्यर्थे । एतेन तस्या नित्यात्वं सूचितम् ॥ ४१ ॥

गो० टी०–मन्य इति । इति मन्य इति योज्यम् ॥ ४२॥

रा० टी०–नतु कस्याङ्गजानीमानि रुधिराणीत्यत आह–तस्या इति । सीताया निमित्तं विवदमानयोः द्वयोः राक्षसयोः इह युद्धं बभूव । एतेन तयोरन्यतरशरीरजमिति व्यञ्जितं बलवत्त्वेन राक्षससदृशपरैकराक्षसशब्देनैकशेषात् न मृषावाचित्वसंसर्गः ॥ ४२ ॥

गो० टी०–तस्या इति । तस्या निमित्तं सुन्दोपसुन्दवत् परिग्रहार्थमित्यर्थः । विवदमानयोः वैमत्यं प्राप्तयोः “भासनोपसंभाषा–” इत्यादिना आत्मनेपदम् ॥ ४३ ॥

रा० टी०–मुक्तेति । मुक्तामणिचितं मुक्ताभिर्मणिभिश्च चितं संरचितं तपनीयविभूषितं स्वर्णनिर्मितिविशेषेण राजितं भग्नं धरण्यां पतितम् इदं महद्धनुः कस्य धनुषोऽतिविचित्रत्वाद्रक्षःसामान्यस्य न संभवतीति प्रश्ने बीजम् ॥ ४३ ॥

गो० टी०–मुक्तेति । मुक्तामणिमयं मुक्तामणिप्रचुरम् ४४

४४–४५ ] ति० टी०–वैदूर्यगुलिकाचितं वैदूर्यमण्यलंकृतम् ॥ ४४ ॥ ४५ ॥

रा० टी०–राक्षसानामिति । वैदूर्यगुलिकाचितं वैदूर्यमण्यलंकृतम् इदं धनुः राक्षसानां राक्षसविशेषाणां वा सुराणां देवविशेषाणां वा ॥ ४४ ॥

गो० टी०–तरुणेति । वैडूर्यगुलिकाचितं वैडूर्यमणिखचितम् ॥ ४५ ॥

रा० टी०–विशीर्णमिति । विशीर्णम् अत एव भूमौ पतितं काञ्चनं कवचं दिव्यमाल्योपशोभितं शतशलाकं शलाकाशतविशिष्टम् इदं छत्रं च कस्य ॥ ४५ ॥

गो० टी०–छत्रमिति । सम्यक् शतधा भग्नदण्डमित्यन्वयः ॥ ४६ ॥

४६ ] ति० टी०–काञ्चनोरश्छदाः काञ्चनमयतनुत्राणाः ॥ ४६ ॥

रा० टी०–भग्नेति । भूमौ निपातितम् इदं भग्नदण्डं काञ्चनोरच्छदाः स्वर्णमयोरच्छदविशिष्टाः पिशाचवदनाः रणे निहिताः भीमरूपाः इमे खरा गर्दभविशेषाश्च कस्य । सार्धश्लोक एकान्वयी ॥ ४६ ॥

गो० टी०–काञ्चनेति । काञ्चनमयाः उरच्छदाः तनुत्राणि येषां ते खराः अश्वतराः रासभविशेषा वा ॥ ४७ ॥

४७ ] ति० टी०–समरे स्वामिप्रकाशको ध्वजो यत्र स समरध्वज इति रथविशेषणम् । तादृशो रथोऽपविद्धः परित्यज्य पातितो भग्नश्चेत्युत्तरेणान्वयः । केचित्तु–ध्वजोपविद्धो ध्वस्तो रथो भग्न इत्यन्वयमाहुः ॥ ४७ ॥

रा० टी०–दीप्तेति । दीप्तपावकसंकाशः प्रदीप्तज्वलनसदृशः समरध्वजः समरे ध्वजः स्वामिप्रकाशकश्चिह्नविशेषः यस्मिन्सः सांग्रामिकः अपविद्धः पातितः अत एव भग्नः रथः कस्य । अर्धद्वयमेकान्वयि ॥ ४७ ॥

गो० टी०–दीप्तेति । द्युतिमत्त्वादेव दीप्तपावकसंकाशः समरे नायकसूचको ध्वजः समरध्वजः अपविद्धः रथश्च भग्न इति संबन्धः । सांग्रामिकः समरोचितः ॥ ४८ ॥

४८ ] ति० टी०–रथाक्षमात्राश्चतुःशताङ्गुलदीर्घा विशिखाः फलभागा इत्यर्थः ॥ ४८ ॥

रा० टी०–रथेति । रथाक्षमात्रा रथाधारप्रमाणकाः चतुःशताङ्गुलायता इत्यर्थः, विशिखाः विगताः शिखाः फलभागा येषां ते तपनीयविभूषणाः सुवर्णशोभिताः घोरदर्शनाः निहताः केनचिद्भग्नाः अत एव प्रकीर्णाः इतस्ततः प्रक्षिप्ताः इमे बाणाः कस्य ॥ ४८ ॥

गो० टी०–रथेति । रथस्याक्षः आधारदण्डः तन्मात्राः तद्वद्दीर्घप्रमाणाः प्रमाणे मात्रच् । विशिखाः विगतशिखाः मुण्डाग्रा इत्यर्थः, विगतफलभागा इति वा । अभिहताः भग्नाः प्रकीर्णाः इतस्ततो विप्रकीर्णाः ॥ ४९ ॥

४९ ] ति० टी०–निहताः परेण योधेन । शरावरौ तूणीरौ ॥ ४९ ॥

रा० टी०–शरावराविति । शरैः पूर्णौ विध्वस्तौ शरावरौ इषुधी पश्य प्रतोदाभीषुहस्तः प्रतोदस्तोत्रम् अभीषवः प्रग्रहरश्मयः हस्ते यस्य सोऽयं कस्य पुरुषस्य सारथिर्हतः । एषा पदवी प्रपतितरथादिसूचितमार्गः कस्यापि रक्षस एव व्यक्तं स्फुटमेतत् ‘अभीषुः प्रग्रहे रश्मौ’ इति शाश्वतः॥४९॥६०॥

---

१ अर्धमेतत् गो. नास्ति । २ कस्य भूमौ सम्यागिति गो. पाठः । ३ ऽभिहता इति गो. पाठः

प्रतोदाभीषुहस्तोऽयं कस्य वा सारथिर्हतः । [ कस्येमे पुरुषव्याघ्र शयाते निहतौ युधि ।
चामरग्राहिणौ सौम्य सोष्णीषमणिकुण्डलौ ।।] पदवी पुरुषस्यैषा व्यक्तं कस्यापि रक्षसः ॥ ५० ॥
वैरं शतगुणं पश्य मम [2]तैर्जीवितान्तकम् । सुघोरहृदयैः सौम्य राक्षसैः कामरूपिभिः ॥ ५१ ॥
हृता मृता वा [3]वैदेही भक्षिता वा तपस्विनी । न धर्मस्त्रायते सीतां ह्रियमाणां महावने ॥ ५२ ॥
भक्षितायां हि वैदेह्यां हृतायामपि लक्ष्मण । के हि लोकप्रियं कर्तुं शक्ताः सौम्य ममेश्वराः ॥५३॥
कर्तारमपि लोकानां शूरं करुणवेदिनम् । अज्ञानादवमन्येरन्सर्वभूतानि लक्ष्मण ॥ ५४ ॥
मृदुं लोकहिते युक्तं दान्तं करुणवेदिनम् । निर्वीर्य इति मन्यन्ते नूनं मां त्रिदशेश्वराः ॥ ५५ ॥

---

गो० टी०—शरावराविति । शरानावृणुत इति शरावरौ निषङ्गौ प्रतोदः तोत्रम् अभीषवः रश्मयः 'अभीषुः प्रग्रहे रश्मौ' इति शाश्वतः ॥ ५० ॥

गो० टी०—कस्येति । उष्णीषः शिरोवेष्टनम् ॥ ५१ ॥

५० ] ति० टी०—प्रतोदस्तोत्रम् अभीषवः प्रग्रहाः कस्यापि राक्षसपुरुषस्यैषा पदवी पदसंचारमार्गः ॥ ५० ॥

गो० टी०—पदवीति । एषा पदवी मार्गः पुरुषस्य जघनभागनिम्नत्वाद्यभावात् तत्रापि रक्षसः पदवी विषमरूपत्वात् । एवं च मम राक्षसैः सह इदं वैरं शतगुणं सत्तेषां जीवितमन्तयति विनाशयतीति जीवितान्तकं संपन्नं पश्य । एतावत्पर्यन्तं राक्षसैस्तीव्रवैराकरणात्तदपराधः सोढः संप्रति तान् समूलं नाशयिष्यामीति भावः ॥ ५२ ॥

५१ ] ति० टी०—अतो मम तै राक्षसैः सह एतन्निमित्तजं वैरं पूर्ववैराच्छतगुणं सत्तेषां जीवितान्तकं जीवितस्यान्तकमन्तरूपं संपन्नं पश्य ॥ ५१ ॥

रा० टी०—वैरमिति । सुघोरहृदयैस्तैः सीतापहारिभिः राक्षसैः सह जीवितान्तकं राक्षसजीवनविघातकं शतगुणं पूर्वापेक्षया अत्यधिकं मम वैरं पश्य जानीहि । 'ममासीत्' इति तीर्थपाठः ॥ ५१ ॥

गो० टी०—सुघोरेति । मृता मारिता ॥ ५३ ॥

५२-५३ ] ति० टी०—एवं रक्षोभिः सीताविपत्तिं निश्चित्य धर्मं निन्दति—नेति । यतः सीतां धर्मो न त्रायते । एवं च भक्षितायां हृतायां वा वैदेह्यां के हि लोके मम प्रियं कर्तुं शक्ताः, न केऽपि । धर्मासाध्ये तेषामकिंचित्करत्वादिति भावः ॥ ५२ ॥ ५३ ॥

रा० टी०—हृतेति । यतः अमृता मरणधर्मरहिता अत एव न भक्षिता वैदेही हृतैव महावने ह्रियमाणां सीतां धर्म एव त्रायते ॥ ५२ ॥

गो० टी०—अस्यामवस्थायामरक्षकत्वाद्धर्मेऽपि रोषो जात इत्याह—न धर्म इति । इदमर्धमेकम् ॥ ५४ ॥

रा० टी०—भक्षितायामिति । भक्षितायां रुद्रादिद्वारा सकललोकसंहारकर्त्र्यां वैदेह्यां हृतायां सत्यां मम प्रियं कर्तुं लोके के ईश्वराः ब्रह्मविष्णुमहेशाद्यन्यतमाः समर्थाः न केऽपीत्यर्थः । अत्र रुद्रादिद्वारा सकललोकसंहारकर्त्र्यां हृतायामित्युक्त्या अपहरणमपि कस्मैचिन्निमित्ताय तदिच्छयैव जातमिति सूचितं तेनापहरणकर्तुस्तत्परिकरवर्तित्वं सूचितम् । भक्षिताशब्दः कर्तृनिष्ठान्तः कर्माविवक्षितत्वेनाकर्मकत्वात् ॥ ५३ ॥

गो० टी०—न केवलं धर्मे तत्फलप्रददेवेषु च रोषो जात इत्याह—भक्षितायामिति । के वा ईश्वराः मम अप्रियं कर्तुं शक्ता इत्यन्वयः । आद्यो हिः पादपूरणे द्वितीयः प्रसिद्धौ ॥५५॥

५४ ] ति० टी०—अथ पौरुषमेवावलम्बितुं तच्छेषतया कांचिल्लोकस्थितिमाह—कर्तारमिति । सर्वलोकस्योत्पत्तिस्थितिसंहारकर्तारमपि श्रुत्यादिप्रसिद्धं शूरं त्रिपुरसंहारादिविषयकात्यन्तशौर्यवन्तं महेश्वरमपि करुणवेदिनं करुणं यथा तथा वेदितुं शीलमस्य तम् । दयादृष्ट्या तूष्णीं स्थितमज्ञानात्तद्वैभवाज्ञानादवमन्येरन् । किमयं कुपितोऽपि करिष्यतीति न गणयन्तीत्यर्थः ॥ ५४ ॥

रा० टी०—नन्वपहरणकर्तुः सीतापरिकरस्थत्वे त्वत्परिकरस्थत्वमर्थसमाजग्रस्तामिति कथं भवन्तमनादृत्य भवत्प्रियामपहृतवान् इत्यत आह—कर्तारमिति । लोकानां कर्तारम्, उत्पत्त्यादिविधातारं शूरम् अतिशौर्यवन्तं करुणवेदिनं करुणो दयालुरेव वेदी दयालुत्वसमानाधिकरणसकलविषयकज्ञानवन्तमित्यर्थः । परमात्मानम् अज्ञानात् सर्वभूतानि अवमन्येरन् नाद्रियन्ते इत्यर्थः । एतेन अज्ञानस्य अतिप्राबल्यं सूचितम् ॥५४॥

गो० टी०—तर्हीदानीं कथमप्रियं तैः कृतमित्यत्राह—कर्तारमिति । लोकानां कर्तारमपि शूरमपि संहारकरणसमर्थमपि करुणवेदिनं कारुण्यपरं पुरुषं सर्वभूतानि अज्ञानादवमन्येरन् नाद्रियेरन् । लोकस्वभावोऽयमिति भावः ॥ ५६ ॥

५५ ] ति० टी०—यदेवमतः—मृदुमिति । लोकहिते प्राणिसौख्यसंपादने युक्तं युक्तचित्तम् अत एव मृदुस्वभावं दान्तं नानाप्रकारेण दुर्विषयप्रवृत्तिरहितेन्द्रियवर्गं मां त्रिदशेश्वरा इन्द्रादयो निर्वीर्यं मन्यन्ते यतः सीतात्राणं न कृतवन्त इत्यर्थः ॥ ५५ ॥

रा० टी०—ननु तत्परिकरस्थत्वेनैव तस्यां हृतायां किमर्थं

---

१ श्लोकोऽयमधिकः गो. पाठे । २ इदमिति गो. पाठः । ३ सीता सेति गो. पाठः ।

मां प्राप्य हि गुणो दोषः संवृत्तः पश्य लक्ष्मण । अद्यैव सर्वभूतानां रक्षसामभवाय च ॥ ५६ ॥
संहृत्यैव शशिज्योत्स्नां महान्सूर्य इवोदितः । संहृत्यैव गुणान्सर्वान्मम तेजः प्रकाशते ॥ ५७ ॥
नैव यक्षा न गन्धर्वा न पिशाचा न राक्षसाः । किंनरा वा मनुष्या वा सुखं प्राप्स्यन्ति लक्ष्मण ॥ ५८ ॥
ममास्त्रबाणसंपूर्णमाकाशं पश्य लक्ष्मण । असंपातं करिष्यामि ह्यद्य त्रैलोक्यचारिणाम् ॥ ५९ ॥
संनिरुद्धग्रहगणमावारितनिशाकरम् । विप्रनष्टानलमरुद्भास्करद्युतिसंवृतम् ॥ ६० ॥
विनिर्मथितशैलाग्रं शुष्यमाणजलाशयम् । ध्वस्तद्रुमलतागुल्मं विप्रणाशितसागरम् ॥ ६१ ॥

---

भवतो विषाद इत्यत आह—मृदुमिति । मृदुं सरलस्वभावं लोकहिते युक्तं सज्जनप्रियार्थे निरतं करुणवेदिनं करुणत्वसमानाधिकरणसकलविषयकज्ञानवन्तं मां त्रिदशेश्वराः ब्रह्मप्रभृतयः निर्वीर्यः पराक्रमरहितोऽयमिति मन्यन्ते मंस्यन्ते "वर्तमानसामीप्ये—" इति भविष्यति लट् एतेन मदेकनिवर्तनीयराक्षसोपद्रुतानां महान् खेदो भविष्यतीति सूचितं तेन तन्निवर्तनोपायः कर्तव्य इति ध्वनितम् ॥ ५५ ॥

गो० टी०—विशिष्य गर्विता देवाः मां नाद्रियेरन्नित्याह—मृदुमिति । लोकहिते युक्तं सक्तम् अत एव मृदुं कोमलहृदयम् अत एव करुणवेदिनं दान्तं विषयचापलरहितं मां निर्वीर्यं मन्यन्ते अज्ञत्वाविशेषादिति भावः ॥ ५७ ॥

५६–५७ ] ति० टी०—तस्मात्पौरुषमेवावलम्बनीयमित्याह—मामिति । गुणोऽपि मार्दवादिर्मां प्राप्य दोषोऽनिष्टसाधनं वृत्त इति हेतोरेतं त्यक्त्वा पौरुषमवलम्बे । पश्य अद्य मम तेज एव प्रकाशते । सर्वभूतानामभवाय नाशाय । शशिज्योत्स्नां संहृत्यैव प्रलयकालोदितो महासूर्य इव । शशिज्योत्स्नातुल्यान्मामकान्गुणान्संहृत्यैव रविवत्तेजो मदीयं प्रकाशते पश्येत्यन्वयः ॥ ५६ ॥ ५७ ॥

रा० टी०—मामिति । हे लक्ष्मण ! गुणः सौशील्यादिः दोषः संवृत्तः संपन्न इति त्वं पश्य जानीहि । एतेन यदि सौशील्यादिगुणो न स्यात् तर्हि राक्षसप्रवृद्धिर्न स्यादिति व्यञ्जितम् । अर्थं पृथक्—अद्येति । सर्वभूतानाम् अभवाय चिन्तानिवृत्तये रक्षसां अभवाय परमकल्याणाय च अतिप्रभावविशिष्टशरस्पर्शहेतुकराक्षसत्वनिवृत्तिपूर्वकमोक्षायेत्यर्थः । शशिज्योत्स्नां संहृत्यैव उदितो महान् सूर्य इव सर्वान् दण्डदानविरोधिगुणान् सौशील्यादीन् संहृत्य एव इव मम तेजः अद्यैव प्रकाशते तत्पश्येति तात्पर्यम् । सार्धश्लोक एकान्वयी ॥ ५६ ॥ ५७ ॥

गो० टी०—मामिति । गुणः कारुण्यादिः मां प्राप्य दोषः संवृत्तः अनिष्टसाधनत्वेन संवृत्तः । तस्मादस्मदवमानहेतुतया दोषरूपेण गुणेन किं प्रयोजनमित्यर्थः । यद्वा सर्वभूतानां रक्षसां च अभवाय नाशाय गुणः दोषः संवृत्तः दयां त्यक्त्वा क्रोधं करिष्यामीत्यर्थः ॥ ५८ ॥

गो० टी०—संहृत्येति । यथा उदितः सूर्यः शशिज्योत्स्नां शीतलचन्द्रचन्द्रिकां संहृत्यैव प्रकाशते । तथा मम तेजः गुणान् मृदुत्वादीन् संहृत्यैव निरस्यैव प्रकाशते ॥ ५९ ॥

५८ ] ति० टी०—तदेव प्रपञ्चयति—नैवेति ॥ ५८ ॥

रा० टी०—तेजसः प्रकाशाभावे दोषमाह—नैवेति । यक्षादयः तेजसः प्रकाशाभावे इति शेषः सुखं न प्राप्स्यन्ति । अत्र राक्षसा विभीषणादयः सुखशब्देन पारलौकिकसुखस्यापि ग्रहणे राक्षससामान्यग्रहेऽपि न क्षतिः । वौ निषेधार्थौ ॥ ५८ ॥

गो० टी०—देवविषयः कोपस्तत्संबन्धिष्वपि प्रवर्तितामित्याह—नैवेति ॥ ६० ॥

५९ ] ति० टी०—पश्य अचिरादेवेति शेषः । त्रैलोक्यचारिणामसंपातं बाणावरणात्क्रियाराहित्यं यथा भवति तथा करिष्यामि ॥ ५९ ॥

रा० टी०—ममेति । अस्त्रबाणसंपूर्णम् अस्त्रैर्ब्रह्मास्त्रादिभिः बाणैश्च संपूर्णं व्याप्तमाकाशं पश्य । अद्य त्रैलोक्यचारिणां राक्षसानामसंपातं क्रियाराहित्यं करिष्यामि ॥ ५९ ॥

गो० टी०—ममेति । अस्त्राणि ब्रह्मास्त्रादीनि पश्य उत्तरक्षण इति शेषः । त्रैलोक्यचारिणां निःसंपातं[१] बाणप्रचारतोऽशक्यसंचारम् ॥ ६१ ॥

६०–६१ ] ति० टी०—संनिरुद्धप्रचारो ग्रहगणो यत्र तत्त्रैलोक्यम् । विप्रनष्टा अनलादिद्युतयो यत्र तच्च तत्संवृतं तमसा संवृतमित्यर्थः ॥ ६० ॥ ६१ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—समित्यादिभिः । कालकर्मणा कालस्य इव कर्म व्यापारो यस्य तेन रावणतेजसेत्यर्थः । संनिरुद्धा आच्छादिता ग्रहगणा यस्मिन् अत एव आवारितनिशाकरम् आच्छादितनिशाकरविशिष्टमत एव विप्रनष्टानलमरुद् विप्रनष्टौ स्वाभाविकप्रकाशाभावेन स्वाभाविकगत्यभावेन च विप्रनष्टप्रायौ अनलमरुतौ यस्मिंस्तत् अत एव भास्करद्युतिसंवृतं संवृतभास्करद्युतिकमत एव विनिर्मथितशैलाग्रं विनिर्मथितानि विलोडितानि शैलाग्राणि यस्मिन् तत् अत एव शुष्यमाणजलाशयं शुष्यज्जलाशयविशिष्टमत एव ध्वस्तद्रुमलतागुल्मं ध्वस्तद्रुमादिविशिष्टमत एव विप्रनाशितः इतस्ततश्चालितः सागरो यस्मिन् तत् त्रैलोक्यं संयुक्तं बाधकविध्वंसेन तत्तत्प्रभावविशिष्टं करिष्यामि । सार्धश्लोकद्वयमेकान्वयि ॥ ६० ॥ ६१ ॥



१ निःसंपातमिति गो. पाठः ।

त्रैलोक्यं तु करिष्यामि संयुक्तं कालकर्मणा । न [१]ते कुशलिनीं सीतां प्रदास्यन्ति ममेश्वराः ॥ ६२ ॥
अस्मिन्मुहूर्ते सौमित्रे मम द्रक्ष्यन्ति विक्रमम् । नाकाशमुत्पतिष्यन्ति सर्वभूतानि लक्ष्मण ॥ ६३ ॥
[ [३]मम चापगुणोन्मुक्तैर्बाणजालैर्निरन्तरम् । [४]अर्दितं मम नाराचैर्ध्वस्तभ्रान्तमिव द्विजम् ॥ ]
समाकुलममर्यादं जगत्पश्याद्य लक्ष्मण । आकर्णपूर्णैरिषुभिर्जीवलोकदुरावरैः ॥ ६४ ॥
करिष्ये मैथिलीहेतोरपिशाचमराक्षसम् । मम रोषप्रयुक्तानां विशिखानां बलं सुराः ॥ ६५ ॥
द्रक्ष्यन्त्यद्य विमुक्तानां[५]ममर्षाद्दूरगामिनाम् । नैव देवा न दैतेया न पिशाचा न राक्षसाः ॥ ६६ ॥
भविष्यन्ति मम क्रोधात्त्रैलोक्ये विप्रणाशिते । देवदानवयक्षाणां लोका ये रक्षसामपि ॥ ६७ ॥
बहुधा [७]निपतिष्यन्ति बाणौघैः शकलीकृताः । निर्मर्यादानिमाँल्लोकान्करिष्याम्यद्य सायकैः ॥ ६८ ॥

---

गो० टी०—सन्निरुद्धेत्यादिसार्धश्लोकद्वयमेकान्वयम् । सन्निरुद्धः ग्रहगणः ग्रहगणसंचारः यस्य आवारितः आच्छादितः विप्रणष्टानलमरुत् नष्टाग्निवातं भास्करद्युतिसंवृतं संवृतभास्करद्युति । आहिताग्न्यादित्वान्निष्ठायाः परनिपातः । कालसाध्यो धर्मः कालधर्मः विनाशः तेन कालधर्मणा अनिजार्थः ॥ ६२ ॥ ६३ ॥

६२–६३ ] ति० टी०—कालकर्मणा कालसाध्यं कर्म नाशस्तेन । 'कालधर्मणा' इति पाठेऽपि तद्रूपेण कालधर्मेणेत्यर्थः तत्पुरुषेऽनिजार्थः ॥ ६२ ॥ ६३ ॥

रा० टी०—नेति । ईश्वराः सीतासमर्पणे समर्थाः ते राक्षसाः कुशलिनीं नित्यं कुशलविशिष्टां मम सीतां यदि न दास्यन्ति तर्हि अस्मिन् लोके मुहूर्ते कस्मिंश्चित् समये मम विक्रमं द्रक्ष्यन्ति । अर्धद्वयमेकान्वयि ॥ ६२ ॥

गो० टी०—न तामिति । तस्मादस्मिन् मुहूर्ते इत्युपस्कार्यम् । कुशलिनीं क्षेमयुक्ताम् अक्षतामित्यर्थः ॥ ६४ ॥

रा० टी०—नेति । हे लक्ष्मण ! मम चापमुखात् धनुरग्रभागात् मुक्तैः बाणजालैः निरन्तरम् अन्तररहितम् आकाशं सर्वभूतानि न उत्पतिष्यन्ति ॥ ६३ ॥

रा० टी०—मर्दितमिति । मम नाराचैः बाणविशेषैः समाकुलं व्याप्तमत एव मर्दितं प्राप्तक्षोदमत एव ध्वस्तभ्रान्तमृगद्विजं ध्वस्ताः अधःपतिताः भ्रान्ताश्च मृगद्विजाः यस्मिन् अत एव अमर्यादं चित्तस्वास्थ्यरहितत्वेन स्वस्वपरिपाटीरहितजन्तुविशिष्टं जगत्पश्य ॥ ६४ ॥

गो० टी०—नाकाशमिति । गुणो मौर्वी ॥ ६५ ॥

गो० टी०—अर्दितमिति । अर्दितं हिंसितं समाकुलं सम्यग्व्यग्रम् अमर्यादं त्यक्तस्वस्वप्रकृत्यवस्थानम् ॥ ६६ ॥

६४–६५] ति० टी०—अमर्यादं त्यक्तस्वस्वप्रकृत्यवस्थानम् जीवलोकेन दुरावरैर्दुर्निवारैः । दुरावरशब्दः खलन्तः ॥ ६४ ॥ ६५ ॥

रा० टी०—ननु राक्षसहेतोः सर्वेषां विनाशं कथं करिष्यसीत्यत आह—आकर्णेति । जीवलोकदुरावरैः जीवलोके नियम्यनियामकयोर्भुवने दुरावरं दुर्वारणं येषां तैः आकर्णपूरैः इषुभिः बाणैः अपिशाचं पिशाचरहितम् । अराक्षसं राक्षसरहितं जगत् मैथिलीहेतोः करिष्ये । एतेन राक्षसतदनुयाय्यतिरिक्तानां भीतिमात्रं भविष्यति न ध्वंस इति ध्वनितम् ॥ ६५ ॥

गो० टी०—आकर्णेति । दुरावरैः दुर्वारैः जीवलोकं ब्रह्माण्डम् ॥ ६७ ॥

रा० टी०—ममेति । अमर्षात् राक्षसकृतबहुदुष्कृतासहनात् हेतोः रोषप्रयुक्तानां क्रोधात्यक्तानां विमुक्तानां विशेषेण मुक्तं संसारान्मोक्षो यैः तेषां दूरगामिनां विशिखानां बाणानां बलं सुराः द्रक्ष्यन्ति । एतेन सुरकार्यार्थमेवायमुद्योग इति ध्वनितम् ॥ ६६ ॥

गो० टी०—ममेति । रोषप्रयुक्तानां रोषसंप्रयुक्तानाम् ममेति शेषः । अतिदूरातिगामिनाम् अतिदूरातिपातिनाम् ॥ ६८ ॥

६६–६८ ] ति० टी०—देवादयो न भविष्यन्ति । प्रत्येकं सर्वे नशिष्यन्तीत्यर्थः ॥ ६६–६८ ॥

रा० टी०—ननु बहूनां रक्षसां पुलस्त्यवंशत्वात् तद्द्रोहे तद्वंशियकुबेरादिभिरपि भवतां द्रोहः संपद्येतेत्यत आह—नेति । प्रणाशिते अस्मन्नियम्यरुद्रादिद्वारा अनेकवारमदर्शनं प्रापिते त्रैलोक्ये विद्यमाना देवादयो मम क्रोधात् न भविष्यन्ति अस्मद्द्रोहबुद्धिमत्त्वे विनङ्क्ष्यन्तीत्यर्थः । अत एव मद्बाणैः शकलीकृताः खण्डत्वं प्रापिताः देवादीनां लोकाः बहुधा अनेकविधं निपतिष्यन्ति । अर्धचतुष्टयमेकान्वयि ॥ ६७ ॥ ६८ ॥

गो० टी०—नैवेति । न भविष्यन्ति नशिष्यन्तीत्यर्थः । पूर्वं दुःखप्राप्तिरेवोक्ता ॥ ६९ ॥

गो० टी०—देवेति । बहुधा शकलीकृता इत्यन्वयः ॥ ७० ॥

रा० टी०—निरिति । मृतां रुद्रादिद्वारा सकलजगद्विध्वंसिनीं हतां मम प्रियामिति शेषः । ईश्वराः सीतासमर्पणे समर्थाः राक्षसाः यदि न दास्यन्ति तर्हि सायकैः इमान् राक्षसत्वं प्राप्तान् लोकान् जनान् निर्मर्यादान् त्यक्तराक्षसस्वभावान् करिष्यामि । मृताशब्दः अविवक्षितकर्मकत्वात् कर्तृप्रत्ययान्तः ॥ ६९ ॥

---

१ धर्मणेति गो. पाठः । २ तामिति गो. पाठः । ३ श्लोकोऽयमधिकः गो. रा. पाठे । ४ मर्दितमिति रा. पाठः । ५ सायकानामिति गो. पाठः । ६ अतिदूरातीति गो. पाठः । ७ न भविष्यन्तीति गो. पाठः ।

हृतां मृतां वा सौमित्रे न दास्यन्ति ममेश्वराः । तथारूपां हि वैदेहीं न दास्यन्ति यदि प्रियाम् ॥ ६९ ॥
नाशयामि जगत्सर्वं त्रैलोक्यं सचराचरम् । यावद्दर्शनमस्या वै तापयामि च सायकैः ॥ ७० ॥
इत्युक्त्वा क्रोधताम्राक्षः स्फुरमाणोष्ठसंपुटः । वल्कलाजिनमाबद्ध्य जटाभारमबन्धयत् ॥ ७१ ॥
तस्य क्रुद्धस्य रामस्य तथाभूतस्य धीमतः । त्रिपुरं जघ्नुषः पूर्वं रुद्रस्येव बभौ तनुः ॥ ७२ ॥
लक्ष्मणादथ चादाय रामो निष्पीड्य कार्मुकम् । शरमादाय संदीप्तं घोरमाशीविषोपमम् ॥ ७३ ॥
संदधे धनुषि श्रीमान्रामः परपुरंजयः । युगान्ताग्निरिव क्रुद्ध इदं वचनमब्रवीत् ॥ ७४ ॥
यथा जरा यथा मृत्युर्यथा कालो यथा विधिः । नित्यं न प्रतिहन्यन्ते सर्वभूतेषु लक्ष्मण ॥
तथाहं क्रोधसंयुक्तो न निवार्योऽस्म्यसंशयम् ॥ ॥ ७५ ॥
पुरेव मे चारुदतीमनिन्दितां दिशन्ति सीतां यदि नाद्य मैथिलीम् ।
सदेवगन्धर्वमनुष्यपन्नगं जगत्सशैलं परिवर्तयाम्यहम् ॥ ७६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे चतुःषष्टितमः सर्गः ॥ ६४ ॥

---

गो० टी०—निर्मर्यादानिति । निर्मर्यादान् स्वस्वव्यवस्थारहितान् न दास्यन्ति न दास्यन्ति यदि ॥ ७१ ॥

६९-७२] ति० टी०—तथारूपां यथापूर्वस्वभावाम् । अत्र न दास्यन्तीति पौनरुक्त्यं क्रोधातिशयान्न दोषाय ॥६९-७२॥

रा० टी०—ननु रावणभिया सर्वे लोकास्तत्साहाय्यं करिष्यन्तीति कथं प्रियायाः प्राप्तिर्भविष्यतीत्यत आह—तथेति । प्रियां वैदेहीं यदि न दास्यन्ति तर्हि सचराचरं रावणसहायीभूतचराचरसहितं त्रैलोक्यं लोकत्रयात्मकं सर्वं जगत् नाशयामि नाशयिष्यामि ॥ ७० ॥

गो०टी०—हृतां मृतां वेत्यत्र सूचितमाह—तथारूपामिति । जगत्सर्वं सर्वं जनमित्यर्थः । अन्यथा त्रैलोक्यमित्यनेन पुनरुक्तिः । सचराचरमित्यनुवादः ॥ ७२ ॥

रा० टी०—इतीति । इत्यनेन प्रकारेण उक्त्वा क्रोधताम्राक्षः स्वीकृतराक्षसत्वनिवर्तनहेतुककोपजनितात्यरुणनयनः रामः कार्मुकं निष्पीड्य दृढमुष्टिना परिगृह्य आशीविषोपमम् अतिविषवत्कृष्णसर्पसदृशं शरमादाय धनुषि संदधे ॥ ७१ ॥

गो० टी०—इत्युक्त्वेति । श्लोकद्वयमेकान्वयम् । निष्पीड्य दृढमुष्टिबलेन गृहीत्वा ॥ ७३ ॥ ७४ ॥

७३-७४ ति० टी०—निष्पीड्य दृढमुष्टिबन्धेन गृहीत्वा ॥ ७३ ॥ ७४ ॥

रा० टी०—युगान्ते इति । युगान्ताग्निरिव क्रुद्धो रामः इदमब्रवीत् । अर्धं पृथक् । तद्वचनाकारमाह—यथेति । हे लक्ष्मण ! सर्वभूतेषु प्राप्ताः जरादयो यथा न प्रतिहन्यन्ते परमात्मातिक्रपापात्रातिरिक्तैर्न निवार्यन्ते तथा क्रोधसंयुक्तोऽहम् असंशयं यथा भवति तथा न निवार्योऽस्मि ॥ ७२ ॥ ७३ ॥

७५ ] ति० टी०—यथा जरादयोऽनिवार्यास्तथाहमस्मात्कर्मणः केनापि वारयितुमशक्यः । विधिर्दैवम् ' विधिर्विधाने दैवेऽपि' इति कोशः ॥ ७५ ॥

गो० टी०—यथेत्यादिसार्धश्लोकः । विधिः अदृष्टं जरादयो यथा न प्रतिहन्यन्ते तथाहं न निवार्यः । अन्ये यथाशब्दाः पादपूरणार्थाः, यद्वा बहुवचनमविवक्षितम् । प्रतिहन्यत इति प्रत्येकमन्वयः ॥ ७५ ॥

७६ ] ति० टी०—पुरे वेति । अत्र पुरेत्यावर्तते । पुरेव पूर्वरूपसदृशरूपवतीं पुरा न दिशन्ति न दास्यन्तीत्यर्थः । परिवर्तयामि नाशयामि । नन्वेवंविधः क्रोधः कथमस्य किमर्थं चेति चेच्छृणु । मनुष्यदेहधारणेन तद्व्यवहारनटनमेवैतत् । किंच ईदृशदुःखकालेऽस्य क्रोधाभावे रावणो मनुष्यबुद्धिं कुर्यात् । तथा च तद्वधो शक्यः स्यादित्येतदर्थं च सः । मृत्युं मरणधर्मेण योजयामि इत्यादि वचोऽपि रावणवचोवदेव आरोपितक्रोधमूलकत्वात् । अत एव शरैर्विधमिष्यामीत्युक्तिः । लक्ष्मणस्तु तत्त्वज्ञोऽपि तद्वदेवातत्त्वज्ञ इव तन्मायामोहितो वा प्रलयकालिकरौद्रशक्त्यावेशं संभाव्यानुनयति स्म किंचास्य क्रोधस्यारोपितत्वाभावेऽप्य सीताया अलाभे सर्वजगत्परिवर्तनं प्रतिज्ञाय कथं लक्ष्मणप्रार्थनयापि तामन्यथयेत् । अन्यथा कैकेय्यग्रे कृतां वनवासप्रतिज्ञां कथं कौसल्यावचसा न त्यक्तवान् । तस्मात्सा यथार्था, इयं तु आरोपितेत्येव सारम् । अनेन व्यवहारेण क्रोधादिकाले कृताया अयुक्ताया अपि प्रतिज्ञाया अपालनेऽप्यनतदोषाभाव इत्यपि सूचितम् ॥ ७६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे चतुःषष्टितमः सर्गः ॥ ६४ ॥

रा० टी०—पुरेति । पुरा इव अरुदतीं क्लेशरहितामित्यर्थः । अनिन्दितां नित्यं निन्दारहितां सीतां यदि न दिशन्ति अप-

---

१ अर्धमेतत् गो. रा. नास्ति । २ रोषताम्राक्षो रामो निष्पीड्य कार्मुकमिति गो. रामो निष्पीड्य कार्मुकमिति रा. पाठः । ३ एतदादिश्लोकद्वयं गो. रा. नास्ति । ४ संधायेति गो. पाठः ।

## पञ्चषष्टितमः सर्गः ।

सीतापहारात्प्रकुपितमतः सकललोकसंहारसमुद्युक्तं रामं प्रति युक्तियुग्वचनोपन्यासेन लक्ष्मणः परिसान्त्वयति ।

तप्यमानं [1]तदा रामं सीताहरणकर्शितम् । लोकानामभवे युक्तं [2]सांवर्तकमिवानलम् ॥ १ ॥
वीक्षमाणं धनुः सज्यं निःश्वसन्तं पुनः पुनः । दग्धुकामं जगत्सर्वं युगान्ते च यथा हरम् ॥ २ ॥
अदृष्टपूर्वं संक्रुद्धं दृष्ट्वा रामं [3]स लक्ष्मणः । अब्रवीत्प्राञ्जलिर्वाक्यं मुखेन परिशुष्यता ॥ ३ ॥
पुरा भूत्वा मृदुर्दान्तः सर्वभूतहिते रतः । न क्रोधवशमापन्नः प्रकृतिं हातुमर्हसि ॥ ४ ॥
चन्द्रे लक्ष्मीः प्रभा सूर्ये गतिर्वायौ भुवि क्षमा । एतच्च नियतं [4]नित्यं त्वयि चानुत्तमं यशः ॥ ५ ॥
एकस्य नापराधेन लोकान्हन्तुं त्वमर्हसि । ननु जानामि कस्यायं भग्नः साङ्ग्रामिको रथः ॥ ६ ॥

हरणकर्तारो न दास्यन्ति तर्हि देवादिसहितं शैलसहितं जगत् परिवर्तयामि । एतेन राक्षसभिया देवादिभिस्तत्साहाय्यं न कार्यमिति ध्वनितम् ॥ ७४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे चतुःषष्टितमः सर्गः ॥ ६४ ॥

गो० टी०-पुरेति । पुरेव मे चारुदतीं मायामृगं प्रति गमनात् पूर्वं कान्तं मां प्रति इमं मृगं गृहीत्वा मह्यं देहीति हर्षेण यत् स्मितं कृतवती तेन सहैव न दास्यन्ति चेत् अनिन्दितां तामलब्ध्वा जगदुपसंहारं करिष्यामीति चेदपि इदं निन्दितमिति न केऽपि वक्ष्यन्तीति भावः । वक्ष्यते हि 'यदि रामः समुद्रान्तां मेदिनीं परिवर्तयेत् । अस्या हेतोर्विशालाक्ष्या युक्तमित्येव मे मतिः' इति सर्वज्ञेन हनुमता । चारुदतीमित्यत्र छन्दसीति सूत्रेण दन्तशब्दस्य दत्रादेशः अग्रान्तेति सूत्रस्थचकारेण वा दत्रादेशः । सीताम् अयोनिजतया मत्तोऽप्यतिशयितां मैथिलीं वीरश्रेष्ठजनकचक्रवर्तिपुत्रीत्वेन मत्सदृशीम् । सदेवेत्यादि । सर्वलोकस्य संभूतमरणमेव करिष्यामीति भावः । परिवर्तयामि नाशयामि अन्यथा करिष्यामीति वा ॥ ७६ ॥

अस्मिन् सर्गे सार्धपञ्चसप्ततिश्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने चतुःषष्टितमः सर्गः ॥६४॥

१ ] ति० टी०-अभवे नाशे युक्तमुद्युक्तम् सांवर्तकं प्रलयकालिकम् ॥ १ ॥

२ ] ति० टी०-हरं कालाग्निरुद्रम् ॥ २ ॥

३ ] ति० टी०-अदृष्टपूर्वं पूर्वमेवं कदाप्यदृष्टसंहारशक्त्यावेशं संक्रुद्धं रामं दृष्ट्वा राममब्रवीदिति रामपदद्वयसंबन्धः । मुखपरिशोषो लोकविनाशभयेन ॥ ३ ॥

रा० टी०-रामं प्रति लक्ष्मणोक्तिं वर्णयितुमाह-तप्यमानमित्यादिभिः । सीताहरणकर्शितं लोकानां भुवनानामभवे यथोचितं चिन्ताभावार्थं परमकल्याणार्थं वा युक्तमुद्युक्तं सांवर्तकं प्रलयकालिकमनलमिव प्रतीयमानमिति शेषः । सज्यं धनुः वीक्षमाणं पुनः पुनर्निःश्वसन्तं युगान्ते सर्वजगद्दग्धुकामम् अत एव तप्यमानं प्राप्तकोपसंपत्तिं हरमिव संक्रुद्धम् अत एव अदृष्टपूर्वं दृष्टपूर्वभिन्नं रामं सर्वाभिरामदातारं रामं तदभिधं दृष्ट्वा प्राञ्जलिर्लक्ष्मणः परिशुष्यता मुखेनाब्रवीत् । श्लोकत्रयमेकान्वयि ॥ १–३ ॥

गो० टी०-एवं जगदुपसंहारक्रोधकलुषं रामं लक्ष्मणः संधुक्षयति पञ्चषष्टितमे-तप्यमानमित्यादि । श्लोकत्रयमेकान्वयम् । तप्यमानं तपन्तं तथा तप्यमानमित्यनेन पूर्वोक्तजगदुपसंहारवाचस्तत्तत्त्वकृताः नतु संकल्पपूर्वा इत्युच्यते । रामं दृष्ट्वा राममब्रवीदिति क्रियाभेदान्न पुनरुक्तिदोषः । अभवे विनाशे युक्तम् उद्युक्तं संवर्तकं संहारकम् अदृष्टपूर्वमिति क्रोधनक्रियाविशेषणं परिशुष्यता लोकविनाशभयेनेति भावः ॥ १–३ ॥

४ ] ति० टी०-प्रकृतिं सर्वभूतहितत्वरूपाम् ॥ ४ ॥

रा० टी०-तद्वचनाकारमाह-पुरेत्यादिभिः । मृदुः सरलस्वभावः दान्तः नियमितोभयकरणः सर्वभूतहिते रतः अत एव पुरा पालनार्थं भूत्वा प्रकटीभूय विद्यमानस्त्वं क्रोधवशमापन्नः प्राप्तः सन् प्रकृतिं स्वस्वभावं हातुं नार्हसि ॥ ४ ॥

गो० टी०-पुरेति । क्रोधवशमापन्नः सन् प्रकृतिं मृदुत्वादिनिजस्वभावं न हातुमर्हसि ॥ ४ ॥

५ ] ति० टी०-एतच्च उक्तचतुष्टयं च अनुत्तमं यशश्च त्वयि नियतमित्यर्थः ॥ ५ ॥

रा० टी०-चन्द्र इति । चन्द्रादौ लक्ष्म्यादिचतुष्टयं क्रमेणास्ति अनुत्तमं सर्वोत्तमं नियतं चाञ्चल्यरहितं नित्यम् एतत् लक्ष्म्यादिचतुष्टयं यशश्च त्वय्यस्ति ॥ ५ ॥

गो० टी०-चन्द्र इति । लक्ष्म्यादिकमेकैकस्य प्रतिनियतं त्वयि तु एतत्सर्वं च यशश्च प्रतिनियतमित्यर्थः ॥ ५ ॥

६ ] ति० टी०-एकस्यापराध इति कथं ज्ञायते तत्राह—नन्विति । ननु जानाम्येक एवापराद्ध इति कुतस्तत्राह—

१ तथेति गो. पाठः । २ संवर्तकमिति गो. पाठः । ३ त्विति गो. पाठः । ४ सर्वमिति गो. पाठः । ५ त्विति गो. रा. पाठः ।

केन वा कस्य वा हेतोः सयुगः सपरिच्छदः। खुरनेमिक्षतश्चायं सिक्तो रुधिरबिन्दुभिः ॥ ७ ॥
देशो निवृत्तसङ्ग्रामः सुघोरः पार्थिवात्मज। एकस्य तु विमर्दोऽयं न द्वयोर्वदतां वर ॥ ८ ॥
नहि वृत्तं हि पश्यामि बलस्य महतः पदम्। नैकस्य तु कृते लोकान्विनाशयितुमर्हसि ॥ ९ ॥
युक्तदण्डा हि मृदवः प्रशान्ता वसुधाधिपाः। सदा त्वं सर्वभूतानां शरण्यः परमा गतिः ॥ १० ॥
को नु दारप्रणाशं ते साधु मन्येत राघव। सरितः सागराः शैला देवगन्धर्वदानवाः ॥ ११ ॥
नालं ते विप्रियं कर्तुं दीक्षितस्येव साधवः। येन राजन्हृता सीता तमन्वेषितुमर्हसि ॥ १२ ॥

---

कस्यचिदेव न केषांचिदित्यर्थः । सायुधपरिकरो भग्न इत्यन्वयः ॥ ६ ॥

रा० टी०-ननु राक्षसानां वधस्यावश्यकत्वे किमर्थं निवार्यते इत्यत आह-एकस्येति। एकस्य राक्षसस्य अपराधेन लोकान् सर्वजनान् हन्तुं त्वं नार्हसि एतेन विभीषणकर्मकविघातजनितभीतिमत्त्वं लक्ष्मणस्य सूचितम्। अर्थं पृथक्। ननु अपकारिणमेव बोधयेत्यत आह-नेति । सांग्रामिकः सायुधः आयुधसहितः सपरिच्छदः सामग्रीसहितः अयं रथः कस्य हेतोः केन वा भग्नः इत्यहं नैव जानामि । अर्धद्वयमेकान्वयि ॥ ६ ॥

गो० टी०-मम दान्ततयैवैतादृशी दशा जाता अधुनाऽपि यदि क्रोधो न स्यात् को वा मम वित्रस्येत् कथं च सीताप्राप्तिरित्याशङ्क्याह-एकस्येति। अर्धत्रयमेकान्वयम्। अयं भावः एको रथो दृश्यते एकस्यैव पदं प्रतीयते तेन एक एवापराधीति निश्चीयते एकस्य चापराधेन सर्वान् हन्तुं नार्हसि । तर्हि को वाऽपराधीत्यत्राह-नत्विति। केन प्रतिपक्षिणा कस्य प्रयोजनस्य हेतोः "षष्ठी हेतुप्रयोगे" इति षष्ठी । प्रकृतादन्यस्माद्वा निमित्तादिति न जानामि। तच्चिन्तनीयमित्यर्थः। सपरिच्छदः सपरिकरः ॥ ६ ॥

७-८ ] ति० टी०-स केन भग्नः केन हेतुनेत्येतत्तु न जानामीति शेषः। खुरनेमिक्षतत्वादिविशिष्टोऽयं देशो निवृत्तसंग्रामो दृश्यते इति शेषः। एवंभूतैर्हेतुभिरयं विमर्दः संग्राम एकस्य रथिकस्य केनचित्सह न तु द्वयोरधिकयोरिति शेषः ॥ ७ ॥ ८ ॥

रा० टी०-ननु तर्हि बहूनामपराधोऽस्ति इत्यत आह-खुरेति। खुरनेमिक्षतः खुरैः अश्वाङ्घ्रिभिः नेमिभिश्च क्षतः रुधिरबिन्दुभिः सिक्तः निवृत्तः संजातः संग्रामो यस्मिन् सोऽयं देशः एकस्यैव विमर्दः विमर्दनविशिष्टः न द्वयोः एतेन इदानीमपराध एककर्तृक एव प्रतीयत इति सूचितम् ॥ ७ ॥ ८ ॥

गो० टी०-खुरेति। अश्वानां खुरैः रथनेमिभिः रथाङ्गैश्च क्षतः निवृत्तसंग्रामः दृश्यत इति शेषः ॥ ७ ॥

गो० टी०-एकस्येति। विमर्दः संप्रहारः। तत्र हेतुमाह-नहीति। वृत्तं संक्रान्तम् ॥ ८ ॥

९ ] ति० टी०-तदेवाह-नहीति। वृत्तं भुवि कृतचिह्नमत एकस्य कृते लोकनाशो न युक्तः ॥ ९ ॥

रा० टी०-नहीति। महतो बलस्य सैन्यस्य वृत्तं प्रवृत्तं पदं चरणचिह्नं नैव पश्यामि अतः कस्यचित् एकस्यैव अपराध इति सूचितम्। अत एव एकस्यैव कृते तदपराधार्थं लोकान् सर्वजनान् विनाशयितुं नार्हसि ॥ ९ ॥

गो० टी०-वक्तव्यमुक्त्वा प्रकृतमाह-नैकस्येति। युक्तदण्डा अपराधोचितशिक्षणप्रवर्तकाः ॥ ९ ॥

१० ] ति० टी०-युक्तदण्डा यथापराधदण्डाः। मृदवोऽकठिनाः ॥ १० ॥

रा० टी०-युक्तेति । वसुधाधिपाः रघुकुलोद्भूतमहीपतयः युक्तदण्डादिविशिष्टा भवन्ति अत एव सर्वभूतानां शरण्यः परमा गतिश्च त्वमसि अतः हे राघव! तव दारप्रणाशं कः साधु मन्येत न कोऽपीत्यर्थः। सार्धश्लोक एकान्वयी ॥ १० ॥

गो० टी०-विशिष्य तवायं धर्म इत्याह-सदेति। शरण्यः शरणार्हः परमा गतिः परमप्राप्यः । देवादिकृतोऽयमपराधो नेत्याह-को न्विति ॥ १० ॥

११ ] ति० टी०-किंच यदि त्वद्दारप्रणाशो लोककर्तृको लोकानुमतो वा स्यात्तद्युक्तं तन्नाशनम् । नैवमस्तीत्याह-को न्विति ॥ ११ ॥

रा० टी०-तदेव भङ्ग्यन्तरेणाह-सरित इति। दीक्षितस्य अप्रियं कर्तुं साधव इव तेऽप्रियं कर्तुं सरिदादयः नालमतः येन राक्षसेन सीता हृता तमन्वेषयितुं मद्द्वितीयः अहं द्वितीयो यस्य सः परमर्षिभिः सहायैरुपलक्षितः धनुष्पाणिः त्वमर्हसि। अर्धचतुष्टयमेकान्वयि ॥ ११ ॥ १२ ॥

गो० टी०-सरित इति। दीक्षितस्य उपक्रान्तयज्ञानुष्ठानस्य साधवः ऋत्विजः ॥ ११ ॥

१२ ] ति० टी०-सरिदादयस्ते विप्रियं कर्तुं नालं न समर्था न स्पृहावन्तो वा दीक्षितस्य यजमानस्य साधवो ज्ञानसंपन्ना ऋत्विगादयो यथा विप्रियं शापादि दातु व्यङ्गं वा कर्म कर्तुमसमर्थास्तद्वत् ॥ १२ ॥

गो० टी०-येनेति। परमर्षिभिः एतद्वनस्थैः ॥ १२ ॥

---

१ सायुध इति गो. रा. पाठः।

मद्द्वितीयो धनुष्पाणिः सहायैः परमर्षिभिः । समुद्रं वा विचेष्यामः पर्वतांश्च वनानि च ॥ १३ ॥
गुहाश्च विविधा घोराः पद्मिन्यो विविधास्तथा । देवगन्धर्वलोकांश्च विचेष्यामः समाहिताः ॥ १४ ॥
यावन्नाधिगमिष्यामस्तव भार्यापहारिणम् । न चेत्साम्ना प्रदास्यन्ति पत्नीं ते त्रिदशेश्वराः ॥
कोशलेन्द्र ततः पश्चात्प्राप्तकालं करिष्यसि ॥ ॥ १५ ॥
शीलेन साम्ना विनयेन सीतां नयेन न प्राप्स्यसि चेन्नरेन्द्र ।
ततः समुत्सादय हेमपुङ्खैर्महेन्द्रवज्रप्रतिमैः शरौघैः ॥ १६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

## षट्षष्टितमः सर्गः ।

सीतावियोगादुःखितं रामं परिसान्त्वयँल्लक्ष्मणः प्रारब्धकर्मणो भोगावश्यंभावित्वे वसिष्ठादीन्निदर्शनीकृत्य अपकारिनिकृन्तनेन सीतापरिमोचनाय प्रवर्तयति ।

तं तथा शोकसंतप्तं विलपन्तमनाथवत् । मोहेन महता युक्तं परिद्यूनमचेतसम् ॥ १ ॥
ततः सौमित्रिराश्वास्य मुहूर्तादिव लक्ष्मणः । रामं संबोधयामास चरणौ चाभिपीडयन् ॥ २ ॥

---

१३-१४ ] ति० टी०-मद्द्वितीयोऽहं द्वितीयः सहायो यस्य सः । समुद्रादिस्थाश्रमेषु विचयनार्थं परमर्षिभिः सहायैरित्युक्तम् ॥ १३ ॥ १४ ॥

रा० टी०-अन्वेषणप्रकारमाह-समुद्रमिति । तव भार्यापहारिणं यावन्न अधिगमिष्यामः प्राप्स्यामः तावत् समुद्रादीनि विचेष्यामः देवादिलोकांश्च विचेष्यामः । पद्मिन्यो विविधा इति समुदायस्य कर्मतयाऽन्वयात् न द्वितीया । अर्धचतुष्टयमेकान्वयि ॥ १३ ॥ १४ ॥

गो० टी०-समुद्रमिति । विचेष्यामः अन्वेषिष्यामहे १३

गो० टी०-देवेति । स्पष्टम् ॥ १४ ॥

१५ ] ति० टी०-यद्यस्मद्विचयनेनाशक्या तत्प्राप्तिः स्यात् ततः परं देवाः सर्वज्ञा यदि ते पत्नीं पत्नीवार्तां न दास्यन्ति ततः पश्चात्प्राप्तकालं चतुर्थोपायं दण्डं तेषु करिष्यसि ॥ १५ ॥

रा० टी०-नेति । हे कोशलेन्द्र ! त्रिदशेश्वराः तदुपलक्षितनिश्चितदारापहारिणः साम्ना सामरूपोपायेन ते पत्नीं चेद्यदि न प्रदास्यन्ति ततः पश्चात् प्राप्तकालं प्राप्तः कालो यस्मिन् तं चतुर्थोपायं दण्डं करिष्यसि ॥ १५ ॥

गो० टी०-न चेदिति । प्राप्तश्चतुर्थोपायकालो यस्मिन् कर्मणि तत्तथा ॥ १५ ॥

१६ ] ति० टी०-शीलं सुचरित्रम् साम साधुवादः विनयः प्रश्रयः नयो नीतिः ॥ १६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

रा० टी०-तदेव भङ्ग्यन्तरेणाह-शीलेनेति । हे नरेन्द्र ! शीलेन सुचरितेन साम्ना साधूक्त्या विनयेन प्रश्रयेण नयेन पर्यटनेन च सीतां यदि न प्राप्स्यसि तर्हि महेन्द्रवज्रप्रतिमैः इन्द्रवज्रः प्रतिमा उपमेयो येषां तैः शरौघैः समुत्सादय निश्चितापकारिणमिति शेषः ॥ १६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

गो० टी०-एतदेव स्पष्टयति-शीलेनेति । समुत्पादय विवक्षितकार्यमिति शेषः । 'समुत्सादय' इति पाठे लोकानिति शेषः । एवं लक्ष्मणप्रसादनेन रामकोपशान्तिप्रपञ्चनाद्रावणराचिततत्पक्षपातिरुद्रसंकल्पाद्रामकोपो भग्न इति वदन् मूर्ख इत्यवगन्तव्यः ॥ १६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने पञ्चषष्टितमः सर्गः ॥ ६५ ॥

१ ] ति० टी०-एवं क्रोधमुपशमय्य सहजप्रकृतिप्राप्तये बोधयति लक्ष्मणो रामम्—तमिति । परिद्यूनं क्षीणमचेतसमस्वस्थचित्तमिव ॥ १ ॥

२ ] ति० टी०-मुहूर्तादिव मुहूर्तादेव ॥ २ ॥

रा० टी०-लक्ष्मणोक्तिमेव वर्णयन्नाह-तमित्यादिभिः । शोकसंतप्तं सीतावियोगजनितशोकेन पीडितम् अत एवाचेतसं चित्तस्वास्थ्यरहितम् अत एव अनाथवत् नाथत्वाभाववन्तमिव विलपन्तम् अत एव परिद्यूनमिव क्षीणत्वेन प्रतीयमानमित्यर्थः । अत एव महता मोहेन कर्तव्यविषयकाविवेकेन युक्तं तं रामं ततः शोकसंतप्तत्वादिहेतोः सौमित्रिः मुहूर्तात् मुहूर्तमाश्वास्य चरणौ अभिपीडयन् सन् संबोधयामास शोकादिनिवृत्तिकारणीभूतवचनमुच्चारयामास । श्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

गो० टी०-एवं लक्ष्मणो राममाश्वास्य पुनर्वक्तव्यांशं ज्ञापयति षट्षष्टितमे-तं तथेत्यादि । श्लोकद्वयमेकान्वयम् । परिद्यूनं परिदेवनं प्राप्तं परिशोचन्तमित्यर्थः । "चक्षुर्वोः शडवुनासिके च" इत्यूढ् "दिवो विजिगीषायाम्" इति निष्ठानत्वम् । अचेतनम्

---

१ चेति गो. पाठः । २ नदीः पद्मवनानि चेति गो. पाठः । ३ पादयेति गो. पाठः । ४ आविष्टमिति गो. पाठः । ५ अचेतनमिति गो. पाठः ।

महता तपसा चापि महता चापि कर्मणा । राज्ञा दशरथेनासील्लब्धोऽमृतमिवामरैः ॥ ३ ॥
तव चैव गुणैर्बद्धस्त्वद्वियोगान्महीपतिः । राजा देवत्वमापन्नो भरतस्य यथा श्रुतम् ॥ ४ ॥
यदि दुःखमिदं प्राप्तं काकुत्स्थ न सहिष्यसे । प्राकृतश्चाल्पसत्त्वश्च इतरः कः सहिष्यति ॥ ५ ॥
आश्वसिही नरश्रेष्ठ प्राणिनः कस्य नापदः । संस्पृशन्त्यग्निवद्राजन्क्षणेन व्यपयान्ति च ॥ ६ ॥
[दुःखितो हि भवाँल्लोकांस्तेजसा यदि धक्ष्यते । आर्ताः प्रजा नरव्याघ्र क्व नु यास्यन्ति निर्वृतिम् ॥]
लोकस्वभाव एवैष ययातिर्नहुषात्मजः । गतः शक्रेण सालोक्यमनयस्तं समस्पृशत् ॥ ७ ॥

---

अस्वस्थचित्तं संबोधयामास ज्ञापयामास । अभिपीडयन् उपसंगृह्णन् ॥ १ ॥ २ ॥

३ ] ति० टी०–बोधनप्रकारः—महतेत्यादि । तपसा पुत्रकामनया कृतेन व्रतादिना कर्मणा ऋष्यशृङ्गानयनपूर्वकमहायागेन ॥ ३ ॥

रा० टी०–संबोधनप्रकारमाह–महतेत्यादिभिः । महता अत्युत्कृष्टेन तपसा पुत्रहेतुकव्रतादिना महता कर्मणा ऋष्यशृङ्गानयनादिरूपक्रियया च राज्ञा दशरथेन अमरैरमृतमिव लब्ध आसीत् भवानिति शेषः । एतेन त्वमतिदुर्लभोऽसीति सूचितं तेन रामस्यातिमहत्त्वं व्यञ्जितं तेन महतां शोकोऽनुचित इति ध्वनितं तेन त्वया शोको न कार्य इति व्यञ्जितम् ॥ ३ ॥

गो० टी०–महतेति । महता तपसा कायक्लेशेन व्रतोपवासादिना महता चापि कर्मणा अश्वमेधपुत्रकामेष्टिप्रभृतिकर्मणा राज्ञा दशरथेन राजा लोकस्य रञ्जनात् । अनेन मन्त्रद्रव्यक्रियालोपाभावेनाधिकारिणा कृतत्वमुच्यते । अमृतमिव तद्वत् भोग्यत्वं यत्नसाध्यत्वं चोच्यते । अमरैः अनेकसुरकृतयत्नः एकेन कृत इति गम्यते ॥ ३ ॥

४ ] ति० टी०–भरतस्य मुखादिति शेषः । यथा यथावच्छ्रुतम् ॥ ४ ॥

रा० टी०–तवेति । तव गुणैर्बद्धो महीपतिः सर्वपृथ्वीनियन्ता राजा अतिदीप्तिमान् दशरथः त्वद्वियोगात् देवत्वं साकेतकर्मकगतिम् आपन्नः कृतवान् इत्यर्थः, इति भरतस्य भरतात् यथा यथावत् श्रुतम् । एतेन रामगुणानां निरवद्यत्वं सूचितं, तेनातिशोकवत्त्वे धैर्यादिगुणस्य मालिन्यापत्तिरिति व्यञ्जितम् ॥ ४ ॥

गो० टी०–तवेति । एवकारेण इतरपुत्रव्यावृत्तिः । तवैव गुणैर्बद्धः त्वद्गुणैकपरवशः महीपतिः राजा न तु जातिमात्रेण राजा देवत्वमापन्नः । तत्र किं प्रमाणं तत्राह–भरतस्येति । भरतादित्यर्थः पञ्चम्यर्थे षष्ठी तथैव मयोक्तमिति शेषः ॥ ४ ॥

५ ] ति० टी०–इतरः क इति । 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः' इत्युक्तेः । 'मर्त्यावतारस्त्विह मर्त्यशिक्षणम्' इति भागवतोक्तरीत्या लोकशिक्षणार्थमपि त्वदवतारादिति भावः ॥ ५ ॥

रा० टी०–यदीति । हे काकुत्स्थ ! प्राप्तमिदं दुःखं यदि त्वं न सहिष्यसे तर्हि अल्पसत्त्वः अत एव इतरः त्वत्तो नीचः प्राकृतो जनः कः सहिष्यति 'इतरस्त्वन्यनीचयोः' इति कोशः ॥ ५ ॥

गो० टी०–यदीति । काकुत्स्थेत्यनेनाप्राकृतत्वं महासत्त्वत्वं च सिद्धम् । सहिष्यति सहिष्यते ॥ ५ ॥

६ ] ति० टी०–आश्वसिहीति "न ह वै शरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति" इति श्रुतेः ॥ ६ ॥

रा० टी०–दुःखित इति । दुःखितः प्रियावियोगेन खिन्नो भवान् यदि लोकान् धक्ष्यते द्रक्ष्यत्वसंशयेन भस्मीकरिष्यति तर्हि आर्ताः प्राप्तदुःखाः प्रजाः निर्वृतिं सुखं क्व नु यास्यन्ति न क्वापीत्यर्थः ॥ ६ ॥

गो० टी०–दुःखित इति । धक्ष्यते धक्ष्यति ॥ ६ ॥

७ ] ति० टी०–तदेव विवृणोति—लोकेति । एष औपाधिकदुःखसंबन्धो लोकस्य शरीरिणः स्वभाव एव । तदेवाह—ययातिरिति । अनयोऽनयमूलं दुःखं तच स्वर्गाद्भ्रंशरूपम् । समस्पृशदित्यनेनाचिरस्थितिकस्पर्शमात्रार्थकेन पुनरविलम्बेनैव दौहित्रप्रयुक्तसुखोत्तरकालिकदुःखनिवृत्तिरप्यस्य सूचिता ॥ ७ ॥

रा० टी०–सीताविषये अपक्षयादिसंशयो न कार्य इति बोधयन्नाह–लोकेति । एष अपक्षयादिः लोकस्वभावः प्राकृतजनानां स्वभावसिद्धः, एतेन सीतायाः प्राकृतविलक्षणात्वं व्यञ्जितम् । स्वभावसिद्धत्वमेव विवृण्वन्नाह–शक्रेण सालोक्यं गतो नहुषात्मजो यो ययातिः तम् अनयः स्वर्गप्राप्तिविध्वंसः समस्पृशत् स्वर्गाद्विध्वस्त इत्यर्थः ॥ ७ ॥

गो० टी०–प्रसङ्गात् दैविकावर्थानर्थावन्ये महान्तोऽपि प्राप्नुवन्तीति दृष्टान्तमुखेन प्रतिपादयितुमाह–लोकस्वभाव इत्यादिना । एष लोकस्वभाव इति वक्ष्यमाणेषु सर्वत्र योज्यम् । अनयः अनयमूलं दुःखमित्यर्थः, तमः अज्ञानं स्पृशत् अस्पृशत् । स हि स्वर्गगतोऽपि इन्द्रेणासूयाकलुषेण भवद्राज्ये को वा श्रेष्ठ इति पृष्टः सत्यवादितयाऽहमेवेत्युक्तवानिन्द्रेणात्मश्लाघी त्वं न स्वर्गार्ह इति पातित इति पुराणप्रसिद्धिः । नहुषात्मज इत्यनेन नहुषानीतिरपि व्यज्यते । स च सप्तर्षीन् स्ववाहकान्

---

१ रामेति गो. पाठः । २ अयं श्लोको नास्ति गो. रा. पुस्तकयोः । ३ षष्ठस्थाने श्लोकोऽयं गो. रा. पाठे । ४ तमः स्पृशदिति गो. पाठः ।

महर्षिर्यो वसिष्ठस्तु यः पितुर्नः पुरोहितः । अह्ना पुत्रशतं जज्ञे तथैवास्य पुनर्हतम् ॥ ८ ॥
या चेयं जगतो माता सर्वलोकनमस्कृता । अस्याश्च चलनं भूमेर्दृश्यते कोशलेश्वर ॥ ९ ॥
यौ धर्मौ जगतो नेत्रौ यत्र सर्वं प्रतिष्ठितम् । आदित्यचन्द्रौ ग्रहणमभ्युपेतौ महाबलौ ॥ १० ॥
सुमहान्त्यपि भूतानि देवाश्च पुरुषर्षभ । न दैवस्य प्रमुञ्चन्ति सर्वभूतानि देहिनः ॥ ११ ॥
शक्रादिष्वपि देवेषु वर्तमानौ नयानयौ । श्रूयेते नरशार्दूल न त्वं व्यथितुमर्हसि ॥ १२ ॥
मृतायामपि वैदेह्यां नष्टायामपि राघव । शोचितुं नार्हसे वीर यथान्यः प्राकृतस्तथा ॥ १३ ॥
त्वद्विधा नहि शोचन्ति सततं सर्वदर्शनाः । सुमहत्स्वपि कृच्छ्रेषु रामानिर्विण्णदर्शनाः ॥ १४ ॥

शचीस्मरणेन सर्प सर्पेत्युक्तवान् सर्पो भवेत्यगस्त्यशप्तश्चिरं तथाभूतस्तस्थौ ॥ ७ ॥

८ ] ति० टी०–यो महर्षिर्यः पुनर्नः पितुः पुरोहितस्तस्य पुत्रशतं जज्ञे । अह्ना एकाह्ना च पुनर्विश्वामित्रेण हतम् । पूर्वं सुखोत्तरकालिकदुःखानन्तरं सुखं व्यङ्ग्यतयोक्त्वाऽत्र सुखानन्तरं दुःखमुक्तम् । एवं च महतामप्यवश्यं जायमाने ईदृशे सुखे दुःखे च न हर्षशोकौ भवादृशस्योचिताविति भावः ॥ ८ ॥

रा० टी०–महर्षिरिति । यो महर्षिः सकलद्रष्टा यश्च नोऽस्माकं पितुः पुरोहितो वसिष्ठः अस्य वसिष्ठस्य अह्ना एकदिनेन पुत्रशतं शतसंख्याकप्राकृतपुत्राः जज्ञे तथा एकदिनेनैव हतं विश्वामित्रेणेति शेषः ॥ ८ ॥

गो० टी०–महर्षिरिति । अह्ना पुत्रशतं हतम् विश्वामित्रकोपेन युगपत्पुत्रशतनाशदुःखमनुभूतमिति भावः ॥ ८ ॥

९ ] ति० टी०–चलनम् भूकम्पजं दुःखमित्यर्थः ॥ ९ ॥

रा० टी०–येति । जगतो माता अत एव सर्वलोकनमस्कृता या इयं भूमिः अस्या भूमेः चलनं दृश्यते ॥ ९ ॥

गो० टी०–या चेति । माता सर्वोपादानत्वात् देवी देवस्य विष्णोः पत्नी अत एव लोकनमस्कृता । सत्यसंश्रवेति त्वयैव हि पूर्वं मह्यमेवमुपदिष्टमिति भावः ॥ ९ ॥

१० ] ति० टी०–यौ धर्मौ परावरधर्मप्रवर्तकौ नेत्रौ जगतः संसारचक्रस्य कालपरिच्छेदद्वारा प्रवर्तकौ । अत एव यत्र सर्वं प्रतिष्ठितं तौ च ग्रहणं राहुग्रासदुःखं प्राप्तौ ॥ १० ॥

रा० टी०–याविति । यौ जगतो धर्मौ यथासंभवं कर्मप्रवृत्तिहेतू नेत्रौ कालपरिच्छेदद्वारा जनानां तत्तल्लोकप्रापकौ अत एव यत्र ययोः सर्वं प्रतिष्ठितं महाबलौ तौ आदित्यचन्द्रौ ग्रहणं राहुग्रासजनितदुःखम् अभ्युपेतौ प्राप्तौ ॥ १० ॥

गो० टी०–याविति । धर्मौ धर्मप्रवर्तकौ सर्वधर्मसाक्षित्वात् नेत्रौ नेतारौ कालपरिच्छेदादिमुखेन जगतः प्रवर्तकौ 'नेत्रो नेतरि भेद्यवान्' इति विश्वः । सर्वेषामर्थप्रकाशकत्वेन नेत्रभूतौ वा । लिङ्गव्यत्ययश्छान्दसः । यत्र ययोः सर्वं जगत् प्रतिष्ठितं यदधीनस्वरूपस्थितिप्रवृत्तिकाः सर्वजना इत्यर्थः । सूर्यस्य वर्षहेतुत्वात् चन्द्रस्यौषधिहेतुत्वाच्चेति भावः । 'आदित्याज्जायते वृष्टिस्ततोऽन्नमभिजायते' इति वचनात् । ग्रहणं राहुकेतुभ्यां ग्रासम् ॥ १० ॥

११ ] ति० टी०–दैवस्य कर्मणो वशं न प्रमुञ्चन्तीत्यर्थः । किं पुनर्वक्तव्यं देहिनः सर्वभूतानि देहवन्ति सर्वभूतानि न मुञ्चन्तीति पुंस्त्वमार्षम् ॥ ११ ॥

रा० टी०–तदेव संगृह्याह–सुमहान्तीति । सुमहान्ति भूतानि पृथिव्यादीनि देहिनोऽतिप्रवृद्धा देवाश्च दैवस्य नित्यप्रमोदविशिष्टस्य सर्वभूतस्य सर्वाणि भूतानि यस्मात् तस्य स्वत्तत्प्रकाशब्रह्मणः न प्रमुञ्चन्ति तदाज्ञापितं न जहति अत एव शक्रादिषु देवाधीशेष्वपि नयानयौ सुखप्राप्त्यप्राप्ती श्रूयेते अतः त्वं व्यथितुं नार्हसि । एतेन यदि स्वत्तत्प्रकाशरूपब्रह्माज्ञावर्तित्वं सर्वलोकानामस्ति तर्हि तवाज्ञावर्तित्वमस्तीति किं वक्तव्यमिति काव्यार्थापत्तिरलंकाररूपो हेतुर्ध्वनितः । श्लोकद्वयमेकान्वयि ॥ ११ ॥ १२ ॥

गो० टी०–किं बहुना संग्रहेणोच्यत इत्याह–सुमहान्तीति । सुमहान्ति भूतानि मान्धातृनलप्रभृतिमहाजना अपि सर्वभूतादिदेहिनः सर्वभूतानि आदिदेहोऽस्यास्तीति तथा सर्वभूतान्तर्यामिण इत्यर्थः । दैवस्य परमात्मनः पञ्चम्यर्थे षष्ठी । न प्रमुञ्चति सर्वेऽपि तत्संकल्पं नातिक्रामन्तीत्यर्थः ॥ ११ ॥

१२-१३ ] ति० टी०–नयानयौ तन्मूलसुखदुःखे ॥ १२ ॥ १३ ॥

गो० टी०--उपसंहरति–शक्रादिष्वपीति । नयानयौ तन्मूलसुखदुःखे अतो न त्वं शोचितुमर्हसीत्यर्थः ॥ १२ ॥

रा० टी०–मृतायामिति । मृतायां स्वनियम्यरुद्रादिद्वारा सकलभुवननिवर्तिकायां सीतायां नष्टायाम् अपहरणेनादृश्यत्वं प्राप्तायां सत्यामपि अन्यः प्राकृतविलक्षणस्त्वं प्राकृत इव शोचितुं नार्हसि ॥ १३ ॥

गो० टी०–उक्तं विवृणोति–नष्टायामपीति । नार्हसे नार्हसि ॥ १३ ॥

१४ ] ति० टी०–अनिर्विण्णदर्शना विषादरहितदर्शना विषादराहित्येन कृत्याकृत्यतत्त्वज्ञानवन्तः ॥ १४ ॥

रा० टी०–प्राकृतविलक्षणानां शोको न युक्त इति बोधयन्नाह–त्वदिति । सर्वदर्शनाः सर्वविषयकज्ञानवन्तः अत एव

१ जगतामिति गो. पाठः । २ देवीति गो. पाठः । ३ सत्यसंश्रवेति गो. पाठः । ४ भूतादीति गो. भूतस्येति रा.पाठः । ५ शोचितुमिति गो.पाठः । ६ नष्टायामपि वैदेह्यां हतायामपि चानघेति गो. पाठः । ७ सत्यदर्शिन इति गो. पाठः ।

तत्त्वतो हि नरश्रेष्ठ बुद्ध्या समनुचिन्तय । बुद्ध्या युक्ता महाप्राज्ञा विजानन्ति शुभाशुभे ॥ १५ ॥
अदृष्टगुणदोषाणामध्रुवाणां तु कर्मणाम् । नान्तरेण क्रियां तेषां फलमिष्टं च वर्तते ॥ १६ ॥
मामेवं हि पुरा वीर त्वमेव बहुशोऽक्तवान् । अनुशिष्याद्धि को नु त्वामपि साक्षाद्बृहस्पतिः ॥ १७ ॥
बुद्धिश्च ते महाप्राज्ञ देवैरपि दुरन्वया । शोकेनाभिप्रसुप्तं ते ज्ञानं संबोधयाम्यहम् ॥ १८ ॥
दिव्यं च मानुषं चैवमात्मनश्च पराक्रमम् । इक्ष्वाकुवृषभावेक्ष्य यतस्व द्विषतां वधे ॥ १९ ॥

---

अनिर्विण्णदर्शना निरन्तरं प्रसन्नचित्ताः त्वद्विधाः प्राकृतविलक्षणाः जना नैव शोचन्ति, एतेन तव शोको न युज्यते इति व्यञ्जितम् ॥ १४ ॥

गो० टी०–त्वद्विधा इति । सत्यदर्शिनः यथार्थदर्शिनः कृच्छ्रेषु दुःखेषु अनिर्विण्णम् अविनाशिदर्शनं कृत्याकृत्यविवेको येषां ते तथा ॥ १४ ॥

१५ ] ति० टी०–तत्त्वतः समनुचिन्तय युक्तायुक्तं कृत्याकृत्यं चेति शेषः । शुभाशुभे कर्तव्याकर्तव्ये युक्तायुक्ते बुद्धियुक्ता जानन्ति तस्मात्त्वं बुद्ध्या विचिन्तयेति शेषः ॥ १५ ॥

रा० टी०–नन्वहं तु इदानीं न सर्वदर्शनः सीताचरितविषयकज्ञानाभावात् इत्यत आह—तत्त्वत इति । यतो बुद्ध्या युक्ताः महाप्राज्ञाः शुभाशुभे विजानन्ति अतः बुद्ध्या निश्चयकारकान्तःकरणवृत्त्या तत्त्वतः तत्त्वं शृङ्गारपोषकविप्रलम्भमित्यर्थः, समनुचिन्तय निश्चिनु ॥ १५ ॥

गो० टी०–तत्त्वत इति । तत्त्वतो बुद्ध्या अबाधितबुद्ध्या समनुचिन्तय शुभाशुभे इति शेषः । महाप्राज्ञाः बुद्ध्या तात्कालिक्या युक्ताः सन्तः शुभाशुभे भाविनी विजानन्ति ॥ १५ ॥

१६ ] ति० टी०–एवं दुःखमूलं प्राचीनं कर्म बुद्ध्वा दुःखं सोढव्यमेवेत्याह—अदृष्टेति । शास्त्रैकसमधिगम्यतया प्रत्यक्षेणादृष्टगुणदोषाणां धर्मत्वाधर्मत्वे गुणदोषौ । आपाततो धर्मवद्भासमानानामधर्मत्वाद्वैपरीत्याच्च अध्रुवाणां फलनाश्यानाम् । अनेन फलावश्यंभावः सूचितः । तादृशानां कर्मणां निष्पत्तिः क्रियां तत्तत्पुरुषव्यापारमन्तरेण न भवति । स्वव्यापारेण कृतानां तेषामिष्टं फलं सुखं चादनिष्टं च फलं वर्तते प्रवर्तत एव, न तु न प्रवर्तत इति । अतः सोढव्यमेवेति भावः ॥ १६ ॥

रा० टी०–अदृष्टेति । न दृष्टौ फलोत्पत्तेः प्रागननुभूतौ गुणदोषौ येषां तेषामध्रुवाणां तेषां प्रसिद्धानां कर्मणामिष्टं फलं क्रियां विचारकर्मान्तरेण विना नैव वर्तते प्रवर्तते । एतेन विप्रलम्भस्याप्यतिसुखदातृत्वं ध्वनितम् ॥ १६ ॥

गो० टी०–इदानीं फलानुभवः पूर्वकर्मसाध्यः अतस्तत्र न शोचनीयमित्याह–अदृष्टेति । अदृष्टगुणदोषाणां प्रत्यक्षतो द्रष्टुमशक्यसुखदुःखरूपगुणदोषाणाम् अध्रुतानां पुरा एवं कृतमिति निश्चेतुमशक्यानां तेषां प्रसिद्धानां पूर्वकृतानामित्यर्थः । कर्मणामिष्टं फलं क्रियामनुष्ठानमन्तरेण न प्रवर्तते पूर्वकर्मानुष्ठानं विना इदानीं फलं नोत्पद्यते । अतः पूर्वकर्मफले इदानीं प्रवृत्ते कात्र परिदेवनेति भावः ॥ १६ ॥

१७ ] ति० टी०–इयं च बुद्धिस्त्वद्दत्तैव मे, अतस्तवोपदेशे किं सामर्थ्यमिति न वाच्यमित्याह—मामिति । अकारणे क्रोधवशमापन्नमिति शेषः । बहुशोक्तवानिति संधिरार्षः । अनुशिष्याच्छिक्षितुं शक्तः स्याद्बृहस्पतिरपि अन्यस्य का गणनेत्यर्थः ॥ १७ ॥

रा० टी०–ननु त्वया इयं बुद्धिः कथं लब्धेत्यत आह—मामिति । एवमनेन प्रकारेण पुरा बहुशोऽनेकवारं मां त्वमेव उक्तवान् अतः को ब्रह्मा वा बृहस्पतिर्वा त्वां सर्वगुरुमनुशिष्यादपि नेत्यर्थः, बहुशोक्तवानित्यत्र संधिरार्षः ॥ १७ ॥

गो० टी०–त्वमेवेति । अन्वशाः अनुशासितवानासि ॥ १७ ॥

१८ [ ति० टी०–देवैरपि दुरन्वयान्वेतुमनुगन्तुमशक्या । त्वज्ज्ञानपरिच्छेदो देवानामप्यशक्य इति भावः । अनेनेश्वरता सूचिता । तथापि शोकेनान्तर्हितमिव ते ज्ञानं संबोधयामि बोधयामीव ॥ १८ ॥

रा० टी०–ननु गुरुं मां त्वं कथं शिक्षयसीत्यत आह—बुद्धिरिति । ते बुद्धिर्निश्चयो देवैरपि दुरन्वया ज्ञातुमशक्या अतः शोकेन अभिप्रसुप्तं तिरोहितत्वेन प्रतीतं ते ज्ञानं संबोधयामि तत्स्वरूपं कथयामि ॥ १८ ॥

गो० टी०–बुद्धिश्चेति । दुरन्वया दुर्लभा प्रसुप्तं स्तिमितं संबोधामि उत्थापयामि ॥ १८ ॥

१९ ] ति० टी०–दिव्यं देवोचितम् । मानुषं मनुष्योचितम् । एवमुभयविधपराक्रमाश्रयत्वमात्मनोऽवेक्ष्य । तत्राद्यः परशुरामविषयः, अन्त्यो रक्षोविषयः । एवं च देवोचितपराक्रमस्यायं नावसर इति भावः ॥ १९ ॥

रा० टी०–स्वप्रार्थनायास्तात्पर्यमाह–दिव्यमिति । इक्ष्वाकुवृषभ इक्ष्वाकुश्रेष्ठ ! दिव्यं सर्वैः स्तुत्यं मानुषं प्राकृतविलक्षणं नित्यमनुष्यमात्रनिष्ठं च आत्मनः पराक्रमम् अवेक्ष्यैव द्विषतामेव वधे यतस्वैव द्वेषसंभावनया अन्येषां वधो मा भूदित्यर्थः । चकारा एवंचैवार्थाः ॥ १९ ॥

गो० टी०–दिव्यमिति । दिवि भवं दिव्यं प्राणिजातं देवगन्धर्वादिकं तच सात्त्विकं वधानर्हं मानुषं मनुष्यलोकोद्भवं ब्राह्मणादिकं तदपि वधानर्हं सर्वलोकसंहारसमर्थम् आत्मनः पराक्रमं च अवेक्ष्य विचार्य द्विषतामेव वधे यतस्व ॥ १९ ॥

---

१ अधृतानां चेति गो. पाठः । २ प्रेति गो. पाठः । ३ त्वमेव हि पुरा राम मामेवमिति गो. पाठः । ४ अन्वशा इति गो. पाठः । ५ च त्वमिति गो. पाठः ।

किं ते सर्वविनाशेन कृतेन पुरुषर्षभ । तमेव तुं रिपुं पापं विज्ञायोद्धर्तुमर्हसि ॥ २० ॥
इत्यार्षे श्रीमद्रामायणे वाल्मकीय आदिकाव्येऽरण्यकाण्डे षट्षष्टितमः सर्गः ॥ ६६ ॥

## सप्तषष्टितमः सर्गः ।

लक्ष्मणेन समाश्वासितो राघवः कोपं संत्यज्य तेन सह सीतामन्विष्यन् जटायुं दृष्ट्वा रक्षोबुद्ध्या तं हन्तुमुद्युङ्क्ते । स तु रावणेन सीताहरणं स्वस्य तेन युद्धं श्रान्तत्वाच्च तेन स्वस्य पक्षौ छित्वा सीतारमादाय विहायसा गमनं कृतमिति न्यवेदीत् । पितृसुहृत्वाज्जटायुषं परिष्वज्य विलपन् रामो भुवि पपात ।

पूर्वजोऽप्युक्तवाक्यस्तु लक्ष्मणेन सुभाषितम् । सारग्राही महासारं प्रतिजग्राह राघवः ॥ १ ॥
सं निगृह्य महाबाहुः प्रवृद्धं रोषमात्मनः । अवष्टभ्य धनुश्चित्रं रामो लक्ष्मणमब्रवीत् ॥ २ ॥
किं करिष्यावहे वत्स क्व वा गच्छाव लक्ष्मण । केनोपायेन पश्यावः सीतामिह विचिन्तय ॥ ३ ॥
तं तथा परितापार्तं लक्ष्मणो वाक्यमब्रवीत् । इदमेव जनस्थानं त्वमन्वेषितुमर्हसि ॥ ४ ॥
राक्षसैर्बहुभिः कीर्णं नानाद्रुमलतायुतम् । सन्तीह गिरिदुर्गाणि निर्दराः कन्दराणि च ॥ ५ ॥
गुहाश्च विविधा घोरा नानामृगगणाकुलाः । आवासाः किंनराणां च गन्धर्वभवनानि च ॥ ६ ॥
तानि युक्तो मया सार्धं समन्वेषितुमर्हसि । त्वद्विधा बुद्धिसंपन्ना महात्मानो नरर्षभाः ॥ ७ ॥
आपत्सु न प्रकम्पन्ते वायुवेगैरिवाचलाः । इत्युक्तस्तद्वनं सर्वं विचचार सलक्ष्मणः ॥ ८ ॥

---

२० ] ति० टी०—कृतेनाद्यष्टितेन ॥ २० ॥
इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे षट्षष्टितमः सर्गः ॥ ६६ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—किमिति । कृतेन सर्वविनाशेन ते किं न किमपीत्यर्थः, अतस्तं प्रियाहर्तारं रिपुं विज्ञाय यत्नतो निश्चित्य उद्धर्तुं विध्वंसितुमर्हसि ॥ २० ॥
इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे षट्षष्टितमः सर्गः ॥ ६६ ॥

गो० टी०—किमिति । उद्धर्तुं नाशयितुम् ॥ २० ॥
इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने षट्षष्टितमः सर्गः ॥ ६६ ॥

१–४ ] ति० टी०—पूर्वजोऽपि रामो लक्ष्मणेन सुभाषितं यथा भवति तथोक्तवाक्यस्तद्वाक्यस्य महासारं सयुक्तिकत्वात्सारांशम् ॥ १–४ ॥

रा० टी०—लक्ष्मणवचनश्रवणानन्तरकालिकं रामवृत्तान्तमाह—पूर्वज इत्यादिभिः । लक्ष्मणेनोक्तं वाक्यं यस्मै सः सारग्राही पूर्वजो राघवो रामः महासारम् अतिसारांशयुक्तं लक्ष्मणेन सुभाषितं प्रतिजग्राह, लक्ष्मणेनेत्युभयान्वयि ॥ १ ॥

गो० टी०—अथ लक्ष्मणवाक्यप्रतिष्ठापितधैर्यो रामो युद्धे भूमेर्दक्षिणतः किंचिद्दूरे गृध्रराजं दृष्ट्वा रोदिति सप्तषष्टितमे—पूर्वजोऽपीत्यादि । राघवः पूर्वजोऽपि लक्ष्मणेन कनिष्ठेन सुभाषितं युक्तियुक्तयोक्तं वाक्यमुक्तमात्रस्तु उक्तमात्र एव जग्राह 'बालादपि सुभाषितम्' इति स्मृतेः । स्वयमुपदेष्टा कथमन्योक्तं जग्राहेत्यत्राह—सारग्राहीति । कथमस्य वाक्यस्य सारवत्त्वं तत्राह—महासारमिति ॥ १ ॥

रा० टी०—स इति । महाबाहू रामः प्रवृद्धमात्मनो रोषं निगृह्य धनुरवष्टभ्य च लक्ष्मणमब्रवीत् ॥ २ ॥

गो० टी०—संनिगृह्येति । स्पष्टम् ॥ २ ॥

रा० टी०—तद्वचनाकारमाह—किमित्यादिभिः । इह वने सीतां केनोपायेन पश्येयमिति विचिन्तय ॥ ३ ॥

गो० टी०—किमिति । पश्येयं पश्येव ॥ ३ ॥

रा० टी०—तमिति । तथा परितापार्तं रामं लक्ष्मणोऽब्रवीत् । तद्वाक्याकारमाह—जनस्थानमेव त्वमन्वेषितुमर्हसि ॥ ४ ॥

गो० टी०—तमिति । सार्धश्लोक एकान्वयः ॥ ४ ॥

५–८ ] इह जनस्थाने गिरिगतानि दुर्गाणि गन्तुमशक्यदेशाः सन्तीत्यर्थः । निर्दरा विदीर्णपाषाणाः ॥ ५–८ ॥

रा० टी०—तदेव सहेतुकमाह—राक्षसैरित्यादिभिः । राक्षसैः कीर्णं युक्तं द्रुमलतायुतं जनस्थानमस्तीति शेषः । इह अस्मिन् जनस्थाने गिर्यादीनि सन्ति तानि अन्वेषितुमर्हसि । सार्धश्लोकद्वयमेकान्वयि । तत्र गिरिदुर्गाणीत्यस्य गिरिगतदुर्गमस्थानानीत्यर्थः । निर्दराः विदीर्णाः शिलाः कन्दराणि गिरिसंधयः, गुहाः पर्वतवर्तिवासयोग्यखातविशेषाः ॥ ५ ॥ ६ ॥

गो० टी०—सन्तीति । इह जनस्थाने गिरिगतानि दुर्गा-

---

१ त्वमिति गो. पाठः । २ मात्र इति गो. पाठः । ३ संनिगृह्येति गो. पाठः । ४ प्रवृत्तं कोपमिति गो. पाठः । ५ पश्येयमिति गो. रा. पाठः । ६ राममिति गो. पाठः । ७ त्वमिति गो. पाठः । ८ नरर्षभेति गो. पाठः ।

क्रुद्धो रामः शरं घोरं संधाय धनुषि क्षुरम् । ततः पर्वतकूटाभं महाभागं द्विजोत्तमम् ॥ ९ ॥
ददर्श पतितं भूमौ क्षतजार्द्रं जटायुषम् । तं दृष्ट्वा गिरिशृङ्गाभं रामो लक्ष्मणमब्रवीत् ॥ १० ॥
अनेन सीता वैदेही भक्षिता नात्र संशयः । गृध्ररूपमिदं व्यक्तं रक्षो भ्रमति काननम् ॥ ११ ॥
भक्षयित्वा विशालाक्षीमास्ते सीतां यथासुखम् । एनं वधिष्ये दीप्ताग्रैः शरैर्घोरैरजिह्मगैः ॥ १२ ॥
इत्युक्त्वाभ्यपतद्द्रष्टुं संधाय धनुषि क्षुरम् । क्रुद्धो रामः समुद्रान्तां चालयन्निव मेदिनीम् ॥ १३ ॥
तं दीनदीनया वाचा सफेनं रुधिरं वमन् । अभ्यभाषत पक्षी स रामं दशरथात्मजम् ॥ १४ ॥
यामोषधीमिवायुष्मन्नन्वेषसि महावने । सा देवी मम च प्राणा रावणेनोभयं हृतम् ॥ १५ ॥
त्वया विरहिता देवी लक्ष्मणेन च राघव । ह्रियमाणा मया दृष्टा रावणेन बलीयसा ॥ १६ ॥

---

णि गन्तुमशक्यप्रदेशा इत्यर्थः । निर्दराः विदीर्णपाषाणाः कन्दराणि पाषाणसंधयः गुहाः देवखातबिलानि ॥ ६ ॥

गो० टी०–आवासा इति । युक्तः संनद्धः ॥ ६ ॥

रा० टी०–त्वादिति । बुद्धिसंपन्नाः त्वद्विधाः त्वां विदधति ते त्वत्सेवका इत्यर्थः, अत एव महात्मानो नरर्षभाः वायुवेगैरचलाः पर्वता इव आपत्सु न प्रकम्पन्ते नाभिभवन्ति । अर्धद्वयमेकान्वयि ॥ ७ ॥

गो० टी०–त्वद्विधा इति । न प्रकम्पन्ते न चञ्चलचित्ता भवन्तीत्यर्थः ॥ ७ ॥

रा० टी०–इतीति । सलक्ष्मणः लक्ष्मणसहितः क्रुद्धः क्रुधं जहाति सः त्यक्तकोपो रामः क्षुरं क्षुरसदृशं तीक्ष्णं शरं धनुषि संधाय वनं विचचार ॥ ८ ॥

गो० टी०–इतीति । क्षुरं क्षुरप्राख्यं शरं सीताया अदर्शनात् कोपः ॥ ८ ॥

९–१३ ] ति० टी०–क्षुरं तद्वन्निशितं शरमित्यर्थः । तं संधाय विचचारेत्यन्वयः ॥ ९–१३ ॥

रा० टी०–तत इति । ततः विचरणोपक्रमणानन्तरं पर्वतकूटाभं पर्वतशृङ्गसदृशं द्विजोत्तमं पक्षिश्रेष्ठं क्षतजार्द्रं रुधिरव्याप्तं जटायुषं ददर्श ॥ ९ ॥

गो० टी०–तत इति । कूटः शृङ्गं महाभागं महाभाग्यं स्वाम्यर्थे त्यक्तशरीरत्वात् द्विजोत्तमं पक्षिश्रेष्ठम् । 'दन्तविप्राण्डजा द्विजाः' इत्यमरः । क्षतजं रुधिरम् ॥ ९ ॥

रा० टी०–तमिति । तं जटायुषं दृष्ट्वा रामोऽब्रवीत् । अर्धं पृथक् ॥ १० ॥

गो० टी०–तमित्यादि । भक्षिता रुधिरार्द्रत्वादिति भावः ॥ १० ॥

रा० टी०–तद्वचनाकारमाह–अनेनेति । इदं गृध्ररूपं वस्तु यदि रक्षो राक्षसस्तर्हि अनेन रक्षसा भक्षिता सीता अत्र अस्योदरे भ्रमति भ्रमेत् संशयो न । यदीत्यध्याहृतम् भ्रमतीत्यनेन तस्याः नित्यात्वं सूचितं तेनैतदुदरान्निर्गच्छेदिति संभावना व्यञ्जिता ॥ ११ ॥

गो० टी०–गृध्रेति । गृध्रस्य रूपमिव रूपं यस्य तत्तथा ॥ ११ ॥

रा० टी०–भक्षयित्वेति । यथा यदि सीतां भक्षयित्वा आस्ते अयमिति शेषः, तदा अजिह्मगैः ऋजुप्रवेशकर्तृभिः शरैः एनं सुखं वधिष्ये ॥ १२ ॥

गो० टी०–एनमिति । अर्धमेकं वाक्यम् । अजिह्मम् अकुण्ठम् अवक्रं वा गच्छन्तीत्यजिह्मगाः तैः ॥ १२ ॥

रा० टी०–इतीति । धनुषि शरं संधायोपलक्षितो रामः इत्युक्त्वा मेदिनीं चालयन्निव द्रष्टुमभ्यपतत् अभिमुखमगच्छत् ॥ १३ ॥

गो० टी०–इतीति । अभ्यपतत् अभिमुखं गतः समुद्रान्तां समुद्रपर्यन्ताम् ॥ १३ ॥

१४ ] ति० टी०–सफेनं फेनसहितम् । दीनदीनयातिशयितदीनया दीनसदृशा वा ॥ १४ ॥

रा० टी०–तमिति । पक्षी जटायुः सफेनं रुधिरं वमन् सन् दीनं क्षीणत्वेन प्रतीयमानं रामं दीनया वाचा अभ्यभाषत ॥ १४ ॥

गो० टी०–तमिति । दशरथात्मजमिति संबन्धोक्तिः ॥ १४ ॥

१५–१६ ] ति० टी०–ओषधीमिव संजीवनौषधीमिव । अन्वेषस्यन्वेषसे ॥ १६ ॥ १६ ॥

रा० टी०–तद्भाषणप्रकारमाह–यामिति । हे आयुष्मन् ! याम् औषधीमिव महावने अन्वेषसि सा देवी सीता मम प्राणाश्च उभयमेतद्द्वयं रावणेन हृतम् ॥ १६ ॥

गो० टी०–यामिति । यथा महौषध्यन्वेषिणः प्रतिवनमन्वेषन्ते तथा यामस्मिन् विस्तीर्णे वनेऽन्वेषसि । एषृ गतावित्यस्माद्व्यत्ययेन परस्मैपदम् । नित्यं प्राणसमेत्युक्ता सा देवी मम प्राणाश्च उभयं रावणेन हृतं मम प्राणान् हृतप्रायान् कृत्वा सीतां रावणो हृतवानित्यर्थः । खरवधादिना रामबलं ज्ञात्वाऽप्यस्थाने भयशङ्कितया रामस्यायुः प्रार्थयते–आयुष्मन्निति ॥ १६ ॥

रा० टी०–तत्प्रकारमाह–त्वयेति । त्वया लक्ष्मणेन च

---

१ आस्यैर्घोरैर्बाणैरिति गो. पाठः । २ कम्पयन्निति गो. पाठः । ३ त्विति गो. पाठः ।

सीतामभ्यवपन्नोऽहं रावणश्च रणे प्रभो । विध्वंसितरथच्छत्रः पतितो धरणीतले ॥ १७ ॥
एतदस्य धनुर्भग्नमेते चास्य शरास्तथा । अयमस्य रणे राम भग्नः साङ्ग्रामिको रथः ॥ १८ ॥
अयं तु सारथिस्तस्य मत्पक्षनिहतो भुवि । परिश्रान्तस्य मे पक्षौ छित्त्वा खड्गेन रावणः ॥ १९ ॥
सीतामादाय वैदेहीमुत्पपात विहायसम् । रक्षसा निहतं पूर्वं मां न हन्तुं त्वमर्हसि ॥ २० ॥
रामस्तस्य तु विज्ञाय [ बाष्पपूर्णमुखस्तदा । द्विगुणीकृततापार्तः ]
सीतासक्तां प्रियां कथाम् । । गृध्रराजं परिष्वज्य परित्यज्य महद्धनुः ॥ २१ ॥
निपपातावशो भूमौ रुरोद सहलक्ष्मणः । द्विगुणीकृततापार्तो रामो धीरतरोऽपि सन् ॥ २२ ॥
एकमेकायने कृच्छ्रे निःश्वसन्तं मुहुर्मुहुः । समीक्ष्य दुःखितो रामः सौमित्रिमिदमब्रवीत् ॥ २३ ॥
राज्यं भ्रष्टं वने वासः सीता नष्टा मृतो द्विजः । ईदृशीयं ममालक्ष्मीर्दहेदपि हि पावकम् ॥ २४ ॥

---

रहिता अत एव रावणेन ह्रियमाणा देवी सीता मया दृष्टा॥१६॥

गो० टी०—त्वयेति । स्पष्टम् ॥ १६ ॥

१७–२० ] ति० टी०—अहं सीतामभ्यवपन्नः सीतापरित्राणमुद्दिश्याभिगतः । मया रावणश्च रणे विध्वंसितरथच्छत्रो धरणीतले पतितश्च कृतः ॥ १७–२० ॥

रा० टी०—स्वप्राणापहरणे निमित्तं बोधयन्नाह—सीतामिति । हे प्रभो ! अहं सीतामभ्यवपन्नः तदाऽऽक्रोशश्रवणमात्रेण तत्संमुखं प्राप्तः अत एव विध्वंसितरथच्छत्रो रावणः धरणीतले पतितः पातितः मयेति शेषः ॥ १७ ॥

गो० टी०—सीतामिति । अभ्यवपन्नः आभिमुख्येन गतः ह्रियमाणां सीतामवलोक्य तदभिमुखमागत इत्यर्थः । रावणश्च विध्वंसितरथः सन् अत्र धरणीतले पातितः रथाद्भ्रंशित इत्यर्थः ॥ १७ ॥

रा० टी०—एतदिति । भग्नं भिन्नम् ॥ १८ ॥

गो० टी०—एतदिति । भग्नमेतद्धनुः अस्य रावणस्य संबन्धि एवमुत्तरत्रापि योज्यम् । शरावरं वर्म तूणीरं वा ॥ १८॥

रा० टी०—अयमिति । तस्य रावणस्य भुवि पतितोऽयं सारथिस्तु मत्पक्षनिहतः । अर्धं पृथक्-परीति । परिश्रान्तस्य मे पक्षौ रावणः छित्त्वा सीतामादाय च विहायसमाकाशमुत्पपात । अतो रक्षसा पूर्वं निहितं मां हन्तुं त्वं नार्हसि । सार्धश्लोक एकान्वयी ॥ १९ ॥ २० ॥

गो० टी०—अयं त्वित्यर्धमेकम् ॥ १९ ॥

गो० टी०—परिश्रान्तस्येति । वैदेहीं जनकेन सम्यक् परिपोषिताम् ॥ २० ॥

गो० टी०—रक्षसेत्यर्धमेकम् ॥ २१ ॥

२१ ] ति० टी०—तस्य स्वरूपं विज्ञाय । सीतासक्तां सीतासंबद्धां कथां च श्रुत्वा ॥ २१ ॥

२२ ] ति० टी०—द्विगुणीकृततापार्तः सीतावियोगजो जटायुवधजस्तापश्चेति तापस्य द्वैगुण्यम्, तेनार्तो बभूवेति शेषः२२

रा० टी०—राम इति । रामः सर्वाभिरामदाता सहलक्ष्मणः लक्ष्मणसहितो द्विगुणीकृततापार्तः द्वौ संभोगपोषकत्वभक्ततापापहारकत्वरूपौ गुणौ यस्मिन्स द्विगुणः अद्विगुणो द्विगुणः कृतः यस्तापस्तेनार्तो युक्तः धीरतरोऽपि रामः गृध्रराजं विज्ञाय तस्योचारितां सीतासक्तां सीतासंबन्धिनीमत एव प्रियां कथां च विज्ञाय गृध्रराजं परिष्वज्य महद्धनुः परित्यज्य च अवशः सन् भूमौ निपपात रुरोद च । श्लोकद्वयमेकान्वयि ॥ २१ ॥ २२ ॥

गो० टी०—राम इति । तस्य गृध्रस्य संबन्धिनीं सीताविषयकथां विज्ञाय श्रुत्वा द्विगुणीकृतेन गृध्रवधेन द्विरावर्तितेन तापेन आर्तः पीडितः अभूदिति शेषः ॥ २२ ॥

गो० टी०—गृध्रेति । अवशः मूर्छित इत्यर्थः । रुरोद क्रमादिति शेषः ॥ २३ ॥

२३ ] ति० टी०—एकमसहायम् । एकस्मिन्नूर्ध्वतालक्षणेऽयने श्वासमार्गेऽत एव कृच्छ्रे मुहुर्मुहुर्निःश्वसन्तमिति कतकसंमतपाठेऽर्थः । 'एकमेकायने दुर्गे निःश्वसन्तं कथंचन' इति पाठे दुर्गे लताकण्टकसंकीर्णे एकायने एकमार्गे पतित्वा कथंचन निःश्वसन्तं मृतप्रायमित्यर्थ इति तीर्थः ॥ २३ ॥

रा० टी०—एकमिति । एकायने एक एव अयते यस्मिन् एकमात्रजनगम्ये अत एव कृच्छ्रे देशे पतितमिति शेषः, मुहुर्मुहुर्निःश्वसन्तम् एकमसहायं जटायुषं समीक्ष्य दुःखितो रामः सौमित्रिमब्रवीत् । 'एकायने दुर्गे' इति तीर्थपाठः ॥ २३ ॥

गो० टी०—एकमिति । एकम् असहायम् एकायने एकस्य मार्गे 'अयनं वर्त्म मार्गाध्व-' इत्यमरः एकपद्यामित्यर्थः। सहायरहितं दयया संरक्षकपथिकजनरहितमित्यर्थः । दुर्गे इतः परमपि केनचिद्गन्तुमशक्ये इति दुःखहेत्वतिरेकोक्तिः । निःश्वसन्तं गृध्रराजमिति शेषः ॥ २४ ॥

२४ ] ति० टी०—ममालक्ष्मीर्मदुष्कर्मसंबद्धाऽलक्ष्मीः पावकं सर्वदाहकमपि दहेत् किमुत मच्छ्रियमित्यर्थः ॥ २४ ॥

रा० टी०—तद्वचनाकारमाह—राज्यमिति । राज्यं राज्याभिषेको भ्रष्टं वने वासो जात इति शेषः, या पावकमपि दहेत्

---

१ मयेति गो. पाठः । २ रथश्चात्र पातित इति गो. पाठः । ३ भग्नमेतदस्य शरावरमिति गो. पाठः । ४ रथ इति गो. पाठः । ५ पक्षो इति गो. पाठः । ६ चरणद्वयमेतदाधिकं गो. पाठे । ७ अर्धमेतत् गो. नास्ति । ८ दुर्गे इति गो. पाठः । ९ कथंचनेति गो. पाठः । १० दुःखिततरो रामः सौमित्रिमब्रवीदिति गो. पाठः । ११ राज्याद्भ्रंश इति गो. पाठः ।

संपूर्णमपि चेदद्य प्रतरेयं महोदधिम् । सोऽपि नूनं ममालक्ष्म्या विशुष्येत्सरितां पतिः॥ २५ ॥
नास्त्यभाग्यतरो लोके मत्तोऽस्मिन्सचराचरे । येनेयं महती प्राप्ता मया व्यसनवागुरा ॥ २६ ॥
अयं [1]पितुर्वयस्यो मे गृध्रराजो महाबलः । शेते विनिहतो भूमौ मम भाग्यविपर्ययात् ॥ २७ ॥
इत्येवमुक्त्वा बहुशो राघवः सहलक्ष्मणः । जटायुषं च पस्पर्श पितृस्नेहं [3]निदर्शयन् ॥ २८ ॥
निकृत्तपक्षं रुधिरावसिक्तं [4]तं गृध्रराजं परिगृह्य राघवः ।
क्व मैथिली प्राणसमा गतेति विमुच्य वाचं निपपात भूमौ ॥ २९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

## अष्टषष्टितमः सर्गः ।

सीताहरणस्य याथार्थ्ये रामेण पृष्टो जटायुस्तत्कथयित्वा सीताहरणस्य विन्दमुहूर्ते जातत्वाच्चं तां पुनरवश्यं विन्देथा इति रामं समाश्वासयति। रावणवृत्तं निवेदयतो जटायोः प्राणा निरगच्छन्। तमनुशोचन्रामस्तस्मै पुण्यलोकानुद्दिशंस्तद्देहं चितायामारोप्य पिण्डोदकं ददौ।

रामः प्रेक्ष्य तु तं गृध्रं भुवि रौद्रेण पातितम् । सौमित्रिं मित्रसंपन्नमिदं वचनमब्रवीत् ॥ १ ॥
ममायं नूनमर्थेषु यतमानो विहङ्गमः । राक्षसेन हतः संख्ये प्राणांस्त्यजति मत्कृते ॥ २ ॥

---

ईदृशी ममालक्ष्मीः मस्य मधुसूदनस्य मा लक्ष्मीः तस्या अपि लक्ष्मीः इयं बुद्धिस्था सीता नष्टा अपहरणेन अदृश्यत्वं प्राप्ता, द्विजः सहायकपक्षी मृतो मृतप्रायः 'मो यमे समयेऽपि स्याद्विषे च मधुसूदने' इति मेदिनी ॥ २४ ॥

गो० टी०–राज्यादिति । यद्यपि न चास्य महतीं लक्ष्मीं राज्यनाशोपकर्षति वनवासो महोदय इति अभिमततमतया प्रोक्तौ राज्यनाशवनवासौ तथापि संप्रति सीताविश्लेषकारित्वाज्जटायुवियोगफलकत्वाच्च तावेवानर्थकरौ जाताविव्याह–राज्याद्भ्रंशः हठात् लब्धराज्यस्य विच्युतिः।वने वासः राज्यभ्रंशेऽपि राज्ये भिक्षुकस्यापि स्थातुं शक्यं तदपि न लब्धम्। सीता नष्टा वनवासेऽप्यभिमतजनविश्लेषाभावे सुखेनावस्थातुं शक्यं तदपि नास्ति । हतो द्विजः अभिमतजनविश्लेषेऽपि बन्धुजनसन्निधौ शोको निर्वापयितुं शक्यः स च निवृत्तः । ईदृशी एतादृशदुःखपर्यवसायिनी मम अलक्ष्मीः दौर्भाग्यं पावकमपि निर्दहेत्सर्ववस्तुदाहकमपि दहेत् सदा विश्लेषप्रसक्तिशून्यं लक्ष्मणमपि विश्लेषयेदिति भावः ॥ २६ ॥

२५ ] ति० टी०–एतद्दुःखपरितापशान्तये संपूर्णं महोदधिमपि प्रतरेयं तदा सोऽपि सरितां पतिर्नूनं निश्चयेन ममालक्ष्म्या विशुष्येत् ॥ २५ ॥

रा० टी०–संपूर्णमिति । पतिः सर्वेषां नियन्ताऽहं संपूर्णां सरितां नदीं संपूर्णं महोदधिं महासमुद्रं च ममालक्ष्म्या मधुसूदनलक्ष्मीलक्ष्म्या सहितोऽत् निरन्तरं वनपर्यटनशीलोऽहं चेत् यदि इच्छामि तदा प्रतरेयं विशुष्ये शोषयामि च अतः येन रक्षसा हेतुभूतेन महती इयं व्यसनवागुरा दुःखरूपमृगादिबन्धनजालं मया कर्त्रा प्राप्ता प्रापिता तस्मान्मत्त उन्मत्तः अभाग्यतरश्च लोके नास्ति, एतेन स शीघ्रं ध्रुवं नङ्क्ष्यतीति सूचितम् । श्लोकद्वयमेकान्वयि ॥ २५ ॥ २६ ॥

गो०टी०–संपूर्णमिति । प्रतरेयं तापशान्तये प्लवेयं चेत् २६

२६] ति०टी०–येनाभाग्येन। वागुरा मृगादिबन्धनजालम् २६

गो० टी०–नास्तीति । व्यसनं वागुरेव व्यसनवागुरा 'वागुरा मृगबन्धिनी' इत्यमरः ॥ २७ ॥

२७ ] ति० टी०–पितुर्वयस्यः सखा ॥ २७ ॥

रा० टी०–तदेव द्रढयन्नाह–अयमिति । मे पितुर्वयस्यः सखा निहतो निहतप्रायोऽयं गृध्रराजः भाग्यविपर्ययात् हननकर्तुर्भाग्यवैपरीत्यात् एव ममाग्रे शेते ॥ २७ ॥

गो० टी०–अयमिति । पितुर्वयस्यः सखा ॥ २८ ॥

२८–२९ ] ति० टी०–पितृस्नेहं पितरीव स्नेहम् ॥२८॥२९॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

रा० टी०–इतीति । राघवो जटायुषं पस्पर्श ॥ २८ ॥

गो० टी०–इतीति । पितरीव स्नेहः पितृस्नेहः ॥ २९ ॥

रा० टी०–निकृत्तेति । निकृत्तौ छिन्नौ पक्षौ यस्य तं गृध्रराजं परिगृह्य क्व मैथिलीति वाचं विमुच्योच्चार्येत्यर्थः भूमौ निपपात २९

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

गो०टी०–निकृत्तेति । रामः वाचं विमुच्य उक्त्वेत्यर्थः ३०

अस्मिन् सर्गे एकोनत्रिंशच्छ्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने सप्तषष्टितमः सर्गः ॥ ६७ ॥

---

१–२ ] ति० टी०–रौद्रेण रक्षसा अनेन रक्षसां तमः-

---

१ पितृवयस्य इति गो. पाठः । २ जरान्वित इति गो. पाठः । ३ वीति गो. पाठः । ४ स इति गो. पाठः । ५ परिरभ्य राम इति गो. पाठः । ६ ममेति गो. पाठः । ७ त्यक्ष्यति दुस्त्यजानिति गो. दुस्त्यजानिति रा. पाठः ।

अतिखिन्नः शरीरेऽस्मिन्प्राणो लक्ष्मण विद्यते । तथा स्वरविहीनोऽयं विक्लवं समुदीक्षते ॥ ३ ॥
जटायो यदि शक्नोषि वाक्यं व्याहरितुं पुनः । सीतामाख्याहि भद्रं ते वधमाख्याहि चात्मनः ॥ ४ ॥
किंनिमित्तो जहारार्यां रावणस्तस्य किं मया । अपराधं तु यं दृष्ट्वा रावणेन हृता प्रिया ॥ ५ ॥
कथं तच्चन्द्रसंकाशं मुखमासीन्मनोहरम् । सीतया कानि चोक्तानि तस्मिन्काले द्विजोत्तम ॥ ६ ॥
कथंवीर्यः कथंरूपः किंकर्मा स च राक्षसः । क्व चास्य भवनं तात ब्रूहि मे परिपृच्छतः ॥ ७ ॥
तमुद्वीक्ष्य स धर्मात्मा विलपन्तमनाथवत् । वाचा विक्लवया राममिदं वचनमब्रवीत् ॥ ८ ॥
सा हृता राक्षसेन्द्रेण रावणेन दुरात्मना । मायामास्थाय विपुलां वातदुर्दिनसंकुलाम् ॥ ९ ॥
परिक्लान्तस्य मे तात पक्षौ छित्त्वा निशाचरः । सीतामादाय वैदेहीं प्रयातो दक्षिणामुखः ॥ १० ॥

---

प्राधान्यमेवेति सूचितम् । मित्रसंपन्नं मित्रत्वेन संपन्नं सर्वजनेषु मैत्र्या युक्तम् ॥ १ ॥ २ ॥

रा० टी०—किंचित्स्वास्थ्यप्राप्त्यनन्तरं लक्ष्मणं प्रति रामोक्तिं वर्णयितुमाह—राम इति । रौद्रेण अतिभयंकरेण रक्षसा पातितं गृध्रं तं जटायुषं प्रेक्ष्य मित्रसंपन्नं मित्रत्वं प्राप्तं सौमित्रिं रामोऽब्रवीत् । मित्रशब्दो भावप्रधानः ॥ १ ॥

गो० टी०—अथ भगवत्कार्यार्थं त्यक्तशरीरस्य गृध्रराजस्य मोक्षपदप्रापणमष्टषष्टितमे—राम इत्यादि । रौद्रेण रावणेन मित्रसंपन्नं सर्वजनमित्रमित्यर्थः । यद्वा परनिपातः संपन्नमित्रम् अत्यन्तरामविषयसौहार्दयुक्तमित्यर्थः ॥ १ ॥

रा० टी०—तद्वचनाकारमाह—ममेति । ममार्थेषु यतमानः अत एव संख्ये संग्रामे राक्षसेन हतः अयं विहङ्गमः दुस्त्यजान् प्राणान् त्यजति ॥ २ ॥

गो० टी०—ममेति । अर्थेष्विति निमित्तसप्तमी मम प्रयोजनार्थमित्यर्थः । संख्ये युद्धे ॥ २ ॥

३ ] ति० टी०—तथातिखिन्नप्राण इव स्वरहीनो विक्लवेक्षणश्च ॥ ३ ॥

रा० टी०—अतीति । हे लक्ष्मण ! अस्मिन् जटायुसंबन्धिनि शरीरे प्राणः प्राणवायुः अतिखिन्नः क्षीणतां प्राप्तो विद्यते तथा अत एव स्वरविहीनः क्षीणस्वरोऽयं विक्लवं यथा भवति तथा समुदीक्षते पश्यति ॥ ३ ॥

गो० टी०—अयमिति । अयं प्राणः सूक्ष्मप्राणः स्वरहीनः हीनस्वरः विक्लवः विह्वलः ॥ ३ ॥

४ ] ति० टी०—व्याहरितुं व्याहर्तुम् । वधं वधप्रकारम् ॥ ४ ॥

रा० टी०—लक्ष्मणं प्रत्युक्त्वा जटायुं प्रत्याह—जटायो इति । हे जटायो ! वाक्यं व्याहरितुं व्याहर्तुम् अभिधातुं यदि पुनः शक्नोषि तर्हि सीतां सीतावृत्तान्तम् आख्याहि आत्मनो वधं वधवृत्तान्तं चाख्याहि ॥ ४ ॥

गो० टी०—जटायो इति । व्याहरितुं व्याहर्तुं वधं वधप्रकारम् ॥ ४ ॥

५–८ ] ति० टी०—यमपराधं दृष्ट्वा तु प्रिया सीता हृता सोऽपराधस्तस्य मया किं कृतः, अपि तु न । अतः—किंनिमित्त इति । किं निमित्तं हृदि यस्य स रावण आर्यां जहार ॥ ५–८ ॥

रा० टी०—पृष्टवृत्तान्तस्वरूपमाह—किमिति । रावणः आर्यां सीतां किंनिमित्तः सन् जहार । तदेव भङ्ग्यन्तरेणाह—यमपराधं दृष्ट्वा ज्ञात्वा रावणेन प्रिया सीता हृता सोऽपराधः मया किं कृत इति शेषः । किमिति प्रश्ने ॥ ५ ॥

गो० टी०—किमिति । किंनिमित्तः किं निमित्तं यस्यासौ किंनिमित्तः केन हेतुना अहरदित्यर्थः । किं भोगार्थम् उत अपकारप्रतीकारार्थमित्यर्थः । चरमपक्षे तत्स्वरूपं पृच्छति-तस्येति । यम् अपराधम् ॥ ५ ॥

रा० टी०—कथमिति । चन्द्रसंकाशं चन्द्रस्यापि प्रकाशकम् अत एव मनोहरं तत्प्रसिद्धं सीताया मुखं तस्मिन्नपहरणकाले कथं कीदृशमित्यर्थः, आसीत् कानि वचनानि सीतया चोक्तानि ॥ ६ ॥

गो० टी०—कथमिति । कथं कीदृशप्रकारं कानि वाक्यानि ॥ ६ ॥

रा० टी०—कथमिति । राक्षसो रावणः कथंवीर्यादिविशिष्टः अस्य रावणस्य भवनं क्व इति परिपृच्छतो मे ब्रूहि ॥ ७ ॥

गो० टी०—कथंवीर्य इति । तात पितृतुल्य ॥ ७ ॥

रा० टी०—तमिति । धर्मात्मा स जटायुः अनन्तरमन्तररहितं निरन्तरमित्यर्थः, विलपन्तं विविधं पृच्छन्तं राममुद्वीक्ष्य प्रेमभरेणावलोक्य अतिसन्नया अतिक्षीणया वाचा इदमब्रवीत् ॥ ८ ॥

गो० टी०—तमिति । दीनात्मा दीनमनाः अतिसन्नया अतिकार्श्यं प्राप्तया ॥ ८ ॥

९–१० ] ति० टी०—किंकर्मेत्यस्योत्तरम्—मायामिति । वातेन दुर्दिनेन च संकुलाम् ॥ ९ ॥ १० ॥

रा० टी०—तद्वचनाकारमाह—सेति । रावणेन वातदुर्दिन-

---

१ ऽहरत्सीतामिति गो. पाठः । २ राद्धामिति गो. पाठः । ३ उद्वीक्ष्याथ दीनात्मेति गो. पाठः । ४ अनन्तरमिति गो. रा. पाठः । ५ ऽतिसन्नया रामं जटायुरिदमिति गो. पाठः । ६ हृता सेति गो. पाठः । ७ विहायसेति गो. पाठः । ८ श्रान्तस्येति गो. रा. पाठः । ९ स राक्षस इति गो. पाठः । १० दक्षिणां दिशमिति गो. पाठः ।

उपरुध्यन्ति मे प्राणा दृष्टिर्भ्रमति राघव । पश्यामि वृक्षान्सौवर्णानुशीरकृतमूर्धजान् ॥ ११ ॥
येन याति मुहूर्तेन सीता मादाय रावणः । विप्रनष्टं धनं क्षिप्रं तत्स्वामी प्रतिपद्यते ॥ १२ ॥
विन्दो नाम मुहूर्तोऽसौ न च काकुत्स्थ सोऽबुधत् । [ त्वत्प्रियां जानकीं हृत्वा रावणो राक्षसेश्वरः ]
झषवद्बडिशं गृह्य क्षिप्रमेव विनश्यति ॥ १३ ॥
न च त्वया व्यथा कार्या जनकस्य सुतां प्रति । वैदेह्यां रंस्यसे क्षिप्रं हत्वा तं रणमूर्धनि ॥ १४ ॥
असंमूढस्य गृध्रस्य रामं प्रत्यनुभाषतः । आस्यात्सुस्राव रुधिरं म्रियमाणस्य सामिषम् ॥ १५ ॥

---

संकुलं वातेन दुर्दिनेन च संयुक्तां विपुलां बहुमायामास्थाय सा सीता हृता ॥ ९ ॥

गो० टी०—किंकर्मेत्यस्योत्तरमाह—हृता सेति । वातेन दुर्दिनेन च संकुलाम् 'मेघच्छन्नेऽह्नि दुर्दिनम्' इत्यमरः । मायया महावातं मेघच्छादनं चोत्पाद्य हृतवानित्यर्थः ॥ ॥ ९ ॥

रा० टी०—परीति । परिश्रान्तस्य रावणयुद्धे प्राप्तपरिश्रमस्य मे पक्षौ छित्त्वा सीतामादाय च निशाचरो रावणः दक्षिणामुखः सन् प्रयातः ॥ १० ॥

गो०टी०—वधमाख्याहीत्यस्योत्तरमाह—परिश्रान्तस्येति। युद्धपरिश्रान्तस्येत्यर्थः ॥ १० ॥

११ ] ति० टी—अन्यप्रश्नोत्तरासामर्थ्यं ध्वनयन्प्राणोपरोधमाह—उपेति । उशीरेण नलदेन कृता मूर्धजाः केशा येषां तान्सौवर्णान्वृक्षान्पश्यामि । तादृशसौवर्णवृक्षदर्शनं मरणचिह्नम् ॥ ११ ॥

रा० टी०—उत्तरान्तरं वक्तुं सामर्थ्यं नास्तीति बोधयन्नाह—उपेति । हे राघव ! मे प्राणाः उपरुध्यन्ति कायव्यापारं निवारयन्ति निर्गच्छन्तीत्यर्थः । किं च मे प्राणाः इन्द्रियाणि उपरुध्यन्ति पिधीयन्ते स्वस्वव्यापारसामर्थ्यं जहतीत्यर्थः, अत एव दृष्टिर्भ्रमति अत एव सौवर्णान् सुवर्णमयान् उशीरकृतमूर्धजान् उशीरेण नलदेन कृताः संरचिताः मूर्धजाः अग्रभागा येषां तान् वृक्षान् पश्यामि मरणचिह्नत्वेन जानामीत्यर्थः ॥११॥

गो० टी०—प्रश्नान्तरे प्रत्युत्तरकथनाशक्तिमाह—उपरुध्यन्तीति । उपरुध्यन्ति उपरुध्यन्ते मरणवेदनया पीड्यन्त इत्यर्थः। सौवर्णान् मरणकाले तथा प्रतीयन्त इति प्रसिद्धम् । उशीरैः लामज्जकैः कृताः कल्पिताः मूर्धजाः केशाः येषां ते तथा ॥ ११ ॥

१२ ] ति० टी०—ज्योतिषज्ञानबलादाह—येनेति ॥ १२ ॥

रा० टी०—स्वस्य शास्त्रविज्ञातृत्वं बोधयन्नाह—येनेति। रावणः येन मुहूर्तेन सीतामादाय याति तस्मिन् मुहूर्ते तत्स्वामी धनाधिपः विप्रनष्टम् अदृश्यत्वं प्राप्तं धनं क्षिप्रं प्रतिपद्यते॥१२॥

गो० टी०—किमिह बहुनोक्तेन सर्वथा सीता पुनर्लप्स्यत इत्याह—येनेति । येन मुहूर्तेन निमित्तभूतेन रावणः सीतामादाय याति स्म तन्मुहूर्तबलेन स्वामी धनस्वामी विप्रणष्टं धनं क्षिप्रम् अचिरेण पुनः प्रतिपद्यते प्राप्नोति ॥ १२ ॥

१३ ] ति० टी०—कोऽसौ मुहूर्तस्तत्राह—विन्द इति । लाभार्थाद्विदेर्निष्पन्नोऽसावित्याहुः । स च रावणो निजकर्मानन्तकूलं तं नावबुधत् 'बुधिरवगमने' इत्यस्य लुङि रूपम् । न केवलं मुहूर्तमहिम्ना इष्टप्राप्तिरेव, अपि तु शत्रुनाशोऽपीत्याह—झषेति । बडिशं गृहीत्वा झष इव क्षिप्रमेव विनश्यति । वर्तमाननिर्देशेनातिसांनिध्यं विनाशस्य दर्शयति ॥ १३ ॥

रा० टी०—ननु कोऽसौ मुहूर्त इत्यत आह—विन्द इति। हे काकुत्स्थ ! असौ सीतापहरणसंबन्धी विन्दो नाम मुहूर्तः अपहृतवस्तु तत्स्वामिसमीपं प्रापयतीत्यर्थः। नन्वस्मिन् मुहूर्ते रावणेन सीता कथमपहृतेत्यत आह—स रावणो न अबुधत् स्वप्रतापाभिमानात् मुमूर्षुत्वाद्वा नागणयदित्यर्थः;अत एव बडिशं संगृह्य गृहीत्वा झषवत् मीनवत् विनश्यति विनंक्ष्य। अबुधत् इति इरितो बुधो लुङ् । विकरणव्यत्ययश्छान्दस इति भूषणोक्तिस्तु चिन्त्या ॥ १३ ॥

गो० टी०—कोऽसौ मुहूर्त इत्यत्राह—विन्द इति । नष्टं धनं विन्दति लभतेऽस्मिन्निति विन्दः स रावणस्तु नाबुधत् नाबुध्यत विकरणव्यत्ययश्छान्दसः । तस्मात् बडिशं गृह्य गृहीत्वा झषवत् मत्स्य इव विनश्यति वर्तमानसामीप्ये वर्तमानवत् । 'बडिशं मत्स्यवेधनम्' इत्यमरः ॥ १३ ॥

१४ ] ति० टी०—अतः—न चेति ॥ १४ ॥

रा० टी०—नेति । यतस्तं रावणं रणमूर्धनि हत्वा वैदेह्या सह क्षिप्रं रंस्यसे अतः जनकस्य सुतां प्रति त्वया व्यथा न कार्या ॥ १४ ॥

गो० टी०—फलितमाह—न चेति ॥ १४ ॥

१५ ] ति० टी०—असंमूढस्य मृतिकालेऽप्यभ्रान्तस्य । रामं प्रत्यनुभाषतः उत्तरं भाषमाणस्य ॥ १५ ॥

रा० टी०—असंमूढस्येति । असंमूढस्य संमूढतारहितस्य सावधानचित्तस्येत्यर्थः, गृध्रस्य आस्यात् मुखात् सामिषं मांससहितं रुधिरं सुस्राव ॥ १५ ॥

गो० टी०—असंमूढस्येति । एतावत्पर्यन्तमिति शेषः । अनुभाषतः उत्तरं भाषमाणस्य सामिषं मांससहितं रुधिरम् ॥ ॥ १५ ॥

---

१ यात इति गो. पाठः । २ प्रणष्टमिति गो. पाठः । ३ ऽयमिति गो. पाठः । ४ नाऽबुधदिति गो. पाठः । ५ अर्धमेतदाधिकं गो. पाठे । ६ वैदेह्येति गो. रा. पाठः । ७ राक्षसं रणे इति गो. पाठः ।

पुत्रो विश्रवसः साक्षाद्भ्राता वैश्रवणस्य च । इत्युक्त्वा दुर्लभान्प्राणान्मुमोच पतगेश्वरः ॥ १६ ॥
ब्रूहि ब्रूहीति रामस्य ब्रुवाणस्य कृताञ्जलेः । त्यक्त्वा शरीरं गृध्रस्य प्राणा जग्मुर्विहायसम् ॥ १७ ॥
स निक्षिप्य शिरो भूमौ प्रसार्य चरणौ तथा । विक्षिप्य च शरीरं स्वं पपात धरणीतले ॥ १८ ॥
तं गृध्रं प्रेक्ष्य ताम्राक्षं गतासुमचलोपमम् । रामः सुबहुभिर्दुःखैर्दीनः सौमित्रिमब्रवीत् ॥ १९ ॥
बहूनि रक्षसां वासे वर्षाणि वसता सुखम् । अनेन दण्डकारण्ये विशीर्णमिह पक्षिणा ॥ २० ॥
अनेकवार्षिको यस्तु चिरकालसमुत्थितः । सोऽयमद्य हतः शेते कालो हि दुरतिक्रमः ॥ २१ ॥
पश्य लक्ष्मण गृध्रोऽयमुपकारी हतश्च मे । सीतामभ्यवपन्नो हि रावणेन बलीयसा ॥ २२ ॥
गृध्रराज्यं परित्यज्य पितृपैतामहं महत् । मम हेतोरयं प्राणान्मुमोच पतगेश्वरः ॥ २३ ॥

---

१६–१९ ] ति० टी०—इत्युक्त्वैतावन्मात्रमुक्त्वा । तद्वीर्यतद्वनादिकथनात्पूर्वमिति शेषः ॥ १६–१९ ॥

रा० टी०—पुत्र इति । विश्रवसः साक्षात् पुत्रः औरसः सूनुः वैश्रवणस्य कुबेरस्य भ्राता इत्युक्त्वा तदैश्वर्यादिकमनुक्त्वेत्यर्थः, पतगेश्वरो दुर्लभान् प्राणान्मुमोच ॥ १६ ॥

गो० टी०—अथ रावणवंशं वक्तुमुपक्रमते—पुत्र इति । साक्षात्पुत्रः औरस इत्यर्थः । अस्योत्तरार्धम्—'अध्यास्ते नगरीं लङ्कां रावणो राक्षसेश्वरः' इति बोध्यम् । उत्तरत्र संपातिवचने इदमेव पूर्वार्धमुपादाय अस्योत्तरार्धस्य कथनादिति लोकाचार्योक्तम् । इत्युक्त्वा एतावन्मात्रमुक्त्वा भवनादिकथनात् पूर्वमित्यर्थः, दुर्लभान् ब्रूहि ब्रूहीति पृच्छते रामाय साकल्येन विज्ञापनपर्यन्तं प्राणा न स्थिताः हन्तेति ऋषिः शोचति ॥ १६ ॥

रा० टी०—ब्रूहीति । ब्रूहि ब्रूहि रावणवृत्तान्तं कथय कथय इति ब्रुवाणस्य रामस्याग्रे कृताञ्जलेर्गृध्रस्य प्राणाः शरीरं त्यक्त्वा विहायसं जग्मुः ॥ १७ ॥

गो० टी०—ब्रूहीति । ब्रुवाणस्य ब्रुवाणे सति प्राणः सूक्ष्मशरीरेन्द्रियप्राणसहित आत्मेत्यर्थः ॥ १७ ॥

रा० टी०—स इति । स जटायुः शिरो भूमौ निक्षिप्य चरणौ प्रसार्य स्वं शरीरं विक्षिप्य इतस्ततः संचाल्य धरणीतले पपात ॥ १८ ॥

गो० टी०—स इति । निक्षिप्य मरणवेदनयेति भावः । विक्षिप्य विधूय पपातेत्युक्तिरौपचारिकी ॥ १८ ॥

रा० टी०—तमिति । ताम्राक्षं रक्तनयनं गतासुं निर्गतप्राणम् अचलोपमं तं जटायुं सुबहुभिः अनेकविधैर्दुःखैः शृङ्गारपोषकसीतावियोगजनितदुःखाभासैः दीनः क्षीणत्वेन प्रतीयमानः रामः सौमित्रिमब्रवीत् ॥ १९ ॥

गो० टी०—तमिति । ताम्राक्षम् अधःशिरस्कतया पतनजक्षोभात् ॥ १९ ॥

२० ] ति० टी०—अस्मिन्दण्डकारण्ये बहूनि वर्षाणि सुखं वसताऽनेन पक्षिणेहैव दण्डकारण्ये विशीर्णं देहविशरणं प्राप्तम् ॥ २० ॥

रा० टी०—तद्वचनाकारमाह—बहूनीति । रक्षसां वासे निवासस्थाने दण्डकारण्ये बहूनि वर्षाणि सुखं वसता अनेन पक्षिणा इह विशीर्णं प्राणा त्यक्ता इत्यर्थः । 'विचीर्णं' इति तीर्थपाठः ॥ २० ॥

गो० टी०—बहूनीति । रक्षसां वासे दण्डकारण्ये बहूनि वर्षाणि निर्भयतया सुखं वसताऽनेन पक्षिणा विशीर्णं देहविशरणं प्राप्तम् इहैव सुखं वसित्वा इहैव मृतमनेनेति भावः । 'विचीर्णम्' इति पाठे अत्रैव वसता अनेन अत्रैव सुखं विचीर्णम् अनुभूतमित्यर्थः ॥ २० ॥

२१ ] ति० टी०—अनेकवार्षिक इत्यस्यैव विवरणम्—चिरकालसमुत्थित इति ॥ २१ ॥

रा० टी०—अनेकेति । अनेकवार्षिकः बहुवर्षपरिच्छिन्नावस्थाकः यश्चिरकालसमुत्थितः बहुकालं प्रवृद्धः सोऽयमद्य हतः सन् शेते हि यतः कालो दुरतिक्रमः अनिवारणीयः ॥ २१ ॥

गो० टी०—एतदेव विवृणोति—अनेकेति । अनेकवार्षिकः बहुवयःप्राप्तः चिरकालसमुत्थितः चिरकालमभ्युदयं प्राप्तः ॥ २१ ॥

२२–२३ ] ति० टी०—मे उपकारीत्यन्वयः । सीतामभ्यवपन्नः सीतां मोचयितुं प्रवृत्तः ॥ २२ ॥ २३ ॥

रा० टी०—पश्येति । मे उपकारी अयं गृध्रः सीतामभ्यवपन्नः अपहरणनिवारणाय सीतासंमुखं प्राप्तः अत एव बलीयसा रावणेन हतः ॥ २२ ॥

गो० टी०—पश्येति । अनेन मोक्षप्रदानोचितं तदीयसुकृतविशेषं दर्शयति । सीतामभ्यवपन्नो मे उपकारी सन् हतः ॥ २२ ॥

रा० टी०—गृध्रेति । पितृपैतामहं पित्रादिपरंपराप्राप्तं गृध्रराज्यं परित्यज्य अयं पतगेश्वरः पक्ष्यधीशः मम हेतोः प्राणान्मुमोच ॥ २३ ॥

गो० टी०—गृध्रराज्यमिति । गृध्रराज्यं परित्यज्येति प्राप्याभ्यासपरित्याग उक्तः, महदिति स्वकीयेक्ष्वाकुराज्यव्यावृत्तिः, एकमुखत्वात् ममेत्यादिना उपायानुष्ठानोक्तिः । पतगेश्वरः पितुर्मरणात् इतःपरमस्य पक्षानाश्रित्य सुखं स्थास्यामीति स्थितोऽहम् अयं तातवन्मत्कृते प्राणत्यागं कृतवानिति भावः ॥ २३ ॥

---

१ तदेति गो. पाठः ।

सर्वत्र खलु दृश्यन्ते साधवो धर्मचारिणः । शूराः शरण्याः सौमित्रे तिर्यग्योनिगतेष्वपि ॥ २४ ॥
सीताहरणजं दुःखं न मे सौम्य तथागतम् । यथा विनाशो गृध्रस्य मत्कृते च परंतप ॥ २५ ॥
राजा दशरथः श्रीमान्यथा मम महायशाः । पूजनीयश्च मान्यश्च तथायं पतगेश्वरः ॥ २६ ॥
सौमित्रे हर काष्ठानि निर्मथिष्यामि पावकम् । गृध्रराजं [1]दिधक्ष्यामि मत्कृते निधनं गतम् ॥ २७ ॥
नाथं पतगलोकस्य [2]चितिमारोपयाम्ययम् । इमं धक्ष्यामि सौमित्रे हतं रौद्रेण रक्षसा ॥ २८ ॥
या गतिर्यज्ञशीलानामाहिताग्नेश्च या गतिः । अपरावर्तिनां या च या च भूमिप्रदायिनाम् ॥ २९ ॥
मया त्वं समनुज्ञातो गच्छ लोकाननुत्तमान् । गृध्रराज महासत्त्व संस्कृतश्च मया व्रज ॥ ३० ॥
एवमुक्त्वा चितां दीप्तामारोप्य पतगेश्वरम् । ददाह रामो धर्मात्मा स्वबन्धुमिव दुःखितः ॥ ३१ ॥

---

२४ ] ति० टी०–सर्वत्र सर्वजातिषु ॥ २४ ॥

रा० टी०–सर्वत्रेति । सर्वत्र ! हे सर्वसज्जनरक्षणकर्तः सौमित्रे ! तिर्यग्योनिगतेष्वपि धर्माचरणादिमन्तो दृश्यन्ते॥२४॥

गो० टी०–सर्वत्रेति सर्वजातिष्वपीत्यर्थः । तिर्यग्योनिगतस्यास्य कथमेतादृशी बुद्धिरिति न मन्तव्यमिति भावः॥२४॥

२५–२६ ] ति० टी०–तथा आगतमिति च्छेदः, प्राप्तमित्यर्थः । मन्निमित्तं यो गृध्रविनाशस्तज्जं दुःखं यथा मां प्राप्तम् । सीताहरणजदुःखाद्गृध्रविनाशजं दुःखमधिकमिति भावः । तस्याः पुनः प्राप्तिसंभावनासत्त्वादस्य तदभावाच्चेति तात्पर्यम् ॥ २५ ॥ २६ ॥

रा० टी०–सीतेति । मत्कृते मदर्थं यथा गृध्रस्य विनाशो विनाशजनितदुःखं मे आगतं प्राप्तं तथा सीताहरणजं दुःखं नागतम् । विनाशशब्दो भाक्तः ॥ २५ ॥

गो० टी०–सीतेति । मत्कृते च मत्कृत एव यथाऽस्य विनाशः प्राप्तः तथा सीताहरणजं दुःखं नागतं न प्राप्तम् । अत्र विनाशशब्देन तज्जं दुःखमुच्यते ॥ २५ ॥

रा० टी०–तत्र हेतुमाह–राजेति । यथा राजा दशरथः पूजनीयो मान्यश्च तथाऽयं पतगेश्वरश्च तन्मित्रत्वादिति तात्पर्यम् ॥ २६ ॥

गो० टी०–अथ संस्कारयोग्यतामाह–राजेति । पूज्यः पैतृकविधिना अर्चनीयः, मान्यः श्लाघ्यः ॥ २६ ॥

२७–२८ ] ति० टी०–दिधक्ष्यामि दग्धुमिच्छामि सद्गतिसिद्धये इयन्नार्षः ॥ २७ ॥ २८ ॥

रा० टी०–सौमित्रे इति । हे सौमित्रे ! गृध्रराजं दिधक्षामि दग्धुमिच्छामि अतः काष्ठानि एतच्छरीरभस्मीकरणयोग्यदारूणि हर प्रापय । अहं पावकं निर्मथिष्यामि मथनेन निष्पादयिष्यामि ॥ २७ ॥

गो० टी०–सौमित्र इति । दिधक्षामि दग्धुमिच्छामि । देहः सन्नन्तात् धत्वभष्भावौ ॥ २७ ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–नाथमिति । पतगलोकस्य पक्षिजनस्य नाथं यतोऽहं धक्ष्यामि अतः चितिं चितामारोपयामि आरोपयिष्यामि प्रापयिष्यामि एतेन रामस्य कृपालुत्वं कृतज्ञत्वं च व्यक्तम् ॥ २८ ॥

गो० टी०–नाथमिति । चितां काष्ठभारम् ॥ २८ ॥

२९–३१ ] ति० टी०–अपरावर्तिनाम् सङ्ग्रामे इति शेषः । गम्यत इति गतिर्लोकः । यज्ञशीलानां लोकान्क्रमेण प्राप्य मदनुज्ञातः सन्ननुत्तमान्येभ्यः परे उत्तमा न सन्ति ताँल्लोकान्ब्रह्मणो लोकान्क्रममुक्तिदान्गच्छ । अनेन संकल्पमात्रात्कर्मानधिकृततिरश्चः साधनहीनस्यापि तल्लोकदानेन भगवान्रामस्वस्वरूपांशे माययाऽऽवृतज्ञान इति प्रलपतां मुखं ध्वस्तम् । शोकादि तु नटनमित्युक्तमेवासकृत् । तदुक्तम्–'संस्कारमकरोत्तस्य रामो ब्रह्मविधानतः । स्वपदं च ददौ तस्मै सोऽपि रामः प्रसादतः ॥ हरेः सामान्यरूपेण प्रययौ परमं पदम् ॥' इति जटायुषं प्रक्रम्य पाद्मे । एतेन तिरश्चामपि स्नेहादिना दाहादियुक्तमिति ध्वनितम् । सारूप्यमुक्तिलाभश्चोक्तः । मया मद्रूपेण सामान्यहरिरूपेण ॥ २९–३१ ॥

रा० टी०–व्यञ्जितस्वरूपं दर्शयन्नाह–येति । हे गृध्रराज ! मया समनुज्ञातः संस्कृतश्च त्वं यज्ञशीलादीनां या गतिस्तां गतिं प्राप्येति शेषः, अनुत्तमान् सर्वोत्तमान् लोकान् गच्छ । संस्कृतो गच्छेत्युक्त्या रामस्य मर्यादापालकत्वं व्यञ्जितम् । श्लोकद्वयमेकान्वयि ॥ २९ ॥ ३० ॥

गो०टी०–या गतिरित्यादिश्लोकद्वयमेकान्वयम् । गम्यत इति गतिः लोकः यज्ञशीलानां यज्ञाः शीलं सद्वृत्तं येषां ते तथा सदा यज्ञानुष्ठानपराणाम् गृहस्थानामित्यर्थः । आहिताः परितः स्थापिताः अग्नयः पञ्चाग्नयो यस्य स तथा सर्वदा तपःशीलस्य वानप्रस्थस्येत्यर्थः । अग्न्याधानस्य पूर्वेणैव सिद्धत्वात् पृथक् फलाभावाच्च अपरावर्तिनाम् अरण्यमियात्ततो न पुनरेयादित्युक्तानां संन्यासिनामित्यर्थः । रणादपलायितानामित्यर्थवर्णने जटायोस्तादृशत्वेन तत्फलस्य स्वतःसिद्धत्वेनानुज्ञातव्यत्वाभावात् मुक्तानां धर्मप्रकरणे उक्त्यसंभवात् भूमिप्रदायिनां भूमिभोगत्यागिनां नैष्ठिकानामित्यर्थः । ता गतीरिति यत्तदोर्नित्यसंबन्धात्सिद्धम् । ता गतीः 'प्राजापत्यं गृहस्थानां ब्राह्मं संन्यासिनां स्मृतम्' इत्याद्युक्तस्थानानि, यद्वा

---

१ दिधक्षामीति गो. रा. पाठः । २ चितामारोप्य राघवेति गो. पाठः ।

रामोऽपि[1] सहसौमित्रिर्वनं यात्वा स वीर्यवान् । स्थूलान्हत्वा महारोहीननु तस्तार तं द्विजम् ॥ ३२ ॥
रोहिमांसानि चोद्धृत्य[3] पेशीकृत्वा महायशाः । शकुनाय ददौ रामो रम्ये हरितशाद्वले ॥ ३३ ॥
यत्तत्प्रेतस्य मर्त्यस्य कथयन्ति द्विजातयः । तत्स्वर्गगमनं[4] क्षिप्रं तस्य रामो जजाप ह ॥ ३४ ॥
ततो गोदावरीं गत्वा नदीं नरवरात्मजौ । उदकं चक्रतुस्तस्मै गृध्रराजाय तावुभौ ॥ ३५ ॥

यज्ञदानतपःसंन्यासिनामित्यर्थः । तेषां या या गतिः शास्त्रविहिता तां मया संस्कृतो व्रज मया समनुज्ञातस्तु अनुत्तमान् सर्वश्रेष्ठान् लोकान् । अथ "यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु" इत्यादिश्रुतिप्रसिद्धान् विष्णुलोकान् गच्छ अवयवबहुत्वाद्बहुवचनम् अन्यथा गतिशब्देन पौनरुक्त्यम् अनन्वयश्च समनुज्ञातः संस्कृतश्चेति पदद्वयानर्थक्यं च । ननु मानुषभावं भावयतः श्रीरामस्य कथं मुक्तिप्रदानं तस्य परत्वासाधारणचिह्नत्वादिति चेत् सत्येन लोकान् जयतीत्युक्तरीत्या स्वार्जितधर्मविशेषेण स्वाधीनसर्वलोकत्वाविरोधात् । केचित्तु मया संस्कृतस्ततोऽनुज्ञातस्त्वं यज्ञशीलादीनां या गतयः तान् लोकान् गच्छ सर्वान्ते मां व्रज 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इत्युक्तरीत्या मुक्तभोगं प्राप्नुहि । न च निर्हेतुकमुक्तिप्रदानेऽतिप्रसङ्गः स्वकार्यमुद्दिश्य प्राणत्यागस्यैव हेतुत्वात् । अत एव नृसिंहपुराणे-'मत्कृते निधनं यस्मात्त्वया प्राप्तं द्विजोत्तम । तस्मान्मम प्रसादेन विष्णुलोकमवाप्स्यसि' इत्युक्तम् । 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इति हि कर्मणोऽपि मुक्तिहेतुत्वमुक्तम् । "नान्यः पन्था" इति श्रुतिः परमात्मनोऽन्यत्र साक्षान्मुक्तिहेतुत्वं निषेधति तस्यैव प्राधान्येन प्रकृतत्वादित्याहुः । यद्वा हे गृध्रराज महासत्त्व ! मया संस्कृतस्त्वं मयानुज्ञातो भूत्वा अनुत्तमान् लोकान् मल्लोकानित्यर्थः, गच्छ आनुषङ्गिकतया यज्ञशीलादीनां या या गतयस्ता अपि गच्छ गम्यत इति गतिः लोकः आहिताग्नेः गार्हपत्याहवनीयदक्षिणाग्निनिरतस्य या गतिः "अग्नयो वै त्रयी विद्या" इत्यारभ्य "तस्मादग्नीन् परमं वदन्ति" इत्याहिताग्नित्वस्यापि पृथक् धर्मत्वश्रवणात् । अपरावर्तिनां युद्धादपरावर्तमानानां या गतिः दृष्टान्तार्थमिदमुक्तम् जटायोस्तादृशत्वेन तत्फलस्येदानीमदेयत्वात् तिरश्चां यज्ञाद्यधिकाराभावेन तत्फलमात्रस्य देयत्वात् । यथापरावर्तिनां गतिं प्राप्स्यसि तथा यज्ञशीलादीनां लोकानपि ब्रह्मप्राप्तौ वसुत्वादिकमिव प्राप्नुहीत्यर्थः । अस्मिन् कल्पे भूमिप्रदायिनामित्यस्य प्रतीयमानार्थकत्वमेव व्रज एवं गच्छ । यद्वा मया प्रथमं संस्कृतः "अथ तृतीयेन ज्योतिषा संविशस्व" इत्यादिमन्त्रेणानुज्ञातो मया त्वं यज्ञाधिकारिणां लोकान् गच्छ ब्रह्ममेधसंस्कारबलेन प्राप्नुहीत्यर्थः । इदं च फलं संस्कारोत्तरक्षण एवानुतिष्ठतीत्युच्यते-संस्कृतो व्रजेति । 'गृध्रराज महासत्त्व संस्कृतश्च महाव्रत' इति पाठे संस्कृतश्च भवेति वार्थः ॥ २९ ॥ ३० ॥

रा० टी०-एवमिति । स्वबन्धुं स्वविषयकात्यनुरागवन्तं पतगेश्वरं चितामारोप्य दुःखित एव रामो ददाह ॥ ३१ ॥

गो० टी०-एवमिति । दीप्तां दीपनार्हां स्वबन्धुमिवेत्यनेन मन्त्रपूर्वकत्वं दाहस्योच्यते ॥ ३१ ॥

३२ ] ति० टी०-स प्रसिद्धमहिमा रामः महारोहीन्महामृगान् । रोहिशब्द इकारान्तोऽपि मृगवाची । तान्हत्वा पिण्डदानार्थं मांसमादायागत्यानु अनन्तरं तं द्विजं पक्षिणमुद्दिश्य पिण्डदानार्थं शाद्वलं तृणं तस्तार ॥ ३२ ॥

रा० टी०-राम इति । रामो वनं यात्वा गत्वा स्थूलान्महारोहीन् मूलविशेषान् हत्वा छेदनेनानीय द्विजं पक्षिणं तं जटायुमुद्दिश्य अनुतस्तार पिण्डदानार्थं कुशैर्भूमिमाच्छादयामास ॥ ३२ ॥

गो० टी०-राम इति । महारोहीन् महामृगान् तान् द्विजमनु जटायुषमुद्दिश्य हत्वा तस्तार पिण्डदानार्थं दर्भानास्तृतवान् ॥ ३२ ॥

३३ ] ति० टी०-तत्र तन्मांसान्युत्कृत्य पेशीकृत्वा पेशीकृत्य पिण्डं कृत्वा शकुनाय ददौ ॥ ३३ ॥

रा० टी०-रोहीति । रोहिमांसानि स्थूलमूलसंबन्धिभोग्यांशान् उद्धृत्य निस्सार्य पेशीकृत्वा पिण्डाकारतां संपाद्य रम्ये हरितशाद्वले आस्तृतकोमलकुशमयभूमौ शकुनाय पक्षिणे ददौ ॥ ३३ ॥

गो० टी०-रोहीति । उत्कृत्य उद्धृत्य पेशीकृत्य पिण्डीकृत्य हरितशाद्वले नवीनतृणास्तृतप्रदेशे शकुनाय पक्षिणे ददौ ॥ ३३ ॥

३४-३५ ] ति० टी०-यत्तन्मन्त्रजातं प्रेतस्य मर्त्यस्य स्वर्गादिगमनमुद्दिश्य ब्राह्मणाः कथयन्ति तत्स्वर्गगमनं तद्गमनसाधनं तत्तस्य क्षिप्रं स्वर्गगमनाय रामो जजाप ॥ ३४ ॥ ३५ ॥

रा० टी०-यदिति । प्रेतस्य इमं लोकं त्यक्त्वा गतस्य मर्त्यस्य जन्तोः यत् स्वर्गगमनं साकेतप्रापकं मन्त्रस्वरूपं द्विजातयः कथयन्ति पठन्ति तत् तस्य जटायुषोऽर्थं तद्विस्तृतं यथा भवति तथा रामो जजाप । एतेन दशरथसमीपं प्रेषयामासेति सूचितम् ॥ ३४ ॥

गो० टी०-यत्तदिति । प्रेतस्य मर्त्यस्य मनुष्यस्य यत्तत् प्रसिद्धं मन्त्रजातं स्वर्गगमनं स्वर्गो गम्यतेऽनेनेति स्वर्गगमनं स्वर्गप्रापकं वदन्ति । पित्र्यं पितृदेवताकं तज्जजाप याम्यसूक्तादिकं जजापेत्यर्थः ॥ ३४ ॥

रा० टी०-तत इति । ततः दाहाद्यनन्तरं गोदावरीं गत्वा

१ ऽथेति गो. पाठः । २ गत्वेति गो. पाठः । ३ चोत्कृत्येति गो. पाठः । ४ तस्य पित्र्यमिति गो. पाठः ।

शास्त्रदृष्टेन विधिना जलं गृध्राय राघवौ । स्नात्वा तौ गृध्रराजाय उदकं चक्रतुस्तदा ॥ ३६ ॥
स गृध्रराजः कृतवान्यशस्करं सुदुष्करं कर्म रणे निपातितः ।
महर्षिकल्पेन च संस्कृतस्तदा जगाम पुण्यां गतिमात्मनः शुभाम् ॥ ३७ ॥
कृतोदकौ तावपि पक्षिसत्तमे स्थिरां च बुद्धिं प्रणिधाय जग्मतुः ।
प्रवेश्य सीताधिगमे ततो मनो वनं सुरेन्द्राविव विष्णुवासवौ ॥ ३८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डेऽष्टषष्टितमः सर्गः ॥ ६८ ॥

---

गृध्रराजाय उदकं सलिलक्रियां चक्रतुः । तत इत्यनेन दाहाद्युत्तरकाललाभस्तु पाठक्रमादर्थक्रमो बलीयानिति न्यायेन ॥ ३६ ॥

गो० टी०—तत इति । चक्रतुरिति लक्ष्मणस्य कर्तृत्वं सहकारितया । उदकम् उदकदानमित्यर्थः ॥ ३६ ॥

३६ ] ति० टी०—उक्तस्य सर्वस्यास्य ज्ञानपूर्वकत्वं दर्शयितुं पुनराह—शास्त्रेति । तत्र पाठक्रमादर्थक्रमस्य बलवत्त्वात्पूर्वं स्नानम्, तत उदकदानम्, ततः पिण्डदानमिति क्रमो बोध्यः ॥ ३६ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—शास्त्रेति । राघवौ गृध्राय गृध्रोद्देश्यककर्मनिवृत्त्यर्थं जलं जलाशयं प्राप्येति शेषः, स्नात्वा च शास्त्रदृष्टेन विधिना गृध्रराजाय गृध्रराजार्थम् उदकं उदकक्रियां चक्रतुः ॥ ३६ ॥

गो० टी०—उक्तस्यैवार्थस्य ज्ञानपूर्वकत्वविधिपूर्वकत्वप्रदर्शनाय पुनरप्याह—शास्त्रेति । तदा तौ राघवौ शास्त्रदृष्टेन विधिना गृध्राय गृध्रमुद्दिश्य जले[1] स्नात्वा गृध्रराजायोदकं चक्रतुरित्यन्वयः । अयमत्र क्रमः—गृध्रराजं दग्ध्वा स्वर्गगमनसूक्तं जप्त्वा गोदावरीं गत्वा स्नात्वा उदकं दत्त्वा रोहिमांसपिण्डं ददाविति । ननु वैदिकोत्तमो रामः कथं हीनजातिं तिर्यञ्चं वैदिकेन कर्मणा संस्कृतवान् मैवं तस्यात्यन्तभक्तत्वेन जातेरपगमात् ' न शूद्रा भगवद्भक्ता विप्रा भागवताः स्मृताः । सर्ववर्णेषु ते शूद्रा ये ह्यभक्ता जनार्दने ' इत्युक्तेः । न चेदं वचनम् अपशवो वा अन्ये गोअश्वेभ्य इतिवत् प्रशंसापरमिति वक्तुं शक्यम् बाधकाभावात् । ब्राह्मणत्वादिजातिर्हि शास्त्रैकसमधिगम्या न तु गोत्वादिवदाकृतिगम्या येन तत्तुल्यत्वमाशङ्क्येत अत एव विश्वामित्रस्यापि क्षत्रियत्वजातिरपनीता उपनीता च ब्राह्मणत्वजातिरित्युपपादितं बालकाण्डे, अयमर्थ उपपादयिष्यते च श्रमणीवृत्तान्ते । इदं च द्रौपदीविवाहादिवदैतिहासिकविलक्षणव्यक्तिविशेषनियतमिति च नातिप्रसङ्गावकाशः ॥३६॥

३७ ] ति० टी०—पुण्यां पुण्यैकलभ्याम् अत एव सुखां सुखैकस्वभावाम् ॥ ३७ ॥

रा० टी०—स इति । यः गृध्रराजः सुदुष्करम् अन्यैः कर्तुमशक्यम् यशस्करं यशस्संपादकं कर्म सीतारक्षणोद्देश्यकक्रियां कृतवान् रणे निपातितश्च स गृध्रराजः महर्षिकल्पेन महर्षित्वादिसंपादकेन रामेण संस्कृतः सन् पुण्यां पापसंसर्गशून्यां शुभाम् आत्मनो गतिं स्वप्राप्यसाकेतं जगाम ॥ ३७ ॥

गो० टी०—उक्तमर्थमादरातिशयेन पुनः संगृह्णाति—स इति । रणे सीतानिमित्तं दुष्करं कर्म प्राणविनाशपर्यन्तं व्यापारं कृतवान् स गृध्रराजः रावणेन निपातितः महर्षिकल्पेन महर्षितुल्येन रामेण संस्कृतश्च तदा तदुत्तरक्षण एव पुण्यां पुण्यफलभूताम् आत्मनः सुखावहां गतिं लोकं जगाम ॥ ३७ ॥

३८ ] ति० टी०—पक्षिसत्तमे तद्विषये पितरीवेत्यर्थः । स्थिरां बुद्धिं तस्मिन्पितृवद्बुद्धिं निधाय सीताधिगमे सीताप्राप्तिसूचके निमित्ते मनः प्रवेश्य तादृशं निमित्तं दृष्ट्वा वनं जग्मतुः ॥ ३८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डेऽष्टषष्टितमः सर्गः ॥ ६८ ॥

रा० टी०—कृतेति । कृतोदकौ कृता निष्पादिता उदका उदकक्रियाविशिष्टा प्रमीतक्रिया याभ्यां तौ सुरेन्द्रौ ब्रह्मविष्ण्वादिसकलदेवस्वामिनौ रामलक्ष्मणौ पक्षिसत्तमे स्थिरां परमपुरुषार्थप्राप्तत्वेन चाञ्चल्यरहितां बुद्धिं प्रणिधाय संस्थाप्य सीताधिगमे सीताप्राप्तौ मनः प्रवेश्य ततस्तस्मात्स्थानात् विष्णुवासवाविव जग्मतुः ॥ ३८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डेऽष्टषष्टितमः सर्गः ॥ ६८ ॥

गो० टी०—कृतोदकाविति । इदं पिण्डदानस्याप्युपलक्षणम् । पक्षिसत्तमे स्थिरां बुद्धिं प्रणिधाय सीतामवश्यं प्राप्स्यसीत्युक्तम् तद्वचनं विश्वस्येत्यर्थः, सीताधिगमे मनः प्रवेश्य वनं जग्मतुः । सुरेन्द्रौ विष्णुवासवाविव स्थितावित्यनेन सीतान्वेषणं भावनामात्रमिति सूच्यते ॥ ३८ ॥

अस्मिन् सर्गे सार्धाष्टत्रिंशच्छ्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्यानेऽष्टषष्टितमः सर्गः ॥ ६८ ॥

---

[1] जले इति गो. पाठः ।

# एकोनसप्ततितमः सर्गः ।

जटायुषे निवापजलं दत्त्वा नैर्ऋत्यां प्रस्थितौ दाशरथी मध्येवनं कांचिन्निशाचरीमपश्यताम् । साऽप्ययोमुखीति स्वनाम संश्राव्य यावत् लक्ष्मणं कामयमानोपगूहितुमियेष तावत्स तस्याः कर्णनासं चिच्छेद । दुःशकुनादेतस्मादनिष्टं संभाव्याविहितं चरन्तौ तौ कबन्धनामक किंचिद्रक्ष आयतभुजाभ्यां जग्राह । तेन भयविक्लवं लक्ष्मणं रामः समाश्वासयति । कौ युवां किमिति वनमभ्यागताविति प्रश्नपूर्वं तावत्तुमुद्यते तस्मिन्महतामपि शोककारणात्कालबलीयस्त्वं विभाव्य रामस्तमनुशोचति ।

कृत्वैवमुदकं तस्मै प्रस्थितौ राघवौ तदा । अवेक्षन्तौ वने सीतां जग्मतुः पश्चिमां दिशम् ॥ १ ॥
तां दिशं दक्षिणां गत्वा शरचापासिधारिणौ । अविप्रहतमैक्ष्वाकौ पन्थानं प्रतिपेदतुः ॥ २ ॥
गुल्मैर्वृक्षैश्च बहुभिर्लताभिश्च प्रवेष्टितम् । आवृतं सर्वतो दुर्गं गहनं घोरदर्शनम् ॥ ३ ॥
व्यतिक्रम्य तु वेगेन गृहीत्वा दक्षिणां दिशम् । सुभीमं तन्महारण्यं व्यतियातौ महाबलौ ॥ ४ ॥
ततः परं जनस्थानात्त्रिक्रोशं गम्य राघवौ । क्रौञ्चारण्यं विविशतुर्गहनं तौ महौजसौ ॥ ५ ॥
नानामेघघनप्रख्यं प्रहृष्टमिव सर्वतः । नानावर्णैः शुभैः पुष्पैर्मृगपक्षिगणैर्युतम् ॥ ६ ॥
दिदृक्षमाणौ वैदेहीं तद्वनं तौ विचिन्वतुः । तत्र तत्रावतिष्ठन्तौ सीताहरणदुःखितौ ॥ ७ ॥

---

१ ] ति० टी०—पश्चिमामित्यत्रोक्तेरुत्तरश्लोके दक्षिणामित्युक्तेर्नैर्ऋतीं जग्मतुरिति लभ्यते ॥ १ ॥

रा० टी०—सीतान्वेषणं वर्णयन्नाह—कृत्वेत्यादिभिः । तस्मै जटायुषे उदकं कृत्वा सीतामवेक्षन्तौ अन्वेषन्तौ अत एव प्रस्थितौ गमनाय कृतप्रयत्नौ शरचापासिधारिणौ राघवौ पश्चिमां दक्षिणां पश्चिमदक्षिणदिगन्तरालं दिशं जग्मतुः तां दिशं गत्वा अविप्रहतं जनैरक्षुण्णं पन्थानं प्रतिपेदतुः प्रापतुः पश्चिमदक्षिणशब्दौ भाक्तौ । श्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

गो० टी०—अथायोमुखीविरूपकरणपूर्वकं कबन्धदर्शनमेकोनसप्ततितमे—कृत्वैवमित्यादि । अपेक्षन्तौ अवेक्षमाणौ पश्चिमां दक्षिणपश्चिमामित्यर्थः ॥ १ ॥

२ ] ति० टी०—अविप्रहतं जनाक्षुण्णम् ॥ २ ॥

गो० टी०—ताविति । दक्षिणां दिशामिति दक्षिणपश्चिमा ह्युभयथा व्यवहर्तुं शक्या । अविप्रहतम् अक्षुण्णम् ऐक्ष्वाकौ "दाण्डिनायन—" इत्यादिसूत्रे निपातितः। प्रतिपेदतुः प्रतिपेदाते २

३ ] ति० टी०—गुल्मादिभिः प्रवेष्टितम्, अत एव सर्वत आवृतम्, अत एव दुर्गं दुष्प्रवेशं गहनं वनरूपं पन्थानं प्रतिपेदतुरित्यन्वयः ॥ ३ ॥

४ ] ति० टी०—वेगेनातिक्रम्य चलित्वा तन्महारण्यं व्यतियातौ व्यतिक्रम्य गतौ ॥ ४ ॥

रा० टी०—गुल्मैरिति । गुल्मैः वेणुप्रभृतिभिः बहुभिर्वृक्षैर्वृक्षान्तरैश्च प्रवेष्टितं लताभिश्च सर्वत आवृतं गहनं निबिडम् अत एव दुर्गं दुर्गमम् अत एव घोरदर्शनं क्रूरत्वेन प्रतीयमानम् अत एव सुभीमम् अतिभयंकरं यत् महारण्यं महाबलौ रामलक्ष्मणौ दक्षिणां दिशं गृहीत्वा व्यतीयातौ प्राप्तौ तत् वेगेन व्यतिक्रम्य उल्लङ्घ्य ततस्तस्माज्जनस्थानात्त्रिक्रोशं गम्य गत्वा क्रौञ्चारण्यं तदभिधं गहनं वनं विविशतुः । श्लोकत्रयमेकान्वयि ॥ ३—५ ॥

गो० टी०—गुल्मैरित्यादिश्लोकद्वयमेकान्वयम् । गुल्मैः कीचकप्रभृतिभिः वृक्षैश्च प्रवेष्टितं लताभिश्चावृतं दुर्गमं विषमं गहनं दुष्प्रवेशं घोरदर्शनम् अत एव सुभीमं तत् महारण्यं दण्डकारण्यं व्यतिक्रम्य अतीत्य व्यतियातौ गतौ ॥ ३ ॥ ४ ॥

५ ] ति० टी०—गम्य गत्वा गहनं दुष्प्रवेशम् । क्रौञ्चारण्यं क्रौञ्चारण्याख्यं गहनं वनमिति वा ॥ ५ ॥

गो० टी०—ततः परमिति । ततः परं गमनानन्तरं जनस्थानात् त्रिक्रोशं गम्य गत्वा क्रौञ्चारण्याख्यं गहनं वनं विविशतुः 'गहनं काननं वनम्' इत्यमरः ॥ ५ ॥

६—७ ] ति० टी०—अनेकमेघानां घनः समूहस्तत्प्रख्यं तद्वच्छयामम् । सर्वतः प्रहृष्टमिव पुष्पविकासादिना तद्गतजन्तुहर्षेण वा तस्य प्रहृष्टत्वव्यपदेशः ॥ ६ ॥ ७ ॥

रा० टी०—नानेति । नानामेघघनप्रख्यं नानामेघानां घनः समूहस्तद्वत्प्रख्या वर्णो यस्य तत् नानावर्णैरनेकविधवर्णविशिष्टैः पुष्पैः सर्वतः प्रहृष्टमिव पक्षिगणैर्युतं तद्वनं दिदृक्षमाणौ अत एव तत्र तत्रातिरमणीयप्रतिस्थले तिष्ठन्तौ सीताहरणदुःखितौ तौ रामलक्ष्मणौ वैदेहीं विचिन्वतुः । श्लोकद्वयमेकान्वयि ॥ ६ ॥ ७ ॥

गो० टी०—नानेत्यादिश्लोकद्वयमेकान्वयम् । नानामेघघनप्रख्यं नानावर्णमेघसमूहसदृशं प्रहृष्टमिव पुष्पोद्गमादिभिः संतुष्टमिव व्यालमृगैः सर्पैः मृगैश्च तद्वनं क्रौञ्चारण्यं तत्र तत्र वृक्षमूले विश्रान्त्यै तिष्ठन्तौ सन्तौ विचिक्यतुः मृगयामासतुः ॥ ६ ॥ ७ ॥

---

१ रामलक्ष्मणाविति गो. पाठः । २ अपेक्षन्ताविति गो. पाठः । ३ ताविति गो. पश्चिमामिति रा. पाठः । ४ व्यतीयाताविति रा. पाठः । ५ व्यालसिंहनिषेवितमिति गो. पाठः । ६ पक्षिगणैर्जुष्टं नानाव्यालमृगैर्युतामिति गो. पाठः । ७ विचिक्यतुरिति गो. पाठः । ८ कर्शिताविति गो. पाठः ।

ततः पूर्वेण तौ गत्वा त्रिक्रोशं भ्रातरौ तदा । क्रौञ्चारण्यमतिक्रम्य मतङ्गाश्रममन्तरे ॥ ८ ॥
दृष्ट्वा तु तद्वनं घोरं बहुभीममृगद्विजम् । नानावृक्षसमाकीर्णं सर्वं गहनपादपम् ॥ ९ ॥
ददृशाते गिरौ तत्र दरीं दशरथात्मजौ । पातालसमगम्भीरां तमसा नित्यसंवृताम् ॥ १० ॥
आसाद्य च नरव्याघ्रौ दर्यास्तस्याविदूरतः । ददर्शतुर्महारूपां राक्षसीं विकृताननाम् ॥ ११ ॥
भयदामल्पसत्त्वानां बीभत्सां रौद्रदर्शनाम् । लम्बोदरीं तीक्ष्णदंष्ट्रां करालीं परुषत्वचम् ॥ १२ ॥
भक्षयन्तीं मृगान्भीमान्विकटां मुक्तमूर्धजाम् । अवैक्षतां तु तौ तत्र भ्रातरौ रामलक्ष्मणौ ॥ १३ ॥
सा समासाद्य तौ वीरौ व्रजन्तं भ्रातुरग्रतः । एहि रंस्यावहेत्युक्त्वा समालम्भत लक्ष्मणम् ॥ १४ ॥
उवाच चैनं वचनं सौमित्रिमुपगुह्य च । अहं त्वयोमुखी नाम लाभस्ते त्वमसि प्रियः ॥ १५ ॥
नाथ पर्वतदुर्गेषु नदीनां पुलिनेषु च । आयुश्चिरमिदं वीर त्वं मया सह रंस्यसे ॥ १६ ॥

---

८-१० ] ति० टी०-क्रौञ्चारण्यमतिक्रम्य तद्वनात्पूर्वेण त्रिक्रोशं गत्वान्तरे मध्येमार्गं मतङ्गाश्रमं ददृशतुः । अथ घोरत्वादिविशेषणं तद्वनं मतङ्गाश्रमवनं दृष्ट्वा तत उच्यमानविशेषणां तत्र गिरौ दरीं ददृशाते ॥ ८-१० ॥

रा० टी०-तत इति । ततोऽनन्तरं त्रिक्रोशं पूर्वेण गत्वा क्रौञ्चारण्यमतिक्रम्यान्तरे मार्गमध्ये मतङ्गाश्रमं दृष्ट्वा बहुभीममृगद्विजम् अनेकविधभयंकरमृगपक्षिविशिष्टं नानासत्त्वसमाकीर्णं नानासत्त्वानामनेकविधमृगादीनां समाकीर्णं भक्षणाय राक्षसादिकर्तृकापक्षेपो यस्मिन् तत् गहनपादपं गहनाः निबिडाः पादपाः यस्मिन् तत् किंच पादपैर्गहनं राजदन्तादित्वात्पादपस्य परत्वं तत् मतङ्गाश्रमसमीपस्थं सर्वं वनं दशरथात्मजौ ददृशाते । तत्र तस्मिन्वने गिरौ पर्वते पातालसमगम्भीरां पातालतुल्यगाम्भीर्यविशिष्टामत एव तमसा अन्धकारेण नित्यसंवृतां दरीं कन्दरामासाद्य प्राप्य तस्याः दर्या अविदूरतः समीपे महारूपां बृहद्रूपविशिष्टां विकृताननां विकारविशिष्टाननविशिष्टां राक्षसीं ददर्शतुः ददृशतुः । श्लोकचतुष्टयमेकान्वयि ॥ ८—११ ॥

गो० टी०-तत इत्यादिश्लोकत्रयमेकान्वयम् । ततः क्रौञ्चारण्यमतिक्रम्य मतङ्गाश्रमं पूर्वेण मतङ्गाश्रमपूर्वदिग्भागे "एनपा द्वितीया" इति द्वितीया। त्रिक्रोशं गत्वा अन्तरे मतङ्गाश्रमक्रौञ्चारण्ययोर्मध्ये तद्वनं मतङ्गाश्रमसंबन्धि किंचिद्वनं दृष्ट्वा तत्र दरीं ददृशाते ददृशतुः अत्रोपरिष्टाच्च कर्तरि लिट्यात्मनेपदमार्षम् ॥ ८-१० ॥

११ ] ति० टी०-तस्याविदूर इति संधिरार्षः तद्दरीसमीपे इत्यर्थः ॥ ११ ॥

गो० टी०-आसाद्येत्यादि । तस्याविदूरत इत्यार्षः संधिः। महारूपां महाशरीराम् ॥ ११ ॥

१२ ] ति० टी०-बीभत्सां जुगुप्सिताम् । परुषत्वचं कर्कशत्वचम् । करालीं तुङ्गशरीराम् 'करालो भीषणे तुङ्गे' ॥१२॥

१३ ] ति० टी०-विकटामतिस्थूलाकारां तत्र तत्रास्थानेऽपि निम्नोन्नतां वा ॥ १३ ॥

रा० टी०-तामेव वर्णयन्नाह-भयदामिति । बीभत्सां घृणोत्पादिकां लम्बोदरीं लम्बोदरविशिष्टां तीक्ष्णाः दन्ताः यस्यास्तामत एव करालीं क्रूरस्वरूपामत एवाल्पसत्त्वानाम-बहुबलानां भयदां परुषत्वचं कठिनत्वग्विशिष्टां भीमान् भयंकरान् मृगान् व्याघ्रादीन् भक्षयन्तीं विकटां अतिस्थूलवक्त्रावयवविशिष्टां मुक्तमूर्धजां राक्षसीं तत्र दरीसमीपे रामलक्ष्मणौ अवैक्षताम् । श्लोकद्वयमेकान्वयि ॥ १२ ॥ १३ ॥

गो० टी०-सामान्यतो दर्शनमुक्त्वा विशेषतो दर्शनमाह द्वाभ्याम्-भयदामित्यादि ॥ १२ ॥ १३ ॥

१४ ] ति० टी०-भ्रातू रामस्याग्रतो व्रजन्तम् । एहि रंस्यावहेत्युक्त्वेत्यत्र इकारलोप आर्षः । समालम्भत गृहीतवती ॥ १४ ॥

रा० टी०-सेति । सा राक्षसी वीरौ रामलक्ष्मणौ समासाद्य प्राप्य भ्रातुः अग्रतोऽग्रे व्रजन्तं लक्ष्मणमेहि रंस्यावहे इत्युक्त्वा समालम्भत अगृह्णात् गुण आर्षः ॥ १४ ॥

गो टी०-सेति । रंस्यावहे इत्युक्त्वेत्यत्र संधिरार्षः । समालम्बत हस्ते गृहीतवती ॥ १४ ॥

१५ ] ति० टी०-उपगुह्यालिङ्ग्य । अयोमुखीत्यन्वर्थं नाम । अहं ते तव लाभो निध्यादिवल्लाभरूपास्मि, त्वं च मे प्रियो भर्तासि ॥ १५ ॥

रा० टी०-उवाचेति । एनं सौमित्रिमुपगुह्य उवाच । तद्वचनाकारमाह-अयोमुखी नामाहं ते लाभः अपूर्वनिध्यादिवल्लब्धा अतस्त्वं मे प्रियः भर्ता असि ॥ १५ ॥

गो० टी०-उवाचेत्यर्धम् । उपगुह्य आलिङ्ग्य ॥ १५ ॥

गो० टी०-अहमित्यादिसार्धश्लोकः । अयोमुखीत्यन्वर्थनामा 'हयमुखी' इत्यपि पाठः । ते लाभः लाभभूता त्वमपि मम प्रियोऽसि नाथेति । आयुःशेषमित्यत्यन्तसंयोगे द्वितीया ॥ १६ ॥

१६ ] ति० टी०-आयुश्चिरं चिरमायुः ॥ १६ ॥

---

१ सत्त्वेति गो. मृगेति रा. पाठः । २ ताविति गो. पाठः । ३ ददृशाते इति गो. पाठः । ४ करालामिति गो. पाठः । ५ प्रैक्षेतां तौ ततस्तत्रेति गो. पाठः । ६ आलम्बतेति गो. पाठः । ७ कूटेष्विति गो. पाठः । ८ आयुःशेषमिति गो. पाठः ।

एवमुक्तस्तु कुपितः खड्गमुद्धृत्य लक्ष्मणः । [1]कर्णनासस्तनं तस्या [2]निचकर्तारिसूदनः ॥ १७ ॥
कर्णनासे निकृत्ते तु विस्वरं [3]विननाद सा । यथागतं प्रदुद्राव राक्षसी [4]घोरदर्शना ॥ १८ ॥
तस्यां गतायां गहनं [5]व्रजन्तौ वनमोजसा । आसेदतुरमित्रघ्नौ भ्रातरौ रामलक्ष्मणौ ॥ १९ ॥
लक्ष्मणस्तु महातेजाः सत्त्ववाञ्छीलवाञ्छुचिः । अब्रवीत्प्राञ्जलिर्वाक्यं भ्रातरं दीप्ततेजसम् ॥ २० ॥
स्पन्दते मे दृढं बाहुरुद्विग्नमिव मे मनः । प्रायशश्चाप्यनिष्टानि निमित्तान्युपलक्षये ॥ २१ ॥
तस्मात्सज्जीभवार्य त्वं कुरुष्व वचनं मम । ममैव हि निमित्तानि सद्यः शंसन्ति संभ्रमम् ॥ २२ ॥
एष वञ्चुलको नाम पक्षी परमदारुणः । आवयोर्विजयं युद्धे शंसन्निव विनर्दति ॥ २३ ॥
तयोरन्वेषतोरेवं सर्वं तद्वनमोजसा । संजज्ञे विपुलः शब्दः प्रभञ्जन्निव तद्वनम् ॥ २४ ॥
संवेष्टितमिवात्यर्थं [6]गहनं मातरिश्वना । वनस्य तस्य शब्दोऽभूद्दिवमापूरयन्निव ॥ २५ ॥

रा० टी०—नाथेति । हे स्वामिन् ! पर्वतदुर्गादिषु चिरं बहुकालिकमिदमायुः संप्राप्येति शेषः, मया सह रंस्यसे ॥१६॥

१७ ] ति० टी०—कर्णनासस्तनमिति समाहारद्वन्द्वः॥१७॥

रा० टी०—एवमिति । एवमुक्तः अत एव कुपितः स लक्ष्मणस्तस्याः अयोमुख्याः कर्णनासस्तनं चकर्त चिच्छेद कर्णनासस्तनमित्यत्र प्राण्यङ्गत्वादेकवचनम् ॥ १७ ॥

गो० टी०—एवमिति । कर्णनासावित्यत्र एकवद्भावाभाव आर्षः नासाशब्दस्य पुंलिङ्गता चार्षी ॥ १७ ॥

१८ ] ति० टी०—कर्णनासे इति सप्तमी ॥ १८ ॥

रा० टी०—कर्णेति । सा अयोमुखी कर्णनासे निकृत्ते छिन्ने सति विस्वरं यथा स्यात्तथा विननाद यथागतं प्रदुद्राव च ॥ १८ ॥

गो० टी०—कर्णेति । एकवद्भावे सप्तमी ॥ १८ ॥

१९–२० ] ति० टी०—तस्यां गतायां पश्चाद्व्रजन्तौ गहनं दुष्प्रवेशं वनमासेदतुः प्रापतुः ॥ १९ ॥ २० ॥

रा० टी०—तस्यामिति । तस्यां राक्षस्यां गतायां सत्यां व्रजन्तौ रामलक्ष्मणौ गहनं निबिडं वनमासेदतुः प्रापतुः ॥१९॥

गो० टी०—तस्यामिति । गहनं दुष्प्रवेशं वनं विशन्तौ वनमध्यं गच्छन्तौ आसेदतुः वक्ष्यमाणनिमित्तानीति शेषः॥१९॥

रा० टी०—लक्ष्मण इति । महातेजाः लक्ष्मणः प्राञ्जलिः सन् भ्रातरं राममब्रवीत् ॥ २० ॥

गो० टी०—लक्ष्मणस्त्विति । महातेजा इत्यदीनतोक्तिः । सत्त्ववान् निर्मलमनस्कः शीलवान् सद्वृत्तवान् शुचिः कायशुद्धियुक्तः एभिर्विशेषणैर्भ्रातृभक्तिरुक्ता ॥ २० ॥

२१ ] ति० टी०—बाहुर्वामः । अनिष्टानि तत्सूचकानि॥२१॥

रा० टी०—तद्वचनाकारमाह—स्पन्दते इति । मे मम बाहुः बाहुद्वयं दृढं स्पन्दते प्रस्फुरति अत एव मे मनः उद्विग्नमिव उद्विग्नसदृशम् । उद्विग्नसदृशमित्युक्त्या वस्तुत उद्विग्नत्वाभावः सूचितः तेन दक्षिणस्यापि भुजस्य प्रस्फुरणात् यथाकथंचित्प्राप्तस्य विघ्नस्य विध्वंसो भविष्यतीति निश्चयः सूचितः । विनिगमनाविरहाद्बाहुशब्देन बाहुद्वयग्रहणम् एकवचनं तु जात्यभिप्रायेण । अर्धं पृथक्—प्रायश इति । हे आर्य ! प्रायशः अनिष्टानि इष्टविरोधीनि निमित्तानि उपलक्षये पश्यामि तस्माद्धेतोः त्वं सज्जीभव अवधानतां प्राप्नुहि हि यतः निमित्तानि सद्यो मम संभ्रमं शंसन्ति बोधयन्ति ॥ २१ ॥ २२ ॥

गो० टी०—स्पन्दत इति । बाहुः वाम इति शेषः, उद्विग्नं कम्पितम् अनिष्टानि अनिष्टसूचकानि ॥ २१ ॥

२२ ] ति० टी०—सज्जीभव यत्तो भव । संभ्रमं भयम्॥२२॥

गो० टी०—तस्मादिति । मम वचनमित्यन्वयः । संभ्रमं भयम् ॥ २२ ॥

२३ ] ति० टी०—ततः कंचिच्छकुनमप्याह—एष इति । वञ्चुलकः कण्ठवालः । 'वञ्जुलकः' इत्यपि पाठान्तरम् । अनेन युद्धमवश्यंभावि जयश्चेत्युभयं सूचितम् ॥ २३ ॥

रा० टी०—ननु यदि दुर्निमित्तानि पश्यसि तर्हि अनिष्टं भविष्यत्येवेति किं सज्जीभवनेनेत्यत आह—एष इति । वञ्चुलकस्तदभिधः परमदारुणः एष पक्षी युद्धे आवयोर्विजयं शंसन्निव विनर्दति ॥ २३ ॥

गो० टी०—एष इति । वञ्चुलकः कर्णवालाख्यः पक्षिविशेषः 'वञ्चुलः कर्णवालः स्यात्' इति निघण्टुः । विनर्दति कूजति ॥ २३ ॥

२४ ] ति० टी०—अन्वेषतोः सीतामिति शेषः । ओजसा सामर्थ्येन ॥ २४ ॥

रा० टी०—तयोरिति । सर्वं वनमन्वेषतोः तद्वनं प्रभञ्जन्निव विपुलोऽतिमहाञ्छब्दः संजज्ञे ॥ २४ ॥

गो० टी०—तयोरिति । एवम् एतादृशोक्तिपूर्वकम् अन्वेषतोः अन्वेषमाणयोः प्रभञ्जन् प्रभञ्जयन् ॥ २४ ॥

२५ ] ति० टी०—तद्गहनं वनमत्यन्तं मातरिश्वना संवे-

१ कर्णनासौ स्तनौ चेति गो पाठः । २ स चकर्तेति रा. पाठः । ३ सा विनद्य चेति गो. पाठः । ४ भीमेति गो. पाठः । ५ विशन्ताविति गो. पाठः । ६ हितमिति गो. पाठः । ७ गगनमिति गो. पाठः । ८ दिवमिति गो. पाठः ।

तं शब्दं काङ्क्षमाणस्तु रामः खड्गी सहानुजः । ददर्श सुमहाकायं राक्षसं विपुलोरसम् ॥ २६ ॥
आसेदतुश्च तद्रक्षस्तावुभौ प्रमुखे स्थितम् । विवृद्धमशिरोग्रीवं कबन्धमुदरेमुखम् ॥ २७ ॥
रोमभिर्निशितैस्तीक्ष्णैर्महागिरिमिवोच्छ्रितम् । नीलमेघनिभं रौद्रं मेघस्तनितनिःस्वनम् ॥ २८ ॥
अग्निज्वालानिकाशेन ललाटस्थेन दीप्यता । महापक्ष्मेण पिङ्गेन विपुलेनायतेन च ॥ २९ ॥
एकेनोरसि घोरेण नयनेन सुदर्शिना । महादंष्ट्रोपपन्नं तं लेलिहानं महामुखम् ॥ ३० ॥
भक्षयन्तं महाघोरानृक्षसिंहमृगद्विजान् । घोरौ भुजौ विकुर्वाणमुभौ योजनमायतौ ॥ ३१ ॥
कराभ्यां विविधान्गृह्य ऋक्षान्पक्षिगणान्मृगान् । आकर्षन्तं विकर्षन्तमनेकान्मृगयूथपान् ॥ ३२ ॥

ष्टितं व्याप्तमिव जातम् । ततस्तस्य वनस्य मध्ये शब्दोऽभवत् ॥ २६ ॥

रा० टी०–संवेष्टितमिति । अत्यर्थमत्यन्तं मातरिश्वना वायुना संवेष्टितमिव गहनं वनमासीदिति शेषः, तस्य वनसंबन्धी शब्दः प्रतिस्वनः वनमापूरयन्निव अभूत् ॥ २६ ॥

गो० टी०–संवेष्टितमिति । मातरिश्वना वायुना संवेष्टितं पूरितम् अयमुत्पातविशेषः । शब्दः पूर्वोक्तः तस्य वनस्य संबन्धिनीं दिवम् आकाशम् आपूरयन्निवाभूत् ॥ २६ ॥

२६ ] ति० टी०–तं शब्दं काङ्क्षमाणः तदुत्पत्तिनिमित्तं काङ्क्षमाणः ॥ २६ ॥

रा० टी०–तमिति । तं शब्दं काङ्क्षमाणो निश्चेतुकामः सहानुजो रामः सुमहाकायम् अतिबृहच्छरीरम् अत एव विपुलोरसं राक्षसं ददर्श ॥ २६ ॥

गो० टी०–तमिति । तं काङ्क्षमाणः किमस्योत्पत्तिमूलमिति ज्ञातुमिच्छन् गत्वेति शेषः, कक्षे गुल्मे ददर्श दूरादिति शेषः ॥ २६ ॥

२७ ] ति० टी०–आसेदतुर्ददृशतुः । विवृद्धं विवृद्धाकारम् अशिरोग्रीवमदृश्यमानशिरोग्रीवम् अत एव कबन्धमन्वर्थनामकम् उदरेमुखम् "अमूर्धमस्तकात्" इत्यलुक् ॥ २७ ॥

रा० टी०–आसेदतुरिति । विवृद्धं विवृद्धशरीरम् उदरे संलग्नं मुखं यस्य तम् "अमूर्धमस्तकात्" इत्यलुक् । अत एव अशिरोग्रीवम् अदृश्यमानशिरोग्रीवाविशिष्टं प्रमुखे संग्रामे स्थितमास्थावन्तं तत्प्रसिद्धं कबन्धं नाम रक्षः उभौ रामलक्ष्मणौ आसेदतुः तत्समीपं प्रापतुः ॥ २७ ॥

गो० टी०–आसेदतुरित्यादिसार्धषट्श्लोकी । प्रमुखे अग्रे विवृद्धम् उन्नतम् अशिरोग्रीवम् अदृश्यमानशिरोग्रीवम् अत एव कबन्धम् अन्वर्थकबन्धनामकम् उदरेमुखम् "अमूर्धमस्तकात्स्वाङ्गादकामे" इत्यलुक् । रोमभिरुपलक्षितं निचितैर्निबिडैः अग्निज्वालानिकाशेन तत्सदृशेन महापक्ष्मेण महापक्ष्मणा अदन्तत्वमार्षम् । विपुलेन विस्तीर्णेन आयतेन दीर्घेण उरसि उरोऽन्तर्गतशिरस्कत्वेन उरसि दृश्यमानेनेत्यर्थः । लेलिहानं पुनः पुनर्जिह्वया लेहनं कुर्वन्तं महामुखं विपुलास्यरन्ध्रं विकुर्वाणं व्यापारयन्तं योजनमिति अध्ववाचित्वादत्यन्तसंयोगे द्वितीया । आकर्षन्तम् आभिमुख्येन कर्षन्तं विकर्षन्तं विशेषेण कर्षन्तं मृगयूथपानिति मृगविशेषणम् । प्रपन्नयोः समीपं प्राप्तयोः ॥ २७–३२ ॥

२८ ] ति० टी०–निशितैरित्यस्य विवरणम्—तीक्ष्णैरिति । उपलक्षितमिति शेषः । 'रोमभिर्निबिडैस्तीक्ष्णैः' इति क्वचित्पाठः ॥ २८ ॥

२९–३० ] ति० टी०–उच्यमानविशेषणेन ललाटस्थेनैकेन नयनेनोरःप्रदेशान्तर्गतशिरस्त्वादुरस्युरःप्रदेशेऽन्तरुपलभ्यमानेन नयनेनोपलक्षितं मुखं लेलिहानम् । महापक्ष्मेणेत्यार्षम् ॥ २९ ॥ ३० ॥

३१ ] ति० टी०–विकुर्वाणं विक्षिपन्तम् ॥ ३१ ॥

३२ ] ति० टी०–आकर्षन्तमिष्टान्मृगानाभिमुख्येन कर्षन्तम् अनिष्टान्मृगान्मुञ्चन्तम् ॥ ३२ ॥

रा० टी०–तमेव वर्णयन्नाह–रोमभिरिति । निचितैर्निबिडैः तीक्ष्णैः रोमभिरुपलक्षितं महागिरिमिव उच्छ्रितमुन्नतं नीलमेघनिभं मेघस्तनितनिःस्वनं मेघशब्दसदृशशब्दवन्तम् अग्निज्वालानिकाशेन अग्निज्वालासदृशेन ललाटस्थेन महापक्ष्मेण बृहत्पक्ष्मविशिष्टेन पिङ्गेन पिङ्गवर्णेन विपुलेन अतिविस्तारविशिष्टेन आयतेन दीर्घेण घोरेण भयंकरेण उरसि विद्यमानेन अत एव सुदर्शिना द्रष्टव्येन एकेन नयनेनोपलक्षितं लेलिहानं स्ववक्त्रमिति शेषः, महाघोरान् ऋक्षादीन् भक्षयन्तं योजनमायतौ विस्तृतौ घोरौ भुजौ विकुर्वन्तं विविधं क्षिपन्तं कराभ्याम् ऋक्षादीन् अनेकान् बहून् मृगयूथपांश्च गृह्य गृहीत्वा आकर्षन्तं विकर्षन्तमनीप्सितान् त्यजन्तं प्रपन्नयोः समीपं प्राप्तयोर्भ्रात्रोः रामलक्ष्मणयोः पन्थानमावृत्य स्थितं महान्तं विलक्षणस्वरूपवत्त्वात्प्रशंसनीयं दारुणं हिंसकम् अत एव भीमं भयोत्पादकं भुजाभ्याम् आकर्षणप्रसारितहस्ताभ्यां संवृतं संयुक्तं संस्थानात् स्थितेरेव घोरप्रदर्शनं कबन्धं तौ रामलक्ष्मणौ क्रोशमात्रं समतिक्रम्य मार्गान्तरेण गत्वा ददर्शतुः ददृशतुः । श्लोकसप्तकमेकान्वयि ॥ २८–३४ ॥

१ स महेति रा. पाठः । २ ततस्तत्रेति गो. पाठः । ३ निचितैरिति गो. रा. पाठः । ४ ऽसुदर्शिनेति गो. पाठः । ५ विकुर्वन्तमिति रा. पाठः ।

स्थितमावृत्य पन्थानं तयोर्भ्रात्रोः प्रपन्नयोः । अथ [1]तं समतिक्रम्य क्रोशमात्रं[2] ददर्शतुः ॥ ३३ ॥
महान्तं दारुणं भीमं कबन्धं भुजसंवृतम् । कबन्धमिव संस्थानादतिघोरप्रदर्शनम् ॥ ३४ ॥
स महाबाहुरत्यर्थं प्रसार्य विपुलौ भुजौ । जग्राह सहितावेव[3] राघवौ पीडयन्बलात् ॥ ३५ ॥
खड्गिनौ दृढधन्वानौ [4]तिग्मतेजौ महाभुजौ । भ्रातरौ विवशं प्राप्तौ कृष्यमाणौ महाबलौ ॥ ३६ ॥
तत्र धैर्याच्च[5] शूरस्तु राघवो नैव विव्यथे । बाल्यादनाश्रयाच्चैव[6] लक्ष्मणस्त्वतिविव्यथे[7] ॥ ३७ ॥
उवाच च विषण्णः सन्राघवं राघवानुजः । पश्य मां विवशं वीर राक्षसस्य वशंगतम् ॥ ३८ ॥
मयैकेन तु[8] निर्युक्तः परिमुच्यस्व राघव । मां हि भूतबलिं दत्त्वा पलायस्व यथासुखम् ॥ ३९ ॥
अधिगन्तासि वैदेहीमचिरेणेति मे मतिः । प्रतिलभ्य च काकुत्स्थ पितृपैतामहीं महीम् ॥ ४० ॥
तत्र मां राम राज्यस्थः स्मर्तुमर्हसि सर्वदा । लक्ष्मणेनैवमुक्तस्तु रामः सौमित्रिमब्रवीत् ॥ ४१ ॥

---

३३ ] ति० टी०–प्रपन्नयोः पन्थानमिति शेषः । आवृत्य स्थितं तं ज्ञात्वा तद्भुजवेष्टनं समतिक्रम्य दूरे स्थितौ तं क्रोशमात्रं ददर्शतुः ॥ ३३ ॥

३४] ति०टी०–भुजाभ्यां जन्तून्संवृणोतीति भुजसंवृतम्। संस्थानादेहस्थित्याशिरस्कत्वलक्षणकबन्धवत्स्थितम् ॥ ३४ ॥

गो० टी०–अथेति । सार्धश्लोक एकान्वयः । अथ आसादनानन्तरं समभिक्रम्य आभिमुख्येन गत्वा क्रोशमात्रे समीपे ददर्शतुः ददृशतुः दारुणं भीमम् अतिशयेन भीमम् । भुजाभ्यां मृगान् संवृणोतीति भुजसंवृतं संस्थानात् देहस्थित्या कबन्धमिव सर्वदा अशिरस्कत्वलक्षणकबन्धवत् स्थितम् ३३॥३४

३५ ] ति० टी०–सहितौ नैकमपि मुक्त्वेत्यर्थः ॥ ३५ ॥

रा० टी०–स इति । महाबाहुः स कबन्धः विपुलौ भुजौ प्रसार्य सहितौ राघवौ पीडयन् बलात् हठात् जग्राह ॥ ३५ ॥

गो० टी०–स इति । सहितावेव नैकमपि मुक्त्वेत्यर्थः ३५

३६ ] ति० टी०–तिग्मतेजौ तीक्ष्णतेजसौ तादृशवेषधरावित्यर्थः । विवशं प्राप्तौ बलात्कर्षणं प्राप्तौ ॥ ३६ ॥

रा० टी०–खड्गिनाविति । दृढधन्वानौ दृढे धनुषी ययोस्तौ तिग्मं तेजो ययोः कृष्यमाणौ भ्रातरौ विवशं कबन्धाधीनत्वं प्राप्तौ बभूवतुरिति शेषः ॥ ३६ ॥

गो० टी०–खड्गिनाविति । तिग्मं खरं तेजो यस्य तत्तथा तादृशवपुर्धरौ विवशं पारवश्यं प्राप्तौ ॥ ३६ ॥

३७–३८ ] ति० टी०–तत्र तस्यामवस्थायाम् अनाश्रयात् धैर्यस्येति शेषः धैर्यानालम्बनादित्यर्थः । तत्र हेतुर्बाल्यं बालबुद्धित्वं शुद्धसत्त्वाप्रधानत्वम् । 'अनाश्रयत्वात्' इति पाठे आश्रयभूतस्य रामस्यापि कबन्धभुजावृतत्वादिति भावः ॥ ३७ ॥ ३८ ॥

रा० टी०–तत्रेति । तत्र तस्मिन् समये शूरो राघवो धैर्यात् हेतोर्न विव्यथे । शूरो लक्ष्मणस्तु बाल्यात् राक्षसबाहुना आच्छादनात् हेतोः अनाश्रयात् रामरूपाश्रयराहित्यात् रामस्यास्वस्थत्वेन प्रतापमानादित्यर्थः, हेतोर्विव्यथे॥३७॥

गो० टी०–तत्रेति । तत्र तस्यामवस्थायां बाल्यात् बालबुद्धित्वात् रामवदप्रौढबुद्धित्वादित्यर्थः । अनाश्रयत्वात् धैर्यानालम्बनात् अतिविव्यथे अत्यन्तं खिन्नोऽभूत् उवाच च ॥ ३७ ॥

रा० टी०–उवाचेति । विषण्णो राघवानुजो लक्ष्मणः राघवमुवाच । तद्वचनाकारमाह–हे वीर ! राक्षसस्य वशमधीनत्वं गतं प्राप्तम् अत एव विवशमविगतकान्तिं मां पश्य ॥ ३८ ॥

गो० टी०–पश्येत्यादि । राक्षसस्य वशं गतत्वेन विवशमिति योजना । विनिर्युक्तः वियुक्तः । एतस्यैव विवरणम्–मामिति । भूतबलिं भूतस्य कबन्धस्य बलिम् ॥ ३८ ॥ ३९ ॥

३९ ] ति० टी०–निर्युक्तो नियोजितरक्षोबलिः संस्त्वं किंचित्स्ववशमात्मानं परिमुच्यस्व पलायनेनेति शेषः । तस्यैव विवरणमुत्तरार्धम्–मां हीति । भूतबलिम् महाभूताकाररक्षसे बलिमित्यर्थः ॥ ३९ ॥

रा० टी०–स्वव्यथां बोधयितुं राममाह–मयेति । मां भूतबलिं दत्त्वा पिशाचाकारराक्षसाय समर्प्येत्यर्थः, एकेन मया निर्युक्तो वियुक्तस्त्वं पलायस्व राक्षसमिति शेषः, अत एव यथासुखं परिमुच्यस्व आत्मानमिति शेषः । मां भूतबलिं दत्त्वेत्यनेन मां प्राप्य संतोषप्राप्त्या पराक्रमात् राक्षसो निवर्तिष्यते इति सूचितं तेन सीतान्वेषणे विलम्बो न कार्य इति ध्वनितं तेन लक्ष्मणस्य सीताविषयकप्रेमातिशयो व्यञ्जितः ॥ ३९ ॥

४०–४१ ] ति० टी०–अधिगन्ता प्राप्ता ॥ ४० ॥ ४१ ॥

रा० टी०–ननु त्वया विना कथमन्वेषणसिद्धिरित्यत आह–अधीति । अचिरेण अल्पेन कालेन वैदेहीमधिगन्तासीति मे मतिर्निश्चयः । अर्धं पृथक् । ननु तव सङ्गमः कदा भवितेत्यत आह–हे काकुत्स्थ ! तत्रायोध्यायां महीं स्वराज्यं

---

१ ताविति गो. तदिति रा. पाठः । २ मात्रे इति गो. पाठः । ३ एवेति गो. पाठः । ४ तिग्मतेजोवपुर्धराविति गो. पाठः । ५ धैर्येणेति गो. पाठः । ६ श्रयत्वाच्चेति गो. पाठः । ७ अतीति गो. पाठः । ८ विनिर्मुक्तः परिमुच्यस्वेति गो. पाठः ।

मा स्म त्रासं वृथा वीर नहि त्वादृग्विषीदति । एतस्मिन्नन्तरे क्रूरो भ्रातरौ रामलक्ष्मणौ ॥ ४२ ॥
तावुवाच महाबाहुः कबन्धो दानवोत्तमः । कौ युवां वृषभस्कन्धौ महाखड्गधनुर्धरौ ॥ ४३ ॥
घोरं देशमिमं प्राप्तौ [2]दैवेन मम चाक्षुषौ । वदतं कार्यमिह वां किमर्थं चागतौ युवाम् ॥ ४४ ॥
इमं देशमनुप्राप्तौ क्षुधार्तस्येह तिष्ठतः । सबाणचापखड्गौ च तीक्ष्णशृङ्गाविवर्षभौ ॥ ४५ ॥
मां तूर्णमनुसंप्राप्तौ दुर्लभं जीवितं [6]हि वाम् । तस्य तद्वचनं श्रुत्वा कबन्धस्य दुरात्मनः ॥ ४६ ॥
उवाच लक्ष्मणं रामो मुखेन परिशुष्यता । कृच्छ्रात्कृच्छ्रतरं प्राप्य दारुणं सत्यविक्रम ॥ ४७ ॥
व्यसनं जीवितान्ताय प्राप्तमप्राप्य तां प्रियाम् । कालस्य सुमहद्वीर्यं सर्वभूतेषु लक्ष्मण ॥ ४८ ॥

---

प्रतिलभ्य सर्वदा नित्यं राज्यस्थस्त्वं मां स्मर्तुमर्हसि । तत्र स्थितेनैव भवता मदानयनोद्योगः कर्तव्य इति व्यञ्जितम्॥४०॥

गो० टी०–अधीत्येकार्थम् ॥ ४० ॥

गो० टी०–प्रतिलभ्येति । तत्र मद्यामम् ॥ ४१ ॥

रा० टी०–लक्ष्मणेनेति । एवमुक्तो रामः हे वीर ! त्रासं भयं मा कृथाः हि यतः त्वादृक् पुरुषः न विषीदति इति सौमित्रिमब्रवीत् ॥ ४१ ॥

गो० टी०–लक्ष्मणेनेति । स्पष्टम् ॥ ४२ ॥

४२-४३ ] ति० टी०–एतस्मिन्नन्तरे इति । लक्ष्मणविषादनिवृत्तिफलकरामाश्वासनसमये इति शेषः ॥ ४२ ॥४३॥

४४ ]ति० टी०–दैवेन दैवगत्या मम चाक्षुषौ चक्षुर्गोचरौ ॥ ४४ ॥

रा० टी०–एतस्मिन्निति । एतस्मिन्नन्तरे समये दानवोत्तमः कबन्धः रामलक्ष्मणावुवाच । दानवोत्तम इत्युक्त्या दनुवंशोद्भवत्वेऽपि कर्मणा राक्षसत्वादन्यत्र राक्षसोक्तिर्न विरुध्यते ॥ ४२ ॥

गो० टी०–एतस्मिन्निति । एतस्मिन्नन्तरे लक्ष्मणाश्वासनावसरे ॥ ४३ ॥

रा० टी०–तद्वचनाकारमाह–काविति । इमं घोरं देशं प्राप्तौ दैवेन मम भाग्येन चाक्षुषौ चक्षुर्विषयौ युवां कौ युवामिह किमर्थमागतौ वां युवां कार्यं प्रयोजनं वदतम् । 'मम भक्ष्यावुपस्थितौ' इति भूषणपाठः ॥ ४३ ॥ ४४ ॥

गो० टी०–काविति । भक्ष्यौ आहारौ ॥ ४४ ॥

गो० टी०–वदतमिति । इह वने वां युवयोः कार्यं वदतम् लोण्मध्यमपुरुषद्विवचनम् । वामिह वने किं कार्यं किं कर्तव्यं किमर्थं कस्य प्रयोजनाय आगतौ न किमप्यस्त्यत्र वां प्रयोजनं प्रत्युतास्मत्प्रयोजनमेव सिद्धमित्याह–इममिति । इह तिष्ठतः ममेति शेषः । क्षुदार्तस्य मम संबन्धिनमिमं देशमनुप्राप्तावित्यनेन मम क्षुन्निवृत्त्यर्थमेव वामागमनमिति भावः ॥ ४५ ॥

४५ ] ति० टी०–एवं कार्यादिकं पृष्ट्वा तदुपेक्ष्य स्वप्रयोजनं संपन्नमित्याह–इमं देशमिति । इह तिष्ठतः क्षुधार्तस्य मम भाग्यादिमं देशमनुप्राप्तौ ॥ ४५ ॥

रा० टी०–इममिति । क्षुधार्तस्येह तिष्ठतो मम भाग्यात् सबाणचापखड्गेन बाणसहितचापासिभ्यामुपलक्षितौ अत एव तीक्ष्णशृङ्गौ तीक्ष्णशृङ्गविशिष्टौ ऋषभौ वृषभाविव युवामिमं देशमनुप्राप्तौ ॥ ४५ ॥

४६ ] ति० टी०–ततः किं तत्राह–दुर्लभमिति ॥ ४६ ॥

रा० टी०–ननु किमप्राप्स्येत्यत आह–ममेति । हि यतः ममास्यं मुखं वां युवाम् अनुसंप्राप्तौ अतो वां युवयोः जीवितं दुर्लभम्, वामिति शब्दावृत्त्या उभयान्वयि । अर्धं पृथक् । 'ममास्य' इति पाठः । तस्येति । कबन्धस्य तद्वचनं श्रुत्वा परिशुष्यता मुखेनोपलक्षितो राम उवाच ॥ ४६ ॥

गो० टी०–आगमने आवयोः का हानिरित्यत्राह–सबाणेति ॥ ४६ ॥

गो ० टी०–तस्येति मुखेन उपलक्षित इति शेषः ॥ ४७ ॥

४७-४८ ]ति० टी०–मुखेन परिशुष्यतोपलक्षितं लक्ष्मणमुवाच–हे सत्यविक्रम! कृच्छ्रात्कष्टात्कष्टतरं राज्यभ्रंशवनवासप्रियापहारादि प्राप्य स्थितयोरावयोस्तां प्रियामप्राप्यैव जीवितान्तायेदं व्यसनं प्राप्तम् । यदेवमतः सर्वेष्वपि भूतेषु कालस्य वीर्यं सुमहत् अनर्गलप्रचारमस्तीति शेषः ॥४७॥४८॥

रा० टी०–तद्वचनाकारमाह–कृच्छ्रादिति । कृच्छ्रात् स्वजनत्यागदुःखात् दारुणम् असह्यमित्यर्थः, कृच्छ्रतरं सीतावियोगजनिताधिकक्लेशं प्राप्य तां प्रियां सीतामप्राप्य राक्षसवशेन सीतान्वेषणोद्योगमलब्ध्वा जीवितान्ताय अवध्यतिक्रमणहेतुकायोध्यावासिजीवनविध्वंसाय व्यसनं राक्षसग्रहजनितदुःखं प्राप्तम् ॥ ४७ ॥

गो० टी०–कृच्छ्रादिति । कृच्छ्रात्कृच्छ्रतरं राज्यभ्रंशवनवाससीताहरणपर्यन्तं प्राप्यावस्थितयोः पुनश्च तां प्रियामप्राप्यैव आवयोर्जीवितान्ताय दारुणं व्यसनं दुःखं प्राप्तम् ॥४८॥

रा० टी०–इदानीमस्य रक्षसोऽपि मरणसमयः प्राप्त इति बोधयन्नाह–कालस्येति । हे लक्ष्मण ! सर्वभूतेषु भूतविकारेषु कालस्य सुमहत् वीर्यं नियामकतया स्थितमिति शेषः, कालवशतयैव सर्वः प्रवर्तत इत्यर्थः, अत एव त्वां मां च व्यसनैः राक्षसदत्तदुःखैः मोहितौ विकलचित्तौ पश्य एतेन रक्षसामन्तकालः समागत इति व्यञ्जितम् ॥ ४८ ॥

---

१ पप्रच्छ घननिर्घोषं इति गो. पाठः । २ मम भक्ष्यावुपस्थिताविति गो. पाठः । ३ क्षुदार्तस्येति गो. पाठः । ४ खड्गेनेति रा. पाठः । ५ ममास्यमिति रा. पाठः । ६ पुनरिति गो. पाठः । ७ मम भक्ष्यावुपस्थिताविति भूषणपाठ इति रा. शिरोमणौ लेखनाद्भक्ष्याविल्येव गो. पाठे युक्ततरं भाति ।

त्वां च मां च नरव्याघ्र व्यसनैः पश्य मोहितौ । [1]नहि भारोऽस्ति दैवस्य सर्वभूतेषु लक्ष्मण ॥ ४९ ॥
शूराश्च बलवन्तश्च कृतास्त्राश्च रणाजिरे । कालाभिपन्नाः सीदन्ति यथा वालुकसेतवः ॥ ५० ॥
इति ब्रुवाणो दृढसत्यविक्रमो महायशा दाशरथिः प्रतापवान् ।
अवेक्ष्य सौमित्रिमु[2]दग्रविक्रमः स्थिरां तदा स्वां मतिमात्मनाऽकरोत् ॥ ५१ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे एकोनसप्ततितमः सर्गः ॥ ६९ ॥

## सप्ततितमः सर्गः ।

स्वमत्तुमुद्यतं कबन्धं दृष्ट्वा तद्ध्वस्तच्छेदं यावल्लक्ष्मणो मन्त्रयते तावत्कबन्धो बाहुभ्यां तौ ग्रहीतुं प्रावर्तत । राघवौ तद्बाहू अच्छिन्ताम् । कौ युवामिति तेन पृष्टो लक्ष्मणः स्वेतिवृत्तं सीताहरणान्तं निवेद्य तं कबन्धरूपप्राप्तिकारणं पप्रच्छ ।

तौ तु तत्र स्थितौ दृष्ट्वा भ्रातरौ रामलक्ष्मणौ । बाहुपाशपरिक्षिप्तौ कबन्धो वाक्यमब्रवीत् ॥ १ ॥
तिष्ठतः किं [3]नु मां दृष्ट्वा क्षुधार्तं क्षत्रियर्षभौ । आहारार्थं तु संदिष्टौ दैवेन [4]हतचेतनौ ॥ २ ॥
तच्छ्रुत्वा लक्ष्मणो वाक्यं प्राप्तकालं हितं तदा । उवाचा[5]र्तिसमापन्नो विक्रमे [6]कृतनिश्चयः ॥ ३ ॥

गो० टी०—अत्र हेतुमाह—कालस्येति । सर्वभूतेष्वपि कालस्य वीर्यं सुमहत् अनर्गलमित्यर्थः, त्वां च मां च महाबलपराक्रमावपि व्यसनैर्मोहितौ करोति पश्य ॥ ४९ ॥

४९–५० ] ति० टी०—कुतः, यतः—त्वां चेति । महाबलपराक्रमावपि व्यसनैर्दुःखैर्मोहितौ कालः करोतीति पश्य । उक्तार्थस्यैव प्रपञ्चः—नहीति । 'नाति' इति पाठान्तरम् ॥४९॥५०॥

रा० टी०—ननु तर्हि स्वस्वकल्याणार्थं काल एव सर्वैरुपासितव्य इत्यत आह—नेति । दैवस्य परमात्मायत्तस्य कालस्य सर्वभूतेषु अतिभारः स्वातन्त्र्येण पोषणं नास्ति यथा परमात्मेच्छं कल्याणकारक इत्यर्थः । एतेन कल्याणकामैः परमात्मैवोपास्य इति व्यञ्जितम् ॥ ४९ ॥

रा० टी०—ननु तर्हि कालो मास्त्वित्यत आह—शूरा इति । बलवन्तः कृतास्त्राश्च शूराः कालाभिपन्नाः कालवशं प्राप्ताः सन्तः वालुकसेतव इव सीदन्ति नश्यन्ति । एतेन प्रत्यक्षसिद्धस्य वस्तुनो बाधकमन्तरापलापः कर्तुमशक्य इति सूचितम् ॥ ५० ॥

गो० टी०—उक्तमर्थमुपपादयति—नातीति । सार्धश्लोक एकान्वयः । वालुकसेतवः सिकतामयसेतवः ॥ ५० ॥

५१ ] ति० टी०—उदग्रविक्रम उत्कटपराक्रमो रामः सौमित्रिमवेक्ष्य दीनमिति शेषः, स्व. मतिमात्मनाऽऽत्मवैभवेन स्थिरामकरोत् ईषदपि विषादं न प्राप्तवानित्यर्थः । अत्र लक्ष्मणस्यापि लोकव्यवहारनाट्यमेवेत्यन्ये ॥ ५१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्ड एकोनसप्ततितमः सर्गः ॥ ६९ ॥

रा० टी०—इतीति । दृढसत्यविक्रमः उदारकीर्तिः रामः सौमित्रिं सौमित्र्युक्तिमवेक्ष्य आत्मना स्वेच्छयैव स्वां मतिं स्थिरामकरोत् । 'सौमित्रिमुदारकीर्तिः' इति पाठः ॥ ५१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे एकोनसप्ततितमः सर्गः ॥ ६९ ॥

गो० टी०—इतीति । सौमित्रिं दीनमवेक्ष्य स्वां मतिम् आत्मनैव स्थिरामकरोत् ॥ ५१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने एकोनसप्ततितमः सर्गः ॥ ६९ ॥

१ ] ति० टी०—बाहुपाशपरिक्षिप्तौ बाहुभ्यां पाशाकारेण परितो व्याप्तौ ॥ १ ॥

रा० टी०—रामस्तात्स्थ्यं संवर्ण्य कबन्धवृत्तान्तं वर्णयन्नाह—तावित्यादिभिः । तत्र स्वस्य समीपे स्थितौ बाहुपाशपरिक्षिप्तौ स्वबाहुरूपपाशे बद्धौ रामलक्ष्मणौ दृष्ट्वा कबन्धोऽब्रवीत् ॥ १ ॥

गो० टी०—अथ कबन्धस्य बाहुच्छेदेन पूर्वजन्मस्मृतिरुच्यते सप्ततितमे—तौ त्वित्यादि । परिक्षिप्तौ परिवेष्टितौ॥१॥

२–३ ] ति० टी०—क्षुधार्तं मां दृष्ट्वा भीतौ तु किं तिष्ठतम् । यतो मे आहारार्थं संदिष्टौ, अतो न जीवनसंभावनेत्यर्थः ॥ २ ॥ ३ ॥

रा० टी०—तद्वचनाकारमाह—तिष्ठत इति । क्षुधार्तं पीडितं मां दृष्ट्वा दैवेन आहारार्थं संदिष्टौ अत एव हतचेतनौ क्षत्रियर्षभौ युवां किं किमर्थं तिष्ठतः, मदास्ये प्रविशतामिति तात्पर्यं, तेन जीवनाशा न कर्तव्येति ध्वनितम् ॥ २ ॥

गो० टी०—तिष्ठत इति । क्षुदार्तं मां दृष्ट्वा भीतौ किंनु

१ नातीति गो. रा. पाठः । २ उदग्रपौरुषमिति गो. उदारकीर्तिरिति रा. पाठः । ३ त्विति रा. पाठः । ४ गतचेतसाविति गो. पाठः । ५ आर्तिमिति गो. पाठः । ६ कृतलक्षण इति गो. पाठः ।

त्वां च मां च पुरा तूर्णमादत्ते राक्षसाधमः । तस्मादसिभ्यामस्याशु बाहू छिन्दावहे गुरू ॥ ४ ॥
भीषणोऽयं महाकायो राक्षसो भुजविक्रमः । लोकं ह्यतिजितं कृत्वा ह्यावां हन्तुमिहेच्छति ॥ ५ ॥
निश्चेष्टानां वधो राजन्कुत्सितो जगतीपतेः । क्रतुमध्योपनीतानां पशूनामिव राघव ॥ ६ ॥
एतत्संजल्पितं श्रुत्वा तयोः क्रुद्धस्तु राक्षसः । विदार्यास्यं ततो रौद्रं तौ भक्षयितुमारभत् ॥ ७ ॥
ततस्तौ देशकालज्ञौ खड्गाभ्यामेव राघवौ । अछिन्दन्तां सुसंहृष्टौ बाहू तस्यांसदेशयोः ॥ ८ ॥
दक्षिणो दक्षिणं बाहुमसक्तमसिना ततः । चिच्छेद रामो वेगेन सव्यं वीरस्तु लक्ष्मणः ॥ ९ ॥
स पपात महाबाहुश्छिन्नबाहुर्महास्वनः । खं च गां च दिशश्चैव नादयञ्जलदो यथा ॥ १० ॥

---

तिष्ठतः व्यर्थमेव न तु जीवितापत्परिहार इत्यर्थः, यतो गतचेतसौ युवां मे दैवेनाहारार्थं संदिष्टौ ॥ २ ॥

रा० टी०–तदिति । आर्तिसमापन्नो लक्ष्मणः तत् कबन्धोच्चारितं वाक्यं श्रुत्वा विक्रमे पराक्रमप्रकटने कृतनिश्चयः सन् प्राप्तः कालः समयो यस्य तत् हितं वाक्यमुवाच ॥ ३ ॥

गो० टी०–तच्छ्रुत्वेति । कृतलक्षणः कृतोद्योगः ॥ ३ ॥

४ ] ति० टी०–पुरा आदत्ते आदास्यतीत्यर्थः ॥ ४ ॥

रा० टी०–तद्वचनाकारमाह–त्वामिति । हे राम ! पुरा पूर्वं मत्कर्तृकापराधाद्युत्पत्तावित्यर्थः, यतः राक्षसाधमः त्वां मां च आदत्ते अगृह्णात् तस्मात् हेतोः अस्य गुरू महान्तौ बाहू असिभ्यां छिन्दावहे शब्दमहिम्ना संबोध्य मध्याहृतं तेनानपराधिनं कथं हन्यामिति संभावना न कार्येति ध्वनितम् ॥ ४ ॥

गो० टी०–त्वां चेति । पुरा आदत्ते आदास्यतीत्यर्थः ॥४॥

५ ] ति० टी०–भुजमात्रेण विक्रमो यस्य न त्वायुधेनेत्यर्थः । अतिजितं सर्वथा पराजितम् ॥ ५ ॥

रा० टी०–ननु ग्रहणमात्रेण कथमपराधः संभवतीत्यत आह–भीषण इति । भुजविक्रमः भुजयोर्विक्रमो यस्य सोऽयं राक्षसः लोकं सर्वजनमतिजितं पराजितमिव कृत्वा इह अस्मिन्काले एव आवां हन्तुमिच्छति ॥ ५ ॥

गो० टी०–भीषण इति । भुजयोरेव विक्रमो यस्य स तथा । लोकं जनम् अतिजितम् अत्यन्तजितम् ॥ ५ ॥

६ ] ति० टी०–अस्य बाहुच्छेद एव युक्तः, न तु प्राणवियोजनमित्याह–निश्चेष्टानामिति । शस्त्रादिभिर्विक्रमहीनानाम् जगतीपतेः क्षत्रियस्य क्रतुमध्यं प्राप्तानां पशूनां वध इव स यथा स्वर्गफलदोऽपि शास्त्रविहितोऽपि कुत्सितः सांख्यपातञ्जलाद्युक्तरीत्याऽधर्मजनकत्वात् लोकदृष्ट्या च कुत्सितः । एतेन तद्वधस्यापीषत्पापफलदता सूचिता । केचित्तु 'क्रतुमध्यापनीतानाम्' इति पाठं श्रद्धाजाड्येन कल्पयित्वा क्रतुमध्यादन्यत्र नीतानां वधो यथा कुत्सित इति व्याचक्षते॥६॥

रा० टी०–ननु शस्त्रादिविहीनोऽयं कथं मया हन्तव्य इत्यत आह–निश्चेष्टानामिति । क्रतुमध्योपनीतानां पशूनामिव निश्चेष्टानां वधव्यापाररहितानामेव वधः जगतीपतेः राज्ञः कुत्सितो निन्दितः एतेनायं हन्तव्य एवेति सूचितम् ॥ ६ ॥

गो० टी०–भुजच्छेदनमात्रं कर्तव्यं न तु मारणमित्याह–निश्चेष्टानामिति । निश्चेष्टानां प्रतीकाराशक्तानां जगतीपतेः क्षत्रियस्य क्रतुमध्योपनीतानां निश्चेष्टानामित्यस्मिन्नर्थे प्रयुक्तम् । यद्वा "पर्यग्निकृतानारण्यानुत्सृजन्त्यहिंसायै" इत्युक्तरीत्या अश्वमेधक्रतावुपनीतानामारण्यपशूनां वधः कुत्सित एव ॥ ६ ॥

७ ] ति० टी०–तयोरेतत्संजल्पितं श्रुत्वेति संबन्धः । भक्षयितुमारभत् हस्ताभ्यामाकृष्टवानित्यर्थः ॥ ७ ॥

रा० टी०–एतदिति । तयोः रामलक्ष्मणयोः एतत् संजल्पितं कथितं श्रुत्वा राक्षसः रौद्रमास्यं मुखं विदार्य व्यादाय तौ भक्षयितुमारभत् ॥ ७ ॥

गो० टी०–एतदिति । तयोरेतत् संजल्पितं श्रुत्वा भक्षयितुमारभत् हस्ताभ्यामाकृष्टवानित्यर्थः ॥ ७ ॥

८ ] ति० टी०–सुसंहृष्टौ कदलीकाण्डच्छेदेनेव तच्छेदेन हस्तसुखलाभात् ॥ ८ ॥

रा० टी०–तत इति । ततः राक्षसकर्तृकव्यापारानन्तरं देशकालज्ञौ रामलक्ष्मणौ तस्य रक्षसो बाहू अंसदेशयोः अच्छिन्दताम् ॥ ८ ॥

गो० टी०–तत इति । सुसंहृष्टौ कदलीकाण्डवत् सुखच्छेदनादिति भावः ॥ ८ ॥

९ ] ति० टी०–दक्षिणः समर्थौ दक्षिणपार्श्वस्थो वा ॥ ९ ॥

रा० टी०–तत्प्रकारमाह–दक्षिण इति । दक्षिणो दक्षिणपार्श्वस्थो रामः दक्षिणं बाहुम् असक्तम् आस्थारहितं यथा भवति तथा चिच्छेद लक्ष्मणस्तु सव्यं वामं चिच्छेद दक्षिणशब्दः कुशलार्थको वा ॥ ९ ॥

गो० टी०–दक्षिण इति । दक्षिणः समर्थः असक्तम् अप्रतिबन्धं यथा भवति तथा रामस्य दक्षिणपार्श्वगमनं लक्ष्मणस्य अत उभयोर्दक्षिणसव्यपार्श्वप्राप्तिः ॥ ९ ॥

१० ] ति० टी०–गां भूमिम् ॥ १० ॥

रा० टी०–स इति । छिन्नौ बाहू यस्य सः अत एव महास्वनः स राक्षसः खादि नादयन् जलदो महामेघ इव पपात ॥ १० ॥

गो० टी०–स इति । गां भूमिम् ॥ १० ॥

---

१ तदा रौद्र इति गो. पाठः । २ त्विति रा. पाठः । ३ देशत इति गो. पाठः ।

स निकृत्तौ भुजौ दृष्ट्वा शोणितौघपरिप्लुतः । दीनः पप्रच्छ तौ वीरौ कौ युवामिति दानवः ॥ ११ ॥
इति तस्य ब्रुवाणस्य लक्ष्मणः शुभलक्षणः । शशंस तस्य काकुत्स्थं कबन्धस्य महाबलः ॥ १२ ॥
अयमिक्ष्वाकुदायादो रामो नाम जनैः श्रुतः । तस्यैवावरजं विद्धि भ्रातरं मां च लक्ष्मणम् ॥ १३ ॥
मात्रा प्रतिहते राज्ये रामः प्रव्राजितो वनम् । मया सह चरत्येष भार्यया च महद्वनम् ॥ १४ ॥
अस्य देवप्रभावस्य वसतो विजने वने । रक्षसाऽपहृता भार्या यामिच्छन्ताविहागतौ ॥ १५ ॥
त्वं तु को वा किमर्थं वा कबन्धसदृशो वने । आस्येनोरसि दीप्तेन भग्नजङ्घो विचेष्टसे ॥ १६ ॥
एवमुक्तः कबन्धस्तु लक्ष्मणेनोत्तरं वचः । उवाच वचनं प्रीतस्तदिन्द्रवचनं स्मरन् ॥ १७ ॥
स्वागतं वां नरव्याघ्रौ दिष्ट्या पश्यामि वामहम् । दिष्ट्या चेमौ निकृत्तौ मे युवाभ्यां बाहुबन्धनौ १८ ॥
विरूपं यच्च मे रूपं प्राप्तं ह्यविनयाद्यथा । तन्मे शृणु नरव्याघ्र तत्त्वतः शंसतस्तव ॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे सप्ततितमः सर्गः ॥ ७० ॥

---

११-१२ ] ति० टी०—कौ युवामिति पप्रच्छ पूर्वमप्राप्तोत्तरत्वात्पुनः प्रश्नः ॥ ११ ॥ १२ ॥

रा० टी०—स इति । शोणितौघपरिप्लुतः रुधिरसमूहद्रव्याप्तः स दानवः निकृत्तौ छिन्नौ भुजौ स्वबाहू दृष्ट्वा युवां कौ इति वीरौ रामलक्ष्मणौ पप्रच्छ ॥ ११ ॥

गो० टी०—स निकृत्ताविति । पूर्वमदत्तोत्तरत्वात् पुनः प्रश्नः ॥ ११ ॥

रा० टी०—इतीति । इत्येवंप्रकारेण ब्रुवाणस्य कबन्धस्य समीपे तस्य रामस्य प्रेरितो लक्ष्मणः काकुत्स्थं रामं शशंस॥१२॥

गो० टी०—इतीति । क्रियाभेदात् पुनस्तच्छब्दः ॥ १२ ॥

१३-१४] ति०टी०—इक्ष्वाकुदायादो दशरथपुत्रः॥१३॥१४॥

रा० टी०—तच्छंसनप्रकारमाह—अयमित्यादिभिः । इक्ष्वाकुदायादः दशरथपुत्र इत्यर्थः, रामो नाम जनैः श्रुतः प्रख्यातः अयं तस्यैव अवरजमनुजं लक्ष्मणं मां विद्धि जानीहि ॥ १३ ॥

रा० टी०—नन्विह किमर्थमागतौ इत्यत आह—मात्रेति । राज्ये राज्याभिषेके मात्रा प्रतिहते केनचिद्धेतुना प्रतिषिद्धे सति रामो वनं प्रव्राजितः अत एव मया भार्यया च सह एष रामः महद्वनं चरति अटति ॥ १४ ॥

गो० टी०—अयमिति । इक्ष्वाकुदायादः दशरथपुत्रः 'दायादौ सुतबान्धवौ' इत्यमरः ॥ १३ ॥

१५ ] ति० टी०—यामिच्छन्तौ यामन्वेषयन्तौ ॥ १५ ॥

रा० टी०—अस्येति । ननु भार्या क्वास्तीत्यत आह—अस्येति । यामिच्छन्तौ इहागतौ आवामिति शेषः, सा वने वसतोऽस्य रामस्य भार्या रक्षसाऽपहृता ॥ १५ ॥

गो० टी०—अस्येति । इच्छन्तौ अन्वेषमाणावित्यर्थः॥१४॥

१६ ] ति० टी०—विचेष्टसे चेष्टमानस्तिष्ठसीत्यर्थः ॥१६॥

रा० टी०—आत्मानमवबोधय तं ज्ञातुकामः पृच्छति—त्वमिति । कबन्धसदृशः छिन्नशिरा इव उरसि दीप्तेन प्रकाशमानेन आस्येन उपलक्षितः भग्नजङ्घस्त्वं को वा किमर्थं वा विचेष्टसे ॥ १६ ॥

गो० टी०—त्वं त्विति । विचेष्टसे लुठसीति यावत् ॥१५॥

१७ ] ति० टी०—प्रीतः शापमोक्षकालप्रत्यभिज्ञानात् । तदिन्द्रवचनं वक्ष्यमाणम् ॥ १७ ॥

रा० टी०—एवमिति । लक्ष्मणेन एवमुक्तम् वच उक्तः अत एव प्रीतः कबन्धः तत्पूर्वोक्तम् इन्द्रवचनं स्मरन्सन् वचनमुवाच ॥ १७ ॥

गो० टी०—एवमिति । प्रीतः शापमोक्षकालप्रत्यभिज्ञानात् तदिन्द्रवचनम् उत्तरसर्गप्रतिपाद्यम् ॥ १६ ॥

१८ ] ति० टी०—बाह्वोर्बन्धनं ययोरंसदेशयोस्तौ बाहुबन्धनावसंदेशौ ॥ १८ ॥

रा० टी०—स्वागतमिति । हे नरव्याघ्रौ ! वां युवयोः स्वागतं शोभनमागमनम् अत एव वां युवां दिष्ट्या भाग्यातिशयेन अहं पश्यामि दिष्ट्यैव इमौ बाहुबन्धनौ बन्धनरूपौ बाहू युवाभ्यां निकृत्तौ छिन्नौ ॥ १८ ॥

गो०टी०—स्वागतमिति । बाह्वोर्बन्धनं ययोस्तौ बाहुबन्धनौ अंसावित्यर्थः ॥ १७ ॥

१९ ] ति० टी०—यथाविनयाद्यादृशाविनयात्प्राप्तं तच्छृण्वित्यन्वयः ॥ १९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे सप्ततितमः सर्गः ॥ ७० ॥

रा० टी०—विरूपमिति । विरूपं विकृतः रूपः आकारो यस्य तत् रूपं स्वरूपं यत् यस्मात् अविनयात् यथा यथावत् मे मम प्राप्तं तत्तवाग्रे तत्त्वतः शंसतः मे मत्तः शृणु ॥ १९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे सप्ततितमः सर्गः ॥ ७० ॥

---

१ राघवं तस्येति गो. पाठः । २ महात्मन इति गो. पाठः । ३ अस्येति गो. पाठः । ४ श्लोकोऽयं गो. नास्ति । ५ पत्नीति गो. पाठः । ६ विवेष्टस इति गो. पाठः । ७ चाप्यहमिति गो. पाठः ।

# एकसप्ततितमः सर्गः ।

कबन्धः सामस्त्येन स्वेत्तिवृत्तं विनिवेद्य विज्ञानप्रतिबन्धककुत्सितराक्षसदेहदाहे निर्वर्तिते प्राप्तविज्ञानोऽहं ते सीतान्वेषणे साहाय्यं साधय इति रामं प्रतिजानीते ।

**पुरा राम महाबाहो महाबलपराक्रमम्[1] । रूपमासीन्ममाचिन्त्यं त्रिषु लोकेषु विश्रुतम् ॥ १ ॥**
**यथा सूर्यस्य सोमस्य शक्रस्य च यथा वपुः । सोऽहं रूपमिदं कृत्वा लोकवित्रासनं महत् ॥ २ ॥**
**ऋषीन्वनगतान्राम त्रासयामि ततस्ततः । ततः स्थूलशिरा नाम महर्षिः कोपितो मया ॥ ३ ॥**
**स चिन्वन्विविधं वन्यं रूपेणानेन धर्षितः । तेनाहमुक्तः प्रेक्ष्यैवं घोरशापाभिधायिना ॥ ४ ॥**
**एतदेवं[2] नृशंसं ते रूपमस्तु विगर्हितम् । स मया याचितः क्रुद्धः शापस्यान्तो भवेदिति ॥ ५ ॥**
**अभिशापकृतस्येति तेनेदं भाषितं वचः । यदा छित्त्वा भुजौ रामस्त्वां दहेद्विजने वने ॥ ६ ॥**
**तदा त्वं प्राप्स्यसे रूपं स्वमेव विपुलं शुभम् । श्रिया विराजितं पुत्रं दनोस्त्वं विद्धि लक्ष्मण ॥ ७ ॥**

गो० टी०—विरूपमिति । विरूपं विषमरूपं यथा येन प्रकारेण प्राप्तं तत्कारणं तत्त्वतस्तव शंसतो मे सकाशाच्छृणु ॥ १८ ॥
अस्मिन् सर्गे अष्टादश श्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने सप्ततितमः सर्गः ॥ ७० ॥

१ ] ति० टी०—अचिन्त्यमचिन्त्यवैभवम् ॥ १ ॥

रा० टी०—कबन्धः शंसनाकारं वर्णयन्नाह—पुरेत्यादिभिः । हे राम ! त्रिषु लोकेषु विश्रुतं ख्यातमचिन्त्यं स्वेच्छामयत्वेन चिन्तयितुमशक्यं मम रूपं पुरा आसीत् ॥ १ ॥

गो० टी०—अथ कबन्धः स्ववृत्तान्तकथनपूर्वकं स्वशापमोक्षाय स्वशरीरदहनमर्थयते एकसप्ततितमे—पुरेत्यादि । सार्धश्लोक एकान्वयः । अचिन्त्यम् अचिन्त्यवैभवम् ॥ १ ॥

२ ] ति० टी०—तदेवाह—यथेति । इदं रूपं रक्षोरूपं भवेन कृत्वा ॥ २ ॥

रा० टी०—यथेति । सः प्राप्ताचिन्त्यस्वरूपोऽहं लोकवित्रासनं लोकोद्वेगसंपादकं सूर्यादेरिव महद्वपुः कृत्वा इतस्ततः वनगतान् ऋषीन् त्रासयामि अत्रासयम् । सार्धः श्लोक एकान्वयी ॥ २ ॥

गो० टी०—सोऽहमिति । सुन्दररूपोऽहं रूपं शरीरं लोकवित्रासनं क्रूरं कृत्वा परिगृह्य ततस्ततः तत्र तत्र ऋषीन् त्रासयामि अत्रासयम् ॥ २ ॥

३ ] ति० टी०—ऋषींस्त्रासयामीत्यन्वयः ॥ ३ ॥

रा० टी०—तत इति । ततः अनेकविधरूपदर्शनात् हेतोः स्थूलशिरा नाम महर्षिः मया कोपितः ॥ ३ ॥

गो० टी०—तत इति । विविधं वन्यं संचिन्वन् स्थूलशिराः धर्षितः अपहृतवन्यः तेन कोपितश्च ॥ ३ ॥

४ ] ति० टी०—एवमुक्तः ॥ ४ ॥

रा० टी०—कोपनप्रकारमाह—स इति । विविधम् अनेकप्रकारं वन्यं मूलफलादि चिन्वन्स महर्षिः अनेन प्रदर्शिताचिन्त्यस्वस्वरूपेण धर्षितः वञ्चितः मयेति शेषः, घोरशापाभिधायिना घोरशापबोधकवचनशीलेन महर्षिणा प्रेक्ष्य अवलोक्य एवमहमुक्तः ॥ ४ ॥

गो० टी०—तेनेति । एवंविधं मे रूपं प्रेक्ष्य घोरशापाभिधायिना तेन ऋषिणा नृशंसं गर्हितम् एतदेव रूपं ते अस्त्वित्यहमुक्तः ॥ ४ ॥

गो० टी०—स इति । अभिशापशब्देन तन्निमित्तं धर्षणं लक्ष्यते मद्धर्षणकृतस्य शापस्यान्तो भवेदिति स मया याचितः प्रार्थितः इति हेतोः तेन मयैवं याचितेन इदं वक्ष्यमाणं वचो भाषितम् ॥ ५ ॥

५ ] ति० टी०—एवंशब्दार्थः—एतदेवेति । एतदेव रूपं नृशंसं क्रूरं विगर्हितं चास्त्वित्यवदत् ॥ ५ ॥

रा० टी०—तदुक्तिप्रकारमाह—एतदिति । एतत्ते रूप नृशंसं क्रूरम् अत एव विगर्हितं जनैर्निन्दितमस्तु । सः दत्तशापः ऋषिः मया याचितः तत्प्रकारमाह—शापस्यान्तः विध्वंसः भवेदिति ॥ ५ ॥

६-७ ] ति० टी०—अभिशापकृतस्य मत्कर्तृकत्वत्प्रधर्षणे त्वया कृतस्यास्य शापस्यान्तो भवत्विति याचितः । तेनैवं याचितेन । तद्वच आह—यदेति । तदा स्वं विपुलमुत्तमं श्रिया विराजितं रूपं प्राप्स्यस इति तेन भाषितमिति संबन्धः । एवंवृत्तं मां दनोः पुत्रं विद्धीत्यन्वयः । 'श्रिया विराजितं पुत्रं दनुं त्वं विद्धि लक्ष्मण' इति पाठान्तरम् तदा श्रियाः श्रीनाम्नो दानवस्य पुत्रं दनुनामानमित्यर्थः ॥६॥७॥

रा० टी०—अभीति । अभिशापकृतस्य स्वापराधद्वारा महाशापप्रवर्तकस्य मम इति समीपे तेन मत्प्रार्थितेन महर्षिणा इदं वचो भाषितम् । अर्धं पृथक् । तद्वचनाकारमाह—यदेति । यदा भुजौ तौ बाहू रामश्छित्वा विजने वने त्वां दहेत् तदा विपुलं विशालं स्वं स्वकीयं रूपं स्वरूपं प्राप्स्यसे ॥ ६ ॥

१ पराक्रमेति गा. रा. पाठः । २ एवेति गो. रा पाठः ।

इन्द्रशापादिदं रूपं प्राप्तमेवं रणाजिरे । अहं हि तपसोग्रेण पितामहमतोषयम् ॥ ८ ॥
दीर्घमायुः स मे प्रादात्ततो मां विभ्रमोऽस्पृशत् । दीर्घमायुर्मया प्राप्तं किं मां शक्रः करिष्यति ॥ ९ ॥
इत्येवं बुद्धिमास्थाय रणे शक्रमधर्षयम् । तस्य बाहुप्रमुक्तेन वज्रेण शतपर्वणा ॥ १० ॥
सक्थिनी च शिरश्चैव शरीरे संप्रवेशितम् । स मया याच्यमानः सन्नानयद्यमसादनम् ॥ ११ ॥
पितामहवचः सत्यं तदस्त्विति ममाब्रवीत् । अनाहारः कथं शक्तो भग्नसक्थिशिरोमुखः ॥ १२ ॥
वज्रिणाऽभिहतः कालं सुदीर्घमपि जीवितुम् । स एवमुक्तः शक्रो मे बाहू योजनमायतौ ॥ १३ ॥
तदा चास्यं च मे कुक्षौ तीक्ष्णदंष्ट्रमकल्पयत् । सोऽहं भुजाभ्यां दीर्घाभ्यां संक्षिप्यास्मिन्वनेचरान् ।
सिंहद्वीपिमृगव्याघ्रान्भक्षयामि समन्ततः । स तु मामब्रवीदिन्द्रो यदा रामः सलक्ष्मणः ॥ १५ ॥
छेत्स्यते समरे बाहू तदा स्वर्गं गमिष्यसि । अनेन वपुषा तात वनेऽस्मिन्राजसत्तम ॥ १६ ॥

---

गो० टी०—तदेवाह—यदेति ॥ ६ ॥

रा० टी०—स्वस्वरूपविकृतिवृत्तान्तमुक्त्वा आत्मानं बोधयन्नाह—श्रियेति । श्रिया विराजितं दनोः पुत्रं विद्धि मामिति शेषः ॥ ७ ॥

गो० टी०—तर्हि कबन्धरूपप्राप्तिः केन हेतुनेत्यत्राह—श्रियेति । मामिति शेषः, एवं एवंविधं रणाजिरे रणाङ्गणे॥७॥

८ ] ति० टी०—ननु कुत्सितरूपत्वे शापेऽपि कथं कबन्धरूपताप्राप्तिस्तत्राह—इन्द्रेति । तच्छापबीजमाह—अहमिति । ऋषिशापतो घोररूपप्राप्त्यनन्तरमुग्रेण तपसा पितामहमतोषयं स्वकुलारातीन्द्रादिभयेनेति शेषः ॥ ८ ॥

रा० टी०—ननु शापहेतुककुत्सितरूपप्राप्तावपि कबन्धरूपताप्राप्तिः कथमित्यत आह—इन्द्रेति । इदं कबन्धाकृतिरूपं रणाजिरे संग्रामाङ्गणे इन्द्रशापात् प्राप्तं मयेति शेषः, अर्धं पृथक् । इन्द्रशापे कारणं बोधयितुमाह—अहमिति । उग्रेण तपसा पितामहं ब्रह्माणम् अतोषयम् अत एव ब्रह्मा मे मह्यं दीर्घायुः प्रादात् ततस्तस्माद्धेतोः विभ्रमो गर्वः मामस्पृशत् प्राप्नोत् । अर्धद्वयमेकान्वयि ॥ ८ ॥

गो० टी०—इन्द्रेण योद्धुं तव कुतः सामर्थ्यं तत्राह–अहं हीति । ऋषिदत्तघोराकारप्राप्त्यनन्तरम् उग्रेण तपसा पितामहमतोषयं स्वकुलशत्रोरिन्द्रस्य जयायेत्यर्थः । विभ्रमः अज्ञानम् ॥ ८ ॥

९] ति० टी०—विभ्रमो गर्वः । तमेवाह—दीर्घमिति ॥९॥

रा० टी०—गर्वस्वरूपं बोधयन्नाह—दीर्घमिति । मया दीर्घमायुः प्राप्तमतः शक्रः मे किं करिष्यति इत्येवं बुद्धिं निश्चयमास्थाय रणे संग्रामे शक्रमधर्षयम् ॥ ९ ॥

गो० टी०—तदेवाह—दीर्घमिति ॥ ९ ॥

१० ] ति० टी०—शतपर्वणा शतधारेण ॥ १० ॥

रा० टी०—तस्येति । तस्य इन्द्रस्य बाहुप्रमुक्तेन बाहुना प्रक्षिप्तेन शतपर्वणा शतधारेण वज्रेण सक्थिनी तदुपलक्षितं नाभ्यधोभागं शिरश्च शरीरे संप्रवेशितम् ॥ १० ॥

गो० टी०—तस्येति । शतपर्वणा शतधारेण सक्थिनी पृष्ठास्थिफलके शरीरे मध्यदेहे उदरभागे सक्थ्नोः प्रवेशनम् उरोभागे मूर्ध्नः प्रवेशनम् संप्रवेशितमित्यत्र "नपुंसकमनपुंसकेनै–" इति नपुंसकपरिशेषत्वम् एकवद्भावश्च ॥ १० ॥

११ ] ति० टी०—सक्थिनी नाभ्यधोभागोपलक्षणम् । शरीरे शरीरमध्यस्थ उदरभागे । एवंभूतेनोर्ध्वाधरव्यवहाररहितेन मया मरणं याच्यमानोऽपि तन्नाकरोत् ॥ ११ ॥

रा० टी०—स इति । स इन्द्रः मया याच्यमानः ब्रह्मदत्ताक्षयोऽहम् इत्यादिना प्रार्थ्यमानः सन् यमसादनं मृत्युगृहं नानयत्, ततपितामहवचः सत्यमस्तु इत्येवमब्रवीच ॥ ११ ॥

गो० टी०—स इति । याच्यमानः मारयेति प्रार्थ्यमानः यमसादनं नानयत् मृतिं न प्रापितवान् । कुत इत्यत्राह—पितामहेति । तत्पूर्वोक्तं दीर्घायुर्विषयकं पितामहवचः सत्यमस्त्विति मम मह्यम् अब्रवीत् न त्वां मारयामीत्यब्रवीदित्यर्थः ॥ ११ ॥

१२ ] ति० टी०—किमिति नाकरोत्तत्राह—पितामहेति । तद्वचो दीर्घायुर्दानरूपम् ॥ १२ ॥

रा० टी०—स्वकर्तृकप्रार्थनानन्तरमाह—अनाहार इति । वज्रिणा त्वया अभिहतः अत एव भग्नसक्थिशिरोमुखोऽहमनाहारः सन् सुदीर्घं कालं जीवितुमपि कथं शक्तो भविष्यामीति शेषः ॥ १२ ॥

गो० टी०—अनाहार इत्यादि । श्लोकद्वयमेकान्वयम् । अनाहारःसन् सुदीर्घं कालं कथं जीवितुं शक्तः भग्नसक्थिशिरोमुखत्वमनाहारत्वे हेतुः । बाहू प्रादात् आस्यमकल्पयत्॥१२॥१३॥

१३ ] ति० टी०—वज्रिणा त्वयाऽभिहतो जीवितुं कथं शक्त इत्यन्वयः । एवमुक्तः अनाहारस्याक्रियस्य कथं जीवनमित्युक्तः ॥ १३ ॥

रा० टी०—स इति । एवमुक्तः स शक्रः योजनमायतौ बाहू तीक्ष्णदंष्ट्रविशिष्टं कुक्षौ कुक्षिप्रदेशे आस्यं मुखं च अकल्पयत् ॥ १३ ॥

१४–१६ ] ति० टी०—वनेचरान्वने संचारवतः ॥१४–१६॥

---

१ कोपादिदिति गो. पाठः । २ एवेति रा. पाठः । ३ मे इति गो. रा. पाठः । ४ चैव मूर्धा चेति गो. पाठः । ५ वज्रेणेति गो. पाठः । ६ एवमुक्तस्तु मे शक्र इति गो. पाठः । ७ प्रादादास्यमिति गो. पाठः । ८ संकृष्येति गो. पाठः । ९ रामेति गो. पाठः ।

यद्यत्पश्यामि सर्वस्य ग्रहणं साधु रोचये। अवश्यं ग्रहणं रामो मन्येऽहं समुपैष्यति ॥ १७ ॥
इमां बुद्धिं पुरस्कृत्य देहन्यासकृतश्रमः। स त्वं रामोऽसि भद्रं ते नाहमन्येन राघव ॥ १८ ॥
शक्यो हन्तुं यथा तत्त्वमेवमुक्तं महर्षिणा। अहं हि मतिसाचिव्यं करिष्यामि नरर्षभ ॥ १९ ॥
मित्रं चैवोपदेक्ष्यामि युवाभ्यां संस्कृतोऽग्निना। एवमुक्तस्तु धर्मात्मा दनुना तेन राघवः ॥ २० ॥
इदं जगाद वचनं लक्ष्मणस्य च पश्यतः। रावणेन हृता भार्या सीता मम यशस्विनी ॥ २१ ॥
निष्क्रान्तस्य जनस्थानात्सह भ्रात्रा यथासुखम्। नाममात्रं तु जानामि न रूपं तस्य रक्षसः ॥ २२ ॥
निवासं वा प्रभावं वा वयं तस्य न विद्महे। शोकार्तानामनाथानामेवं विपरिधावताम् ॥ २३ ॥

---

रा० टी०—स इति। सः प्राप्तभुजादिरहं सिंहादीन् वनेचरान्संक्षिप्य मुखे प्रक्षिप्य भक्षयामि ॥ १४ ॥

गो० टी०—सोऽहमिति। संकृष्य आकृष्य ॥ १४ ॥

रा० टी०—स इति। यदा रामः ते बाहू छेत्स्यते तदा त्वं स्वर्गं गमिष्यसि इति स इन्द्रो मामब्रवीत् ॥ १६ ॥

गो० टी०—स त्विति। स मामित्यनेन बलात्कारो लक्ष्यते ॥ १६ ॥

रा० टी०—अनेनेति। हे राजसत्तम ! अस्मिन् वने यद्यत्पश्यामि तस्य तस्य सर्वस्य अनेन वपुषा ग्रहणं साधु यथा स्यात्तथा रोचये। तत्र हेतुः—रामो ग्रहणमवश्यं समुपैष्यति प्राप्स्यति इत्यहं मन्ये इन्द्रवचनान्निश्चिनोमि अत एव इमां बुद्धिं पुरस्कृत्य देहन्यासकृतश्रमः देहत्यागोद्देश्यककृतप्रयत्नोऽहमस्मीति शेषः। अर्धचतुष्टयमेकान्वयि ॥ १६ ॥ १७ ॥

गो० टी०—अनेनेति। अनेन वपुषा उपलक्षितोऽहं यद्यत्पश्यामि तस्य ग्रहणं रोचयेत न त्वभक्ष्यबुद्ध्या किंचित्यजामीत्यर्थः ॥ १६ ॥

१७ ] ति० टी०—सर्वस्य ग्रहणं साधुरोचये न किंचिदप्यभक्ष्यबुद्ध्या त्यजामीत्यर्थः। ऋषेरिन्द्रस्य च वाक्यविश्वासादवश्यं रामो मम हस्ते ग्रहणमेष्यतीति मन्ये मन्यमानस्तिष्ठामि ॥ १७ ॥

गो० टी०—अवश्यमिति। महर्षिवाक्यविश्वासात् अवश्यं रामो ग्रहणं समुपैष्यतीति मन्ये इमां पुरस्कृत्य देहन्यासे कृतश्रमो भवामि विकृतदेहत्यागे कृतोद्योगो भवामि देहत्यागे कृतबुद्धितया रामोऽवश्यं ग्रहणमुपैष्यतीति सर्वग्रहणं रोचय इति भावः ॥ १७ ॥

१८ ] ति० टी०—मम देहन्यासे देहत्यागे कृतश्रमः कृतयत्नो रामो मम हस्ते ग्रहणमेष्यतीतीमां बुद्धिं पुरस्कृत्य सर्वस्य ग्रहणं साधु रोचये। अयमेव रामो भवेदिति बुद्ध्या किमपि न त्यजामीत्याशयः ॥ १८ ॥

रा० टी०—स इति। यतो महर्षिणा यथातत्त्वमुक्तमतः अन्येन हन्तुमहं न शक्यः अतः सः महर्षिणोक्तो राम एव त्वमतस्ते भद्रम् ॥ १८ ॥

गो० टी०—स त्वमिति। रामत्वे युक्तिमाह—नाहमिति। एवं यथातत्त्वं यथार्थमेव महर्षिणोक्तम् ॥ १८ ॥

१९ ] ति० टी०—सर्वथा दाहोत्तरं तव बुद्धिं मित्रं चोपदेक्ष्यामि ॥ १९ ॥

रा० टी०—अहमिति। हे नरर्षभ ! युवाभ्यामग्निना संस्कृतोऽहं मतिसाचिव्यं भवत्कार्यसाधनाय बुद्ध्या साहाय्यं करिष्यामि। तत्स्वरूपमाह—तव कार्यसाधकमिति शेषः, मित्रं युवाभ्यामुपदेक्ष्यामि ॥ १९ ॥

गो० टी०—अहमिति। मतिसाचिव्यं बुद्धिसाहाय्यं करिष्यामि किंच तद्विषये मित्रं चोपदेक्ष्यामि युवाभ्यामग्निना संस्कृतश्चेद्भवेयम् ॥ १९ ॥

२० ] ति० टी०—दनुना दनुनाम्ना ॥ २० ॥

रा० टी०—एवमिति। अनेन दनुना एवमुक्तो राघवः पश्यतो लक्ष्मणस्य समीपे इदं जगाद ॥ २० ॥

गो० टी०—एवमिति। दनुना दनुवंश्येन औपचारिकस्तद्वंश्ये तच्छब्दः ॥ २० ॥

२१ ] ति० टी०—वह्निसंस्कारं करिष्यामि मम साहाय्यं कुर्वित्याशयेनाह—इदमिति ॥ २१ ॥

रा० टी०—तद्वचनाकारमाह—रावणेनेति। भ्रात्रा सह जनस्थानात् यथासुखं निष्क्रान्तस्य मम भार्या रावणेन हृता ॥ २१ ॥

गो० टी०—रावणेनेति। जनस्थानाद्यथासुखं निष्क्रान्तस्य निर्गतस्य मे भार्या हृता ॥ २१ ॥

२२–२३ ] ति० टी०—यथासुखं हृतेत्यन्वयः। नाममात्रम् आप्तस्य जटायोर्वाक्यादिति भावः ॥ २२ ॥ २३ ॥

रा० टी०—ननु हर्तारं जानास्येव पुनः किं पृच्छसीत्यत आह—नामेति। तस्य अपहर्तुः रक्षसः नाममात्रमेव जानामि तस्य निवासादिकं न विद्महे ॥ २२ ॥

गो० टी०—नामेति। नाममात्रं तु जानामि आप्तवाक्यादिति शेषः। न विद्महे अहं मत्पुरीजनाश्चेत्यर्थः ॥ २२ ॥

रा० टी०—शोकार्तानामिति। शोकार्तानां शोकपीडितानामनाथानाम् अपूर्णमनोरथानाम् अत एवमनेन प्रकारेण विपरिधावताम् अस्माकमुपकारेण हेतुना सदृशं योग्यं कारुण्यं कृपां कर्तुं वर्तताम् ॥ २३ ॥

---

१ उपश्रृण्वत इति गो. पाठः।

कारुण्यं सदृशं कर्तुमुपकारेण वर्तताम् । काष्ठान्यानीय भग्नानि काले शुष्काणि कुञ्जरैः २४ ॥
धक्ष्यामस्त्वां वयं वीर श्वभ्रे महति कल्पिते । स त्वं सीतां समाचक्ष्व येन वा यत्र वा हृता ॥ २५ ॥
कुरु कल्याणमत्यर्थं यदि जानासि तत्त्वतः । एवमुक्तस्तु रामेण वाक्यं दनुरनुत्तमम् ॥ २६ ॥
प्रोवाच कुशलो वक्ता वक्तारमपि राघवम् । दिव्यमस्ति न मे ज्ञानं नाभिजानामि मैथिलीम् २७॥
यस्तां वक्ष्यति तं वक्ष्ये दग्धः स्वं रूपमास्थितः । योऽभिजानाति तद्रक्षस्तद्वक्ष्ये राम तत्परम्॥ २८ ॥
अदग्धस्य हि विज्ञातुं शक्तिरस्ति न मे प्रभो । राक्षसं तुं महावीर्यं सीता येन हृता तव ॥ २९ ॥
विज्ञानं हि महद्भ्रष्टं शापदोषेण राघव । स्वकृतेन मया प्राप्तं रूपं लोकविगर्हितम् ॥ ३० ॥
किं तु यावन्न यात्यस्तं सविता श्रान्तवाहनः । तावन्मामवटे क्षिप्त्वा दह राम यथाविधि ॥ ३१ ॥
दग्धस्त्वयाऽहमवटे न्यायेन रघुनन्दन । वक्ष्यामि तं महावीर यस्तं वेत्स्यति राक्षसम् ३२ ॥

गो० टी०—शोकार्तानामिति । उपकारे परोपकारे वर्तितां प्रवर्तमानानाम् अस्माकं विषये कारुण्यं कर्तुं सदृशं युक्तम् ॥ २३ ॥

२४ ] ति० टी०—उपकारेण परोपकारेण वर्ततामस्माकं सदृशमुचितं कारुण्यं सीताहर्तृदेशादिकथनरूपमुपकारं कर्तुमर्हसि । दाहविषये त्वया चिन्ता न कार्येत्याह—काष्ठानीति ॥ २४ ॥

रा० टी०—काष्ठानीति । काले समयान्तरे कुञ्जरैः भग्नानि अत एव शुष्काणि काष्ठान्यानीय कल्पिते सद्यः कृते श्वभ्रे अवटे त्वां धक्ष्यामः "अस्मदो द्वयोश्च" इति बहुवचनम् ॥ २४ ॥

गो० टी०—उपकारमेवाह—काष्ठानीति । कल्पिते सज्जे श्वभ्रे अवटे ॥ २४ ॥

२५ ] ति० टी०—कल्पिते इहैव कृते । येन कर्त्रा । यत्र देशे ॥ २५ ॥

रा० टी०—स इति । सः प्राप्तसंस्कारस्त्वं यदि तत्त्वतो जानासि तर्हि अत्यर्थमत्यन्तं कल्याणं त्वं कुरु । कल्याणस्वरूपमाह—येन सीता हृता तं यत्रास्ति तं च सीतां सीताचेष्टां च समाचक्ष्व ब्रूहि ॥ २६ ॥

गो० टी०—स त्वमिति । कल्याणं तत्त्वकथनरूपम् ॥२५॥

२६ ] ति० टी०—कल्याणं तत्त्वाख्यानरूपम् । दाह एव मे दिव्यज्ञानसाधनं तत्कुरु ततः परं सर्वं वक्ष्यामीत्याह—एवमिति ॥ २६ ॥

रा० टी०—एवमिति । रामेण एवमुक्तो दनुः वक्तारं राघवं प्रोवाच ॥ २६ ॥

गो० टी०—एवमिति । वक्तारमपि राघवं वक्तुं कुशलः ॥२६॥

२७ ] ति० टी०—कुशलो वक्ता वक्तृताचातुर्यवान् । वक्तारं प्रशस्तवक्तारम् ॥ २७ ॥

रा० टी०—तद्वचनाकारमाह—दिव्यमिति । मे दिव्यं ज्ञानं नास्ति अतो मैथिलीं नाभिजानामि अतो यस्तां मैथिलीं वक्ष्यति तं दग्धः अत एव स्वं रूपमास्थितोऽहं वक्ष्ये ॥ २७ ॥

गो० टी०—दिव्यमिति । मैथिलीं तदपहर्तारं चेति द्रष्टव्यम् । तर्हि किंवा मतिसाचिव्यं करिष्यसीत्यत्राह—य इति । तर्हि तं वा ब्रूहीत्यत्राह—दग्ध इति ॥ २७ ॥

२८–२९ ] ति० टी०—यस्ताम् सखेति शेषः । तत्परं दाहात्परम् ॥ २८ ॥ २९ ॥

रा० टी०—नन्विदानीमेव तं बोधयेत्यत आह—य इति । येन तव सीता हृता तं राक्षसं विज्ञातुं विशेषतो बोधयितुम् अदग्धस्य मे शक्तिर्नास्ति तत् तस्मात् हेतोः तत्परं दाहोत्तरकाले तद्रक्षः योऽभिजानाति तमहं वक्ष्ये । योऽभिजानाति तं वक्ष्ये इत्यनेन रावणभीतिः सुग्रीवद्वारैव सीताप्राप्तिर्वेति निश्चयः सूचितः ॥ २८ ॥

गो० टी०—इदमेव व्यतिरेकमुखेनाह—अदग्धस्येति ॥२८॥

३०–३२ ] ति० टी०—विज्ञानमतीन्द्रियविषयम् । स्वकृतेनानुचितकर्मणा ॥ ३०–३२ ॥

रा० टी०—ज्ञानाभावे हेतुमाह—विज्ञानमिति । हे राघव ! स्वकृतेन स्वसंपादितेन शापदोषेण महद्विज्ञानं भ्रष्टं लोकविगर्हितं रूपं च प्राप्तम् ॥ २९ ॥

गो० टी०—कुत इत्यत्राह—विज्ञानं हीति । विज्ञानम् अतीन्द्रियविषयकं स्वकृतेन पापेनेति शेषः ॥ २९ ॥

रा० टी०—स्वेप्सितं प्रार्थयते—किमिति । यावत् सविता सूर्योऽस्तं न याति तावत् माम् अवटे क्षिप्त्वा यथाविधि दह । किं त्विति वृत्तान्तरे ॥ ३० ॥

गो० टी०—किं त्विति । अवटे श्वभ्रे यथाविधि यथा सम्यक् दग्धं भवति तथेत्यर्थः ॥ ३० ॥

रा० टी०—तत्प्रयोजनमाह—दग्ध इति । न्यायेन विधिना दग्धोऽहं यस्तं राक्षसं वेत्स्यति वेत्ति तं वक्ष्यामि ॥ ३१ ॥

गो० टी०—दग्ध इति । न्यायेन सम्यक्त्वेन ॥ ३१ ॥

१ उपकारे चेति गो. पाठः । २ आदायेति गो. पाठः । ३ वक्तुमिति गो. पाठः । ४ ज्ञास्यतीति गो. पाठः । ५ अर्धमेतत् गो. नास्ति. । ६ तमिति गो. पाठः । ७ ममेति गो. पाठः । ८ अहं वीरेति गो. पाठः । ९ ज्ञास्यतीति गो. पाठः ।

तेन सख्यं च कर्तव्यं न्याय्यवृत्तेन राघव । कल्पयिष्यति ते वीर साहाय्यं लघुविक्रम॥ ३३ ॥
नहि तस्यास्त्यविज्ञातं त्रिषु लोकेषु राघव । सर्वान्परिवृतो लोकान्पुरा वै कारणान्तरे ॥ ३४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे एकसप्ततितमः सर्गः ॥ ७१ ॥

---

## द्विसप्ततितमः सर्गः ।

रामः कबन्धमवटे चितायामारोप्य ददाह ।

एवमुक्तौ तु तौ वीरौ कबन्धेन नरेश्वरौ । गिरिप्रदरमासाद्य पावकं विससर्जतुः ॥ १ ॥
लक्ष्मणस्तु महोल्काभिर्ज्वलिताभिः समन्ततः । चितामादीपयामास सा प्रजज्वाल सर्वतः ॥ २ ॥
तच्छरीरं कबन्धस्य घृतपिण्डोपमं महत् । मेदसा पच्यमानस्य मन्दं दहत पावकः ॥ ३ ॥
स विधूय चितामाशु विधूमोऽग्निरिवोत्थितः । अरजे वाससी बिभ्रन्मालां दिव्यां महाबलः ॥ ४ ॥
ततश्चिताया वेगेन भास्वरो विरजाम्बरः । उत्पपाताशु संहृष्टः सर्वप्रत्यङ्गभूषणः ॥ ५ ॥

---

३३ ] ति० टी०—तेन यो राक्षसं ज्ञास्यति तेन न्याय्यवृत्तेन नीतिमच्चरित्रेण ॥ ३३ ॥

रा० टी०—नन्व त्वया बोधितोऽपि सः मह्यं कथं बोधयिष्यतीत्यत आह—तेनेति । न्यायवृत्तेन न्यायाचरणेन त्वया तेन रावणविज्ञात्रा सह सख्यं कर्तव्यम् अत एव लघुविक्रमः शीघ्रकार्यकारी ते साहाय्यं कल्पयिष्यति ॥ ३२ ॥

गो० टी०—तेनेति । न्यायवृत्तेन नीतिमच्चरित्रेण ॥ ३२ ॥

३४ ] ति० टी०—कारणान्तरे कस्मिंश्चिन्निमित्ते जाते सतीत्यर्थः ॥ ३४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाडे एकसप्ततितमः सर्गः ॥ ७१ ॥

रा० टी०—साहाय्यकरणे तद्योग्यतामाह—नहीति । कारणान्तरे कस्मिंश्चित्कारणे यतः सर्वान् लोकान् परिवृत्तः परिभ्रान्तः अतः त्रिषु लोकेषु तस्याविज्ञानं नास्ति ॥३३॥३४॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे एकसप्ततितमः सर्गः ॥ ७१ ॥

गो० टी०—नहीति । कारणान्तरे भ्रातृविरोधरूपनिमित्तान्तरे अयं रावणमेव न जानाति सुग्रीवं तु जानाति किंतु मन्नाम न कथितवान् दाहात्पूर्वं कथने कुत्सितशरीरदहने रामो वैमनस्यं कुर्यादिति ॥ ३३ ॥

अस्मिन् सर्गे सार्धत्रयस्त्रिंशच्छ्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने एकसप्ततितमः सर्गः ॥ ७१ ॥

---

१-२ ] ति० टी०—प्रदरं गर्तमासाद्य कबन्धं प्रापय्य सर्वतः काष्ठानि दत्त्वा तत्राग्निं ददतुः॥ १ ॥ २ ॥

रा० टी०—कबन्धशरीरदाहमाह—एवमित्यादिभिः । कबन्धेन एवमुक्तौ तौ रामलक्ष्मणौ गिरिप्रदरं गिरिगर्तमासाद्य प्राप्य तत्र चितां निर्मायेति कबन्धशरीरं संस्थाप्येति च शेषः, पावकं विससर्जतुः विससृजतुः ॥ १ ॥

गो० टी०—अथ संस्कृतः कबन्धः स्वरूपं प्रत्यापन्नो मित्रमुपदिशति द्विसप्ततितमे—एवमुक्तावित्यादि । प्रदरं श्वभ्रम् आसाद्य प्रापय्य कबन्धमिति शेषः ॥ १ ॥

रा० टी०—लक्ष्मण इति । लक्ष्मणस्तु ज्वलिताभिः महोल्काभिः समन्ततः चितामादीपयामास अत एव सा चिता सर्वतः प्रजज्वाल ॥ २ ॥

गो० टी०—लक्ष्मणस्त्विति । महोल्काभिः निर्गतज्वालकाष्ठैः ॥ २ ॥

३ ] ति० टी०—मेदसा पूर्णस्येति शेषः । मेदःपूर्णत्वान्मन्ददाहः दहतादहत् ॥ ३ ॥

रा० टी०—तदिति । पच्यमानस्य दह्यमानस्य मेदसा मांसेन पूर्णमिति शेषः, अत एव घृतपिण्डोपमं तच्छरीरं पावको मन्दं दहति ॥ ३ ॥

गो० टी०—तदिति । मेदसा मांसेन पच्यमानस्य अभिवृद्धस्य कबन्धस्य शरीरम् ॥ ३ ॥

४ ] ति० टी०—अरजे निर्मले ॥ ४ ॥

रा० टी०—स इति । स कबन्धः चितामाशु विधूय प्रकम्प्य अजरे जीर्णतारहिते नवीने इत्यर्थः, वाससी दिव्यां मालां च बिभ्रत्सन् विधूमः धूमरहितः अग्निरिव उत्थितः ॥ ४ ॥

गो० टी०—स इति । अरजे निर्मले अदन्तत्वमार्षम्॥४॥

५ ] ति० टी०—चिताया उत्पपात । भास्वरः कान्तिमान् । सर्वेषु प्रत्यङ्गेषु करचरणादिषु भूषणानि यस्य ॥ ५ ॥

---

१ न्यायेति गो. पाठः । २ प्रीत इति गो. पाठः । ३ लघुविक्रमः इति गो पाठः । ४ सृत इति गो. पाठः । ५ ऽसाविति गो. पाठः । ६ दहतीति गो. रा. पाठः । ७ मालां दिव्यामिति गो. रा. पाठः । ८ विमलेति गो. पाठः ।

विमाने भास्वरे तिष्ठन्हंसयुक्ते यशस्करे । प्रभया च महातेजा दिशो दश विराजयन् ॥ ६ ॥
सोऽन्तरिक्षगतो वाक्यं कबन्धो राममब्रवीत् । शृणु राघव तत्त्वेन यथा सीतामवाप्स्यसि ॥ ७ ॥
राम षड्युक्तयो लोके याभिः सर्वं विमृश्यते । परिमृष्टो दशान्तेन दशाभागेन सेव्यते ॥ ८ ॥
दशाभागगतो हीनस्त्वं हि राम सलक्ष्मणः । यत्कृते व्यसनं प्राप्तं त्वया दारप्रधर्षणम् ॥ ९ ॥
तदवश्यं त्वया कार्यः स सुहृत्सुहृदां वर । अकृत्वा नहि ते सिद्धिमहं पश्यामि चिन्तयन् ॥ १० ॥
श्रूयतां राम वक्ष्यामि सुग्रीवो नाम वानरः । भ्रात्रा निरस्तः क्रुद्धेन वालिना शक्रसूनुना ॥ ११ ॥
ऋष्यमूके गिरिवरे पम्पापर्यन्तशोभिते । निवसत्यात्मवान्वीरश्चतुर्भिः सह वानरैः ॥ १२ ॥

---

रा० टी०—तत इति । विरजाम्बरः नवीनाम्बरवान् भास्वरः अतिप्रकाशवान् सर्वप्रत्यङ्गभूषणः सर्वेषु प्रत्यङ्गेषु करादिषु भूषणानि यस्य सः अत एव संहृष्टो महातेजाः कबन्धः भास्वरे विमाने तिष्ठन् प्रभया दश दिशो विराजयंश्च सन् ततः तस्याश्चिताया वेगेन उत्पपात । श्लोकद्वयमेकान्वयि ॥ ५ ॥ ६ ॥

गो० टी०—तत इति । चिताया उत्पपात सर्वेषु प्रत्यङ्गेष्वङ्गुल्यादिष्वपि भूषणानि यस्य स तथा ॥ ५ ॥

६ ] ति० टी०—हंसयुक्ते रामकृतसंस्कारप्रभावेण पूर्वतपःप्रभावेण चैवंभूतं विमानं प्राप्तः ॥ ६ ॥

गो० टी०—विमान इति । हंसयुक्त इत्यनेन रामदग्धतया ब्रह्मलोकप्राप्तिः सूच्यते । विराजयन् अभूदिति शेषः ॥६॥

७] ति०टी०—तत्त्वेन परमार्थत उच्यमानमिति शेषः ॥ ७ ॥

रा० टी०—स इति । अन्तरिक्षगतः स कबन्धः हे राघव! यथा सीतामवाप्स्यसि तथा तत्त्वेन शृणु इति राममब्रवीत् ॥७॥

गो० टी०—स इति । तत्त्वेन परमार्थतः शृण्विति वाक्यमब्रवीदिति संबन्धः ॥ ७ ॥

८ ] ति० टी०—अथ प्रतिज्ञातमुपायमाह—राम षडिति । षड्युक्तयः संधिविग्रहयानासनद्वैधीभावसमाश्रयाख्या लोके सन्ति । याभिर्युक्तिभिः सर्वं वस्तुजातं राज्ञा विमृश्यते विमृश्य प्राप्यते । तत्र दशान्तेन दुर्दशापरिपाककालेन यः परिमृष्टः स दशाभागेन दशाभागं दुर्दशापरिपाकावस्थां प्राप्तेन सेव्यत इति नीतिः । तस्मात्त्वयान्त्य उपायः समाश्रयः कार्य इत्यर्थः । 'परिभ्रष्टः' इति पाठे दशान्तेन दुर्दशापरिपाककालेनार्थाद्भ्रंशित इत्यर्थः ॥ ८ ॥

रा० टी०—तद्वचनाकारमाह—रामेत्यादिभिः । हे राम ! याभिर्युक्तिभिः सर्वं कृत्यं लोके विमृश्यते विज्ञायते ताः युक्तयः संधिविग्रहयानासनद्वैधीभावसमाश्रयाख्याः षट् सन्तीति शेषः, एतेन राजभिस्ताः अवश्यं कर्तव्या इति सूचितम् । अर्धं पृथक् । त्वयि दुःखप्राप्तिर्न संभवतीति बोधयन्नाह—परिमृष्ट इति । दशा सर्वदंशकेन अन्तेन कालेन परिमृष्टः वशं प्राप्तः पुरुषः दशाभागेन दशांशेन दुर्दशयेत्यर्थः, सेव्यते प्राप्यते दशान्तेन कालेन हीनस्तद्दशत्वानाक्रान्तोऽपि स लक्ष्मणस्त्वं दशाभागगतः भार्यापहरणेन कुदशां प्राप्तः इव । हिरिवार्थे आश्चर्यमेतदिति तात्पर्यम् । अर्धद्वयमेकान्वयि ॥ ८ ॥

गो० टी०—रामेति । हे राम ! लोके षड्युक्तयः सन्ति युक्तयः उपायाः ते च सन्धिविग्रहयानासनद्वैधीभावसमाश्रयाः । याभिर्युक्तिभिः सर्वं राज्ञां कृत्यं विमृश्यते ताः सन्तीति ॥ ८ ॥

गो० टी०—ततः किमित्यपेक्षायां संधिविषयं दर्शयति—परिमृष्ट इति । दशा नाम दौःस्थ्यरूपावस्था तस्या अन्तः परिपाकः तेन परिमृष्टः संस्पृष्टः पुरुषः दशाभागेन दशायाः भागः परिपाकलक्षणोंऽशो यस्य तेन सेव्यते संधीयते । अस्तु प्रकृते किमायातं तत्राह—दशाभागगत इति । हे राम ! सलक्ष्मणस्त्वं दशाभागगतः दुर्दशापन्नः अत एव हीनश्च कुतः यत्कृते येन कारणेन दारप्रधर्षणं नाम व्यसनं प्राप्तं तेन त्वं दशाभागगतः ॥ ९ ॥

९ ] ति० टी०—नन्वहं दशाभागं प्राप्त इति कथं त्वया निर्णीतं तत्राह—दशाभागगत इति । यतस्त्वं सलक्ष्मण एव हीनः राज्यादिनेत्यर्थः । यत्कृते यद्दशाभागनिमित्तं त्वया दारप्रधर्षणं प्राप्तं तेन त्वं ज्ञायते दुर्दशाभोगकालं प्राप्त इति ॥९॥

रा० टी०—यदिति । यत् यस्मात् दारप्रधर्षणं दारापहरणमत एव व्यसनं दुःखं त्वया प्राप्तं तत् तस्य कृते छेदाय सः केनचिद्धेतुना दुर्दशां प्राप्तः सुहृन्मित्रं त्वया कार्यः करणीयः हि यतः अकृत्वा सुहृदामिति शेषः, ते सिद्धिं चिन्तयन्नहं न पश्यामि ॥ ९ ॥ १० ॥

१० ] ति० टी०—यदेवमतस्त्वया स सुहृद्दशाभागप्राप्तः सुहृत्कार्यः । तत्करणावश्यकत्वे हेतुमाह—अकृत्वेति ॥ १० ॥

गो० टी०—ततोऽपि किमित्यत्राह—तदिति । दशाभागेन त्वया सः दशाभागगतः कश्चित् सुहृत् कार्यः अवश्यमित्यत्र हेतुमाह—अकृत्वेति । सुहृदम् अकृत्वा असंपाद्य सिद्धिं सीतालाभं चिन्तयन्नपि न पश्यामि ॥ १० ॥

११ ] ति० टी०—तादृशः सुहृत्क इत्यत आह—श्रूयतामिति ॥ ११ ॥

१२ ] ति० टी०—पम्पापर्यन्तेन पम्पाप्रदेशेन शोभिते । चतुर्भिः मन्त्रिभिरिति शेषः ॥ १२ ॥

रा० टी०—नन्नु तादृशः कोऽस्तीत्यत आह—श्रूयतामिति ।

---

१ सत्त्वमिति गो. पाठः ।

वानरेन्द्रो महावीर्यस्तेजोवानमितप्रभः । सत्यसंधो विनीतश्च धृतिमान्मतिमान्महान् ॥ १३ ॥
दक्षः प्रगल्भो द्युतिमान्महाबलपराक्रमः । भ्रात्रा विवासितो वीर राज्यहेतोर्महात्मना ॥ १४ ॥
स ते सहायो मित्रं च सीतायाः परिमार्गणे । भविष्यति हि ते राम मा च शोके मनः कृथाः ॥ १५ ॥
भवितव्यं हि तच्चापि न तच्छक्यमिहान्यथा । कर्तुमिक्ष्वाकुशार्दूल कालो हि दुरतिक्रमः ॥ १६ ॥
गच्छ शीघ्रमितो वीर सुग्रीवं तं महाबलम् । वयस्यं तं कुरु क्षिप्रमितो गत्वाऽद्य राघव ॥ १७ ॥
अद्रोहाय समागम्य दीप्यमाने विभावसौ । न च ते सोऽवमन्तव्यः सुग्रीवो वानराधिपः ॥ १८ ॥
कृतज्ञः कामरूपी च सहायार्थी च वीर्यवान् । शक्तौ ह्यद्य युवां कर्तुं कार्यं तस्य चिकीर्षितम् ॥ १९ ॥
कृतार्थो वाऽकृतार्थो वा तव कृत्यं करिष्यति । स ऋक्षरजसः पुत्रः पम्पामटति शङ्कितः ॥ २० ॥

हे राम ! अहं वक्ष्यामि तादृशमिति शेषः, अतस्त्वया श्रूयताम् । तद्वचनाकारमाह—शक्रसूनुना क्रुद्धेन भ्रात्रा वालिना सुग्रीवो नाम वानरो निरस्तः अत एव पम्पापर्यन्तशोभिते पम्पाप्रदेशेन विराजिते गिरिवरे ऋष्यमूके चतुर्भिर्वानरैः सह निवसति ॥ ११ ॥ १२ ॥

गो० टी०—स पुनः क इत्यपेक्षायामाह—श्रूयतामित्यादि । श्लोकद्वयमेकान्वयम् ॥ ११ ॥ १२ ॥

१३ ] ति० टी०—तेजोवान्प्रतापी । अमितप्रभोऽपरिच्छिन्नकान्तिः ॥ १३ ॥

१४ ति० टी०—द्युतिमान् । तद्गुणानां वास्तवत्वबोधनायोक्तस्यापि कस्यचित्पुनः कथनम् ॥ १४ ॥

रा० टी०—निरसनप्रकारमाह—वानरेन्द्र इति । महावीर्यत्वादिविशिष्टः वानरेन्द्रः सुग्रीवः राज्यहेतोः भ्रात्रा विवासितः ततस्तेजस्वी प्रतापवान् अमितप्रभः अनियतबुद्धिविशेषविशिष्टः । श्लोकद्वयमेकान्वयि ॥ १३ ॥ १४ ॥

गो० टी०—स च त्वत्सदृशगुणकत्वाद्दशाभागगतत्वाच्च ते मित्रतामर्हतीत्याह त्रिभिः—वानरेन्द्र इति । तेजोवान् तेजस्वी द्युतिमान् कान्तिमान् ॥ १३-१५ ॥

१५ ] ति० टी०—रे राम ! ते भविष्यति । हिर्निश्चये ॥ १५ ॥

रा० टी०—स इति । हे राम ! सुग्रीवस्ते मित्रम् अत एव सीतायाः परिमार्गणे अन्वेषणे सहायश्च भविष्यति अतः शोके मनो मा कृथाः ॥ १५ ॥

१६ ] ति० टी०—यद्भवितव्यं राज्यभ्रंशदारापहारादिदुःखं तदन्यथा कर्तुं केनापि न शक्यमिति । अतः शोकेन मनो मा कृथा इति शेषः । ते इत्यादीनां पुनरुक्तिस्तु रामदुःखेन तस्यापि दुःखितचित्तत्वान्न दोषाय ॥ १६ ॥

रा० टी०—इदानीं राक्षसविध्वंससमयः संप्राप्त इति बोधयन्नाह—भवितव्यमिति । हे इक्ष्वाकुशार्दूल ! यद्भवितव्यं तदन्यथा कर्तुं न शक्यं जनैरिति शेषः । तत्र हेतुः—हि यतः कालः दुरतिक्रमः अतिक्रमितुमशक्यः ॥ १६ ॥

गो० टी०—शोकापनोदनाय लोकन्यायमाह—भवितव्यमिति श्लोकेन ॥ १६ ॥

१७ ] ति० टी०—तं गच्छन्तं वयस्यं कुर्वित्यन्वयः ॥ १७ ॥

रा० टी०—गच्छेति । हे राघव ! महाबलं तं सुग्रीवमितः शीघ्रं गच्छ तं सुग्रीवं गत्वा अद्रोहाय द्रोहानुत्पत्तये दीप्यमाने विभावसौ वह्निसमीपे समागम्य प्राप्य वयस्यं सखायं कुरु अत एव वानराधिपः कृतज्ञत्वादिविशिष्टः स कृतसख्यः सुग्रीवस्ते त्वया नावमन्तव्यः । सार्धश्लोकद्वयमेकान्वयि ॥ १७ ॥ १८ ॥

गो० टी०—गच्छेत्यादिसार्धश्लोक एकान्वयः । इतो गत्वेत्यनुवादः । समागम्य सुग्रीवेण संयुज्य अद्रोहाय परस्परद्रोहाभावाय विभावसौ अग्नौ दीप्यमाने सति अग्निसाक्षिकमित्यर्थः तं सुग्रीवं वयस्यं कुरु ॥ १७ ॥

१८ ] ति० टी०—परस्परं द्रोहपरिहारायाग्निसाक्षिकं सख्यं कार्यमित्याह—अद्रोहायेति ॥ १८ ॥

गो० टी०—स चेति । स च सुग्रीवः ते त्वया नावमन्तव्यः अयं तिर्यक् किमनेनेति तस्मिन्नावमतिः कार्या । तत्र हेतुमाह—कृतज्ञ इति ॥ १८ ॥

१९ ] ति० टी०—तस्य तिर्यक्त्वात्तदवमतिः कुतो न कार्येत्यत्र हेतुमाह—कृतज्ञ इति । ननु स किमर्थं मया सह मैत्रीं कुर्यादत आह—सहायार्थीति । नन्वावाभ्यामशक्ताभ्यां कस्तस्य सहायार्थ इत्यत आह—शक्तौ हीति । तस्य चिकीर्षितं कार्यं कर्तुं युवां शक्तावित्यन्वयः ॥ १९ ॥

रा० टी०—सख्यकरणयोग्यतां बोधयन्नाह—शक्ताविति । तस्य सुग्रीवस्य चिकीर्षितमिच्छाविषयीभूतं कार्यं कर्तुं युवां शक्तौ समर्थौ कृतार्थः कृतप्रयोजनो वा अकृतार्थो वा तव कृत्यं कार्यं करिष्यति, एतेन सुग्रीवस्य सत्यप्रतिज्ञत्वं सूचितम् । अर्धद्वयमेकान्वयि ॥ १९ ॥

गो० टी०—शक्ताविति । तस्य सुग्रीवस्य चिकीर्षितं युवां कर्तुं शक्तौ अतः स कृतार्थः कृतस्वप्रयोजनः अकृतार्थः करिष्यमाणस्वप्रयोजनो वा तव कृत्यं करिष्यति ॥ १९ ॥

२० ] ति० टी०—ननु तस्य तिरश्चोऽस्मत्साहाय्ये का शक्तिस्तत्राह—कृतार्थ इति । स कृतार्थस्त्वया कृतप्रयोजनः करिष्यमाणप्रयोजनोऽपि तव कार्यं सीतान्वेषणादिरूपं स

१ तेजस्वी चेति रा. पाठः । २ रामेति गो. पाठः । ३ बल इति गो. पाठः । ४ यदिति गो. रा. पाठः । ५ स च ते नेति गो. पाठः ।

भास्करस्यौरसः पुत्रो वालिना कृतकिल्बिषः । संनिधायायुधं क्षिप्रमृष्यमूकालयं कपिम् ॥ २१ ॥
कुरु राघव सत्येन वयस्यं वनचारिणम् । स हि स्थानानि कार्त्स्न्येन सर्वाणि कपिकुञ्जरः॥२२॥
नरमांसाशिनां लोके नैपुण्यादधिगच्छति । न तस्याविदितं लोके किंचिदस्ति हि राघव ॥२३॥
यावत्सूर्यः प्रतपति सहस्रांशुः परंतप । स नदीर्विपुलाञ्शैलान्गिरिदुर्गाणि कन्दरान्॥२४॥
अन्विष्य वानरैः सार्धं पत्नीं तेऽधिगमिष्यति । वानरांश्च महाकायान्प्रेषयिष्यति राघव ॥ २५ ॥
दिशो विचेतुं तां सीतां त्वद्वियोगेन शोचतीम् । अन्वेष्यति वरारोहां मैथिलीं रावणालये ॥ २६ ॥
स मेरुशृङ्गाग्रगतामनिन्दितां प्रविश्य पातालतलेऽपि वाश्रिताम् ।
प्लवङ्गमानामृषभस्तव प्रियां निहत्य रक्षांसि पुनः प्रदास्यति ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे द्विसप्ततितमः सर्गः ॥ ७२ ॥

---

करिष्यत्येव । तथासामर्थ्ये प्रयोजकं तस्य कुलीनत्वमाह—स ऋक्षेति । पुत्रः क्षेत्रज इत्यर्थः ॥ २० ॥

रा० टी०—सुग्रीवस्थानं निर्दिशन्नाह—स इति । वालिना स्वभ्रात्रा सह कृतकिल्बिषः वाल्यपराधकारीत्यर्थः, अत एव शङ्कितः भ्रातुः प्राप्तशङ्कः भास्करस्य सूर्यस्यौरसः उरसो जातः पुत्रः ऋक्षरजसस्तदभिधस्य पुत्रः क्षेत्रज इत्यर्थः, स सुग्रीवः पम्पामटति ॥ २० ॥

गो० टी०—स कस्य पुत्रः कुत्र तिष्ठतीत्यत्राह—स इति । संधिरार्षः । ऋक्षरजास्तन्मातेत्याहुः । पम्पामटति तत्तीरे पर्यटति शङ्कितः वालिनिमित्तमिति शेषः, कृतकिल्बिषः कृतवैरः ॥२०॥

२१-२४] ति० टी०—तदेवाह—भास्करस्यौरस इति । कृतकिल्बिषः कृतवैरः, अत एव वालिनः शङ्कितोऽटति तमग्निसंनिधावायुधं संनिधाय संस्थाप्य तेन सत्येन च तं कपिं वयस्यं कुरु । हि यतः स रक्षसां स्थानानि सर्वाणि जानाति ॥ २१-२४ ॥

रा० टी०—समिति । ऋष्यमूकालयम् ऋष्यमूके आलयं यस्य तं कपिं सुग्रीवम् अग्निसंनिधौ आयुधं संनिधाय सत्येन शपथेनेत्यर्थः, वयस्यं सखायं कुरु ॥ २१ ॥

गो० टी०—सख्यं च न केवलमग्निसाक्षिकं किं त्वायुधमपि संनिधाप्य कर्तव्यमित्याह—संनिधायेति । सत्येन शपथेन २१

रा० टी०—स इति । कपिकुञ्जरः कपिश्रेष्ठः स सुग्रीवः नरमांसाशिनां राक्षसानां सर्वाणि स्थानानि नैपुण्यात्स्वनिपुणतया कार्त्स्न्येनाधिगच्छति प्राप्नोति जानाति वा अत एतस्य सुग्रीवस्याविदितमज्ञातं लोके किंचिन्नास्ति । सार्धश्लोक एकान्वयी ॥ २२ ॥ २३ ॥

गो० टी०—स हीति । नरमांसाशिनां राक्षसानाम् अधिगच्छति ज्ञास्यति ॥ २२ ॥

गो० टी०—नेति । यावत्सूर्यः प्रतपति तावति लोक इत्यन्वयः ॥ २३ ॥

रा० टी०—यावदिति । सहस्रांशुः सहस्रकिरणविशिष्टः सूर्यः यावद्देशं प्रतपति तावद्देशं नदीप्रभृतीन् वानरैः सार्धमन्विष्यते पत्नीमधिगमिष्यति ज्ञात्वा बोधयिष्यति । सार्धश्लोक एकान्वयी ॥ २४ ॥

गो० टी०—स इति । अधिगमिष्यति ज्ञास्यति ॥ २४ ॥

२५ ] ति० टी०—अधिगमिष्यति ज्ञास्यति ॥ २५ ॥

२६ ] ति० टी०—रावणालये शोचन्तीमिति संबन्धः । अनेन ज्ञायते सर्वदिक्षु रावणालयाः सन्ति । तत्र किंदिक्स्थरावणालये इति ज्ञातुं सर्वदिग्विचयनम् ॥ २६ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—वानरानिति । दिशः पूर्वादिदिग्भागान् विचेतुमन्वेषितुं महाकायान्वानरान्प्रेषयिष्यति अत एव त्वद्वियोगेन शोचतीं रावणालये विद्यमानां मैथिलीम् अन्वेष्यति त्वां प्रापयिष्यति सीता रावणेनापि हृतेति ज्ञानेऽपि सर्वदिगन्वेषणोक्त्या सर्वास्वपि दिक्षु रावणालयमस्तीति सूचितम् ॥ २५ ॥ २६ ॥

गो० टी०—वानरांश्चेति सार्धश्लोकः । शोचतीं शोचन्तीम् ॥ २५ ॥ २६ ॥

२७ ] ति० टी०—अनिन्दितां निर्मलाम् अनेन सीताशुद्धत्वं ज्ञापितम् ॥ २७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे द्विसप्ततितमः सर्गः ॥ ७२ ॥

रा० टी०—स इति । प्लवङ्गमानां शाखामृगाणामृषभोऽधिपतिः स सुग्रीवः मेरुशृङ्गाग्रगतां वा पातालतले आश्रितां वा प्रविश्य रक्षांसि निहत्य अनिन्दितां नित्यं निन्दारहितां तव प्रियां पुनः प्रदास्यति ॥ २७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे द्विसप्ततितमः सर्गः ॥ ७२ ॥

---

१ प्रवर इति गो. पाठः ।

## त्रिसप्ततितमः सर्गः ।

राघवाय सुग्रीवनिवासमार्गं दर्शयित्वा कबन्धेन पम्पासर ऋष्यमूकपर्वतं च विस्तरेणोपवर्ण्य तत्रस्थेन सुग्रीवेणाग्निसाक्षिकसख्यकरणमुपदिश्य रामलक्ष्मणावनुज्ञाप्य स्वर्गं प्रति कृतं प्रस्थानम् ।

दर्शयित्वा तु रामाय सीतायाः परिमार्गणे । वाक्यमन्वर्थमर्थज्ञः कबन्धः पुनरब्रवीत् ॥ १ ॥
एष राम शिवः पन्था यत्रैते पुष्पिता द्रुमाः । प्रतीचीं दिशमाश्रित्य प्रकाशन्ते मनोरमाः ॥ २ ॥
जम्बूप्रियालपनसा न्यग्रोधप्लक्षतिन्दुकाः । अश्वत्थाः कर्णिकाराश्च चूताश्चान्ये च पादपाः ॥ ३ ॥
धन्वना नागवृक्षाश्च तिलका नक्तमालकाः । नीलाशोकाः कदम्बाश्च करवीराश्च पुष्पिताः ॥ ४ ॥
अग्निमुख्या अशोकाश्च सुरक्ताः पारिभद्रकाः । तानारुह्याथवा भूमौ पातयित्वा च तान्बलात् ॥ ५ ॥
फलान्यमृतकल्पानि भक्षयित्वा गमिष्यथः । तदतिक्रम्य काकुत्स्थ वनं पुष्पितपादपम् ॥ ६ ॥
नन्दनप्रतिमं त्वन्यत्कुरवस्तूत्तरा इव । सर्वकालफला यत्र पादपा मधुरस्रवाः ॥ ७ ॥
सर्वे च ऋतवस्तत्र वने चैत्ररथे यथा । फलभारनतास्तत्र महाविटपधारिणः ॥ ८ ॥
शोभन्ते सर्वतस्तत्र मेघपर्वतसंनिभाः । तानारुह्याथवा भूमौ पातयित्वाथवा सुखम् ॥ ९ ॥

---

गो० टी०—स इति । प्रविश्य रक्षांसि निहत्येत्यन्वयः । अनिन्दितामिति सीतायाः शुद्धत्वप्रतिज्ञा ॥ २७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने द्विसप्ततितमः सर्गः ॥ ७२ ॥

१ ] ति० टी०—परिमार्गणे उपायं दर्शयित्वा पुनर्वाक्यमब्रवीत् ॥ १ ॥

रा० टी०—कबन्धोक्तिमेव वर्णयितुमाह—निदर्शयित्वेति । सीतायाः परिमार्गणे अन्वेषणे उपायमिति शेषः, निदर्शयित्वा निबोध्य अन्वर्थं सप्रयोजनं वाक्यं अर्थज्ञः कबन्धः पुनरब्रवीत् ल्यबभाव आर्षः ॥ १ ॥

गो० टी०—अथ कबन्धः सुग्रीवस्थानमार्गं दर्शयित्वा गत इत्याह त्रिसप्ततितमे—निदर्शयित्वेत्यादि । सीतायाः प्रतिपादने प्रापणे निमित्ते निदर्शयित्वा प्रदर्श्य "क्त्वा च च्छन्दसि" इति क्त्वाप्रत्ययः । पूर्वोक्तमुपायमिति शेषः ॥ १ ॥

२ ] ति० टी०—यत्र प्रकाशन्ते तत्र गन्तुमेष शिवोऽदुष्टः पन्थाः ॥ २ ॥

रा० टी०—तद्वचनाकारमाह—एष इत्यादिभिः । हे राम ! प्रतीचीं दिशमाश्रित्य यत्र देशे पुष्पिताः अत एव मनोरमाः एते द्रुमाः प्रकाशन्ते एष एव शिवः कल्याणप्रदः पन्थाः सुग्रीवसमीपप्रापकमार्गः ॥ २ ॥

गो० टी०—ऋश्यमूकमार्गं सचिह्नं दर्शयति—एष इति । शिवः शोभनः । शोभनत्वमेवाह—यत्रेति । द्रुमान् विशेषयति सार्धद्वयेन—जम्ब्वित्यादि । प्रियालाः धनुःपटाख्या वृक्षाः, प्लक्षाः वटभेदाः, तिन्दुकाः स्फूर्जकाख्या वृक्षाः, धन्वनाः धवाः, नागवृक्षाः नागकेसराः, तिलकाः क्षुरकवृक्षाः, नक्तमालकाः चिरिबिल्वाख्याः, करवीराः प्रतिहासाख्या वृक्षाः, अग्निमुख्याः भल्लातकीवृक्षाः, सुरक्ताः रक्तचन्दनाः, पारिभद्रकाः निम्बाः ॥ २–४ ॥

३ ] ति० टी०—एते के तत्राह—जम्बु इत्यादि ॥ ३ ॥

४ ] ति० टी०—धन्वना धवाः । नागवृक्षो नागकेसरः ॥ ४ ॥

रा० टी०—जम्ब्विति । जम्ब्वादयो ये वृक्षास्तानारुह्य बलाद्भूमौ पातयित्वा वा अमृतकल्पानि अमृतसदृशानि फलानि भक्षयन्तौ युवां गमिष्यथः । तत्र धन्वनाः धवाः, नागवृक्षाः नागकेसराः, अग्निमुख्याः अरुष्कराः, सुरक्ताः रक्तचन्दनाः, पारिभद्रकाः मन्दाराः । सार्धश्लोकत्रयमेकान्वयि ॥ ३–५ ॥

५–६ ] ति० टी०—अग्निमुख्योऽरुष्करः । रक्ता रक्तचन्दनाः । पारिभद्रको मन्दारः । बलात्तान्वृक्षान्भूमौ पातयित्वा शाखां धृत्वा भूमिपर्यन्तं संनाम्य ॥ ५ ॥ ६ ॥

७ ] ति० टी०—अन्यद्द्रक्ष्यथेति शेषः । उत्तरकुरुवच्च ॥ ७ ॥

रा० टी०—तदिति । हे काकुत्स्थ ! तद्वनम् अतिक्रम्य नन्दनप्रतिमम् अन्यद्वनं प्राप्स्यथ इति शेषः, यत्र वने उत्तराः कुरव इव पादपाः वृक्षाः मधुरस्रवाः मधुच्युतः सर्वकालफलाश्च सन्तीति शेषः । सार्धश्लोक एकान्वयी ॥ ६ ॥ ७ ॥

गो० टी०—तानिति । पातयित्वा नमयित्वा तानारुह्य अथवा भूमौ तान् पातयित्वा वेत्यन्वयः ॥ ५ ॥

गो० टी०—तदिति । तद्वनमतिक्रम्य नन्दनप्रतिममन्यद्वनं पश्यतमिति शेषः । उत्तरकुरुसाम्यं सर्वकामसमृद्ध्या ॥ ६ ॥

८–९ ] ति० टी०—विटपाः शाखाः ॥ ८ ॥ ९ ॥

रा० टी०—सर्वे इति । चैत्ररथे वने यथा इव सर्वे ऋतवः तस्मिन्वने सन्तीति शेषः । अर्धं पृथक्—तत्र तस्मिन्वने फलभारनताः फलभारेणाधो गताः महाविटपधारिणः अतिबृहच्छा-

---

१ निदर्शयित्वेति गो. रा. पाठः । २ प्रतिपादन इति गो. पाठः । ३ भक्षयन्तौ गमिष्यत इति गो. रा. पाठः । ४ चान्यत्कुरवो ह्युत्तरा इति गो. पाठः । ५ कामफला वृक्षाः पादपास्तु मधुस्रवा इति गो. पाठः । ६ यथासुखमिति गो. पाठः ।

फलान्यमृतकल्पानि लक्ष्मणस्ते प्रदास्यति । चङ्क्रमन्तौ वरा[1]ञ्शैलाञ्शैलाच्छैलं वनाद्वनम् ॥ १० ॥
ततः पुष्करिणीं वीरौ पम्पां नाम [2]गमिष्यथ । अशर्करामविभ्रंशां समतीर्थाम[3]शैवलाम् ॥ ११ ॥
राम संजातवालूकां कमलोत्पलशोभिताम् । तत्र हंसाः प्लवाः क्रौञ्चाः [4]कुरराश्चैव राघव ॥ १२ ॥
वल्गु[5]स्वरा निकूजन्ति पम्पासलिलगोचराः । नोद्विजन्ते नरान्दृष्ट्वा वधस्याकोविदाः [6]पुरा ॥ १३ ॥
घृतपिण्डोपमान्स्थूलांस्तान्द्विजान्[7]भक्षयिष्यथ । रोहितां[8]श्चक्रतुण्डांश्च नलमीनांश्च राघव ॥ १४ ॥
पम्पायामिषुभिर्मत्स्यांस्तत्र राम वरान्हतान् । निस्त्वक्पक्षानयस्तप्तान[9]कृशानेककण्टकान् ॥ १५ ॥
तव भक्त्या समायुक्तो लक्ष्मणः संप्रदास्यति । भृशं [10]तान्खादतो मत्स्यान्पम्पायाः पुष्पसंचये ॥ १६ ॥
पद्मगन्धि शिवं वारि सुखशीतमनामयम् । उद्धृत्य स तदा क्लिष्टं [11]रूप्यस्फटिकसंनिभम् ॥ १७ ॥

---

खावन्तः मेघपर्वतसंनिभाः ये वृक्षाः सर्वतः शोभन्ते तानारुह्य अथवा भूमौ पातयित्वा अमृतकल्पानि फलानि सुखं यथा स्यात्तथा लक्ष्मणस्ते तुभ्यं प्रदास्यति । अर्धचतुष्टयमेकान्वयि ॥ ८ ॥ ९ ॥

गो० टी०—तद्वनं वर्णयति त्रिभिः—सर्वैरित्यादि । मधु पुष्परसं स्रवन्तीति मधुस्रवाः सर्वैः काम्यमानानि फलानि येषां ते सर्वकामफलाः ऋतवः । षट् ऋतवः वसन्तीति शेषः । चैत्ररथे कुबेरोद्याने तत्र वने महाविटपधारिणः 'विस्तारो विटपोऽस्त्रियाम्' इत्यमरः । पादपा इत्यनुषङ्गः तत्र मेघपर्वतसंनिभाः तत्र विद्यमानाः मेघपर्वता इव स्थिता इत्यर्थः ॥ ७–९ ॥

१० ] ति० टी०—चङ्क्रमन्तौ चङ्क्रम्यमाणौ ॥ १० ॥

११ ] ति० टी०-तीर्थमवतारमार्गः । अविभ्रंशां शैवलासंबन्धेन पादभ्रंशाहेतुम् ॥ ११ ॥

रा० टी०—चङ्क्रमन्ताविति । वरान् शैलान् पर्वतान् शैलात् शैलं शैलान्तरं च वनाद्वनं च चङ्क्रमन्तौ चङ्क्रम्यमाणौ युवाम् अशर्करां शर्करारहिताम् अविभ्रंशां न विभ्रंशः अधःपतनकारकः कर्दमस्तीरे यस्यां तां समतीर्थां वैषम्यरहितघट्टविशिष्टाम् अशैवलां शैवलरहितां संजातवालूकां संजाता शिलासंघर्षेण समुद्भूता वालुका यस्यां तां कमलोत्पलशोभितां कमलैः उत्पलैः श्यामकमलैश्च शोभितां पम्पां नाम पुष्करिणीं ततस्तस्मिन्काले गमिष्यथः । वालूकामित्यत्र दीर्घ आर्षः । अर्धचतुष्टयमेकान्वयि ॥ १० ॥ ११ ॥

गो० टी०—चङ्क्रमन्ताविति । श्लोकद्वयमेकं वाक्यम् । चङ्क्रमन्तौ चङ्क्र[12]मंमाणौ पुनः पुनः गच्छन्तौ पुष्करिणीं सरसीम् अशर्करां शर्करारहिताम् अविभ्रंशाम् अशिथिलतटां समतीर्थाम् अवतारस्थलेऽतिनिम्नत्वात्यगाधत्वरहितां संजातवालूकाम् अपङ्कतया संहतसिकतां दीर्घ आर्षः ॥ १० ॥ ११ ॥

१२ ] ति० टी०—संजातवालूकामिति दीर्घ आर्षः । प्लवा मण्डूकाः ॥ १२ ॥

रा० टी०—तत्रेति । पम्पासलिलगोचराः पम्पाजलमात्रनिवासिनः पुरा पूर्वं वधस्याकोविदाः अविज्ञातारः वल्गुस्वनाः हंसादयस्तत्र पम्पायां निकूजन्ति नरान्दृष्ट्वा उद्विजन्ते च न सार्धश्लोक एकान्वयी ॥ १२ ॥ १३ ॥

गो० टी०—तत्रेति । प्लवाः मण्डूकाः हंसभेदा वा कुररा क्रौञ्चभेदाः वल्गुस्वनाः रम्यस्वनाः सलिलगोचराः सलिलचारिणः गोचरः संचारः ॥ १२ ॥

१३ ] ति० टी०—वधस्याकोविदा वधमजानानाः ॥ १३ ॥

गो० टी०—नेति । वधस्याकोविदाः वधमजानानाः नोद्विजन्ते न बिभ्यति । द्विजा इति शेषः तानित्यनुवादात् ॥ १३ ॥

१४ ] ति० टी०—द्विजान्पक्षिणः । रोहिता मत्स्यविशेषाः चक्रतुण्डा नलमीनाश्च त एव ॥ १४ ॥

१५ ] ति० टी०—अयस्तप्तान्शूलाग्रे पक्वान् । अकृशा अनेके च कण्टका येषां विद्यन्ते तान् ॥ १५ ॥

रा० टी०—घृतेति । इषुभिर्बाणाग्रभागैर्निस्त्वक्पक्षान् निर्गतवल्कलपरिग्रहणान् अत एव न एकोऽपि कण्टको येषु तान् अत एव घृतपिण्डोपमान् अकृशान् अशुष्कानित्यर्थः, अयस्तप्तान् अयसा वह्नौ बाणाग्रभागगृहीतेन तप्तान् परिपक्वान् यान् भक्ष्यान् मूलफलसमूहान् तव भक्त्या समायुक्तो लक्ष्मणः तव तुभ्यं संप्रदास्यति तान् स्थूलान् द्विजान् पक्षिणः तान् प्रसिद्धान् वरान् श्रेष्ठान् रोहितादींश्च ह प्रसिद्धं भक्षयिष्यथः भोजयिष्यथः । सार्धश्लोकद्वयमेकान्वयि ॥ १४ ॥ १५ ॥

गो० टी०—रोहितानित्यादिश्लोकद्वयम् । रोहितान् पितृप्रियमत्स्यभेदान् वक्रतुण्डान् वक्रमुखमत्स्यान् नडमीनान् नडाख्यतृणविशेषस्तम्बसंचारशीलान् मत्स्यान् वरान् श्रेष्ठान् अयस्तप्तान् अयःशूलाग्रप्रोततया पक्वान् कृशाश्चानेककण्टकाश्च ते न भवन्तीत्यकृशानेककण्टकाः तान् ॥ १४ ॥ १५ ॥

१६ ] ति० टी०—पुष्पसंचये पद्मादिपुष्पसमूहे वर्तमानम् १६

१७ ] ति० टी०—अत एव पद्मगन्धि । अक्लिष्टं मलादिकश्मलहीनम् ॥ १७ ॥

रा० टी०—भृशमिति । पद्मगन्धविशिष्टं शिवं कल्याणप्रदं सुखशीतं सुखं सुखप्रदं शीतं शैत्यं यस्य तत् अनामयं रोगनिवर्तकम् अक्लिष्टं मलादिबाधारहितम् अत एव रूप्यस्फ-

---

१ देशानिति गो. पाठः । २ गमिष्यथः इति गो. रा. पाठः । ३ शालिनीमिति गो. पाठः । ४ कुरव इति रा. पाठः । ५ स्वना इति गो. रा. पाठः । ६ शुभा इति गो. पाठः । ७ भक्षयिष्यथः इति गो. रा. पाठः । ८ वक्रतुण्डांश्च नडेति गो. पाठः । ९ अकृशान्नैककण्टकानिति रा. पाठः । १० ते इति गो. तान् खादते इति रा. पाठः । ११ रौप्यस्फाटिकेति गो. पाठः । १२ चङ्क्रम्यमाणाविति युक्तं भाति ।

अथ पुष्करपर्णेन लक्ष्मणः पाययिष्यति । स्थूलान्गिरिगुहाशय्यान्वानरान्वनचारिणः ॥ १८ ॥
सायाह्ने विचरन्राम दर्शयिष्यति लक्ष्मणः । अपां लोभादुपावृत्तान्वृषभानिव नर्दतः ॥ १९ ॥
स्थूलान्पीतांश्च पम्पायां द्रक्ष्यसि त्वं नरोत्तम । सायाह्ने विचरन्राम विटपी माल्यधारिणः ॥ २० ॥
शिवोदकं च पम्पायां दृष्ट्वा शोकं विहास्यसि । सुमनोभिश्चितास्तत्र तिलका नक्तमालकाः ॥ २१ ॥
उत्पलानि च फुल्लानि पङ्कजानि च राघव । न तानि कश्चिन्माल्यानि तत्रारोपयिता नरः ॥ २२ ॥
न च वै म्लानतां यान्ति न च शीर्यन्ति राघव । मतङ्गशिष्यास्तत्रासन्नृषयः सुसमाहिताः ॥ २३ ॥
तेषां भाराभितप्तानां वन्यमाहरतां गुरोः । ये प्रपेतुर्महीं तूर्णं शरीरात्स्वेदबिन्दवः ॥ २४ ॥
तानि माल्यानि जातानि मुनीनां तपसा तदा । स्वेदबिन्दुसमुत्थानि न विनश्यन्ति राघव ॥ २५ ॥

---

टिकसंनिभं वारि पम्पाजलं स लक्ष्मणः पुष्करपत्रेण कमलपर्णेन उद्धृत्य पुष्पसंचये कमलपुष्पसमूहसमीपे मत्स्यान् मत्स्यत्वेन प्रतीयमानान् फलादीनित्यर्थः, भृशं खादते पक्ष्यादये पाययिष्यति । श्लोकद्वयमेकान्वयि ॥ १६ ॥ १७ ॥

गो० टी०–भृशमित्यादिद्वावेकान्वयौ । पुष्पसंचये पुष्पसमूहे वर्तमानम् अत एव सुगन्धि शिवं पापापहं सुखशीतं नातिशीतमित्यर्थः । अनामयम् अव्याधिकरमित्यर्थः । एवंभूतं वारि पुष्करपर्णेन पद्मपत्रेण पम्पाया उद्धृत्य पाययिष्यति ॥ १६ ॥ १७ ॥

१८–१९ ] ति० टी०–पुष्करपर्णेन पद्मपर्णेनोद्धृत्य मत्स्यान्खादतस्ते जलं पाययिष्यतीति संबन्धः । गिरिगुहासु शय्याऽऽसनं येषां तान् ॥ १८ ॥ १९ ॥

रा० टी०–स्थूलानिति । गिरिगुहाशय्यान् गिरिगुहायां शय्या शयनं येषां तान् लक्ष्मणो दर्शयिष्यति अत एव अपां जलस्य लोभात् दुरावृत्तान् बहिर्निर्गतान् वृषभानिव नर्दतः रूपान्वितान् शोभनरूपविशिष्टान् वानरान् पम्पायां द्रक्ष्यसि । श्लोकद्वयमेकान्वयि ॥ १८ ॥ १९ ॥

गो० टी०–स्थूलानित्यादिसार्धश्लोक एकान्वयः । गिरिगुहायां शय्या येषां तान् रूपान्वितान् सौन्दर्यवतः ॥ १८ ॥ १९ ॥

२० ] ति० टी०–पीताञ्जलपानं कृतवतः । विटपी विटपिनः आर्षमेकत्वं प्रथमान्तत्वम् । माल्यधारिणः पुष्पवतस्तान्दृष्ट्वा शीतोदकं च दृष्ट्वा शोकं हास्यसि ॥ २० ॥

रा० टी०–सायाह्न इति । हे राम ! माल्यधारिणः पुष्पवतः विटपी विटपिनः प्रशस्तशाखावतः वृक्षान् सायाह्ने विचरन् त्वं पम्पायां शीतोदकं दृष्ट्वा शोकं विहास्यसि ॥ २० ॥

गो० टी०–सायाह्न इति । विटपीन् विटपिनः इनिप्रत्ययस्य नलोप आर्षः । माल्यधारिणः पुष्पधारिणः पुष्पविकासहेतुत्वात् सायाह्न इत्युक्तम् ॥ २० ॥

२१ ] ति० टी०–अन्यान्यपि शोकहन्तॄणि दर्शनीयान्याह–सुमनोभिरिति ॥ २१ ॥

रा० टी०–सुमनोभिरिति । तत्र पम्पासमीपे सुमनोभिः पुष्पैः चिताः संपन्नाः तिलका नक्तमालका वृक्षविशेषाः फुल्लानि विकसितानि उत्पलानि नीलकमलानि पङ्कजानि तदितरकमलानि च सन्तीति शेषः, तानि माल्यानि पुष्पाणि आरोपयिता प्रगृह्य संधर्ता नरो मनुष्यो नास्ति नरसंचाराभावादिति तात्पर्यं तेन तानि धारयिष्यथ इति व्यञ्जितम् । अर्धद्वयमेकान्वयि ॥ २१ ॥

गो० टी०–सुमनोभिरिति । सुमनोभिः चितान् निरन्तरान् उत्पलानि इन्दीवराणि दृष्ट्वा शोकं विहास्यसीत्यत्राप्यनुषज्यते ॥ २१ ॥

२२ ] ति० टी०–आरोपयिता गृहीत्वा धारयिता । महावनत्वान्मनुष्यसंचाराभावेनेत्यर्थः ॥ २२ ॥

रा० टी०–तन्माल्यानामद्भुतत्वमाह–नेति । म्लानतां न यान्ति शीर्यन्ति च न माल्यानीति शेषः ॥ २२ ॥

गो० टी०–न तानीति । आरोपयिता गृहीत्वा ग्रथिता वनविस्तारात्पुष्पबाहुल्याच्च तानि म्लानतां न यान्ति न शीर्यन्ति न शीर्यन्ते शीर्णदलानि न भवन्तीत्यर्थः । मतङ्गशिष्यप्रभावाद्वा अनारोपणम् ॥ २२ ॥

२३ ] ति० टी०–अम्लानाशीर्णत्वे हेतुः–मतङ्गेत्यादि ॥ २३ ॥

२४ ] ति० टी०–भारेण तप्तानां गुर्वर्थे आह्रियमाणवन्यभारेण श्रान्तानाम् ॥ २४ ॥

२५ ] ति० टी०–तानि माल्यानीति विधेयापेक्षं क्लीबत्वम् ॥ २९ ॥

रा० टी०–तत्र हेतुमाह–मतङ्गेति । सुसमाहिताः मतङ्गशिष्या ऋषयः तत्र पम्पासमीपे आसन् । अर्धं पृथक्–तेषामिति । गुरोः गुरवे वन्यं फलाद्याहरताम् अत एव भाराभितप्तानां तेषां मतङ्गशिष्याणां शरीराद्ये स्वेदबिन्दवः महीं प्रपेतुः ते मुनीनां तपसा तपःप्रभावेण माल्यानि पुष्पाणि जातानि उत्पन्नानि अत एव स्वेदबिन्दुसमुत्थानि

---

१ असाविति गो. पाठः । २ पत्रेणेति रा. पाठः । ३ वराहानिति गो. पाठः । ४ अर्धमेतत् गो. नास्ति । ५ दुरावृत्तानिति रा. पाठः । ६ रूपान्वितानिति गो. पाठः । ७ विटपीनिति गो. पाठः । ८ शीतोदकं च पम्पाया इति गो. शीतोदकमिति रा. पाठः । ९ चितानिति गो. पाठः । १० तिलकान्नक्तमालकानिति गो. पाठः । ११ म्लानतामिति गो. रा. पाठः ।

तेषां गतानामद्यापि दृश्यते परिचारिणी । श्रमणी शबरी नाम काकुत्स्थ चिरजीविनी ॥ २६ ॥
त्वां तु धर्मे स्थिता नित्यं सर्वभूतनमस्कृतम् । दृष्ट्वा देवोपमं राम स्वर्गलोकं गमिष्यति ॥ २७ ॥
ततस्तद्राम पम्पायास्तीरमाश्रित्य पश्चिमम् । आश्रमस्थानमतुलं गुह्यं काकुत्स्थ पश्यसि ॥ २८ ॥
न तत्राक्रमितुं नागाः शक्नुवन्ति तदाश्रमे । [ विविधास्तत्र वै नागा येन तस्मिंश्च पर्वते ।]
ऋषेस्तस्य मतङ्गस्य विधानात्तच्च काननम् ॥ २९ ॥
मतङ्गवनमित्येव विश्रुतं रघुनन्दन । तस्मिन्नन्दनसंकाशे देवारण्योपमे वने ॥ ३० ॥
नानाविहगसंकीर्णे रंस्यसे राम निर्वृतः । ऋष्यमूकस्तु पम्पायाः पुरस्तात्पुष्पितद्रुमः ॥ ३१ ॥
सुदुःखारोहणश्चैव शिशुनागाभिरक्षितः । उदारो ब्रह्मणा चैव पूर्वकालेऽभिनिर्मितः ॥ ३२ ॥

---

तानि न विनश्यन्ति अन्यथाभावं प्राप्नुवन्ति । अर्धचतुष्टयमेकान्वयि ॥ २३-२६ ॥

गो० टी०-अग्राह्यत्वाम्लानत्वादौ निमित्तमाह-मतङ्गेति । सार्धश्लोकद्वयमेकान्वयम् । मतङ्गो नाम महाप्रभावो महर्षिः तत्र पम्पातीरे सुष्ठु समाहितं समाधिर्येषां ते तथा वन्यमाहरताम् अत एव भाराभितप्तानां तानीति विधेयापेक्षया नपुंसकत्वं स्वेदबिन्दुसमुत्थानीति हेतुगर्भविशेषणं स्वेदबिन्दवो वायुना वृक्षोपरि नीता माल्यानि जातानीत्याशयः ॥२३॥२४॥

२६ ] ति० टी०-शबरी नाम शबरीत्याख्या श्रमणी तापसी ॥ २६ ॥

रा० टी०-तेषामिति । गतानां तपोर्जितलोकं प्राप्तानां तेषां मतङ्गशिष्याणां परिचारिणी दासी अत एव श्रमणी तपोनिरता अत एव चिरजीविनी शबरी नाम अद्यापि दृश्यते॥२६॥

गो० टी०-तेषामिति । तेषां मतङ्गशिष्याणां परिचारिणी श्रमणी संन्यासिनी शबरीति नाम शबरीति प्रसिद्धा ॥ २६ ॥

२७ ] ति० टी-त्वां दृष्ट्वा स्वर्गलोकं गमिष्यति । पूर्वार्जिततपसस्त्वद्दर्शनस्य च माहात्म्यात्स्वर्गलोकोऽत्र ब्रह्मलोक इति वदन्ति । 'देवलोकम्' इति पाठेऽपि स एवार्थः ॥२७॥

रा० टी०-त्वामिति । धर्मे स्थिता नित्यं स्वधर्मे निरता शबरी त्वां दृष्ट्वा स्वर्गलोकं गमिष्यति । एतेन त्वद्दर्शनावध्येव तस्या इहावस्थानमिति सूचितं तेन तस्याः रामदिदृक्षा व्यञ्जिता ॥ २७ ॥

गो० टी०-त्वामिति । धर्मे गुरुपरिचरणधर्मे ॥ २६ ॥

२८ ] ति० टी०-तदाश्रमस्थानं शबरीवासरूपं मतङ्गाश्रमस्थानम् गुह्यमाश्रमेषु गुह्यम् ॥ २८ ॥

रा० टी०-तत इति । ततोऽनन्तरं हे राम ! पम्पायाः पश्चिमं तीरम् आश्रित्य विद्यमानम् अतुलम् अनुपमं, गुह्यं जनैरगम्यत्वेन गुप्तं तत्प्रसिद्धम् आश्रमस्थानम् अत्यन्तश्रमनिवर्तकमतङ्गकुटीं पश्यसि ॥ २८ ॥

गो० टी०-तत इति । तत् शबर्यावासभूतं गुह्यम् इतरैरदर्शनीयं पश्यसि द्रक्ष्यसि ॥ २७ ॥

२९ ] ति० टी०-नागा गजाः । तत्र तदाश्रमे तस्मिन्मतङ्गाश्रमे इत्यर्थः । यद्यपि तत्र विविधा नागाः सन्ति, तथापि मतङ्गस्य विधानात्प्रभावात्तदेकदेशमतङ्गाश्रमे न संचार इत्यर्थः॥२९॥

रा० टी०-तद्गुह्यत्वमेव प्रकटयन्नाह-नेति । तत्र तदाश्रमसमीपे तस्मिन्प्रसिद्धे वने पर्वते च विविधाः ये नागाः गजाः सन्तीति शेषः, तेऽपि नागाः तत्र तस्मिन् तदाश्रमे मतङ्गस्थाने आक्रमितुं न शक्नुवन्ति एतेन मतङ्गस्य प्रभावातिशयः सूचितः ॥ २९ ॥

रा० टी०-ऋषेरिति । तत् आश्रमसमीपस्थं यत् काननं वनं तत् मतङ्गस्य ऋषेः विधानात् निर्माणादेव मतङ्गवनमिति विश्रुतं प्रख्यातम् ॥ ३० ॥

गो० टी०-न तत्रेति । तस्मिन् वने वक्ष्यमाणे ऋश्यमूकपर्वते च विविधाः नागाः गजाः सन्ति तथापि तमाश्रमं तत्र प्रदेशे स्थिताः नागाः नाक्रमितुं शक्नुवन्ति ॥ २८ ॥

गो० टी०-अनाक्रमणे हेतुमाह-ऋषेरिति । तस्य पूर्वोक्तस्य विधानात् निर्माणात् तत्काननं जातमिति शेषः ॥ २९ ॥

३० ] ति० टी०-अतस्तच्च वनं मतङ्गवनमित्येव विश्रुतम् । देवारण्यं नन्दनादि तत्सदृशम् ॥ ३० ॥

रा० टी०-तस्मिन्निति । नन्दनसंकाशे नन्दनेन फलपुष्पसंपद्वया संकाशः अतिशोभा यस्य तस्मिन्देवारण्योपमे नन्दनचैत्ररथादिसदृशे नानाविहगसंकीर्णे अनेकविधपक्षिसंकुले तस्मिन्वने निर्वृतः आनन्दयुक्तः सन् रंस्यसे ॥ ३१ ॥

गो० टी०-तस्मिन्निति । देवारण्यं चैत्ररथादि निर्वृतः निवृत्तदुःख इत्यर्थः ॥ ३० ॥

३१ ] ति० टी०-पम्पायाः पम्पातीरवर्तिमतङ्गाश्रमादित्यर्थः ॥ ३१ ॥

३२ ] ति० टी०-सुदुःखारोहणोऽत्युच्चत्वात् । हेत्वन्तरमप्याह-शिशुभिर्नागैः सर्पैरभिरक्षितः । उदारो दाता । ब्रह्मणा पूर्वकाले सृष्टिकाले निर्मितो विद्योदार्यतपःप्राधान्येन निर्मितः॥ ३२॥

रा० टी०-ऋष्यमूक इति । पम्पायाः पम्पातीरवर्तिमतङ्गाश्रमात् पुरस्तात् पूर्वदिग्भागे पुष्पितद्रुमः पुष्पिताः द्रुमाः

---

१ अद्यापि तत्रैवेति गो. पाठः । २ तमाश्रममिति गो. पाठः । ३ अर्धमेतदधिकं गो.पाठे । ४ तत्रेति गो. पाठः । ५ अर्धमेतत् गो. नास्ति । ६ ऋश्येति गो. पाठः । ७ चेति गो. पाठः । ८ नामेति गो. पाठः ।

शयानः पुरुषो राम तस्य शैलस्य मूर्धनि । यः[1] स्वप्ने लभते वित्तं तत्प्रबुद्धोऽधिगच्छति ॥ ३३ ॥
[ न[2] त्वेनं विषमाचारः पापकर्माधिरोहति । ]
य[3]स्त्वेनं विषमाचारः पापकर्माऽधिरोहति । तत्रैव प्रहरन्त्येनं सुप्तमादाय राक्षसाः ॥ ३४ ॥
त[4]तोऽपि शिशुनागानामाक्रन्दः श्रूयते महान् । क्रीडतां रामपम्पायां मतङ्गाश्रमवासिनाम् ॥ ३५ ॥
स[5]क्ता रुधिरधाराभिः सं[6]हत्य परमद्विपाः । प्रचरन्ति पृथक्कीर्णा मेघवर्णास्तरस्विनः ॥ ३६ ॥
ते तत्र पीत्वा पानीयं विमलं [7]चारु शोभनम् । अत्यन्तसुखसंस्पर्शं सर्वगन्धसमन्वितम् ॥ ३७ ॥
निवृत्ताः संविगाहन्ते वनानि वनगोचराः । ऋक्षांश्च द्वीपिनश्चैव नीलकोमलकप्रभान् ॥ ३८ ॥
रुरू[8]नपेतानजयान्दृष्ट्वा शोकं प्र[9]हास्यसि । राम तस्य तु शैलस्य महती शोभते गुहा ॥ ३९ ॥

---

यस्मिन्सः शिशुनागाभिरक्षितः शिशुनागैः बालसर्पैर्बालगजैश्च अभिरक्षितः अत एव सुदुःखम् अतिदुःखप्रदम् आरोहणं यस्य सः उदारः अभीष्टदाता पूर्वकाले सृष्ट्यादौ ब्रह्मणाऽभिनिर्मितः ऋष्यमूकः तदभिधपर्वतः अस्तीति शेषः, तदर्थस्तु ऋषीणां तत्र प्राप्तानाम् अमूकः मूकतानिवृत्तिः अज्ञानध्वंस इति यावत् यस्मात्सः । सार्धश्लोक एकान्वयी ॥ ३२ ॥ ३३ ॥

गो० टी०—एवमनुग्रहार्थं शबर्याश्रमं गत्वा पुनः पम्पायाः पुरस्तादृश्यमूको गन्तव्य इत्याह सार्धश्लोकेन—ऋश्येति । ऋश्या मृगविशेषाः मूकाः निःशब्दा भवन्ति यस्मिन् स ऋश्यमूकः सुदुःखमारोहणं यस्य स तथा । तत्र हेतुः—शिशुनागाभिरक्षित इति । अत्र नागाः गजा एव विविधास्तत्र वै नागा इति पूर्वमुक्तत्वात् । उदारः प्रशस्तः पूर्वकाले ब्रह्मणा उदारः प्रशस्तो निर्मितः कुत्रचिन्निमित्ते अयं प्रशस्तो भवत्वित्यनुगृहीत इत्यर्थः ॥ ३१ ॥

३३ ] ति० टी०—औदार्यमेव दर्शयति—शयान इति ॥ ३३ ॥

रा० टी०—तत्प्रभावं वर्णयन्नाह—शयान इति । हे राम ! तस्य ऋष्यमूकस्य मूर्धनि शिखरे शयानः यः पुरुषः स्वप्ने यत् वित्तं लभते सः प्रबुद्धः निवृत्तनिद्रः सन् तद्वित्तमधिगच्छति प्राप्नोति ॥ ३४ ॥

गो० टी०—प्राशस्त्यमाह—शयान इति ॥ ३२ ॥ ३३ ॥

३४ ] ति० टी०—अन्यमप्यतिशयमाह—य इति । तत्रैव पर्वतमूर्धन्येव ॥ ३४ ॥

रा० टी०—य इति । पापकर्मा अत एव विषमाचारः यः पुरुषः एनं पर्वतमधिरोहति तं तत्रैव सुप्तमेनं पुरुषं राक्षसाः तत्प्रभावजनितरक्षोविशेषाः तत्र पर्वते एव प्रहरन्ति ॥ ३५ ॥

गो० टी०—अतिशयान्तरमाह—यस्त्विति ॥ ३४ ॥

३५ ] ति० टी०—शिशुनागानां बालगजानाम् ॥ ३५ ॥

रा० टी०—तत इति । ततः तत्र मतङ्गाश्रमवासिनां पम्पायां क्रीडतां शिशुनागानां बालगजानां महान् आक्रन्दः शब्दः श्रूयते ॥ ३६ ॥

गो० टी०—तत्रापीति । शिशुनागानां कलभानां तत्रापीत्यत्रापिशब्दात् पम्पादिकं समुच्चीयते । अनेन ऋश्यमूकस्य पम्पासामीप्यमुक्तम् ॥ ३५ ॥

३६–३७ ] ति० टी०—रुधिरधाराभिरीषद्रक्तमदधाराभिः सक्ताः संबद्धाः संहत्य संभूय संचरन्ति पृथक्कीर्णाश्चरन्ति ३६ ॥ ३७

रा० टी०—सक्ता इति । रुधिरधाराभिः ईषदरुणमदप्रवाहैः सक्ताः युक्ता मेघवर्णाः तरस्विनो वेगवन्तो वनगोचराः वनमात्रनिवासिनो ये परमद्विपाः महागजाः संहत्य स्वस्वसजातीयैर्मिलित्वा पृथक् कीर्णाः विजातीयेभ्यो भिन्नाः सन्तः प्रचरन्ति । ते परमगजाः तत्र पम्पायां विमलं पानीयं पीत्वा निर्वृताः प्राप्तानन्दाः सन्तो वनानि संविगाहन्ते तान् दृष्ट्वा शोकं प्रहास्यसीत्यपकृष्यते । सार्धश्लोकद्वयमेकान्वयि ॥ ३७ ॥ ३८ ॥

गो० टी०—सिक्ता इति । संहत्य अन्योन्यं प्रहृत्य रुधिरधाराभिः सिक्ताः अत एव पृथक्कीर्णाः चरन्ति ॥ ३६ ॥

गो० टी०—त इति । संविगाहन्ते प्रविशन्ति ॥ ३७ ॥

३८ ] ति० टी०—नीलमणिवत्कोमलकान्तीन् ॥ ३८ ॥

रा० टी०—ऋक्षानिति । नीलकोमलकप्रभान् नीलमणिसदृशकोमलकप्रभावतः प्राप्तान् ऋक्षान् द्वीपिनो व्याघ्रांश्च अपेतान् वधशङ्कायाः अभावेन समीपे प्राप्तान् अजयान् मनुष्यजयरहितान् रुरून् मृगविशेषांश्च दृष्ट्वा शोकं प्रहास्यसि ॥ ३९ ॥

गो० टी०—ऋक्षांश्चेति । द्वीपिनः व्याघ्रान् नीलकोमलकप्रभान् नीलरत्नवन्मनोज्ञप्रभान् रुरून् मृगविशेषान् अपेतापजयान् जयशीलानित्यर्थः । जहिष्यसि त्यक्ष्यसि ॥ ३८ ॥

३९ ] ति० टी०—अपेतान्मनुष्यं दृष्ट्वा पलायितान् अजयान्प्राणिजयहीनान् अनेनाक्रूरता । अथासाधारणं चिह्नमाह—रामेति ॥ ३९ ॥

रा० टी०—रामेति । हे राम ! महती विशाला शिलापिधाना शिला पिधानमाच्छादनं यस्याः सा तस्य ऋष्यमूकस्य गुहा शोभते अस्याः गुहायाः प्रवेशनं सुग्रीवाद्यन्यकर्तृकप्रवेशः दुःखं प्रवेष्टुमशक्यमित्यर्थः ॥ ४० ॥

गो० टी०—रामेति । शिला अपिधानमाच्छादनं यस्याः सा

---

१ यदिति गो. पाठः । २ अर्धमेतदधिकं गो. पाठे । ३ यस्तु तमिति गो. पाठः । ४ तत्रेति गो. पाठः । ५ अरण्येति गो. पाठः । ६ सिक्ता इति गो. पाठः । ७ संहृत्येति गो. पाठः । ८ शीतमव्ययमिति गो. पाठः । ९ अर्धमेतत् गो. नास्ति । १० अपेतापजयानिति गो. पाठः । ११ जांहेष्यसीति गो. पाठः ।

शिलापिधाना काकुत्स्थ दुःखं चास्याः प्रवेशनम् । तस्या गुहायाः प्राग्द्वारे महाञ्शीतोदको ह्रदः ॥ ४० ॥
बहुमूलफलो रम्यो नानानगसमाकुलः । तस्यां वसति धर्मात्मा सुग्रीवः सह वानरैः ॥ ४१ ॥
कदाचिच्छिखरे तस्य पर्वतस्यापि तिष्ठति । कबन्धस्त्वनुशास्यैवं तावुभौ रामलक्ष्मणौ ॥ ४२ ॥
स्रग्वी भास्करवर्णाभः खे व्यरोचत वीर्यवान् । तं तु खस्थं महाभागं तावुभौ रामलक्ष्मणौ ॥ ४३ ॥
प्रस्थितौ त्वं व्रजस्वेति वाक्यमूचतुरन्तिके । गम्यतां कार्यसिद्ध्यर्थमिति तावब्रवीत्स च ॥ ४४ ॥
सुप्रीतौ तावनुज्ञाप्य कबन्धः प्रस्थितस्तदा ॥ ४५ ॥

स तत्कबन्धः प्रतिपद्य रूपं वृतः श्रिया भास्वरसर्वदेहः ।
निदर्शयन्राममवेक्ष्य खस्थः सख्यं कुरुष्वेति तदाभ्युवाच ॥ ४६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे त्रिसप्ततितमः सर्गः ॥ ७३ ॥

---

अस्या गुहायाः प्रवेशनं दुःखं दुःखकरम् उन्नतस्थानस्थितत्वादिति भावः ॥ ३९ ॥

४० ] ति० टी०—शिलापिधानेति गुहानामेति तीर्थः विशेषणमित्यन्ये ॥ ४० ॥

रा० टी०—तस्या इति । तस्याः गुहायाः प्राग्द्वारे बहुमूलफलः अनेकविधमूलफलविशिष्टः अत एव रम्यः नानानगसमाकुलः अनेकविधनगैर्व्याप्तः महान् विशालः शीतमुदकं यस्य स ह्रदः गुहायाः प्राग्द्वारे अस्तीति शेषः ॥ ४१ ॥

गो० टी०—तस्या इति । महान् विशालः अस्तीति शेषः फलमूलान्वितः फलमूलान्विततीरः ॥ ४० ॥

४१ ] ति० टी०—तस्यां गुहायाम् ॥ ४१ ॥

रा० टी०—तस्यामिति । धर्मात्मा सुग्रीवः तस्यां गुहायां वसति कदाचित्पर्वतस्य शिखरेऽपि तिष्ठति ॥ ४२ ॥

गो० टी०—तस्यामिति । कदाचित् भूमाविति सिद्धम् ४१

४२-४३ ] ति० टी०—कदाचित्पर्वतस्य शिखरेऽपि तिष्ठति अपिधानश्च ॥ ४२ ॥ ४३ ॥

रा० टी०—कबन्ध इति । भास्करवर्णाभः सूर्यवर्णसदृशवर्णविशिष्टः स्रग्वी मालावान्कबन्धः रामलक्ष्मणावनुशास्य ख आकाशे व्यरोचत ॥ ४३ ॥

गो० टी०—कबन्ध इति । अनुशास्य उपदिश्य स्रगस्यास्तीति स्रग्वी "अस्मायामेधास्रजो विनिः" इति विनिप्रत्ययः । भास्करवर्णाभः सूर्यप्रभातुल्यप्रभः खे व्यरोचत रामानुज्ञानार्थं क्षणमतिष्ठदित्यर्थः ॥ ४२ ॥

रा० टी०—तमिति । खस्थमाकाशस्थं तं कबन्धं प्रस्थितौ रामलक्ष्मणौ त्वं व्रजस्वेति वाक्यमूचतुः स कबन्धोऽपि अन्तिके निकटे विद्यमानौ यौ रामलक्ष्मणौ कार्यसिद्ध्यर्थं गम्यतामित्यब्रवीत् । सार्धश्लोक एकान्वयी ॥ ४४ ॥ ४५ ॥

गो० टी०—तं त्विति । प्रस्थितौ सन्तौ सुखं व्रजस्व व्रज इति अन्तिके ऊचतुः अन्तिके प्रस्थिताविति कबन्धसमीपमागत्योचतुरित्यर्थः ॥ ४३ ॥

४४-४५ ] ति० टी०—प्रस्थितावावां सुग्रीवसमीपं प्रस्थितौ त्वं व्रजस्व पुण्यलोकमिति शेषः । अन्तिके समीपे वर्तमानं देवभूतं तावूचतुः । स ताभ्यां कृतानुमतिकः कबन्धः ॥ ४४ ॥ ४५ ॥

रा० टी०—सुप्रीताविति । तदा तस्मिन्काले सुप्रीतौ रामलक्ष्मणावनुज्ञाप्य कबन्धः प्रस्थितः अभवदिति शेषः । अर्धं पृथक् । उपसंहरन्नाह—स इति । श्रिया सर्वसंपत्त्या वृतो युक्तः अत एव भास्वरसर्वदेहः भास्वरः प्रकाशमानः सर्वदेहः सावयवशरीरं यस्य सः खस्थः स कबन्धः तदद्भुतं रूपं प्रतिपद्य रामं चावेक्ष्य सख्यं कुरुष्व इति निदर्शयन्सन्नभ्युवाच ॥ ४६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे त्रिसप्ततितमः सर्गः ॥ ७३ ॥

गो० टी०—गम्यतामिति । प्रस्थितः स्वर्गमिति शेषः ॥ ४४ ॥

४६ ] ति० टी०—उक्तार्थोपसंहारः—स तदिति । निदर्शयन् मार्गादिकमिति शेषः, किंचिद्दूरं गत्वा पुना राममवेक्ष्य सख्यं कुरुष्वेत्युवाच ॥ ४६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे त्रिसप्ततितमः सर्गः ॥ ७३ ॥

गो० टी०—उक्तमर्थं सर्गान्ते संगृह्णाति—स इति । तत्पूर्वोक्तं रूपं शरीरं रामं प्रति निदर्शयन् सख्यं कुरुष्व सुग्रीवेणेति शेषः ॥ ४६ ॥

अस्मिन् सर्गे पञ्चचत्वारिंशच्छ्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने त्रिसप्ततितमः सर्गः ॥ ७३ ॥

---

१ फलमूलान्वित इति गो. पाठः । २ मृगसमावृत इति गो. पाठः । ३ सुग्रीवश्चतुर्भिरिति गो. पाठः । ४ अवतिष्ठते इति गो. पाठः । ५ भास्करतुल्येति गो. पाठः ।

## चतुःसप्ततितमः सर्गः ।

कबन्धदर्शितमार्गेणानुगच्छन्तौ प्राप्ताश्रमौ रामलक्ष्मणौ पम्पापश्चिमतीरस्थस्वाश्रमस्था शबर्यानर्च । मतङ्गर्षेस्तच्छात्राणां नानाविधतपःप्रभावोद्योतकप्रदेशान्दर्शयन्ती रामेण कृताभ्यनुज्ञा शबरी वह्नौ देहत्यागात्प्राप्तदिव्यशरीरा सती महर्ष्याचार्याध्युषितं दिव्यलोकं जगाम ।

तौ कबन्धेन तं मार्गं पम्पाया दर्शितं वने । आतस्थतुर्दिशं गृह्य प्रतीचीं नृवरात्मजौ ॥ १ ॥
तौ शैलेष्वाचितानेकान्क्षौद्रपुष्पफलद्रुमान् । वीक्षन्तौ जग्मतुर्द्रष्टुं सुग्रीवं रामलक्ष्मणौ ॥ २ ॥
कृत्वा तु शैलपृष्ठे तु तौ वासं रघुनन्दनौ । पम्पायाः पश्चिमं तीरं राघवावुपतस्थतुः ॥ ३ ॥
तौ पुष्करिण्याः पम्पायास्तीरमासाद्य पश्चिमम् । अपश्यतां ततस्तत्र शबर्या रम्यमाश्रमम् ॥ ४ ॥
तौ तमाश्रममासाद्य द्रुमैर्बहुभिरावृतम् । सुरम्यमभिवीक्षन्तौ शबरीमभ्युपेयतुः ॥ ५ ॥
तौ दृष्ट्वा तु तदा सिद्धा समुत्थाय कृताञ्जलिः । पादौ जग्राह रामस्य लक्ष्मणस्य च धीमतः ॥ ६ ॥
पाद्यमाचमनीयं च सर्वं प्रादाद्यथाविधि । तामुवाच ततो रामः श्रमणीं धर्मसंस्थिताम् ॥ ७ ॥
कच्चित्ते निर्जिता विघ्नाः कच्चित्ते वर्धते तपः । कच्चित्ते नियतः कोप आहारश्च तपोधने ॥ ८ ॥
कच्चित्ते नियमाः प्राप्ताः कच्चित्ते मनसः सुखम् । कच्चित्ते गुरुशुश्रूषा सफला चारुभाषिणि ॥ ९ ॥

---

१ ] ति० टी०—यः कबन्धेन कथितस्तं मार्गं गृहीत्वा पम्पामुद्दिश्य प्रतीचीं दिशमातस्थतुः प्रतस्थतुः ॥ १ ॥

रा० टी०—कबन्धगमनानन्तरकालिकं रामवृत्तान्तमाह—तावित्यादिभिः । कबन्धेन दर्शितं पम्पायाः तं मार्गं प्रतीचीं दिशं गृह्य गृहीत्वा तौ रामलक्ष्मणौ आतस्थतुः ॥ १ ॥

गो० टी०—एवमेतावत्पर्यन्तं भगवत्कैङ्कर्यतत्फले दर्शिते । अथाचार्याभिमाननिष्ठा तत्फले दर्शयति चतुःसप्ततितमे—तावित्यादि । प्रतीचीं दिशं गृह्य गृहीत्वा कबन्धेन दर्शितं पम्पाया मार्गमुद्दिश्य प्रतस्थतुः प्रतस्थाते ॥ १ ॥

२ ] ति० टी०—आचितानेकान्विद्यमानाननेकान् माधुर्येण क्षौद्रं मधु तत्तुल्यपुष्पफलान् ॥ २ ॥

रा० टी०—ताविति । शैलेषु पर्वतावयवेषु आचितानेकान् आचितान् व्याप्तान् अनेकान् बहून् क्षौद्रपुष्पफलद्रुमान् क्षौद्रैर्मधुभिः पुष्पैः फलैश्च विशिष्टान् तरून् वीक्षन्तौ रामलक्ष्मणौ सुग्रीवं द्रष्टुं जग्मतुः ॥ २ ॥

गो० टी०—ताविति । शैलेष्वाचितान् प्ररूढान् अनेकांश्च क्षौद्रकल्पफलान् मधुतुल्यफलयुक्तान् वीक्षन्तौ वीक्षमाणौ ॥ २ ॥

३-४ ] ति० टी०—उपतस्थतुः प्रापतुः ॥ ३ ॥ ४ ॥

रा० टी०—कृत्वेति । तौ रामलक्ष्मणौ शैलपृष्ठे वासं कृत्वैव पम्पायाः पश्चिममेव तीरमुपतस्थतुः ॥ ३ ॥

गो० टी०—कृत्वा चेति । वासं तस्यां रात्र्यामिति शेषः । उपतस्थतुः उपतस्थाते प्रापतुरित्यर्थः । रात्र्यन्त इति शेषः ॥ ३ ॥

रा० टी०—ताविति । तौ रामलक्ष्मणौ पुष्करिण्याः पम्पायाः पश्चिमं तीरमासाद्य तत्र शबर्याः आश्रमम् अपश्यताम् ॥ ४ ॥

गो० टी०—तौ पुष्करिण्या इति । स्पष्टम् ॥ ४ ॥

५ ] ति० टी०—तं शबर्याश्रमम् ॥ ५ ॥

रा० टी०—ताविति । तौ बहुभिर्द्रुमैः आवृतं सुरम्यं तं शबरीसंबन्धिनमाश्रमम् आसाद्य वीक्षन्तौ इतस्ततः शबरीमन्वेषयन्तौ अभ्युपेयतुः ॥ ५ ॥

गो० टी०—ताविति । आश्रममासाद्य तमभिवीक्षन्तौ अभिवीक्षमाणौ ॥ ५ ॥

६-७ ] ति० टी०—सिद्धा सिद्धयोगा ॥ ६ ॥ ७ ॥

रा० टी०—तौ इति । सिद्धा तपःसिद्धिं प्राप्ता शबरी तौ रामलक्ष्मणौ दृष्ट्वा कृताञ्जलिः सती उत्थाय पादौ जग्राह पाद्यादिकं च प्रादात् । सार्धश्लोक एकान्वयी ॥ ६ ॥

गो० टी०—तौ चेति । सार्धश्लोक एकान्वयः । सिद्धा सिद्धयोगा ॥ ६ ॥

रा० टी०—तामिति । ततः शबरीदत्तपाद्यादिस्वीकारानन्तरं श्रमणीं तपस्विनीं शबरीं राम उवाच । अर्धं पृथक् ॥ ७ ॥

गो० टी०—तामित्यादि । विघ्नाः तपोविघ्नाः कामादयः नियतः निगृहीतः आहारश्चेत्यत्रापि नियत इत्यनुषज्यते । "तपो नानशनात्परम्" इति श्रुतेः । नियमाः व्रतानि मनसः सुखं मनःसंतोषः चारुभाषिणीति साध्वीसंबोधनप्रकारः । इति तामुवाचेति संबन्धः ॥ ७-९ ॥

८-९ ] ति० टी०—विघ्नास्तपोविघ्नाः कामादयः कोपो नियतो निगृहीतः आहारश्च नियत इत्यनुकर्षः ॥ ८ ॥ ९ ॥

रा० टी०—तद्वचनाकारमाह—कच्चिदित्यादिभिः । ते त्वया विघ्नाः निर्जिताः कच्चिदिति प्रश्ने । कोपो नियतः निवर्तितः आहारो नियतो नियमितः शब्दात्त्वया उभयान्वयी ॥ ८ ॥

---

१ प्रेति गो. पाठः । २ कल्पफलानिति गो. पाठः । ३ रामलक्ष्मणाविति गो. पाठः । ४ शंसितव्रतामिति गो. पाठः । ५ क्रोध इति गो. पाठः ।

रामेण तापसी पृष्टा सा सिद्धा सिद्धसंमता । शशंस शबरी वृद्धा रामाय प्रैत्यवस्थिता ॥ १० ॥
अद्य प्राप्ता तपःसिद्धिस्तव संदर्शनान्मया । अद्य मे सफलं जैन्म गुरवश्च सुपूजिताः ॥ ११ ॥
अद्य मे सफलं तैप्तं स्वर्गश्चैव भविष्यति । त्वयि देववरे राम पूजिते पुरुषर्षभ ॥ १२ ॥
तैवाहं चक्षुषा सौम्य पूता सौम्येन मानद । गमिष्याम्यक्षयांल्लोकांस्त्वत्प्रसादादरिंदम ॥ १३ ॥
चित्रकूटं त्वयि प्राप्ते विमानैरतुलप्रभैः । इतस्ते दिवमारूढा यानहं पर्यचारिषम् ॥ १४ ॥
तैश्चाहमुक्ता धर्मज्ञैर्महाभागैर्महर्षिभिः । आगमिष्यति ते रामः सुपुण्यमिममाश्रमम् ॥ १५ ॥
स ते प्रतिग्रहीतव्यः सौमित्रिसहितोऽतिथिः । तं च दृष्ट्वा वराँल्लोकानक्षयांस्त्वं गमिष्यसि ॥ १६ ॥
ऐवमुक्ता महाभागैस्तदाहं पुरुषर्षभ । मया तु संचितं वन्यं विविधं पुरुषर्षभ ॥ १७ ॥
तवार्थे पुरुषव्याघ्र पम्पायास्तीरसंभवम् । एवमुक्तः स धर्मात्मा शबर्या शबरीमिदम् ॥ १८ ॥

---

रा० टी०–कच्चिदिति । नियमाः योगाङ्गीभूतनियमादयः सफलाः फलसहिताः ॥ ९ ॥

१० ] ति० टी०–प्रत्यवस्थिता अभिमुखं स्थिता ॥ १० ॥

रा० टी०–रामेणेति । रामेण पृष्टा प्रत्यवस्थिता तत्सं-मुखं स्थिता तापसी शबरी रामाय शशंस ॥ १० ॥

गो० टी०–रामेणेति । रामाय प्रत्युपस्थितेति तादर्थ्ये चतुर्थी ॥ १० ॥

११ ] ति० टी०–अद्य प्राप्ता तपःसिद्धिरित्यादिः शबर्या उपचारवत्परमार्थदशावादः ॥ ११ ॥

रा० टी०–तद्वचनाकारमाह–अद्येति । तव संदर्शनात् अद्य तपःसिद्धिः कृच्छ्रचान्द्रायणादिनिष्पत्तिः प्राप्ता अत एव मे जन्म सफलम् अत एव गुरवः सुपूजिताः ॥ ११ ॥

गो०टी०–अद्येति। तपःसिद्धिः तपःपरिपाकः तप्तं तपः ११

१२ ] ति० टी०–स्वर्गो ब्रह्मलोकः । देववरे सर्वान्त-रात्मनि ॥ १२ ॥

रा० टी०–अद्येति । हे पुरुषर्षभ ! देववरे ब्रह्मादिभ्योऽपि श्रेष्ठे त्वयि सुपूजिते सति तप्तं विचारः सफलम् अत एव स्वर्गोऽपि भविष्यति ॥ १२ ॥

गो० टी०–अद्य म इति । अद्येत्यस्यार्थं विवृणोति–त्वयीति । देववरे विष्णौ अनेन शबर्याः परमार्थज्ञानं वृत्त-मिति सूच्यते ॥ १२ ॥

१३ ] ति० टी०–अक्षयाँल्लोकानपुनरावृत्तिकान्ब्रह्म-लोकान् ॥ १३ ॥

रा० टी०–चक्षुषेति । हे रघुनन्दन ! तव सौम्येन चक्षु-षाऽवलोकनेन अहं पूतास्मि अत एव त्वत्प्रसादात्त्वत्प्रसन्नतां प्राप्य अक्षयान् ध्वंसाप्रतियोगिनः लोकान् गमिष्यामि ॥१३॥

गो० टी०–एवमुपचारवादानुक्त्वा स्वप्रयोजनमाह–चक्षुषा तव सौम्येन पूतास्मि रघुनन्दन । गमिष्याम्यक्षयान् लोकान् त्वत्प्रसादादरिन्दमेति । तेन सौम्येन चक्षुषा निर्हेतु-ककटाक्षेण पूतास्मि अनेन पूर्वाघविनाश उक्तः । अरिन्दमेत्य-नेन उत्तराघाश्लेष उच्यते त्वत्प्रसादात् 'धातुः प्रसादान्महि-मानमात्मनः' इत्युक्तत्वादाचार्यप्रसादोपबृंहितात्त्वत्प्रसादात् अ-क्षयान् लोकान् गमिष्यामि पुनरावृत्तिरहितं परमपदं प्राप्स्या-मीत्यर्थः ॥ १३ ॥

१४ ] ति० टी०–चित्रकूटमिति । तदासक्तिवैभवमात्रा-दित्यर्थः । इतोऽस्मदाश्रमात् ॥ १४ ॥

रा० टी०–चित्रकूटमिति । यान् ऋषीनहं पर्यचारि-षम् असेविषि ते ऋषयः त्वयि चित्रकूटं प्राप्ते सति अतुल-प्रभैः अनुपमप्रभाविशिष्टैः विमानैः इतः दिवमारूढाः ॥ १४ ॥

गो० टी०–तर्हि त्वदाचार्यैरेव सह किमर्थं न गतासी-त्यत्राह–चित्रकूटमिति । ते मतङ्गशिष्या मदाचार्याः ॥ १४॥

१५ ] ति० टी०–आगमिष्यति अनुग्रहायेति शेषः॥ १५ ॥

१६ ] ति० टी०–ते त्वया तं दृष्ट्वाऽस्मत्सेवाफलभूतं तद्-र्शनं प्राप्य । अक्षयाँल्लोकान्ब्रह्मलोकम् अवयवाभिप्रायेण गुणा-भिप्रायेण वा बहुवचनम् ॥ १६ ॥

रा० टी०–स्वस्थितौ निमित्तमाह–तैरिति । सौमित्रिस-हितो रामः इमं ते आश्रममागमिष्यति अतः स रामोऽतिथिः ते त्वया प्रतिग्रहीतव्यः सत्कारपूर्वं निवेशनीयः तं रामं दृष्ट्वा वरान् उत्तमान् लोकान् त्वं गमिष्यसि इति तैर्दिवमारोहद्भिः महर्षिभिरहमुक्ता । श्लोकद्वयमेकान्वयि ॥ १५ ॥ १६ ॥

गो० टी०–तैरिति । धर्मज्ञैः योगरूपभगवत्प्राप्त्युपा-याभावेऽप्याचार्यप्रसादकृतभगवत्प्रसादात् सद्गतिमियं प्राप्स्यती-त्येतद्धर्मज्ञैः महाभागैः भविष्यतद्वृत्तान्तज्ञानोचितभाग्यवद्भिः सुपुण्यमित्यागमनार्हत्वमुच्यते । स इति । प्रतिग्रहीतव्यः आति-थ्यकरणेन सत्करणीयः । दृष्ट्वा तेन दर्शनेन निमित्तेन अक्षयान् लोकान् गमिष्यसि । वरानिति कैवल्यव्यावृत्तिः गमिष्यसीति तैरहमुक्तेत्यन्वयः । अनेन आचार्यशुश्रूषणं भगवत्प्रसादद्वारा मोक्षहेतुरित्युक्तं भवति ॥ १५ ॥ १६ ॥

१७–१८ ] ति० टी०–एवमुक्ताहं यतः, अतो मया त्वदर्थं

---

१ प्रत्युपस्थितेति गो. पाठः । २ तप्तमिति गो. पाठः । ३ जन्मेति गो. पाठः । ४ चक्षुषा तव सौम्येन पूतास्मि रघुनन्दनेति गो. चक्षुषा तव सौ-म्येनेति रा. पाठः । ५ अर्धमेतत् गो. नास्ति ।

राघवः प्राह विज्ञाने तां नित्यमबहिष्कृताम् । दनोः सकाशात्तत्त्वेन प्रभावं ते [1]महात्मनाम् ॥ १९ ॥
श्रुतं प्रत्यक्षमिच्छामि संद्रष्टुं यदि मन्यसे । एतत्तु वचनं श्रुत्वा राम[2]वक्त्रविनिःसृतम् ॥ २० ॥
शबरी दर्शयामास तावुभौ तद्वनं महत् । पश्य मेघघनप्रख्यं मृगपक्षिसमाकुलम् ॥ २१ ॥
मतङ्गवनमित्येव विश्रुतं रघुनन्दन । इह ते भावितात्मानो गुरवो मे महाद्युते ॥
जुहवाञ्चक्रिरे [3]नीडं मन्त्रवन्मन्त्रपूजितम् ॥ ॥ २२ ॥
इयं प्रत्यक्स्थली वेदी यत्र ते मे सुसत्कृताः । पुष्पोपहारं कुर्वन्ति श्रमादुद्वेपिभिः करैः ॥ २३ ॥

---

वन्यं सम्यक्परीक्ष्य माधुर्ययुतं संचितमित्यर्थः । तदुक्तं पाद्मे- शबरीं प्रस्तुत्य—' प्रत्युद्गम्य प्रणम्याथ निवेश्य कुशविष्टरे । पादप्रक्षालनं कृत्वा तत्तोयं पापनाशनम् ॥ शिरसा धार्य पीत्वा च वन्यैः पुष्पैरथार्चयत् । फलानि च सुपक्वानि मूलानि मधुराणि च ॥ स्वयमास्वाद्य माधुर्यं परीक्ष्य परिभक्ष्य च । पश्चान्निवेदयामास राघवाभ्यां दृढव्रता ॥ फलान्यास्वाद्य काकुत्स्थस्तस्यै मुक्तिं परां ददौ ' इति ॥ १७ ॥ १८ ॥

रा० टी०—एवमिति । तदा स्वर्गगमनसमये महाभागैः महर्षिभिः यतोऽहमेवमुक्ता अतः मया तवार्थे पम्पायास्तीरसंभवं विविधं वन्यं फलमूलादि संचितम् । सार्धश्लोक एकान्वयी ॥ १७ ॥

गो० टी०—आचार्योक्तिश्रद्धामात्मनः सूचयति—मया त्विति । तीरसंभवं विविधं वन्यं संचितं वन्यशब्देन फलमूलादिकमुच्यते । विविधमित्यनेन फलमूलादिभेद उच्यते । संचितमित्यनेन रामस्य चित्रकूटागमनात् प्रभृति संपादितत्वम्, आदरेण गुप्तत्वं च तत्तत्फलजातीयमाधुर्यं परीक्ष्य स्थापितमिति संप्रदायः ॥ १७ ॥

रा० टी०—एवमिति । शबर्या एवमुक्तो राघवः विज्ञाने अतिदुर्लभपरमात्मज्ञानेऽपि अबहिष्कृतां तद्विषयकज्ञानवतीमित्यर्थः, तां शबरीम् इदं प्राह ॥ १८ ॥

गो० टी०—एवमिति । विज्ञाने विषये अबहिष्कृताम् अन्तरङ्गभूतां जात्या हीनामप्याचार्यप्रसादलब्धब्रह्मज्ञानामिति भगवताप्यादरणीयत्वोक्तिः ॥ १८ ॥

१९–२० ] ति० टी०—विज्ञाने आगतानागतज्ञाने अबहिष्कृतां तादृशज्ञानवतीमित्यर्थ इति तीर्थः । विज्ञाने ब्रह्मविद्यायां मैत्रेय्यादिवदबहिष्कृतां तत्राप्यधिकारिणीमित्यर्थ इति कतकः । विशिष्टं ज्ञानं येषां तेषां संबन्धो यस्यास्तत्संबोधनं हे विज्ञाने ! इति संबोध्य । तां नित्यमबहिष्कृतां भोजनादिव्यवहारादिति शेषः । तदत्तमाहाराद्यङ्गीकृत्येति च शेष इत्यन्ये । किमाह तदाह—दनोरिति । ते महात्मनां त्वदाचार्याणां दनोः सकाशाच्छ्रुतं प्रत्यक्षं कर्तुमिच्छामीति शेषः । संद्रष्टुं यदि मन्यसे संदर्शयितुं योग्यं यदि मन्यस इत्यर्थः ॥१९॥२०॥

रा० टी०—तद्वचनाकारमाह—दनोरिति । दनोः कबन्धात् श्रुतं ते त्वत्संबन्धिनां महात्मनां प्रत्यक्षं महात्मजनप्रसिद्धं प्रभावं साक्षात्संद्रष्टुमिच्छामि यदि मन्यसे इच्छसि ॥ १९ ॥

गो० टी०—दनोरिति । दनोः सकाशात् दत्तत इत्यर्थः । पञ्चम्यर्थे सकाशशब्दं प्रयुञ्जते । तत्त्वेन याथार्थ्येन ते महात्मनः त्वत्संबन्धिनो महात्मनः मतङ्गस्येत्यर्थः । 'महात्मनाम्' इति पाठे त्वदाचार्याणामित्यर्थः । श्रुतं प्रभावं प्रत्यक्षं संद्रष्टुमिच्छामि यदि मन्यसे दर्शयितुमिति शेषः ॥ १९ ॥

रा० टी०—एतदिति । रामवक्त्रविनिःसृतमेतद्वचनं श्रुत्वा उभौ रामलक्ष्मणौ तद्वनं दर्शयामास ॥ २० ॥

गो० टी०—एतत्त्विति । विनिःसृतं निर्गतम् ॥ २० ॥

२१ ] ति० टी०—मेघो वर्षुको यो घनस्तद्वन्नीलम् ' मिह सेचने ' बाहुलकाद्घत्वम् ॥ २१ ॥

रा० टी०—दर्शनप्रकारमाह—पश्येति । मेघघनप्रख्यं निबिडमेघसदृशं मतङ्गवनमिति नाम्ना विश्रुतं प्रसिद्धम् एव इदं वनं पश्य ॥ २१ ॥

गो० टी०—पश्येति । मेघघनप्रख्यं घनमेघसदृशं विश्रुतं वनमिति शेषः ॥ २१ ॥

२२ ] ति० टी०—मतङ्गवनं तत्तपोमहिम्ना विश्रुतं प्रसिद्धं ते प्रसिद्धाः । मन्त्रपूजितं मन्त्रस्य गायत्र्या जपेन पूजितमतिशुद्धं नीडं देहपञ्जरम् । ' तीर्थम् ' इति पाठेऽपि स एवार्थः । मन्त्रवत्तद्धोममन्त्रवत् जुहवांचक्रिरे हुतवन्तः । यद्वा तीर्थमध्वरं जुहवाञ्चक्रिरे हुतवन्तः । यद्वा तीर्थमध्वरं जुहवाञ्चक्रिरे कृतवन्त इत्यर्थः ॥ २२ ॥

रा० टी०—इहेति । भावितात्मानः परिशीलितपरमात्मानः ते प्रसिद्धाः मे गुरवः इह अस्मिन्प्रदेशे मन्त्रवन्मन्त्रपूजितं मन्त्रवतां मन्त्रवेदितॄणामित्यर्थः, मन्त्रैः पूजितम् आह्वानमन्त्रैरभिमन्त्रितं तीर्थं गङ्गादि जुहवाञ्चक्रिरे आददिरे आनिन्युरित्यर्थः, तीर्थमध्वरं जुहवाञ्चक्रिरे चक्रुरित्यर्थो वा ॥ २२ ॥

गो० टी०—इहेति । भावितात्मानः चिन्तितात्मानः ते प्रसिद्धाः मे गुरवः मन्त्रवन्मन्त्रपूजितं मन्त्रवतां मन्त्रैः पूजितं तीर्थं गङ्गादिपुण्यसलिलम् इह प्रदेशे जुहवाञ्चक्रिरे आहूतवन्तः। महाद्युते इत्यनेन मुनिप्रभावश्रवणे सन्तोषवत्त्वं व्यज्यते ॥२२॥

२३ ] ति० टी०—प्रत्यक्स्थली तन्नाम्नी वेदी यत्र यस्यां

---

१ महात्मन इति गो. पाठः । २ वक्त्रादिति गो. पाठः । ३ तीर्थमिति गो. रा. पाठः ।

तेषां तपःप्रभावेण पश्याद्यापि रघूत्तम । द्योतयन्ती दिशः सर्वाः श्रिया वेदी[१]ऽतुलप्रभा ॥ २४ ॥
अशक्नुवद्भिस्तैर्गन्तुमुपवासश्रमालसैः । चिन्तिते[२]नागतान्पश्य समेतान्सप्त सागरान् ॥ २५ ॥
कृताभिषेकैस्तैर्न्यस्ता वल्कलाः पादपेष्विह । अद्यापि न[३] विशुष्यन्ति प्रदेशे रघुनन्दन ॥ २६ ॥
देवकार्याणि कुर्वद्भिर्यानीमानी कृतानि वै । पुष्पैः कुवलयैः सार्धं म्लानत्वं न[४] तु यान्ति वै ॥ २७ ॥
कृत्स्नं वनमिदं दृष्टं श्रोतव्यं च श्रुतं त्वया । तदिच्छाम्यभ्यनुज्ञाता त्यक्ष्याम्येतत्कलेवरम् ॥ २८ ॥
तेषामिच्छाम्यहं गन्तुं समीपं भावितात्मनाम् । मुनीनामाश्रमो येषामहं च परिचारिणी ॥ २९ ॥

सुसत्कृतात्यन्तं पूज्या मे मत्संबन्धिनस्ते गुरवः श्रमादुद्वेपिभिः कम्पवद्भिर्दृढतरत्वात्करैः पुष्पोपहारं देवताभ्यः कुर्वन्ति ॥२३॥

रा० टी०–इयमिति । यत्र यस्यां मे मया सुसत्कृताः ते मतङ्गशिष्याः श्रमात् अत्युग्रतिकृच्छ्रचान्द्रायणादिजनितखेदात् उद्वेपिभिः कम्पयुक्तैः करैः पुष्पोपहारं कुर्वन्ति ॥ २३ ॥

गो० टी०–इयमिति । प्रत्यक्स्थली प्रत्यक्प्रदेशे स्थलीभूता प्राक्प्रदेशे पश्चिमाभिमुखविष्णुस्थानत्वेन प्रत्यङ्निम्नेत्यर्थः । वेदिः देवपूजास्थानम् इयम् अवलोक्यतामिति शेषः । यत्र वेद्यां मे मया सुसत्कृतास्ते गुरवः श्रमात् वृद्धताकृतया पुष्पधारणाशक्त्या उद्वेपिभिः उत्कम्पिभिः करैः पुष्पोपहारं पुष्पैरर्चनं कुर्वन्ति अकुर्वन् । अत्र वेदिरिति जात्येकवचनम् उत्तरश्लोके बहुवचनप्रयोगात् बह्वनां बहुवेदिसंभवाच ॥ २३ ॥

२४ ] ति० टी०–तेषां मदाचार्याणां प्रभावेणेयं वेदिस्तत्पूजाकाल इवाद्यापि सर्वा दिशो द्योतयन्त्यतुलप्रभा दृश्यते पश्य ॥ २४ ॥

रा० टी०–तेषामिति । हे रघूत्तम ! तेषामस्मद्गुरूणां तपःप्रभावेण श्रिया स्वशोभया सर्वाः दिशः अद्यापि द्योतयन्ती वेदी त्वं पश्य । वाक्यार्थस्य दृशिक्रियायां कर्मत्वेनान्वयात्तद्वाचकस्य प्रातिपदिकत्वाभावात् न द्वितीया 'द्योतयन्ति दिशः सर्वाः श्रिया वेद्योऽतुलप्रभाः' इति भूषणपाठः ॥ २४ ॥

गो० टी०–तेषामिति । तेषाम् अस्मदाचार्याणां प्रभावेण अतुलप्रभाः इमाः वेद्यः अद्यापि तेषामसंनिधानेऽपि सर्वा दिशः द्योतयन्ति प्रकाशयन्ति । अनेन आचार्याभिमतो देशस्तदसंनिधानेऽप्युद्देश्य इत्युक्तम् ॥ २४ ॥

२५ ] ति० टी०–आश्चर्यान्तरं दर्शयति—अशक्नुवद्भिरिति । सागरादितीर्थं गन्तुमशक्नुवद्भिरित्यर्थः । तत्र हेतुः—उपवासश्रमालसैः कृच्छ्रादिशास्त्रीयोपवासैर्जनितेन श्रमेणालसैः ईदृशैस्तैश्चिन्तितेन तेषां ध्यानेन तदभिषेकतीर्थे आगतान्सप्त सागरान्समेतान्पश्य ॥ २५ ॥

रा० टी०–अशक्नुवद्भिरिति । उपवासश्रमालसैः शास्त्रविहितोपवासजनितश्रमहेतुकालसविशिष्टैः अत एव गन्तुमशक्नुवद्भिस्तैः मदाचार्यैः चिन्तितेन चिन्तया गतान्समेतान् संघीभूतान्सप्त सागरान् त्वं पश्य ॥ २५ ॥

गो० टी०–पुनर्वैभवान्तरमाह–अशक्नुवद्भिरिति । उपवासश्रमेण अलसैः मन्दैः अत एव सप्त सागरान् गन्तुमशक्नुवद्भिः मे गुरुभिः चिन्तिते चिन्तितमात्रे अभ्यागतान् अभिमुखमागतान् सप्त सागरान् पश्य ॥ २५ ॥

२६ ] ति० टी०–आश्चर्यान्तरमाह—कृताभिषेकैरिति । न विशुष्यन्ति तीर्थवैभवात्तत्तपोवैभवाच्चेति भावः ॥ २६ ॥

रा० टी०–कृतेति । हे रघुनन्दन ! पादपेषु वृक्षेषु कृताभिषेकैः कृतस्नानैः न्यस्ताः संस्थापिताः वल्कला अद्यापि न विशुष्यन्ति ॥ २६ ॥

गो० टी०–अद्भुतान्तरमाह–कृतेति । इह प्रदेशे सागरप्रदेशे कृताभिषेकैः कृतस्नानैः तैर्गुरुभिः पादपेषु न्यस्ताः आर्द्रवल्कलाः अद्यापि नावशुष्यन्ति न शुष्का भवन्ति । तदङ्गसंपर्कवैभवादिति भावः ॥ २६ ॥

२७ ] ति० टी०–आश्चर्यान्तरमाह—देवेति । कृतानि दत्तान्यतिमृदुकुवलयसहितानि पुष्पाणि नाद्यापि म्लानत्वं यान्ति तत्तपःप्रभावादिति शेषः ॥ २७ ॥

रा० टी०–देवेति । देवकार्याणि कुर्वद्भिः अस्मदाचार्यैः कुवलयैः कुड्मलैः सार्धं पुष्पैः यानि इमानि कृतानि रचितानि मालाजातानि तानि म्लानत्वं नैव यान्ति ॥ २७ ॥

गो० टी०–देवेति । देवकार्याणि देवार्चनानि कुर्वद्भिः तैः कुवलयैः सह पुष्पैः पुष्पान्तरैः यानीमानि माल्यानि कृतानि तानि म्लानत्वं नोपयान्ति भक्त्यतिशयेन समर्पितत्वादिति भावः । एतावता ग्रन्थसंदर्भेण 'गुरुं प्रकाशयेद्धीमान्' इत्युक्तरीत्या आचार्यवैभवप्रकटनं कर्तव्यमिति सूचितम् ॥ २७ ॥

२८ ] ति० टी०–उपसंहरति—कृत्स्नमिति । दृष्टं त्वया मया दर्शितं श्रुतं त्वया मया श्रावितं अभ्यनुज्ञाता त्वयेति शेषः । तत्तस्मादेतत्कलेवरं त्यक्ष्यामीतीच्छामि ॥ २८ ॥

रा० टी०–कृत्स्नमिति । इदं वनं त्वया दृष्टं श्रोतव्यं महात्मानो यशः श्रुतं च तत्तस्माद्धेतोः अभ्यनुज्ञाता आचार्यैः रामाग्रे त्वया तनुत्यागः कर्तव्यः इत्याज्ञापिता अहम् एतत्कलेवरं त्यक्ष्यामि ॥ २८ ॥

गो० टी०–उपसंहरति–कृत्स्नमिति । अभ्यनुज्ञाता त्वयेति शेषः ॥ २८ ॥

२९ ] ति० टी०–येषां मुनीनामयमाश्रमो येषां चाहं

१ स्वदूद्वहेति गो. पाठः । २ वेद्योऽतुलप्रभा इति गो. पाठः । ३ चिन्तितेऽभ्यागतानिति गो. पाठः । ४ सहितानिति गो. पाठः । ५ नावशुष्यन्तीति गो. पाठः । ६ नोपेति गो. पाठः । ७ त्यक्तुमिति गो. पाठः ।

धर्मिष्ठं तु वचः श्रुत्वा राघवः सहलक्ष्मणः । प्रहर्षमतुलं लेभे आश्चर्यमिति चाब्रवीत् ॥ ३० ॥
तामुवाच ततो रामः शबरीं संशितव्रताम् । अर्चितोऽहं त्वया भद्रे गच्छ कामं यथासुखम् ॥ ३१ ॥
इत्येवमुक्ता जटिला चीरकृष्णाजिनाम्बरा । [ तस्मिन्मुहूर्ते शबरी देहं जीर्णं जिहासती । ]
अनुज्ञाता तु रामेण हुत्वाऽऽत्मानं हुताशने । ॥ ३२ ॥
ज्वलत्पावकसंकाशा स्वर्गमेव जगाम ह । दिव्याभरणसंयुक्ता दिव्यमाल्यानुलेपना ॥ ३३ ॥
दिव्याम्बरधरा तत्र बभूव प्रियदर्शना । विराजयन्ती तं देशं विद्युत्सौदामिनी यथा ॥ ३४ ॥
यत्र ते सुकृतात्मानो विहरन्ति महर्षयः । तत्पुण्यं शबरीस्थानं जगामात्मसमाधिना ॥ ३५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे चतुःसप्ततितमः सर्गः ॥ ७४ ॥

---

परिचारिणी तेषां भावितात्मनां सदानुसंहितपरमात्मनां मुनीनां समीपं गन्तुमहमिच्छामीति चाब्रवीत् ॥ २९ ॥

रा० टी०–तत्तं त्यक्त्वा किं करिष्यसीत्यत आह–तेषामिति । तेषाम् आश्रमः अयमिति शेषः, अहं परिचारिणी च तेषां भावितात्मनां परिशीलितपरमात्मनां मुनीनां समीपं गन्तुमहमिच्छामि ॥ २९ ॥

गो० टी०–त्यक्त्वा किं करिष्यसीत्यत्राह–तेषामिति । समीपं पादमूलं गमिष्यामि यानहं पर्यचारिषमित्यन्यत्रोक्तेः । आश्रमः अयमिति शेषः, येषामाश्रमोऽयं येषामहं च परिचारिणी तेषां समीपं गन्तुमिच्छामीति संबन्धः ॥ २९ ॥

३० ] ति० टी०–श्रुतार्थमुद्दिश्येति शेषः ॥ ३० ॥

रा० टी०–धर्मिष्ठमिति । धर्मिष्ठम् अत्यन्तं धर्मसंयुक्तं वचः शबरीवचनं श्रुत्वा प्रहर्षं लेभे आश्चर्यमित्यब्रवीच ॥ ३० ॥

गो० टी०–धर्मिष्ठमिति । वचः आचार्यवैभवप्रदर्शनादिरूपं तत्त्वतः मायां विना आश्चर्यमिति मत्वा ॥ ३० ॥

३१ ] ति० टी०–संशितव्रतां तीक्ष्णव्रताम् ॥ ३१ ॥

रा० टी०–तामिति । शंसितव्रताम् अतितीक्ष्णव्रतशीलां शबरीं हे भद्रे ! त्वया अहं अर्चितः अतो यथाकामं गच्छ इति राम उवाच ॥ ३१ ॥

गो० टी०–अथ शबरीमनोरथं पूरयति–तामिति । शंसितव्रताम् आचार्यपरिचर्यानिष्ठामित्यर्थः । अर्चितः तव गुरुवृत्तिसंदर्शनेनैवेति शेषः । भक्त्या वन्यसंपादनमात्रेण वा अयमेवार्थः संक्षेपे 'शबर्या पूजितः सम्यक्' इत्युक्तः । कामं काम्यमानं लोकम् ॥ ३१ ॥

३२ ] ति० टी०–आत्मानं हुताशने हुत्वा स्वाचार्योपदिष्टमार्गेणेत्यर्थः ॥ ३२ ॥

रा० टी०–इतीति । इत्येवं रामेण उक्ता जटिला जटावती चीरकृष्णजिनाम्बरा चीरं खण्डपटः तत्सहितं कृष्णाजिनम् अम्बरं यस्याः अनुज्ञाता रामाज्ञया त्वया समागन्तव्यम् इति पूर्वं स्वाचार्यैराज्ञापिता शबरी आत्मानं स्वदेहं हुताशने हुत्वा संस्थाप्य ज्वलत्पावकसंकाशा प्रज्वलितवह्निसदृशी सती स्वर्गमेव जगाम । सार्धश्लोक एकान्वयी ॥ ३२ ॥

गो० टी०–इतीति । श्लोकद्वयमेकान्वयम् । जिहासती हातुमिच्छन्ती स्वर्गमेवेत्यवधानं द्योतयति ॥ ३२ ॥ ३३ ॥

३३–३४ ] ति० टी०–स्वर्गं ब्रह्मलोकमेव ॥ ३३ ॥ ३४॥

रा० टी०–दिव्येति । दिव्याभरणसंयुक्ता दिव्यभूषणैर्भूषिता दिव्यमाल्यानुलेपना दिव्ये माल्यानुलेपने पुष्पचन्दने यस्याः सा दिव्याम्बरधरा शबरी प्रियदर्शना बभूव ॥ ३३ ॥

गो० टी०–दिव्येति । सार्धश्लोकः । तत्र स्वर्गगमनारम्भे विद्युत् विशेषेण द्योतमाना सौदामिनी तडित् ॥ ३४ ॥

रा० टी०–विराजयन्तीति । सौदामिनी सुदामाभिधपर्वते प्रकाशमाना विद्युदिव तं देशं विराजयन्ती प्रकाशयन्ती शबरी यत्र यस्मिन् स्थाने सुकृतात्मानः महर्षयः ते शबरीगुरवः विहरन्ति तत् पुण्यस्थानम् आत्मसमाधिना स्वचित्तैकाग्र्येण जगाम । सार्धश्लोक एकान्वयी ॥ ३४ ॥ ३५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे चतुःसप्ततितमः सर्गः ॥ ७४ ॥

३५ ] ति० टी०–यत्र ब्रह्मलोके तत्पुण्यस्थानं शबर्यात्मसमाधिना जगाम ब्रह्मसमाधिनेत्यर्थः ॥ ३५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे चतुःसप्ततितमः सर्गः ॥ ७४ ॥

गो० टी०–यत्रेति । ते गुरवः सुकृतात्मानः सुकृतधैर्यवन्तः आत्मसमाधिना आत्मविषययोगेन एतत्सर्गवृत्तान्तेन मतङ्गशिष्योपदिष्टसमाधिका शबरी गुर्वनुज्ञया रामागमनपर्यन्तं स्थित्वा ततो रामानुज्ञया स्वसमाधिबलेन स्वगुरुगतं स्वर्गविशेषं प्राप्तेत्यवगम्यते । स्त्रियामपि विदुरादेरिव योगाधिकारः संभवति तदङ्गयज्ञादिकर्मस्थाने गुरुशुश्रूषा स्वर्गश्च आदौ अक्षयानित्युक्त्या पुनरावृत्तिरहितं परमपदमित्यवगम्यते "एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति श्रुत्या केवलस्वर्गस्य क्षयित्वावगमात् ॥ ३५ ॥

---

१ तत्त्वत इति गो. पाठः । २ श्रमणीमिति गो. पाठः । ३ भक्त्येति गो. पाठः । ४ इत्युक्ता जटिला वृद्धेति गो. पाठः । ५ अर्धमेतदधिकं गो.पाठे । ६ सेति गो. पाठः । ७ मिनीति गो. पाठः ।

## पञ्चसप्ततितमः सर्गः ।

मतङ्गादिमहर्षिमहिमानं प्रशंसन् निर्वर्तितपुण्यतीर्थावगाहः कृताह्निकश्च रामः शबर्याश्रमान्निर्गत्य लक्ष्मणेन सह पम्पातीरमनुजगाम ।

दिवं तु तस्यां यातायां शबर्यां स्वेन तेजसा । लक्ष्मणेन सह भ्रात्रा चिन्तयामास राघवः ॥ १ ॥
[1]चिन्तयित्वा तु धर्मात्मा प्रभावं तं महात्मनाम् । हितकारिणमेकाग्रं लक्ष्मणं राघवोऽब्रवीत् ॥ २ ॥
दृष्टो मयाऽऽश्रमः सौम्य बह्वाश्चर्यः कृतात्मनाम् । विश्वस्तमृगशार्दूलो नानाविहगसेवितः ॥ ३ ॥
सप्तानां च समुद्राणां [3]तेषां तीर्थेषु लक्ष्मण । उपस्पृष्टं च विधिवत्पितरश्चापि तर्पिताः ॥ ४ ॥
[4]प्रनष्टमशुभं यन्नः कल्याणं समुपस्थितम् । तेन [5]त्वेतत्प्रहृष्टं मे मनो लक्ष्मण संप्रति ॥ ५ ॥
हृदये [6]मे नरव्याघ्र शुभमाविर्भविष्यति । तदागच्छ गमिष्यावः पम्पां तां प्रियदर्शनाम् ॥ ६ ॥
ऋष्यमूको गिरिर्यत्र नातिदूरे प्रकाशते । यस्मिन्वसति धर्मात्मा सुग्रीवोंऽशुमतः सुतः ॥ ७ ॥
नित्यं वालिभयात्त्रस्तश्चतुर्भिः सह वानरैः । [7]अहं त्वरे च तं द्रष्टुं सुग्रीवं वानरर्षभम् ॥ ८ ॥
तदधीनं हि मे [8]कार्यं सीतायाः परिमार्गणम् । इति ब्रुवाणं तं [10]वीरं सौमित्रिरिदमब्रवीत् ॥ ९ ॥

अस्मिन् सर्गे सार्धपञ्चत्रिंशच्छ्लोकाः ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने चतुःसप्ततितमः सर्गः ॥ ७४ ॥

१ ] ति० टी०–दिवं त्विति ॥ १ ॥

रा० टी०–शबरीस्वर्गगमनानन्तरकालिकं रामवृत्तान्तमाह–दिवमित्यादिभिः । शबर्यां दिवं यातायां सत्यां राघवः चिन्तयामास मुनिप्रभावं प्रशंसयामासेत्यर्थः ॥ १ ॥

गो० टी०–अथ पम्पागमनं पञ्चसप्ततितमे–दिवं त्वित्यादि । स्वेन तेजसा उपलक्षितायामिति शेषः ॥ १ ॥

२–३ ] ति० टी०–महात्मनां प्रभावं शबर्युक्तम् ॥ २ ॥ ३ ॥

रा० टी०–चिन्तयित्वेति । महात्मनां प्रभावं चिन्तयित्वा एकाग्रं समीहितचित्तं लक्ष्मणं राघवोऽब्रवीत् ॥ २ ॥

गो० टी०–स इति । एकाग्रम् एकचित्तम् ॥ २ ॥

रा० टी०–तद्वचनाकारमाह–दृष्ट इति । बह्वाश्चर्यः अनेकविधाश्चर्यविशिष्टः विश्वस्ताः मृगशार्दूला यस्मिन्स कृतात्मनां परिशीलितपरमात्मनां मुनीनामाश्रमो मया दृष्टः ॥ ३ ॥

गो० टी०–दृष्ट इति । बह्वाश्चर्यः अत्यद्भुतपुष्पफलादिसंपत्तिसकलतीर्थसमागमादिना आश्चर्ययुक्तः विश्वस्ताः विश्वासं प्राप्ताः परस्परहिंसकत्वरहिताः मृगाः शार्दूलाश्च यस्मिन् तथा ३॥

४ ] ति० टी०–तेषां मुनीनाम् । सप्तानां समुद्राणां तीर्थेषु लोकोपकाराय तैः स्थापितेषु उपस्पृष्टं स्नातम् ॥ ४ ॥

रा० टी०–सप्तानामिति । तेषां मुनिभिरानीतानां सप्तसमुद्राणां तीर्थेषु जलेषु विधिवत् उपस्पृष्टं स्नातं पितरस्तर्पिताश्च ॥ ४ ॥

गो० टी०–सप्तानामिति । उपस्पृष्टं स्नातम् । अनेन पुण्यतीर्थप्राप्तौ स्नानश्राद्धादिकं कर्तव्यमित्युक्तम् ॥ ४ ॥

५ ] ति० टी०–तेन कल्याणोपस्थानेन ॥ ५ ॥

रा० टी०–प्रणष्टमिति । अशुभं सीतापहरणजनितसंतापः प्रणष्टम् इदानीं नानुभूयते अत एव कल्याणं सीतासंयोगजनितसुखं समुपस्थितं समीपे प्राप्तं तेन हेतुना एतत् मे मनः प्रहृष्टम् अत एव शुभं प्रियासंयोगजनितसुखम् आविर्भविष्यति तत् तस्मात् हेतोः आगच्छ मत्समीपमिति शेषः । तत्प्रयोजनमाह–नातिदूरे इतः समीपे यत्र यस्यास्तीरे यस्मिन् अंशुमतः सुग्रीवो वालिभयात्त्रस्त उद्विग्नः सन् चतुर्भिर्वानरैः सह वसति स ऋष्यमूको गिरिः प्रकाशते तां पम्पां गमिष्यावः । सार्धश्लोकत्रयमेकान्वयि ॥ ५–७ ॥

गो० टी०–प्रणष्टमिति । तत्तदशुभं प्रणष्टं कल्याणं शुभं तेन अशुभनिवृत्तिपूर्वकशुभप्राप्त्या ॥ ५ ॥

६ ] ति० टी०–शुभं मित्रलाभादि ॥ ६ ॥

गो० टी०–हृदय इत्यर्धमेकम् । शुभं शुभस्मरणम् ॥ ६ ॥

गो० टी०–तदित्यादिश्लोकद्वयम् । अंशुमतः सूर्यस्य ७॥८॥

७ ] ति० टी०–अंशुमतः सूर्यस्य ॥ ७ ॥

८–९ ] ति० टी०–त्वरे त्वरामि ॥ ८ ॥ ९ ॥

रा० टी०–अहमिति । तं कबन्धेन समादिष्टं सुग्रीवं द्रष्टुमहं त्वरे हि यतः मे कार्यं सीतायाः परिमार्गणमन्वेषणं तदधीनं सुग्रीवायत्तम् । अर्धद्वयमेकान्वयि ॥ ८ ॥

गो० टी०–अभीति । मे सीताया इत्यन्वयः ॥ ९ ॥

रा० टी०–इतीति । इति ब्रुवाणं रामं ममाऽपि मनस्त्वरते अतस्त्वरितं गच्छावः इदं सौमित्रिरब्रवीत् ॥ ९ ॥

१ स चिन्तयित्वेति गो. पाठः । २ ऽयमिति गो. पाठः । ३ एष्विति गो. पाठः । ४ प्रणष्टमिति गो. रा. पाठः । ५ तत्त्वेन हृष्टमिति गो. पाठः । ६ हीति गो.पाठः । ७ अभीति गो.पाठः । ८ सौम्येति गो.पाठः । ९ एवमिति गो.पाठः । १० धीरं राममिति गो.पाठः । ११ सुत इति पदमत्रापेक्षितम् ।

गच्छावस्त्वरितं तत्र ममापि त्वरते मनः । आश्रमात्तु ततस्तस्मान्निष्क्रम्य स विशांपतिः ॥ १० ॥
आजगाम ततः पम्पां लक्ष्मणेन सह प्रभुः । समीक्षमाणः पुष्पाढ्यं सर्वतो विपुलद्रुमम् ॥ ११ ॥
कोयष्टिभिश्चार्जुनकैः शतपत्रैश्च कीचकैः । एतैश्चान्यैश्च बहुभिर्नादितं तद्वनं महत् ॥ १२ ॥
[ समाजग्मतुरव्यग्रौ राघवौ सुसमाहितौ । ]
स रामो विविधान्वृक्षान्सरांसि विविधानि च । पश्यन्कामाभिसंतप्तो जगाम परमं ह्रदम् ॥ १३ ॥
स तामासाद्य वै रामो दूरात्पानीयवाहिनीम् । मतङ्गसरसं नाम ह्रदं समवगाहत ॥ १४ ॥
तत्र जग्मतुरव्यग्रौ राघवौ हि समाहितौ । स तु शोकसमाविष्टो रामो दशरथात्मजः ॥ १५ ॥
विवेश नलिनीं रम्यां पङ्कजैश्च समावृताम् । तिलकाशोकपुंनागबकुलोद्दालकाशिनीम् ॥ १६ ॥
रम्योपवनसंबाधां रम्यसंपीडितोदकाम् । स्फटिकोपमतोयां तां श्लक्ष्णवालुकसंतताम् ॥ १७ ॥
मत्स्यकच्छपसंबाधां तीरस्थद्रुमशोभिताम् । सखीभिरेव संयुक्तां लताभिरनुवेष्टिताम् ॥ १८ ॥
किंनरोरगगन्धर्वयक्षराक्षससेविताम् । नानाद्रुमलताकीर्णां शीतवारिनिधिं शुभाम् ॥ १९ ॥
पद्मसौगन्धिकैस्ताम्रां शुक्लां कुमुदमण्डलैः । नीलां कुवलयोद्धाटैर्बहुवर्णां कुथामिव ॥ २० ॥
अरविन्दोत्पलवतीं पद्मसौगन्धिकायुताम् । पुष्पिताम्रवणोपेतां बर्हिणोद्धुष्टनादिताम् ॥ २१ ॥

---

गो० टी०–एवमिति । धीरं कृतधैर्यमित्यर्थः ॥ १० ॥

१०–१३ ] ति० टी०–ममापि त्वरते पम्पादर्शने ॥ १०–१३ ॥

रा० टी०–आश्रमादिति । ततः लक्ष्मणोक्त्यनन्तरं विशां प्रजानां पतिः प्रभुः रामः तस्मादाश्रमान्निष्क्रम्य पुष्पाढ्यं विपुलद्रुमं बहुद्रुमविशिष्टं वनं समीक्षमाणः सन् लक्ष्मणेन सह ततः तां पम्पां जगाम प्राप । सार्धश्लोक एकान्वयी ॥ १० ॥ ११ ॥

रा० टी०–कोयष्टिकैरिति । कोयष्टिकादिभिर्नादितं तत्पम्पासंबन्धि महद्वनं सुसमाहितौ अत एव अव्यग्रौ राघवौ समाजग्मतुः । सार्धश्लोक एकान्वयी ॥ १२ ॥

रा० टी०–तत्र कोयष्टिकाः टिट्टिभकाः अर्जुनका मयूराः 'अर्जुनः ककुभे पार्थे कार्तवीर्यमयूरयोः' इति मेदिनी । शतपत्रा दार्वाघाटकाः कीरकाः शुकाः । स इति । विविधान् अनेकप्रकारान्वृक्षादीन् पश्यन् कामाभिसंतप्तः सीतासंगमविषयकातीच्छावान् स रामः परमं मतङ्गसंबन्धित्वेन अत्युत्कृष्टं ह्रदं पम्पैकदेशवर्ति दहरं जगाम ॥ १३ ॥

गो० टी०–आश्रमादिति । ततः अनन्तरं विशां प्रजानां पतिः ततः तत्र मार्गे अभिभवतीत्यभिभूः अभिभावक इत्यर्थः । शत्रूणामित्यर्थसिद्धम् । 'प्रभुः' इत्यपि पाठः ॥ ११ ॥

१४–१६ ] ति० टी०–पानीयवाहिनीं पानार्हातिमधुरसुशीतनिर्मलजलवाहिनीम् । अनेन पम्पानदीति लभ्यते । वाहिनीमित्यस्य धारिणीमित्यर्थो वा । मतङ्गसरसमित्यकारान्तः । तच्च पम्पायामेव प्रदेशभेदो गङ्गायां मणिकर्णिकेव ॥ १४–१६ ॥

१७–१९ ] ति० टी०–श्लक्ष्णा मृदुस्पर्शा ॥ १७–१९ ॥

२० ] ति० टी०–कुवलयोद्घाटैः कुवलयसमूहैः । कुथा गजास्तरणचित्रकम्बलः ॥ २० ॥

रा० टी०–स इति । स रामः दूरात् दूरदेशं पानीयवाहिनीं पानयोग्यजलवहनशीलां तां पम्पाम् आसाद्य प्राप्य मतङ्गसरसं नाम ह्रदं पम्पैकदेशवर्ति दहरं समवगाहत पानीयवाहिनीमित्यनेन तस्याः स्रोतोविशिष्टत्वं व्यक्तं मतङ्गसरसमित्यत्र "अनोश्मायःसरसां जातिसंज्ञयोः" इत्यच् ॥ १४ ॥

रा० टी०–स इति । शोकसमाविष्टः स रामः पङ्कजैः समावृतां तिलकादिभिः प्रकाशितां रम्यां पवनसंबाधां रमणीयानेकविधोपवननिबिडां पद्मसंपीडितोदकां पद्मपुष्पमिश्रोदकविशिष्टां स्फटिकोपमतोयां स्फटिकमणिसदृशतोयविशिष्टां श्लक्ष्णवालुकसंततां स्वच्छवालुकैर्विशिष्टां मत्स्यकच्छपसंबाधां मत्स्यादिनिबिडां तीरस्थद्रुमैः शोभितां लताभिः अनुवेष्टिताम् अत एव सखीभिरिव संयुक्तां किंनरादिभिः संचितां नानाद्रुमलताकीर्णाम् अनुक्तानेकविधतरुलतासंयुक्तां शीतवारिनिधिं शीतैर्वारिभिः पूर्णां पद्मसौगन्धिकैः अरुणकमलैः ताम्रामरुणां कुमुदमण्डलैः शुक्लां कुवलयोद्घाटैः नीलकमलसमूहैः नीलाम् अत एव बहुवर्णां कुथां करिकम्बलमिव अरविन्दोत्पलवतीं अरविन्दोत्पलयोर्जातिविशेषैरपि विशिष्टां पद्मसौगन्धिकजातिविशेषैर्विशिष्टां पुष्पिताम्रवनैरुपेतां बर्हिणां मयूराणामुद्घुष्टैः शब्दैः नादितां नलिनीं सरसीं पम्पां विवेश । त्रयोदशानामर्थानामेकान्वयित्वम् ॥ १६–२१ ॥

२१ ] ति० टी०–अरविन्दपद्मयो रक्तश्वेतविषयत्वेन भेदः २१

---

१ ऽभिभूरिति गो. पाठः । २ अर्धमेतदधिकं रा. पाठे । ३ एतदाद्यासर्गसमाप्ति गो. श्लोकपौर्वापर्येऽतीव व्यत्यास उपलभ्यतेऽतस्तत्पाठः सामस्त्येनैव सर्गान्ते निवेश्यते । ४ अर्धमेतत् रा. नास्ति । ५ पद्मेति रा. पाठः । ६ इवेति रा. पाठः ।

स तां दृष्ट्वा ततः पम्पां रामः सौमित्रिणा सह । विललाप च तेजस्वी रामो दशरथात्मजः ॥ २२ ॥
तिलकैर्बीजपूरैश्च वटैः शुक्लद्रुमैस्तथा । पुष्पितैः करवीरैश्च पुंनागैश्च सुपुष्पितैः ॥ २३ ॥
मालतीकुन्दगुल्मैश्च भण्डीरैर्निचुलैस्तथा । अशोकैः सप्तपर्णैश्च केतकैरतिमुक्तकैः ॥ २४ ॥
अन्यैश्च विविधैर्वृक्षैः प्रमदेवोपशोभिताम् । [ स तामासाद्य पम्पां च विषसाद महामनाः । ]
अस्यास्तीरे तु पूर्वोक्तः पर्वतो धातुमण्डितः ॥ २५ ॥
ऋष्यमूक इति ख्यातश्चित्रपुष्पितपादपः । हरिर्ऋक्षरजोनाम्नः पुत्रस्तस्य महात्मनः ॥ २६ ॥
अध्यास्ते तु महावीर्यः सुग्रीव इति विश्रुतः । सुग्रीवमभिगच्छ त्वं वानरेन्द्रं नरर्षभ ॥ २७ ॥
इत्युवाच पुनर्वाक्यं लक्ष्मणं सत्यविक्रमः । कथं मया विना सीतां शक्यं लक्ष्मण जीवितुम् ॥ २८ ॥

इत्येवमुक्त्वा मदनाभिपीडितः स लक्ष्मणं वाक्यमनन्यचेतनः ।
विवेश पम्पां नलिनीमनोरमां तमुत्तमं शोकमुदीरयाणः ॥ २९ ॥
क्रमेण गत्वा प्रविलोकयन्वनं ददर्श पम्पां शुभदर्शकाननाम् ।
अनेकनानाविधपक्षिसंकुलां विवेश रामः सह लक्ष्मणेन ॥ ३० ॥

---

२२ ] ति० टी०–विललाप सीतावियोगादिति शेषः॥२२॥
रा० टी०–स इति । सौमित्रिणा सह रामोऽभिरामदाता रामो विललाप ॥ २२ ॥
२३ ] ति० टी०–शुक्लद्रुमो लोध्रः ॥ २३ ॥
२४ ] ति० टी०–भण्डीरो वटः । निचुलो वञ्जुलः । अतिमुक्तो माधवीलता ॥ २४ ॥
रा० टी०–तिलकैरिति । तिलकादिभिः अन्यैश्च वृक्षैः शोभितां प्रमदामिव तां पम्पाम् आसाद्य महामनाः अपि रामः विषसाद सीतावियोगेन विषादं प्राप । अर्धषट्कमेकान्वयि ॥ २३–२५ ॥
२५ ] ति० टी०–पूर्वोक्तः कबन्धोक्तः ॥ २५ ॥
२६–२७ ] ति० टी०–तस्य प्रसिद्धतरस्य ऋक्षरजोनामकस्य पुत्रो हरिर्वानरः ॥ २६ ॥ २७ ॥
२८ ] ति० टी०–इत्युवाचान्तरान्तरा सीताशोकम् ॥२८॥
रा० टी०–अस्या इति । पूर्वोक्तः कबन्धेन पूर्वं वर्णितः धातुमण्डितः अनेकधातुभिः शोभितः ऋष्यमूक इति ख्यातः अस्याः पम्पायास्तीरे योऽयं पर्वतः तं पर्वतम् ऋक्षरजोनाम्नः महात्मनः तस्य पुत्रः सुग्रीव इति विश्रुतः महावीर्यः हरिर्वानरः अध्यास्ते तत्र वसतीत्यर्थः, तं वानरेन्द्रं सुग्रीवं नरर्षभ हे लक्ष्मण ! त्वमभिगच्छ इति, सीतां विना मया जीवितुं कथं शक्यम् इति च वाक्यम् सत्यविक्रमो रामः लक्ष्मणं पुनरुवाच । अर्धसप्तकमेकान्वयि ॥ २६–२८ ॥
२९ ] ति० टी०–उपसंहरति—इतीति । अनन्यचेतनो नास्त्यन्यत्र सीतायाः चेतनं चित्तं यस्य सः । नलिनीभिर्मनोरमां पम्पां मतङ्गसरसः प्रदेशवर्तिनीं विवेश ॥ २९ ॥

रा० टी०–इतीति । मदनाभिपीडितः सीताविरहजनितदैन्याक्रान्तः अनन्यचेतनः न अन्यस्मिन् सीतातिरिक्तवस्तुनि चेतनं चित्तं यस्य सः रघूत्तमः स रामः इत्येव लक्ष्मणमुक्त्वा शोकविषादयन्त्रितः तिरोहितशोकविषादः सन् नलिनीं सरसीं पम्पां विवेश ॥ २९ ॥
३० ] ति० टी०–शुभदर्शं शुभदर्शनं काननं यस्यां तां पम्पां ददर्श सर्वत इति शेषः । विवेश च मतङ्गसरसावच्छेदेनेति बोध्यम् ॥ ३० ॥

विराधादिकबन्धान्तान्हत्वा स्वपदमादिशत् ।
विचरन्दण्डकारण्ये भवारण्ये स मे गतिः ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽरण्यकाण्डे पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

रा० टी०–क्रमेणेति । वनं पम्पातीरवर्तिकाननं प्रविलोकयन् सन् क्रमेण गत्वा शुभो दर्शो दर्शनं येषां तानि काननानि यस्याः ताम् अनेकैर्बहुभिर्नानाविधैरनेकप्रकारकैः पक्षिभिः संकुलां व्याप्तां पम्पां लक्ष्मणेन सह रामः ददर्श विवेश च चतुर्दिक्ष्विति शेषः ॥ ३० ॥

नमामः श्रीरामं परममभिरामं सुमनसां
समाप्तां संसेव्यं गुरुमपि हनूमन्तमभयम् ।
त्रिवेणीं वाल्मीकिं सुखदमनिशं यत्सुकृपया
सुधारण्यव्याख्या परमपुरुषार्थैकहृदया ॥ १ ॥
आरण्यकाण्डव्याख्यानं रामायणशिरोमणिः ।
विदध्यात्परमां प्रीतिं श्रीरामे परतः परे ॥ २ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावारण्यकाण्डे पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

---

१ प्रमदामिवेति रा. प्रमदामिव भूषितामिति गो. पाठः । २ अर्धमेतदधिकं रा. पाठे । ३ नलिनीमिति रा. पाठः । ४ विषादयन्त्रित इति रा. पाठः ।

गोविन्दराजसंमतः पाठः—

[ स ददर्श ततः पुण्यामुदारजनसेविताम् ।। नानाद्रुमलताकीर्णां पम्पां पानीयवाहिनीम् ।। १२ ।।
पद्मैः सौगन्धिकैस्ताम्रां शुक्लां कुमुदमण्डलैः ।। नीलां कुवलयोद्घाटैर्बहुवर्णां कुथामिव ।। १३ ।।
स तामासाद्य वै रामो दूरादुदकवाहिनीम् ।। मतङ्गसरसं नाम ह्रदं समवगाहत ।। १४ ।।
अरविन्दोत्पलवतीं पद्मसौगन्धिकायुताम् ।। पुष्पिताम्रवणोपेतां बर्हिणोद्घुष्टनादिताम् ।। १५ ।।
तिलकैर्बीजपूरैश्च धवैः शुक्लद्रुमैस्तथा ।। पुष्पितैः करवीरैश्च पुंनागैश्च सुपुष्पितैः ।। १६ ।।
मालतीकुन्दगुल्मैश्च भाण्डीरैर्निचुलैस्तथा ।। अशोकैः सप्तपर्णैश्च केतकैरतिमुक्तकैः ।। १७ ।।
अन्यैश्च विविधैर्वृक्षैः प्रमदामिव भूषिताम् ।। समीक्षमाणौ पुष्पाढ्यं सर्वतो विपुलद्रुमम् ।। १८ ।।
कोयष्टिकैश्चार्जुनकैः शतपत्रैश्च कीरकैः ।। एतैश्चान्यैश्च विहगैर्नादितं तु वनं महत् ।। १९ ।।
ततो जग्मतुरव्यग्रौ राघवौ सुसमाहितौ ।। तद्वनं चैव सरसः पश्यन्तौ शकुनैर्युतम् ।। २० ।।
स ददर्श ततः पम्पां शीतवारिनिधिं शुभाम् ।। प्रहृष्टनानाशकुनां पादपैरुपशोभिताम् ।।
( तिलकाशोकपुंनागबकुलोद्दालकाशिनीम् ) ।। २१ ।।
स रामो विविधान् वृक्षान् सरांसि विविधानि च ।। पश्यन्कामाभिसंतप्तो जगाम परमं ह्रदम् ।। २२ ।।
पुष्पितोपवनोपेतां सालचम्पकशोभिताम् ।। षट्पदौघसमाविष्टां श्रीमतीमतुलप्रभाम् ।। २३ ।।
स्फटिकोपमतोयाढ्यां श्लक्ष्णवालुकसंतताम् ।। स तां दृष्ट्वा पुनः पम्पां पद्मसौगन्धिकैर्युताम् ।।
इत्युवाच तदा वाक्यं लक्ष्मणं सत्यविक्रमः ।। २४ ।।
अस्यास्तीरे तु पूर्वोक्तः पर्वतो धातुमण्डितः ।। ऋश्यमूक इति ख्यातः पुण्यः पुष्पितपादपः ।। २५ ।।
हरेर्ऋक्षरजोनाम्नः पुत्रस्तस्य महात्मनः ।। अध्यास्ते तं महावीर्यः सुग्रीव इति विश्रुतः ।। २६ ।।
सुग्रीवमभिगच्छ त्वं वानरेन्द्रं नरर्षभ ।। इत्युवाच पुनर्वाक्यं लक्ष्मणं सत्यविक्रमम् ।। २७ ।।
राज्यभ्रष्टेन दीनेन तस्यामासक्तचेतसा ।। कथं मया विना शक्यं सीतां लक्ष्मण जीवितुम् ।। २८ ।।

---

गो० टी०—स ददर्श ततः पुण्यामित्यादि द्वौ श्लोकौ । उदारजनाः श्रेष्ठजनाः मुनिप्रभृतयः पानीयवाहिनीं पानार्हशीतलस्वादुजलवतीमित्यर्थः । सौगन्धिकैः कह्लारैः कुवलयोद्घाटैः कुवलयसमूहैः कुथा चित्रकम्बलं ददर्श । दूरादिति बोध्यम् अग्र इत्यनुवादात् ॥ १२ ॥ १३ ॥

गो० टी०—स तामिति । उदकवाहिनीं तां दूरादासाद्य मतङ्गसरसं नाम मतङ्गसरसमिति प्रसिद्धम् “ अनोश्मायःसरसां जातिसंज्ञयोः” इति टच् समासान्तः । ह्रदं पम्पासमीपस्थं सरः समवगाहत स्नातौ पुण्यतीर्थत्वादिति भावः ॥ १४ ॥

गो० टी०—दूरतः पम्पादर्शनमनुवदन् तत्तीरवनदर्शनमाह षड्भिः—अरविन्देत्यादि । अरविन्दं रक्ताब्जं पद्मैः सितपद्मैः आम्रवणं चूतवनं बर्हिणोद्घुष्टं मयूरशब्दः तेन नादितां संजातनादां तिलकैः क्षुरकवृक्षैः बीजपूरैः दाडिमैः धवैः धवाख्यैर्वृक्षविशेषैः शुक्लद्रुमैः अर्जुनवृक्षैः करवीरैः प्रसिद्धैः पुन्नागैः तुङ्गवृक्षैः मालती इति मालतीगुल्मैः कुन्दगुल्मैश्चेत्यन्वयः । भाण्डीरैः वटैः निचुलैः वञ्जुलैः सप्तपर्णैः विषमच्छदवृक्षैः अतिमुक्तकैः नेमिवृक्षैः भूषितां शोभिताम् अत एव प्रमदामिव स्थितां सर्वतः चतुर्दिक्प्रदेशेऽपि कोयष्टिकैः टिट्टिभाख्यैः पक्षिविशेषैः अर्जुनकैः पक्षिविशेषैः शतपत्रैः दार्वाघाटैः कीरकैः शुकैः । अव्यग्रौ सुसमाहितौ व्याकुलत्वरहितौ प्रत्युत सावधानौ चेत्यर्थः । राघवौ अरविन्दोत्पलवतीमित्यादिविशेषितां तिलकादिभिर्वृक्षैर्भूषिताम् अत एव प्रमदामिव स्थितां पम्पां सर्वतः समीक्षमाणौ ततः पुष्पाढ्यं सर्वतो विपुलद्रुमं कोयष्टिकादिभिर्विहगैर्नादितम् अन्यैः शकुनैश्च युतं सरसः पम्पायाः संबन्धि तद्वनं च पश्यन्ताविव सन्तौ अव्यग्रौ सुसमाहितौ च सन्तौ तद्वनं जग्मतुरिति संबन्धः । अतो न वनशब्दद्वयदोषः ॥ १९–२० ॥

गो० टी०—समीपतः पम्पादर्शनमाह—स ददर्शेति ॥ २१ ॥

गो० टी०—अथ पम्पाप्राप्तिमाह—स राम इति । परमं ह्रदं पम्पाख्यं सरः ॥ २२ ॥

गो० टी०—प्राप्त्यनन्तरं पम्पां दृष्ट्वा लक्ष्मणं प्रत्याह—पुष्पितेत्यादि । सार्धश्लोकद्वयम् । सालाः सर्जकवृक्षाः चम्पकाः चाम्पेयवृक्षाः ॥ २३–२४ ॥

गो० टी०—अस्या इति । पूर्वोक्तः कबन्धेनेति शेषः ॥ २५ ॥

गो० टी०—हरेरिति । हरेर्वानरस्य तस्य प्रसिद्धस्य तमृश्यमूकम् ॥ २६ ॥

गो० टी०—सुग्रीवमिति । अभिगच्छेत्यनन्तरमित्युक्त्वेति शेषः । इति वक्ष्यमाणप्रकारेण सुग्रीवमभिगच्छेत्युक्त्वा लक्ष्मणं पुनरित्युवाचेत्यन्वयः ॥ २७ ॥

गो० टी०—राज्येति । राज्यभ्रष्टेन अत एव दीनेन सर्वदैन्यपरिहारार्थं तस्यां सीतायाम् आसक्तचेतसा मया सीतां विना कथं जीवितुं शक्यम् ॥ २८ ॥

इत्येवमुक्त्वा मदनाभिपीडितः स लक्ष्मणं वाक्यमनन्यचेतसम् ॥
विवेश पम्पां नलिनीं मनोहरां रघूत्तमः शोकविषादयन्त्रितः ॥ २९ ॥
ततो महद्वर्त्म सुदूरसंक्रमः क्रमेण गत्वा प्रतिकूलधन्वनम् ॥
ददर्श पम्पां शुभदर्शकाननामनेकनानाविधपक्षिजालकाम् ॥ ३० ॥]

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽरण्यकाण्डे पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

---

गो० टी०—इतीति । अनन्यचेतसं स्ववाक्यश्रवणे सावधानं विवेश स्नानायेति शेषः । नलिनीं सरसीं शोकः दुःखं विषादः तत्कृतः कार्यकरणपाटवरूपशरीरावसादः ताभ्यां यन्त्रितः नियमितः तत्परवश इत्यर्थः ॥ २९ ॥

गो० टी०—सर्गार्थं संगृह्णाति—तत इति । सुदूरं संक्रमः गमनं यस्य स तथा दूरादागत इत्यर्थः । प्रतिकूलधन्वनं पथिकजनप्रतिकूलभूतमरुकान्तारं कबन्धवनमित्यर्थः । क्रमेण अनेकविघ्ननिवृत्तिपूर्वकं गत्वा शुभः शोभनः दर्शः दर्शनं यस्य तादृशं काननं यस्यास्ताम् अनेके नानाजातीयाः बहवो वा नानाविधाः नानासंस्थानाः पक्षिणः शुकशारिकाकोकिलप्रभृतयः तेषां जालकानि समूहाः यस्यां तां, यद्वा अनेकानि नानाविधपक्षिजालकानि यस्यां तां काननद्वारा पक्षिजालवत्त्वं तादृशीं पम्पां ददर्श ॥ ३० ॥

अस्मिन्सर्गे त्रिंशच्छ्लोकाः । न्यूनातिरेकसद्भावस्तु कोशेषु बहुधा दृश्यते ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे रत्नमेखलाख्याने आरण्यकाण्डव्याख्याने पञ्चसप्ततितमः सर्गः ॥७५॥

---

इत्थं कौशिकदिव्यवंशकलशीवाराशिराकाशशी
पादाम्भोजमरन्दभोगरसिकः श्रीमच्छठारेर्गुरोः ॥
आलोक्याखिलदेशिकोत्तमकृतव्याख्यानशैलीश्चिरं
व्याचख्यौ तदरण्यकाण्डमखिलं गोविन्दराजाभिधः ॥१॥

---

श्रीमदारण्यकाण्डपठनश्रवणयोः फलं ब्रह्माण्डपुराणे सप्तचत्वारिंशदुत्तरशततमे अध्याये—
आरण्यकं तु यः काण्डमतिभक्तिसमन्वितः । पठेद्वा शृणुयाद्वापि सोमसायुज्यमाप्नुयात् ॥

## अरण्यकाण्डं समाप्तम् ।

# ‘गुजराती’ मुद्रणालयस्थानि क्रय्यसंस्कृतपुस्तकानि।

मूल्यं मार्गव्ययः

१ **श्रीमद्भगवद्गीता Bhagavat=Geeta with 7 commentaries**— **प्रथमो गुच्छः** आनन्दगिरिकृतटीकासंवलितशांकरभाष्य–जयतीर्थविरचितटीकासंवलितानन्दतीर्थीय ( माध्व ) भाष्य–रामानुजभाष्य–पुरुषोत्तमजीप्रकाशितामृततरङ्गिणी–नीलकण्ठीसमेता। मञ्जुलैरायसाक्षरैर्मुद्रिता। पृष्ठान्यष्टशतपरिमितानि सुचिक्कणानि। मूल्यम् रू.... ... ६–०–० ०–७–०

२ **श्रीमद्भगवद्गीता Bhagavat=Geeta with 8 other commentaries—द्वितीयो गुच्छः। प्रथमषट्कम्**–निम्बार्कमतानुयायिश्रीकेशवकाश्मीरिभट्टाचार्यपादप्रणीता—**‘तत्त्वप्रकाशिका’** श्रीमधुसूदनसरस्वतीकृता–**‘गूढार्थदीपिका’** श्रीशङ्करानन्दप्रणीता–**‘तात्पर्यबोधिनी’** श्रीधरस्वामिकृता–**‘सुबोधिनी’** श्रीसदानन्दविरचितः–**‘भावप्रकाशः’** श्रीधनपतिसूरिविरचिता–**‘भाष्योत्कर्षदीपिका’** दैवज्ञपण्डितश्रीसूर्यविरचिता **‘परमार्थप्रपा’** पूर्णप्रज्ञमतानुसारिश्रीराघवेन्द्रकृतः–**‘अर्थसंग्रहः’** इत्येताभिर्व्याख्याभिः सहितायाः श्रीमद्भगवद्गीतायाः प्रथमादिषडध्यायात्मकं प्रथमं खण्डम्। अत्र श्लोकाः स्थूलतमाक्षरैष्टीकाश्च स्थूलाक्षरैर्मुद्रिताः, वृद्धा मा क्लेशिषतेति। पत्रसंख्या सार्धपञ्चशतानि। मूल्यम् रू. ३–१२–० ०–६–०

**द्वितीयो गुच्छः। द्वितीयं षट्कम्।** षष्ठादिद्वादशाध्यायान्तम्। तत्त्वप्रकाशिकाद्यष्टटीकोपेतम्। मूल्यम् रू. ... ... ... ... ... ... ... ... २–१२–० ०–४–०

**द्वितीयो गुच्छः। तृतीयं षट्कम्।** त्रयोदशाध्यायमारभ्यासमाप्ति। तत्त्वप्रकाशिकाद्यष्टटीकोपेतम्। मूल्यम् रू. ... ... ... ... ... ... ... ३–८–० ०–५–०

३ **उत्तरगीता Uttara=Geeta with a commentary**–गौडपादीयदीपिकाख्यव्याख्यायुता। भगवत्पादश्रीशंकराचार्याणां परमगुरुभिः श्रीशुकाचार्याणां च शिष्यैः श्रीगौडपादाचार्यैः प्रणीतेयं व्याख्येत्येतावत्कथनमलमस्यामहिमानमवगमयितुम्। मू. रू. ... ०–३–० ०–०–६

४ **श्रीमद्वाल्मीकिरामायणम्। बालकाण्डम् Valmiki Ramayana with 3 well=known commentaries, Bal Kanda** सर्वतन्त्रस्वतन्त्रप्रतिभेन शब्देन्दुशेखरादिनानानिबन्धप्रणेत्रा श्रीमन्नागेशभट्टेन स्वशिष्यस्य सतो जीविकाप्रदातुः शृङ्गवेरपुराधीशस्य वीरमणेः श्रीरामराजस्य नाम्ना प्रणीतया रामायणतिलकाख्यया टीकया, पण्डितश्रीवंशीधर–शिवसहायाभ्यां प्रणीतया रामायणशिरोमण्याख्यया टीकया, श्रीगोविन्दराजप्रणीतया भूषणाख्यया टीकया च सह मुद्रयितुमारब्धमस्माभिः श्रीमद्वाल्मीकिरामायणम्। तच्च सप्तभिः खण्डैः समापयिष्यामः। तत्रेदं प्रथमं खण्डम्। मूल्यम् रू. ... ... ... ३–०–० ०–५–०

**अयोध्याकाण्डम्। Ayodhya Kanda द्वितीयखण्डम्**—उर्ध्वनिर्दिष्टटीकात्रयोपेतम्। मूल्यम् रू. ... ... ... ... ... ... ५–०–० ०–७–०

**अरण्यकाण्डम्। Aranya Kanda तृतीयखण्डम्।** उपरिनिर्दिष्टटीकात्रयोपेतम्। मू. रू. २–१२–० ०–६–०

५ **स्तोत्रमुक्ताहारः–Stotra=muktahar containing 256 Stotras** अस्मिन् २५६ स्तोत्राणि संगृहीतानि। मू. रू. ... ... ... ... ०–८–० ०–२–०

६ **संस्कारमयूखः–Samskar Mayukha** मीमांसकनीलकण्ठभट्टसुतशंकरभट्टकृतः। मू. रू. ०–१२–० ०–१–०

७ **मनुस्मृतिः—Manu Smriti** कुल्लूकभट्टकृतटीकया, ग्रन्थान्तरेषु मनुनाम्नोल्लिखितैरिदानींतनमनुस्मृतिपुस्तकेष्वनुपलभ्यमानैः श्लोकैः, पद्यानां वर्णानुक्रमकोशेन, विषयानुक्रमेण च सहिता। सूक्ष्मेक्षिकया संशोधिता च। मू. रू.... ... ... ... ... १–८–० ०–३–०

८ **विदुरनीतिः–Vidura=Niti with a commentary** संस्कृतटीकोपेता नीतिशास्त्राभ्यासिनां विद्यार्थिनामतीवोपयोगिनी। मू. रू. ... ... ... ... ०–४–० ०–१–०

९ **वेदान्तरहस्यम्–Vedanta Rahasya** वेदान्तवागीशभट्टाचार्यविरचितम्। अत्राद्वैतमतसिद्धान्तो निरूपितः। उपपत्तिश्च प्रदर्शिता। भाषाऽतिसरला प्रौढा च। मूल्यम् रू. ०–१–० ०–०–६

१० **विशिष्टाद्वैतमतविजयवादः–Vishishtadvaita=Mata=Vijaya=Vada** नरहरिपण्डितकृतः। अत्र विशिष्टाद्वैतमते परेषामाक्षेपान्निराकृत्य विशिष्टाद्वैत एवोपनिषदां तात्पर्यं व्यवस्थापितम्। मूल्यम् रू. ... ... ... ... ०–१–० ०–०–६

११ **कुमारसंभवं महाकाव्यम्–Kumar Sambhav with 3 known commentaries** कविवरश्रीकालिदासविरचितमिदं सप्तमसर्गपर्यन्तं मल्लिनाथकृतसंजीविन्या चारित्र्यवर्धनकृतशिशुहितैषिण्या च संवलितं तत आसमाप्ति सीतारामकृतसंजीविन्याऽलंकृतं सुललितैरायसाक्षरैर्मुद्रितमतीव दर्शनीयमस्ति। मूल्यम् रू. ... ... ... १–४–० ०–२–०

| | मूल्यं | मार्गव्ययः |
|---|---|---|
| १२ **रघुवंशमहाकाव्यम्–Raghuvamsha Mallinatha's commentary** श्रीकालिदासकृतम् । मल्लिनाथकृतसंजीविन्याख्यटीकासहितम् । मू. रू. ... ... | ०–१०–० | ०–३–० |
| **रघुवंशमहाकाव्यं**–मल्लिनाथकृतटीकोपेतम् । सर्गाः १–५ ... ... ... | | |
| १३ **कारिकावली सिद्धान्तमुक्तावलीसहिता–Karikavalee with Siddhanta-Muktavali and other notes** न्यायवैशेषिकदर्शनयोर्व्युत्पित्सूनां कृते प्रणीतेषु प्रकरणग्रन्थेषु सिद्धान्तमुक्तावलीसमुद्भासिता कारिकावली मूर्धाभिषिक्तेत्यत्र न विदुषां वैमत्यं किंतु तत्र दीधितिकृदुपसृतया विवेकसरण्या संक्षेपतः सूक्ष्मतमानामर्थानामुपनिबद्धतया प्रायः खिद्यन्ति नव्याश्छात्राः, इति तेषामुपकारायास्माभिः प्रायः सर्वेषु विषमस्थलेष्वतिविस्तृतां सरलां सुबोधां च टिप्पनीं पण्डित–जीवरामशास्त्रिभिः कारयित्वा तया सहेयं दृढतरेषु सुचिक्कणेषु पत्रेषु स्थूलाक्षरैर्मुद्रिता । सार्धशताभ्यधिकपत्रयुतामपीमां सर्वसौलभ्यायाल्पीयसा मूल्येन वितरामः । मू. रू. ... ... ... | ०–७–० | ०–१–० |
| १४ **वैशेषिकदर्शनम्—Vaisheshika Darshana with several commentaries** श्रीशंकरमिश्रकृत–**वैशेषिकसूत्रोपस्कार**—जयनारायणतर्कपञ्चाननभट्टाचार्यप्रणीत–**विवृति**–चन्द्रकान्तभट्टाचार्यप्रणीत–**भाष्य**सहितम् । मू. रू. ... | २–०–० | ०–३–० |
| १५ **वादार्थसंग्रहः—Vadartha Samgraha (प्रथमो भागः)** अत्र शेषकृष्णकृतं स्फोटतत्त्वनिरूपणं, श्रीकृष्णमौनिकृता स्फोटचन्द्रिका, गोडबोलेकृतः प्रातिपदिकसंज्ञावादः, वाक्यवादः, हरियशोमिश्रकृता वाक्यदीपिकेति पञ्च ग्रन्थाः संकलिताः । पण्डितानां प्रौढच्छात्राणां च बहुतरमुपकारकः । मू. रू. ... ... ... ... ... ... ... | ०–६–० | ०–०–६ |
| **वादार्थसंग्रहः (द्वितीयोभागः)**–अत्र भवानन्दसिद्धान्तवागीशकृतं षट्कारकविवेचनम्, जयरामभट्टाचार्यकृतः कारकवादः समासवादश्च, एवकारवादश्चेति चत्वारो ग्रन्थाः सन्ति । मू. रू. | ०–६–० | ०–०–६ |
| १६ **महाभागवतम्–Maha Bhagavata** देवीपुराणम् । मू. रू. ... ... | २–०–० | ०–३–० |
| १७ **तैत्तिरीयोपनिषत्—Taittiriya-Upanishat** श्रीमच्छंकरभगवत्पादकृतभाष्येणानन्दगिरिकृतटीकायुतेन तैत्तिरीयविद्याप्रकाशेन च सहिता । मू. रू. ... ... | १–०–० | ०–२–० |
| १८ **दशरूपकम्–Dasha Rupaka** नाट्यशास्त्रं धनञ्जयविरचितमवलोकसहितं पश्चनदीयपण्डितसुदर्शनाचार्यप्रणीतप्रभाख्यव्याख्यासहितं च । मू. रू. ... ... ... | १–०–० | ०–२–० |
| १९ **ब्रह्मसूत्रवृत्तिः–Brahma Sutra Vritti** अद्वैतमञ्जरी । भगवत्पाद (आद्यशंकराचार्य) शिष्यकृता । मू. रू. ... ... ... ... ... ... | ०–१२–० | ०–२–० |
| २० **चन्द्रालोकः—Chandraloka with a commentary** श्रीपीयूषवर्षजयदेवकविविरचितोऽलंकारग्रन्थः । पायगुण्डोपाह्व वैद्यनाथविरचितरमाख्यव्याख्यासहितः मू. रू. | ०–८–० | ०–१–० |
| २१ **महाभारतविराटपर्व–Mahabharata-Virata Parvan with eight commentaries** नीलकण्ठकृतभारतभावदीप—अर्जुनमिश्रकृतदीपिका—चतुर्भुजमिश्रकृतप्रकाश—सर्वज्ञनारायणकृतभारतार्थप्रकाश—विमलबोधकृतदुर्घटार्थप्रकाशिनी–रामकृष्णकृतविरोधार्थभञ्जनी—विषमपदविवरण–वादिराजतीर्थविरचितलक्षाभरणाख्याष्टटीकोपेतं विपुलपाठभेदसहितं च । मू. रू. ... ... ... ... ... ... ... | ३–८–० | ०–६–० |
| २२ **चन्द्रकान्त Chandrakanta (Hindi)** (वेदान्त ज्ञानका मुखग्रन्थ) प्रथम भाग. यह वह ग्रन्थ है कि, जो नितान्त निर्भ्रान्त वेदान्त सिद्धान्तका एकांत प्रतिपादक **"चन्द्रकान्त"** मणि बम्बई प्रान्तके प्रसिद्ध साप्ताहिक **'गुजराती'** पत्रके मुख्य–आद्य संपादक गुजराती भाषाके सुविख्यात लेखक, अनेक ग्रन्थोंके निर्माता देशभक्तधुरीण, सारासारविवेकप्रवीण, वैश्यकुलभूषण श्रीमान् शेठ **इच्छाराम सूर्यराम** देसाईके शुद्ध हृदयमें दैदीप्यमान प्रबोधरत्न–भाण्डागारका चमचमाता हुआ एक अमूल्य रत्न है. किं. रू. ... ... | २–८–० | ०–४–० |
| २३ **युक्तिप्रकाश—Yukti Prakasha (Hindi)** साधु निश्चलदास कृत विचार करनेसे ऐसा मालूम होता है कि, वेदांतशास्त्रके सब ग्रंथ संस्कृत भाषामें हैं और उनमें अतीव काठिन्य होनेसे प्रथम प्रवेश होना दुस्साध्य है ऐसा विचार करके सामान्यलोगोंको आत्मज्ञान होनेके वास्ते साधु निश्चलदासजीने प्रथम यह युक्तिप्रकाश नामक ग्रंथ हिंदी भाषामें किया. इसमें दृष्टांतपर एक युक्ति कहकर पुनः दार्ष्टांत कहा है. उदाहरणार्थ इनमेंसे कितनी एक युक्तियोंका यहांपर दिग्दर्शन करता हूं. जैसे–चार स्त्रियोंके दृष्टांतसे यथार्थ ज्ञानकी युक्ति, जीवन्मुक्त और विदेहमुक्तके निर्णयकी युक्ति, सनकादिकोंके जन्मादिके निर्णयकी युक्ति, सनकादिकोंकी ब्रह्माकार वृत्तिके निर्णयकी युक्ति, विराटके निर्णयकी युक्ति, वैराग्यकी युक्ति, सच्चिदानंद आत्माके निर्णयकी युक्ति, आत्मानंदके निर्णयकी युक्ति, ज्ञानस्वरूप प्राप्तिकी युक्ति, श्रवणसे ज्ञान होनेकी युक्ति, ईश्वरके निर्णयकी युक्ति, मोक्षप्राप्तिके निर्णयकी युक्ति इत्यादि ३९ युक्तियोंकरके इस ग्रंथमें सुगमरीत्या वर्णन किया है. | १–०–० | ०–२–० |